ज्ञानं किल किम्वधमाधिकारिणामिति गन्धपदप्रयोक्तुः कवेर्हृदयम्। तर्हि तूष्णीं स्थातव्यमित्यत आह - **सोऽहमिति** । **सोऽहम**धमाधिकारित्वेन प्रसिद्धोऽप्यहं **तदीयागमविस्तृतं** तदीयेन मुख्यप्राणसम्बन्धिना **आगमेन** शास्त्रेण **विस्तृतं** विस्तारितम्। प्रकटीकृतमित्यर्थः। तं कीर्त्यम्बुजसेव्यगन्धं **वाणीमुखं** वाण्या वाचो मुखं **वासयितुं** परिमलीकर्तुं वाक्शुद्ध्यर्थमित्यर्थः। यथा विलासी कश्चन पुरुषः कस्तूर्यादिपरिमलद्रव्यं विलासिनीमुखवासनार्थं सङ्गृह्णाति तद्वदिति भावः। **वृणोमि** वर्णयामि। कृष्णमहिमवर्णनात्मकं काव्यं करोमीत्यर्थः। यथा वातानभिमुखस्य वायुनाऽऽनीयमानकमलपरिमलानुभवस्य दुर्लभत्वेऽपि तदभिमुखस्य सुलभत्वं तथा आचार्यमतविमुखानाम् अन्येषां हरिमहिमज्ञानं दुर्लभमपि आचार्यमतानुवर्तिनो मम सुलभमिति भावः। रूपकपरम्परितम् **पर्यायोक्तमलङ्कारः**। 'पर्यायोक्तं तु गम्यस्य वचो भङ्ग्यन्तरेण यत्' इत्युक्तत्वात्। **इन्द्रवज्रावृत्तम्** । 'स्यादिन्द्रवज्रा यदि तौ जगौ गः'[१] इत्युक्तत्वात् ॥७॥

**हयास्यनासापुटजातवातविघातधूताघपलालजातः ।**
**मुनीशवागीशसुतः सुरम्यां हरेः कथां शंसति वादिराजः ॥८॥**

**व्या :** स्वस्य काव्यकरणे प्रतिबन्धकाभावं सूचयन्नाह - **हयास्येति** । **हयास्यस्य** हृद्गतस्याश्वजात्यनुसारेण श्वसतो हयवदनस्य । ''वाचो बभूवुरुशतीः श्वसतोऽस्य नस्तः''[२] इति स्मृतेः। **नासापुटात्** नासिकारन्ध्रात् **जातस्य वातस्य** वायोः **विघातेन** विघट्टनेन **धूतानि** कम्पितानि विनष्टानीत्यर्थः। **अघान्येव** पापान्येव **पलालानि** निष्फलकलमतृणानि शुष्कतृणानीत्यर्थः। 'नाडी नालं च काण्डोऽस्य पलालोऽस्त्री स निष्फलः' इत्यमरः। तेषां **जातं** समूहो यस्य स तथोक्तः। **मुनीशो** ज्ञानिश्रेष्ठो **वागीशो** वागीशाख्यो यतिः तस्य **सुतः** शिष्यः वादिराजः। **सुरम्याम्** अतिरमणीयाम्। **हरेः** कृष्णस्य **कथां** चरित्रं **शंसति**

१ वृत्तरत्नाकरे (३/३०)
२ भागवते (२/७/११)

कथयति काव्यमुखेन वर्णयति । अत्र **''हयास्यनासापुटजातवातविघातधूताघपलालजातः''** इत्यनेन काव्यकरणे प्रतिबन्धकीभूतदुरितध्वंसः । **हयास्यनासापुटजातवातेत्यनेन** दुरितध्वंसस्यापि हयास्यतज्जन्यमुख्यप्राणानुग्रहजन्यत्वम् । अघानां पलालत्वोक्त्या हरिमुख्यप्राणानुग्रहपात्रस्य दुरितनिराकरणं तृणप्रायम्। **वादिराज** इत्यनेन स्वस्य काव्यकरणशक्तिः । **वागीशसुत** इत्यनेन एतत्सर्वं स्वोपदेष्टृगुरुप्रसादायत्तम् ।

''यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः''[१]

इति, 'आचार्यवान् पुरुषो वेद'[२] इति च श्रुतेः । **सुरम्यां कथामित्यनेन** कथाया रमणीयत्वोक्त्या तत्कथने औत्सुक्यं शंसतीति [३]प्रथमपुरुषप्रयोगेन काव्यकर्तृत्वं परमात्मन एव मुख्यमिति द्योत्यते । पदार्थीभूतदुरितध्वंसस्य हरिकथाकथनहेतुकत्वात् पदार्थहेतुकं **काव्यलिङ्गमलङ्कारः** । **वृत्त्यनुप्रासाख्यः शब्दालङ्कारश्च** । अनुप्रासाख्यालङ्कारोऽस्मिन् काव्ये प्रायिकः । गौडी रीतिः । ''समस्तामुद्भरपदामोजःकान्तिसमन्विताम् । महाप्राणाक्षरवतीं गौडीमाहुर्बुधाः'' इति । **उपेन्द्रवज्रावृत्तम्** । 'उपेन्द्रवज्रा जतजास्ततो गौ' इत्युक्तेः ॥ ८ ॥

**अपण्डितेनापि मयाऽऽर्जितेयं मुकुन्दलीला कविकण्ठमाला ।**
**अकौशलेन ग्रथितेति जातिप्रसूनमालां किमु सन्त्यजन्ति ॥९॥**

**व्या :** इदानीं गर्वपरिहारायाह । **अपण्डितेनेति** । **अपण्डितेनापि** अप्राज्ञेनापि । 'धीरो मनीषी ज्ञः प्राज्ञः संख्यावान् पण्डितः कविः' इत्यमरः । **मया आर्जितोपार्जिता** काव्यमुखेन वर्णितेत्यर्थः । **इयं** बुद्धिस्थत्वेन सन्निहिता

---

१ श्वेताश्वतरोपनिषत् (६/२३)

२ छान्दोग्ये (६/१४/२)

३ परोक्षवचनं तु द्रोणं प्रति भीमवचनवत् । -गीताभाष्ये (१८/६१)

**मुकुन्दस्य** मोक्षप्रदस्य हरेः **लीला** विलासः । 'लीला केली विलासश्च' इति भास्करः । हरिविलासवर्णनात्मकं काव्यमित्यर्थः । **कवीनां कण्ठमाला** कण्ठ-भूषणं भवत्विति शेषः । अस्मत्कृतावकौशल्येऽपि कवयो हरिकथात्वेनात्रादरं कुर्वन्त्वित्यर्थः । अत्र निदर्शनमाह - **अकौशलेनेति** । न विद्यते कौशलं चातुर्यं यस्य स तथोक्तः । तेन **ग्रथितेति** बद्धेति कृत्वा **जातिप्रसूनमालां** जातिकुसुममालाम् । 'प्रसूनं कुसुमं सुमम्' इत्यमरः । विदग्धाः **सन्त्यजन्ति किमु** । मालाकारस्याचातुर्येऽपि कुसुमेषु जातिकुसुमस्य श्रैष्ठ्यात् तत्प्रसून-लोभात् तत्प्रसूनमालां प्रतिगृह्णन्त्येवेत्यर्थः । **निदर्शनमलङ्कारः** । तदुक्तम् -''अर्थान्तरमुपन्यस्य किञ्चित्तत्सदृशं यदि । सदसद्वा निदर्श्येत निदर्शनमिदं स्मृतम्''इति । **उपेन्द्रवज्रा** ॥ ९ ॥

**अपि प्रमादागतदोषलेशामिमां कवित्वश्रियमाद्रियध्वम् ।**
**बुधा विदग्धैः किमुपेक्षणीयापयोब्धिजा चञ्चलताख्यदोषात् ॥१०॥**

**व्या :** ननु अपण्डितकृतौ दोषस्य सम्भावितत्वात् कथमुपादेयत्वमित्यत आह - **अपीति** । हे **बुधाः** कोविदाः । 'कोविदो बुधः' इत्यमरः । **प्रमादे**नानवधानतया । 'प्रमादोऽनवधानता' इत्यमरः । **आगतः** प्राप्तो **दोषः** शब्दार्थनिष्ठस्तस्य **लेशो** यस्यास्तामपि **इमां** चिकीर्षितत्वेन बुद्धिसंनिहितां **कवित्वश्रियं** कवितासम्पदम् **आद्रियध्वम्** उपाददध्वम् । कवित्वश्रियमित्यनेन कवित्वस्य बहुगुणयुतत्वसूचनम् । ''एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः''[१] इति न्यायात् स्वल्पदोषोऽनादरणीय इति कवेर्भावः । अत्र निदर्शनमाह **पयोब्धिजा** क्षीरसागरजन्या लक्ष्मीः **चञ्चलताख्यदोषा**च्चाञ्चल्यलक्षणदोषात् । ''न श्रीरेकत्र तिष्ठति'' इति प्रसिद्धिश्च । **विदग्धैः** प्रौढैरु**पेक्षणीया किम्** उपेक्षार्हा किं नोपेक्षणीयेत्यर्थः । इवशब्दं विहाय केवलं दृष्टान्तमात्रनिदर्शनात् **निदर्शनालङ्कारः** ॥ १० ॥

---

१ कुमारसम्भवे (१/३)

**असङ्ख्यपापाचलकोटिभाजां दितेः सुतानां वशमागतेयम् ।**
**असह्यभारार्दितसर्वगात्री जगाम धात्री शरणं विरिञ्चिम् ॥११॥**

**व्या :** कृतकाव्यपीठरचनः कथां प्रस्तौति । **असङ्ख्येति** । इयं धात्री भूमिः । धरा वसुन्धरा धात्रीति धनञ्जयः । न विद्यते सङ्ख्या गणना यासां ता असङ्ख्याः । पापान्येवाचलाः पर्वताः दुर्भरत्वात् पापानामचलत्वोक्तिः । तेषां कोट्यः सङ्ख्याविशेषाः प्रकर्षो वा असङ्ख्याश्च ताः पापाचलकोट्यश्च ताः भजन्तीति **असङ्ख्यपापाचलकोटिभाजः** । तेषां **दितेः सुतानां** दैत्यानां **वशमागता** अत एवासह्यभारेणार्दितं व्यथितं **सर्वं** समस्तं **गात्रं** यस्याः सा तथा सती । ''अङ्गगात्रकण्ठेभ्यश्चेष्यतः''[१] इति ङीप् । 'गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः' इत्यमरः । पापिष्ठत्वाद्दैत्यानां भारमसहमाना सतीत्यर्थः । **विरिञ्चिं** ब्रह्माणं **शरणं** रक्षकं जगाम[२] । 'शरणं गृहरक्षित्रोः' इत्यमरः । छेकानुप्रासोऽलङ्कारः ॥११॥

**मुकुन्दविद्वेषिभरेण भिन्ना बभूव सा क्षान्तियुताऽपि खिन्ना ।**
**तथाहि लोके पतिनिन्दकेभ्यः पतिव्रतानामपरः क्व भारः ॥१२॥**

**व्या :** मुकुन्दविद्वेषित्वाद्दैत्यानां भूभारकत्वं हार्दं लोकरीत्या उपपादयन्नाह - **मुकुन्देति** । **सा** भूः **क्षान्त्या** क्षमया **युताऽपि** । [३]सर्वसहाऽपीत्यर्थः । **मुकुन्दविद्वेषिणां** विष्णुद्वेषिणां दैत्यानां **भरेण भिन्ना** विशीर्णा अत एव **खिन्ना** दुःखिता **बभूव** । इममर्थम् अर्थान्तरन्यासेन द्रढयति - **तथाहीति** । **तथाहि लोके पतिव्रतानां** साध्वीनाम् । 'सती साध्वी पतिव्रता' इत्यमरः । स्त्रीणां **पतिनिन्दकेभ्यः** स्वपतीनां दूषकेभ्यः । ''कर्तरि च''[४] इति षष्ठीसमा-

---

१ वृत्तिः

२ भूमिर्दृप्तनृपव्याजदैत्यानीकशतायुतैः ।
आक्रान्ता भूरिभारेण ब्रह्माणं शरणं ययौ ॥ -भागवते(१०/१/१७)

३ सर्वसहा वसुमति वसुधोर्वी वसुन्धरा । - इत्यमरः

४ पा.सू. (२/२/१६)

सनिषेधस्य 'तत्प्रयोजको हेतुश्च'[१] इति सौत्रप्रयोगादनित्यत्वात् पतिनिन्दकेभ्य इत्यत्र षष्ठीसमासः साधुः । **अपरो** अन्यो **भारः क** कुतः । 'पतिव्रतानां पतिनिन्दका एव भारभूताः' इत्यर्थः । 'भूमेरपि [२]विष्णुपत्नीत्वाद्विष्णुद्वेषिणः पतिद्वेषित्वेन भारभूताः' इति लौकिकम् । अत एव **लोक** इत्युक्तम् । आन्तरं तु मुकुन्दाभिधपरमपुरुषविद्वेषित्वेन दैत्यानां भूभारकत्वमिति द्रष्टव्यम् । अत एव 'मुकुन्दविद्वेषिभरेण' इत्युक्तम् । **अनुप्रासालङ्कारः** ॥ १२ ॥

**निशम्य गोब्राह्मणमुख्यबन्धुं ध्रुवं मुकुन्दं शरणं व्रजन्ती ।**
**बभूव गोरूपधरा धरा सा तमार्तभारापहरं च दीना ॥ १३ ॥**

**व्या :** ''गौर्भूत्वाऽश्रुमूखी खिन्ना''[३] इत्यादौ भूमेर्गोरूपं धृत्वा दैन्यमवलम्ब्य विष्णुसमीपगमने निमित्तमुत्प्रेक्षयन्नाह - **निशम्येति** । **मुकुन्दं** विष्णुं **शरणं व्रजन्ती सा धरा तं** मुकुन्दं [४]**गोब्राह्मणमुख्यबन्धुं** गवां ब्राह्मणानां मुख्यबन्धुं अनिमित्तबन्धुम् । ''गोब्राह्मणहिताय च''[५] इति स्मृतेः । **निशम्य** श्रुत्वा प्रथमोल्लङ्घने

---

१ पा.सू. (१/४/५४)

२ भूमेः पञ्चभूतावरायाः -
तदा भूमिः पञ्चभूतावरा या यस्यां जज्ञे नरकः श्रीवराहात् ।
मूलप्रकृत्यैव भूम्या नितान्तमाविष्टा या साऽगमत् कृष्णपादौ ॥
-म.भा.ता.नि.(२०/१०५)- इत्युक्तेः

३ **गौर्भूत्वाऽश्रुमुखी खिन्ना** रुदन्ती करुणं यथा ।
उपस्थिताऽन्तिके तस्मै व्यसनं समवोचत ॥ - भागवते (१०/१/१८)

४ स्वर्गेषु पशुवाग्वज्रदिङ्नेत्रघृणिभूजले ।
लक्षदृष्ट्या स्त्रियां पुंसि गौः ॥ -अमरकोशः
गौर्नादित्ये बलीवर्दे किरणक्रतुभेदयोः ।
स्त्रीषु स्यात् भारत्यां भूमौ च सुरभावपि ॥(केशवः) ;
गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान् ॥
स्त्री सौरभेयी दृग्वाणदिग्वाग्भूष्वप्सु भूम्नि च ॥

५ नमो ब्रह्मण्यदेवाय **गोब्राह्मणहिताय च** ।

कारणाभावाद्दीरूपधरा बभूव । 'दीननाथ' इति तन्नामसु पाठात् । **आर्तभारापहरम्** **आर्तानां** दीनानां **भारापहरं** दुःखापहरं **च निशम्य** । **दीना** खिन्ना **बभूव** । **ध्रुवं** निश्चयः । ध्रुवमित्यस्योत्प्रेक्षाव्यञ्जकत्वाद्बभूवेति तिङन्तपदस्यानेकत्र सम्बन्धाद्दीपकोत्प्रेक्षयोः अङ्गाङ्गिभावेन सङ्करः । छेकावृत्तिश्चानुप्रासः ।१३ ।

**विरिञ्चवैरिञ्चमुखामरेशाः स्वपारतन्त्र्यं[1] भुवि दर्शयन्तः ।**
**हरिं धराकार्यकृते गृणन्तः पुरान्निरीयुर्हृदि तं स्मरन्तः ॥ १४ ॥**

**व्या :** भूम्यागमनानन्तरं ब्रह्मादिभिः किं कृतमित्यत आह - **विरिञ्चेति** । **विरिञ्चो** ब्रह्मा विरिञ्चस्यापत्यं पुमान् **वैरिञ्चः** शिवः तौ **मुखे** मुख्यौ येषां ते विरिञ्चवैरिञ्चमुखाः[2] । 'मुखं प्रधाने प्रारम्भे वक्त्रे निःसरणेऽपि च' इति रत्नमाला । ते च ते **अमरेशाः** देवश्रेष्ठाः **स्वपारतन्त्र्यं** स्वेषां पारतन्त्र्यं पराधीनतां **भुवि** जनान् प्रति **दर्शयन्तः** सन्तः **धरायाः** यत्**कार्यं** दुःखपरिहरणं तत्**कृते** भूप्रयोजनार्थम् । अव्ययमेतत् । **हरिं** दुःखहरणसमर्थं **गृणन्तः** स्तुवन्तः **हृदि** हृदये **तं** हरिं **स्मरन्तः** संतः **पुरान्निरीयुः** निर्जग्मुः । भारजनितखेदपरिहाराय स्वसमीपमागतायाः धरायाः प्रयोजनार्थं स्वस्वपुरादन्यत्र निर्गमनेन स्वेषां पारतन्त्र्यं दर्शितं भवतीति भावः । अत्र गृणन्तः स्मरन्तो निरीयुरित्यनेन विष्णुक्षेत्रयात्रायाः तत्स्तोत्रपाठतत्स्मरणपूर्वककर्तव्यत्वं ध्वन्यते । **अनुप्रासशब्दालङ्कारः** ॥ १४ ॥

**सुरावली सा श्रुतिवर्ण्यवेषा नभस्थले नष्टतमिस्रजाले ।**
**ययौ यतीन्द्रैरपि यत्नगम्यां पयोब्धिवेलां पतदूर्मिमालाम् ॥१५॥**

---

जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥ - महाभारते शान्तिपर्वणि भीष्मस्तवराजे (४७/९५), विष्णुपुराणे (१/१९/६५) च ।

१ यः पद्मासनधूर्जटिप्रभृतिभिः कार्याक्षमैः प्रार्थितः । -इति वक्ष्यमाणत्वात् (१९/१३

२ ब्रह्मा तदुपधार्याथ सह देवैस्तया सह ।
जगाम सत्रिनयनस्तीरं क्षीरपयोनिधेः ॥ -भागवते(१०/१/१९)

**व्या :** सुरावलीति । **श्रुतिभिर्वेदैः** । 'श्रुतिः स्त्री वेद आम्नायः' इत्यमरः । **वर्ण्यो वेषः** सहस्राक्षत्वाद्याकारो यस्याः **सा** । **सुरावली** सुराणां समूहः । स्वदेहकान्त्येति शेषः । **नष्टतमिस्रजाले** विनष्टान्धकारगणे । ''जालं जालकमित्येतौ गवाक्षानाययोर्गणः'' इति रत्नमाला । 'जालं समूह आनायो गवाक्षक्षारकावपि:' इत्यमरः । अनेन देवानां तेजोरूपत्वं गम्यते[1] । **नभःस्थले** गगनतले । 'नभोऽन्तरिक्षं गगनम्' इत्यमरः । **यतीन्द्रैरपि** निर्जितेन्द्रियैर्योगिभिरपि । 'ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते' इत्यमरः । यमनियमादिप्रयत्नवद्भिरिति वा । 'यती प्रयत्ने' इति धातोः। तैरपि **यत्नगम्यां** तपश्चरणादिप्रयत्नगम्यां मुक्तस्थानत्वादिति भावः । **पतताम्** इतस्ततः सञ्चलताम् **ऊर्मीणां** तरङ्गाणाम् । 'भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियाम्' इत्यमरः। **माला** पङ्क्तिर्यस्याः सा । 'माला तून्नतभूर्माला पङ्क्तौ पुष्पादिदायिनी' इति भास्करः । **पयोब्धिवेलां** क्षीरसमुद्रतीरम् । 'वेलाऽब्धितीराभिवृद्ध्योः कालमर्यादयोरपि' इति भास्करः । **ययौ** प्राप । **अनुप्रासशब्दालङ्कारः** ।।१५।।

**ततोऽब्जभूः क्षीरपयोब्धितीरे समाधिमास्थाय सुसंयताक्षः ।**
**स्थिरासनः प्राणगणान् नियम्य प्रचक्रमे प्राञ्जलिरात्मदीक्षाम् ।।१६।।**

**व्या :** तत इति । **ततः** समुद्रगमनानन्तरम् । **अब्जभूः** अब्जाद्भवतीति अब्जभूः । **अब्जं** कमलं **भूः** यस्येति उत्पत्तिस्थानं **अब्जभूर्ब्रह्मा क्षीरपयोब्धितीरे समाधिं** चित्तैकाग्र्यं **आस्थायाधाय** । **सु** सुष्ठु **संयतानि** नियमितानि **अक्षाणि** इन्द्रियाणि येन स तथोक्तः । 'अक्षमिन्द्रियम-क्षोनारथाङ्गव्यवहारयोः' इति भास्करः । **स्थिरं** दृढम् **आसनं** पद्माख्यं यस्य स तथोक्तः सन् **प्राणगणान्** श्वासोच्छ्वाससमूहान् **नियम्य** प्राणायामं कृत्वेत्यर्थः । **प्राञ्जलिः** निबद्धाञ्जलिपुटः सन्नात्मदीक्षाम् **आत्मनः** परमात्मनः विष्णोः । 'दत्तं दूर्वाससं सोममात्मेशब्रह्म

१　वैकारिको देवसर्गः । इति भागवते ३/१०/१६

सम्भवान्'[१] इति भागवते आत्मशब्दस्य विष्णौ योगात्। 'आत्मा देहे धृतौ यत्ने स्वभावे परमात्मनि' इत्यभिधानाच्च। **दीक्षां** पूजानियमं **प्रचक्रमे** उपक्रान्तवान्। आरब्धवान्। 'क्रमु पादविक्षेपे'। धातूनामनेकार्थत्वादुपसर्गबलाच्चेहारम्भार्थो बोद्धव्यः। उत्तमाधिकारिणश्चतुर्मुखस्यापि महाप्रयत्नसाध्यत्वात् हरिप्रसादस्य दौर्लभ्यं किं वर्णनीयमिति भावः। **क्रियाजातिरलङ्कारः** ॥१६॥

**यदा स पद्मासनसंस्थितोऽलं जजाप विद्यामितरैरवेद्याम्।**
**तदा प्रभृत्येव जगत्सु नूनं बभूव पद्मासनशब्दितोऽसौ ॥१७॥**

**व्या :** ब्रह्मादीनां देवानां हरिभजकत्वे तत्तनाम्नामेव ज्ञापकत्वमुत्प्रेक्षयन्नाह - **यदा स पद्मासनेत्यादि रसा पिपासेत्यन्तैःश्लोकैः।** **यदा** यस्मिन् काले सोऽब्जभूः **पद्मासनसंस्थितः** सन् शरीरार्जवसम्पादकत्वेन चित्तस्वास्थ्यहेतुत्वात् जपकाले [२]पद्मासनस्य मुख्यत्वादिति भावः। **इतरैः** स्वाधमाधिकारिभिर**वेद्यां** ज्ञातुमयोग्यां पुरुषसूक्तमन्त्रं **जजाप। तदाप्रभृत्येव** तत्कालमा-रभ्यैवासौ ब्रह्मा **जगत्सु** भुवनेषु। 'विष्टपं भुवनं जगत्' इत्यमरः। **पद्मासन** इति **शब्दः** पद्मासनशब्दः स सञ्जातो अस्येति **पद्मासनशब्दितः**। तदभिधेय इत्यर्थः। **बभूव। नूनं** निश्चयः। ब्रह्मणः पद्मासनशब्दाभिधेयत्वे जपकालीनपद्मासनस्थितिरूपकारणोत्प्रेक्षा। यतोऽयं हरिपूजात्मकजपकाले पद्मसदृशासनस्थित्या पद्मवदासनं यस्येति समासेन पद्मासननामा बभूव। अतोऽस्य हरिभजकत्वे पद्मासननामैव ज्ञापकमिति भावः। **उत्प्रेक्षालङ्कारः**। पद्मासनशब्दस्य श्लिष्टत्वात् **श्लिष्टगर्भितोऽयम्** ॥ १७ ॥

**तदा तदन्यान्यपहाय हेयान्यरक्तचित्तः स विरिञ्चिपुत्रः।**
**स्तुवन् गिरीशोऽपि गिरा मुरारिमनङ्गजिद्दिग्वसनो बभूव ॥१८॥**

---

१ भागवते ४/१/१५

२ स्वस्तिकाद्यानि चासनम्। - इति तन्त्रसारसङ्ग्रहे।

**व्या :** तदेति । **सः विरिञ्चपुत्रः** शिवः **तदन्यानि** तस्माद्विष्णोरन्यानि **हेयानि** अनित्यत्वादिदोषदुष्टत्वात् त्याज्यानि अम्बरादिवस्तूनि **अपहाय** त्यक्त्वा **अरक्तचित्तः** कामरहितान्तःकरणः सन् । यणादेशः [१]परादिवदिति वचनात् नात्र यतिभङ्गदोषः । **गिरा मुरारिं** हरिं **स्तुवन्** क्रमात् **दिग्वसनः** दिगम्बरः अनङ्गजित् कामजित् । **गिरीशोऽपि** गिरिवाचि **ईशः** समर्थः गिरामीश इति वा **बभूव** । [२]विष्णिव-तरविषयपरित्यागात् दिग्वसनः, अरक्तचित्तत्वादनङ्गजित्, गीर्भिः स्तुतिकरणात् गिरीशश्च बभूवेति हेतूत्प्रेक्षायां क्रमालङ्कारेण **सङ्करः** ॥ १८ ॥

**तदैव शेषोऽजनि वायुभक्षः सहस्रनेत्रोऽपि तदैव नूनम् ।**
**शतक्रतुः सुप्तिविदूरभावा बभूवुरस्वप्नपदाश्च देवाः ॥ १९ ॥**

**व्या :** तदैवेति । **शेषो**ऽनन्तः यदा हर्यनुग्रहमाकाङ्क्षन् वाताहारं कृत्वा तपश्चकार । तदैव तदारभ्यैव **वायुभक्षः** पवनाशननामा । 'जिह्मगः पवनाशनः' इत्यमरः । **अजनि** बभूव । **सहस्रनेत्रोऽपि** सहस्रं नेत्राणि यस्य स इन्द्रोऽपि । 'आखण्डलः सहस्राक्षः' इत्यमरः । यदा हरिं स्तुत्वा क्रतुशतफलं प्राप्तवान् **तदैव शतक्रतुः** शतक्रतुशब्दाभिधेयो **बभूव** । **सुप्तेः** निद्राख्यस्वप्नात् । 'स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि' इत्यमरः । **विदूरः भावः** चित्तं येषां ते **सुप्तिविदूरभावाः** । देवाश्चास्वप्नपदाः हरिपूजायां निद्राजाड्यमपहाय जागरूकत्वादस्वप्ननामानो **बभूवु**रित्यर्थः । 'आदित्या ऋभवोऽस्वप्नाः' इत्यमरः । **अनुप्रासोऽप्यलङ्कारः** ॥१९॥

---

१ परादिश्चन्दसि बहुलम् । पा. सू (६/२/१९९)

२ मौलौ यच्चरणाम्बु फालफलके यस्याङ्घ्रिरेणुः कथा
कर्णे वाचि यदीयनाम हृदि यद्रूपं यदास्वादितम् ।
कुक्षौ यत्तपसेऽपटं कटितटं व्याघ्राजिने संस्थितिः
पादौ यत्पुरचारिणौ स हि सदा तत्किङ्करः शङ्करः ॥ -तीर्थप्रबन्धे (२/२६)

**रसा पिपासोग्रभराशनाया विषह्य विष्णुं मनसाऽचलेन[१] ।**
**तदाऽनुधावन्त्यचलेति सर्वंसहेति नूनं जगदे जगत्याम् ॥२०॥**

**व्या : रसा पिपासेति** । **रसा** विश्वम्भरा भूमिः । 'रसा विश्वम्भरा स्थिरा' इत्यमरः । **पिपासा** पातुमिच्छा पिपासा । **उग्रो** बहुतरो **भरो** भारः अशितुं भोक्तुम् इच्छा **अशनाया** बुभुक्षा पिपासा च उग्रभरश्च अशनाया च **पिपासोग्रभराशनायाः**। 'अशनायोदन्ययाधनाया बुभुक्षापिपासागर्धेषु' इति बुभुक्षार्थे **अशनायेति** निपातः। ताः **विषह्याचलेन** स्थिरेण **मनसा विष्णुमनुधावती** स्मरन्ती सती **जगत्यां** लोके **तदा** तदारभ्य पिपासादिसहिष्णुत्वात् [२]**सर्वंसहेति** अचलेन स्थिरेण **मनसा** स्मरणात् **अचलेति** च पदाभ्यां **जगदे** अभ्यधायि । जनैरिति शेषः । **द्विधाऽनुप्रासोऽलङ्कारः** ॥ २० ॥

**सहस्रकार्येषु भवान् समर्थः सहस्रनेत्राननपाणिपादः ।**
**इतीव विज्ञापयितुं विरिञ्चिः स्तुतिं स पुंसूक्तगतां ततान ॥२१॥**

**व्या :** विद्यान्तरं विहाय ब्रह्मणः पुरुषसूक्तविद्ययोपासने प्रयोजनमुत्प्रेक्षयन्नाह- **सहस्रकार्येष्विति** । **स विरिञ्चिः सहस्रनेत्राननपाणिपादः** सहस्राणि नेत्राणि आननानि पाणयः हस्ताः पादाः यस्य स तथोक्तः । सहस्रशब्दः [३]प्रत्येकमभि सम्बध्यते। **स भवान् सहस्रकार्येषु समर्थः** शक्तः । भूभारहरणे कंसवधादि- बहुकार्यसद्भावाद् बहुसाधनवता भवितव्यम् । भवान् तादृश इति **विज्ञापयितुमिव** [४]**पुंसूक्तगतां** पुरुषसूक्तगतां **स्तुतिं** स्तोत्रं **ततान** चकार । पुरुषसूक्ते सहस्रशीर्षेत्यादिना बह्वाननाद्युक्तेरिति भावः । **उत्प्रेक्षालङ्कारोऽनुप्रासश्च** ॥२१॥

---

१ भूर्भूमिरचलाऽनन्ता रसा विश्वम्भरा स्थिरा ।
धरा धरित्री धरणी क्षोणी ज्या काश्यपी क्षितिः ॥- अमरकोशः   **अचला** भुवि (हैमः)

२ **सर्वंसहा** वसुमती वसुधोर्वी वसुन्धरा ।
गोत्रा कुः पृथिवी पृथ्वी क्ष्माऽवनिर्मेदिनी मही ॥ -अमरकोशः

३ **सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्** । - इति पुरुषसूक्तवचनम्

४ तत्र गत्वा जगन्नाथं देवदेवं वृषाकपिम् ।
पुरुषं **पुरुषसूक्तेन** उपतस्थे समाहितः । - भाग. (१०/१/२०)

**तच्चित्तेऽङ्कुरितः सुभक्तिलतया श्लिष्टः प्रमोदाश्रुभिः**
**सिक्तः सत्पुलकालिमूलविततः कायप्रभापल्लवः ।**
**ईषन्मीलितनेत्रकुड्मलयुतः शाखासहस्रोर्जितः**
**प्राप्तः श्रीरमणद्विजेन फलितस्तद्ध्यानकल्पद्रुमः ॥ २२ ॥**

**व्या :** देवानामुपासनाफलमाह - **तच्चित्त** इति । **तद्ध्यानकल्पद्रुमः** तेषां देवानां ध्यानाख्यकल्पवृक्षः । **तच्चित्ते** तेषां देवानां चित्ते चित्तेषु जात्येकवचनम् । **अङ्कुरितः** अङ्कुरः सञ्जातः अस्येत्यङ्कुरितः । 'तदस्य सञ्जातं तारकादिभ्य इतच्'[१] इति इतच् । ध्यानस्य मानसचित्ताख्यावस्थाविशेषसाध्यत्वादिति भावः । **सु** शोभना **भक्तिरेव लता** कल्पलता तया **श्लिष्टः** संश्लिष्टः । 'भक्तियुक्तस्य ध्यानस्य महाफलहेतुत्वादिति भावः । **प्रमोदाश्रुभिः** ध्यानजन्यानन्दबाष्पैः **सिक्तः** आर्द्रः । नासिकाग्रनिविष्टदृष्टेर्ध्यातुरश्रूणां हृदि निपातनादिति भावः । **सतां** हर्षोत्पन्नत्वाच्छोभनानां **पुलकानां** रोमोद्गमानामालयः पङ्क्तय एव **मूलानि** तैर्विततो व्याप्तः । आलवालादपि बहिर्निःसरणात् इति भावः । **कायप्रभापल्लवः** समाध्यवस्थायां समुत्पन्ना या कायस्य देहस्य प्रभा कान्तिः सैव पल्लवः किसलयं यस्य स तथोक्तः । 'पल्लवोऽस्त्री किसलयम्' इत्यमरः । 'मुखे विकासो नेत्रे जलं गात्ररुहेषु हर्षः' इति स्मृतेरश्रुरोमोद्गममुखविकासादीनां ध्यानकालीनत्वादिति भावः । **ईषत्** किञ्चित् **मीलितानि** निमीलितानि **लोचनान्येव कुड्मलानि** मुकुलानि **तैर्युतः** । ''दिशश्चानवलोकयन्''[२] इति स्मृतेः । **शाखासहस्रोर्जितः** शाखानामृगादिभेदभूतानां **सहस्रेणोर्जितः** । अन्यत्र **शाखाः** विटपाः तेषां **सहस्रेणोर्जितः** उन्नतः । अनेन देवानामुत्तमाधिकारित्वेन बहुशाखागतगुणोपसंहारे सामर्थ्यमस्तीति गम्यते । 'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्' इति सूत्रादिति भावः । **फलितः** परिपाकावस्थां प्राप्तः । कृष्णचित्ता-

१ पा.सू. ५/२/३६
२ गीता. ६/१३

कर्षणपटुतरत्वलक्षणपरिपूर्णत्वाख्यफलेन सम्पन्न इत्यर्थः । **श्रीरमणद्विजेन** श्रीकान्ताख्यपक्षिणा । 'द्वा सुपर्णा' इति[१] श्रुतेः । **प्राप्तः** ध्यानस्य परिपाकावस्थायां विष्णुः प्रसन्नस्तत्रागमदित्यर्थः । फलनिष्पत्त्यनन्तरं पक्षिणो वृक्षमाश्रयन्त इति भावः । **श्लिष्टपरम्परितं रूपकमलङ्कारः** । शार्दूलविक्रीडितं वृत्तम् ॥ २२ ॥

**ततः प्रसन्नः करुणाम्बुराशिः सुरान् समाश्वास्य विरिञ्चिपूर्वान् ।**
**धरां गतक्लेशभरां विधाय स्वकीयमायां[२] हरिरित्यवोचत् ॥२३॥**

**व्या :** तत इति । ततोऽनन्तरं **करुणाम्बुराशिः** कृपासमुद्रः हरिः **विरिञ्चिपूर्वान्** चतुर्मुखमुखान् **सुरान् समाश्वास्य** सान्त्वयित्वा **धरां** भूमिं **गतक्लेशभरां** **गतः** क्लेशस्य दुःखस्य **भरः** यस्यास्तां **विधाय** कृत्वा मनसेति शेषः । भूभारोत्तरणं करिष्य इति मनसा सङ्कल्प्येति यावत् । **स्वकीयमायां** स्वकीयां स्वपत्नीं मायां लक्ष्मीम् । 'माया नारायणीशाना'[३] इति मायाशब्दस्य लक्ष्म्यां प्रयोगात् । इति वक्ष्यमाणप्रकारेणावोचत् ॥ २३ ॥

**देवेषु धाता प्रभुरस्य लक्ष्मीस्तस्याः प्रभुः सोऽहमितीव शंसन् ।**
**आज्ञामजस्यैव[४] ददावदृश्यो विज्ञेयमूर्तिः स्फुटमिन्दिरायाः ॥२४॥**

---

१ मुण्डकोपनिषत् (३/१)

२ **'मम माया'** इति गी.(७/१४)

३ भागवते (१०/३/१३)

४ गिरं समाधौ गगने समीरितां निशम्य वेधास्त्रिदशानुवाच ह ।
गां पौरुषीं मे शृणुतामराः पुनर्विधीयतामाशु तथैव मा चिरम् ॥
पुरैव पुंसाऽवधृतो धराज्वरो भवद्भिरंशैर्यदुषूपजन्यताम् ।
स यावदुर्व्या भरमीश्वरेश्वरः स्वकालशक्त्या क्षपयंश्चरेद्भुवि ॥
वसुदेवगृहे साक्षाद् भगवान् पुरुषः परः ।
जनिष्यते तत्प्रियार्थं सम्भवन्तु सुरस्त्रियः ॥
वासुदेवकलानन्तः सहस्रवदनः स्वराट् ।

**व्या :** देवेष्विति। हरिः देवेषु इति निर्धारणे सप्तमी। **धाता** विरिञ्चः **प्रभुः**। **अस्य** धातुः **लक्ष्मीः प्रभुः** प्रभ्वी। "वोतो गुणवचनात्" इति[1] ङीषो वैकल्पिकत्वात्। **तस्याः** लक्ष्म्याः **सोऽहं प्रभुः** [2]स्वामी **इति शंसन्निव** कथयन्निवादृश्यः **सन्** **अजस्यैव** विरिञ्चस्यैवाज्ञां **ददौ**। **इन्दिरायाः** लक्ष्म्याः **स्फुटं** स्पष्टं **विज्ञेया** दृश्या **मूर्तिः** शरीरं यस्य स तथोक्तः सन् **आज्ञां ददौ**। अदृश्येनापि हरिणा अजस्यैवाज्ञादानात् अन्येषां देवानामदानात् तेभ्यो विरिञ्चस्योत्तमत्वम्। दृश्यात्ममूर्तिना लक्ष्म्याः आज्ञादानात् विरिञ्चादपि लक्ष्म्याः उत्तमत्वम्। लक्ष्मीं प्रत्याज्ञादानकर्तृत्वात् तस्या अपि स्वोत्तमत्वमुक्तमेवेति भावः। उत्प्रेक्षालङ्कारः॥२४॥

**त्वमेत्य देवक्युदरस्थगर्भं निधेहि रोहिण्युदरे स्वशक्त्या।**
**इतीरिता तं रमणं रमा सा प्रदक्षिणीकृत्य तथाऽकरोत् तत्॥२५॥**

**व्या :** आज्ञादानप्रकारमाह – **त्वमेत्येति**। हे देवि **त्वं** भूमिम् **एत्य देवक्युदरस्थगर्भं देवक्याः** वसुदेवपत्न्याः **उदरस्थं** जठरस्थितं **गर्भं** भ्रूणम्। 'गर्भोऽर्भके नाट्यसन्धौ कुक्षौ पनसकण्टके। भ्रूणे प्रवरके चार्थे' इति रत्नमाला। **स्वशक्त्या** स्वसामर्थ्येन [3]**रोहिण्युदरे रोहिण्या** बलभद्रमातुः **उदरे निधेहि** निवेशय **इति**

---

अग्रतो भविता देवो हरेः प्रियचिकीर्षया॥
योगमाया भगवती यया सम्मोहितं जगत्।
आदिष्टा प्रभुणाऽंशेन कार्यार्थं सम्भविष्यति॥ - भागवते (१०/१/२१-२५)

१ पा.सू. ४/१/४४

२ रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः।
ब्रह्मा मामाश्रितो नित्यं नाहं कञ्चिदुपाश्रितः॥
-महाभारते (आश्वमेधिकवैष्णवधर्मपर्वणि)

३ भगवानपि विश्वात्मा विदित्वा कंसजं भयम्।
यदूनां निजनाथानां योगमायां समादिशत्॥

हरिणा ईरिता उक्ता **सा रमा तं रमणं** पतिं **प्रदक्षिणीकृत्य** यथा हरिणोक्तं **तथा तदकरोत्** ॥ २५ ॥

**आज्ञापयामास पुरा स शेषं जज्ञे स रोहिण्युदरोदयाद्रेः ।**
**सम्प्रेषयन्ति स्म नरैर्नरेन्द्राः शय्यां स्वकीयां पुरतः प्रयाणे ॥२६॥**

**व्या :** आज्ञापयामासेति । **स** हरिः । **पुरा** स्वावतारात् पूर्वं **शेषं** मानुषेष्ववताराय **आज्ञापयामास**। 'कास्प्रत्ययादाममन्त्रे लिटि'[१] इत्याप्रत्ययः। 'कृञ् चानुप्रयुज्यते लिटि'[२] इत्यस्तेरनुप्रयोगः । **स** आज्ञप्तः शेषः **रोहिण्युदरमेवोदयाद्रिः** तस्मात् **जज्ञे** प्रादुर्बभूव । **उदरोदयाद्रेरि**त्यनेन बलभद्रस्य चन्द्रसाम्यं ध्वन्यते । स्वावतारात् पूर्वं शेषं कुतः सम्प्रेषयामासेति तत्राह – **सम्प्रेषयन्तीति । नरेन्द्राः** मनुष्येन्द्राः राजानः **प्रयाणे** उपस्थिते सति **नरैः** स्वपुरुषैः **स्वकीयां शय्यां पुरतः** अग्रत एव **सम्प्रेषयन्ति स्म** । स्मेत्यनेन लोकप्रसिद्धिं द्योतयति । शेषस्यापि स्वशय्यात्वात्

---

गच्छ देवि व्रजं भद्रे गोपगोभिरलङ्कृतम् ।
रोहिणी वसुदेवस्य भार्याऽऽस्ते नन्दगोकुले ॥
अन्याश्च कंससंविग्ना विवरेषु वसन्ति हि ।
देवक्या जठरे गर्भं शेषाख्यं धाम मामकम् ॥
तत् सन्निकृष्य रोहिण्या उदरे सन्निवेशय ।
अथाहं स्वांशभागेन देवक्याः पुत्रतां शुभे ॥ -भागवते (१०/३/६-९)
प्राप्स्यामि त्वं यशोदायां नन्दपत्न्यां भविष्यसि ।
अर्चिष्यन्ति मनुष्यास्त्वां सर्वकामवरेश्वरीम् ॥
नानोपहारबलिभिः सर्वकामवरप्रदाम् ।
नामधेयानि कुर्वन्ति स्थानानि च नरा भुवि ॥
दुर्गेति भद्रकालीति विजया वैष्णवीति च ।
कुमुदा चण्डिका कृष्णा माधवी कन्यकेति च ॥
माया नारायणीशाना शारदेत्यम्बिकेति च ॥ -भागवते (१०/३/१०-१३)

१ पा.सू. ३/१/३५
२ पा.सू. (३/१/४०)

पूर्वं सम्प्रेषयामासेत्यर्थः । कृष्णावतारात् पूर्वं बलभद्रावतारे निमित्तत्वेनोत्प्रेक्षितत्वेन शय्यात्वेनाग्रतः प्रेषणस्य लोकरीत्या समर्थनात् उत्प्रेक्षामूलकोऽयमर्थान्तरन्यासः ॥२६॥

**केशात्मना सन्निहितः स तस्मिन्[1] श्रीशोऽग्रजत्वं स्वयमेव नूनम् ।**
**धत्ते विधत्ते बलभद्रमातुर्नित्यं स्वमातृत्वसुखं सुखात्मा ॥ २७ ॥**

**व्या : केशात्मनेति** । **श्रीशः** लक्ष्मीपतिः **तस्मिन्** बलभद्रे **केशात्मना** शुक्लकेशरूपेण[2] **नित्यम्** अवतारसमाप्तिपर्यन्तं **सन्निहितः** प्रविष्टः सन् **स्वयमेवाग्रजत्वं** स्वाग्रजत्वं स्वज्येष्ठत्वमित्यर्थः । **नूनं** निश्चयेन स्वज्येष्ठत्वस यान्यत्रायोगात् **स्वयमेव धत्ते** बिभर्ति । कृष्णावतारात् पूर्वं बलभद्राविष्टत्वेन स्वयमेव जातत्वात् इति भावः । **सुखात्मा** सुखरूपी **बलभद्रमातुः** रोहिण्याः **नित्यं** सर्वदा **स्वमातृत्वसुखं** स्वस्य मातृभावेन यत्सुखं तद्विधत्ते करोति । स्वसन्निधानभरितबलभद्रदर्शनेन स्वदर्शनजन्यसुखं तस्या विधत्त इति भावः । बलभद्रे शुक्लकेशसन्निधानमस्तीति तात्पर्यार्थः । **धत्ते विधत्ते सुखं सुखात्मे**त्यत्रोभयोर्व्यञ्जनयोः सादृश्यात् च्छेकानुप्रासः ॥ २७ ॥

**बलात् प्रगृह्य स्वकवाटपालौ निशाचरौ भूतलमेत्य दृप्तौ ।**
**नृतस्करौ तौ विनिहत्य विष्णुर्निजौ निनीषन्निव गां गतोऽभूत् ।२८।**

---

१ विष्ण्वावेशी बलवान् यो गुणाधिकः स मे सुतः स्यादिति रोहिणी च ।
तेपे तपोऽतो हरिशुक्लकेशयुतः शेषो देवकीरोहिणीजः ॥
-इति महाभारततात्पर्यनिर्णये (१२/११२)

२ एवं संस्तूयमानस्तु भगवान् परमेश्वरः ।
उज्जहारात्मनः केशौ सितकृष्णौ महामुने ।
उवाच च सुरानेतौ मत्केशौ वसुधातले ॥
अवतीर्य भुवो भारक्लेशहानिं करिष्यतः ॥
- इति विष्णुपुराणे (५/१/६०,६१)

**व्या :** हरेर्भुव्यवतारे प्रयोजनमुत्प्रेक्षयति – **बलादिति**। विष्णुः। **स्वकवाटपालौ** स्वद्वारपालौ जयविजयाख्यौ **बलात्** बलात्कारेण **प्रगृह्य** गृहीत्वा यौ **निशाचरौ** निशायां रात्रौ चरत इति निशाचरौ राक्षसौ। निशाचरावित्यनेन तयोश्चोरत्वं गम्यते। चोराणामपि निशाचरत्वात्। **भूतलमेत्य** शिशुपालदन्तवक्ररूपेण भूमिं प्राप्य **दृप्तौ** उन्मत्तौ सन्तौ तिष्ठतः। **नृतस्करौ** मनुष्यतस्करौ। अनेनानयोरद्भुतचोरत्वं[1] ध्वन्यते। **तौ** राक्षसौ **विनिहत्य निजौ** स्वभृत्यौ [2]**निनीषन्निव** नेतुमिच्छन्निव **गां** भूमिं **गतः** प्राप्तः **अभूत्**। यथा वीरो राजा स्व पुरप्रवेशप्रतिबन्धकर्तॄन् द्वारपालान् प्रगृह्य स्वविषयं नीत्वा तिष्ठतः दृप्तान् चोरान् स्वयमेवागत्य विनिहत्य स्वभृत्यान् स्वपुरं प्रत्यानयति तद्वदिति भावः। सनकादि शापेनासुराक्रान्तत्वेन भुवि जातयोः जयविजययोः शापमोक्षार्थं भूमाववततारेति तात्पर्यार्थः। उत्प्रेक्षानुप्रासश्चालङ्कारः॥ २८॥

**न गर्भवासो मम निर्मलस्येत्यदो बुधान् बोधयितुं हृदेव।**
**फणीश्वरं गर्भगतं विधाय पुनः स्वयं सन्निहितो बभूव॥२९॥**

**व्या : न गर्भवास** इति। विष्णुः **निर्मलस्य** निर्गतं मलं प्रतिबन्धलक्षणं यस्मात् स तथोक्तः। हेतुगर्भविशेषणम्। तस्य **मम गर्भवासः** गर्भे जठरे वासः जरायुवाद्याक्रान्तत्वेन वासोऽवस्थानं नास्तीति यत् **अदः** तत् **बुधान्** ज्ञानिनः प्रति **बोधयितुं हृदेव** अभिप्रायेणेव **फणीश्वरं** शेषं **गर्भगतं** देवकीगर्भवासिनं **विधाय** कृत्वा। **पुनः** पश्चात् तं विकृष्य **स्वयं** देवक्युदरे **सन्निहितः** प्रविष्टो **बभूव**। यथा राजा मलिनं गृहं स्वदासीमन्तः प्रवेश्य रजोनिःसारणमार्जनादिना मालिन्यमपसार्य निर्मलीकृत्य पश्चात् स्वयं प्रविशति तद्वदिति भावः। सन्निहित इत्यनेन गृहवत् प्रवेशमात्रं न तु जीववत् शुक्रद्वारा योनिप्रवेश इति ध्वन्यते। पूर्ववदलङ्कारः॥२९॥

---

१ 'ततो महातस्करमेनमाहुः' -(सुमध्वविजये १/५२) इतिवत् ज्ञेयम्।
२ नीतौ पुनर्हरेः पार्श्वं जग्मतुर्विष्णुपार्षदौ। - इति भागवते॥ (७/१/४६)

**गर्भेऽप्यदभ्रात्मसुखैकमूर्तिमभ्येत्य पद्मासनमुख्यदेवाः ।**
**गीर्भिर्भवद्गर्भनिवासजार्तिनिर्भङ्गसिद्ध्यर्थमिवास्तुवंस्तम् ॥३०॥**

**व्या : गर्भेऽपीति** । **पद्मासनो** विरिञ्चः स एव **मुख्यः** प्रधानं येषां ते **पद्मासनमुख्याः** ते च ते देवाश्च **पद्मासनमुख्यदेवाः गर्भेऽपि** जठरेऽपि दुःख हेतुभूतस्थानेऽपीत्यर्थः। **अदभ्रात्मसुखैकमूर्तिम् अदभ्रम्** अनल्पम् **आत्मसुखं** स्वरूपसुखम्। 'आत्मा यत्ने धृतौ जीवे स्वभावे परमात्मनि' इति भास्करः । तदेव **एका** मुख्या । 'एके मुख्यान्यकेवलाः' इत्यमरः । **मूर्तिः** तनुर्यस्य स तथोक्तः । अपरिमितस्वरूपानन्दैकदेह इत्यर्थः । तं विष्णुम् **अभ्येत्य भवन्** जायमानो **गर्भनिवासः** गर्भे निवासः जराद्यान्त्रावृतत्वेनावस्थानं तस्माज्जायत इति **भवद्गर्भनिवासजा** । आर्तिः दुःखम् । तस्याः **निर्भङ्गः** नितरां भङ्गः पराजयः विनाश इत्यर्थः। 'भङ्गः खण्डे पराजये' इति रत्नमाला। तस्य **सिद्धिः** निष्पत्तिः । **तदर्थमिव** सतां गर्भवासजन्यदुःखपरिहारार्थमिवेत्यर्थः[१] । **गीर्भिः** ''सत्यव्रतं सत्यपरम्''[२] इत्यादिस्तुतिरूपाभिः वाग्भिः **अस्तुवन्** स्तोत्रमकुर्वन्। यथा विलासेन कारागृहदर्शनार्थमागतस्य राज्ञः तत्रत्यदुःखं प्रदर्श्य स्तुतौ क्रियमाणायां प्रसन्नः सन् कारागृहबन्धात् विमोचयति तथा परमात्माऽपि गर्भ-वासजन्यदुःखदर्शनेनास्माभिः स्तुतः सन्नस्मद्गर्भवासजन्यदुःखं परिहरिष्यतीति भावेनास्तुवन्निति भावः । गर्भेऽप्यदभ्रात्मसुखैकमूर्तिमित्युपासने अस्माकमपि गर्भवासजदुःखपरिहारो भविष्यति। 'यो यथोपासते स तथा भवति'[३] इति श्रुतेः इति भावः ॥३०॥

---

१ दिष्ट्याऽम्ब ते कुक्षिगतः परः पुमान् अंशेन साक्षाद्भगवान् भवाय नः ।
मा भूद्भयं भोजपतेर्मुमूर्षोर्गोप्ता यदूनां भविता तवात्मजः ॥
- भागवते (१०/३/४२)

२ भागवते (१०/२/२६)

३ ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्। - गीता (४/११)

**अथो[1] जयन्त्यामुदभून्निशीथे शशीव देवक्युदरोदयाद्रेः ।**
**दिगष्टके रात्रिचरान् जिगीषोस्तिथिर्निशा सा च गुणोचितैव ।३१।**

**व्या :** अथो इति । अथो ब्रह्मादिस्तुत्यनन्तरं विष्णुः जयन्त्यां कृष्णाष्टम्याम् ।

''कृष्णाष्टमी श्रावणे तु प्रदोषसहिताष्टमी ।
[2]जन्माष्टमी भवेत् सैव जयन्ती रोहिणीयुता''

इति स्मृतेः । [3]**निशीथे** अर्धरात्रे । 'अर्धरात्रनिशीथौ द्वौ' इत्यमरः । **देवक्युदरोदयाद्रेः** देवक्या उदरमेव उदयाद्रिः उदयपर्वतः तस्मात् उदयाद्रेः **शशीव** चन्द्र इव । **उदभूत्** प्रादुरभूत् । शुक्रशोणितसम्बन्धेनोत्पत्त्यभावोऽनेन द्योत्यते । **सा** तिथिः अवतारतिथिः **सा निशा च दिगष्टके** दिशामष्टके अष्टदिक्षु स्थितान् **रात्रिचरान्** राक्षसान् **जिगीषोः** जेतुमिच्छतः कृष्णस्य **गुणोचितैव** अन्वर्थैव। जिगीषोरवतारकालत्वात् तिथेर्जयन्तीत्वम् । अष्टदिक्षु स्थितदैत्यवधार्थम् उत्पद्यमानस्यावतारकालत्वात् सङ्ख्यासाम्यात् अष्टमीत्वं चोचितमिति भावः। निशाचरजयिना निश्यवतीर्णेन भवितव्यम् । अन्यथा वैय्यधिकरण्यात् । तस्योत्पत्तिकालस्य निशात्वमप्युचितमिति भावः । अनेन जयन्तीनाम्न्यष्टम्यां

---

१ रोहिण्यामर्धरात्रे तु यदा कालाष्टमी भवेत् ।
जयन्ती नाम सा प्रोक्ता सर्वपापप्रणाशनी ॥ - जयन्तीनिर्णये

२ सिंहमासे तु रोहिण्या युतां कृष्णाष्टमीं पुमान् ।
उपोष्य मध्यरात्रे च पूजयेन्नन्दनन्दनम् ॥
यशोदासंयुतं तल्पे शयानं तु चतुर्भुजम् ।
शङ्खचक्रगदापद्मधरं ज्ञानस्वरूपिणम् ॥
क्षीरपायसमध्वाद्यै ऐर्नवनीतयुतैस्तथा ।
अपूपकदलाद्यैश्च मातुळङ्गसितादिभिः ॥
सुमनोभिस्तुलस्यादिदशभिर्गन्धसंयुतैः ।
अर्चयित्वा परेद्युश्च प्रातरेवाथ पूजयेत् ॥ - श्रीविष्णुतीर्थीयसन्यासपद्धतौ (४/२०९-२१२)

३ यस्यां जातो हरिः साक्षान्निशीथे भगवानजः ।
तस्मात् तद्दिनमत्यन्तं पुण्यं पापहरं शुभम् ॥ - इति श्रीजयन्तीकल्पे ॥

रात्रौ कृष्णावतारो जात इति पौराणिकीं कथां सञ्चारयता जयन्तीत्यादीनामन्वर्थत्वमुत्प्रेक्ष्यत इति **उत्प्रेक्षालङ्कारः** ॥३१॥

**प्रथां यशोदासुत इत्युदारां करिष्यमाणो जननीमिवान्याम् ।**
**स देवकीगर्भभवोऽनुगृह्णन् ततान रोहिण्युदयप्रसिद्धिम् ॥३२॥**

**व्या :** प्रथामिति । **देवकीगर्भभवः** सन् उत्तरत्र **यशोदायाः** नन्दपत्न्याः **सुत इति उदाराम्** उत्कृष्टां **प्रथां** प्रसिद्धिं **करिष्यमाणः स** कृष्णः **अन्यां** देवकीयशोदातिरिक्तां **जननीं** मातरम् **अनुगृह्णन्निव** परिगृह्णन्निव **रोहिण्युदयप्रसिद्धिं** रोहिणीनक्षत्रे स्वस्योदयप्रसिद्धिं **ततान** चकार । अन्यत्र प्रादुर्भूतत्वेऽपि अहमन्यस्याः सुत इति यथा प्रथां सम्पादयिष्यामि तथा रोहिणीनक्षत्रे प्रादुर्भूतः नामसाम्यात् रोहिण्यामुत्पन्न इति प्रथया बलभद्रमातरमप्यनुगृह्णामीत्यभिप्रायेणेव रोहिण्युदयप्रसिद्धिं ततानेति भावः । **प्रथामित्यनेन** कृष्णस्य यथा यशोदासुतत्वं प्रथामात्रं तथा देवकीसुतत्वमपि प्रथामात्रमिति ध्वन्यते । **उत्प्रेक्षालङ्कारः** ॥३२॥

**यदा हरिः प्रादुरभूत् कलाभिस्तदा समायव्ययवांश्च चन्द्रः ।**
**प्रियाप्रियास्येव निजान्वयोत्थमुकुन्दवक्त्रेन्दुकलावलोकात् ॥३३॥**

**व्या :** अष्टमीचन्द्रस्यार्धचन्द्रत्वे हेतुमुत्प्रेक्षयन्नाह – **यदेति** । **यदा** यस्मिन् काले **हरिः प्रादुरभूत्** प्रादुर्बभूव । **तदा निजे** स्वकीये **अन्वये** कुले । 'सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ' इत्यमरः । **उत्थस्य** अवतीर्णस्य **मुकुन्दस्य** कृष्णस्य वक्त्रम् [१]इन्दुरिव **वक्त्रेन्दुः** । 'उपमितं व्याघ्रादिभिः..' इति[२] उपमितसमासः । तस्य **कलावलोकात्** कान्तिदर्शनात् प्रियमिष्टम् अप्रियमनिष्टं तयोराप्तिः ।

---

१ स्मरेत यामिनीनाथसहस्रामितकान्तिमत् ।
भवतापापनोदीड्यं श्रीपतेर्मुखपङ्कजम् ॥ - इति द्वादशस्तोत्रे (१/८)

२ उपमितं व्याघ्रादिभिः सामान्याप्रयोगे - पा.सू. २/१/५६

**प्रियाप्रियाप्तिः** तयैव **कलाभिः** षोडशैर्भागैः । 'कला तु षोडशो भागः' इत्यमरः । **समायव्ययवान्** । आयो वृद्धिः व्ययो ह्रासः । समौ तुल्यौ आयव्ययावस्य स्त इति **समायव्ययवांश्चन्द्रः प्रादुरभूत्** । परमात्मनः कृष्णस्य स्वकुलोत्पन्नत्वात् कृष्णः सोमकुले जात इति प्रथया यशोलक्षणस्य प्रियस्याप्तिः स्वातिशयितका-न्तियुक्ततद्वक्त्रेन्दुदर्शनेन पराजयलक्षणाप्रियस्य चावाप्त्येव शरीरार्धस्योपचयः शरीरार्धस्यापचयो जात इत्यर्थः । हर्षशोकयोः शरीरोपचयापचयहेतुत्वादिति भावः ॥३३॥

**तदैव गन्धर्वगणा जगुस्तं तिलोत्तमाद्या ननृतुस्तदैव ।**
**स्वगीतनाट्येन विजेष्यमाणं तमात्मसात् कर्तुमिवाशु बाल्ये ।३४**

**व्या : तदैवेति** । **तदैव** तत्काल एव । **स्वगीतनाट्येन** स्वेन करिष्यमाणं गीतं वेणुगीतं च नाट्यं रासक्रीडायां करिष्यमाणं नृत्यं च तेन । द्वन्द्वैकवद्भावः । गीतसहितं नाट्यमिति वा तेन । **विजेष्यमाणं** तं कृष्णं **बाल्ये** शैशवे आशु त्वरया **आत्मसात्कर्तुमिव** आत्मीयं कर्तुमिव **तं** कृष्णम् अधिकृत्य **गन्धर्वगणाः** सुरगायकसमूहाः **जगुः** गानं चक्रुः । **तिलोत्तमैव आद्या** यासामुर्वश्यादीनां तास्तिलोत्तमाद्याः अप्सरस्त्रियश्च **ननृतुः** नृत्यं वितेनुः । वयोविशेषे प्रौढ्यतिशयेन वशीकरणासम्भवात् बाल्य इत्युक्तम् । इदानीमस्मत्कृतगीतनाट्येनात्मसा-त्कृतस्य कृष्णस्यात्मीयत्वेन तद्विजयोऽस्मद्विजय एवेत्यभिप्रायेणेवेति भावः । अनेन ''जगुः किन्नरगन्धर्वा[१] ...ननृतुश्चाप्सरोगणाः''[२] इति पौराणिकी कथा सञ्चारिता ॥ ३४ ॥

---

१ जगुः किन्नरगन्धर्वास्तुष्टुवुः सिद्धचारणाः ।
विद्याधराश्च ननृतुरप्सरोभिः समं मुदा ॥
मुमुचुर्मुनयो देवाः सुमनांसि मुदान्विताः । - इति भागवते (१०/४/६,७)

२ महाविष्णुपुराणवचनम् (५/३/५)

**दिशो यशोभिः परिपूरयिष्यत्युदग्रचेष्टः स इति प्रहृष्टाः ।**
**रसा प्रसन्ना किल रञ्जितां मां करिष्यति स्वाङ्घ्रितलश्रियेति ।३५।**

**व्या :** दिश इति । दिशः । **उदग्रचेष्टः** उत्कृष्टव्यापारः **स** कृष्णः **यशोभि**रस्मानिति शेषः । **परिपूरयिष्यति** इति कृत्वा इतीव वा **प्रहृष्टाः** सन्तुष्टा बभूवुः । **रसा** भूमिः । **स्वाङ्घ्रितलश्रिया** स्वपादतलकान्त्या **मां रञ्जिताम्** अलङ्कृतां **करिष्यति** इति। इतिशब्दस्य पूर्ववदर्थः । **प्रसन्ना किल** । किलेत्यनेन ''दिशः प्रसेदुः''[१]। ''मही मङ्गलभूयिष्ठा''[२] इति पौराणिकीं कथां सूचयति। वस्तुतत्वम् उत्प्रेक्षालङ्कारः ॥३५॥

**तदैव देवा ववृषुः प्रसूनैर्हृदि स्मरन्तो वचसा स्तुवन्तः ।**
**नगेन्द्रमैन्द्रं भुवि नेष्यतोऽस्य मनः समुद्बोधयितुं पुरैव ॥३६॥**

**व्या :** ''ववृषुः कुसुमासारैः[३]'' इति भागवतोक्तमुत्प्रेक्षया वर्णयति – **तदैवेति** । **देवाः तदैव** तस्मिन् काल एव तं कृष्णं **हृदि** चित्ते **स्मरन्तः वचसा स्तुवन्तः** सन्तः ऐन्द्रमिन्द्रसम्बन्धिनं **नगेन्द्रं** महीरुहश्रेष्ठं पारिजा-तमित्यर्थः । 'अगो नगश्च भुजगे भानौ भूरुहि भूधरे' इति भास्करः । **भुवि नेष्यतः** स्वगृहं प्रत्यानेष्यतोऽस्य कृष्णस्य **मनः पुरैव** पूर्वमेव **समुद्बोधयितुं** सम्यगुद्बुद्धं कर्तुमिव पुष्पाणि प्रदर्श्य तेषु लोभमुत्पाद यितुमिवेत्यर्थः । **प्रसूनैः** कुसुमैर्**ववृषुः** ॥ ३६ ॥

**पुत्रत्वादिह वासुदेवपदवी यद्यस्य शौरेस्तदा**
**नः पुत्रत्वकृताऽस्तु सेति वसवो देवाश्च हृष्टा ध्रुवम् ।**
**यद्यस्यानकदुन्दुभीष्टशिशुता सोऽस्माकमेवं शिशु-**
**स्तर्हीत्यानकदुन्दुभिध्वनिरभूद्व्योम्नि स्वयम्भूदये ॥ ३७ ॥**

---

१ भागवते (१०/४/२)

२ भागवते (१०/४/२)

३ मुमुचुर्मुनयो देवाः सुमनांसि मुदान्विताः । - भागवते (१०/४/७)

**व्या :** कृष्णस्य वसुदेवपुत्रत्वमसहमानस्तदुपहसन्नाह – **पुत्रत्वात्** इति । [1]**स्वयम्भूदये** सति स्वयमेव भवति नान्यस्मादिति स्वयम्भूः तस्योदये प्रादुर्भावे सति । वसुदेवसुतत्वाभावे हेतुसूचनार्थमिदम् । **शौरेः** शूरस्यापत्यं पुमान् शौरिः वसुदेवः तस्य **पुत्रत्वा**दस्य कृष्णस्य **यदि इह** लोके **वासुदेवपदवी** वासुदेवपदाभिधेयता तर्हि **सा** वासुदेवपदवी **नोऽ**स्माकं **पुत्रत्वकृताऽस्तु** । अस्मत्पुत्रत्वनिमित्ता स्यात् । यद्ययं वसुदेवादुत्पत्त्यभावेऽपि वसुदेवस्यायं वासुदेव इति व्युत्पत्तिसम्भवमात्रेण वसुदेवपुत्रस्तर्हि वसवश्च देवाश्च वसुदेवाः वसुदेवानामयं वासुदेव इति व्युत्पत्तिसम्भवात् अस्मत्पुत्रः किं न स्यात् इति भावः । **इति** इतीव **वसवः** अष्टवसवः तदितरे **देवाश्च** हृष्टा बभूवुः । ननु वसुदेवस्यायमिति व्युत्पत्तेरतिप्रसक्तत्वात् वासुदेवशब्दाभिधेयत्वेन वसुदेवपुत्र-त्वाभावेऽपि आनकदुन्दुभेः शिशुरिति प्रथया वसुदेवपुत्रत्वं भवत्वित्यत आह – **यदीति** । **यदि अस्य** कृष्णस्य उत्पत्त्यभावेऽपि निर्निमित्तम् **आनक-दुन्दुभे**र्वसुदेवस्य **इष्टशिशुता** प्रियपुत्रत्वं तर्हि **स** कृष्ण एवा**स्माकं शिशुः किं न स्यात्** । अस्माकमपि आनकाश्च दुन्दुभयश्च आनकदुन्दुभयः इति व्युत्पत्त्या आनकदुन्दुभित्वादिति भावः । **इतीव** इत्यभिप्रायेणेव **व्योम्नि** गगने **आनकदु-न्दुभिध्वनिः** आनकानां पटहानां दुन्दुभीनां भेरीणां **ध्वनिः** घोषः **अभूत्** । 'आनकः पटहोऽस्त्री स्याद्भेरी स्त्री दुन्दुभिः पुमान्' इत्यमरः । ''वसुदेवसुतो नायं नायं गर्भेऽवसत् प्रभुः''[2] इति वचनात् । वसुदेवादुत्पन्नः कृष्णो नेति तात्पर्यार्थः । कृष्णावतारे सति सन्तोषातिशयेन दिवि देवा वाद्यान्यवादयन्तेति[3] पौराणिकी कथा । **उत्प्रेक्षालङ्कारः** ।। ३७ ।।

---

१ **स्वयम्भूः** शम्भुरादित्यः । - इति विष्णुसहस्रनामसु ।

२ महाभारततात्पर्यनिर्णयोद्धृत - महाभारतवचनम् (२/७८)

३ जायामानेऽजने तस्मिन् नेदुर्दुन्दुभयो दिवि ।। -भागवते (१०/४/५)

**शरीरकान्त्या जलदः स्वजैत्रं निरीक्ष्य कृष्णं जलराशितीरे ।**
**जगर्ज शक्त्या रहितस्य पुंसो जलान्तिकेष्वेव हि गर्जितानि ॥३८॥**

**व्या :** **शरीरकान्त्येति** । जलं ददातीति जलदो मेघः श्यामत्वोपपादनार्थमिदम् । जलदानसमये मेघस्य श्यामत्वात् । **शरीरकान्त्या** इन्द्रनीलसमानाङ्गरुच्या **स्वजैत्रं** जेतैव जैत्रः जयशीलः । तृन्नंतात्प्रज्ञादित्वादण् । तं **कृष्णम्** । **निरीक्ष्य** दृष्ट्वा । **जलराशितीरे** समुद्रतीरे । **जगर्ज** ध्वनिं चकार । अनेन जलशब्दस्य जलं नीरे जडे त्रिष्वित्यभिधानाज्जडरूपार्थान्तरप्रतीत्या जडानां राशिरिति समुद्रस्य मूर्खत्वं गम्यते । तथाहि । **शक्त्या** बलेन **रहितस्य** स्वजेतुः प्रतिजये सामर्थ्यहीनस्येत्यर्थः । **पुंसः** पुरुषस्य । **गर्जितानि** जल्पितानि । **जलान्तिकेष्वेव** [१]जडानामन्तिकेष्वेव मूर्खसमीपेष्वेवेति यावत् । भवन्तीति । **हि** प्रसिद्धमित्यर्थः । यथा लोके केनचित् पराजितः पुनस्तत्पराजये असमर्थः सन् स्वजेत्रपकर्षवचनानि मूर्खसमीपे कथयति तद्वदिति भावः । मेघगर्जितस्य पराजयहेतुकत्वोत्प्रेक्षया **उत्प्रेक्षामूलकोऽर्थान्तर-न्यासः** । जलपदस्य श्लिष्टत्वात् श्लिष्टगर्भितोऽयम् । अनेन [२]"मन्दं मन्दं जलधरा जगर्जुरनुसागरम्" इति भागवतकथा सञ्चारिता ॥३८॥

**सरः प्रसन्नं निशि सारसौघैः स कामिनीभिः सह सम्प्रविश्य ।**
**करिष्यतीशो मुखपद्मपुञ्जैरलङ्कृतं मामिति शंसतीव ॥ ३९ ॥**

**व्या :** "ह्रदा जलरुहश्रियः"[३] इति भागवतोक्तमुत्प्रेक्षयति – **सर** इति । **निशि** रात्रावपि । **सारसानां** सरसीरुहाणाम् । 'सारसं सरसीरुहम्' इत्यमरः । **ओघैः** निवहैः । 'ओघः प्रवाहे निवहे' इति भास्करः । **प्रसन्नं** निर्मलं **सरः** सरोवरम् ।

---

१ तं त्वा वयं जडधियो न विदाम भूमन् (इति समुद्रवचनम्)
-महाभारततात्पर्यनिर्णयोद्धृत(८/११)भागवतवचनम्(९/१०/१४)

२ मन्दं मन्दं जलधरा जगर्जुरनुसागरम् ।
निशीथे तम उद्भूते जायमाने जनार्दने ॥ - इति भागवते (१०/४/७)

३ भागवते (१०/४/३)

ईशः समर्थः कृष्णः **निशि** रात्रौ **कामिनीभिः** कान्ताभिः । 'कामिनी ललना कान्ता' इति धनञ्जयः । **सह** मयि **सम्प्रविश्य** आकण्ठमवगाह्य **मुखपद्मपुञ्जैः** मुखान्येव पद्मपुञ्जाः कमलसमूहाः तैः साधनैः **माम् अलङ्कृतं करिष्यतीति** **शंसतीव** कथयतीव ॥ ३९ ॥

**नभः प्रसन्नोडुगणं तदाऽऽसीद्विभुत्वधर्मेण पुराऽद्वितीयम् ।**
**विलोक्य बालं भुवि तारहारविभूषितस्वाङ्गमिव प्रहर्षात् ॥४०॥**

**व्या :** ''गगनं निर्मलोडुगणोदयम्'' इति भागवतोक्तमुत्प्रेक्षयन्नाह – **नभ** इति । **तदा** तस्मिन् काले **प्रसन्नानां** मेघावृतेरभावात् प्रकाशमानानाम् **उडूनां** नक्षत्राणां **गणः** समूहो यस्मिन् तत् **प्रसन्नोडुगणम्**[१] । **नभः** गगनम् । 'नभोऽन्तरिक्षं गगनम्'

---

१ दिशः प्रसेदुर्गगनं निर्मलोडुगणोदयम् ।
महीं मङ्गलभूयिष्ठपुरग्रामव्रजाकरा ॥
नद्यः प्रसन्नसलिला ह्रदा जलरुहश्रियः ।
द्विजालिकुलसन्नादस्तबका वनराजयः ॥
ववौ वायुः सुखस्पर्शः पुण्यगन्धवहः शुचिः ।
अग्नयश्च द्विजातीनां शान्तास्तत्र समिन्धत ॥
मनांस्यासन् प्रसन्नानि साधूनामसुरद्रुहाम् ।
जायमानेऽजने तस्मिन् नेदुर्दुन्दुभयो दिवि ॥ - इति भागवते (१०/४/२-५)
सागराः समकम्पन्त चेलुश्च धरणीधराः ।
जज्वलुश्चाग्नयः शान्ता जायमाने जनार्दने ॥
शिवाश्च प्रववुर्वाताः प्रशान्तमभवद्रजः ।
ज्योतींष्यतिव्यकाशन्त जायमाने जनार्दने ॥...
अनाहता दुन्दुभयो देवानां प्राणदन् दिवि ।
आकाशात् पुष्पवृष्टिं च ववर्ष त्रिदशेश्वरः ॥
गीर्भिर्मङ्गलयुक्ताभिः स्तुवन्तो मधुसूदनम् ।
महर्षयः सगन्धर्वा उपतस्थुः सहाप्सराः ॥
जायमाने हृषीकेशे प्रहृष्टमभवज्जगत् ॥
- इति हरिवंशे(२/४/१५,१६,१८,१९,२०)

इत्यमरः । **पुरा** अवतारात् पूर्वम् । **विभुत्वधर्मेण** विभुत्वाख्यो धर्मः विभुत्वधर्मः तेन व्यापकत्वेनेत्यर्थः। **अद्वितीयम्** असदृशं कृष्णम् । इदानीं **भुवि बालम्** अल्पप्रदेशवर्तिनं शिशुम् । **विलोक्य प्रहर्षात्** पूर्वं स्वातिशयितविभुत्ववानिदानीं स्वापेक्षया अल्पप्रदेशवर्ती जात इति सन्तोषात् । **तारहारविभूषितस्वाङ्गमिव** । **ताराणि** नक्षत्राण्येव **हाराः** मुक्तामालाः। 'कनीनऋक्षयोस्तारः' इति रत्नमाला। अथवा तारहारैः शुद्धमौक्तिकदामभिः । 'तारो मुक्तादिसंशुद्धौ तारणे शुद्धमौक्तिके' इति भास्करः । तै**र्विभूषितानि स्वाङ्गानि** यस्य तत्तथोक्त**मिवासीत्**। यथा धनादिना स्वाधिकं दृष्ट्वा ईर्ष्यया सन्तप्तः कश्चित् पुनस्तस्य न्यूनतायां प्राप्तायां प्रहर्षादात्मानं वस्त्राभरणादिना भूषयति तद्वदिति भावः ॥ ४० ॥

**शिशुं वशीकर्तुमथो न भार इतीव बुद्ध्या तुतुषुः स्म वृद्धाः ।**
**उपेक्षयिष्यन्ति न चेत् कृतार्था इति स्वयं प्राज्वलदग्निरेषाम् ॥४१॥**

**व्याः शिशुमिति** । अथो कृष्णावतारानन्तरं वृद्धाः तपोज्ञानवयआदिभिरार्याः । **शिशुं** शिशुरूपिणं परमात्मानं **वशीकर्तुं** वशवर्तिनं कर्तुं **भारः** प्रयासः **न** नास्ति। बालका हि किञ्चिन्मधुरवचनफलदानादिनाऽपि वशवर्तिनो भवन्ति इति **बुद्ध्येव तुतुषुः** सन्तुष्टा बभूवुः । ब्रह्मादिभिरपि अतिशयेन प्रसन्नीकर्तुमशक्यः परमात्मा इदानीं शिशुभावमनुकुर्वन् किञ्चित्फलदानस्तुत्यादिना प्रसन्नीकर्तुं शक्यत इति धियेव तुष्टाः बभूवुरित्यर्थः । अनेन ''पत्रं पुष्पं फलं तोयं यो मे भक्त्या

---

सन्तः सन्तोषमधिकं व्रशमं चण्डमारुतः ।
प्रसादं निम्नगायाता जायमाने जनार्दने ॥
सिन्धवो निजशब्देन वाद्यं चक्रुर्मनोहरं ।
जगुर्गन्धर्वपतयो ननृतुश्चाप्सरोगणाः ॥
स्वसृजुः पुष्पवर्षाणि देवा भुव्यन्तरिक्षगाः ।
जज्वलुश्चाग्नया शान्ता जायमाने जनार्दने ॥
मध्यरात्रेऽखिलाधारे जायमाने जनार्दने ।
मन्द्रं जगर्जुर्जलधारा पुष्पवृष्टिमुचो द्विजा ॥ - श्रीमहाविष्णुपुराणे (३/५/४-७)

प्रयच्छति''[१] इति स्मृतेः भक्तस्याल्पसाधनैरपि परमात्मा सन्तुष्टो भवतीति परमात्मनः कृष्णावतारे भक्तानामतिसौलभ्यं ध्वन्यते । **एषां** वृद्धानाम् । **अग्निः** स्वयमिन्धनाद्युद्बोधं विना **प्राज्वलत्** प्रजज्वाल । **न चेत्** स्वयं प्रज्वलनाभावे ते **वृद्धाः कृतार्थाः** कृतस्य कर्मणः अर्थः प्रयोजनं येषां ते तथोक्ताः सन्तः माम् **उपेक्षयिष्यन्ति** । कृष्णदर्शनेनैव होमादिसकलकर्मफलापेक्षया सहस्रगुणितफल-प्राप्तेरित्यतः अस्माभिरेव सन्नद्धैः भवितव्यमित्याशयेन वयं प्रज्वलिताः स्मः । अतोऽस्मासु होमं कुरुत । इतीव स्वयं प्राज्वलदिति उत्प्रेक्षा । अनेन ''मनाम् स्यासन् प्रसन्नानि साधूनाम् ।''[२] ''अग्नयश्च द्विजातीनां [३]शान्तास्तत्र समिन्धत''[४] इति भागवतकथा सञ्चारिता ॥ ४१ ॥

**प्रसूनवृन्दानि विकम्पयंस्तद्गृहं स्पृशन्सारसवारिसङ्गः ।**
**ववौ[५] मरुन्मामसुराद्वियुक्तं करिष्यतीत्यर्चनधीरिवास्य ॥४२॥**

**व्या : प्रसूनेति** । मरुत् वायुः **प्रसूनवृन्दानि** कुसुमसमूहान् **विकम्पयन्** विधुन्वन् । अनेन वायोः सौरभ्यं पुष्पानपातयित्वा कम्पनमात्रेण मान्द्यञ्च, अर्चनार्थं पुष्पग्रहणं च द्योत्यते । **सारसं** सरोवरसम्बन्धि च तत् **वारि** च तस्य **सङ्गः** सम्बन्धो यस्य । अनेन शैत्यं पूजाकर्तुः स्नानमुदकादानञ्च द्योत्यते । **तद्गृहं** तस्य कृष्णस्य गृहं स्पृशन् । अनेन पूजार्थं प्रतिमास्पर्शो ध्वन्यते । मां असुरात् असुरेभ्यः जात्येकवचनम् । वियुक्तं करिष्यति । असुरान् हत्वा ततः श्वासोच्छ्वासरूपिणं मां वियोजयिष्यतीत्यर्थः । दुर्जनसंसर्गो हि सतां महादुःखकारणमिति भावः । इति हेतोः अस्य कृष्णस्यार्चने

---

१ गीता ९/२६

२ भागवते १०/४/५

३ जज्वलुश्चाग्नयः शान्ता जायमाने जनार्दने । - श्रीमहाविष्णुपुराणे (५/३/६)

४ भागवते १०/४/४

५ देहे च योऽभवदमुष्य रमेशबन्धुर्वायुः स कृष्णतनुमाश्रयत् .....॥
-इति महाभारततात्पर्यनिर्णये (१३/१३१)

पूजने धीर्बुद्धिर्यस्य स इव ववौ । उत्प्रेक्षालङ्कारः। अनुष्णाशीतस्पर्शरूपस्वगुण-त्यागेन पुष्पजलनिष्ठसौरभ्यादिगुणग्रहात् तद्गुणालङ्कारः । ''तद्गुणः स्वगुणत्यागा दन्योत्कृष्टगुणग्रहः'' इत्युक्तत्वात् । 'ववौ वायुः सुखस्पर्शः पुण्यगन्धवहः शुचिः'[1] इति भागवतकथाऽनेन सञ्चारिता ॥ ४२ ॥

**जाते हरौ स्वर्पितपुष्पवर्षैर्गीर्भिः स्तुवद्भिः सुरसिद्धसङ्घैः ।**
**दूरे विधूता इव विघ्नभीत्या मेघा दिगन्तं ययुरम्बरान्तात् ॥४३॥**

**व्या :** जात इति। **हरौ जाते** प्रादुर्भुते सति **मेघाः** । **सुष्ठु** भक्त्या **अर्पितानि पुष्पाणां वर्षाणि** यैस्तैः **गीर्भिः** । **स्तुवद्भिः सुरसिद्धसंघैः** देवर्षिसमूहैः **विघ्नभीत्या** स्ववृष्टपुष्पाणां मेघव्यवधाने कृष्णसमीपगमनविघातलक्षणविघ्नभ-यात्। **दूरे विधूता इव** दण्डादिनाऽपसारिता इव **अम्बरान्तात्** आकाशमध्यात्। 'अम्बरं व्योम्नि वाससि' इत्यमरः । **दिगन्तं** दिशामन्तिकम् । 'अन्तोऽस्त्री निश्चिते नाशे स्वरूपेऽग्रेऽन्तिकेऽन्तरे' इति भास्करः । **ययुः** प्रापुः ॥ ४३ ॥

**अजन्मनस्तस्य हि जन्मकाले चराचरं तुष्टमभूत् किलेदम् ।**
**तथाहि तुष्टिर्भुवि कस्य न स्यादद्दृष्टपूर्वस्य निरीक्षणेन ॥४४॥**

**व्या : अजन्मन** इति । न विद्यते जन्म जननं यस्य स तथोक्तः । **तस्य हरेः जन्मकाले** प्रादुर्भावकाले । **हि** शब्देन जननाभावस्य ''न जायते म्रियते वा कदाचित्''[2] इति स्मृतिप्रसिद्धिं द्योतयति । **इदं** परिदृश्यमानम् । चरतीति चरम् । न चरतीत्यचरम् । चरश्चाचरश्च **चराचरम्** । द्वन्द्वैकवद्भावः । स्थावरज-ङ्गमात्मकं विश्वमित्यर्थः । **तुष्टमभूत् किल** । कृष्णावतारे सर्वप्राणिनां सन्तोषो जात इति भावः । **किले**त्यैतिह्यम् । **तथाहि** तद्युक्तं हि । पूर्वमदृष्टं **अदृष्टपूर्वं** । ''सुप्सुपा'' इति समासः । अजन्मनो जन्म इति परस्परविरुद्धत्वाददृष्टपूर्वमिति भावः । तस्य

१ भागवते १०/४/४
२ गीता २/२०

**निरीक्षणेन** दर्शनेन **कस्य** प्राणिनः **तुष्टिः** सन्तोषो न **स्यात्** । अपूर्वदर्शनेन सर्वस्यापि सन्तोषो जात इत्यर्थः । **अर्थान्तरन्यासः** ।। ४४ ।।

**शरीरिणां स्थावरजङ्गमानां निरीक्षणेनैव विमुक्तिदोऽहम् ।**
**इतीव विख्यापयितुं स दृष्टो[१] जहार पित्रोर्निगडस्य बन्धम् ।।४५।।**

**व्या : शरीरिणामिति** । अहं स्थावरजङ्गमानां शरीरिणां देहभृतां निरीक्षणेनैव न तु साधनान्तरेण । ''नान्यः पंथा अयनाय विद्यते'' इति श्रुतेः । **विमुक्तिदः** संसारबन्धध्वंसक **इति विख्यापयितुं** दृष्टान्तमुखेन कथयितु**मिव स** कृष्णः **दृष्टः** सन् **पित्रोः** माता च पिता च पितरौ । [२]पितामात्रेत्येकशेषः। तयोर्देवकीवसुदेवयोः **निगडस्य** कंसकृतशृङ्खलायाः **बन्धं जहार** परिहृतवान् । कृष्णजननानन्तरं कंसकृतनिगडबन्धो निर्गत इति पौराणिकी कथा ।। ४५ ।।

**एतत्पितृत्वप्रथया भयं स्यात् पापादितीड्यं पितरौ गुणाढ्यम् ।**
**ज्ञानात्मकस्त्वं प्रकृतेर्विदूरस्तावस्तुतां तात इतीशमस्य ।।४६।।**

**व्या : एतत्पितृत्वेति** । तौ **पितरौ** देवकीवसुदेवौ एतस्य कृष्णस्य **पितृत्वमप्रथया** देवकीवसुदेवौ कृष्णपितराविति प्रसिद्ध्युत्पन्नात्पापाद्भयात् **''भयं** नरकभीतिः **स्यात्''** **पापात्** पापिष्ठात् कंसाद्भयं मरणलक्षणं **भयं स्यादिति** वा इति इतीव **गुणाढ्यं** ज्ञानानन्दादिगुणसम्पन्नम् अत **एवेड्यं** स्तुत्यम् **ईशं** स्वामिनं कृष्णं हे कृष्ण **त्वं ज्ञानात्मकः** ज्ञानस्वरूपी **प्रकृतेर्विदूरः अस्य** जगतः **तातः** पिता **इती**त्थम् **अस्तुतां** अस्तोष्टम् । ज्ञानात्मकत्वादुक्तगुणविशिष्टत्वेना-

---

१ भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ।। - इति कठोपनिषदि ।

भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि दृष्ट एवात्मनीश्वरे ।। - इति भागवते । (१/२/२२)

२ पा.सू. १/२/७०

वयोरेतत् पितृत्वप्रथा अज्ञप्रज्ञामादायेति स्तुतिकर्त्रोर्भावः ।। [१]अन्तराले बुद्ध्या देवतास्मरणस्तोत्रपाठादिकम् एताभ्यां क्रियत इति बहिःस्थितकंसभृत्यानां भ्रान्तिमुत्पादयितुमेवेति भावः ।।४६।।

**य एष पुत्संज्ञितनारकस्थान् जनान् स्वनामस्मरणेन पाति ।**
**स दृष्टिगः सन् वसुदेवपत्न्याः कथं न पुत्रः शतपत्रनेत्रः ।। ४७ ।।**

**व्या :** ननु देवक्याः पुत्रतां गत इति कथं पुराणप्रसिद्धिरित्यत आह । **य एष** इति। **यः** परमात्मा **पुदिति सञ्ज्ञा** सञ्जाता अस्येति **पुत्सञ्ज्ञितः** स चासौ **नारको** नरकः । स्यान्नारकस्तु नरक इत्यमरः । तत्**स्थान् जनान् स्वनामस्मरणेन पाति** नरकादुद्धृत्य रक्षतीत्यर्थः । **स एषः शतपत्रनेत्रः** शतपत्रवत् कमलवन्नेत्रे यस्य स तथोक्तः । सहस्रपत्रं कमलं शतपत्रं कुशेशयमित्यमरः । कृष्णः **वसुदेवपत्न्याः देवक्याः दृष्टिगः** दृष्टिविषयः **सन् पुत्रः** पुतो नरकात् त्रायत[२] इति पुत्रः **कथं न** भवेत् भवेदेव । नामस्मरणमात्रं कुर्वतामप्ययं पुत्रः किल कथं देवक्याः प्रत्यक्षीभूतः कृष्णः पुत्रो न भवेदित्यर्थः । पुतो नरकात् त्रायत इति व्युत्पत्तिमादाय पुराणादौ देवकीपुत्रत्वोक्तिरिति भावः। **दृष्टिग** इत्यनेन माङ्मान इति धातोः मिनोति जानातीति व्युत्पत्त्या देवक्याः मातृत्वप्रसिद्धिरप्युपपद्यत इति द्योत्यते । **युक्तिरलङ्कारः** । दुर्घटार्थस्य घटनाचातुरी युक्तिरित्युक्तत्वात् ।। ४७ ।।

---

१ अन्तराले ततो बुद्ध्वा स्मरेत बहुशो हरिम् । - इति सदाचारस्मृतौ ।

२ पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः ।
तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा ।। -महाभारते (१/७४/३९)
त्राता य एव नरकात् स हि पुत्रनामा । -सुमध्वविजये (२/१७)
पुन्नाम्नो नरकात् त्राता पुत्र इत्यभिधीयते । इति च । (वे);
पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः ।
तस्मात् पुत्र इति प्रोक्तः पितॄन् यः पाति सर्वतः ।।
- वाल्मीकिरामायणे (२/१०७/१२)

**यदीयरूपं प्रकटीकरोति पिता[1] स तस्येति हि वेदवादः ।**
**तथाविधस्यानकदुन्दुभेस्तत्पितृत्वमप्यस्तु न तेन हानिः ॥४८॥**

**व्या :** देवक्याः मातृत्ववद्वसुदेवस्यापि पितृत्वमप्युपपद्यत इत्याह – **यदीयेति** यो **यदीयरूपं** यस्य स्वरूपं **प्रकटीकरोति** प्रकटयति **स तस्य पितेति वेदवादः** वेदवचनं **हि** अस्ति हिशब्देन वेदप्रसिद्धिमाह । [2]''कविर्यः पुत्रः स इमा चिकेत यस्ता विजानात्स पितुष्पितासत्' । कविः सर्वज्ञः यः पुत्रः चतुर्मुखः स एव विश्वमकरोत् । यस्ता विष्णोर्मूर्तीर्व्यजानात् विज्ञापयामास । अत एव चतुर्मुखः पितुः स्वपितुर्विष्णोः पिता आसत् आसीदिति श्रुत्यर्थः । **तथाविधस्य** विद्यमानकृष्ण-स्वरूपप्रकटनमात्रकर्तुः **आनकदुन्दुभेस्तत्पितृत्वं** तस्य कृष्णस्य **पितृत्वमप्यस्तु** । मिनोतीति व्युत्पत्त्या देवक्या मातृत्ववद्वसुदेवस्य विद्यमानकृष्णरूपमात्रप्रकटनकर्तृ-त्वेन पितृत्वमप्यस्त्वित्यर्थः । तेनोक्तपितृत्वाङ्गीकारेण वसुदेवादुत्पत्त्यनङ्गीकारिणां अस्माकं हानिः अनिष्टं न नेत्यर्थः ॥४८॥

**एतेनैव पुरात्मनाऽहमभवं त्वद्दृष्टिमार्गोऽधुना**
**तेनैवासमितीरयन् जनिमसौ मेने न सूनुः स्वकाम् ।**
**माता तं किल [3]संस्तुवन्त्यभिनवं विश्वं यदित्यादिना**
**प्राज्ञोऽसौ विनतः पिता च विदितोऽसीत्यादिभिस्तं गृणन् ।४९।**

**व्या :** कृष्णस्योत्पत्तिरस्तीत्यज्ञप्रसिद्धिमेतेनेत्यादिकतिपयश्लोकैर्निराकरोति – **एतेनेति** । हे देवकि येन तवेति पदत्रयं अध्याहार्यम् । तथाच **असौ सूनुः** पुत्रत्वेनाभिमतः कृष्णः हे देवकि **पुरा** पूर्वं तव पूर्वस्मिन् जन्मनीत्यर्थः । **अहं** येन **एतेनैव** अनेनैवा**त्मना** शरीरेण **त्वद्दृष्टिमार्गः** तव चक्षुर्गोचरः **अभवम्** आसम् । **अधुना** इदानीं **तेनैव** पूर्वमदर्शितशरीरेणैव त्वद्दृष्टिगोचरः **आसमित्यनेन** प्रकारेण **ईरयन्**

---

१ यथा वा वायोः प्रसिद्धिः ''जनितोत विष्णोः'' । -इति ।

२ ऋग्वेदे (१/६४/१६) । ३. मानयन्त्यभिनवम् । (पा.)

वदन् **स्वकां** स्वकीयां [१]**जनिं** उत्पत्तिम्। 'जनिरुत्पत्तिरुद्भवः' इत्यमरः। **न मेने** नाङ्गीचकार। 'तदा वां परितुष्टोऽहम् अमुना वपुषाऽनघे। प्रादुरासं वरदराट् युवयोः कामदित्सया॥

तृतीयेऽस्मिन्भवेऽहं वै तेनैव वपुषा तथा।
जातो भूयस्तयोरेव सत्यं मे व्याहृतं सति' ॥

इति भागवतोक्तेः॥ अनेन वपुषा तदा प्रादुरासम्। तेनैव वपुषा इदानीं प्रादुरासमित्यतीतवर्तमानकालद्वयसम्बन्धिशरीरैक्यग्राहिप्रत्यभिज्ञां प्रदर्शयता कृष्णेन स्वजननस्य निराकृतत्वात्। न च प्रत्यभिज्ञा भ्रान्तिः। सत्यं मे व्याहृतं सतीति प्रत्यभिज्ञावचनस्याबाधितार्थत्वलक्षणसत्यत्वोक्तेरिति भावः। माता मातृत्वेनाभिमता देवकी तमभिनवं मनोहरं कृष्णं **'विश्वं यदित्यादिना'** विश्वं यदित्येतदेव आदिर्यस्य श्लोकसमुदायस्य **असौ** विश्वंयदित्यादिः तेन।

''विश्वं यदेतत् स्वतनौ निशान्ते यथावकाशं पुरुषः पुरो भवान्।
बिभर्ति सोऽयं मम गर्भगोऽभूदहो नृलोकस्य विडम्बनं तत्''[२]

**इत्यादिना** संस्तुवती स्वतः कृष्णस्य **जनिं न मेने। किल। प्राज्ञः** मनीषी **असौ पिता** च वसुदेवश्च **विनतः** प्रणतः सन् **विदितोऽसीत्यादिभिः।**

''विदितोऽसि भवान् साक्षात् पुरुषः प्रकृतेः परः।
केवलानुभवानन्दस्वरूपः सर्वबुद्धिदृक्।''[३]

इत्यादिभिः श्लोकैः प्रकृतिविदूरत्वजगज्जन्मादिकारणत्वेन तं **गृणन्** स्तुवन् स्वतोऽपि **जनिं न मेने**। पितृभ्यां पुत्रेण च जननस्यानङ्गीकारान्न कृष्णस्य जनिरिति [४]भावः॥४९॥

---

१ यूयं शरीरकर्तारस्तेषां देवा भविष्यथ।
ते तु ज्ञानप्रदातारः पितरो वो न संशयः॥ -हरिवंशे(१/१७/३१)

२ भागवते (१०/३/३१)

३ भागवते (१०/३/३७,३८,४३)

४ त्वमेव पूर्वसर्गेऽभूः पृश्निः स्वायम्भुवी सति।

**जानाति माता परमात्मजातं नूनं पिताऽपि क्वचिदेव लोके ।**
**ताभ्यामनङ्गीकृतकृष्णजन्म को वा पुमान् साधयितुं समर्थः ॥ ५०॥**

**व्या :** तैरनङ्गीकारेऽप्याधुनिककल्पनया कृष्णस्य जनिरस्त्विति मन्दाशङ्कां परिहर्तुमाह – **जानातीति** । **लोके परं** केवलम् । 'परोऽरिः परमात्मा च

---

तदाऽयं सुतपा नाम प्रजापतिरकल्मषः ॥
युवां वै ब्रह्मणाऽऽदिष्टौ प्रजासर्गे यदा ततः ।
सन्नियम्येन्द्रियग्रामं तेपाथे परमं तपः ॥
वर्षवातातपहिमघर्मकालगुणाननु ।
सहमानौ श्वासरोधविनिर्धूतमनोमलौ ॥
शीर्णपर्णानिलाहारावुपशान्तेन चेतसा ।
मत्तः कामानभीप्सन्तौ मदाराधनमीहतुः ॥
एवं मां तप्यतोर्भद्रे तपः परमदुष्करम् ।
दिव्यवर्षसहस्राणि द्वादशेयुर्महात्मनोः ॥
तदा वां परितुष्टोऽहममुना वपुषाऽनघे ।
तपसा श्रद्धया नित्यं भक्त्या च हृदि भावितः ॥
प्रादुरासं वरदराट् युवयोः काम्यदित्सया ।
व्रियतां वर इत्युक्ते मादृशो वां वृतः सुतः ॥
अजुष्टग्राम्यविषयावनपत्यौ च दम्पती ।
न वव्राथेऽपवर्गं मे मोहितौ मम मायया ॥
गते मयि ततो लब्ध्वा वरं मत्सदृशं सुतम् ।
ग्राम्यान् भोगानभुञ्जाथां युवां प्राप्तमनोरथौ ॥
अदृष्ट्वाऽन्यतमं लोके शीलौदार्यगुणैः समम् ।
अहं सुतो वामभवं पृश्निगर्भ इति स्मृतः ॥
तयोर्वां पुनरेवाहमदित्यामास काश्यपात् ।
उपेन्द्र इति विख्यातो वामनत्वाच्च वामनः ॥
तृतीयेऽस्मिन् भवेऽहं वै तेनैव वपुषाऽथ वाम् ।
जातो भूयस्तयोरेव सत्यं मे व्याहृतं सति ॥
एतद् वां दर्शितं रूपं प्राग्जन्मस्मरणाय मे ।
नान्यथा मद्भवज्ञानं मर्त्यलिङ्गेन जायते ॥
युवां मां पुत्रभावेन ब्रह्मभावेन चासकृत् ।
चिन्तयन्तौ कृतस्नेहौ यास्येथे मद्गतिं पराम् ॥ - भागवते (१०/४/३२-४५)

केवले परमव्ययम्' इति भास्करः । **माता**[१] **आत्मनः** स्वस्याः **जात**मुत्पन्नं **जानाति** । **पिताऽपि क्वचिदेव जानाति** । प्रकृते तु **ताभ्यां** मातापितृभ्याम् **अनङ्गीकृतकृष्णजन्म** उक्तप्रकारेण निराकृतकृष्णोत्पत्तिं **को वा पुमान्** पुरुषः साधयितुं प्रतिपादयितुं **समर्थः** न कोऽपि समर्थो भवतीत्यर्थः ॥५०॥

**स्तुतिं स्वपित्रोरवधार्य योऽसौ बभूव पश्चाच्छिशुवेषधारी ।**
**असूत तं का नु तदा मृगाक्षी पुरा पुराणाकृतिमप्रमेयम् ॥५१॥**

**व्या :** इतोऽपि कृष्णस्योत्पत्तिर्न सम्भवतीत्याह – **स्तुतिमिति** । **योऽसौ** कृष्णः **स्वपित्रोः** स्वस्य पितृत्वेनाभिमतयोः देवकीवसुदेवयोः **स्तुतिमवधार्य** श्रुत्वा पश्चात् 'उपसंहर विश्वात्मन्नदो रूपमलौकिकम्'[२] इति प्रार्थनानन्तरं **शिशुवेषधारी** शिशोर्बालस्य वेषः आकारस्तं धारयतीति शिशुवेषधारी **बभूव** । यदा पित्रोः सम्पश्यतोः स्वयमेव शिशुर्बभूव । **तदा तं** शिशुं **का नु** का वा **मृगाक्षी** स्त्री **असूत** सुषुवे । षूञ् प्राणिगर्भविमोचन इत्यदादिषु पठ्यते । तस्माद्धातोः कर्तरि लङ् । स्वयमेव शिशुवेषधारित्वान्न कोऽप्यसूतेत्यर्थः । ननु माऽस्त्वेतस्योत्पत्तिः स्तुतिकाले विद्यमानस्यालौकिकरूपस्योत्पत्तिरुच्यत इत्यत आह । **पुरेति** । **पुरा** पूर्वं **पुराणाकृतिं** पुरातनशरीरम् **अप्रमेयं** साकल्येन ज्ञातुमशक्यं तमपि का मृगाक्षी असूतेति सम्बन्धः । शङ्खचक्रपीताम्बरादिधारिणो दिव्यदेहस्योत्पत्तिरुच्यते उत पश्चाच्छिशुवत् प्रतीतस्य । नाद्यः। पुराणाकृतित्वेनोत्पत्तेर्वक्तुमनुचितत्वात् । न द्वितीयः । तस्य स्वयमेव जातस्य 'पित्रोः सम्पश्यतोः सद्यो बभूव प्राकृतः शिशुः'[३] इति 'स्मृतिसिद्धत्वात्' इति भावः ॥ ५१ ॥

---

१ यथा बुधस्य चन्द्रपुत्रत्वं तन्मात्रा तारयैकया ज्ञातम् तथा -
ब्रह्मा तां रह आहूय समप्राक्षीच्च सांत्वयन् ।
सोमस्येत्याह शनकैः सोमस्तं तावदाग्रहीत् ॥ इति भागवते (९/२४/१३)

२ भागवते (१०/३/३८)

३ भागवते (१०/३/४६)

**यदीह जातो वसुदेववीर्यात् तदा कुतस्तस्य विभूषणानि ।**
**वराम्बरं कौस्तुभरत्नमुद्यत्सुदर्शनं शङ्खगदादिजातम् ॥ ५२ ॥**

**व्या :** अलौकिकत्वेनोदितस्यापि रूपस्योत्पत्तिरुच्यत इति मन्दाशङ्कां परिहर्तुमाह – **यदि** इति । **इह** भूमौ कृष्णो **वसुदेववीर्यात् यदि जातः तदा** तर्हि **तस्य** जातस्य **विभूषणानि** मुकुटकुण्डलादीनि । **वरम्** उत्तमम् । **अम्बरं** वस्त्रम् । 'अम्बरं व्योम्नि वाससि' इत्यमरः । **कौस्तुभरत्नं** उद्यत्प्रभासमानं **सुदर्शनं** चक्रं **शङ्खः** पाञ्चजन्यः **गदा** कौमोदकी **आदिर्यस्य** तत् सर्वं **कुतः** कस्माज्जातम् । नहि सुवर्णादीनां रेतोविकारत्वं दृष्टमिति भावः । तेषामनुत्पन्नत्वेऽर्धजरतीयानुपपत्तेस्तदाधारस्य देहस्यानुत्पत्तेरेवोचितत्वात् इति भावः । मुकुटकुण्डलाम्बराद्यलङ्कारभरितत्वेन सुदर्शनाद्यायुधधारित्वेन चावती-र्णस्य परमात्मनो [१]वसुदेववीर्यादुत्पत्तिकथनमसङ्गतम् इत्यर्थः । **आक्षेपालङ्कारः** ॥५२॥

**अहो [२]पिशाचा अपि देहिदेहे गतागतं शक्तियुता लभन्ते ।**
**अनन्तशक्तेः परमस्य न स्यात् कुतो बहिर्निर्गम एव तर्हि ॥५३॥**

**व्या :** अहो इति । **पिशाचा अपि** ग्रहा अपि **शक्तियुताः** अन्तर्धानप्रवेशानिर्गमनादिसामर्थ्ययुक्ताः सन्तः **देहिदेहे** शरीरिणां शरीरे **गतं** निर्गमनम् । **आगतम्** आगमनं गतं चागतं च **गतागतं** । नपुंसके भावे क्तः । एकवद्भावः । **लभन्ते** प्राप्नुवन्ति । नहि ग्रहस्य

---

१ तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शङ्खगदाद्युदायुधम् ।
श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं पीताम्बरं सान्द्रपयोदसौभगम् ॥
महार्हवैडूर्यकिरीटकुण्डलत्विषा परिष्वक्तसहस्रकुन्तलम् ।
उद्दामकाञ्च्यङ्गदकङ्कणादिभिर्विरोचमानं वसुदेव ऐक्षत ॥
- इति भागवते (१०/४/९,१०)

२ दुर्घटा शक्तिरपि हि पिशाचानां हि दृश्यते ।
देवानां किमु किम्वेव परमस्य हरेः प्रभोः ॥ - इत्यादेश्च ब्रह्मतर्के ।
- इति छान्दोग्यभाष्ये । (७/४/१४)

प्रवेशो गर्भः पुनः मन्त्रादिना अपसरणे उत्पत्तिर्जायते। किन्तु तादृशशक्तियुक्तत्वात् प्रवेशनिर्गमनमात्रं यदि **तर्ह्यनन्तशक्तेः** अपरिमितसामर्थ्ययुक्तस्य **परमस्य** सर्वोत्तमस्य कृष्णस्य **बहिर्निर्गम एव** देवक्युदराद्बहिरपसरणमात्रं **कुतः** कस्मात् **न स्यात्**। **अहो** अल्पसामर्थ्ययुक्तपिशाचेषु विद्यमानो विश्वासोऽनन्तबले परमात्मनि नास्तीति परमात्मन उत्पत्तिमङ्गीकुर्वतां पामराणां मौर्ख्यम् **अहो** आश्चर्यम् इत्यर्थः ॥५३॥

**यदा नृसिंहाकृतिराविरासीत् पदाहतस्तम्भवराद्धि पूर्वम् ।**
**तदा नु का स्त्री सुषुवे मुकुन्दं स कस्य वीर्यादजनिष्ट कायः ॥५४॥**

**व्या :** विष्णोः सर्वावतारेषु बहिर्निर्गमनमात्रं नतु उत्पत्तिरित्यत्र नृसिंहावतार एव दृष्टान्त इत्याह – **यदेति**। **पूर्वं** पूर्वस्मिन् काले **यदा**[1] **पदाहतस्तम्भवरात् पदा**

---

१ यथा पुरा स्तम्भत आविरासीदशुक्लरक्तोऽपि नृसिंहरूपः।
तथैव कृष्णोऽपि तथाऽपि मातापितृक्रमादेव विमोहयत्यजः॥
- इति महाभारततात्पर्यनिर्णये (१२/६३)

ननु 'पदा स्तम्भं तताडाशु' इति पुराणान्तरे स्पष्टमुक्तेरत्र मुष्टिनेति निष्टङ्कनं कथमिति चेन्न। ''सिंहस्यार्धं तनुं कृत्वा नरस्यार्धं तनुं तदा। नृसिंहवपुरव्यक्तो हिरण्यकशिपोः पुरः। आविर्बभूव सहसा'' इत्यादिकूर्मपुराणे ; ''भगवानपि देवेशो नारसिंहमथाकरोत्। स्तूयमानो मुनिगणैर्हिरण्यकशिपोः पुरम्। तत्र गत्वा''इत्यादि नृसिंहपुराणे ; ''नारसिंहमनाधृष्यं देवदानवरक्षसाम्। हिरण्यकशिपोः स्थानं जगाम प्रभुरीश्वरः। नरस्य कृत्वाऽर्धतनुं सिंहस्यार्धतनुं प्रभुः। ततोऽपश्यत विस्तीर्णां दिव्यां रम्यां मनोरमाम्। सर्वकामयुताम्'' इत्यादि हरिवंशे, ''हिरण्यकशिपोः स्थानं जगाम हरिरीश्वरः। नरस्यार्धतनुं कृत्वा सिंहस्यार्धतनुं तथा। ततोऽपश्यत विस्तीर्णां हिरण्यकशिपोः सभाम्'' इत्यादिमत्स्यपुराणादौ, स्तम्भताडनादेस्तदुद्भूतेश्चानुक्तत्वात् पदा वा मुष्टिना वेति तव चिन्ता दूरनिहितेति तस्य कल्पभेदः समाधीयते वाऽस्या अपि शान्तिसम्भवात्। स्वमुष्टिना खड्गं प्रगृह्य तताड। पादेनेति शेषेणान्वेतुं शक्यमित्यवेहि। मुष्टिकुट्टनस्य अत्युत्कटपापत्वाभावात् सद्यः संहारादिर्न स्यात् अतः पदेति युक्तम्। अयुक्तं च मुष्टिताडने खड्गग्रहणम्। तथाहि रुग्मिणीशविजये - ''यदा नृसिंहाकृतिराविरासीत् पदाहतात् स्तम्भवाराद्धि पूर्वम्। तदा नु का स्त्री सुषुवे

हिरण्यकशिपुपादेन । **आहतः** ताडितः यः स्तम्भवरस्तस्माद्धिरण्यकशिपुपादेन ताडितस्तम्भादिति पौराणिकी कथा । **नृसिंहाकृतिः नृसिंहयोः** मनुष्यमृगेन्द्रयोः **आकृतिरिवाकृतिर्यस्य सः । यदा आविरासीत्** अविर्बभूव **हि** निश्चयम् । **तदा का नु स्त्री** का वा नारी **मुकुन्दं** प्रह्लादस्य मोक्षप्रदं नृसिंहं **सुषुवे** न कापीत्यर्थः । **स कायः** अर्धमनुष्यवदर्धसिंहवत् प्रतीतो देहः **कस्य** पुरुषस्य **वीर्याद्**रेतसः **अजनिष्ट** अजायत ।। ५४ ।।

**तथैव[1] माया हरिणोपदिष्टा बभूव नन्दस्य कलत्ररत्ने ।**
**हरिस्तुगित्यादिविमोहराशेर्भविष्यतोऽस्यामिव मूलभूता ।।५५।।**

**व्या : तथैवेति । हरिणोपदिष्टा माया** लक्ष्मीः । **तथैव** यथोपदेशं **नन्दगोपस्य कलत्ररत्ने** भार्याश्रेष्ठे । कलत्रं श्रोणिभार्ययोरिति विश्वः । रत्नं मणौ श्रेष्ठे चेति रत्नमाला । **बभूव** दुर्गारूपेणाविर्बभूव । तत्कथमिव । **अस्यां** नन्दपत्न्यां **भविष्यत** उत्पत्स्यतः । **हरिस्तुगित्यादिविमोहराशेः तुक्** तनयः । तुक् तोकस्तनयश्च नन्दन इति प्राज्ञैरपत्यं स्मृतमिति हलधरः । क्षुधितो भीत **इत्यादिविमोहराशेः** भ्रान्तिनिकायस्य **मूलभूतेव** आदिभूतेव । [2]माया हि जनमोहिनीति भावः । कृष्णावतारसमये व्रजे यशोदायां दुर्गाऽप्यजायतेति[3] पौराणिकी कथा ।।५५।।

---

मुकुन्दं स कस्य वीर्यादजनिष्टकायः'' इत्युक्तेरिति । स्तम्भोद्भवस्तूदाहृतसर्वस्वदुर्मिलोऽपि भगवतो जनवत्प्रसक्तजननिरासाय यथा नृसिंहाकृतिराविरासीत् स्तम्भादिति निदर्शनीय इति यथायथं तत्र तद्वाचकपदमध्याहृत्य विपश्चिद्भिर्योजना कर्तव्येति दिक् ।।
- श्रीमद्भागवत सत्यधर्मीयटीका(७/८/१५)

१ तदैव जाता च हरेरनुज्ञया दुर्गाभिधा श्रीरनु नन्दपत्न्याम्
-इति म.भा.ता.नि (१२/६७)

२ दैवी ह्येषा गुणमयी मम **माया** दुरत्यया । - गीता (१७/१४)

३ यदा बहिर्गन्तुमियेष तर्ह्यजा या **योगमायाऽजनि** नन्दजायया ।
-भागवते (१०/३/४७)

**यदीह वासो मम तर्हि कंसः सुहृद्वधक्लेशविदूर एव ।**
**यमातिथिः स्यादिति वीक्ष्य कृष्णस्ततो व्रजं प्रत्यगमत् स धीमान् ५६**

**व्या : यदीति । स धीमान्** विचक्षणः कृष्णः । **इह** वसुदेवगृहे **मम वासः** अवस्थानं **यदि** स्यात् **तर्हि कंसः सुहृद्वधक्लेशविदूर एव** सुहृदां मित्राणां पूतनादीनां वधः स्वेन करिष्यमाणः तज्जन्मो यः क्लेशः तद्विदूर एव तद्वियुक्त एव । **यमातिथिः** यमस्यान्तकस्यातिथिः आतिथ्यार्हः **स्यात्** मित्रवधक्लेशमननुभूय परेतो भवेदित्यर्थः । अत्र मयि स्थिते मद्वधार्थमागतस्य कंसस्य वधो मयाऽवश्यं कार्यः । तथा सति एकस्यैव कंसस्य नाशो भवेत् न पूतनाशकटादीनाम् **इति वीक्ष्य** विचार्य **ततस्**तस्मात् स्थानात् **व्रजं** गोष्ठं **प्रति** । व्रजो गोष्ठाध्वसञ्चयेष्विति भास्करः । **अगमत्** अगच्छत् ।। ५६ ।।

**न कंसभीत्याऽभिययौ व्रजं स स्वसंश्रितानामभयस्य कर्ता ।**
**स्ववल्लभां नन्दकलत्रजातां मनोरमामीक्षितुमेव सोऽगात् ।।५७।।**

**व्या : न कंसभीत्येति । स्वसंश्रितानां** स्वभक्तानां **अभयस्य** भयध्वंसस्य **कर्ता** । 'कर्तृकर्मणोः कृति'[1] इति कर्मणि षष्ठी । भयपरिहारक इत्यर्थः । **स** कृष्णः **कंसभीत्या व्रजं** गोष्ठं **नाभिययौ** । स्वाश्रितजनभयपरिहारकस्य कृष्णस्य कुतो भयमिति भावः । किंतु **सः नन्दकलत्रजातां** नन्दस्य **कलत्रे** भार्यायां **जातां** दुर्गारूपेण प्रादुर्भूतां **मनोरमां स्ववल्लभां** स्वस्य प्राणकान्ताम् । **ईक्षितुमेवागात्** । विलासिनो हि कामिनीः प्रति रात्रौ गच्छन्तीति भावः । **विभावनमलङ्कारः** । उपेन्द्रवज्रावृत्तम् । 'उपेन्द्रवज्रा जतजास्ततो गौ'[2] इत्युक्तत्वात् ।। ५७ ।।

**कवाटमुद्घाट्य गृहाणि वर्त्म ददुः किलास्मै मम बुद्धिरित्थम् ।**
**वनस्पतीशो बहिरभ्रसंस्थस्तदीक्षणार्थी स्वयमुद्बिभेद ।। ५८ ।।**

---

१ पा.सू. २/३/१५

२ इति वृत्तरत्नाकरे (३/३१)

**व्या** : **कवाटमिति** । **गृहाणि कवाटमुद्धाट्य** उद्भिद्य [1]कवाटपिधानमपसार्येत्यर्थः । **अस्मै कृष्णाय वर्त्म** मार्गं । 'अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः' इत्यमरः । **ददुः किल** । तत्र **मम बुद्धिरित्थं** ममेत्थं भातीत्यर्थः । **बहिरभ्रसंस्थः** बहिराकाशस्थितः [2]**वनस्पतीशः** वनस्पतीनां महीरुहाणामीशः स्वामी चन्द्रः **तदीक्षणार्थी** सन् तस्य कृष्णस्येक्षणं दर्शनमर्थयत इति तदीक्षणार्थी सन् स्वयमेवोद्भिभेदेत्युत्प्रेक्षा । वनस्पतीश इत्यनेन चन्द्रस्य कवाटोद्भेदने सामर्थ्यं ध्वन्यते ।। ५८ ।।

**करे निधायाद्भुतबालमेनमभूद्बहिर्निःसरतोऽस्य शौरेः ।**
**न तद्गृहद्वारगणोऽन्तरायः करस्थदेवस्य[3] कुतोऽन्तरायः ।।५९।।**

**व्या** : **करे निधायेति** । **अद्भुतबालम्** आश्चर्यशिशुम् **एनं** कृष्णं **करे** हस्ते **निधाय बहिर्निःसरतोऽस्य शौरे**र्वसुदेवस्य **तद्गृहद्वारगणः** तच्च तत् गृहञ्च तद्गृहं तस्य द्वारगणः द्वारसमूहः अन्तरायः **विघ्नो नाभूत्** न बभूव । 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यमरः । तथाहि **करस्थदेवस्य** हस्तस्थितकृष्णस्य वसुदेवस्य **अन्तरायः** कुतः । देवतास्मरणवताम् अन्तरायो नास्ति किमु हस्तस्थदेवस्येति भावः । **अर्थान्तरन्यासः** ।।५९।।

**अगण्यगोगोकुलगोपनाशमभीप्सता स्वेन करिष्यमाणम् ।**
**अघं हि पूर्वं परिहर्तुमीषद्ववर्ष तस्मिन् जलदोऽधिमार्गम् ।।६०।।**

---

१ द्वारस्तु सर्वाः पिहिता दुरत्ययाः बृहत्कपाटायसकीलशृङ्खलैः ।।
ताः कृष्णवाहे वसुदेव आगते स्वयं व्यशीर्यन्त यथा तमो रवेः ।
ववर्ष पर्जन्य उपांशु गर्जितः शेषोऽन्वगाद्वारि निवारयन् फणैः ।।
- भागवते (१०/४/४८,४९)

२ पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः । - गीता (१५/१३)

३ शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ।। - इति स्कन्दपुराणे ।

**व्या : अगण्येति** । जलदः मेघः गणयितुं योग्याः गण्याः न गण्याः अगण्याः ताश्च ता गावश्च गोकुलश्च गोपाश्च **अगण्यगोगोकुलगोपाः** तेषां **नाशं अभीप्सता** वाञ्छता **स्वेन करिष्यमाणमघम्** अपराधं **पूर्वं परिहर्तुं हि** परिहर्तुमिव **अधिमार्गम्** मार्ग इत्यधिमार्गम् [१]'अव्ययं विभक्ति' इत्यादिना अव्ययीभावसमासः । मार्गे इत्यर्थः । **तस्मिन्** कृष्णे **ईषत्** किञ्चित् वर्षाकालेऽपि स्वस्थूलधारां विहाय वसुदेवस्य मार्गश्रमपरिहारो यथा भवति तथा स्वल्पमित्यर्थः । **ववर्ष** । इदानीं मार्गगमनसमये किञ्चिज्जलबिन्दुप्रक्षेपेण कृतसेवामवलोक्य करिष्यमाणमपराधं परिहरिष्यतीति भावः ॥ ६० ॥

**यदेष देवेशितुरग्रजत्वं बभार रोहिण्युदयाद्रिचन्द्रः ।**
**अघस्य[२] तस्य प्रशमेच्छयेव पथि व्रजन्तं फणिपः सिषेवे ॥६१॥**

**व्या : यदेष** इति । **फणिपः** फणिनः सर्पान् पातीति फणिपः । 'आतोनुपसर्गे कः'[३] इति कप्रत्यये धातोरालोपः । शेषः । **रोहिण्येवोदयाद्रिः** तत्रत्य**चन्द्रः** रोहिणीसुतो बलभद्रः सन् देवानामी**शितुः** देवश्रेष्ठस्य कृष्णस्य **यदग्रजत्वं** श्रेष्ठत्वं **बभार** । तस्याग्रजत्वप्रयुक्तनमस्कारादिग्रहणरूपस्याघस्यापराधस्य **प्रशमेच्छयेव** अपराधपरिहारं चिकीर्षुरिव **पथि** मार्गे **व्रजन्तं** कृष्णं आतपत्रायिताभिः फणाभिः वृष्टिं [४]निवारयन् **सिषेवे** । त्वच्छत्रधारिसदृशस्य मम कुतोऽग्रजत्वमिति दर्शयन्निव भेजे इत्यर्थः ॥ ६१ ॥

**विरिञ्चवैरिञ्चमुखामरालिः प्रबोधयन्तीव तदा ननाम ।**
**पुराणपुंसः पुरुषोत्तमस्य नमस्कृतिं लोकविडम्बकस्य ॥६२॥**

---

१ अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु । पा.सू. २/१/६.

२ सेवाखिन्नो लक्ष्मणोऽग्रे हरेर्भूत् ॥ -इति म.भा.ता.नि. (१२/१०७)

३ पा.सू. १३/२/३

४ शेषोऽन्वगाद्वारि निवारयन् फणैः । - इति भागवते (१०/४/४९)

**व्या : विरिञ्चेति** । **तदा** पथि गमनकाले । **विरिञ्चवैरिञ्चमुखामरालिः** । **विरिञ्चवैरिञ्चौ** ब्रह्मरुद्रौ **मुखौ** प्रधानौ येषां ते तथा ते च ते **अमराश्च** देवाः तेषां **आलिः** पङ्क्तिः । **पुराणपुंसः** अनादिपुरुषस्य । **पुरुषोत्तमस्य पुरुषेभ्यः** क्षराक्षरपुरुषेभ्यः रमाब्रह्मादिदेवेभ्य इत्यर्थः । **उत्तमः** । 'पञ्चमी..'[1] इति योगविभागात् समासः साधुः । पुरुषेषूत्तमः **पुरुषोत्तम** इति वा । निर्धारणे सप्तमीसमासः । न निर्धारण इति[2] निषेधः षष्ठीसमास एव । तस्य **लोकविडम्बकस्य** लोकानुसारेण वसुदेवादिषु नमस्कारं करिष्यमाणस्य कृष्णस्य नमस्कृतिं नमस्कारं **प्रबोधयन्तीव** कृष्णेन स्वकर्तृकस्य नमस्कारस्य प्रागननुभूतत्वात् अनेन प्रकारेण नमस्कारः कर्तव्य इति प्रदर्शयन्तीव **ननाम** । वयसा गुणैश्च उत्तमस्याभावात् कदाऽप्यनेन कृष्णेन पूर्वं नमस्कारो न कृत इति भावः ॥ ६२ ॥

**पुरा स्वभर्तुः प्रतिबन्धकर्तुर्विशोषणं बन्धनमर्ककन्या ।**
**विचिन्त्य भीतेव ददौ मुरारेः प्रवाहमारात् परिहृत्य मार्गम्[3] ॥६३॥**

**व्या : पुरेति** । **अर्ककन्या** यमुना । 'कालिन्दी सूर्यतनया यमुना च यमस्वसा' इत्यमरः । **पुरा** पूर्वं रामावतारे । **प्रतिबन्धकर्तुः** लङ्कां प्रति जिगमिषोः मार्गाप्रदातुः । सरित्पतित्वात् **स्वभर्तुः** स्वस्याः पत्युः समुद्रस्य । [4]**विशोषणं** बाणाग्रगतवह्निना शुष्कीकरणम् । पर्वतादिना **बन्धनं** च । **विचिन्त्य** आलोच्य ।

---

१ पञ्चमी विभक्ते । पा.सू. (२/३/४२)

२ पा.सू. (२/२/१०)

३ भयानकावर्तशताकुला **नदी मार्गं ददौ** सिन्धुरिव श्रियःपतेः ॥
- इति भागवते (१०/३/५०)

४ कल्पान्तमस्य निशिचारपतित्वपूर्वमायुः प्रदाय निजलोकगतिं तदन्ते ।
रात्रित्रयेऽप्यनुपगामिनमीक्ष्य सोऽब्धिं चुक्रोध रक्तनयनान्तमयुञ्जदब्धौ ॥
- इति म.भा.ता.नि. (८/९)

अनेन प्रभवः स्वभृत्यादीनाम् अपराधिनां वित्तापहरणं बन्धनं च कुर्वन्तीति ध्वन्यते । मार्गादाने ममापीत्थं भविष्यतीति **भीतेव** भययुक्तेव **प्रवाहमाराद्दूरे परिहृत्य** । 'आराद्दूरसमीपयोः' इत्यमरः । **मुरारेः** कृष्णस्य । **मार्गं ददौ** । उपमामूलोत्प्रेक्षालङ्कारः ॥ ६३ ॥

**भवप्रवाहोऽपि तवैवमेवेत्युदीरयन्तीव यमस्वसा सा ।**
**करस्थकृष्णाय दिदेश दूरे प्रवाहमाधाय पदार्हपद्याम् ॥ ६४ ॥**

**व्या** : भवप्रवाह इति । **सा यमस्वसा** यमुना । वसुदेवं प्रति **भवप्रवाहः** संसारप्रवाहोऽपि **तव एवमेव**ाहमिव सुलङ्घ्य इति **उदीरयन्तीव प्रवाहं दूरे आधाय** करे तिष्ठतीति **करस्थः कृष्णो** यस्य तस्मै वसुदेवाय **पदार्हपद्यां** पद्भ्यां गन्तुं योग्या पदार्हा सा च सा पद्या मार्गश्च ताम् । 'सरणिः पद्धतिः पद्या' इत्यमरः । **दिदेश** ददौ । अनेन परमात्मानं करतलामलकीकुर्वतः संसाराब्धि-तरणमतिसुलभमिति ध्वन्यते ॥ ६४ ॥

**विभूषणेषु प्रतिबिम्बिताहिः प्रहृष्टपाणिद्वयरोमपत्रः ।**
**स कृष्णवाहो विनताङ्गजातः पिता गरुत्मानिव वेगतोऽगात् ॥६५॥**

**व्या** : विभूषणेष्विति । **विभूषणेषु** आभरणेषु । **प्रतिबिम्बितः अहिः** शेषो यस्य स तथोक्तः ।

> 'अनन्तो वामकटकं यज्ञसूत्रं तु वासुकिः ।
> तक्षकः कटिसूत्रं तु हारः कर्कोटकस्तथा ।
> अन्यैराभरणैर्दिव्यैर्भूषितं सर्पभूषणम्' ॥

इति गरुडस्तुतेर्गरुडस्यापि सर्पभूषणत्वादिति[1] भावः । कृष्णसम्बन्धात् **प्रहृष्ट**मुद्धूनं **पाणिद्वयं** हस्तद्वयं तत्र यानि हर्षोद्गतानि **रोमाणि** तान्येव **पत्रे** पक्षौ यस्य स

---

१ पादाङ्गुष्ठेन चिक्षेप सुमुखं गरुडोरसि ।
ततः प्रभृति राजेन्द्र सह सर्पेण वर्तते ॥ - इति च भारते (१५/१०५/३१)

तथोक्तः । 'गरुत्पक्षच्छदाः पत्त्रं पतत्त्रं च तनूरुहम्' इत्यमरः । **विनताङ्गजातः** विनतम् अङ्गजातम् अवयवसमूहो यस्य स तथोक्तः । प्रश्रयादवनताङ्गसमूह इत्यर्थः । अन्यत्र **विनतायाः अङ्गजातस्तनूजः** । **पिता** वसुदेवः **वेगतः** शीघ्रं गरुत्मानिव गरुड इव । **अगात्** । **उपमारूपकश्लिष्टानां सङ्करः** ॥ ६५ ॥

**गर्जद्वार्वहदुन्दुभिः परिपठद्गन्धर्वबन्दिध्वनि-**
**र्हस्ताब्जे ध्वजचिह्निते स निवसन् सत्पुष्पकश्रीमुषि ।**
**स्वर्मुक्तामलमाल्यचामरगणश्छत्रायिताहीश्वरः**
**शक्राद्यैः परिवारितः पथि ययौ राजाधिराजप्रभः ॥ ६६ ॥**

**व्या :** कृष्णस्य निशि चोरवद्गमनमसहमानो नृपेन्द्रयात्रावद्वर्णयति— **गर्जदिति**। **गर्जन्तो** ध्वनन्तो **वार्वाहाः** जलधरा एव **दुन्दुभयः** भेर्यो यस्य स तथोक्तः । **परिपठन्तः** स्तुवन्तो **गन्धर्वा** एव **बन्दिनः** स्तुतिपाठकाः तेषां **ध्वनिर्यस्य** स तथोक्तः। **ध्वजचिह्निते** ध्वजरेखया लाञ्छिते अत एव **सत्पुष्पकं** विमानम् । 'कैलासः स्थानमलका पूर्विमानं तु पुष्पकम्' इत्यमरः । तस्य **श्रीः** कान्तिस्तां **मुष्णातीति सत्पुष्पकश्रीमुट्** । तस्मिन् **हस्ताब्जे** करकमले । पुष्पकत्वोपपाद-नार्थमिदम् । **निवसन् स्वः** स्वर्गात् । 'स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः' इत्यमरः । **मुक्तानि** देवैरिति शेषः । **अमलानि** म्लानत्वादिदोषरहितानि **माल्यानि** पुष्पदामानि । 'माल्यपुष्पे पुष्पदाम्नि' इत्यमरः । तान्येव **चामरगणः** उपरिपततां माल्यानां शेषफणव्यवधानेन उभयतः पातित्वादिति भावः । **छत्रायिताहीश्वरः** छत्रवदाचरितः छत्रायितः स चासावहीश्वरो यस्य । शेषाख्यछत्रवानित्यर्थः । **शक्राद्यैः** इन्द्रादिदेवैः परिवारभूतैः **परिवारितः** परिवृतः स कृष्णः अत एव **राजाधिराजः** मूर्धाभिषिक्तो राजश्रेष्ठः । ''राजराजो धनाधिपः'' इत्यभिधानात् कुबेरो वा । तस्य **प्रभेव** प्रभा शोभा यस्य स तथोक्तः सन् **पथि** मार्गे **ययौ** । उपमागर्भितं रूपकमलङ्कारः । शार्दूलविक्रीडितं वृत्तं। लक्षणं तूक्तमेव ॥६६॥

**रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि**
**प्रेम्णा चिन्तयतां विचित्रविमलश्लाघ्यार्थसन्दायिनि ।**
**सञ्जाते भुवि रुग्मिणीशविजये सद्वादिराजोदिते**
**सञ्जातः सुरमण्डलीषु महितः सर्गोऽयमाद्यो मुदाम् ॥ ६७ ॥**

**॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थश्रीचरणविरचिते श्रीरुग्मिणीशविजये महाकाव्ये प्रथमः सर्गः ॥**

**व्या :** रोम्णामिति । **रोम्णां हर्षणं करोतीति** हर्षणकारी तस्मिन् रोमाञ्चजनके। 'रोमाञ्चो रोमहर्षणम्' इत्यमरः । **श्रवणतः** श्रुतितः । **पापानां** दुरितानां **ओघः** समूहः तं विध्वंसयतीति **पापौघविध्वंसी** तस्मिन् । **प्रेम्णा** भक्त्या । **चिन्तयतां** स्मरतां **विचित्रा** आश्चर्यभूताः **विमलाः** निर्मलाः **श्लाघ्याः** स्तुत्याः **अर्थाः** धर्मादिचतुर्विधपुरुषार्थाः तान् सम्यक् ददातीति **विचित्रविमश्लाघ्यार्थसन्दायी** तस्मिन्। **सन्तो वादिराजाः** वादिश्रेष्ठाः शुकादयस्तैरुदिते अभिवर्णिते **रुग्मिणीशविजये** रुग्मिणीशस्य कृष्णस्य विजये पराक्रमे **भुवि** भूमौ **सञ्जाते** सति उज्जृम्भिते सति **सुरमण्डलीषु** देवश्रेणीषु **महितः** पूजितः महान् वा । **मुदां** सन्तोषाणां निगडमोचनकवाटोद्घाटननदीमार्गदानादिबहुपराक्रमदर्शनेन बहुशः सन्तोषात् बहुवचनम् । **अयं आद्यः** प्राथमिकः **सर्गः** सृष्टिः । 'सर्गः स्वभाव निर्मोक्षनिश्चयाध्यायसृष्टिषु' इत्यमरः । **सञ्जातः** अभवत् । कृष्णपराक्रमे भुवि उक्तरीत्या उज्जृम्भिते सति देवानां प्रथमा सन्तोषसृष्टिर्जातेति भावः । काव्यपक्षे शब्दार्थचमत्कारदर्शनेन **रोम्णां हर्षणकारिणि प्रेम्णा** आदरेण **चिन्तयतां** चिन्तनं कुर्वतां **विचित्रः** अनेकप्रकारो **विमलः** जुगुप्साशीलतादिदोषरहितः श्लाघ्यो वर्णनीयो योऽर्थः अभिधेयः तं **सन्दायिनि** तत्प्रकाशकर इत्यर्थः । **सन्** कामादिदोषशून्यः सत्पुरुष इति यावत्। विष्णुभक्तत्वात् उत्तम इति वा स चासौ वादिराजाख्यो यतिश्च तेनोदिते कृते **रुग्मिणीशविजये** रुग्मिणीशविजयाख्ये

काव्ये अधिकरणे **अयमाद्यः** प्रथमः **सुरमण्डलीषु महितः** सत्कृतः **मुदां** सन्तोषाणां **सर्गः** सृष्टिरूपसर्गः परिच्छेदः। सर्गशब्दस्यावृत्त्या योजना। **सञ्जातः** अभवत्। प्रथमः सर्गो जात इत्यर्थः। एकेनैव श्लोकेन कथासङ्ग्रहस्य परिच्छेदस्य चोक्तत्वादतिकौशलमिदम्। एवमुत्तरत्र सर्गपद्येष्वपि द्रष्टव्यम् ॥६७॥

**॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थश्रीचरण-विरचितस्य श्रीरुग्मिणीशविजयमहाकाव्यस्य व्याख्यायां श्रीनारायण-भट्टविरचितायां श्रीगुरुभावप्रकाशिकायां प्रथमः सर्गः ॥**

*****

# द्वितीयः सर्गः

**ततो यशोदां स्वकुलस्य पुण्यलसद्यशोदां हि करिष्यमाणः ।**
**स गोकुलं गोकुलगोपपुञ्जविभूषितं प्राविशदब्जनेत्रः ॥ १ ॥**

**व्या :** वन्दे नन्दात्मजं देववृन्दैर्वन्द्यपदाम्बुजम् ॥
यद्बाललीलास्वर्गङ्गा पुनाति भुवनत्रयम् ॥ १ ॥

तत इति । ततो मार्गगमनानन्तरम् । **अब्जनेत्रः** अब्जवन्नेत्रे यस्य स तथोक्तः । **स** श्रीकृष्णः **यशोदां** नन्दपत्नीं **स्वकुलस्य पुण्यं** श्रेयः । 'स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः' इत्यमरः । **लसत्** प्रकाशमानं **यशः** कीर्तिश्च पुण्यलसद्यशसी ते ददातीति **पुण्यलसद्यशोदा** ताम् । स्वलालनपोषणादिना **करिष्यमाणः** सन् । परमात्मनः प्रीणनेन कस्य कुलस्य पुण्ययश आदिकं न भवेदिति भावः । गवां कुलं समूहः **गोकुलं गोपानां पुञ्जः** समूहः ताभ्यां **विभूषितम्** अलङ्कृतं **गोकुलं** गोष्ठं **प्राविशत्** प्रविवेश ॥ १ ॥

**विकीर्णपुष्पाम्बुदलम्बिचन्द्रमहःपताका नववारिसिक्ता ।**
**फणीन्द्रकण्ठोदररत्नकान्तिविचित्रिता सा गृहवीथिकाऽऽसीत् २**

**व्या :** विकीर्णेति । सा **गृहवीथिका** नन्दघट्टकुटीरमार्गः **आसीत्** । कथमासीदित्यत आह – **विकीर्णेति** । **विकीर्णानि** पर्यस्तानि **पुष्पाणि** देवैर्वृष्टानि कुसुमानि यस्यां सा कृतपुष्पोपहारेत्यर्थः । **अम्बुदेभ्यो** मेघेभ्यः **लम्बीनि** अवस्रंसीनि **चन्द्रमहांसि** चन्द्रतेजांस्येव **पताकाः** शुक्लपटवत्कृताः यस्यां सा मेघमध्याद्दण्डाकारेणाधःपततः चन्द्रकिरणस्य पताकाकारत्वादिति भावः । पताकालङ्कृतेत्यर्थः । **नववारिसिक्ता** तदानीं मेघवृष्टनूतनजलैः सिक्ता । अत एव [1]'प्रागीषद्धवर्षेत्युक्तं । **फणीन्द्रस्य** शेषस्य **कण्ठः उदरं रत्नानि** फणागतानि माणिक्यानि च **फणीन्द्रकण्ठोदररत्नानि** तेषां **कान्तिभिः** क्रमात्

१ (१/६०)

कृष्णश्वेतरक्ताभिः द्युतिभिः विचित्रिता रङ्गरञ्जिता । कृतरङ्गमालेत्यर्थः । आसीदिति पूर्वेणान्वयः ।। २ ।।

**फणावलीतोरणभाग्विमानवितानयुक्तोरगराजमौलेः ।**
**पतत्पयोबिन्दुसिताक्षता सा स्थली निशीथेऽपि विभूषितेव ।।३।।**

**व्या :** **फणावलीति** । **फणानां** शेषशिरसाम् **आवल्यः** पङ्क्तय एव **तोरणानि** तिर्यग्बद्धकिसलयदामानि तानि **भजतीति** **फणावलीतोरणभाक्** । **विमाना** एव देवयानान्येव **वितानानि** उल्लोचाः । 'अस्त्री वितानमुल्लोचः' इत्यमरः । **तैर्युक्ता** । उरसा गच्छन्तीत्युरगाः सर्पाः तेषां राजा उरगराजः । 'राजाहःसखिभ्यष्टच्'[1] इति टच् । शेषः तस्य **मौलेर्मुकुटात्** **पतन्तः** **पयसां** **बिन्दव** एव **सिताः** शुभ्राः **अक्षता** यस्याः सा । मङ्गलार्थं सुवासिनीप्रयुक्ताशीर्वादाक्षतप्रक्षेपवतीत्यर्थः । **सा** **व्रजस्थली** निशीथे अर्धरात्रेऽपि विभूषितेवालङ्कृतेवासीत्[2] । रूपकानुप्रासोत्प्रेक्षालङ्काराः ।।३।।

**विमुक्तवर्गाधिपतिं पतिं श्रीः शिशुं तमालोक्य सुलज्जितेव ।**
**इयेष दोषान्तर एव गन्तुं स्वयं गृहीतार्भकरम्यरूपा ।। ४ ।।**

**व्या :** दुर्गायाः व्रजादन्यत्र गमने हेतुमुत्प्रेक्षयति – **विमुक्तेति** । **श्रीः** दुर्गारूपा लक्ष्मीः **विमुक्तानां** मुक्तिं प्राप्तानां **वर्गस्य** निकरस्याधिपतिं प्रभुं **पतिं** **स्वभर्तारं** कृष्णमिदानीं शिशुं बालकं **विलोक्य** दृष्ट्वा । **सुलज्जितेव** । विमुक्तप्रभोः परमपुरुषस्य उत्पन्नशिशुभावप्रदर्शनं प्राक् स्वात्मना सह कृतविलासस्य स्वपतेः शैशवं च लज्जाकरमिति भावः । अन्यच्च **गृहीतार्भकरम्यरूपा** गृहीतम् अर्भकस्य शिशोः रम्यं रूपं यस्याः सा । नित्यनूतनवयोविलासयुक्तायाः स्वरमणसमीपे शैशवेनावस्थानं लज्जाकरमिति भावः । **स्वयं** **च** **दोषान्तर** एव रात्रिमध्य एव ।

---

१ पा.सू. ५/४/९१

२ तत आरभ्य नन्दस्य व्रजः सर्वसमृद्धिमान् ।
हरेर्निवासानुगुणे रमाक्रीडमभून्नृप ।। - भागवते (१०/६/१८)

'निशा च दोषा रजनी' इति हलः । **गन्तुं** इयेष चकमे । लज्जावानपि रात्रावेव चरति न तु दिवा तद्वदिति भावः ॥ ४ ॥

**हरेः प्रिया तद्भगिनीत्वमद्य ह्युपेयुषी तत्र न सा स्थिराऽऽसीत् ।**
**[1]मनोज्ञमूर्त्यन्तरतस्तदीयविशालवक्षःस्थलमेत्य तृप्ता ॥ ५ ॥**

**व्या :** हरेरिति । सा दुर्गा पूर्वं **हरेः प्रिया** अद्य अधुना तस्य **भगिनीत्वमुपेयुषी** प्राप्ता **तत्र** श्रीकृष्णसमीपे **स्थिरा** स्थिता **नासीत्** । लौकिकधर्मानुकारिण्याः अत्रावस्थितौ रत्यादिप्रयोजनाभावादिति भावः । ननु सर्वथा वियोगः किं नेत्याह – **मनोज्ञेति । मनोज्ञं** मनोहरं **मूर्त्यन्तरं** तेन विग्रहान्तरेणेत्यर्थः । **तदीयं** कृष्णसम्बन्धि **विशालं** विस्तृतं **वक्षःस्थलम्** उरःप्रदेशम् **एत्य** प्राप्य **तृप्ता** सन्तुष्टा बभूव ॥ ५ ॥

**मुकुन्दसेवार्हफलं स्म तावद्वहन्निवाथानकदुन्दुभिस्ताम् ।**
**शिशुस्वरूपां कमलां स्वहस्ते स बिभ्रदभ्यागमदात्मवासम् ॥६॥**

**व्या :** मुकुन्देति ॥ **अथ** नन्दगृहप्रवेशानन्तरं **सः** यः पूर्वं श्रीकृष्णमादाय गतः स इत्यर्थः । **आनकदुन्दुभिः** वसुदेवः । **मुकुन्दस्य सेवायाः अर्हमुचितं फलं तावद्वहन्निव** श्रीमुकुन्दसेवकस्य मुक्तिरेव भाविफलम् । तात्कालिकं त्वैश्वर्यादिप्राप्तिरिति वदतः कवेर्हृदयम् । **तां** यशोदाशयने स्थितां **शिशुस्वरूपाम्** अर्भकरूपां **कमलां** श्रियं **स्वहस्ते बिभ्रत् आत्मवासं** स्वनिवासस्थानम् **अभ्यागमत्**[2] ॥

**सुतं यशोदाशयने निधाय विरिञ्चिपूर्वामरमुख्यतातम् ।**
**विवेश कंसस्य गृहं स शौरिः प्रगृह्य तन्मृत्युमिवाम्बिकां ताम् ॥७॥**

---

१ रामान्तिके स्थिता देवी न मन्दैः समदृश्यत (मणिमञ्जरी – २/२) इतिवत् ॥

२ देवक्याः शयने न्यस्य वसुदेवोऽथ दारिकाम् ।
शृङ्खलां पादयोः कृत्वाऽऽस्ते पूर्ववदावृतः ॥ - इति भागवते (१०/४/५२)

**व्या :** सुतमिति ॥ **सः शौरिः** वसुदेवः **विरिञ्चः पूर्वो** मुख्यो येषां ते ते च ते **अमराः** तेषां **मुख्यतातं** अनुपचरितपितरम् । ''सृष्टा ब्रह्मादयो देवाः'' इति[1] स्मृतेः । **सुतं** स्वपुत्रं श्रीकृष्णम् । अनेन श्रीकृष्णस्य सुतत्वमौपचारिकमिति गम्यते । **यशोदाशयने** यशोदापर्यङ्के **निधाय ताम् अम्बिकां** दुर्गां तस्य **कंसस्य मृत्युमिव प्रगृह्य** दुर्गायाः संहारमूर्तित्वादिति भावः । **गृहं ययौ** ॥ ७ ॥

**प्रभातकाले खलमभ्रगा सा प्रबोध्य[2] बन्धात् पितरौ वियोज्य ।**
**हरेर्वियोगोदितचित्तचिन्तां बिभेद मातुः शयनीयसंस्था[3] ॥८॥**

**व्या :** प्रभातेति । **सा** दुर्गा **प्रभातकाले** प्रातःकाले **अभ्रगा** आकाशगा सती **खलं** दुष्टं कंसं **प्रबोध्य** तव शत्रुर्भूमौ जात इति विज्ञाप्य **पितरौ** देवकीवसुदेवौ **बन्धान्निगडबन्धाद्वियोज्य** दुर्गावचनं[4] निशम्य तौ निरपराधिनाविति कंसः बन्धाद्विमोचयामासेति पौराणिकी[5] कथा । **मातुर्देवक्याः शयनीये** आस्तरणे सम्यक् तिष्ठतीति **शयनीयसंस्था** सती **हरेः** श्रीकृष्णस्य **वियोगो** विरहः तेनोदितां उत्पन्नां **चित्तस्य** मनसः **चिन्तां** ग्लानिं **बिभेद** परिहृतवती ॥ ८ ॥

**स्नात्वा पूर्वपयोनिधावचलसत्पीठाधिरूढः करैः**
**पद्मानि प्रतिगृह्य सान्द्रतिमिराण्युन्मूल्य रागावृतः ।**

---

१ महाभारततात्पर्यनिर्णयोद्धृत (२/६३) महाभारतवचनम् ।

२ 'श्रियं वसाना अमृतत्वमायन्' इति श्रुतेः ।

३ उक्त्वेति कंसं पुनरेव देवकीतल्पेऽशयद्बालरूपैव दुर्गा ।
नाज्ञासिषुस्तामथ केचनात्र ऋते हि मातापितरौ गुणाढ्याम् ॥
- इति म.भा.ता.निर्णये (१२/७२)

सा कन्या ववृधे तत्र वृष्णिसङ्घसुपूजिता ।
पुत्रवत् पाल्यमाना सा वसुदेवाज्ञया तदा ॥ - इति हरिवंशे (२/४/४६)

४ किं मया हतया मन्द जातः खलु तवान्तकः ।
यत्र क्वचित् पूर्वशत्रुर्मा हिंसीः कृपणां वृथा ॥ - भागवते (१०/५/१२)

५ देवकीं वसुदेवं च विमुच्य प्रश्रितोऽब्रवीत् । - भागवते (१०/४/१४)

**सिञ्जत्पक्षिगणान्निशम्य परमं कृष्णावतारं रवि-**
**स्तत्पूजार्थमिवोदितो व्रजगृहद्वारेषु तान् प्राहिणोत् ॥ ९ ॥**

**व्या :** सूर्योदयं वर्णयति – **स्नात्वेति** । **रविः** सूर्यः । **सिञ्जत्पक्षिगणात्** ध्वनत्पक्षिसमूहात् । **परमं** उत्तमं **श्रीकृष्णावतारम्** । **निशम्य** श्रुत्वा । **तत्पूजार्थं** तस्य कृष्णस्य पूजां कर्तुमिव । **उदितः** सन् । **पूर्वपयोनिधौ** पूर्वसमुद्रे । **स्नात्वा** स्नानं कृत्वा । सूर्यः सायङ्काले समुद्रं प्रविशति प्रातः समुद्रादुद्गच्छतीति कवीनां समयः । **अचल** एव उदयपर्वत एव **समीचीनं पीठं तदधिरूढः** कूर्मपीठ इव तस्मिन्नुपविष्ट इत्यर्थः । **सान्द्राणि** निबिडानि **तिमिराणि** अन्धकाराणि । **उन्मूल्य** पापपुरुषोच्चाटनवद्दीपं प्रज्वाल्यान्धकारनिराकरणवद्वा विनाश्य । **करैः** किरणैः । **पद्मानि** कमलानि । हस्तेन पुष्पपरिग्रहवत् **परिगृह्य** विकासयित्वा । 'बलिहस्तांशवः कराः' इत्यमरः । **रागावृतः** रागेण रक्तिम्ना अनुरागवदावृतः सन् । 'रागोऽनुरागे मात्सर्ये लाक्षादौ रक्तिमत्विषि' इति रत्नमाला । [1]**व्रजगृहद्वारेषु** क्व कृष्णस्तिष्ठतीति सकलगृहेषु विचारयितुमिव **तान्** करान् पूजाकार्यं कर्तुं हस्तप्रसारणवत् प्रेषितवान् । अत्र सूर्यार्चकयोः तुल्यधर्माणां बिम्बप्रतिबिम्बभावत्वेन तुल्ययोगित्वहेतुकदृष्टान्तानुप्राणितोत्प्रेक्षालङ्कारः ॥९॥

**सुमेरुसंस्थैरमरैरुपायात् समुद्धृतं विष्णुपदार्चनाय ।**
**समुद्रवापीस्थसहस्रपत्रमिवोदितो भाति सहस्ररश्मिः ॥१०॥**

**व्या : सुमेरुसंस्थैरिति** । **उदितः** उदयं प्राप्तः । **सहस्रं रश्मयो** किरणाः । 'किरणप्रग्रहौ रश्मी' इत्यमरः । यस्यासौ तथोक्तः सूर्यः । शोभनश्चासौ मेरुश्च **सुमेरुः** । तस्मिन् तिष्ठन्तीति तथा । **मेरुसंस्थैः** मेरुपर्वतस्थितैः **अमरैः** । **विष्णुपदार्चनाय** श्रीविष्णुपदस्याकाशस्यार्चनाय प्रकाशनाय । श्रीहरिचरणार्चनायेति ध्वनिः । **उपायश्चातुर्यम्** । तस्मात् **समुद्धृतं** लूनम् ।

---

१ गोष्ठं घोष इति प्रोक्तो व्रजस्तत्पालसंस्थितिः । - भा.ता.(४/१८/३१)

**समुद्र एव वापी दीर्घिका** । 'सरो वापी तु दीर्घिका' इत्यमरः । **तत्रस्थं सहस्रपत्रं** कमलमिव **भाति** । सहस्रपत्रसादृश्याय सहस्ररश्मिरित्युक्तम् । सूर्याधिष्ठितयन्त्रस्यामरैर्गृहीतत्वाद्दीर्घयष्टादिरूपयन्त्रेणोर्ध्वत्वदेशादुद्धृतस्थूलसरोवरमध्यस्थकमलोपमेति भावः ॥१०॥

**दिवि द्युरत्नेऽभ्युदितेऽम्बुजानि भुवि प्रसेदुर्भुवनोदयानि ।**
**इह प्रजाते यदुवंशरत्ने सुराननाब्जानि च नाकिलोके ॥११॥**

**व्या :** इदानीं सूर्योदयश्रीकृष्णोदयौ समीकृत्य वर्णयति – **दिवीति** । **दिवि** अभ्रे । 'द्योदिवौ द्वे स्त्रियामभ्रम्' इत्यमरः । **द्युरत्ने** द्युमणौ । **अभ्युदिते** उदयति सति । **भुवि** भूलोके । **भुवनानां** जलानाम् । 'भुवनं खाम्बुलोकेषु' इति रत्नमाला । **उदयः** अभ्युदयः शोभेत्यर्थः । येभ्यः तानि **भुवनोदयानि** । जलानां शोभावहानि। जलानि अम्बुजैः शोभन्त इति भावः । अम्बुनि जायन्त इत्यम्बुजानि । 'सप्तम्यां जनेर्डः' इति[1] डप्रत्ययः । **प्रसेदुः** विकासमापुः । **इह** भूमौ । **यदुवंशरत्ने** यदुकुलललामे श्रीकृष्णे । **प्रजाते** सति । **नाकिलोके** नाकिनां देवानां लोके । **सुराननान्येवाब्जानि** अरविन्दानि **च प्रसेदुः** । सूर्योदये कमलविकासवच्छ्रीकृष्णोदये देवानां मुखविकासो जात इति भावः । भूलोकोदितश्रीकृष्णप्रकाशस्योर्ध्वगामित्वादाकाशोदितसूर्यप्रकाशस्याधोगामित्वाच्च द्वयमपि युक्तमिति भावः ॥ ११ ॥

**तरुव्रजे पक्षिगणाश्चरन्तो जगुर्निरीक्ष्योदयमुष्णरश्मेः ।**
**व्रजे च दुष्टोष्णलसन्मरीचेः समागता मागधबन्दिसूताः ॥१२॥**

**व्या :** **तरुव्रज** इति । **तरुव्रजे** वृक्षसमूहे । **चरन्तः पक्षिगणाः** पतत्रिसङ्घाः । **उष्णरश्मेः** सूर्यस्य । **उदयं निरीक्ष्य जगुः** ध्वनिं चक्रुः । नक्तं मूकीभूताः पक्षिगणाः प्रभाते ध्वनन्त इति तेषां जातिः । **व्रजे च** गोष्ठे च । **दुष्टानां** दुर्जनानां

[1] पा.सू. ३/२/९७

उष्णाः सन्तापकारिणः **लसन्तः** स्फुरन्तो **मरीचयः** कान्तयो यस्य स तथोक्तः तस्य श्रीकृष्णस्य **उदयं च निरीक्ष्य समागताः** । मागधा बन्दिनः सूताश्च **मागधबन्दिसूताः** । स्वकृतवाक्यरूपस्तुतिपरकृतवाक्यरूपस्तुतिगद्यपद्यरूप-स्तुतिपाठकर्तारः पाठकविशेषाः **जगुः** स्तुतिपाठादिकं चक्रुः । 'गै शब्दे' इति धातुः ॥ १२ ॥

**तदा स्ववंश्यैः सह राजहंस्यो जनैर्व्यदृश्यन्त शनैश्चरन्त्यः ।**
**बृहन्नितम्बस्तनभारभीरुतनुस्फुरन्मध्ययुताश्च गोप्यः ॥१३॥**

**व्या :** तदेति । तदा सूर्योदयकाले । **राजहंस्यः** वरटाः । **स्ववंश्यैः** स्ववंशभवैः अन्यैः पक्षिभिः **सह शनैर्मन्दं चरन्त्यो** गच्छन्त्यः सत्यः **जनैर्व्यदृश्यन्त** । अनेन लोके स्त्रीणां प्राधान्यं ध्वन्यते । **बृहद्भिर्नितम्बैः** कटिपश्चाद्भागैः । 'नितम्बो स्त्रीकटेः पश्चात्' इति रत्नमाला । **स्तनानां भारेण भीरूणि तनूनि** कृशानि **स्फुरन्ति** प्रकाशमानानि **मध्यानि** तैर्युक्ताः । अत एव **शनैर्मन्दं चरन्त्यः गोप्यश्च स्ववंश्यैः** स्वज्ञातिभिः **सह व्यदृश्यन्त** । प्रातर्यशोदायां पुत्रोत्पत्तिं श्रुत्वा तद्गृहं प्रत्यागच्छन्त्यो **जनैर्व्यदृश्यन्ते**त्यर्थः ॥ १३ ॥

**कृष्णं स्वकान्तमधुनैव [१]वशे विधातु-**
**मुत्कान्विता इव मनोहरकोमलाङ्ग्यः ।**
**व्यालोलहारसरकुण्डलकुन्तलोद्य-**
**च्चेलान्तनूपुररुचः पथि ता विरेजुः[२] ॥ १४ ॥**

**व्या :** कृष्णमिति । **मनोहराणि** कान्तानि **कोमलानि** मृदूनि **अङ्गानि** यासां ताः । गमनवशात् **व्यालोला**श्चञ्चलाः **हारसराः** मुक्ताहाराः **कुण्डलानि** ताटङ्कानि

---

१ वशम् (पा.)

२ गोप्यः सुमृष्टमणिकुण्डलनिष्ककण्ठ्यः चित्राम्बराः पथि शिखाच्युतमाल्यवर्षाः ।
नन्दालयं सवलया व्रजतीर्विरेजुः व्यालोलकुण्डलपयोधरहारशोभाः ॥
- भागवते (१०/६/११)

कुन्तलाः केशाः **उद्यच्चैलान्ताः** लसदंशुकान्ताः **नूपुरा** मञ्जीराः । व्यालोलेति पदस्य प्रत्येकं सम्बन्धः । **व्यालोलहारसरकुण्डलकुन्तलोद्यच्चैलान्तनूपुरास्तेषां रुचयस्त्विषो** यासां ताः तथोक्ताः **ताः** गोप्यः **स्वकान्तं** स्वरमणं श्रीकृष्णम् । **अधुनैव वशे विधातुं** वशीकर्तुं **उत्काः** उत्सुकाः । हारादीनां चाञ्चल्यविलासेन पूर्णतया स्थिरचित्तमपि चाञ्चल्यं दत्वा वशीकर्तुमिवेत्यर्थः । **अन्विता** अनुसृत्य प्राप्ता **इव पथि विरेजुः** बभुः । **वसन्ततिलकावृत्तम्** ।।१४।।

**सहस्रशो गोगणमुष्णदीप्तिः समर्पयामास पदे मुरारेः ।**
**सुवर्णभासंवलितांश्च नन्दः स्वगोगणान् विप्रकुलाय दत्तान् ॥१५॥**

**व्या :** कथासञ्चारार्थं गोपीनां गमनमुक्त्वा पुनः प्रक्रान्तसूर्योदयं वर्णयति – **सहस्रश** इति । **उष्णा दीप्तिर्यस्यासौ** सूर्यः । **मुरारेः पदे** विष्णुपदे आकाशे । **सहस्रशः** सहस्रसङ्ख्याकं **गोगणं** किरणसमूहम् । **समर्पयामास** । स्वकिरणैराकाशं प्रकाशितवानित्यर्थः । **नन्दश्च सुवर्णानां भाभिः** प्रभाभिः **संवलितान्** स्फुरितान् सुवर्णालङ्कृतान् इत्यर्थः । अनेन किरणानां रागवद्रागो ध्वन्यते । **विप्रकुलाय** ब्राह्मणसमूहाय **दत्तान् स्वगोगणान्** [1]स्वकीयधेनुसङ्घान् **मुरारेर्मुरमर्दनस्य** श्रीकृष्णस्य **पदे समर्पयामास** समार्पयत् । स्वकृतगोदानं श्रीकृष्णार्पितं चकारेत्यर्थः । वैष्णवा हि स्वदीयमानसकलदानादिसत्कर्मफलं श्रीकृष्णार्पणं कुर्वन्तीति भावः ।। १५ ।।

**स नन्दगोपः प्रददौ द्विजेभ्यो बहूनि गोरूपधनानि विष्णोः ।**
**तटीषु गोभिः सह सञ्चरिष्णोः सहस्रशस्ता इव साधयिष्यन् ॥१६॥**

**व्या : स** इति । **स नन्दगोपः द्विजेभ्यः** विप्रेभ्यः । 'दन्तविप्राण्डजा द्विजाः' इत्यमरः । **बहूनि गोरूपधनानि प्रददौ** । किमर्थम्? **तटीषु** गोवर्धनसानुषु ।

---

१ धेनूनां नियुते प्रादात् विप्रेभ्यः समलङ्कृते ।
तिलाद्रीन् सप्त रत्नौघान् शातकुम्भान्तरावृतान् ।। - भागवते (१०/६/३)

**गोभिः** धेनुभिः **सह सञ्चरिष्णोः** सञ्चारं कर्तुमिच्छोः **विष्णोः** श्रीकृष्णस्य। गोभिः सह सञ्चरिष्यतो बहुभिर्गोभिर्भवितव्यमिति धिया **ताः** गाः [1]**सहस्रशः** बहुसङ्ख्याकाः **साधयिष्यन्निवे**त्युत्प्रेक्षा। श्रीकृष्णार्पणबुद्ध्या ब्राह्मणेभ्यो दत्तं स्वस्य शतगुणफलं भवतीति भावः ॥ १६ ॥

**विप्रर्षिदेवपितृबन्दिसुहृज्जनेभ्यो**
**वित्तान्यदात् किल सुतुष्टमनाः स नन्दः।**
**इत्थं मतिर्मम विभोः पितृतां स्वसंस्था-**
**मुद्वीक्ष्य तान् प्रहसतोऽभिमुखीचिकीर्षुः ॥ १७ ॥**

**व्या :** विप्रर्षीति। सु सम्यक् **तुष्टं मनो** यस्य। पुत्रजननजन्यहर्षयुक्तचित्त इत्यर्थः। **स नन्दः**। विप्राः ऋषयो देवाः पितरो बन्दिनः सुहृज्जनाः तेभ्यो। **वित्तानि** द्रव्याणि। 'द्रव्यं वित्तं स्वापतेयम्' इत्यमरः। **अदात् किल** दत्तवान् किल। किलेत्यनेन –

'नन्दो महामनास्तेभ्यो वासालङ्कारगोधनैः।
सूतमागधबन्दिभ्यो येऽन्ये विद्योपजीविनः।
तैस्तैः कामैरदीनात्मा यथोचितमपूजयत् ॥'[2]

– इत्यादिपुराणप्रसिद्धिं द्योतयति। तस्मिन् विषये **मम मतिः इत्थम्**। अहं इत्थं तर्कयामि इत्यर्थः। **विभोः** पूर्णस्य श्रीकृष्णस्य। **स्वसंस्थाम्** आत्मस्थितां **पितृताम् उद्वीक्ष्य प्रहसतः** परिहासं कुर्वतः। **तान्** विप्रादीन्। अनभिमुखाः यथा अभिमुखाः सम्पद्यन्ते तान् तथाकर्तुं इच्छतीति **अभिमुखीचिकीर्षु**र्दत्तवानिति **मम मति**रिति सम्बन्धः। यथा लोके अज्ञः आत्मन्यविद्यमानविद्याप्रागल्भ्यादिकं दर्शयन् परिहसतो जनान् द्रव्यादिनाऽभिमुखीकरोति तद्वत् इति भावः ॥ १७ ॥

---

१ अक्षयं कर्म यस्मिन् परे स्वर्पितम् - इति द्वादशस्तोत्रे (८/१०)

२ भागवते (१०/६/१४,१५)

**ध्वजप्रभैरूर्ध्वमुखैर्मयूखैरधोमुखैस्तोरणसम्मितैश्च ।**
**विभूषिता द्यौर्व्रजभूश्च चित्रध्वजैः स्फुरत्तोरणसञ्चयैश्च ॥१८॥**

**व्या :** ध्वजप्रभैरिति । द्यौराकाशः ध्वजप्रभैः ध्वजोपमैः ऊर्ध्वमुखैर्मयूखैः अंशुभिः । तोरणसम्मितैः तोरणसदृशैः अधोमुखैर्मयूखैश्च विभूषिता बभूव । व्रजभूश्च चित्रैः नानावर्णैः । ध्वजैः केतुभिः । स्फुरत्तोरणसञ्चयैश्च विभूषिता बभूव ॥ १८ ॥

**लसत्पताकध्वजकुम्भतोरणैर्विभासितानि व्रजमन्दिराणि ते ।**
**प्रवेक्ष्यतीमानि स बाललीलया विभुर्बतेतीव वितेनुरञ्जसा ॥१९॥**

**व्या :** लसदिति । ते गोपाः । स विभुः कृष्णः । इमानि गृहाणि । बाललीलया बालक्रीडया । प्रवेक्ष्यति बतेतीव व्रजमन्दिराणि गोकुले विद्यमानगृहाणि । लसन्त्यश्च ताः पताका ध्वजाश्च कुम्भाः पूर्णकलशाश्च तोरणानि च लसत्प ताकध्वजकुम्भतोरणानि तैः । अञ्जसा सम्यक् । विभासितानि प्रकाशितानि । वितेनुः चक्रुः । तनोतेर्लिट् ॥ १९ ॥

**स पालयिष्यन् सदयावलोकैरिमान् कृतार्थान् रचयिष्यतीति ।**
**हृदेव वत्सव्रजगोवृषादीनलम्प्रचक्रुः सहरिद्रतैलैः ॥ २० ॥**

**व्या :** स इति । सः श्रीकृष्णः । सदयावलोकैः कृपायुक्तनिरीक्षणैः । इमान् वत्सादीन् । पालयिष्यन् सन् । कृतार्थान् कृतकृत्यान् रचयिष्यतीति हृदेव अभिप्रायेणेव । वत्सव्रजगोवृषादीन् वत्ससमूहधेनुवृषभादीन् । आदिशब्देन पश्वन्तरं गृह्यते । हरिद्रासहितानि सहरिद्राणि तैलानि तैः अलं । प्रचक्रुः । श्रीकृष्णदयावलोकनपात्राणामविभूषितत्वमनुचितमिति भावः ॥ २० ॥

**इत्थं त्वमत्र शिशुभावमुपेत्य साकमस्माभिरीश विहरेति वदन्निवास्मै ।**
**दध्ना घृतेन पयसा नवनीतजातैः स्निग्धस्तदैत्य विजहार कुमारवर्गः २१**

**व्या :** इत्थमिति । हे ईश स्वामिन् श्रीकृष्ण । त्वमत्र व्रजे । शिशुभावं शिशुस्वरूपम् । उपेत्य । अस्माभिः साकम् । इत्थम् अनेन प्रकारेण । विहर

क्रीडयेति । **अस्मै** कृष्णाय । **वदन्निव** । **स्निग्धः** स्नेहयुक्तः । **कुमारवर्गः** । **एत्य** आगत्य । **दध्ना घृतेन पयसा** क्षीरेण **नवनीतजातैः** । **तदा** तस्मिन् काले । **विजहार** क्रीडाञ्चकार ॥२१॥

**विधौ प्रशान्तेऽभ्युदिते जनोऽयमभुङ्क्त भोगान् पुनरुष्णभानौ ।**
**करोति धर्मांश्चकितस्तथा तद्बिभेति सर्वः परुषान्न शान्तात् ।२२।**

**व्या :** विधाविति । **अयं जनः प्रशान्ते** शान्तियुक्ते **विधौ** चन्द्रे **अभ्युदिते** सति **भोगान्** स्रक्चन्दनवनितादीन् **अभुङ्क्त** असेवत । चन्द्रोदयस्य कामोद्दीपनत्वादिति भावः । उष्णाः भानवः कराः यस्य सः । 'भानुः सूर्यमयूखयोः' इति रत्नमाला । तस्मिन्नभ्युदिते सति **चकितः** सन् स्त्र्यादिभोगान् विहाय भीतः सन् **धर्मान्** स्नानसन्ध्याजपहोमादींश्च **करोतीति** यत् । सूर्योदयस्य धर्मानुष्ठानकालत्वादिति भावः । **तत् तथा** युक्तं तदित्यर्थः । **सर्वो जनः परुषात्** क्रूरात् **बिभेति** त्रसति । **शान्तान्न बिभेति** । नहि तरक्षोरिव हरिणशावाद्बिभेतीति भावः ॥ २२ ॥

**नभः स्पृशन्नुन्मुखदीप्तिवृन्दैरसौ क्रमेणोर्ध्वमियाय भास्वान् ।**
**तथाहि तद्विष्णुपदानुषक्तकरः कथं नोर्ध्वमुपैति लोकः ॥२३॥**

**व्या :** नभ इति । **असौ भास्वान्** रविः । **उन्मुखदीप्तिवृन्दैः** उद्गच्छद्द्युतिसमूहैः । **नभो** गगनं **स्पृशन् क्रमेण** पर्यायेणोर्ध्वमियाय उपर्यगच्छत् । **तत् तथाहि** । **विष्णुपदानुषक्तकरः** श्रीविष्णुचरणासक्तकरः श्रीहरिपूजक इत्यर्थः । अन्यत्र विष्णुपदे आकाशे । **कथम्** ऊर्ध्वगतिं **नोपैति** न प्राप्नोति इति । श्रीहरिचरणाराधकस्योर्ध्वगतिरेव नाधोगतिरित्यर्थः । श्लिष्टगर्भितार्थान्तरन्यासः ॥ २३ ॥

**सोमान्वये जातमिनो निरीक्ष्य रामानुजं [१]मन्युमिवादधानः ।**
**रागं परित्यज्य बभूव तीक्ष्णः श्रेयोऽनुजस्यापि न वै सहन्ते ॥२४॥**

---

१ हृद्यभिवृद्धमन्युः इति (पा.)

**व्या : सोमान्वय** इति । **इनः** सूर्यः । 'इनो भूपे रवौ पुंसि' इति रत्नमाला । **रामस्य** बलरामस्यानुजं श्रीकृष्णं **सोमान्वये** चन्द्रकुले **जातं निरीक्ष्य मन्युं** क्रोधं । 'मन्युः क्रोधे क्रतौ दैन्ये' इति भास्करः । **आदधान इव** श्रीरामावतारे मत्कुले जातः इदानीं चन्द्रकुले जात इति कोपयुक्त इवेत्यर्थः । **हृद्यभिवृद्धमन्युरिति पाठे** स्पष्टोऽर्थः । **रागं** रक्तिमानं शान्तिं च । अन्यत्र प्रीतिम् । **परित्यज्य । तीक्ष्णः** क्रूरः **बभूव** । उदयकाले रक्तः शान्तः सूर्यः प्रहरादिकाले रक्तिमानं शान्तिं परित्यज्य तेजोभिस्तीक्ष्णो बभूवेत्यर्थः । नन्वनुजस्य श्रेयोविषये कथं कोप इत्यत आह – **श्रेय** इति । लोकाः **अनुजस्यापि** भ्रातुरपि **श्रेयः न वै सहन्ते** न क्षमन्ते । दिवा सूर्यो जायते रात्रौ सोमो जायत इति सोमः सूर्यानुज इति कवीनां समयः । **श्लिष्टगर्भितार्थान्तरन्यासः** । एतस्योत्प्रेक्षासापेक्षत्वात् तयोरङ्गाङ्गिभावेन सङ्करः।। २४ ।।

**म्लानं विधत्ते न मुखं जनानां छायाश्रितानामपि तिग्मभानुः ।**
**क्रूरोऽपि मर्त्यः स्वकलत्रसान्द्रसम्बन्धभाजां न हि तापदायी ।।२५।।**

**व्या : म्लानमिति । तिग्माः** तीक्ष्णाः **भानवः** मरीचयः यस्य सोऽपि उष्णकरोऽपीत्यर्थः । **छायामनातपम्** । 'छाया कान्तिः सूर्यजाया प्रतिबिम्ब-मनातपः' इति रत्नमाला । ताम् **आश्रिताः** छायाश्रिताः । तेषां **जनानां मुखं** मुखानि। जात्येकवचनम् । **म्लानं** खिन्नम् । **न विधत्ते** न करोति । तथाहि । **मर्त्यः** मनुष्यः । **क्रूरोऽपि** निष्ठुरोऽपि । **स्वकलत्रस्य** स्वभार्यायाः। **सान्द्रः** निरन्तरः । 'घनं निरन्तरं सान्द्रम्' इत्यमरः । **सम्बन्धः** तं भजन्तीति **स्वकलत्रसान्द्रसम्बन्धभाजः** तेषाम् । स्वस्त्रीनिबिडसम्बन्धिनामित्यर्थः । **तापदायी न** भवति । निष्ठुरोक्त्यादिना सन्तापकारी न भवति **हि** । छायाश्रितानामित्यनेन [१]छायानाम्नीं स्वभार्यामाश्रितानामिति द्योतनात् **श्लिष्टमूलकार्थान्तरन्यासः** ।।२५।।

---

१ मायामयी तु सा सञ्ज्ञा तस्याश्छाया समुत्थिता ।
प्राञ्जलिः प्रणता भूत्वा छाया सञ्ज्ञां नरेश्वर ।। - हरिवंशे (१/९/१०)

**यतो हि गोरूपधरां[१] धरित्रीं स पालयिष्यन् हरिराविरासीत् ।**
**सहानुकूलैरमरैः स्वकीयैस्ततः स गोपालकवंशजोऽभूत् ॥२६॥**

**व्या :** हरेर्गोपात्मनाऽवतारे निमित्तमुत्प्रेक्षयति – **यत** इति । **सः हरिः** श्रीकृष्णः । **यतः** यस्मात् कारणात् । **गोरूपधरां धरित्रीं** भूमिम् । **पालयिष्यन्** आविरासीत् **हि**। **ततः** कारणात् । **सः** श्रीकृष्णः । **अनुकूलैः** एककार्यैः **स्वकीयैः अमरैः सह**। **गोपालकवंशजोऽभूत्** । गोरक्षणे गोपालकेन भवितव्यमिति भावेनेति भावः[२] ।२६।

**अजन्मनस्तस्य हि जातकर्म विधाय विप्रा विदधुर्विधिज्ञाः ।**
**मधोः कुलेऽजातमपि स्वमन्त्रमधुश्रिया माधवमादिदेवम् ॥२७॥**

**व्या : अजन्मन** इति । विधिं जातकर्मादिवैदिककर्मानुष्ठानं जानन्तीति **विधिज्ञाः विप्राः** ब्राह्मणाः । **अजन्मनः** जन्मरहितस्य श्रीकृष्णस्य । **जातकर्म** जननानन्तरं शिशोरायुर्वर्चोयशोबलसिद्ध्यर्थम् क्रियमाणं कर्म । **विधाय** । **मधोः** मधुर्नामकस्य यादवस्य । **कुले** वंशे । **अजातमपि** अनुत्पन्नमपि । अत एवाजन्मन इत्युक्तम् । **आदिदेवं** देवानामादिभूतं श्रीकृष्णम् । **स्वमन्त्रमधुश्रिया** स्वेषां ये मन्त्राः जातकर्मोपयुक्तवेदमन्त्राः ते च मधु च तत्कर्मोपयुक्तं माक्षिकं तच्च तेषां श्रिया कान्त्या । **माधवं** माधवनामकम् । **विदधुः** चक्रुः[३] । **माधव** इत्यनेन मायाः

---

१ श्लो । (१/१३)

२ नन्दाद्या ये व्रजे गोपा याश्चामीषां च योषितः ।
वृष्णयो वसुदेवाद्या देवक्याद्या यदुस्त्रियः ॥
सर्वे वै देवताप्राया उभयोरपि भारत ।
ज्ञातयो वन्धुसुहृदो ये च कंसमनुव्रताः ॥
असुराः सर्व एवैते लोकोपद्रवकारिणः । - भागवते (१०२८-१०)

३ नन्दस्त्वात्मज उत्पन्ने जाताह्लादो महामनाः ।
आहूय विप्रान् वेदज्ञान् स्नातः शुचिरलङ्कृतः ॥
वाचयित्वा स्वस्त्ययनं जातकर्मात्मजस्य वै ।
कारयामास विधिना पितृदेवार्चनं तथा ॥ - भागवते (१०/६/१,२)

धवो माधव इति व्युत्पत्तिसम्भवात्, **मधुश्रियेत्यनेन** मधुनः सम्बन्धी माधव इति व्यत्पत्तिसम्भवाच्चेति भावः ।।२७।।

**ततः स कृष्णः कृतजातकर्मा प्रचक्रमेऽम्बास्तनपानकर्म ।**
**स्ववीक्षणेनैव मुहुः सृतं तत्पयो मुधा स्यादिति चिन्तयेव ।।२८।।**

**व्या :** तत इति । **ततो** जातकर्मानन्तरम् । अनेन स्तनप्राशनात् पूर्वं जातकर्मणः कर्तव्यत्वमभिप्रैति ।

'प्राङ्नाभिकृन्तनात् पुंसो जातकर्मविधानतः ।
स्तनप्राशनतः पूर्वं छिन्ने नाले तु सूतकम् ।।'

इति वसिष्ठवचनात् । **कृतं जातकर्म** यस्य स तथोक्तः स कृष्णः । **अम्बायाः** मातुः **स्तनपानकर्म** स्तनयोः यत्पानं तच्च तत् कर्म स्तनपानव्यापारमित्यर्थः । **स्वस्य** यद्वीक्षणं दर्शनम् । तेनैव । **मुहुः** पौनःपुन्येन । **सृतं तत्पयः** स्तनदुग्धं । 'पयः पानीयदुग्धयोः' इति भास्करः । **मुधा** भूतलपातादिना वृथा **स्यात् इति चिन्तयेव प्रचक्रमे** । पूर्णस्य स्वस्य स्तन्यपानप्रयोजनाभावात् स्वदर्शनेन सृतं स्तनक्षीरं स्वार्पितं कुर्वन्निव स्तन्यपानं चकारेति भावः ।। २८ ।।

**पुरा जनन्याः स्तनपानजातसुखानभिज्ञोऽजनिरेष कृष्णः ।**
**पपौ स्तनक्षीरमतृप्तकल्पः प्रियेषु नूत्नेषु हि कस्य तृप्तिः ।।२९।।**

**व्या :** पुरेति । न विद्यते जनिरुत्पत्तिर्यस्य सोऽजनिः । अत एव **पुरा** पूर्वम् । **जनन्याः** मातुः । **स्तनपानेन** जातस्य **सुखस्य अनभिज्ञः एषः श्रीकृष्णः** । **अतृप्तकल्पः** अतृप्तसदृशः सन् । स्तन्यस्य स्वेन पूर्वं कदाप्यनास्वादितत्वादिति भावः । **स्तनक्षीरं** स्तन्यम् । **पपौ** पानं कृतवान् । तथाहि । **नूत्नेषु** नवीनेषु **प्रियेषु कस्य तृप्तिः** अलम्बुद्धिर्भवेत्? न कस्यापीत्यर्थः । अजन्मनः स्तनपानमत्यपूर्वमिति भावः ।।२९।।

**बहूनि पुण्यानि स नन्दपत्न्या हृदि स्थिरीकर्तुमुरोजदुग्धम् ।**
**पपौ प्रदेशार्थितयेव शौरिर्न चेत् सुतृप्तस्य कुतस्तदिच्छा ॥३०॥**

**व्या :** बहूनीति । **सः शौरिः** शूरस्यापत्यं पुमान् शौरिः श्रीकृष्णः । **नन्दपत्न्याः** यशोदायाः । **हृदि** हृदये । **बहूनि पुण्यानि** श्रेयांसि । **स्थिरीकर्तुं** सन्निधापयितुम् । **प्रदेशम्** अवकाशम् । अर्थयत इति **प्रदेशार्थी** । तस्य भावः **प्रदेशार्थिता** तयेव । हृदय एव क्षीररूपवस्तुनि स्थिते सति तत्र पुण्यप्रक्षेपस्यानवकाशात् पानात् क्षीरं बहिःकृत्वा पुण्यं प्रक्षेप्तुमिवेति भावः । **उरोजौ** स्तनौ । तयोर्दुग्धं क्षीरं **पपौ**। कृष्णः यावद्यावत् स्तन्यं पिबति तावत्तावद्यशोदाहृदि पुण्यस्योपचयो जात इत्यर्थः । **न चेत्** यशोदायाःपुण्यदानाय स्तनपानं न चेत् । **सुतृप्तस्य** नित्यतृप्तस्य कृष्णस्य। **तदिच्छा** स्तन्येच्छा । **कुतः** कस्मात् कारणाद्भवेत्? तृप्त्यर्थं खलु स्तन्यपानं, तृप्तेः पूर्वं सत्वात् किमर्थं स्तन्यपानं कुर्यादित्यर्थः ॥ ३० ॥

**विभुर्यशोदाङ्कगतोऽपिबत् स स्तनं प्रगृह्यान्यमुरोजदुग्धम् ।**
**दृशाऽमृतं दानफलं तदैव दिशन्निवाम्बाननमीक्षमाणः ॥३१॥**

**व्या :** विभुरिति । **विभुः** श्रीकृष्णः । **यशोदायाः अङ्कगतः** उत्सङ्गगतः सन् । 'उत्सङ्गचिह्नयोरङ्कः' इत्यमरः । **अन्यं** पीयमानव्यतिरिक्तं स्तनम्। शिशुजात्यनुसारेण **प्रगृह्य** हस्तेन गृहीत्वा । **दृशा** दृष्ट्या । **दानफलं** तस्यै स्तनक्षीरदानफलम् अमृतं मोक्षम् । **तदैव** 'अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते' इति वचनात् तदानीमेव । **दिशन्निव** प्रतिपादयन्निव । **अम्बाननं** मातृमुखम् । **ईक्षमाणः** सन् । इयमपि शिशूनां जातिः । [1]**उरोजदुग्धम् अपिबत्** ॥ ३१ ॥

---

१ पयांसि यासामपिबत् पुत्रस्नेहस्नुतान्यलम् ।
भगवान् देवकीपुत्रः कैवल्याद्यखिलार्थदः ॥
तासामविरतं कृष्णे कुर्वन्तीनां सुतेक्षणम् ।
न पुनः कल्पते राजन् संसारोऽज्ञानसम्भवः ॥ - भागवते (१०/७/४०,४१)
अनः शयानस्य शिशोरथाल्पकप्रवालमृद्वङ्घ्रिहतं व्यवर्तत ।
विध्वस्तनानारसकुप्यभाजनं व्यत्यस्तचक्राक्षविभिन्नकूबरम् ॥-भागवते (१०/८/९)

**पूर्णस्यापूर्णतां मत्वा गोपी गोपीनमन्दिरा ।**
**क्षीरस्यतीति क्षणशः क्षीरं पाययति प्रभुम् ।। ३२ ।।**

**व्या :** पूर्णस्येति । गोभिः धेनुभिः पीनं पूर्णं मन्दिरं यस्याः सा **गोपी पूर्णस्य** अवाप्तसकलकामस्य श्रीकृष्णस्य । **अपूर्णताम्** अनवाप्तकामत्वं **मत्वा** । श्रीकृष्णः **क्षीरस्यति** क्षीरमात्मार्थं पातुमिच्छति । 'सुप आत्मनः क्यच्'[1] इति क्यचि कृते 'अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि'[2] इति सुडागमः । **इति मत्वा क्षणशः** प्रतिक्षणं **प्रभुं** सर्वेश्वरं श्रीकृष्णम् । **क्षीरं पाययति** । **गोपीनमन्दिरे**त्यनेन वित्तबाहुल्यादेवेदं न तु तस्यापूर्णतेति ध्वन्यते ।। ३२ ।।

**ततः कदाचित् पथि पूतनाख्या स्वमायया रूपमवाप्य रम्यम् ।**
**तमङ्कमारोप्य विषानुषक्तकुचं मुदाऽपाययदम्बुजाक्षम् ।। ३३ ।।**

**व्या :** तत इति । **ततः** मातुः स्तनपानानन्तरम् । कदाचित् कस्मिंश्चिद्दिवसे । **पूतनाख्या** पूतनानाम्नी राक्षसी । **पथि** मार्गे । **स्वमायया** स्वशक्त्या । **रम्यं** रमणीयं **रूपम् अवाप्य** । **तं** श्रीकृष्णम् । **अङ्कमारोप्य विषानुषक्तकुचं** गरसम्बद्धस्तनम् । **मुदा** मरिष्यति इति सन्तोषेण । **अम्बुजाक्षं अपाययत्** पाययामास ।। ३३ ।।

**परिस्फुरन्नूपुरकङ्कणोज्ज्वला लसन्नितम्बार्पितरत्नमेखला ।**
**दृगन्तसंस्तम्भितमानिमण्डला[3] तदोर्वशीवास्ति विलोलकुण्डला ३४**

**व्या :** **परिस्फुर**दिति । **परिस्फुरन्ति** परितः प्रकाशमानानि **नूपुराणि कङ्कणानि** तै**रुज्ज्वला** दीप्यमाना । **लसति नितम्बे** कटेः पश्चाद्भागे । **अर्पिता** निहिता । **रत्नमेखला** रत्नखचितकाञ्ची । 'स्त्रीकट्यां मेखला काञ्ची' इत्यमरः ।

---

१ पा.सू. ३/१/८

२ पा.सू. ७/१/५१

३ सा ताटका चोर्वशीसम्प्रविष्टा (म.भा.ता.नि. १२/८८) इत्युक्तेः ।।

यया सा । तथा **दृगन्तेन** लोचनान्तेन कटाक्षेणेत्यर्थः । **संस्तम्भितानां** नि० र्यापारीकृतानां **मानिनामहङ्कारिणां** पुरुषाणां **मण्डलं** चक्रं यया सा । **विलोले** चञ्चले । 'लोलश्चञ्चलतृष्णयोः' इति विश्वः । **कुण्डले** यस्याः सा पूतना । **तदा** आगमनकाले **उर्वशीव अस्ति** । उर्वशीनामाप्सरःस्त्रीषु काचिदुत्तमा स्त्री । अनेन पूतनायामुर्वश्यावेशात् सौन्दर्यमित्यवगम्यते । **वंशस्थवृत्तम्** । 'जतौ तु वंशस्थमुदीरितं जरौ'[१] इत्युक्तत्वात् ।। ३४ ।।

**स पूतनोच्चस्तनकुम्भचुम्बिमुखारविन्दो हरिराबभासे ।**
**विषं बहिष्ठं प्रमदान्तरङ्गे सुपूरयंस्तन्मुखवर्त्मनेव ।। ३५ ।।**

**व्या : स** इति । पूतनायाः **उच्चः** स्थूलः **स्तनः कुम्भ** इव **उच्चस्तनकुम्भः** तं चुम्बतीति **उच्चस्तनकुम्भचुम्बि मुखारविन्दं** मुखकमलं यस्य स तथोक्तः । **स** श्रीहरिः । **बहिष्ठं** बहिर्लिप्तं **विषं प्रमदायाः** पूतनायाः **अन्तरङ्गे** अभ्यन्तरे **तन्मुखस्य** तस्य स्तनस्य **मुखे** चूचुके **यद्वर्त्म** स्तन्यस्रवणद्वारं तेन **सु** सम्यक् **पूरयन्निव आबभासे** चकासे ।। ३५ ।।

**रमाधरोष्ठामृतपानजातमहानुभावेन**[२] **न पूतनायाः ।**
**उरोजसङ्ग्यार्तिकरो गरोऽसौ बभूव बालस्य बलानुजस्य ।।३६।।**

**व्या : रमेति** । **पूतनाया उरोजसङ्गी** स्तनसम्बन्धी । **असौ गरः** गरलम् । **बलानुजस्य बालस्य** श्रीकृष्णस्य । **रमायाः** मङ्गलदेवतायाः **अधरोष्ठे** यदधरामृतं तस्य **पानेन जातो महानुभावः** सामर्थ्यं तेन रमाधरामृतपानजन्यसामर्थ्येन **आर्तिकरो** दुःखकरो **न बभूव** । अमृतपूर्णस्य वदनस्य विषमकिञ्चित्करमिति भावः । **काव्यलिङ्गमलङ्कारः** ।। ३६ ।।

---

१ इति वृत्तरत्नाकरे (३/४७)

२ **सम्पक्वबिम्बसमरम्यतमाधरोष्ठः** सत्संपदे भवतु सात्वतराजराज्यः ।
यत्संभवामृतकणेन फणीन्द्रतल्पः कृष्णः स नित्यमजरामरणो बभूव ।।
- इति उत्तरत्र (१८/५९)

**मरिष्यतो भोजपतेर्न जन्म तमःश्रमार्हस्य भविष्यतीह ।**
**इतीव धात्रीमवधीत् स तस्य व्रतीन्द्रवृन्दार्चितपादपीठः ॥३७॥**

**व्या : मरिष्यत** इति । **तमसि** पुनरावृत्तिरहिते नरके यः **श्रमः** दुःखं तदर्हस्य तदुचितस्यान्धे **तमसि** पतिष्यत इत्यर्थः । **मरिष्यतो** मरणं प्राप्स्यतो **भोजपतेः** कंसस्य । **इह** भूमौ । नित्यनरकपाताज्जन्म [१]पुनरावृत्तिर्न **भविष्यतीतीव** । **व्रतीन्द्रवृन्दैः** परमहंससमूहैः । **अर्चितम्** आदृतं **पादपीठं** पादुकं यस्य स तथोक्तः । अनेन स्त्रीहत्याजन्यदोषदूरत्वं [२]ध्वन्यते । **सः** कृष्णः । **तस्य** कंसस्य

---

१ **मुक्तिर्नित्या तमश्चैव** नावृत्तिः पुनरेतयोः । - इति म. भा. ता. निर्णये (१/८८)
अनादिकालतः प्राप्ताः कल्याद्यास्तत्र दानवाः ।
असङ्ख्याताः किलाश्नन्ति यातनास्तीव्रवेदनाः ।
**लयेऽपि मुक्तिवदिदं विष्वक् तिष्ठत्यनश्वरम् ।**
- इति श्रीवादिराजतीर्थश्रीचरणकृत - भूगोलनिर्णये (८२,८३)

२ एतां राघव दुर्वृत्तां यक्षीं परमदारुणाम् ।
गोब्राह्मणहितार्थाय जहि दुष्टपराक्रमाम् ॥
नह्येनां शापसंस्पृष्टां कश्चिदुत्सहते पुमान् ।
निहन्तुं त्रिषु लोकेषु त्वामृते रघुनन्दन ॥
न हि ते स्त्रीवधकृते घृणा कार्या नरोत्तम ।
चातुर्वर्ण्यहितार्थं हि कर्तव्यं राजसूनुना ॥
नृशंसमनृशंसं वा प्रजारक्षणकारणात् ।
पातकं वा सदोषं वा कर्तव्यं रक्षता सदा ॥
राज्यभारनियुक्तानामेष धर्मः सनातनः ।
अधर्म्यां जहि काकुत्स्थ धर्मो ह्यस्यां न विद्यते ॥
श्रूयते हि पुरा शक्रो विरोचनसुतां नृप ।
पृथिवीं हन्तुमिच्छन्तीं मन्थरामभ्यसूदयत् ॥
विष्णुना च पुरा राम भृगुपत्नी पतिव्रता ।
अनिन्द्रं लोकमिच्छन्ती काव्यमाता निषूदिता ॥
एतैश्चान्यैश्च बहुभी राजपुत्रैर्महात्मभिः ।
अधर्मसहिता नार्यो हताः पुरुषसत्तमैः ॥

**धात्रीम्** उपमातरम् । 'धात्री जनन्यामलकीवसुमत्युपमातृषु' इति भास्करः । पूतनाम् **अवधीत्** जघान । अनुत्पत्स्यतः स्तनदात्र्या धात्र्या किं प्रयोजनमिति भावेनेति भावः ॥ ३७ ॥

**व्रजस्थबालग्रहपीडिता सा विषप्रदानस्य फलं प्रपेदे ।**
**तथाहि कृत्या महति प्रयुक्ता स्वकीयमृत्युत्वमुपैति पृथ्व्याम् ॥३८॥**

**व्या : व्रजस्थेति** । सा बालग्रहरूपा पूतना । **व्रजस्थबालः** श्रीकृष्णः स एव गृह्णातीति **ग्रहः** तेन **पीडिता** बाधिता सती । विषप्रदानस्य फलं मरणलक्षणं प्रपेदे । ननु कृष्णाय विषदाने कृष्णस्य मरणं भवेत्, पूतनायाः कथं मरणमित्यत आह – **तथाहीति** । **तथाहि** पूतनायाः मरणम् उचितं हि । **पृथ्व्यां महति** महापुरुषे **प्रयुक्ता कृत्या** आभिचारिकक्रिया । **स्वकीयमृत्युत्वं** कृत्याप्रयोक्तुरेव काशीस्थसुदक्षिणप्रयुक्तकृत्यावत्[१] मारकत्वम् **उपैति** । परमात्मनि श्रीकृष्णे कुकर्मप्रयोक्त्र्याः मरणमुचितमिति भावः ॥ ३८ ॥

**अपि प्रदत्ते गरले शिशुं तमभीतमालोक्य भुजङ्गसङ्घान् ।**
**विभीषयन्ती समगादधः सा न चेद्विपर्यस्तमृतिः कथं स्यात् ॥३९॥**

**व्या : अपीति** । **गरले** विषे **प्रदत्तेऽपि** । **अभीतं** मरणभयरहितं **शिशुं** श्रीकृष्णम् । **आलोक्य** । **भुजङ्गसङ्घान्** विषधराणां समूहान् । **विभीषयन्ती** अतिक्रूरं विषं

---

तस्मादेनां घृणां त्यक्त्वा जहि मच्छासनान्नृप ।
- इति श्रीरामं प्रति विश्वामित्रवचनं ताटकावधप्रसङ्गे
(वाल्मीकिरामायणे १/२५/१४-२२)

१ वाराणसीं परिसमेत्य सुदक्षिणं तं सर्त्विग्जनं समदहत् स्वकृतोऽभिचारः ॥
- भागवते (१०/६६/२७-४२)

को नाम सत्सु विषमः प्रभवेत् सुखाय - इति म.भा.ता.निर्णये (१९/४५)
स्वात्मोत्तमेष्वथ सुरेषु विशेषतश्च स्वल्पोऽपि दोष उरुतामभियाति यस्मात् ॥
- म.भा.ता.नि.(१४/४७)

भवद्भिर्न दत्तमिति अधोभुवने स्थितान् सर्पान् तर्जयन्ती **सा पूतना** । **अधः** अधोलोकं **समगात्** । पूतना न मृता किन्तु भुजङ्गभीषणार्थं स्वयमेवाधोलोकं जगामेत्यर्थः । **न चेत्** एवं न चेत् । **विपर्यस्तमृतिः** एकस्य विषदाने अन्यस्य मरणम् । **कथं स्यात्** । अनेन पूतनाया अधोलोकगमनमेव न तूर्ध्वलोकगमनमिति ध्वन्यते ॥३९॥

**उत्तुङ्गहस्तचरणायतशैलशृङ्गां विस्तारिताननविनिर्गतदीर्घदंष्ट्राम् ।**
**शुष्यत्तटाकसदृशोदरघोररूपां तर्क्येऽतिकर्कशरवोज्ज्वलताटकां ताम् ४०**

**व्या :** उत्तुङ्गेति । **उत्तुङ्गौ** उन्नतौ **हस्तौ** बाहू **चरणौ** च **आयतानि** दीर्घाणि यानि **शैलशृङ्गाणि** पर्वतसानूनि तानीव यस्याः सा । 'शृङ्गं प्राधान्यसान्वोश्च' इत्यमरः । **विस्तारितात्** व्यात्तात् **आननात्** मुखात् **विनिर्गते दीर्घे दंष्ट्रे** यस्याः ताम् । **शुष्यत्** शुष्कीभवत् निर्जलमित्यर्थः । **तटाकं** सरः तत्सदृशमुदरं तेन **घोरं** [1]भयङ्करं **रूपं** यस्याः तां पूतनाम् । **अतिकर्कशे**नातिक्रूरेण **रवेण** ध्वनिनोज्ज्वलामुज्ज्वलन्तीं **ताटकां तर्क्ये** ऊहयामि । अनेन पूतनायाः ताटकात्वं ध्वन्यते ॥४०॥

**मुकुन्दविद्वेषविषानुषङ्गाद्वियोजिताङ्गी किल पूतनैका ।**
**पपात धन्या ललनाग्रगण्या[2] जगाम चान्याऽमरलोकलोकम् ॥४१॥**

---

१ पतमानोऽपि तद्देहस्त्रिगव्यूत्यन्तरद्रुमान् ।
चूर्णयामास राजेन्द्र महदासीत् तदद्भुतम् ॥
ईषामात्रोग्रदंष्ट्रास्यं गिरिकन्दरनासिकम् ।
गण्डशैलस्तनं रौद्रं प्रकीर्णारुणमूर्धजम् ॥
अन्धकूपगभीराक्षं पुलिनारोहभीषणम् ।
बद्धसेतुभुजोर्वङ्घि शून्यतोयह्रदोदरम् ॥
सन्तत्रसुः स्म तद्वीक्ष्य गोपा गोप्यः कळेबरम् ।
- इति भागवते (१०/७/१५-१८)

२ सा ताटका चोर्वशीसम्प्रविष्टा कृष्णावध्यानान्निरयं सञ्जगाम ।
सा चोर्वशी कृष्णभुक्तस्तनेन पूता स्वर्गं प्रययौ तत्क्षणेन ॥

**व्या :** जीवास्तु द्विविधाः[१] सन्तोऽसन्तश्च । तत्र सतामेव मोक्षो न त्वसतामिति स्थिते पुराणादिषु पूतनादीनां मोक्षोक्तिं घटयन्नत्र जीवद्वयसमावेशमुपपादयति – **मुकुन्देत्यादिपद्यैः** । **मुकुन्दस्य** मुक्तिदस्य श्रीकृष्णस्य । **विद्वेषविषस्य** विद्वेष एव **विषं** तस्य**अनुषङ्गः** सम्बन्धः । **तस्माद्वियोजिताङ्गी** विमुक्तशरीरा । श्रीकृष्णविद्वेषाख्यविषपानेन मृतेत्यर्थः । पूतनाशरीरे उभे तिष्ठतः । तत्रै**का** ताटकात्मका **पूतना** तमसि **पपात किल** । **अन्या च ललनाग्रगण्या** । अग्रे गणयितुं योग्या अग्रगण्या ललनासु नारीषु अग्रगण्या श्रेष्ठा उर्वशी । **अमराणां लोकः** समूहः तस्य **लोकं** भुवनं **जगाम** । अत एव **धन्या** । पूतनाया मोक्षोक्तिस्तद्गतोर्वशीमादायेति भावः ।।४१।।

'कंसपूतनिकाद्याश्च बान्धवादियुता यतः ।
जीवद्वयसमावेशाद्गतिद्वयजिगीषवः ।।'

इति स्मृतेरुक्त एवार्थः ।। ४१ ।।

**यदि प्रभुर्विद्विषतोऽपि शौरिः प्रसादकृत् तर्हि कुतः सुरारीन् ।**
**विजित्य भक्ताय तदीयभाग्यं प्रयच्छति स्वैरमिहावतीर्य ।।४२।।**

**व्या :** ''सर्वथा भक्तितो मुक्तिर्द्वेषात् तम उदीरितम् ।
नियमस्त्वनयोर्नित्यं मोहायान्यद्वचो भवेत् ।।''

इति स्मृतेः द्वेषान्न मोक्ष इत्येतदुपपादयन्नाह – **यदीति** । **प्रभुर्**मोक्षदाने समर्थः **शौरिः** श्रीकृष्णः । **विद्विषतोऽपि** द्वेषं कुर्वतोऽपि । **यदि प्रसादकृत्** अनुग्राहकः स्यात् । **तर्हि इह** भूमौ । **स्वैरं** स्वेच्छया । **अवतीर्य** अवतारं कृत्वा । **सुरारीन्** देवशत्रून् रावणादीन् **विजित्य** । **भक्ताय** जात्येकवचनम् ।

---

सा तुम्बुरोः सङ्गम आविवेश रक्षस्तनुं शापतो वित्तपस्य ।
कृष्णस्पर्शात् शुद्धभावा पुनर्दिवं ययौ तुष्टे किमलभ्यं रमेशे ।।
- इति म.भा.ता.नि. (१२/८८, ८९)

१ द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च ।। - इति गीता (१६/६)

भक्तेभ्यः विभीषणादिभ्यः । **तदीयभाग्यं** तेषामसुराणां सम्बन्ध्यैश्वर्यम् । **कुतः** कस्मात् [1]**प्रयच्छति** । असुरान्निगृह्य तेषां धनदाने तन्निष्ठद्वेषः निमित्तं अन्यकारणस्याभावादिति भावः ।। ४२ ।।

**द्विषां हरिर्यच्छति यर्हि मोक्षं न तर्हि कस्मादपवर्गमार्गः ।**
**अरिष्टवातासुरवत्सकेशिविनाशकाले विवृतः शुकेन ।। ४३ ।।**

**व्या : द्विषामिति** । किञ्च **हरिः** श्रीकृष्णः । **यर्हि** यदि । **द्विषां** द्वेषिणाम् । **मोक्षं यच्छति** । **तर्हि अरिष्टः वातासुरः** तृणावर्तः **वत्सो** वत्सासुरः **केशी** केश्याख्यदैत्यः तेषां **विनाशकाले** मरणसमये । **अपवर्गमार्गः** केश्यादीनां मोक्षगमनम् । **शुकेन** पूतनायाः मोक्षं वदता शुकाचार्येण । **कस्मात् न विवृतः** नोक्तः । केश्यादीनां मोक्षमनुक्त्वा पूतनाया एव मोक्षोक्तेर्ज्ञायतेऽत्र कश्चिद्विशेषोऽस्तीति । स च विशेषः पूतनायां शुभजीवसमावेशरूपः केश्यादिषु नेति । अन्यथा कृष्णेन नाशितानां सर्वेषामपि मोक्षे केश्यादिवधेऽपि तेषां मुक्तिर्वक्तव्या स्यात् । सर्वत्रानुक्त्वा पूतना कंसशिशुपालवधाख्यस्थानत्रय एव तेषां मुक्तिकथनोक्तेरिति हृदयम् ।। ४३ ।।

**पतन्त्यधोऽनादृतकृष्णपादा न चेद्यमस्यालयमेष्यसि त्वम् ।**
**स नैर्ऋतं धाम जगाम दैत्य इतीरिता दुर्गतिरेव तेषाम् ।।४४।।**

**व्या :** न केवलं द्वेषिणां मोक्षानुक्तिः प्रत्युत नरकगतिरेवोक्तेति तेषां नरकगतिवचनान्यर्थतः पठति – **पतन्तीति** । **अनादृतौ** तिरस्कृतौ श्री**कृष्ण**स्य **पादौ** यैस्ते **अनादृतकृष्णपादाः** । **अधः** तमसि **पतन्ति** । अनेन

'येऽन्येऽरविन्दाक्ष विमुक्तमानिनस्त्वय्यस्तभावादविशुद्धबुद्धयः ।
आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधोनादृतयुष्मदङ्घ्रयः ।।'[2]

---

१ यच्चिकेत सत्यमित् तन्न मोघं वसु स्पार्हमुत जेतोता दाता ।
- ऋग्वेदे (१०/५५/६)

२ भागवते (१०/३/३३)

इति वाक्यमुदाहृतम् । **न चेत् मार्गं न ददासि चेत् । यमस्यालयं** यमालयं यमलोकं **त्वं एष्यसि** । अनेन

'अम्बष्ठाम्बष्ठ मार्गं नौ देह्यपक्राम मा चिरम् ।
नो चेत् सकुञ्जरं त्वाऽद्य नयामि यमसादनम् ॥[१]'

इति वचनमुदाहृतम् । यदि श्रीकृष्णहतानां द्वेषिणां मोक्षः स्यात् तर्ह्यस्मिन् वचने यमसादनमित्यनुक्त्वा 'श्रीकृष्णो मम सादनम्' इति ब्रूयादिति भावः । श्रीकृष्णेन हतो **दैत्यो** वृषभः **नैर्ऋतं धाम** [२]कदापि सुखरहितं तमः । राक्षससदनमिति वा **जगाम** । अनेन 'जगाम कृच्छ्रं निर्ऋतेरथ क्षयं पुष्पैः किरन्तो हरिमीडिरे सुराः'[३] इति वचनमुदाहृतम् । इतीत्थमेषु वचनेषु **तेषां द्वेषिणां दुर्गतिरेवेरितोक्ता** । अतो न द्वेषान्मोक्ष इति भावः ॥ ४४ ॥

**विद्वेषमूलस्मरणेन तुष्टिरित्यप्यवद्यं न जहाति पक्षः ।**
**हिंसार्थमालिङ्ग्यतस्तरक्षोः किं चेष्टया तुष्यति कामधेनुः[४] ॥४५॥**

**व्या : विद्वेषमूलेति** । न ब्रूमो वयं द्वेषेण हरितुष्टिरिति किन्तु **द्वेषमूलस्मरणेन** । द्वेषो नाम भगवति दोषप्रतिसन्धानम् । तत्तु तत्स्मरणं विना न भवतीति द्वेषस्य स्मरणमूलत्वात् तन्मूलस्मरणेन हरितुष्टिरिति वदाम **इत्यपि पक्षः अवद्यं** दोषं न

---

१ भागवते (१०/४१/४)

२ तिर्यक्षु नरके चैव सुखलेशोऽपि विद्यते ।
**नान्धेतमसि मग्नानां सुखलेशोऽपि कश्चन ॥**
- इति ब्रह्मसूत्रभाषोद्धृत(३/१/२०)भविष्यत्पर्ववचनम् ।

३ भागवते (१०/३४/१५)

४ अङ्गालिङ्गनतत्परस्य चरणस्पर्शोद्यतस्याप्यलं
नम्रस्य स्वमुपेयुषोऽपि परितश्चाणूरनाम्नो वशे ।
कृष्णोऽभून्न च मुष्टिकस्य समरे सङ्कर्षणः सत्कृतिं
दुष्टैराचरितां किमत्र मतिमान् मृत्युप्रदां विश्वसेत् ॥
-(रु.वि. ११/४३) इत्युत्तरत्रास्य विवरणं व्यक्तम् ।

जहाति न त्यजति । अयमपि पक्षो दुष्ट इत्यर्थः । तथाहि । **कामधेनुः हिंसार्थं हन्तुं आलिङ्ग्यतः** संश्लिष्यतः **तरक्षोः** व्याघ्रस्य **चेष्टया**ऽङ्गस्पर्शादिव्यापारेण तुष्यति किं न तुष्यतीत्यर्थः ।। ४५ ।।

**न चेद्गवां विप्रशिखामणीनां हतिश्च पुण्याय भवेद्धि मूढाः ।**
**तदङ्गसंस्पर्शनदर्शनाद्यैस्तदीयनामग्रहणादिभिर्वा ।। ४६ ।।**

**व्या : न चेदिति** ।। अपि च हे **मूढाः** द्वेषमूलस्मरणेनापि पुण्यमिति वदन्तो मूर्खाः । **न चेत्** द्वेषमूलस्मरणेन हरितुष्टिरिति पक्षो दुष्टो न भवति चेत् । तर्हि **गवां** धेनूनाम् । **विप्रशिखामणीनां** ब्राह्मणोत्तमानाम् च । **हतिः** हत्या । **तेषां** गवादीनाम् **अङ्गा**नि शरीराणि तेषां **संस्पर्शनाद्यैस्तदीया**नां गवादिसम्बन्धिनां **नाम्नां ग्रहणादिभि**रुच्चारणादि**भिर्वा** । **पुण्याय** धर्माय **भवेद्धि** । दर्शन-स्पर्शनादिकं विना तेषां हननायोगाद्धननमूलस्पर्शनादिना पुण्यं स्यादिति भावः । यदि चोपरि क्रियमाणहननादिरूपद्वेषेण पुण्यसाधनमपि दर्शनादिकं द्वेषानुषङ्गाद्दोष एव । तर्हि प्रकृतेऽपि समम् ।। ४६ ।।

**दोषं दुरन्तं क्व च वर्णयद्भिर्द्वेषं हरेः क्वापि तमोनिदानम् ।**
**ईशाप्तिविघ्नं क्व च निर्णयद्भिरेतन्मतं विप्रतिषिद्धमार्यैः ।।४७।।**

**व्या : दोष**मिति । **हरेः** श्रीकृष्णस्य । **द्वेषं दुरन्तं** दुस्तरं **दोषं क्व च** कुत्रचित्

'यदनिन्दत् पिता मह्यं त्वद्भक्ते मयि चाघवान् ।
तस्मात् पिता मे पूयेत दुरन्ताद्दुस्तरादघात्'[1] ।।

इत्यत्र **वर्णयद्भिः** वदद्भिः **क्वापि** कुत्रचित् ।

'भगवन्निन्दया वेनो द्विजैस्तमसि पातितः' ।
'हिरण्यकशिपुश्चापि भगवन्निन्दया तमः'[2] ।

---

१ भागवते (७/१०/१७)

२ भागवते (४/१९/४६)

इत्यादौ **हरेर्द्वेषं तमोनिदानं** तमःप्राप्तिकारणम् । 'निदानं त्वादिकारणम्' इत्यमरः । वदद्भिः **क्व च** कुत्रचित् ।

''तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ।
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्''[१]

इत्यादौ ईशस्य हरेः **आप्तिः** तस्याः **विघ्नं** ईशावाप्तिलक्षणमोक्षप्रतिबन्धकमिति । **निर्णयद्भिः** निश्चयं कुर्वद्भिः **आर्यैः** पूर्वाचार्यैः शुकादिभिः । **एतन्मतं** द्वेषान्मोक्ष इति मतम् । **विप्रतिषिद्धं** निराकृतम् । अतोऽपि न द्वेषान्मोक्ष इति भावः ॥४७॥

**अद्वैतिनस्तार्किकमानिनो वा राद्धान्तमध्ये परवादिनां वा ।**
**ज्ञानं विना यन्न हि बन्धमोक्षस्तेनेदमात्मीयवचोविरुद्धम् ॥४८॥**

**व्या :** अद्वैतिन इति । **यत्** यस्मात् कारणात् । **अद्वैतिनः** ऐक्यवादिनः । **तार्किक** इति **मानिनो वा** तार्किकस्येत्यर्थः । तस्य **वा अपरेषां** अन्येषां **वादिनां राद्धान्तः** सिद्धान्तः **तन्मध्ये** । कस्यापि वादिनः सिद्धान्त इत्यर्थः । **ज्ञानं विना बन्धमोक्षः न हि** इति सिद्धान्तितो हि । तैर्ब्रह्मज्ञानपदार्थादिज्ञानेनैव मोक्ष इत्युक्तत्वादिति भावः । **तेन** कारणेन । **इदं** ज्ञानं विना द्वेषान्मोक्षकथनम् । **आत्मीयवचोविरुद्धम्** । एवं वदतः स्ववचनविरोधः स्यादिति भावः ॥ ४८ ॥

**ज्ञानान्यमार्गप्रतिषेधकर्त्र्या श्रुत्या[२] च निर्णायकसूत्रकर्त्रा[३] ।**
**किमेष मार्गः सुलभो न दृष्टः किं वा तपस्याव्रतकर्शिताङ्गैः ॥४९॥**

---

१ गीता (१६/१९,२०)

२ तमेवं विद्वान् अमृत इह भवति नान्यः पन्था अयनाय विद्यते । -इति श्रुतिः ।

३ विद्यैव तु निर्धारणात् -इति ब्रह्मसूत्रम् । (३/३/४८)

**व्या : ज्ञानेति । ज्ञानादन्यस्य मार्गस्य** मोक्षसाधनस्य । **प्रतिषेधकर्त्र्या** 'नान्यः पन्था अयनाय विद्यते'[१] इति **श्रुत्या । निर्णायकब्रह्मसूत्रकर्त्रा च** 'अथातो ब्रह्मजिज्ञासा'[२], यतो ज्ञानं विना न मोक्षः अतो ब्रह्मजिज्ञासा कर्तव्या इति ब्रह्मसूत्रकर्त्रा व्यासेन च । **एषः सुलभः** देहायासाजनकः **मार्गः** द्वेषमार्गः **न दृष्टः किं? तपस्यया** ध्यानेन **व्रतैः** कृच्छ्रसान्तपनादिव्रतैः । **कर्शितानि अङ्गानि यैस्तैर्ऋषिभिर्वा किं न दृष्टः** । उपायस्योपायान्तराविरोधित्वादुपायद्वयमध्ये एकस्योपायस्य कथने को दोष इत्यत उक्तम् – **सुलभ** इति । द्वेषस्यापि मोक्षोपायत्वे सुलभत्वाद्द्वेषमार्ग एव श्रुत्या ब्रह्मसूत्रकर्त्रा च कथनीयः स्यात् । ऋषिभिरपि स एवानुष्ठेयः स्यात् । न चैवम् । अतो न द्वेषान्मोक्ष इति भावः ॥४९॥

**अवैष्णवानां यतनैर्न मोक्षः[३] पतन्त्यधस्तामसवृत्तयस्ते ।**
**एतत्समानार्थकभारतोक्तिव्रातामतं तन्न मतं शुकस्य ॥५०॥**

**व्या : अवैष्णवानामिति । अवैष्णवानां** विष्णुभक्तिरहितानाम् । **यतनैरपि** यत्नैरपि मोक्षो **न** भवति । ये **तामसवृत्तयः** तामसव्यापाराः असुराः । **ते अधः पतन्ति । एतत्समानार्थकाः** उक्तसमानार्थकाः **भारतोक्तयः** -

'वैकुण्ठं नाम लोकं वै दिव्यं नित्यं सनातनम् ।
अवैष्णवानामप्राप्यं महायत्नवतामपि ॥'
'ऊर्ध्वं गच्छन्ति सत्वस्थाः मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः॥'[४]

---

१ तैत्तिरीयारण्यके (३/१/३)

२ ब्रह्मसूत्रम् (१/१/१)

३ भवेद्धि मोक्षो नियतं सुराणां नैवासुराणां च कथञ्चन स्यात् ।
उत्साहयुक्तस्य च तत्प्रतीपं भवेद्धि राहोरिव दुःखरूपम् ॥
- म.भा.ता.नि. (१०/३५)

४ गीता १४/१८

इत्यादि **भारतोक्तयस्तासां व्रातः** वृन्दं तस्य **अमतं** अनभिप्रेतं **तत्** श्रीहरिद्वेषिणां मोक्षकथनं **शुकस्य** मतं अभिमतं सिद्धान्तो **न** भवति । न हि भारतविरुद्धं शुको वक्तीति भावः ॥ ५० ॥

**निन्दां मुकुन्दस्य सकृन्निशम्य मन्दः पतेत् किं पुनरच्युतं तम् ।**
**निन्दन्निति ह्यालपतः शुकस्य किं द्वेषतो मुक्तिरिति स्म हृद्यम् ।५१।**

**व्या : निन्दामिति । मुकुन्दस्य** मोक्षदातुः परमात्मनः । **निन्दां** परकृतां दोषोक्तिम् । **सकृत्** एकवारम् । **निशम्य** श्रुत्वा । **मन्दः** मूढः । **पतेत्** अधोगच्छेत्। **पुनस्तमच्युतं** ज्ञानानन्दादिगुणेभ्यः च्युतिरहितं श्रीकृष्णं **निन्दन्** पुरुषः पतेदिति किं वक्तव्यम् ।

'निन्दां भगवतः शृण्वन् तत्परस्य जनस्य वा ।
ततो नापैति यः सोऽपि यात्यधः सुकृताच्च्युतः ॥'[१] इति ।

**इति** इत्थम् । **आलपतः** वदतः **शुकस्य** शुकाचार्यस्य । **द्वेषतो मुक्तिरिति** कथं **हृद्यं** अभिप्रायिकं **स्म** आकूतितं **किं स्म** तथासति स्ववचनव्याहतिः स्यात् । नहि स्ववचनव्याहतं शुको वदतीति भावः ॥ ५१ ॥

**आपोऽब्रुवन्निति सनातनवेदवाक्यात्**
**किं वक्तृता जडजलस्य तथा शुकोक्तौ ।**
**कंसादिमोक्षवचनान्यपि युक्तियुक्त-**
**मानान्तरोदितमनोमधुरार्थभाञ्जि ॥ ५२ ॥**

**व्या :** ननु 'यातुधान्यपि सा स्वर्गमवाप जननीगतिम्'[२] इति स्वर्गगत्युक्तेः का गतिरित्यत आह – **आपोऽब्रुवन्निति** । **सनातनं** अपौरुषयं **वेदवाक्यम्** । तस्मात् । **जडजलस्य** जडेत्यवक्तृत्वद्योतनार्थम् । **वक्तृता किं** वक्तृत्वमुपपद्यते

---

१ भागवते १०/७४/४०

२ भागवते १०/७/३९

किम् । अपां जडत्वाद्वक्तृत्वस्य प्रमाणविरुद्धत्वेनापोऽब्रुवन्निति वाक्यस्य तदभिमानिदेवतापरत्वं यदि तर्हि **तथा शुकोक्तावपि** शुकाचार्यवाक्येऽपि **कंसादिमोक्षवचनानि** कंसपूतनादीनां मोक्षवचांसि उक्तयः वक्ष्यमाणाः ताभिर्युक्ताः **मानान्तरोदिताः** प्रमाणान्तरोक्ताः **मनोमधुराः** मनोज्ञाः येऽर्थाः कंसादिशरीरस्थितशुभजीवपरत्वरूपास्तान् भजन्तीति **युक्तियुक्तमानान्तरोदितमनोमधुरार्थभाञ्जि** । [1]यथा आपोऽब्रुवन्निति वाक्यस्य प्रत्यक्षादिप्रमाणविरोधेन प्रतीतार्थं परित्यज्य तदविरुद्धं अबाद्यभिमानिदेवतापरत्वमुच्यते । तथा कंसादिद्वेषिणां मोक्षवचनस्य उक्तबहुप्रमाणविरोधेन प्रतीतार्थं परित्यज्य । पूतना कंसनरकशिशुपालादिषु द्विधा जीवाः सन्तस्त्वसन्तश्च तत्र बन्ध्वादिरूपिणः । विष्णोः सन्त इति ज्ञेयाः असन्तः शत्रुरूपिणः ।

'शुभजीवप्रकाशेन कदाचिच्छुभबुद्धयः ।
विपर्यये चान्यथा स्युः शुभास्तत्र हरिं ययुः ।
अशुभास्तु तमो घोरं यदि तत्रैव मध्यमाः ।
मध्यमां गतिमेवापुः एकदेहगता अपि ॥'[2]

इति गरुडपुराणोक्तवचनानुसारेण कंसादिशरीरस्थशुभजीवपरत्वमङ्गीकृत्य सन्तोष्टव्यमित्यर्थः ॥ ५२ ॥

**यथा ग्रहाविष्टकलेवरे द्वौ कृताभिमानाविह चेतनौ स्तः ।**
**तथैव कंसादिशरीरसंस्थौ शुभाशुभौ द्वौ सुखदुःखभाजौ ॥५३॥**

---

१ यातुधान्यपि सा स्वर्गमवाप जननीगतिम् । - इति भागवते (१०/७/३९)
अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् । -ब्रह्मसूत्रम् (२/१६)
'पृथिव्याद्यभिमानिन्यो देवताः प्रथितौजसः ।
अचिन्त्याः शक्तयस्तासां दृश्यन्ते मुनिभिश्च ताः ।
ताश्च सर्वगता नित्यं वासुदेवैकसंश्रयाः' इति ॥ - ब्रह्मसूत्रभाष्ये (२/१६)

२ भागवततात्पर्योद्धृतगरुडपुराणवचनम् (१०/५/१८)

**व्या :** कंसादीनामेकस्मिन् शरीरे उक्तप्रमाणसिद्धजीवद्वयाभिमानेऽसम्भव-शङ्कां निवारयन्नाह – **यथेति**। इह **ग्रहाविष्टकलेवरे** ग्रहग्रस्तशरीरे। **कृताभिमानौ द्वौ चेतनौ स्तः** तिष्ठतः। **तथैव कंसादिशरीरसंस्थौ शुभाशुभौ** सदसन्तौ **सुखदुःखभाजौ** सुखदुःखभोक्तारौ। तत्र शुभजीवः सुखभोक्ता अशुभजीवस्तु दुःखभोक्तेति विवेकः। **द्वौ** तिष्ठतः। अतः एकस्मिन् शरीरे जीवद्वयाभिमानो नासम्भावित इति भावः ॥ ५३ ॥

**द्विषन्तमेकं दितिजं विहाय हरिप्रियस्यासुरता कथं स्यात्।**
**क्वचिद्द्विषन्तोऽपि किमर्जुनेन्द्रपुरोगमा दैत्यतया निरुक्ताः ॥५४॥**

**व्या :** शिशुपालादिष्वसुरशब्दप्रयोगबलादपि जीवद्वयमङ्गीकर्तव्यमित्याह – **द्विषन्तमिति**। शिशुपाले **द्विषन्तं** द्वेषं कुर्वन्तम्। **एकं** दितिजमसुरम्। **विहाय**। **हरिप्रियस्य** हरिभक्तस्य। **असुरता** असुरशब्दवाच्यता। **कथं स्यात्**। शिशुपालेऽयमसुर इति असुरशब्दः प्रयुज्यते। स किंनिबन्धन इति विचारणीयम्। किं स्वभावतोऽसुरत्वाद्वा असुरयोनावुत्पन्नत्वाद्वा असुरवत् विद्वेषकरणाद्वा। नाद्यः। तस्य जयरूपस्य शिशुपालस्य हरिप्रियत्वात्। न द्वितीयः। शिशुपालस्य क्षत्रिययोनावुत्पन्नत्वात्। तृतीयेऽपि निरन्तरं द्वेषकारणाद्वा कदाचिद्द्वेषकारणाद्वा। नाद्यः। शिशुपाले कदाचिद्धरिभक्तिश्रवणात्। न द्वितीय इत्याह – **क्वचिदिति**। **क्वचित्** कदाचित्। **द्विषन्तोऽपि अर्जुनेन्द्र-पुरोगमाः** पार्थपुरुहूतप्रमुखाः **दैत्यतया**ऽसुरत्वेन **निरुक्ताः किम्**। नहि कदाचिद्द्वेषं कुर्वत्सु पार्थादिषु दैत्यशब्दः प्रयुज्यत [१]इत्यर्थः। तथाच तत्रासुरशब्दप्रयोगार्थं

---

१ ईशस्यापूर्णताज्ञानं विष्णोरन्यस्य चेशता।
भेदस्तस्यावतारेषु जीवस्येशत्वमेव च ॥
तथा जीवत्वमीशस्य जडाभेदस्तयोरपि।
भेदमोह इति प्रोक्तः स सदा न हरौ क्वचित् ॥
अन्येषां तत्प्रसादेन शनैर्याति सतामपि' इति स्कान्दे ॥
- भागवततात्पर्ये(३/१०/१४)

तन्निष्ठजयस्य हरिप्रियत्वेनासुरत्वायोगात् तच्छब्दवाच्यः कश्चनासुरः शिशुपाले स्वीकर्तव्य इति ॥ ५४ ॥

**न चोग्रशापादसुरत्वमेषां विहाय दुष्टं कमपि स्वनिष्ठम् ।**
**यतोऽभिशप्तेऽपि नृपे तदेतदभूत् पुरा किङ्करदैत्ययोगात् ॥५५॥**

**व्या :** शिशुपालादीनामसुरत्वे सनकादिशाप एव निमित्तमस्त्वित्याशङ्कायामाह – **न चेति** । **एषां** शिशुपालादीनाम् **असुरत्वं स्वनिष्ठं** शिशुपालादिष्वाविष्टं **कमपि दुष्टम्** असुरं **विहाय** । **उग्रशापात्** सनकाद्युग्रशापादपि **न** भवति । **यतः** कारणात् **पुरा** पूर्वम् । **अभिशप्तेऽपि** शक्त्याख्यऋषिणा 'रक्षो भव' इति शप्तेऽपि । **नृपे** कल्माषपादाख्ये राज्ञि । **तदेतत्** असुरत्वम् । **किङ्करदैत्ययोगात्** किङ्कराख्यराक्षसप्रवेशात् । **अभूत्** ।

'स शापात् तस्य विप्रर्षेर्विश्वामित्रस्य चाज्ञया ।
विवेश किङ्करो नाम नृपतिं राक्षसस्तदा ॥' [१]

इति भारतवचनादयमर्थः प्रसिद्धः । अतः सनकादिशापोऽपि शिशुपालादीनामसुरावेश एव निमित्तम् । न तु सज्जीवस्यासुरत्वापादन इति भावः ॥५५॥

**तवैव चैद्ये जयनामकः सन् तथा परस्मिन् विजयाभिधानः ।**
**निरन्तरद्वेषफलस्य मूलं बलेन रक्षोऽपि च तर्हि सिद्ध्येत् ॥५६॥**

---

अनादिद्वेषिणो दैत्या विष्णौ द्वेषो विवर्धितः ।
तमस्यन्धे पातयति दैत्यानन्ते विनिश्चयात् ॥
पूर्णदुःखात्मको द्वेषः सोऽनन्तो ह्यवतिष्ठते ।
पतितानां तमस्यन्धे निश्शेषसुखवर्जिते ॥ - म.भा.ता.नि.(१/१०८,१०९)
जीवाभेदो निर्गुणत्वमपूर्णगुणता तथा ।
साम्याधिक्ये तदन्येषां भेदस्तद्गत एव च ॥
प्रादुर्भावविपर्यासस्तद्भक्तद्वेष एव च ।
तत्प्रमाणस्य निन्दा च द्वेषा एतेऽखिला मताः ॥- म.भा.ता.नि. (१/११०, १११)

१ महाभारते । (१/७५/२)

**व्या :** इतोऽपि जीवद्वयमङ्गीकर्तव्यमित्याह – **तवैवेति** । **तवैव** तवापि मते। **चैद्ये** शिशुपाले । **सन्** सज्जनः **जयनामकः** । **तथा परस्मिन्** दन्तवक्रे । **विजयाभिधानः** विजय इत्यभिधानं यस्य सः तिष्ठति । शिशुपालदन्तवक्रयोः शरीरे जयविजयौ तिष्ठत इति तवाप्यभिमतमित्यर्थः । **तर्हि निरन्तरद्वेषफलस्य** सन्ततद्वेषलक्षणकार्यस्य । **मूलं** कारणम् । **रक्षोऽपि** राक्षसोऽपि **बलेन** कार्यान्यथानुपपत्या **सिद्ध्येत्** । नहि कारणं विना कार्यमुत्पद्यत इति[1] भावः । त्वदीयाङ्गीकारबलेन **च** **सिद्ध्येत्** । त्वद्वचनानुसारेण शुभकार्यान्यथानुपपत्या शुभोऽशुभश्चेति जीवद्वयं सिद्ध्यतीति भावः ॥ ५६ ॥

**यदीह चैद्ये दितिजो न वैरान्न तर्हि मोक्षः परिचर्ययैव ।**
**यदा तु सेवाविधुरोऽपरोऽस्ति तदा बलात् सिद्ध्यति जीवयुग्मम् ।५७।**

**व्या :** इत्थं युक्त्यन्तरमप्याह – **यदीति** । **इह** चैद्ये । **यदि दितिजो न** चेत् । **तर्हि** **वैरात्** द्वेषात् । **न मोक्षः** । किन्तु **परिचर्ययैव** सेवयैव । स्वल्पकालीनवैरमनादृत्य स्वद्वारस्थिताय बहुजन्मकृतशिश्रूषया प्रसन्नः परमात्मा मोक्षं दिशतीति वक्तुमुचितत्वादिति भावः । **यदा तु** यदि तु । **सेवाविधुरः** सेवारहितः केवलवैरकृत् **अपरः** जयादन्यः जीवोऽस्ति चेत् । **तदा बलात्** उक्तन्यायेन । **जीवयुग्मं सिद्ध्यति** ॥ ५७ ॥

**विद्वेषिजीवकृतसङ्गमपि स्वभक्तं**
**कृष्णो व्यमोचयदहो करुणाम्बुराशिः**
**किन्नाम तद्रहितभक्तजनानिति स्म**
**कैमुत्यमूहयत सत्यवतीसुतोक्त्या ॥ ५८ ॥**

**व्या :** ननु यदि शुभजीवस्यैव मोक्षस्तर्हि –

---

१ न हि कार्यमकारणम् - म.भा.ता.नि. (३२/७१)

'यातुधान्यपि सा स्वर्गमवाप जननीगतिम् ।
कृष्णभुक्तस्तनक्षीराः किमु गावो नु मातरः ॥[1]'

इत्युक्तकैमुत्यमिह कथं घटत इत्यत आह – विद्वेषीति । **करुणाम्बुराशिः** कृपासमुद्रः श्री**कृष्णः** । **विद्वेषिजीवेन कृतः सङ्गः** सम्बन्धो येन तम् । **विद्वेषिजीवकृतसङ्गमपि स्वभक्तं व्यमोचयत्** । संसारबन्धादिति शेषः । दुष्टसंसर्गजन्यपापं परिहृत्य भक्तं मोचयति किल । **तद्रहिताः** दुष्टसंसर्गरहिताः ये **भक्तजनास्तान्** मोचयतीति **किन्नाम** किमु वक्तव्यम् । **अहो** भक्तजनेषु अस्य श्रीकृष्णस्य करुणा आश्चर्यमित्यनेन प्रकारेणोक्त**कैमुत्यमूहयत**[2]तर्कयत । उक्तकैमुत्यस्य एवमेवार्थः स्वीक्रियतामित्यर्थः । इत्थं कैमुत्यकल्पनं न स्वकपोलकल्पितं किन्तु स्पष्टं वेदव्यासवचनमस्तीत्याह – **सत्यवतीसुतोक्त्येति** ।

'द्वेषिजीवयुतं चापि कृष्णश्चैद्यं व्यमोचयत् ।
अहोऽतिकरुणा विष्णोः शिशुपालस्य मोक्षणात् ॥[3]'

इति **सत्यवतीसुतोक्त्या** श्रीवेदव्यासवचनानुसारेणोक्तकैमुत्यवचनस्योक्त एवार्थः । तस्मादियं जीवद्वयाङ्गीकारेण कैमुत्योपपत्तिरिति भावः ॥ ५८ ॥

**द्वेषाभिवृद्धिं द्विषतां विधातुं व्यासश्च न स्पष्टमिदं प्रमेयम् ।**
**ऊचे न चेद्भक्तजनैरगम्यं पापैरसाध्यं तम आप्नुयात् कः[4] ॥५९॥**

---

१ पूतना लोकबालघ्नी राक्षसी रुधिराशना ।
जिघांसयाऽपि हरये स्तनं दत्वाऽऽप सद्गतिम् ॥
किं पुनः श्रद्धया भक्त्या कृष्णाय परमात्मने ।
यच्छन् प्रियतमं किञ्चिद्रक्तस्तन्मातरो यथा ॥
यातुधान्यपि सा स्वर्गमवाप जननीगतिम् ।
कृष्णभुक्तस्तनक्षीराः किमु गावो नु मातरः ॥ - इति भागवते (१०/७/३६-३९)

२ नूनं हि दृष्टनिष्ठोऽयं नादृष्टपरमो जनः ।
अदृष्टमात्मनस्तत्त्वं यो वेद न स मुह्यति ॥ - भागवते (१०/६/३०)

३ भागवततात्पर्योद्धृत (१०/२४/२५) प्रमाणवचनम् ।

४ इत्याद्येते कार्यमालोच्य काले चक्रुर्वक्राश्चक्रिभक्तप्रतीपम् ।

**व्या :** नन्वयमर्थो व्यासेन स्पष्टं किमिति नोक्त इत्यत आह – **द्वेषाभिवृद्धिमिति** । **द्विषतां** द्वेषं कुर्वतां सम्मुग्धाकारेण द्वेषिणो मोक्षकथने अस्माभिर्द्वेषे क्रियमाणे मोक्षो भविष्यतीति बुद्ध्या पुनःपुनर्द्वेषकरणेन **द्वेषाभिवृद्धिं** विधातुं कर्तुम् । **व्यासः** श्रीवेदव्यासः । इदम् उक्तं **प्रमेयं स्पष्टं** यथा तथा **नोचे** न जगाद । न **चेत्** द्वेषाभिवृद्ध्यर्थम् अस्पष्टकथनं न कृतश्चेत् । द्वेषेण तमः स्नेहेन मुक्तिरिति स्पष्टमुक्तं चेत् द्वेषं कोऽपि न कुर्यात् । तथा सति **भक्तजनैरगम्यं** अप्राप्यं **पापैः** द्वेषातिरिक्तदुष्कृतैः **असाध्यं तमः** नित्यनरकं **कः आप्नुयात्** को वा गच्छेत् । न कोऽपीत्यर्थः । सन्ति खलु तेऽपि जीवाः ये तमोयोग्यास्तेषां द्वेषलक्षणसाधनानुष्ठानेन तमःप्राप्त्यर्थं श्रीवेदव्यासः स्पष्टं न जगादेति भावः ॥ ५९ ॥

**आनन्दतीर्थमतमुज्झितदोषजातं**
**[1]स्वानन्ददायि शिथिलीकृतमत्तमायि[2] ।**
**मानौघशोभि मम दुर्जनपुञ्जतोऽभी-**
**र्येनेदृशी मतिरभूत् कवितोल्लसद्भूः ॥ ६० ॥**

**व्या :** पूतनादिषु जीवद्वयसमावेशोपपादनसामर्थ्यं श्रीमदाचार्यमतप्रवेशेन जातमित्यतः उद्रिक्तभक्तिस्तन्मतं स्तौति – **आनन्देति** । **स्वानन्ददायि** स्वरूपानन्दप्रदं मोक्षप्रदमित्यर्थः । **शिथिलीकृताः** निर्दलीकृताः **मत्ताः** उन्मत्ताः पूर्वोत्तरानभिज्ञाः **मायिनो** मायावादिनो येन तत्तथोक्तम् । **मानौघशोभि**

---

योग्या मङ्क्षु तेऽन्यथा स्युः कथं वा दुःखोग्राम्भस्यन्धतामिस्रसिन्धौ ॥
- इति मध्वविजये (१२/२५)

१ आनन्दरूपस्य परस्य पात्रधीरानन्दसन्दायि सुशास्त्रकृत् स यत् ।
आनन्दतीर्थेति पदं गुरूदितं बभूव तस्यात्यनुरूपरूपकम् ॥ - मध्वविजये (५/२)

२ आनन्दतीर्थमतमुज्झितदोषजातं स्वानन्ददायि शिथिलीकृतमत्तमायि ।
सन्मानसंभृतमतिप्रियमच्युतस्य सन्मानसं सततमुज्ज्वलयच्चकास्ति ॥
- इति वैश्वनाथिनारायणाचार्यविरचित-अद्वैतकालानले (५/५८)

प्रमाणजालशालि **आनन्दतीर्थमतम्** **उज्झितं** **दोषाणां** **जातं** वृन्दं येन तदुज्झितदोषजातम् । **येन** मतेन **मम** **दुर्जनपुञ्जतः** दुर्जनसमूहात् । **अभीः** भयरहिता **कवितायाः** कवित्वस्य **उल्लसन्ती** **भूः** स्थानं यस्यां सा ईदृशी एतादृशी **मतिः** बुद्धिः **अभूत्** ॥ ६० ॥

**ततः शुभौत्थानिककर्म कर्तुमियेष नन्दः पुरुषोत्तमस्य ।**
**गृहाद्बहिर्दैत्यचमूं जिघांसुरमंस्त तत् स्वाचरणानुरूपम् ॥६१॥**

**व्या : तत** इति । **ततः** पूतनाहननानन्तरम् । **नन्दः पुरुषोत्तमस्य** सर्वोत्तमस्य श्रीकृष्णस्य । **शुभौत्थानिककर्म** [१]शोभनौत्थानिकं कर्म । औत्थानिकं नाम द्वादशेऽहनि अर्धमासे वा तृतीये वा शिशोरादित्यदर्शनार्थं गृहाद्बहिर्निष्क्रमणम् । तदुक्तम् –

'द्वादशेऽहनि कर्तव्यं शिशोर्निष्क्रमणं गृहात् ।
तृतीये ह्यर्धमासे वा दर्शनार्थं रवेरपि ॥' इति ।

औत्थानिकं कर्म **कर्तुं** **इयेष** ऐच्छत् । **गृहाद्बहिर्दैत्यचमूं** राक्षससेनां **जिघांसुः** हन्तुमिच्छुः श्रीकृष्णः **तत्** निष्क्रमणरूपं कर्म **स्वाचरणानुरूपं** स्वव्यापारानुकूलम् **अमंस्त** अबुद्ध्यत् । एका पूतना गृहाभ्यन्तरे वध्या अन्ये बहिर्वध्याः तेषां वधस्तु बहिः कर्तव्यः तदर्थं हि बहिर्जिगमिषोः स्वस्यानुकूलं मेने इत्यर्थः ॥ ६१ ॥

**निजं समाहूय स बन्धुवर्गं पिता सुतं श्रीपतिमभ्यषिञ्चत् ।**
**तदाप्रभृत्युद्धतदैत्यवर्गविघातदीक्षामिव तस्य बध्नन् ॥ ६२ ॥**

---

१ कदाचिदौत्थानिककौतुकाप्लवे जन्मर्क्षयोगे समवेतयोषितम् ।
- वादित्रगीतद्विजमन्त्रवाचकैश्चकार सूनोरभिषेचनं सती ॥ - भागवते(१०/८/६)

**व्या :** निजमिति । स पिता नन्दः । **निजं** स्वकीयं **बन्धुवर्गं** बान्धवसमूहम् । **समाहूय श्रीपतिं** लक्ष्मीपतिं श्रीकृष्णम् । **अभ्यषिञ्चत्** स्नापयामास । कथमिव। **तदाप्रभृति** तदारभ्य **उद्धतानामु**न्मत्तानां **दैत्यानां वर्गस्य** समूहस्य **विघाते** हननरूपे कर्मणि **दीक्षां** तस्य श्रीकृष्णस्य **बध्नन्निव** ।। ६२ ।।

**यदा सुहृत्सञ्चयमर्चयन्ती सुतं न सस्मार मुदा यशोदा ।**
**तदैव मायी [1]शकटासुरस्तं निहन्तुकामोऽभिससार शूरः ।।६३।।**

**व्या :** यदेति । **यशोदा** नन्दपत्नी । **यदा** यस्मिन् काले । **सुहृत्सञ्चयं** निष्क्रमणोत्सवे समागतं बन्धुवर्गं **अर्चयन्ती** गन्धमाल्यादिना पूजयन्ती सती । **सुतं** श्रीकृष्णम् । **मुदा** सन्तोषेण **न सस्मार** न स्मृतवती । तदा तस्मिन् काले **एव मायी** कपटी **तं** श्रीकृष्णं **निहन्तुकामः** । अत एव **शूरः** पराक्रमी **शकटासुरः** शकटाकारो दैत्यः । **अभिससार** आजगाम ।। ६३ ।।

**मरिष्यमाणः सकलं स्वभाग्यमनेन कंसः सह नेष्यतीति ।**
**भियेव पूर्वं शकटं [2]मुरारिर्बभञ्ज पादेन सुकोमलेन ।। ६४ ।।**

**व्या : मरिष्यमाण** इति । उत्तरत्र **मरिष्यमाणः कंसः सकलं** समस्तं **स्वभाग्यं** स्वकीयं धनादिसम्पदं **अनेन** शकटेन । तस्य शकटाकारत्वादिति भावः ।

---

१ यदाऽऽप कृष्णश्चतुरः स मासांस्तदोपनिष्क्रामणमस्य चासीत् ।
जन्मर्क्षमस्मिन् दिन एव चासीत् प्रातः किञ्चित् तत्र महोत्सवोऽभूत् ।।
तदा शयानः शकटस्य सोऽधः पदाऽक्षिपत् तं दितिजं निहन्तुम् ।
अनः समाविश्य दितेः सुतोऽसौ स्थितः प्रतीपाय हरेः सुपापः ।।
क्षिप्तोऽनसिस्थः शकटाक्षनामा स विष्णुनेत्वासहितः पपात ।
ममार चाशु प्रतिभग्नगात्रो व्यत्यस्तचक्राक्षमभूदनश्च ।।
- म.भा.ता.नि(१२/८९-९१)

२ 'एष्यच्च निश्चितं यत्तदतीतत्वेन भण्यते ।
चक्रवत् परिवृत्तेर्वा दुष्टानां मोहनाय वा ।।' इति नारदीये ।।
- भा.ता. (३/३/२५-२८)

साधनेन सह स्वेन सह नेष्यति । अन्यत्र गन्तारो लोकाः स्वकीयं वस्तुजातं शकटे निक्षिप्य नयन्तीति भावः । इति भियेव । मुरारिः मुरस्यारिः श्रीकृष्णः । पूर्वं प्रथमम् । सुकोमलेन पादेन शकटं शकटासुरं बभञ्ज अहनत् ।। ६४ ।।

**ततः स मायामपहाय दैत्यः स्वरूपधारी पुनराविरासीत् ।**
**तथाहि विष्णोः पदयोगकाले कथं नु सा जीवितुमुत्सहेत ।।६५।।**

**व्या :** तत इति । ततः श्रीकृष्णपादाभिघातानन्तरम् । स दैत्यः शकटासुरः । मायां कपटम् । अपहाय त्यक्त्वा । पुनः स्वरूपधारी सन् । आविरासीत् आविर्बभूव । तथाहि । श्रीकृष्णपादाभिघातानन्तरं मायामपहाय स्वरूपधारित्वं तस्योचितं हि । विष्णोः सकलमायानिवर्तकस्य श्रीकृष्णस्य । पदयोगकाले पदसम्बन्धसमये । सा माया । जीवितुं कथम् उत्सहेत उत्साहं कुर्यात् ।।६५।।

**स कृष्णपादाभिहताखिलाङ्गो बभूव दैत्यः किल निर्गतासुः ।**
**अहं तु मन्ये स्वकजात्ययोग्यरथाङ्गधारी स ममार धीरः ।।६६।।**

**व्या :** स इति । श्रीकृष्णपादेनाभिहतानि चूर्णीकृतानि अखिलानि समस्तानि अङ्गान्यवयवा यस्य सः दैत्यः । निर्गताः असवः प्राणाः यस्य सः । बभूव मृत इत्यर्थः । अत्राहं तु इत्थं मन्ये । धीरः शकटासुरः श्रीकृष्णपादाभिघातेन न ममार किन्तु स्वकजात्ययोग्यरथाङ्गधारी सन् असुरजात्ययोग्यचक्रायुधधारी सन् ममार[१] । अयोग्यकर्मकरणान्मृत इति मन्य इति भावः । रथाङ्गशब्दस्य श्लिष्टत्वात्तन्मूलकोत्प्रेक्षालङ्कारः ।। ६६ ।।

**ध्रुवं पुनर्विष्णुपदस्य सङ्गभयात् सकृद्विष्णुपदाहतोऽसौ ।**
**अधःपपातासुरमण्डलीयं विनाशकाले हि विरुद्धबुद्धिः ।।६७।।**

---

१ अनः शयानस्य शिशोरथाल्पकप्रवालमृद्वङ्घ्रिहतं व्यवर्तत ।
विध्वस्तनानारसकुप्यभाजनं व्यत्यस्तचक्राक्षविभिन्नकूबरम् ।। - भा. (१०/८/९)
पदतलविदलितगुरुतरशकटः । - इति कन्दुकस्तुतौ ।

**व्या :** ध्रुवमिति । सकृत् एकवारम् । **विष्णुपदेन** श्रीकृष्णपादेन **हतः** अभिहतः **असौ दैत्यः** । ऊर्ध्वगमने **पुनर्विष्णुपदस्य** आकाशस्य **सङ्गभयात्** विष्णुपदशब्दसाम्यात् तत्सङ्गभीत्या **अधःपपात** । **ध्रुवं** निश्चयः । ननु नाममात्रसाम्यात् कथं भयमित्यत आह – **तथाहीति** । **इयमसुरमण्डली** असुरवर्गः **विनाशकाले** [१]**विरुद्धा** विपरीता **बुद्धिर्**ज्ञानं यस्याः सा । असुराणां मिथ्याज्ञानित्वादिति भावः ॥ ६७ ॥

**रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि**
**प्रेम्णा चिन्तयतां विचित्रविमलश्लाघ्यार्थसन्दायिनि ।**
**सञ्जाते भुवि रुग्मिणीशविजये सद्वादिराजोदिते**
**सञ्जातः सुरमण्डलीषु महितः सर्गो द्वितीयो मुदाम् ॥६८॥**

**॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थश्रीचरणविरचिते श्रीरुग्मिणीशविजये महाकाव्ये द्वितीयः सर्गः ॥**

**व्या :** **रोम्णामिति** । व्याख्यातमेतत् पद्यम् । पूर्वं देवानां कृष्णावतारे सति एकवारं सन्तोषो जातः । इदानीं असुरद्वयहत्या पुनरपि सन्तोषो जात इत्यर्थः । काव्यपक्षे **द्वितीयः सर्गो** जात इति बोद्धव्यम् ॥ ६८ ॥

**॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थश्रीचरण-विरचितस्य श्रीरुग्मिणीशविजयमहाकाव्यस्य व्याख्यायां श्रीनारायण-भट्टविरचितायां श्रीगुरुभावप्रकाशिकायां द्वितीयः सर्गः॥**

*****

---

१ कृतान्तपाशबद्धानां दैवोपहतचेतसाम् ।
बुद्धयः कुब्जगामिन्यो भवन्ति महतामपि ॥ - इति स्मृतिः ।
अयोग्यमिच्छन् पुरुषः पतत्येव न संशयः ॥ - म.भा.ता.नि. (१/९५)

# तृतीयः सर्गः

**अथापरो दैत्यकदम्बकासुरिवोद्धतो वातशरीरधारी ।**
**प्रगृह्य कृष्णं गगनं जगाम स्वनाशयोग्यस्थलकाङ्क्ष्येव ॥१॥**

**व्या :** वन्दे व्रजवधूवेश्मनवनीतहरं हरिम् ।
कुन्दद्विजोल्लसन्मञ्जुमन्दहासमुखाम्बुजम् ॥ १ ॥

**अथेति** । **अथ** शकटवधानन्तरं **अपरः** शकटादन्यः **उद्धतः** मत्तः **दैत्यकदम्बक**स्य असुरसमूहस्य **असुरिव** [1]प्राणवायुरिव । [2]**वातशरीरधारी** तृणावर्तः **कृष्णं प्रगृह्य स्वनाश**स्य स्वलयस्य **योग्यस्थलाकाङ्क्ष्येव** उचितस्वदेशाकाङ्क्ष्येव **गगन**माकाशं स्वस्य वायुरूपत्वाद्वायोराकाशे लयस्य श्रुतौ कथितत्वादिति भावः । **जगाम** ॥१॥

**दुस्तर्कायितशर्कराभिरमलं चक्षुः स मुष्णन् गवा-**
**मावासे वसतां सतामुरुतमो विस्तारयन् वारयन् ।**
**तद्वाक्यश्रवणं कठोरकुटिलध्वानैर्यशोदासुतं**
**दैत्योऽगूहयदागमान्तललनागर्भं कुवादीव तम् ॥ २ ॥**

---

१ पुरा धुनिश्चमुस्तथाऽपि पूतनासमन्वितौ ।
अनोक्षसंयुतौ तपः प्रचक्रतुः शिवां प्रति ॥
तया वरोऽप्यवध्यता चतुर्षु च प्रयोजितः ।
अनन्तरं तृणोद्भ्रमिस्तपोऽचरद्वरं च तम् ॥
अवाप ते त्रयो हताः शिशुस्वरूपविष्णुना ।
धुनिश्चमुश्च तौ तरूसमाश्रितौ निषूदितौ ॥ - म.भा.ता.नि (१३/२०-२२)

२ कदाचित् तं लालयन्ती यशोदा वोढुं नाशक्नोद्भूरिभाराधिकार्ता ।
निधाय तं भूमितले स्वकर्म यदा चक्रे दैत्य आगात् सुघोरः ॥
तृणावर्तो नामतः कंसभृत्यः सृष्ट्वाऽत्युग्रं चक्रवातं शिशुं तम् ।
आदायागादन्तरिक्षं स तेन शस्तः कण्ठग्राहसंरुद्धवायुः ॥
पपात कृष्णेन हतः शिलातले तृणावर्तः पर्वतोदग्रदेहः ।
सुविस्मयं चापुरथो जनास्ते तृणावर्तं वीक्ष्य सञ्चूर्णिताङ्गम् ॥
- म.भा.ता.नि (१२/११६-११८)

**व्या : दुस्तर्कायितेति** । **सः दैत्यः** वातासुरः । दुस्तर्कवत् शुष्कतर्कवत् आचरन्तीति **दुस्तर्कायिता**ः । 'उपमानादाचारे'[1] इति क्यच् । तदन्तात् कर्तरि क्तः । **शर्कराः** सूक्ष्मरेणवः ताभिः । **गवामावासे** गोष्ठे **वसतां सतां** सज्जनानाम् **अमलं चक्षुर्लोचनम्** । जात्येकवचनम् । **मुष्णन्** आच्छादयन् । अन्यत्र **गवां** शब्दानाम् । **आवासे** सच्छास्त्रे। **वसतां** सच्छास्त्रवर्तिनामित्यर्थः। **सतां** वैष्णवानाम्। **अमलं** निर्दुष्टं । **चक्षुः** ज्ञानम् । **दुस्तर्कायितशर्कराभिः** भेदः किं भिन्नो वा अभिन्नो वा भिन्नाभिन्नो वा। यदि प्रपञ्चः सत्यः स्यात् तर्हि दृग्दृश्ययोः सम्बन्धानुपपत्तिरित्यादिशुष्कत-र्करूपधूलीप्रक्षेपैः । **मुष्णन्** । **उरुतमः** [2]धूल्या प्रकाशतिरोधानेन निबिडान्धकारम्। अन्यत्र स्वकीयमिथ्याज्ञानम्। **विस्तारयन् कठोरकुटिलध्वानैः** । कठोराः निष्ठुराः कुटिलाः असह्याः ध्वानाः रवाः, तैः। **तद्वाक्यश्रवणम्**। तेषां व्रजस्थानां जनानां यानि वाक्यानि वचांसि तेषां श्रवणम्। अन्यत्र कठोरकुटिलध्वानैः निष्ठुरवक्रोक्तिरवैः गडबडादिध्वानैः **तद्वाक्यश्रवणं** वादिवाक्यश्रवणम् । **वारयन्** निवारन् । **कुवादी** मायावादी । **आगमान्ताः** वेदान्ता उपनिषद एव **ललनाः** नार्यस्तासां **गर्भं** हृदयस्थितं प्रतिपाद्यमित्यर्थः। **तं** परमात्मानमिव । **यशोदासुतं** श्रीकृष्णम् । **अगूहयत्** आच्छादयत् । यथा निर्गुणप्रतिपादकत्वोक्त्या वेदान्तेषु कृष्णगूहनं तथेति भावः ॥ २ ॥

**तदा खलस्योत्पतनं स शौरिर्हृदाऽनुमेने पतितस्य दूरात् ।**
**गिरीन्द्रकल्पोत्पतितात्ममूर्त्या शरीरमाचूर्णयितुं धियेव ॥३॥**

**व्या : तदेति**। **सः शौरिः** कृष्णः **खलस्य** दुष्टस्य दैत्यस्य। **उत्पतनम्** उद्गमनम्। **दूरात् पतितस्य खलस्य** तृणावर्तस्य। **शरीरं गिरीन्द्रकल्पात्** पर्वतश्रेष्ठसदृशात् खलोपरि

---

१ पा.सू. ३/१/१०

२ गोकुलं सर्वमावृण्वन् मुष्णंश्चक्षूंषि रेणुभिः ।
ईरयन् सुमहाघोरशब्देन प्रदिशो दिशः ॥ - भागवते (१०/८/२३)

**पतिता** आत्मनो मूर्तिस्तनुस्तया गिरीन्द्रकल्पोत्पतितात्ममूर्त्या । **आचूर्णयितुं** चूर्णीकर्तुं **धियेव** बुद्ध्येव । **हृदा** मनसा । **अनुमेने** अङ्गीचकार ॥३॥

**हरिं स संस्थाप्य हृदि स्वकीये परिभ्रमन् व्योम्नि मुहुः श्वसंश्च ।**
**गरं निपीय भ्रमितान्तरात्मा सरोधियाऽभ्रं प्रविशन्निवास्ते ॥४॥**

**व्या :** हरिमिति । **हरिं** कृष्णम् । **स्वकीये हृदि संस्थाप्य** निधाय । **व्योम्नि** गगने **परिभ्रमन्** । वात्यारूपधारित्वेन **परित**श्चक्राकारेण **भ्रमणं** कुर्वन् । **मुहुः** कृष्णभारोद्वहनजन्यश्रमेण पुनःपुनः । **श्वसन्** श्वासं कुर्वन् । **सः** दैत्यः । **गरं** विषं **निपीय** पीत्वा । स्वहृदिस्थकृष्णस्य कृष्णवर्णत्वात् स्वमृतिहेतुत्वाच्चेति भावः । **भ्रमितान्तरात्मा** भ्रान्तचित्तः सन् । **सरोधिया** सरोवरबुद्ध्या । **अभ्रम्** आकाशं **प्रविशन्निवास्ते** ॥ ४ ॥

**मुरद्विषं मूर्ध्नि निधाय विष्णोः पदं प्रवेष्टुं त्वरया गतोऽपि ।**
**असौ पपातामरवैर्यधस्तादयोग्यकामस्य कथं न पातः ॥ ५ ॥**

**व्या :** मुरद्विषमिति । **असौ अमरवैरी** देवशत्रुः वातासुरः । **मुरद्विषं** मुरमथनं कृष्णम् । **मूर्ध्नि** शिरसि । **निधाय** धृत्वा । **विष्णोः पदम्** आकाशम् । वैकुण्ठमिति ध्वनिः । **प्रवेष्टुं** गन्तुम् । **त्वरया गतोऽप्यधस्तात्** अधः **पपात** । ननु शिरोधृतहरिः कथमधः पपातेत्याशङ्कामर्थान्तरन्यासेन परिहरति – **अयोग्येति** । **अयोग्यकामस्य** अयोग्यमिच्छतः पुरुषस्य । **कथं पातो न** भवेत् । असुरस्य विष्णुपदप्राप्तेरयोग्यत वात् 'अयोग्यमिच्छन् पुरुषः पतत्येव न संशयः' इति स्मृतेरधःपातो युक्त एवेति भावः[१] ॥ ५ ॥

---

१ महाभारततात्पर्यनिर्णयोद्धृतभविष्यत्पर्ववचनम् । १/९६
'न चाधिकारिकमपि पतनानुमानात् तदयोगात्' - इति ब्रह्मसूत्रे (३/४/४१)
न च परमात्मैश्वर्यादिकमाकाङ्क्ष्यम् । ब्रह्मादीनामपि नाकाङ्क्ष्यं, किमु परस्येति सूचयितुमपिशब्दः । चशब्दस्तु ज्ञानार्थिनां पूर्वोक्तादित्थं- भावान्तरसूचकः ।

**स वातरूपी दितिजो मुकुन्दभरासहिष्णुर्निपपात भूमौ ।**
**तथाहि वातस्य जवोऽधिकोऽपि कथन्नु विश्वम्भरमुद्धिभर्ति[1] ॥६॥**

**व्या :** स इति । **स वातरूपी दितिजः । मुकुन्द**स्य कृष्णस्य **भरासहिष्णुः** भारमसहमानः सन् । **भूमौ निपपात । तथाहि** वातासुरस्य पतनं युक्तं हि । **वातस्य** वायोः । **जवः अधिकोऽपि** दैत्यस्य वातरूपत्वादिदमुक्तम् । **विश्वम्भरं** कुक्षिस्थाखिललोकम् अतिगुरुत्वप्रदर्शनायेदम् । **कथम् उद्धिभर्ति** । न कथञ्चिदित्यर्थः ॥ ६ ॥

**चक्षुश्चौर्यफलं जगाम परिवृत्ताक्षः प्रभोरोजसा**
**विष्वक्सम्भ्रमणेन दत्ततमसो विभ्रान्तमूर्धा फलम् ।**

---

अयोग्यमारोढौं प्रयतन् प्रपतन् हि दृश्यते । एवमयोग्यस्य परमात्मैश्वर्यस्य ब्रह्मादिपदस्य चाकाङ्क्षायां पतनमनुमीयते ।
'न देवपदमन्विच्छेत् कुत एव हरेर्गुणान् ।
इच्छन् पतति पूर्वस्मादधस्ताद्यत्र नोत्थितिः' इति ब्रह्माण्डे ।
'स्वकीयमिच्छमानं तु राजाद्याः पातयन्ति हि ।
एवमेव सुराद्याश्च हरिश्च स्वपदेच्छुकम्' इत्याद्यनुमानरूपवाक्याच्च ।
'मायाभिरुत्सिसृप्सत इन्द्र द्यामारुरुक्षतः । अव दस्यूनधूनुथाः' इति च श्रुतिः ॥
- इति ब्रह्मसूत्रभाष्ये (३/४/४१)

१ न मूर्छति शिलोच्चये पवनवेग इत्यङ्गवाक्
यतो हनुमताऽऽहृताः सुबहवो मरुत्सूनुना ।
गभीरतरवारिधिस्थगनचुञ्चवः पर्वताः
जयन्ति कृतसेतवः कृपणहेतवो रक्षसाम् ॥
- इति तीर्थप्रबन्धे ४/१७) श्रीवादिराजतीर्थश्रीचरणैः ।
अलं महीपाल तव श्रमेण प्रयुक्तमप्यस्त्रमितो वृथा स्यात् ।
न पादपोन्मूलनशक्तिरंहः शिलोच्चये मूर्च्छति मारुतस्य ॥
- इति रघुवंशस्थ (२/४४) कालिदासवाक्यं निराकृतम् । अत्र तु श्रीवादिराजतीर्थ श्रीचरणाः तमेवाभिप्रायं हरिसर्वोत्तमपरतया निरूपितवन्तः । वायोः वेगः शिलोच्चये न मूर्च्छति । किन्तु विश्वम्भरसमुद्धरणे मूर्च्छत्येव इति भावः ।

**साधूनां हृदयार्तिदानफलितं क्लेशं प्रपन्नः क्षितौ**
**मातुः पातकरः परस्य स खलः पाषाणपृष्ठेऽपतत् ॥ ७ ॥**

**व्या :** चक्षुरिति । **स खलः** असुरः । **प्रभोः** कृष्णस्य । **ओजसा** बलेन । **परिवृत्ते** कृष्णेन सम्यग्गलग्रहणादुद्भ्रान्ते **अक्षिणी** यस्य स तथोक्तः सन्। **चक्षुश्चौर्यफलं** व्रजस्थानां चक्षुषां चौर्यफलं शर्कराप्रक्षेपेणापहारपरिपाकम् । **जगाम** । परचक्षुषोऽपहारेण स्वस्यापि चक्षुषोऽपहारो जात इत्यर्थः । **विभ्रान्तमूर्धा** परिभ्रमच्छिराः सन् । **विष्वक्** सर्वत्र । **सम्भ्रमणेन** परिभ्रमणेन। **दत्तस्य तमसः** मूर्च्छालक्षणान्धकारस्य उद्भूतरजःसमूहेन सौरालोकतिरस्कारे सति जातान्धकारस्य वा फलं जगाम । परेषां तमोदानेन स्वस्याप्यज्ञानं जातमित्यर्थः । शिरोभ्रमणेन किमपि न प्रकाशत इति भावः । **साधूनां** सज्जनानाम् । **हृदयस्यार्तिदानफलितं** दुःखप्रदानेन निष्पन्नम् । **क्लेशं** दुःखम्। **प्रपन्नः** प्राप्तः । **परस्य** कृष्णस्य । **मातुर्यशोदायाः** । **क्षितौ** भूमौ । स्वजवेन कृष्णापहारजनितदुःखेन वा । **पातकरः** पातयिता । स्वयं **पाषाणपृष्ठे** शिलातले। **अपतत्** पपात । लोके महत्सु यादृशमघम् आचरति तादृशमेव फलं भुज्यत इति भावः ॥ ७ ॥

**आलोलहैमवरदामवतीं वितानजालावलम्बिशुभमौक्तिकरम्यमालाम् ।**
**दोलां विधाय तदुपर्यधिरोप्य बालं सालोक्यसौख्यमलभिष्ट हृदा यशोदा ॥**

**व्या : आलोलेति** । **यशोदा आलोलानि** चञ्चलानि । 'लोलश्चञ्चलतृष्णयोः' इत्यमरः । हेम्नो विकाराणि हैमानि वरदामानि अस्यां सन्तीति **आलोलहैमवरदामवती** ताम् । **वितानानां** उल्लोचानां **जालात्** समूहात् **अवलम्बिन्यः** अवस्रंसिन्यः **शुभमौक्तिकरम्यमालाः** निर्मलमुक्तानिर्मितमनोज्ञमालाः यस्यास्तां **दोलां** शिशोः शयनीयमञ्चविशेषं **विधाय** कृत्वा । **तदुपरि** दोलोपरि । **बालं** कृष्णम् । **अधिरोप्य** । **सालोक्यसौख्यं** सालोक्यमोक्षसुखम् । **हृदा** हृदयेन । **अलभिष्ट** अलभत ॥ ८ ॥

**दोलाविलासचलितालकशोभिफालं**
**बालं शुचिस्मितसुधारसशोभितास्यम् ।**
**श्यामं समीक्ष्य समयं किल शम्मयं सा**
**तेने क्वणत्कनकनूपुरशोभिपादम् ॥ ९ ॥**

**व्या :** दोलेति । सा यशोदा । दोलायाः विलासेन आन्दोलनेन चलितैः अलकैः शोभत इति चलितालकशोभि तादृशं फालं ललाटं यस्य स तथोक्तः तम् । 'ललाटं निटिलं फालम्' इति धनञ्जयः । शुचि शुभ्रं स्मितं ईषद्धसितमेव सुधारसः अमृतरसः तेन शोभितमास्यं वक्त्रं यस्य । 'वक्त्रास्ये वदनं तुण्डम्' इत्यमरः । तम् । क्वणत् ध्वनत्कनकनूपुरं सुवर्णपादाङ्गदं तेन शोभिनौ पादौ यस्य तं श्यामं इन्द्रनीलप्रख्यं बालं कृष्णं समीक्ष्य समयं काल[१] शम्मयं सुखमयम् । 'शमव्ययं च सौख्यार्थे' इति रत्नमाला । तेने चक्रे । कृष्णदर्शनेन यशोदायाः सकलोऽपि समयः सुखकरो जात इति भावः ॥ ९ ॥

**गण्डं वराङ्गुलिदलैर्लघु चालयन्ती**
**मन्दस्मिताननमथो परिरम्भयन्ती ।**
**सान्द्रस्तनस्नुतपयः किल पाययन्ती**
**नन्दस्य राड्यभवदित्थमहर्नयन्ती ॥१०॥**

**व्या :** गण्डमिति । गण्डं कपोलम् । 'गण्डो व्रणे कपोले च' इति भास्करः । वराङ्गुलिदलैः उत्तमाङ्गुल्यग्रैः । लघु यथा भवति तथा । स्मितोत्पादनार्थं चालयन्ती । अथो अनन्तरम् । 'अथो अथेत्युभौ प्रश्नविकल्पारम्भमङ्गले ।

---

१ आयुर्हरति वै पुंसामुद्यन्नस्तं च यन्नसौ ।
तस्यर्ते यः क्षणो नीत उत्तमश्लोकवार्तया ॥ - इति भागवते (२/३/१७)
तस्यायुषो य उत्तमश्लोकवार्तयार्ते क्षणः स नीत एव वृथा ॥ -भा.ता.(२/३/१७)
श्रवणेनानुवादेन मननेनावृथाऽकरोत् ।
कालं वेदान्तशास्त्रस्य वेदान्तगुरुसोदरः ॥ (मध्वविजये १५/९९) इतिवज्ज्ञेयम् ।

आनन्तर्ये च कार्त्स्न्ये च' इति भास्करः । कपोलस्पर्शनेनोत्पन्न**मन्दस्मितेन** युक्तमाननं यस्य तं कृष्णम् । **परिरम्भयन्ती** संश्लिषन्ती । स्नेहवशात् **सान्द्रं स्तनस्नुतं** स्तनाभ्यां निःस्नुतं **पयः** क्षीरं तत् **पाययन्ती** नन्दस्य **राज्ञी** महिषी यशोदा। **इत्थम्** उक्तप्रकारेण **अहर्दिवसं नयन्ती** कृष्णलालनेनैव दिनं नीतवती **अभवत्** । अतः सकलमप्यायुष्यं सार्थकमिति भावः । **जातिरलङ्कारः** ।। १० ।।

**याऽमर्त्यमर्त्यदितिजालिभिरप्यभेद्यं**
**ब्रह्माण्डभाण्डमभिनन्नखकोटिमात्रात् ।**
**स्वाङ्गुष्ठपुष्टसुभगाङ्गुलिमच्युतस्तां**
**सङ्गृह्य [1]चुम्बति शिशुप्रकृतिः शयानः ।। ११ ।।**

**व्या : याऽमर्त्येति** । **या** अङ्गुष्ठाङ्गुलिः **अमर्त्या** देवाः **मर्त्या** मनुष्याः **दितिजा** राक्षसाः तेषामा**लिभिरप्यभेद्यम्** अविदार्यं **ब्रह्माण्डभाण्डं** [2]ब्रह्माण्डखर्परं **नखकोटिमात्रात्** नखाग्रमात्रात् **अभिनत्** अदारयत् । **तां स्वाङ्गुष्ठ**रूपा च **पुष्टा** च **सुभगा** मनोहरा च **अङ्गुलिः स्वाङ्गुष्ठपुष्टसुभगाङ्गुलिः** ताम् । **शिशोः प्रकृति**रिव प्रकृतिः स्वभावो यस्य स तथोक्तः । **शयानः अच्युतः** कृष्णः । **सङ्गृह्य** प्रगृह्य । देवासुरैरसाध्यकार्यकरणान्मानयन्निव **चुम्बति** ।। ११ ।।

---

१ चार्वङ्गुलिभ्यां पाणिभ्यामुन्नीय चरणाम्बुजम् ।
मुखे निधाय विप्रेन्द्र धयन्तं वीक्ष्य विस्मितः ।। - भागवते (१२/८/२५)

२ यत्र भगवतः साक्षाद्यज्ञलिङ्गस्य विष्णोर्विक्रमतो **वामपादाङ्गुष्ठनखनिर्भिन्नोर्ध्वाण्डकटाहविवरेणान्तःप्रतिष्ठा** या बाह्यजलधारा...तद्विष्णुपदमाहुः ।
- भागवते (५/१७/१)

क्षितिं पदैकेन बलेर्विचक्रमे नभः शरीरेण दिशश्च बाहुभिः ।
पदं द्वितीयं क्रमतस्त्रिविष्टपं न वै तृतीयस्य तदीयमण्वपि ।
उरुक्रमस्याङ्घ्रिरुपर्यधो दिवो महर्जनाभ्यां तपसः परं गतः ।।
- भागवते (८/१९/३३)

**निद्रामाश्रय किं तदाश्रयफलं भुक्तं व्रजेज्जीर्णतां**
**निद्रा काऽम्ब निमीलिताक्षियुगलः प्राज्ञं यदालिङ्गति ।**
**अस्त्वेवं त्विति मुद्रितात्मनयनः स्वाङ्गं समालिङ्ग्य तत्**
**सर्वं जीर्णमथो दिशेति जननीं शंसन् निजं सोऽवतात् ॥१२॥**

**व्या :** **निद्रेति** । हे तात त्वं **निद्रां** स्वापम् । **आश्रय** भजस्वेति । शिशुस्वभावानुसारेण स्वव्यापारेषु प्रतिबन्धं कुर्वन्तं कृष्णं प्रति यशोदावचनम् । हे अम्ब मातः **तदाश्रयफलं** निद्राश्रयणेन प्रयोजनं **किमि**ति मातरं प्रति कृष्णवचनम् । हे कृष्ण निद्राश्रयणेन ते **भुक्तम**न्नं **जीर्णतां व्रजेत्** । इति पुनर्यशोदावचनम् । हे **अम्ब निद्रा** नाम **का** कीदृशीति पुनर्मातरं प्रति शिशुवेषानुसारेण नित्यप्रबुद्धतया निद्रापदार्थमजानतः कृष्णस्य वचनम् । अनेन नित्यप्रबुद्धतया परमात्मनः कृष्णस्य निद्रादिदोषराहित्यं ध्वन्यते । **निमीलितम्** अक्षियुगलं लोचनयुग्मं येन स तथोक्तः सन् । **प्राज्ञं** हृदि स्थितं प्राज्ञनामकं परमात्मानम् । **आलिङ्गतीति यत्** सा **निद्रा** । 'प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद' इति श्रुतेः इति पुनर्मातृवचनम् । **एवमस्त्विति** उक्तनिद्राश्रयणं मया क्रियत इति **मुद्रिते** निमीलिते **आत्मनो नयने** येन स तथोक्तः सन् । **स्वाङ्गं** स्वशरीरं स्वस्वरूपं **समालिङ्ग्य** स्वस्यैव प्राज्ञत्वादिति भावः । [1]'नेह नानास्ति किञ्चन' इत्यादिश्रुतेः । **तत्** प्राक् भुक्तं **सर्वं जीर्णम**भवत् । **अथो** अनन्तरं क्षीरादिकं **दिशेति जननीं** मातरं **शंसन्** वदन् स कृष्णः **निजं** स्वकीयं भक्तजनम् **अवतात्** रक्षतात् । आशिषि लोट् । **वाकोवाक्यमलङ्कारः** । 'उक्तिप्रत्युक्तिचातुर्यं वाकोवाक्यम्' इत्युक्तत्वात् ॥१२॥

**मातर्गायसि किं सदा जलनिधौ शेषाङ्गसंशायिनं**
**तातासौ ननु निद्रया परिवृतो दद्यात् तवापीति ताम् ।**
**एवं चेद्वदितं त्वदीयमखिलं तत्कर्णदेशं कथं**
**यातीति प्रतिपादयन् निजमतं पायाद्यशोदासुतः ॥ १३ ॥**

---

१ कठोपनिषत् ४/११

**व्या : मातरिति** । हे **मातः** । **जलनिधौ** समुद्रे । **शेषस्याङ्गे** भोगे **संशायिनं** सम्यक् शायिनं विष्णुम् । **सदा** दोलान्दोलनसमये नियमेन । **किं** किमर्थम् । **गायसि** गानं करोषीति दोलान्दोलनसमये गायन्तीं मातरं प्रति कृष्णवचनम् । हे **तात** वत्स । 'तातोऽनुकम्प्ये पितरि' इति भास्करः । **निद्रया परिवृतः** आवृतः । **असौ** शेषशायी । **तवापि** तुभ्यमपि । **ताम्** निद्रां **दद्यात् ननु** दद्यादेव । 'नन्वनुज्ञेतिहापृच्छाननुयेष्ववधारणे । आमन्त्रणे च' इति रत्नमाला । स्वविषयकगानं श्रुत्वा सन्तुष्टः तवापि तां स्वसंस्थितां निद्रां दिशत्विति तं गायामीत्यर्थः । इति यशोदावचनम् । निद्रातीतस्य परमात्मनो निद्रावृतत्वमसहमानो मातरं प्रत्याह । **एवं चेत्** असौ निद्रावृतश्चेत् । **त्वदीयं** त्वत्सम्बन्धि **अखिलं** समस्तं **गदितं** भाषितं **तत्कर्णदेशं** शेषशायिश्रोत्रप्रदेशं **कथं याति** त्वद्गानं निद्रावृतः कथं श्रोष्यतीत्यर्थः । निद्रां दापयितुं तद्विषयकगानं कुर्वत्या त्वयैव निद्राभावोऽवश्यमङ्गीकर्तव्य इत्यनेन प्रकारेण **निजमतं** स्वस्य परमात्मनो मतं विनिद्रत्वमतं **प्रतिपादयन् यशोदासुतः पायात्** अवतात् ॥ १३ ॥

**लोलत्कङ्कणपाणिपद्मधृतया नीलोल्लसत्कुन्तला**
**बालाः स्रस्तदुकूलहारवलया मौलिस्खलन्मल्लिकाः ।**
**लोलाङ्ग्यः क्वणदङ्घ्रिभूषणगणा ईषच्चलत्कुण्डला**
**व्यालोलं सह दोलया मृगदृशः कृत्वोपनिन्युः प्रियम् ॥१४॥**

**व्या : लोलेति** । **लोलाङ्ग्यः** दोलान्दोलनकर्मणा चञ्चलगात्र्यः । **नीलाः** असिताः **उल्लसत्कुन्तलाः** प्रकाशमानालकाः यासां ताः । दुकूलानि श्वेतपट्टवस्त्राणि **हाराश्च वलयानि** च कटकानि च **स्रस्तानि** दोलाया इतस्तत सञ्चालनेन चलितानि **दुकूलहारवलयानि** यासां ताः । **मौलेर्मस्तकात्** धम्मिल्लात् **स्खलन्त्यो मल्लिकाः** कुसुमानि यासां ताः । **क्वणन्ति** ध्वनन्ति **अङ्घ्रिभूषणानि** तेषां **गणो** यासां ताः । **ईषत् चलन्ति कुण्डलानि** यासां ताः । **मृगस्य** कृष्णसारस्य **दृश** इव **दृशो** यासां ताः

बालाः गोप्यः । **लोलत्कङ्कणं** करभूषणं च यस्य **पाणिपद्मस्य** तेन धृतया गृहीतया **दोलया सह व्यालोलं** चञ्चलं **कृत्वा प्रियं** कृष्णं **उप** समीपं **निन्युः** । रज्वाकर्षणेन स्वसमीपं नीतवत्यः स्वाङ्गादेश्चाञ्चल्यसम्बन्धात् कृष्णमपि चञ्चलं चक्रुरिति ध्वनिः। स्त्रीणां विभूषणविलासा एव पुरुषवशीकरणायालमिति भावः ॥ १४ ॥

**ये वै विठ्ठलसेवकाः शुभधियस्तेषां स लभ्यस्त्वित**
**प्रायो ज्ञापयितुं मुरद्विषमितः सम्प्रापयन्त्येकदा ।**
**अन्येषां स हि दूरगस्त्वित ततः प्राप्तं च तं कुर्वती**
**दोला सा मणिमण्डिता विजयते स्वानन्दमूर्तेः शिशोः ॥१५॥**

**व्या : ये वै** इति । **शुभा** अनन्यविषयत्वेन शोभना धीर्येषां ते **शुभधियो** ये नराः विद्वांसः । **विदा** संविदा **ठान्** शून्यान् । 'ठं क्लीबे चन्द्रमण्डले । स्तम्भने साहसे चाथ त्रिषु शून्ये शठे दृढे' इति रत्नमाला । लाति स्वीकरोति अनुगृह्णातीत्यर्थः । 'ला आदाने' इति धातोः विठ्ठलः [1]अज्ञजनानुग्राहकः कृष्णः । तस्य **सेवकाः** पूजकास्तेषाम् । 'कृत्यानां कर्तरि वा'[2] इति षष्ठी । **स** कृष्णः **लभ्यो वै** लभ्यो हि । वैशब्दः प्रसिद्धौ । 'वै सम्बुद्धावनुनये वाक्यारम्भप्रसिद्धयोः' इति रत्नमाला । वाक्यारम्भे वा वैशब्दः । **इति प्रायः** प्रायशः लोके **ज्ञापयितुं मुरद्विषं** मुरवैरिणं कृष्णम् । **एकदा** रज्वाकर्षणकाले । **इतः** आन्दोलनलक्षणसेवाकर्त्र्याः समीपं **प्रापयन्ती अन्येषामसेवकानां स** कृष्णः **दूरगः** दूरस्थ **एव तु** । 'भेदेऽवधारणे तुः स्यात्' इति रत्नमाला । **हि**शब्देनाभक्तजनविदूरत्वं[3] प्रसिद्धमित्याह । **इति ज्ञापयितुं ततः प्राप्तं** रज्वाकर्षणलक्षणसेवात्यागसमये दूरदेशगतं च **कुर्वती** ।

---

१ विदा ज्ञानेन ठान् शून्यान् लाति गृह्णाति यः स्वयम् ।
अज्ञानुग्रहकृद्देवो विठ्ठलः कथ्यते बुधैः ॥
-इति प्रक्रियाकौमुदीव्याख्यायाम् (प्रकाशे) उद्धृतं प्रमाणवचनम् । (पत्र. ४)

२ पा.सू. २/३/७१

३ दूराद्दूरतरं यत् तु तदेवान्तिकमन्तिकात् ॥ - इति द्वादशस्तोत्रे (११/७)

अत्र दोलायास्ततो दूरदेशप्राप्त्या कृष्णस्यात्मरतत्वेनान्यनिरपेक्षत्वं पुनरागमनेन स्वसेवाफलदानाय भक्तजनाभिमुख्यं सेवात्यागलक्षणापराधसहिष्णुत्वं च द्योत्यते । **मणिभिर्मण्डिता** अलङ्कृता **स्वानन्दमूर्तेः** निर्दुःखानन्ददेहस्य **शिशोः** कृष्णस्य सम्बन्धिनी **सा दोला विजयते** उत्कृष्टा वर्तते ।। १५ ।।

**स्तनोत्थदुग्धेन सुतृप्तमेनं निरूपयन्त्याः स हरिर्जगन्ति ।**
**प्रदर्शयामास न तृप्तिरस्मादुदारदेहस्य ममेति शिक्षन् ।। १६ ।।**

**व्या : स्तनोत्थेति । स हरिः** कृष्णः **एनं** स्व**स्तनोत्थदुग्धेन** स्तन्येन **सुतृप्तं निरूपयन्त्या** जानन्त्या मातुः **उदारदेहस्य** व्याप्तदेहस्य **ममास्मात्** स्तन्यात् **तृप्तिर्न** स्थूलोदरकुहरस्य मम तव स्वल्पात् स्तन्यात् कथं पूर्तिः स्यादिति स्पष्टयितुं **शिक्षयन्निव** स्वोदरे [१]**जगन्ति प्रदर्शयामास** ।। १६ ।।

**मुखे स लोकान् खलु लोकयित्वा तदन्तरेऽम्बां सगृहां सनाथाम् ।**
**अखण्डयत् पुत्रमतिं जनन्यामयोजयद्विश्वपितृत्वबुद्धिम् ।। १७ ।।**

**व्या : मुख** इति । **स** कृष्णः । **मुखे** स्ववदने । वदनद्वारा स्वोदर इत्यर्थः । **लोकान्** भुवनानि । 'लोकस्तु भुवने जने' इत्यमरः । **तदन्तः** मुखाभ्यन्तरे । **सनाथां** सपरिवृढाम् । 'नाथः परिवृढः प्रभुः' इत्यमरः । **सगृहाम् अम्बां** जननीं च । **लोकयित्वा** प्रदर्शयित्वा । **जनन्यां** मातरि यशोदायां स्थितां **पुत्रमतिं**

---

१ खं रोदसी ज्योतिरनीकमाशाः सूर्येन्दुवह्निश्वसनाम्बुधींश्च ।
द्वीपान् नगांस्तद्दुहितॄर्वनानि भूतानि यानि स्थिरजङ्गमानि ।। - भागवते (१०/८/३८)
स प्राकृतं शिशुमात्मानमुच्चैर्विजानन्त्या मातुरादर्शनाय ।
विजृम्भमाणोऽखिलमात्मसंस्थं प्रदर्शयामास कदाचिदीशः ।।
साण्डं महाभूतमनोभिमानमहत्प्रकृत्या वृतमब्जजादिभिः ।
सुरैः शिवेतैर्नरदैत्यसङ्घैर्युतं ददर्शास्य तनौ यशोदा ।।
न्यमीलयच्चाक्षिणी भीतभीता जुगूह चात्मानमथो रमेशः ।
वपुः स्वकीयं सुखचित्स्वरूपं पूर्णं सत्सु ज्ञापयंस्तव्द्यदर्शयत् ।।
- म.भा.ता.नि. (१२/११३-११५)

कृष्णो मम पुत्र इति बुद्धिम् अखण्डयत् । विश्वपितृत्वबुद्धिमयोजयत् खलु उदपादयत् । मातुः स्वोदरे नन्दादिसकलप्रपञ्चप्रदर्शनेन नायं मम पुत्रोऽयमेव जगज्जनक इति बुद्ध्या तां योजयामासेत्यर्थः ॥ १७ ॥

**न नाम कुर्वन्ति ममेति नूनं स पूतनादीन् विनिहत्य मातुः ।**
**प्रदर्श्य विश्वं जठरे स्वशक्त्या बहूनि नामानि बभार बालः ॥१८॥**

**व्या : नेति** । पित्रादयो **मम नाम** नामधेयं नामकरणमित्यर्थः । **न कुर्वन्तीति** कोपेनेव स बालः कृष्णः । **पूतनादीन् विनिहत्य जठरे** कुक्षौ । **स्वशक्त्या** स्वसामर्थ्येन **विश्वं** प्रपञ्चं **मातुर्**यशोदायाः **प्रदर्श्य** । **बहूनि नामानि** पूतनाहननात् पूतनाघातकः शकटवधाच्छकटासुरभञ्जकः तृणावर्तहत्यया तृणावर्तनिषूदनः जठरे विश्वप्रदर्शनात् विश्वम्भर इत्याद्यनेकानि[1] **नामानि बभार** दधौ ॥१८॥

**अथैत्य गर्गः किल रामकृष्णौ चकार नाम्ना विनतौ सुतौ तौ ।**
**अहं तु मन्ये चकितस्तदीयगुरुत्वकीर्त्या जगृहे तदाख्याम् ॥१९॥**

**व्या : अथेति** । अथानन्तरम् । **गर्गः** गर्गो नाम यादवानां [2]पुरोधाः । **एत्य** स्वावसथात् व्रजमागत्य । **विनतौ** विनीतौ **तौ सुतौ नाम्ना रामकृष्णौ चकार किल** । किलेत्यस्वरसे । **तदीयगुरुत्वकीर्त्या** कृष्णसम्बन्धिगुरुत्वप्रसिद्ध्या जाताद्दुरिताच्च**कितो** भीतः सन् पापपरिहाराय **तदाख्यां** तस्य कृष्णस्याख्यां ताम् । 'आख्याह्वे अभिधानं च नामधेयं च नाम च' इत्यमरः । **जगृहे** [3]आददे । गुरु-

---

१ पूतनाजीवितहरः शकटासुरभञ्जनः ।
तृणीकृततृणावर्तो यमलार्जुनभञ्जनः ॥ - इत्यादि कृष्णाष्टोत्तरशतनामस्तोत्रे ।

२ गर्गः शूरसुतोक्त्या व्रजमायात् सात्वतां पुरोधाः सः ।
चक्रे क्षत्रिययोग्यान् संस्कारान् कृष्णरोहिणीसून्वोः ॥ - म.भा.ता.नि (१३/१)

३ प्रागयं वसुदेवस्य क्वचिज्जातस्तवात्मजः ।
वासुदेव इति श्रीमानभिज्ञाः सम्प्रचक्षते ॥
नारयोऽभिभवन्त्येतान् विष्णुपक्षानिवासुराः ॥

त्वप्रथाजनितपापपरिहारार्थं रामकृष्णेति हरिनामोच्चारणं कृतवानित्यहं **मन्ये** । उत्प्रेक्षालङ्कारः ॥ १९ ॥

**अनन्तनामाऽपि स कृष्णसञ्ज्ञामवाप्य तुष्टः किल गर्गदत्ताम् ।**
**तथाहि शब्देषु बहूदितेषु प्रियेरितः प्रीतिकरो हि लोके ॥२०॥**

**व्या :** अनन्तेति । अनन्तानि **नामानि** यस्य सोऽपि कृष्णः । **गर्गदत्तां** गर्गाचार्योक्तां **कृष्ण** इति **संज्ञाम्** । **अवाप्य** सन्तुष्टः **किल** । **तथाहि** तद्युक्तं हि । बहुभिरुदितेषु **शब्देषु** मध्ये **प्रियेरितः** सुहृदुक्तः शब्दः **प्रीतिकरो हि** हर्षकरो हि । परोक्तवचनेभ्यः सुहृदुक्तवचनमेव सुखकरमिति भावः ॥ २० ॥

**सपत्नपत्नीवदनोडुराजं क्रमेण यः क्षीणकलं करोति ।**
**सितेतरः पक्ष इवर्क्षनाथं गुणोचिता तस्य हि कृष्णसञ्ज्ञा ॥२१॥**

**व्या :** सपत्नेति । यस्मात् कारणात् यः सपत्नानां शत्रूणां **पत्न्यो** भार्याः तासां वदनमेवोडुराजं चन्द्रं **क्रमेण** प्रतिपदादिक्रमेण । सितात् शुक्लपक्षात् इतर अन्यः **पक्षः** कृष्णपक्षः **ऋक्षनाथं** नक्षत्रेशमिव **क्षीणकलं** वैधव्यापादनेन नष्टकान्तिं **करोति** । तस्य कृष्णस्य **कृष्ण** इति सञ्ज्ञा आख्या **गुणोचिता** चन्द्रकलाक्षयहेतुत्वलक्षणगुणोचिता **हि** । 'तामिस्रपक्षकलिनीलगुणेषु कृष्णः'[1] इत्यभिधानात् । कृष्णपक्षस्यापि कृष्णशब्दवाच्यत्वादिति भावः ॥ २१ ॥

**यतः स्वसन्दर्शनतो नराणां वराङ्गनानां सुरचारणानाम् ।**
**मनांसि सर्वाण्यपकर्षतीशस्ततोऽपि कृष्णं प्रवदन्ति सन्तः ॥२२॥**

**व्या :** यत इति । ईशः समर्थः स कृष्णः । **स्वसन्दर्शनतः** स्वसन्दर्शनात् । **नराणां वराङ्गनानाम्** उत्तमस्त्रीणाम् । **सुराश्च चारणाश्च** देवयोनिभेदास्तेषाम् । **सर्वाणि** मनोबुद्धिरहङ्कार इत्यादिबहुविधानि **मनांसि यतः** कारणात् **कर्षति**

---

तस्मान्नन्द कुमारोऽयं नारायणसमो गुणैः ।
श्रिया कीर्त्याऽनुभावेन तत्कर्मसु न विस्मयः ॥-भागवते (१०/२४/१७,२१-२२)

१ इति भास्करोक्तिः (२/२४)

आकर्षति । **ततोऽपि** तस्मादपि । अपिशब्दः पूर्वोक्तहेतुसमुच्चये । **सन्तः** सज्जनाः तं **कृष्णं प्रवदन्ति** । 'कृष आकर्षणे' इति धातोरौणादिके णप्रत्यये 'रषाभ्यां नोणः समानपदे'[१] इति णत्वे च कृष्णशब्दस्य निष्पन्नत्वादिति भावः ॥ २२ ॥

**यतः स पृथ्वीतलसंस्थितोऽपि सुखी धरण्याः सुखदायकश्च ।**
**ततोऽपि कृष्णं प्रवदन्ति कृष्णं समुल्लसत्केशवकेशरूपम् ॥२३॥**

**व्या : यतः स** इति । **स** कृष्णः **यतः** कारणात् **पृथ्वीतलसंस्थितोऽपि** भूतलस्थितोऽपि[२] **सुखी धरण्याः सुखदायकश्च ततोऽपि** तस्माच्च **समुल्लस-**द्दीप्यमानं **केशवस्य** विष्णोः **केशरूपं** कृष्णकेशात्मकम् । अनेन कृष्णशब्द-वाच्यत्वे कृष्णकेशात्मकत्वं च हेतुरित्युक्तं भवति । **कृष्णमिति प्रवदन्ति** । कृष्यत इति । कृषिर्भूमिः तस्यामपि णः सुखरूपः कृषेर्भूमेः णः सुखं यस्मादिति वा कृष्ण इति व्युत्पत्तेः ।

''कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
तयोरैक्यं परम्ब्रह्म कृष्ण इत्यभिधीयते''[३]

इति स्मृतिसिद्धत्वादिति भावः ॥ २३ ॥

**यतश्च दैतेयकदम्बकक्षचयस्य विध्वंसविधौ मुरारिः ।**
**वनाग्निमन्वेति लयाग्निकल्पं ततोऽपि गायन्ति हि[४] कृष्णमेनम् २४**

---

१ पा.सू. (८/४/१)

२ सर्वे गुणा आवृता मानुषत्वे युगानुसारान्मूलरूपानुसारात् ।
क्रमात् सुराणां भागतो व्यक्तरूपा आदानतो व्यक्तिमायान्त्यौरूणाम्॥
नैवाव्यक्तिः काचिदस्तीह विष्णोः प्रादुर्भावेष्वतिसुव्यक्तशक्तेः ।
इच्छाव्यक्तिः प्रायशो मारुतस्य तदन्येषां व्यक्तता कारणेन॥
- म.भा.ता.नि. (२२/२८४-२८५)

३ गीताभाष्ये (५/१)

४ नियमनादिना सकललोककर्षणात् कृष्णः । तच्चोक्तम् -

**व्या : यत** इति । **मुरारिः** कृष्णः । **यतो दैतेयानामसुराणां कदम्बा एव कक्षाः** कुञ्जास्तेषां **चयः** समूहस्तस्य **विध्वंसविधौ** भस्मीकरणानुष्ठाने **वनाग्निं** दावाग्निम् । **अन्वेति** तमनुकरोति । **ततोऽपि लयाग्निकल्पं** प्रलयाग्निसदृशं तेजोराशिमित्यर्थः । **एनं कृष्णमिति गायन्ति** । दैत्यकक्षदहने अग्निरूपत्वात् । "व्यासार्जुनाग्निहरिकोकिलकाकशूद्रतामिस्रपक्षकलिनीलगुणेषु कृष्णः" इति भास्करोक्तेरग्नेरपि कृष्णशब्दवाच्यत्वादिति भावः ।। २४ ।।

**व्रजाङ्गनानां स्मरतां मुनीनामभेद्यहृद्यप्रणयाख्यदाम्ना ।**
**निबद्धमृद्वङ्घ्रिसरोजयुग्मश्चचार दोर्भ्यां शुभजानुयुग्भ्याम् ।।२५।।**

**व्या :** इदानीं शिशुजात्यनुसारेण कृष्णस्य जानुगमनं वर्णयति – **व्रजाङ्गनानामिति** । **व्रजाङ्गनानां** व्रजस्त्रीणाम् । **स्मरतां मुनीनाम्** । **अभेद्यम्** अच्छेद्यं **हृद्यं** मनोहरं **प्रणयाख्यं** प्रेमाभिधं **दाम** तेन **निबद्धौ मृदू** अङ्घ्री एव **सरोजयुग्मे** यस्य स तथोक्तः । कृष्णः शुभे जानुनी युञ्जात इति **शुभजानुयुजौ** ताभ्यां **दोर्भ्यां** हस्ताभ्यां **चचार** । बद्धचरणोऽहि जानुभ्यां हस्ताभ्यां च गच्छतीति भावः ।।२५।।

**अनेकलोकानुदरे विधाय य एष शेते स्म लयाम्बुमध्ये ।**
**शिशुः स सन्दर्शयितुं सलज्जः कृशोदरं जानुचरो बभूव ।।२६।।**

**व्या : अनेकेति** । **यः अनेकलोकान् उदरे** जठरे **विधाय लयाम्बुमध्ये** प्रलयसमुद्रमध्ये **शेते स्म** शिश्ये । 'लट् स्मे'[1] इति स्मयोगे लिडर्थेऽपि लट् । **स**

---

यतः कर्षसि देवेश नियम्य सकलं जगत् ।
अतो वदन्ति मुनयः **कृष्णं** त्वां ब्रह्मवादिनः ।। -इति महत्कौर्मे
विष्णुस्तद्भावयोगाच्च **कृष्णो** भवति सात्वतः ।। -इति उद्योगपर्वणि (७०/५)
कृषामि पृथिवीं पार्थ भूत्वा कार्ष्णायसो हलः ।
तस्मात् **कृष्णो**ऽहमर्जुन.... ।। - महाभारते शान्तिपर्वणि (३४२,७९)
**ण**कारो बलं, **ष**कारः प्राण आत्मा । - इत्यैतरेयोपनिषद्भाष्ये

१ पा.सू. ३/२/११८

एषः शिशुः कृष्णः कृशोदरं सूक्ष्मकुक्षिं **सन्दर्शयितुं सलज्ज** इव लज्जासहित इव **जानुचरो बभूव**। यथा प्राक् सम्पन्नः पुनः स्वदारिद्र्यं लज्जया न दर्शयति तथा जानुभ्यां सञ्चरणे उदरस्याधोमुखत्वेनान्यैरदर्शनादिति भावः ॥ २६ ॥

**कर्षन्नङ्घ्रियुगं मुनीन्द्रमनसा साकं व्रजस्त्रीदृशा**
**जम्बालेन च नीलनीलसुतनुर्लोलालकश्रीमुखः।**
**अम्बाम्बेति हि यामुदीर्य पिबति स्माङ्काधिरूढः स्तनं**
**किंवाऽतप्यत सा तपोऽस्य जननी[1] यस्येदमीदृक्फलम् ॥२७॥**

**व्या : कर्षन्निति**। **अङ्घ्रियुगं** चरणयुग्मम्। **मुनीन्द्रमनसा** स्वचरणस्मरणं कुर्वतां योगीन्द्राणां चित्तेन **साकं** सार्धं **कर्षन्** आकर्षन्। **व्रजस्त्रीदृशा** व्रजाङ्गनापाङ्गेन। स्त्रीणामपाङ्गस्यासितत्वादिति भावः। **जम्बालेन** गृहाङ्गणगतेन पङ्केन। 'निषद्वरस्तु जम्बालः पङ्कोऽस्त्री शादकर्दमौ' इत्यमरः। स्त्रीकटाक्षसम्बन्धेन पङ्कसम्बन्धेन **च नीलनीला** अतिकृष्णा सुमनोहरा **तनुः** शरीरं यस्य स तथोक्तः। **लोला**: चञ्चलाः **अलका**स्तैर्युक्तं **श्रीमुखं** यस्य स तथोक्तः कृष्णः। **यां** यशोदाम् **अम्बाम्बेति** मातर्मातरिति **उदीर्य अङ्काधिरूढः स्तनं पिबति स्म सा अस्य** कृष्णस्य **जननी** माता। **किं तपः अतप्यत** अतपत्। तपस्तपःकर्मकस्यैवेति तपेः कर्तुरातिदेशिककर्मत्वेन सार्वधातुके यगिति[2] यक् प्रत्ययः। **यस्य** तपसः **इदं ईदृक्फलं** ब्रह्माद्यगम्यरूपः परमात्मा स्वबाललीलां प्रदर्श्य यस्याः स्तनं पिबति तस्यास्तपःफलं किं वर्णनीयमिति भावः ॥ २७ ॥

**वैगुण्यं विविधोदयैर्विमृशतां वित्तैर्जगद्बाध्यतां**
**वैरूप्यं निजतेजसा निरुपमैरङ्गैर्निराकारताम्।**

---

१ नन्दः किमकरोद् ब्रह्मन् श्रेय एवं महोदयम्।
यशोदा च महाभागा पपौ यस्याः स्तनं हरिः ॥　　- भागवते (१०/९/४६)
'एनु सुकृतव माडिदळो यशोदे'　- श्रीवादिराजश्रीचरणाः स्वकृत कर्नाटकभाषागेयकृतौ।

२ पा.सू. ३/१/६७

**नीचैक्यं च निरस्य निर्मलधियां नित्यार्चया विट्ठलो**
**दिग्भिन्नाम्बरधिक्क्रियार्थमभवद्दिग्वस्त्रतां दीपयन् ॥ २८ ॥**

**व्या :** वैगुण्यमिति । **विट्ठलः** अज्ञानुग्रहकारकः कृष्णः । **विविधोदयैः** नानाविधवीर्यसौन्दर्यादिगुणोदयैः । स्वस्य **वैगुण्यं** मायिभिः कथ्यमाननिर्गुणत्वं **निरस्य** निराकृत्य । परब्रह्मण्येव कृष्णे प्रत्यक्षसिद्धशौर्यादिगुणानामपलापायोगादिति भावः । न च कृष्णस्य परब्रह्मत्वे विवादः । अस्मिन्नेव पद्ये **निर्मलधियां नित्यार्चया नीचैक्यं च निरस्ये**त्युक्त्या निरस्ताज्ञानैरपरोक्षज्ञानिभिः पूज्यत्वेन मायाशबलब्रह्मतामपाकृत्य परब्रह्मत्वस्यैव स्थापयिष्यमाणत्वात्। **विमृशतां** स्मरतां व्रजस्थजनानां **वित्तैः** कृष्णसन्निधानेन निष्पन्नद्रव्यैः । **जगतां बाध्यतां** ब्रह्मज्ञानबाध्यतां मायावाद्युक्तविश्वमिथ्यात्वमित्यर्थः । **निरस्य** । परब्रह्मसाक्षात्कारेणैव वर्धमानद्रव्यादेः ब्रह्मज्ञानबाध्यत्वायोगादिति भावः । **निजतेजसा** स्वस्य रक्ताधरोष्ठहस्तपादतलादेः श्वेतदन्तनखादेः नीलाङ्गानां च कान्त्या **वैरूप्यं** मायावाद्युक्तरक्तश्वेतनीलादिरूपरहिततां **निरस्य** । साक्षात्परब्रह्मणि दृश्यमानरूपाणां त्यागायोगादिति भावः । **निर्गता उपमा** सादृश्यं येभ्यस्तैर**ङ्गैः** करचरणाद्यवयवैः **निराकारतां** मायावाद्युक्तनिरवयवत्वं **निरस्य** । परब्रह्मण्येव दृश्यमानाकारस्य निराकारत्वायोगादिति भावः । **निर्मलधियां** जीवन्मुक्ततया **निर्गता** अविद्याख्यमला **धी**र्येषां तेषां देवकीगर्भादावागतब्रह्मनारदादीनां **नित्यार्चया** नित्यपूजया । 'कृष्णो मुक्तैरिज्यते वीतमोहैः'[1] इत्यादिस्मृतिश्रुत्युक्तमौक्तपूजनं च सङ्गृहीतुं **नित्ये**त्युक्तम् । **नीचैक्यं** जीवैक्यं मायाशबलनीचब्रह्मैक्यं च **निरस्य** पूज्यपूजकयोरैक्यायोगात् । निरस्ताविद्यैर्जीवन्मुक्तैः परममुक्तैश्च मायाशबलितस्य पूजनायोगादिति भावः । **दिग्भ्यो भिन्नमम्बरं** गगनमस्तीति यत्तार्किकमतम् अहङ्कारतत्वात् पञ्चभूतानामेव सृष्टिं वदतां वेदान्तिनां मते

---

१ महाभारततात्पर्यनिर्णयोद्धृतभारतवचनम् । (२/६२)

तदभावात् तस्य **धिकूक्रियार्थं** निराकरणार्थं **दिग्वस्त्रतां** दिगम्बरत्वं दीपयन् प्रकाशयन् **अभवत्**। दिगेवाम्बरं यस्येति समानाधिकरणे समासे दिशामम्बरात्मकत्वप्राप्त्याऽम्बरशब्दस्य वस्त्राकाशोभयवाचकत्वेन चाम्बरव्यतिरिक्तदिशां निराकरणस्यापि सूचितत्वादिति भावः ॥ २८ ॥

**गोपीगृहाङ्गणतले रणदङ्घ्रिवेषो गोवत्सकैः सह चरन् रजसाऽनुषक्तः।**
**देहाभिमानरहितैर्दिवि संस्तुवद्भिर्देवैश्च दृश्यविभवो दयितासमेतैः ।२९।**

**व्या : गोपीति** । **रणत्** क्वणत् **अङ्घ्रिवेषः** पादभूषणं यस्य स तथोक्तः । **रजसा** धूल्या **अनुषक्तः** दिग्धः । **गोपीगृहाङ्गणतले गोवत्सकैः सह चरन् देहाभिमानरहितैः** कृष्णसौन्दर्यदर्शनेन विस्मृतदेहैः । **दिवि** आकाशे । **संस्तुवद्भिः दयिताभिः** कान्ताभिः **समेतैः** । **देवैश्च दृश्यविभवः स शिशुः मे हृद्गः** हृद्गोचरः ध्यानविषय इत्यर्थः । **अस्तु** स्यादित्युत्तरेण[1] सम्बन्धः ॥२९॥

**शार्दूलरम्यनखरञ्जितकण्ठदेशः सासूयदानवनिकायवने हुताशः ।**
**हारस्फुरत्कटककङ्कणनूपुरश्रीर्हासप्रकाशितदिशापटलः स बालः ।३०।**

**व्या : शार्दूलेति**। शिशोः रक्षार्थं भूषणीकृत**शार्दूलरम्यनखेन रञ्जितः** अलङ्कृतः **कण्ठदेशो** यस्य स तथोक्तः। असूयया ईश्वरगुणेषु दोषबुद्ध्या सहिताः **सासूयाः**। 'अक्षान्तिरीर्ष्याऽसूया तु दोषारोपो गुणेष्वपि' इत्यमरः । ते च ते दानवाः **सासूयदानवाः** तेषां **निकायः** पुञ्जः स एव **वनं** तत्र । **हुताशः** अग्निः । **हाराणां स्फुरत्कटकानां** बाहुवलयानां **कङ्कणानां** हस्तभूषणानां **नूपुराणाम**ङ्घ्रिभूषणानां **श्रीः** कान्तिर्यस्य स तथोक्तः । **हासेन** स्मितेन **प्रकाशितः दिशानामाशानाम्**। 'टापं चैव हलन्तानाम्' इति वचनात् **पटलं** मण्डलम् । 'पटलं पेटलं चक्रं चक्रवालन्तु मण्डलम्' इति हलः । यस्य स तथोक्तः । स बालः कृष्णः **सदा हृद्गोऽस्तु** ॥३०॥

---

१ उत्तरेण – ३१तम श्लोकेन

**नव्यस्खलद्वचननन्दितसर्वलोकः सुव्यक्तकुन्तलततिः सुभगाग्रगण्यः।**
**दिग्वस्त्रदर्शितकटिर्दिननाथदीप्तिर्हृद्यः सदाऽस्तु स शिशुर्हृदयङ्गमो मे ।३१**

**व्या :** नव्येति। नव्यं नवीनं स्खलत् अव्यक्तं वचनं तेन नन्दितः सर्वलोको येन स तथोक्तः। सुव्यक्तानां कुन्तलानां ततिर्यस्य स तथोक्तः। सुभगेषु मनोहरेषु अग्रगण्यः श्रेष्ठः। दिग्वस्त्रेण दिगम्बरेण दर्शितकटिः प्रकाशितकटिप्रदेशः। दिननाथस्य सूर्यस्य दीप्तिर्यस्य स तथोक्तः। हृदयङ्गमः हृद्यः स शिशुः सदा मे हृद्योऽस्तु ॥ ३१ ॥

**नारीणामपि मोक्षदः किमिति नोऽदद्या विशुद्धात्मना-**
**मस्माकं त्विति योगिपूगमनसां कोपं विधुन्वन्निव।**
**गोपस्त्रीनिकरस्य दुग्धजलधिं स्वं दातुकामो हरि-**
**स्तद्गेहस्थितदुग्धमण्डलमथो मुष्णंश्चचार व्रजे[1] ॥ ३२ ॥**

**व्या :** नारीणामिति। अथो अनन्तरम्। हे कृष्ण नारीणामपि कामिनीनामपि। मोक्षदस्त्वम्। विशुद्धात्मनां शुद्धान्तःकरणानाम् अस्माकं तु किमिति नोऽदद्या इति योगिपूगमनसां तपस्विगणचित्तानाम्। कोपं बाल्ये मया अपहृतक्षीरऋणपरिहारायैव दत्त इति क्रोधम्। विधुन्वन्निव परिहरन्निव। गोपस्त्रीनिकरस्य स्वं स्वकीयं दुग्धजलधिं क्षीरसमुद्रम्। दातुं कामो यस्य स दातुकामः। 'लुम्पेदवश्यमःकृत्ये तुङ्काममनसोरपि' इतिवचनात् तुमुनो मकारलोपः। हरिः कृष्णः। तद्गेहेषु गोपस्त्रीगृहेषु स्थितं दुग्धमण्डलं क्षीरसमूहम्। मुष्णन् अपहरन् व्रजे चचार ॥ ३२ ॥

**हरौ पयो मुष्णति कापि तुष्टा दधार मर्काय ददत्यमर्षम्।**
**तथाहि तच्छेषमनन्ययोग्यं हरन्तमुद्वीक्ष्य कथं न मन्युः ॥३३॥**

---

१ अक्रुध्यतां केशवोऽनुग्रहाय शुभं स्वयोग्यादधिकं निहन्तुम्।
स क्रुध्यतां नवनीतादि मुष्णन् चचार देवो निजसत्सुखाम्बुधिः ॥
-इति म.भा.ता.नि. (१२/१२०)

**व्या : हराविति** । **हरौ** कृष्णे । **पयः** क्षीरम् । **मुष्णति** सति अपहरति सति । **कापि** स्त्री । **तुष्टा** सन्तुष्टा बभूव । तत् पयः **मर्काय** मार्जाराय । **ददति** सति । **अमर्षं** कोपम् । **दधार** । **तथाहि** तद्युक्तं हि । अन्यस्य योग्यं न भवतीति **अनन्ययोग्यं** **तच्छेषं** कृष्णमुष्टशेषं **हरन्तं** मार्जारम् । **उद्वीक्ष्य कथं मन्युर्न** भवेत् । ब्रह्मादि-देवतायोग्यहरिप्रसादमपहरन्तं मार्जारं प्रत्यमर्षं दधार । न तु पयः पिबन्तं कृष्णं प्रतीत्युक्त्या तस्यास्तत्त्ववेत्रीत्वं ध्वन्यते ॥ ३३ ॥

**[1]प्रगृह्य घण्टामपरेण पात्रं करेण चान्येन पयः पिबन्तम् ।**
**निशाम्य मित्राणि च तर्पयन्तं सुविस्मिता कापि बभूव तूष्णीम् ।३४।**

**व्या : प्रगृह्येति** । **कापि** काचिद् व्रजाङ्गना । **एकेन करेण** ध्वनिनिरोधाय **घण्टां** वाद्यविशेषं **प्रगृह्य** । **अपरेण करेण पात्रं** पयोभाजनं **प्रगृह्य** । **अन्येन करेण च** **पयः पिबन्तम्** । **अपरेण करेण मित्राणि** सखीन् । 'अथ मित्रं सखा सुहृत्' इत्यमरः। **तर्पयन्तं** पयःपाययन्तं कृष्णम् । **निशाम्य** दृष्ट्वा । **सुविस्मिता** करच-तुष्टयेन एकदा व्यापारचतुष्टयं कुर्वन्तं बालं दृष्ट्वा आश्चर्ययुक्ता सती । **तूष्णीं बभूव** । कृष्णभीषणार्थमागता अद्भुतदर्शनेन मूकीभावमवलम्ब्य स्थितेत्यर्थः ॥ ३४ ॥

**करस्थभास्वन्नवनीतमन्या विभीषयन्त्यन्वगमन्मुकुन्दम् ।**
**स्वमौलिमालाच्युतपुष्पपुञ्जैः पदानि तस्येशितुरर्चयन्ती ॥३५॥**

**व्या : करस्थेति** । **करस्थभास्वन्नवनीतं** हस्तस्थहैय्यङ्गवीनं कृष्णम् । **विभीषयन्ती अन्या** गोपी । **स्वमौलिमालाभ्यः** स्वधम्मिल्लस्थपुष्पदामभ्यः। **च्युतानां** गमनभरेण पतितानां **पुष्पाणां पुञ्जैः** । **ईशितुः** परमेश्वरस्य **तस्य** कृष्णस्य । **पदानि** पादचिह्नानि । **अर्चयन्तीव मुकुन्दं** कृष्णम् । **अन्वगमत्** अन्वगच्छत् ॥ ३५ ॥

---

१ हस्ताग्राह्ये रचयति विधिं पीठकोलूखलाद्यै-
छिद्रं ह्यन्तर्निहितवयुने शिक्यभाण्डेषु तद्वत् ।
ध्वान्तागारे धृतमणिगणं स्वाङ्गमर्थप्रदीपं
काले गोप्यो यर्हि गृहकृत्येषु सुव्यग्रचित्ताः ॥ - भागवते (१०/९/३०)

**अधिक्षिपन्त्यां सुकृतेन साकं दधीनि धीरः स चुचोर चोरः ।**
**अगण्यपुण्याख्यधनानि दानी प्रदाय सोऽचूचुरदानतायाम् ।।३६।।**

**व्या : अधिक्षिपन्त्यामिति । स धीरश्चोरः** कृष्णः । स्वेन दधिचौर्ये क्रियमाणे कस्याञ्चित् स्त्रियाम् **अधिक्षिपन्त्यां** सत्यां । **सुकृतेन** तस्याः **पुण्येन साकम्** । **दधीनि चुचोर** तस्करतां कृतवान् । न केवलं तस्याः दधिहानिः कृष्णनिराकरणेन सुकृतहानिरपि जातेत्यर्थः । विष्णुद्रोहिणामैहिकं पारत्रिकमुभयमपि नश्यतीति भावः । **दानी** दानशूरः कृष्णः । **आनतायां** स्वस्मिन् दधि पिबति सति कृष्णार्पणमस्त्विति नम्रीभूतायाम् । **अगण्यपुण्याख्यधनानि** अपरिमितश्रेयोरूपाणि द्रव्याणि **प्रदाय अचूचुरत्** चोरितवान् । कृष्णस्य दधिपानं भक्तिपूर्वकमङ्गीकृतायाः पुण्याभिवृद्धिर्जातेति भावः । चोरोऽपि स्वाक्षेपे कृते सर्वं वस्तु हरति अनुमतौ कृतायां हर्षेणार्धं दत्वा गच्छति तथेत्यपि भावः ।।

**अभूद्यशोदातनयस्य पृथ्व्यां विनिन्दिता तस्करताऽपि भूत्यै ।**
**तथाहि [1]लक्ष्मीनयनान्तभाजामसह्यदोषोऽपि भवेद्गुणाय ।।३७।।**

**व्या : अभू**दिति । **पृथ्व्यां** भूमौ । **विनिन्दिता**ऽपि जुगुप्सिताऽपि । **यशोदातनयस्य** कृष्णस्य । **तस्करता भूत्यै** ऐश्वर्याय । **अभूत्** । कृष्णचौर्यस्मरणेनान्येषां चौर्यनिमित्तकपापनिवृत्तेरिति भावः । नन्वेतत् कथमित्यत आह –**तथाहीति** । **तथाहि** तद्युक्तं हि । **लक्ष्मीनयनान्तभाजां** । नयनयोः अन्तौ नयनान्तौ । लक्ष्म्याः नयनान्तौ अपाङ्गौ तौ भजन्तीति तथोक्ताः तेषाम् । भाग्याधिकानाम् **असह्यदोषोऽपि गुणाय भवेत्** । कृष्णस्यापि लक्ष्मीपतित्वादिति भावः ।। ३७ ।।

**स्वकीयचौर्यं नितरां गृणद्भ्यो ददौ विमुक्तिं किल गोपबालः ।**
**अहं स्वमर्मालपतां स चक्रे फलेन वाग्बन्धमिति प्रतर्के[2] ।।३८।।**

---

१ इन्दिरामन्दसान्द्राग्र्यकटाक्षप्रेक्षितात्मने - इति द्वादशस्तोत्रे (२/९)

२ चौर्यान्मातृनिबद्धचारुचरणः पापौघचौर्याद्बुधैः

**व्या :** स्वकीयेति । **गोपस्य** नन्दगोपस्य **बालः** कृष्णः । **स्वकीयचौर्यं** कृष्णो [१]नवनीतचोर इति स्वचोरत्वम् । **नितराम्** अत्यर्थम् । **गृणद्भ्यो** वदद्भ्यो **विमुक्तिं** मोक्षं **ददौ किल** । **अत्राहं सः स्वमर्म** स्वचौर्यलक्षणं छिद्रम् **आलपतां** वदतां **फलेन** फलदानेन **वाग्बन्धं** वचनप्रतिबन्धनं **चक्र इति प्रतर्के** तर्कं करोमि । यथा चोरः स्वचौर्यं सूचयतो धनादिदानेन तद्वचनं प्रतिबध्नाति तद्वदिति भावः ॥३८॥

**स्वभक्तपुञ्जार्जितपापवृन्दं दिवानिशं यो हरति स्म बालः ।**
**गृहे गृहे दुग्धमसावमुष्णात् तथाहि कस्त्यक्ष्यति सिद्धविद्याम् ॥३९॥**

**व्या :** स्वभक्तेति । **यः** कृष्णः । **दिवानिशम्** अहोरात्रं **स्वभक्तपुञ्जार्जितं पापवृन्दं** दुरितसमूहं [२]**हरति स्म** अहरत् किल । **असौ बालः** कृष्णः । **गृहे गृहे** प्रतिगृहं **दुग्धं** क्षीरम् **अमुष्णात्** अचूचुरत् । **तथाहि** । **सिद्धविद्याम्** अभ्यस्तविद्यां **कस्त्यक्ष्यति** । प्रतिक्षणं स्वभक्तपापानि मुषित्वाऽभ्यस्तचौर्यः कृष्णस्तत्संस्कारवशादिव दुग्धमचूचुरदित्यर्थः ॥ ३९ ॥

**हस्तः किं नवनीतभाजनमुखे न्यस्तस्त्वया श्रीपते**
**दृप्तप्रस्तरसम्मितातिकठिनावस्थान्तराया गृहे ।**
**युक्ता न स्थितिरस्य कोमलहृदस्तत्तन्वि चित्ते मम**
**प्रीत्या स्थापयितुं मृगाक्षि मृदुनीत्युक्त्वा हसन् पात्वसौ ॥४०॥**

---

बद्धस्त्वं पथि पुण्डरीकमुनिना जारेति सम्बोधितः ।
तुङ्गातीरगतोऽसि विठ्ठल दिशन्नन्याकृतिर्वाञ्छितं
वेत्तॄणां यदि मे न दास्यसि पदं त्वत्संस्थितिः कथ्यते ॥
- तीर्थप्रबन्धे (३/१३)इतिवत् ।

१ नवनीतनवाहारः । - इति श्रीकृष्णाष्टोत्तरशतनामस्तोत्रे ।

२ नारायणो नाम नरो नराणां प्रसिद्धचोरः कथितस्त्रिलोक्याम् ।
अनेकजन्मार्जितपापसञ्चयं हरत्यशेषं स्मृत्रमात्र एव ॥
-इति कृष्णामृतमहार्णवोद्धृतपुराणवचनस्य व्याख्यारूपोऽयं श्लोकः ॥

**व्या : हस्त** इति । हे **श्रीपते** लक्ष्मीपते कृष्ण । **नवनीतस्य भाजनं** पात्रम् । 'पात्रामत्रं च भाजनम्' इत्यमरः । तस्य **मुखे** । **हस्तः** करः । **किं** किमर्थम् । **न्यस्तः** निहितः । इति कयाचिदुक्ते तां प्रति – हे **तन्वि** कृशाङ्गि **मृगाक्षि** हरिणनयने। **दृषा प्रस्तरसम्मिता** पाषाणसदृशा । 'पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्' इत्यमरः । अत एवातिकठिणा **अवस्था** यस्य तत् **अन्तरं** हृदयं यस्याः सा **दृषप्रस्तरसम्मितातिकठिणावस्थान्तरा** । तस्यास्तव **गृहे कोमलहृदः** मृदुलान्तरस्यास्य नवनीतस्य । **स्थितिर्न युक्ता** नोचिता । **तत्** तस्मात् । **मृदुनि** कोमले **मम चित्ते** तं नवनीतं **प्रीत्या** प्रेम्णा **स्थापयितुं** नवनीतभाजनमुखे हस्तो न्यस्त **इत्युक्त्वा हसन्नसौ** कृष्णः **पातु** रक्षतु । अत्र 'हस्तः किम्' इत्यादिना 'श्रीपते' इत्यन्तेन गोप्याः कोपनटनं, **दृषप्रस्तरे**त्यादिना निस्पृहस्य त्वदनुग्रहार्थमागतस्य मम निराकरणमनुचितम्, 'तन्वि मृगाक्षि' इत्यनेन तस्याः वशीकरणायानुनयः, 'मृदुनि चित्ते' इत्यनेन ज्ञानशून्यस्य स्त्रीजनस्याप्यनुग्रहं कुर्वतो देवस्यानुकम्पातिशयः स्वचौर्यगूहनचातुर्यं च द्योत्यते ॥ ४० ॥

**यस्य श्रीचरणाम्बुजेन शकटः सञ्चूर्णिताङ्गोऽभवत्**
**तस्याङ्गे मृदुता न युक्तिसहितेत्युक्ते मुदा योऽवदत् ।**
**बाल्ये मामधिरोप्य वक्षसि शिशुं सन्नर्तयन्त्यास्तव**
**स्थूलोरोजसमागमेन तदिति प्रौढिं स दद्यान्मम ॥ ४१ ॥**

**व्या : यस्ये**ति । **यस्य श्रीचरणाम्बुजेन** । **शकटः** तन्नामासुरः । **सञ्चूर्णितानि अङ्गानि** यस्य **सोऽभवत्** । **तस्य** तादृशस्य तवा**ङ्गे** अवयवे । **मृदुता** कोमलता । **युक्तिसहिता** युक्तियुक्ता **न** । तवान्तरम् अतिकठिनं मम हृदयं मृद्विति तदेतादृशस्य युक्तिविरुद्धमित्यर्थः । **इति** तयो**क्ते** यः कृष्णः **बाल्ये शिशुं मां वक्षसि अधिरोप्य सन्नर्तयन्त्यास्तव स्थूलौ** उरो**जौ** स्तनौ तयोः **समागमेन** संसर्गेण । स्त्रीस्तनयोः काठिण्यस्य प्रसिद्धत्वादिति भावः । **तत्** काठिण्यमभवत् । संसर्गजा दोषगुणा भवन्तीति न्यायात् पादमात्रे तत्काठिण्यं नान्यत्र । अयमपि

तवैव दोषो न ममेति भावः । इति इत्थम् । **मुदा** प्रीत्या । **अवदत्** स कृष्णः । **मम** मह्यम् । **प्रौढिं** वाक्चातुर्यम् । **दद्यात्** ॥ ४१ ॥

**बध्नाम्यद्य भवन्तमङ्ग कितवं साध्यं ततः किं प्रिये**
**दुग्धानां परिरक्षणं कपटसन्नद्धे निबद्धे त्वयि ।**
**मुग्धे त्वं विरसा समुज्झसि परं स्निग्धं न तन्मां त्यजेत्**
**पद्माक्षीत्यबलामुदीर्य वशयन् बुद्धिं स दद्यान्मम ॥ ४२ ॥**

**व्या : बध्नामीति** । हे **अङ्ग** प्रिय कृष्ण । **कितवं** धूर्तम् । 'उन्मत्तः कितवो धूर्तः' इत्यमरः । **भवन्तं बध्नामि** संयतं करोमि । अङ्गेति सम्बोधनात् बन्धनं प्रेम्णैव न कोपेनेति ध्वन्यते । हे **प्रिये ततः** मम बन्धनात् । तव **साध्यं किम्** इति कृष्णवचनम् । हे कृष्ण **कपटसन्नद्धे** छद्मसन्नाहवति **त्वयि निबद्धे** सति । **दुग्धानां** क्षीराणां **परिरक्षणं** भवेत् दुग्धरक्षणं साध्यमित्यर्थः । इति गोपीवचनम् । हे **मुग्धे** मनोहरे **पद्माक्षि** कमलनयने । **विरसा** स्नेहरहिता **त्वं मां समुज्झसि**। **परन्तु स्निग्धं** चिक्कणताख्यस्नेहगुणयुक्तम् । 'स्नेहः चिक्कणता' इत्यमरः । 'यद्यद्विभूतिमत्सत्वम्'[1] इति वाक्यात् क्षीरे स्वस्य विशेषसन्निधानं सूचयितुमिदमुक्तम् । स्नेहयुक्तमिति ध्वनिः । **तद्दुग्धं मां न त्यजेत्** । दुग्धस्थरूपान्तरेण मया दुग्धं पीतं चेत् कथं दुग्धरक्षणं भवेत् । तस्मान्मम बन्धनं व्यर्थमिति भावः । इत्युदीर्य उक्त्वा । **अबलां** कामिनीम् । **वशयन्** । **स** कृष्णः । **मम बुद्धिं दद्यात्** । अत्र 'विरसा त्वं समुज्झसि' इत्यनेन अतिमनोहरे मयि अनुरागाभावः कामिन्यास्तव नोचितः, 'स्निग्धं न तन्मां त्यजेत्' इत्यनेन अनुरागेणाहं वश्यः, 'मुग्धे पद्माक्षि' इत्यनेन तस्या वशीकरणायानुनयश्च द्योत्यते ॥ ४२ ॥

**ततः क्वणन्नूपुरशोभिपादाः स्त्रियो विदग्धैरनुमेयमध्याः ।**
**शुचिस्मिताः कुण्डलशोभिगण्डा न्यवेदयंस्तच्चरितानि मातुः ॥४३॥**

---

१ गीता १०/४१.

**व्या : तत** इतिं । **क्वणद्भिः नूपुरैः शोभिनौ पादौ** यासां ताः । **विदग्धैः** प्रौढैः। **अनुमेयः** प्रतर्क्यो **मध्यो** यासां ताः । सूक्ष्ममध्या इत्यर्थः । **शुचि** मनोहरं **स्मितं** यासां ताः । **कुण्डला**भ्यां ताटङ्काभ्यां **शोभिनौ गण्डौ** यासां ताः [१]**स्त्रियो** व्रजाङ्गनाः । **तच्चरितानि** कृष्णचौर्यव्यापारान् । **मातुः** यशोदायाः । **न्यवेदयन्** विज्ञापयामासुः ।। ४३ ।।

**यदाऽऽत्मजस्ते पिबति स्म दुग्धं विभिद्य पात्राणि तदा ममासीत् ।**
**न मन्युरुत्सर्पितदीयदन्तदृगन्तकान्तिं हृदि तर्कयन्त्याः ।।४४।।**

**व्या : यदेति** । हे यशोदे **यदा ते** तव **आत्मजः** तनूजः कृष्णः । **पात्राणि** दुग्धभाजनानि । **विभिद्य** दण्डेन सच्छिद्राणि कृत्वा । **पयः पिबति, तदा उत्सर्पिणीं** दुग्धं पातुं विवृतवदनत्वात् स्वकृतकौशल्येन स्मितयुक्तत्वाच्च दुग्धभाजनपर्यन्तम् ऊर्ध्वं गच्छन्तीं **तदीयानां** कृष्णसम्बन्धिनां **दन्तानां** धवलदन्तानां **दृगन्तयोः** पुण्डरीकाक्षत्वाच्छिद्रमेव पश्यतोर्ध्वललोचनान्तयोश्च । **कान्तिम्** । **हृदि** मनसि **तर्कयन्त्याः मम मन्युः** क्रोधो **नासीत्** । क्षीरधारायां कृष्णदन्तदृगन्तधवलकान्तिभ्रान्त्या कृष्णस्यापराधाभावं मत्वा कोपो नासीदित्यर्थः । **भ्रान्तिरलङ्कारः** । भ्रान्तिर्विपर्ययज्ञानमित्युक्तत्वात् ।। ४४ ।।

**पयः प्रमुष्णन् सखि भर्त्सनार्थं समागतानामपहृत्य चेतः ।**
**स्वकृत्यसाध्यान्यवलम्ब्य कण्ठं जिघृक्षति स्वैरमयं सुतस्ते ।।४५।।**

**व्या : पय** इति । हे **सखि** यशोदे । **ते सुतः** कृष्णः । **पयो** दुग्धम् । **प्रमुष्णन्** अपहरन् । **भर्त्सनार्थं** भीषयितुम् । **समागतानाम्** अस्माकं **चेतः** । जात्येकवचनम् । चेतांसि । स्वलावण्यातिशयेनापहृत्य स्वस्य कृत्या प्रयत्नेनासाध्यानि

---

१ अग्रे द्विजत्वत उपावहृदेष नीलां गोपाङ्गना अपि पुरा वरमापिरे यत् ।
संस्कारतः प्रथममेव सुसङ्गमो नो भूयात् तवेति परमाप्सरसः पुरा याः ।।
- म.भा.ता.नि. (१३/५०)

दूरस्थानि दुग्धपात्राणीत्यर्थः । **कण्ठं** चेतसोपहृतत्वात् स्तम्भीभूतानामस्माकं कण्ठं **अवलम्ब्य** आरुह्य । **स्वैरं** स्वेच्छया । अस्मच्छङ्काभावादिति भावः । **जिघृक्षति** ग्रहीतुमिच्छति । स्त्रीणां मनोहरः कृष्ण इति भावः ॥ ४५ ॥

**यदीदृशं कर्म करोषि कृष्ण न तर्हि नन्दस्य सुतस्त्वमन्यः ।**
**इतीरिते हन्त हसन् यशोदे बहून्यनिष्टानि स नस्तनोति ॥४६॥**

**व्या :** यदीति । हे **कृष्ण** । **यदीदृशं** दध्यपहारादिरूपं **कर्म करोषि** । **तर्हि** त्वं **नन्दस्य** योग्यः **सुतो न** भवसि किन्त्वन्य एव । पितुरयशस्करः सुतः सुतो न भवतीति भावः । हे **यशोदे** अस्माभिरि**तीरिते** सति स कृष्णः **हसन्** नन्दस्य सुतो न भवसीति भवतीभिरुच्यते चेन्न भवामीति हसन् । **नोऽ**स्माकं **बहून्यनिष्टानि तनोति** करोति । हन्तेत्यनेन बहून्यनिष्टानि कृतानि चेत् । एतादृशस्त्वं नन्दस्य सुतो न भवसीति सुतरां वक्ष्यन्ति तन्ममेष्टमिति सूचयतीति भावः ॥ ४६ ॥

**इदं हि देवस्य समर्पणार्हमितीरिते तर्ह्यहमेव देवः ।**
**स इत्थमाभाष्य तदेव भुङ्क्ते न देवि पुत्रस्तव देवभक्तः ॥४७॥**

**व्या :** इदं हीति । हे कृष्ण इदं दुग्धादि । **देवस्य** विष्णोः **समर्पणार्हं** समर्पणयोग्यं त्वया न ग्राह्यमिति वाक्यशेषः । **इतीरिते** सति यदि देवस्य समर्पणार्हं **तर्ह्यहमेव देवः** मदर्पणं कर्तव्यमिति स कृष्णः **इत्थमाभाष्य** । **तदेव** देवाय विनियुक्तमेव । **भुङ्क्ते** । हे **देवि** यशोदे । **तव पुत्रः देवभक्तो न** भवति । वैष्णवपुत्रोऽप्ययं मायावादिवत् अहं ब्रह्मास्मीति वदतीति निन्दाभासः । स्वस्यैव परदेवत्वादिति तत्त्वम् ॥ ४७ ॥

**गृहे गृहेऽयं नवनीतदुग्धदधीनि सर्वाण्यपहृत्य भुङ्क्ते ।**
**तथापि तृप्तिं न सुतस्तवैति किमस्य भूतानि वसन्ति कुक्षौ ॥४८॥**

**व्या : गृहे गृह** इति । **अयं तव सुतः** कृष्णः । **गृहे गृहे सर्वाणि** नवनीतदुग्धानि । **अपहृत्य** चौर्यबलात् स्वीकृत्य **भुङ्क्ते** । प्रतिगृहं कृष्णचौर्यस्यैवाघोष्यमाणत्वादिति भावः । **तथापि** एवं भुञ्जानोऽपि । **तृप्तिं नैति** । 'सौहित्यं तर्पणं तृप्तिः' इत्यमरः । **अस्य** कृष्णस्य । **कुक्षौ** जठरे । 'पिचण्डकुक्षी जठरोदरं तुन्दम्' इत्यमरः । [१]**भूतानि** ब्रह्मराक्षसादिभूतानि । **वसन्ति किम्** । भूतग्रस्तदेहस्य बहुभोजनदर्शनादिति बाह्यो भावः । **भूतानि** पृथिव्यादिपञ्चमहाभूतानि **अस्य कुक्षौ वसन्ति** । तस्मादस्य **इदं किं** किमाश्चर्यम्? पञ्चमहाभूतानामप्याधारीभूताखिलम्भरतनूदरस्यास्योदरपूरकं ब्रह्माण्डमपि न भवति । अल्पमिदं नवनीतादिकं न कथञ्चित् पूरकम् । अतो वस्तुकृता नास्य तृप्तिः किन्तु स्वभावादेवेत्यान्तरो भावः ॥४८॥

**न [२]मुञ्च वत्सांस्त्वमिहेत्य बद्धानितीरिते पुण्यपदे यशोदे ।**
**स्मितोल्लसद्वक्त्रमदात् सुतस्ते स्वभाव इत्युत्तरमुत्तरज्ञः ॥४९॥**

**व्या : न मुञ्चेति** । हे कृष्ण **त्वं एत्य इह** गृहे । **बद्धान् वत्सान्न मुञ्चेतीरिते** सति **पुण्यस्य पदं** स्थानम् अवस्थितिः यस्यां सा पुण्यपदा । तस्याः सम्बुद्धिः **पुण्यपदे** । हे **यशोदे** । उत्तरं प्रतिवाक्यं जानातीत्युत्त**रज्ञः** । ते सुतः कृष्णः **स्मितेनोल्लसत्** प्रकाशमानं **वक्त्रं** मुखं यथा भवति तथा स्वभाव **इत्युत्तरमदात्**। ज्ञातापराधस्योत्तरापरिस्फूर्त्या ममायं स्वभाव इत्येवोत्तरमदात् । लोकेऽप्य-कार्यमिदं त्वया न कर्तव्यमिति बहुधा स्वकीयैरुक्तेऽपि तत्रैवासक्तचित्ताः ममायं

---

१ ब्रह्मादयो वा । **'ब्रह्मादयो हि भूतानि** तेषामन्तर्गतो हरिः । समः स सर्वभूतेषु य एवं वेद तत्त्ववित्' इति भारते ।' इत्युक्तेः । 'कुक्षिगं यस्य विश्वं सदाऽजादिकम्' । इति द्वादशस्तोत्रवचनाच्च ।

२ वत्सान् मुञ्चन् क्वचिदसमयान् क्रोशसञ्जातहासः
स्तेयं स्वाद्वत्त्यथ दधि पयः कल्पितैः स्तेययोगैः ।
मर्कं भोक्ष्यन् विभजति स चेन्नास्ति भाण्डं भिनत्ति
द्रव्यालाभे सुभृशकुपितो यात्युपक्रोश्य तोकान् ॥ - भागवते (१०/९/२९)

स्वभाव इति यथा वदन्ति तथेति भावः । 'भवपाशाच्च मोचकः'[१] । ''अज्ञानां ज्ञानदो विष्णुर्ज्ञानिनां मोक्षदश्च सः''[२] । ''देवस्यैष स्वभावोऽयम्[३]'' इति वचनात् बन्धमोचकत्वं मम स्वभाव इति हृदयम् ॥४९॥

**कस्मादङ्ग नयस्युलूखलमितो दुग्धस्य पात्रादधः**
**स्निग्धं स्थापयितुं ततश्च किमिति प्रोक्ते प्रभुर्योऽगदत् ।**
**मध्यस्याग्रसुजातसुस्मितपयःपात्राननस्योपमां**
**मुग्धे वीक्षयितुं तवेति स पटुर्दुष्कर्मणां गूहने ॥ ५० ॥**

**व्या :** कस्मादिति । अङ्ग प्रिय ।

'अङ्गं मात्रान्तकप्रियप्रतीकेषु प्रधानके ।
देशभेदेऽपि पुंसि स्यात् अङ्गेत्यामन्त्रणेऽव्ययम्'

इति रत्नमाला । उलूखलं व्रीह्याद्यवहननयोग्यं दारुमयभाजनविशेषम् । 'उदूखलमुलूखलम्' इत्यमरः । **इतो** देशात् । **कस्मान्नयसि** इति कस्याश्चिद्वचनम् । **दुग्धस्य** क्षीरस्य **पात्रादधः स्निग्धमुलूखलं स्थापयितुं** नयामीति कृष्णवचनम् । **ततश्च** किं दुग्धपात्रादधःस्थापनेन प्रयोजनमिति मयोक्ते **प्रभुः** समर्थः यः कृष्णः । हे **मुग्धे** मनोहरे । **अग्रे** ऊर्ध्वभागे **सुष्ठु जातं सुस्मितमेव पयः** तस्य पात्रमाधारीभूतमाननं यस्य तत् **अग्रसुजातसुस्मितपयःपात्राननं** तस्य । **तव मध्यस्योपमां** सादृश्यं **वीक्षयितुं** दर्शयितुं इति **अगदत्** । गद व्यक्तायां वाचि लङ् । **स** कृष्णः **दुष्कर्मणां गूहने** गोपने । **पटुः** समर्थः । उपर्यधोविस्तृतस्य मध्ये कृशस्य उलूखलस्योपरि हरिद्रादिरञ्जितपयःपात्रे निहिते उपरिस्थितमन्दहासोपेतकुङ्कुमासक्तमुखस्य तव मध्यस्योपमा भविष्यतीत्युक्त्वा मां वशीकृत्य चौर्यं चातुर्येण गूहितवानित्यभिप्रायः । दुष्कर्मणां गूहने पटुरित्यनेन पापपरिहारसामर्थ्यं ध्वन्यते ॥ ५० ॥

१ विष्णुतत्वनिर्णयोद्धृतप्रमाणवचनम् ।
२ विष्णुतत्त्वनिर्णयोद्धृतप्रमाणवचनम् ।
३ माण्डूकोपनिषत् (१/१५)

**क्वचित् करेणैव स दुग्धभाजनं क्वचिच्च पादेन समीक्षते सखि ।**
**समागताः पश्यति पृष्ठतस्तदा स विश्वतश्चक्षुरिवास्ति बालकः ५१**

**व्या :** क्वचिदिति । हे सखि यशोदे । **स** कृष्णः **क्वचित्** स्थले । **दुग्धभाजनं करेणैव समीक्षते** करप्रसारणं कृत्वा जानाति । **क्वचित् पादेन समीक्षते** । **तदा** चौर्यकरणसमये **पृष्ठतः** पश्चाद्भागे **समागताः** नः **पश्यति** । एतादृशः **सः** तव **बालकः विश्वतः** सर्वावयवेषु **चक्षुर्यस्य स इवास्ति** । सर्वत्र जागरूकता प्रौढचोरस्य लक्षणमिति भावः । ''विश्वतश्चक्षुरुत विश्वतोमुखः''[1] इति श्रुतेः । विश्वतश्चक्षुस्त्वं सहजमिति हृदयम् ।। ५१ ।।

**उलूखले तं यदि बन्धयामो नयेत् तदोलूखलमेव बालः ।**
**ध्रुवं गृहस्तम्भवरे निबद्धो गृहाण्यसौ पातयितुं समर्थः ।।५२।।**

**व्या :** उलूखल इति । **तं** कृष्णम् । **यदि उलूखले बन्धयामः** तव **बालः उलूखलमेव नयेत्** । **ध्रुवं** निश्चयः । **गृहस्तम्भवरे निबद्धः असौ गृहाणि पातयितुं समर्थः** । उलूखलं नयेदित्यनेन यमलार्जुनभङ्गध्वननात् गोपीनामनागतज्ञानं गम्यते ।।५२।।

**विश्वम्भरस्यास्य हि बन्धनाय दामानि सम्पादयितुं क ईशः ।**
**बद्धः कथञ्चिद्यदि तर्हि बद्धा मध्ये विलीना वयमेव नूनम् ।।५३।।**

**व्या :** विश्वम्भरस्येति । विश्वं बिभर्तीति **विश्वम्भरः** । तस्य जगद्भर्तुः । **अस्य** कृष्णस्य । **बन्धनाय दामानि सम्पादयितुं क ईशः** कः समर्थः । कोऽपि समर्थो न भवतीत्यर्थः । **यदि कथञ्चित्** कृच्छ्रात् । अस्माभिर्बद्धस्**तर्हि मध्ये** कृष्णस्य मध्ये । **विलीनाः** । विश्वम्भरत्वादिति भावः । **वयमेव बद्धाः नूनम्** । कृष्णस्य नित्यमुक्तत्वेनासङ्गत्वेन च बन्धायोगात् । तद्बन्धने स्वपरिश्रिताकाशबन्धनेन स्वस्यैव बन्धनवत् तन्मध्यस्थिताः वयमेव बद्धाः भवेम इत्यर्थः । अनेनापि यशोदया करिष्यमाणकृष्णबन्धनज्ञानं सूच्यते ।। ५३ ।।

---
१ ऋग्वेदे (१०/८१/३)

**अहो यशोदे तव बालकोऽयं गृहे गृहेऽत्युष्णमपीह दुग्धम् ।**
**पिबन्न तापं लभते कदापि किमस्य वक्त्रे जलराशिरास्ते ॥५४॥**

**व्या :** अहो इति । हे यशोदे अयं तव बालकः इह गृहे गृहे प्रतिगृहम् । अत्युष्णमपि अत्यन्ततप्तमपि । दुग्धं पिबन् कदापि तापं न लभते । अहो आश्चर्यम् । **अस्य वक्त्रे** [१]जलराशिः जलसमूहः समुद्रो वा **आस्ते किम्** । अनेन कृष्णजिह्वायां वरुणोऽस्तीति ध्वन्यते ॥ ५४ ॥

**विलोक्य दूरस्थितदुग्धभाण्डमुलूखलाद्यैर्यतते गृहीतुम् ।**
**शिशुः स तावत् क्वचिदेधतेऽहो किमेष गूढाष्टमहाविभूतिः ॥५५॥**

**व्या :** विलोक्येति । **सः शिशुः** कृष्णः । **दूरस्थितदुग्धभाण्डं विलोक्य** उलूखलाद्यैः साधनैर्गृहीतुं यतते प्रयत्नं करोति । **क्वचित्** जनसञ्चाररहितप्रदेशे ताव-दूरस्थितदुग्धभाण्डपर्यन्तं **एधते** वर्धते । **अहो** आश्चर्यम् । **एष** कृष्णः अष्टौ महत्यः विभूतयः अणिमाद्यैश्वर्याणि । गूढाः गूहिताः [२]अष्टमहाविभूतयः यस्य सः **गूढाष्टमहाविभूतिः** । **किम्** अणिमाद्यैश्वर्यमस्मिन्निगूढं तिष्ठतीत्यर्थः ॥५५॥

---

१ **'रस एव जिह्वा'** – भागवते (२/१/३०)

२ अणिमा महिमा मूर्तेर्लघिमा प्राप्तिरिन्द्रियैः ।
प्राकाश्यं श्रुतदृष्टेषु शक्तिप्रेरणमीशिता ॥
गुणेष्वसङ्गो वशिता यत्कामस्तदवाप्स्यति ।
एता मे सिद्धयः सौम्य अष्टावौत्पत्तिका मताः ॥ - भागवते (११/१५/४,५)
'सर्वाधिका अणिमाद्या विष्णोर्नान्यस्य कस्यचित् ।
स्वाभाविका विरिञ्चस्य तत्प्रसादात् पराधिकाः' इति स्वाभाव्ये ॥
- भा.ता. (११/१५/३)
'देवेष्विन्द्रेशवायुश्रीविष्णूनामुत्तरोत्तरम् ।
सिद्धयः परिपूर्णास्तु विष्णोरेकस्य नान्यगाः' इत्यैश्वर्ये ॥ - भा. ता.(११/१५/६)
'एवमेव तु निःसीमा देवानामष्टसिद्धयः ।
उत्तरोत्तरमत्रापि यावद्विष्णुः स पूर्णभुक्'इति हरिवंशेषु ॥- भा.ता.(११/१५/६)

**न निष्ठुरा वाक् समुदेति वक्त्रात् करश्च नस्ताडयितुं यशोदे ।**
**विलोलनेत्रं तव पुत्ररत्नं ध्रुवं सुतस्ते जगतां नियन्ता ॥५६॥**

**व्या :** नेति । यशोदे विलोले आरोपितभयेन चञ्चले नेत्रे यस्य तं तव **पुत्ररत्नं** पुत्रश्रेष्ठं कृष्णम् । विलोक्य । **वक्त्रादस्मन्मुखात्** । **निष्ठुरा** परुषा **वाक्** वाणी । **न समुदेति** नोद्गच्छति । **नः करश्च ताडयितुं** नोदेति । **ते सुतः** कृष्णः । **ध्रुवं** निश्चयेन । **जगतां नियन्ता** नियामकः । अन्यथा इदं कथं स्यादिति भावः ॥ ५६ ॥

**बतान्धकारार्पितदध्यमत्रमपि स्वभास्वन्नयनान्तलक्ष्म्या ।**
**समीक्षते लोचनयोः किमेष बिभर्ति बालस्तव पुष्पवन्तौ ॥५७॥**

**व्या :** बतेति । कृष्णः **अन्धकारार्पितदध्यमत्रम्** अन्धकारनिहितदधिपात्रम् । **स्वस्य भास्वन्नयनान्तलक्ष्म्या** प्रकाशमानकटाक्षकान्त्या । **समीक्षते** पश्यति । हे यशोदे **तव एष बालः लोचनयोः पुष्पवन्तौ** दिवाकरनिशाकरौ । **बिभर्ति किम्** । 'एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ' इत्यमरः । अन्यथाऽन्धकारस्थितदर्शनं कथं स्यादिति भावः । ''सूर्याचन्द्रमसावस्य चक्षुषी[१]'' इति श्रुतेः । कृष्णलोचनयोः सूर्याचन्द्रमसौ तिष्ठत इति हृदयम् ॥ ५७ ॥

**मन्त्रात्मा स कवाटमाशु विवृतं कर्तुं समर्थो वृथा**
**बन्धं नित्यविमुक्तिदो रचयितुं विश्वम्भरोऽयं जगत् ।**
**वक्त्रे दर्शयितुं कठोरवचसां विस्मापनं कर्हिचि-**
**द्वृद्धः पाटयितुं च तद्विटपिनो किं देवि कुर्मो वयम् ॥५८॥**

**व्या :** गोप्यः स्वानामतीतानागतज्ञानं सूचयन्त्य आहुः – **मन्त्रात्मेति** । **मन्त्रात्मा** मन्त्रदेवता **स** कृष्णः । कवाटेन पिहितं चेत् **कवाटं आशु** शीघ्रेण **विवृतं कर्तुं समर्थः** । मन्त्रसिद्धो हि कवाटार्गलादिकं छिनत्तीति भावः । अनेन वसुदेवकारागृहद्वारकवाटविवरणविषयकं ज्ञानं सूच्यते । **नित्यविमुक्तिदः**

---

१ 'शशिसूर्यनेत्रम्' - गीता (११/१९)

साक्षात्संसारान्मोक्षदः कृष्णः । **बन्धं** अस्मत्कृतबन्धनं **वृथा** व्यर्थं **रचयितुं समर्थः** । अन्येषां बन्धविध्वंसदः कृष्णः स्वबन्धध्वंसं कथं न कुर्यादिति भावः । अनेन वसुदेवस्य कंसकृतशृङ्खलाबन्धध्वंसः सूच्यते । **विश्वम्भरोऽयं कठोरवचसां** निष्ठुरवचनानाम् । अस्माकं विस्मापयतीति **विस्मापनं जगत् वक्त्रे दर्शयितुं समर्थः** । अत एव विश्वम्भर इत्युक्तम् । अनेनोत्तरत्र कृष्णेन स्वमात्रे स्वोदरे दर्शयिष्यमाणब्रह्माण्डविषयकानागतज्ञानं सूच्यते । **कर्हिचित्** कथञ्चित् **बद्धश्चेत् तद्विटपिनः** बन्धनरज्वाधारीभूतपादपान् । 'विटपी पादपस्तरुः' इत्यमरः । **पाटयितुं** उन्मूलयितुं **समर्थः** । अनेन यशोदाकर्तृकबन्धनयमलार्जुनभङ्गविषयक ज्ञानं सूच्यते । हे **देवि** यशोदे । एतादृशे तव सुते **वयं किं कुर्मः** किं वा प्रतीकारं करवाम । एतावद्भिः प्राचीनपद्यैः अध्यात्मरसस्याद्भुतरसस्य च सङ्ग्रहेण सर्वत्र रसद्वयसाङ्कर्याद्रसवदलङ्कारो द्रष्टव्यः ॥ ५८ ॥

**इति स्म सङ्कीर्त्य सुराधिराजं व्रजस्त्रियो भाविविमुक्तिबीजम् ।**
**विलोलनेत्रं तमवेक्ष्य वाचः शनैरलञ्चक्रुरनेकभावाः ॥ ५९ ॥**

**व्या :** इतीति । **व्रजस्त्रियः भाविविमुक्तिबीजं** भविष्यन्मोक्षहेतुम् । 'हेतुर्ना कारणं बीजम्' इत्यमरः । **सुराधिराजम्** अमरचक्रवर्तिनं कृष्णम् । **इति** इत्थं प्रकारेण । सङ्कीर्त्य । अनेन गोपीभिरादरेण सङ्कीर्तनं कृतं न तु कोपेन निन्दा कृतेति ध्वन्यते । **विलोलनेत्रं** भयनटनेन कातरनेत्रं **तं** कृष्णमेवावेक्ष्य । **अनेकभावाः** नानाभिप्रायाः **वाचः** कृष्णचौर्यप्रकटनव्याजेन तन्माहात्म्यवर्णनपराः वाणीः । **शनैः** शनकैः । **अलञ्चक्रुः** कृष्णमाहात्म्यसङ्कीर्त्या भूषयाञ्चक्रुः । समाप्तिं च निन्युः । प्राक् कृष्णकथाश्रवणादिकं कृत्वा पश्चात्कृष्णदर्शनेन विमुक्तिं गता इव तूष्णीं बभूवुरित्यर्थः ॥ ५९ ॥

**सदा सदानन्दसुतृप्तवृत्तेर्भवद्गृहस्थैर्नवनीतमुख्यैः ।**
**समा ममैषा मृदितीव शंसन् मृदं जघास स्ववशोऽखिलेशः ॥६०॥**

**व्या : सदेति । स्ववशः** स्वतन्त्रः । **अखिलेशः** सर्वेश्वरः कृष्णः । मातरं प्रति स्वचौर्यपैशुन्यकथनात् कुपित इव । **सदा** सर्वदा । संश्चासावानन्दश्च **सदानन्दः** तेन **सुतृप्ता वृत्तिर्वर्तनं** यस्य तस्य । **मम एषा मृत्** मृत्तिका । 'मृन्मृत्तिका प्रशस्ता तु मृत्स्ना मृत्सा च मृत्तिका' इत्यमरः । **भवद्गृहस्थैः** भवतीनां यानि गृहाणि तेषु तिष्ठन्तीति तथोक्तानि तैः । **नवनीतं** हैयङ्गवीनं **मुख्यं** येषां तानि तैः । दुग्धादिभिः **नवनीतमुख्यैः समा** सदृशी । इति **शंसन्निव । मृदं जघास** मृत्तिकां भक्षितवान् । सदानन्दतृप्तस्य मृदिव नवनीतादिकमप्यप्रयोजकमिति भावेनेवेति भावः ॥ ६० ॥

**गोपीभिरापादितचौर्यकर्मा मातुः समक्षं महितस्त्रिलोक्याम् ।**
**मृत्स्नां किलादद्वसुदेवसूनुर्नात्रास्ति चोरत्वमितीव हिन्वन् ॥६१॥**

**व्या : गोपीभिरिति ।** मातुर्यशोदायाः **समक्षं गोपीभिः** व्रजाङ्गनाभिः । **आपादितं** प्रकटितं **चौर्यकर्म** स्तेयव्यापारो यस्य स तथोक्तः । त्रयाणां लोकानां समाहारस्त्रिलोकी तस्यां **महितः** पूज्यः **वसुदेवसूनुः** कृष्णः । अत्र मृद्भक्षणे । मम **चोरत्वं न** कथयन्ति किलेति **हिन्वन्** ज्ञापयन्निवाक्रोशेनेव । **मृत्स्नां अदत्** अभक्षयत् ॥ ६१ ॥

**मृदं समास्वाद्य जगन्ति मातुः प्रदर्शयामास [1]किलास्यदेशे ।**
**अहं सुपात्रे रसया प्रदत्ता सहस्रधाऽसौ फलितेति मन्ये ॥६२॥**

---

१ स कदाचिच्छिशुभावं कुर्वन्त्या मातुरात्मनो भूयः ।
अपनेतुं परमेशो मृदं जघासेक्षतां वयस्यानाम् ॥
**मात्रोपालब्ध ईशो मुखविवृतिमकर्नाम्ब मृद्भक्षिताऽहं**
**पश्येत्यास्यान्तरे तु प्रकृतिविकृतियुक्सा जगत्पर्यपश्यत् ।**
**इत्थं देवोऽप्यचिन्त्यामपरदुरधिगां शक्तिमुचां प्रदर्श्य**
**प्रायो ज्ञातात्मतत्त्वां पुनरपि भगवानावृणोदात्मशक्त्या ॥**
- म. भा. ता. नि (१३/४,५)
किञ्चित्करोत्युर्वपि यत् स्वदत्तं सुहृत्कृतं फल्ग्वपि भूरिकारि ।
मयोपनीतं पृथुकैकमुष्टिं प्रत्यग्रहीत् प्रीतियुतो महात्मा ॥
(भागवते १०/९९/३३) इतिवत् ।

**व्या : मृदिति** । कृष्णः **मृदं** समास्वाद्य भुक्त्वा । **आस्यदेशे जगन्ति** [१]भुवनानि । **मातुर्यशोदायाः** । **प्रदर्शयामास किल** । **अहं रसया** षड्रसभरितया भूम्या । भक्तिरसभरितयेति ध्वन्यते । **सुपात्रे** दानयोग्ये कृष्णे । 'पात्रं तु भाजने । तीरद्वयान्तरे योग्ये द्रविणे राजमन्त्रिणि' इति भास्करः । **प्रदत्ता** । विश्राणिताऽसौ मृत् **सहस्रधा** सहस्रप्रकारेण **फलितेति मन्ये** । अत एवाण्वप्युपहृतं भक्तप्रेम्णा भूर्येव मे भवेदिति[२] वचनात् सुपात्रे कृष्णे भक्त्या दत्तमल्पमपि बहु भवतीति भावः ॥ ६२ ॥

**रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि**
**प्रेम्णा चिन्तयतां विचित्रविमलश्लाघ्यार्थसन्दायिनि ।**
**सञ्जाते भुवि रुग्मिणीशविजये सद्वादिराजोदिते**
**सञ्जातः सुरमण्डलीषु महितः सर्गस्तृतीयो मुदाम् ॥ ६३ ॥**

**॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थश्रीचरणविरचिते श्रीरुग्मिणीशविजये महाकाव्ये तृतीयः सर्गः ॥३॥**

**व्या : रोम्णामिति** । **सुरमण्डलीषु मुदां तृतीयः सर्गः** सृष्टिरभवत् । काव्यपक्षे **सुरमण्डलीषु महितः** महनीयः **तृतीयः सर्गो** जात इत्यर्थः ॥ ६३ ॥

**॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थश्रीचरण-विरचितस्य श्रीरुग्मिणीशविजयमहाकाव्यस्य व्याख्यायां श्रीनारायण-भट्टविरचितायां श्रीगुरुभावप्रकाशिकायां तृतीयः सर्गः ॥**

*****

---

१ सा तत्र ददृशे विश्वं जगत् स्थास्नु च खं दिशः ।
साद्रिद्वीपाब्धिभूगोलं सवाय्वग्नीन्दुतारकम् ॥
ज्योतिश्चक्रं जलं तेजो नभः स्वर्वियदेव च ।
वैकारिकाणीन्द्रियाणि मनो मात्रा गुणास्त्रयः ॥ - भागवते (१०/९/३७,३८)

२ अक्षयं कर्म यस्मित् परे स्वर्पितम् - इति द्वादशस्तोत्रे.

# चतुर्थः सर्गः

**उद्गच्छत्कबरीप्रसूननिकरां वैराग्यभाग्यप्रियः**
**सद्गीतात्मयशोऽनुवर्णनपरां ज्ञानानुमोदी हरिः ।**
**दध्नो निर्मथनोद्यतां समुदितप्रेमाश्रुधारां निज-**
**प्रेम्णा मन्दमुपाजगाम जननीं भक्तैकवश्यः प्रभुः ॥ १ ॥**

करुणावरुणावासं तरुणारुणसद्युतिम् ।
करुणाकर्षणोत्साहतनुं नारायणं नुमः ॥ १ ॥

आद्यादिसर्गव्याख्याख्यसोपानैर्गुरुदर्शितैः ।
चतुर्थसर्गहेमाद्रिमारोढुमहमुद्यतः[1] ॥ २ ॥

**व्या :** उद्गच्छदिति । **उद्गच्छन्ति** दधिमथनकाले सव्यदक्षिणतोऽङ्गचलनेन केशबन्धस्य श्लथनाद्गलन्ति **कबर्यां** धम्मिल्ले यानि **प्रसूनानि** तेषां **निकरो** यस्या-स्ताम् । अनेन यशोदायाः स्वकबरीच्युतपुष्पसङ्ग्रहानपेक्षतया तृतीयाध्यायप्र थमपा-दोक्तस्रगादिविषयत्यागलक्षणवैराग्यसम्पत्तिः सूचिता । अत एव **वैराग्यमेव भाग्यम्** ऐश्वर्यं येषां ते **वैराग्यभाग्याः** विरक्ता इत्यर्थः । तेषां **प्रियः** कृष्णः । **उपाजगाम** समीपमगमत् । विरक्तानुग्राहकः परमात्मेति भावः । **उपाजगामे**त्यस्य प्रत्येकं सम्बन्धः । **सद्भिर्गीतं आत्मनः** परमात्मनः स्वस्य **यशः** तस्या**नुवर्णने पराम्** आसक्ताम् । स्वयशो गायन्तीमित्यर्थः । अनेन महिमानुवर्णनस्य ज्ञानपूर्वकत्वात् तृतीयाध्यायचतुर्थपादोक्तज्ञानस- म्पत्तिः सूचिता । अत एव ज्ञानमनुमोदत इति **ज्ञानानुमोदी** ज्ञानप्रियो हरिः। **निजप्रेम्णे**त्येतदुभयत्र सम्बद्ध्यते । **निजे** स्वस्मिन् **प्रेम्णा** स्नेहेन । 'प्रेमा ना प्रियता हार्दं प्रेम स्नेहोऽथ सौहृदम्' इत्यमरः । दधिनिर्मथनतः उद्धूतं नवनीतं कृष्णायार्पयामीति कृष्णस्नेहेन **दध्नः निर्मथनोद्यतां निजप्रेम्णा** श्रीकृष्णानुरागवशात् **समुदितप्रेमाश्रुधारां** समुद्भूतानन्दबाष्पप्रवा-

---

१ गद्यहेमाश्मगहनं पञ्चमस्कन्धपर्वतम् ।
आम्नायज्ञा महान्तो मे प्रीयन्तामारुरुक्षवे ॥ - इति श्रीमद्विजयध्वजतीर्थश्रीचरणकृत श्रीमद्भागवतव्याख्यायां पञ्चमस्कन्धमङ्गलश्लोकस्य विवरणरूप इव अयं श्लोकः ।

हाम् । अनेन परमात्मनः कृष्णस्य प्राप्तौ द्वितीयपादोक्तभक्तिलक्षणसाधनसम्पत्तिः सूचिता । **जननी** यशोदाम् । **भक्तैकवश्यः** भक्तजनाधीनः **प्रभुः** कृष्णः । **मन्दं** शनैः । **उपाजगाम** । विरक्त्यादिसाधनवतां परमात्मा लभ्य एवेति भावः । स्वयमेवागतस्य कृष्णस्य दधिमथनकालीनयशोदावस्थायाः वैराग्यादिकारणान्तरत्ववर्णनात् **विभावनालङ्कारः** । **हेतूत्प्रेक्षा** वा । निद्रोत्थितः कृष्णः दधिमथनकाले यशोदासमीपमाजगामेति पौराणिकी कथा ॥ १ ॥

**अङ्कोज्झितेन्दुप्रतिमाननं तमङ्कं समारोप्य मुहुर्मृजन्ती ।**
**पङ्कं मनोज्ञाङ्गगतं क्षुधार्तशङ्का [1]स्तनक्षीरमपाययत् सा ॥२॥**

**व्या :** **अङ्कोज्झितेति** । **अङ्कोज्झितः** कलङ्करहितः इन्दुश्चन्द्रमा एव **प्रतिमा** यस्य तदङ्कोज्झितेन्दुप्रतिमम् । 'सदृक् समानः सदृशः प्रख्यः प्रकाशप्रतिमा' इति हलः । **आननं** यस्य स तथोक्तः तं स्वसमीपमागतं कृष्णम् । **अङ्कम्** उत्सङ्गम् । 'उत्सङ्गचिह्नयोरङ्कः' इत्युभयत्राप्यमरः । **समारोप्य** अधिरोप्य । **मनोज्ञाङ्गगतं** मनोहरगात्रस्थं **पङ्कं** क्रीडानिमित्तं कर्दमम् । **मुहुः** पुनः पुनः **मृजन्ती** शोधयन्ती **सा** यशोदा क्षुधार्तं शङ्कत इति **क्षुधार्तशङ्का** सती **स्तनक्षीरं** स्तन्यं **अपाययत्** पाययामास ॥ २ ॥

**तदनु दहनवेगादुत्स्रवत्क्षीरलोभात्**
**मधुजितमपहायाजानती सा जगाम ।**
**हरिरपि समयार्हां हानिमस्यै प्रदातुं**
**[2]व्यभजत दधिभाण्डं क्षिप्तपाषाणखण्डः ॥ ३ ॥**

---

१ त्रय्या चोपनिषद्भिश्च साङ्ख्ययोगैश्च सात्त्वतैः ।
उपगीयमानमाहात्म्यं हरिं साऽमन्यतात्मजम् ॥ - भागवते (१०/९/४५)

२ तमङ्कमारूढमपाययत् स्तनं स्नेहस्नुतं सस्मितमीक्षती मुखम् ।
अतृप्तमुत्सृज्य जवेन सा ययावुत्सिच्यमाने पयसि त्वधिश्रिते ॥
सञ्जातकोपः स्फुरितारुणाधरं सन्दश्य दद्भिर्दधिमण्डभाजनम् ।

**व्या : तदिति** । **तदनु** स्तन्यदानानन्तरम् । **दहनस्य** वह्नेर्वेगात् ज्वालालक्षणात् **उत्स्रवत्** उत्सर्पयत् **क्षीरं** तस्य **लोभात्** । **मधुजितं** मधुं जितवानिति तथा तं मधुनामकदैत्यजेतारं कृष्णम् । **अपहाय** त्यक्त्वा । **अजानती** कृष्णं परमात्मानम-जानती **सा** यशोदा **जगाम** । कृष्णमपहाय चुल्यामधिश्रितपय:संरक्षणार्थं ययौ। **हरिरपि** कृष्णोऽपि **समयार्हां** स्वसेवां परित्यज्य विषयलोभकारणकालोचितां **हानिम्** अनिष्टम् । **अस्यै** यशोदायै **प्रदातुं क्षिप्तः** भाण्डोपरि विसृष्टः **पाषाणखण्डो** येन स तथोक्तः सन् । **दधिभाण्डं** दध्यमत्रं **व्यभजत** । पाषाणखण्डं प्रक्षिप्य **दधिभाण्डं** अभिनदित्यर्थः । परमात्मा हि अज्ञानवशात् स्वसेवां परित्यज्य विषयसेविनां स्वभक्तानामपि ऐहिकं पारत्रिकमपि नाशयतीति भावः । **मालिनीवृत्तम्** । 'ननमयययुतेयं मालिनी भोगिलोकैः'[१] ॥३॥

**ददौ [२]बिडालाय जनन्यदृष्टस्तदा स्वनीतं नवनीतजातम् ।**
**क्षिणोति नूनं धनलोभभाजां धनान्यनर्हत्स्वतिदिश्य देवः ॥४॥**

**व्या : ददाविति** । स कृष्णः रहो गत्वा । **जनन्या** मात्रा **अदृष्टः** सन् । अनेन स्वसेवाविधुराणां अदृश्यः परमात्मेति ध्वन्यते । स्वेन नीतं **स्वनीतं नवनीतजातं बिडालाय** मार्जाराय । 'ओतुर्बिडालो मार्जारः' इत्यमरः । **ददौ** दत्तवान् । अत्र अर्थान्तरं न्यस्यति । **देवः** सर्वसाक्षी विष्णुः । **धनलोभभाजां** लोभिनां **धनानि अनर्हत्सु** अयोग्येषु । **अतिदिश्य** दत्वा **नूनं** निश्चयेन **क्षिणोति** नाशयति । **नूनं** निश्चयः। ''अन्यायेनार्जितं वित्तमन्यायेन विनश्यति'' इति वचनात् अनादृतदेवैर्लोभिनार्जितं द्रव्यं स्वकीयाननुभुक्तं सत्पात्रे वाऽदत्तं विनश्यति[३] इति भावः ॥ ४ ॥

---

भित्त्वा मृषाश्रुर्दृषदश्मना रहो जघास हैयङ्गवमन्तरं गतः ॥- भागवते (१०/१०/५,६)

१ इति वृत्तरत्नाकरे (३/८४)

२ उलूखलाङ्घ्रेरुपरि व्यवस्थितं मर्काय कामं ददतं यथेप्सितम् ।
हैयङ्गवं चौर्यविशङ्कितेक्षणं निरीक्ष्य पश्चात् सुतमागमच्छनैः ॥ -भागवते (१०/१०/८)

३ **दत्तभुक्तफलं धनम् ।** - इति महाभारते (२/५/११६)
दानं भोगो नाशस्त्रेधा हि गतिर्भवति वित्तस्य ।

**विचारभारार्पितमानसाऽथो विमर्शलभ्यं तमवेक्ष्य माता ।**
**अनुव्रजन्त्यस्पृशदप्यगम्यं परानुयात्रार्जितपुण्यपात्री ॥५॥**

**व्या :** विचारेति । **अथो** अनन्तरं **विचारभारे** कृष्णः क्व गत इत्यन्वेषणबाहुल्ये **अर्पितं** दत्तं **मानसं** यया सा **माता** यशोदा । **विमर्शलभ्यम्** अन्वेषणरूपविचारलभ्यम् । चोरा हि गवेषणायां लभ्यन्त इति भावः । अनेन हरेर्वेदान्तविचारलभ्यत्वं ध्वन्यते । **तं** कृष्णम् । **अवेक्ष्य** दृष्ट्वा । **अनुव्रजन्ती** भयाद्धावन्तं कृष्णं गृहीतुं पृष्ठतो गच्छन्ती । अत एव **परस्य** परमात्मनः कृष्णस्यानुयात्रया अनुव्रजनेन **आर्जितस्य** जातस्य **पुण्यस्य पात्री** योग्या सती। **अगम्यमपि** अयोग्यैः [1]अप्राप्यमपि । श्रीकृष्णं **अस्पृशत्** अग्रहीत् । पुण्यवतां परमात्मप्राप्तिर्भवतीति भावः[2] ॥ ५ ॥

**यदीयनाम स्मरतां जनानां बिभेत्यसह्योऽपि हि दण्डपाणिः ।**
**अभीषयद्विश्वसृजां वरिष्ठं गृहीतदण्डा किल नन्दराज्ञी ॥ ६ ॥**

**व्या : यदीयेति । असह्यः** पापिजनैः सोढुमशक्यः । **दण्डः पाणौ** यस्य सः **दण्डपाणिः** यमोऽपि । **यदीयानि** यस्य कृष्णस्य सम्बन्धीनि **नामानि स्मरतां जनानां** सकाशाद्बिभेति ।

'कमलनयन वासुदेव विष्णो धरणिधराच्युत शङ्खचक्रपाणे ।
भव शरणमितीरयन्ति ये वै त्यज भट दूरतरेण तानपापान्'[3] ।

---

यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥ - इति सुभाषितम् ।

१ पुनः समीक्ष्य तच्छ्रमं जगाम तत्करग्रहम् ।
प्रभुः स्वभक्तवश्यतां प्रकाशयन्नुरुक्रमः ॥ - म.भा.ता.नि.(१३/१५)
अन्वञ्चमाना जननी बृहच्चलच्छ्रोणीभराक्रान्तगतिः सुमध्यमा ।
जवेन विभ्रंशितकेशबन्धनच्युतप्रसूनानुगतिः परामृशत् ॥ - भागवते (१०/१०/८)

२ 'स्वभावत एव दुष्टस्य श्रवणान्वेषणादिविचाररूपकारणत्वकल्पनया स्वभावत एव गृहीतस्यानुयात्राजनितपुण्यरूपकारणत्वकल्पनया च हेतूत्प्रेक्षालङ्कारः ।' -इत्यधिकं क्वचित् ।

३ विष्णुपुराणे (३/७/३३)

'तान् नोपसीदत हरेर्गदया[१]ऽभिगुप्तान् नैषां भयं न च वयं प्रभवाम दण्डे'[२] इति वचनानि हिशब्दः द्योतयति । **नन्दराज्ञी** नन्दगोपस्य महिषी । **गृहीतदण्डा** सती । **विश्वसृजां** ब्रह्मादीनां **वरिष्ठं** श्रेष्ठतमं कृष्णम् । [३]**अभीषयत् किल** । दण्डपाणिरपि यस्मात् बिभेति तं कृष्णं यशोदा स्वयमभीषयत् किल इत्यनेन कृष्णभीषणोद्योगे यशोदाया मौर्ख्यं विजृम्भितमिति ध्वन्यते ॥ ६ ॥

**अजाण्डकोट्याश्रयरोमकूपं तमात्तकोपा किल नन्दगोपी ।**
**इयेष बद्धुं नहि रोषरुद्धं मनो मिनोत्यप्यमरानुभावम् ॥ ७ ॥**

**व्या : अजाण्डेति** । **आत्तः** स्वीकृतः **कोपो** यया सा । नन्दं गोपायति शिश्रूषादिना रक्षतीति **नन्दगोपी** । 'कर्मण्यण्'[४] इत्यणिकृते 'टिड्ढाण...'[५] इत्यादिना ङीष् । नन्दगोपस्येयं **नन्दगोपी**ति वा । यशोदा **अजाण्डानां** ब्रह्माण्डानां **कोटि**स्तस्या**श्रय** आधारो **रोमकूपः** रोम्णां निम्नभागो यस्य स तथोक्तः । अनेककोटिब्रह्माण्डाश्रय मित्यर्थः । **तं** कृष्णं **बद्धुं इयेष** ऐच्छत् **किल**। असाध्यकार्यकरणोद्योगे यशोदाया मौर्ख्यातिशयः किं वर्णनीय इति भावः । तथाहि । **रोषेण** क्रोधेन **रुद्धं** प्रतिरुद्धं **मनः अमराणामनुभावमपि** सामर्थ्यमपि । **अमराणां** देवानाम् **अनुभावः** सामर्थ्यं यस्मात् तमपीति वा । **न मिनोति** न जानाति न गणयति इत्यर्थः । कोपः स्वपरसामर्थ्यविवेकं नाशयति इति भावः ॥ ७ ॥

**कृतागसं तं किल नैव माता शशाक बद्धुं मम तु प्रतर्कः ।**
**तदीयरम्योदरमध्यसंस्थविमुक्तशक्त्यैव न बन्ध आसीत् ॥८॥**

---

१ गदया गदाभिमानिन्या वायुदेवतया - गदा तु वायुः (म.भा.ता.नि) इत्युक्तेः ।

२ भागवते (६/४/२७)

३ कृतागसं तं प्ररुदन्तमक्षिणी कषन्तमञ्जन्मषिणी स्वपाणिना ।
उद्वीक्षमाणं भयविह्वलेक्षणं हस्ते गृहीत्वा भिषयन्त्यवागुरत् ॥-भाग.१०/१०/११)

४ पा.सू. (३/२/१)

५ टिड्ढाणञ्द्वयसजूदघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्करपः । पा.सू. (४/१/१५)

**व्या :** कृतागसमिति । **माता** यशोदा **कृतागसं** कृतापराधं **तं** कृष्णं **बद्धुं नैव शशाक** । शक्ता नैवासीत् । **तदीयस्य** कृष्णसम्बन्धिनः **रम्यस्य** रमणीयस्य **उदरस्य मध्ये संस्थिताः** ये **विमुक्ताः** तेषां **शक्त्यैव** सामर्थ्येनैव **बन्धो नासीदिति मम तु प्रतर्कः** । कृष्णसामर्थ्येन बन्धो नासीदिति न । किन्तु कृष्णस्य विमुक्ताश्रयत्वेन [१]तदुदरस्थितमुक्तवर्गशक्त्या बन्धो नासीदिति मम बुद्धिरित्यर्थः। अन्यथा कृष्णबन्धनेन कृष्णस्यासङ्गत्वेन तदाश्रितमुक्तानामेव बन्धप्राप्त्या तेषां विमुक्तत्वहानेरिति भावः ॥ ८ ॥

**साशां मुहुः स्वप्रसुवं विधातुमीशत्वमप्यात्मगतं मुकुन्दः ।**
**बन्धं रुणद्धि स्म तदात्तदाम सन्दर्शयन् स्वात्मनि किञ्चिदूनम् ॥९॥**

**व्या :** साशामिति । **मुकुन्दः** कृष्णः स्वं प्रसूत इति **स्वप्रसूः** तां **स्वप्रसुवं** स्वमातरम्। 'जनयित्री प्रसूर्माता जननी' इत्यमरः । यशोदां **मुहुः साशां** आशया अभिलाषेण सहिताम् । 'आशा दिगभिलाषयोः' इति विश्वः । बन्धस्य किञ्चिन्न्यूनतायाम् इतः परमन्येन दाम्ना बद्धो भविष्यतीति दामान्तरप्रवृत्तौ साभिलाषां **विधातुमीशत्वमपि** कर्तुमकर्तुमन्यथाकर्तुं सामर्थ्यरूपमैश्वर्यमपि **आत्मगतं** स्वगतं विधातुं च सामर्थ्याभावे तदात्तसकलदाम्नां किञ्चिन्न्यूनीकरणायोगात् इति भावः । तया

---

१ दृष्ट्वा स चेतनगणान् जठरे शयानान् आनन्दमात्रवपुषः सृतिविप्रमुक्तान् ।
ध्यानं गतान् सृतिगतांश्च सुषुप्तिसंस्थान् ब्रह्मादिकान् कलिपरान् मनुजांस्तथैक्षत् ॥
- म.भा.ता.नि. (१/४)

स्वस्वसमग्रयोग्यताभिज्ञपरमानुग्रहशीलभगवत्प्रेरितचतुर्मुखादिसद्गुरूपदिष्टस्वस्वयोग्य-भगवद्रूपगुणोपासनया सञ्जातस्वस्वयोग्यभगवद्रूपविशेषदर्शनभोगाभ्यां विनष्टानिष्टस-ञ्चितप्रारब्धलक्षणाशेषकर्मणां, स्वस्वयोग्यतानुसारेण सम्पूर्णसाधनानां, पूर्वकल्पे ब्रह्मणा सह विरजानदीस्नानेन त्यक्तलिङ्गानां, तथा विनष्टावशिष्टेष्टाशेषप्रारब्धकर्मणां, प्रलयकाले भगवदुदरे वसतां, आनन्दमात्रवपुषां , तदनुभवरहितानां, स्वस्वयोग्यभगवद्रूपविशेषध्या नरतानां, सृष्टिकाले भगवदाज्ञया भगवदुदराद्बहिर्गतानां श्रीश्वेतद्वीपदर्शनं निमित्तीकृत्य प्रधानावरणभूतस्वेच्छापसरणेन स्वस्वयोग्यानन्दाविर्भाव्लक्षणमुक्ति ...।
- श्रीराघवेन्द्रतीर्थश्रीचरणाः (प्रातःसङ्कल्पगद्ये)

यशोदया आत्तं उपात्तं **दाम स्वात्मनि** स्वस्मिन् [१]**किञ्चिदूनं** बन्धपूर्तौ व्यङ्गुलोनं **सन्दर्शयन् बन्धं** यशोदया क्रियमाणं **रुणद्धि स्म** न्यरुणत्। ''व्यङ्गुलोनमभूत् तेन सन्दधेऽन्यच्च गोपिका। तदपि व्यङ्गुलं न्यूनम्[२]'' इत्यस्य तात्पर्यकथनमिदम्॥९॥

**सुतो न मेऽयं हरिरेव साक्षादिति प्रबोधेऽङ्कुरिते पुरन्ध्री।**
**बबन्ध नन्दस्य बलानुजं तं बुधैर्निबद्धं प्रणयाख्यरज्ज्वा॥१०॥**

**व्या : सुत** इति। नन्दस्य पुरन्ध्री पुरं पोष्यवर्गं धत्त इति पुरन्ध्री कुटुम्बिनी। **अयं** शिशुरपि विस्मापनशक्तियुक्तः कृष्णः **मे सुतो न** भवति। किन्तु **साक्षाद्धरिरेवेति प्रबोधे** सम्यग्ज्ञानेऽ**ङ्कुरिते** जाते सति। **बुधैः** ज्ञानिभिः। **प्रणयाख्यरज्ज्वा** माहात्म्यज्ञानपूर्वकप्रेमदाम्ना। **निबद्धं** सङ्गतं **बलानुजं** बलभद्रानुजं कृष्णं **बबन्ध**। कृष्णः स्वसामर्थ्यदर्शनेन स्वस्मिन् परब्रह्मत्वबुद्धिं कुर्वत्याः यशोदायाः बुद्धिव्यामोहनाय तयाऽबध्यत इत्यर्थः। ज्ञानिलभ्यः परमात्मेति ध्वनितोऽर्थः॥

**असाध्यभागस्थितदुग्धचौर्ये विशारदं तं विनिबद्ध्य माता।**
**उलूखलस्यापि बबन्ध मध्यं सहायभूतस्य तदीयकार्ये॥११॥**

**व्या :** असाध्येति। **माता** यशोदा। **असाध्यभागे** अलभ्यभागे **स्थितस्य दुग्धस्य चौर्ये। विशारदं** प्रौढं **तं** कृष्णं **निबद्ध्य तदीयकार्ये** कृष्णसम्बन्धिचौर्यकार्ये **सहायभूतस्य** उलूखलमारुह्योपरिस्थितदुग्धस्य चोरितत्वादिति भावः। **उलूखलस्यापि मध्यं बबन्ध**। कृष्णं निबद्ध्यावशिष्टदामोलूखलमध्ये अनुसन्धितवतीत्यर्थः। चोरतत्सहायिनोरेकशृङ्खलाबन्धस्य लोके दर्शनादिति भावः॥११॥

---

१ गोप्याददे त्वयि कृतागसि दाम तावद्या ते दशाऽश्रुकलिलाञ्जनसम्भ्रमाक्षम्।
वक्त्रं विनम्य भयभावनया स्थितस्य सा मां विमोहयति भीरपि यं बिभेति॥
- भागवते (१/८/३४)

२ भागवते (१०/९/१५)

**अनाहि यः कार्यवशाज्जनन्या शनैरसौ साकमुलूखलेन ।**
**विधाय घृष्टं स्वकयोरनिष्टमभीप्सितं दातुमिव प्रतस्थे ॥१२॥**

**व्या :** अनाहीति । यः जनन्या मात्रा **कार्यवशात्** भाविकार्यापेक्षया अनाहि अबध्यत । 'नह बन्धने' इति धातुः । **असौ** कृष्णः । **स्वकयोः** स्वभक्तयोः नलकूबरमणिग्रीवयोः । **अनिष्टं** दुरितम् उलूखले अवहननं कृत्वा **घृष्टं** सम्यक् चूर्णितं **विधाय अभीप्सितमिष्टं दातुमिव** उलूखलेन **साकं शनैः प्रतस्थे** प्रस्थितवान् । कृष्णपादसङ्गत्युलूखलसङ्गेन तयोः पापनाशात् तत्पापस्योलूखलघृष्टत्वोत्प्रेक्षा ॥ १२ ॥

**असज्जनेष्वाचरितोग्रशिक्षां स्वभक्तपुञ्जेषु कृतां च रक्षाम् ।**
**नभस्यथो गातुमुभौ चिकीर्षन् विपाटयामास स पादपौ द्वौ ॥१३॥**

**व्या :** असज्जनेष्विति । **अथो** अनन्तरं **स** कृष्णः । **असज्जनेषु** दुर्जनेषु । **आचरितां** कृतामुग्रशिक्षां तीक्ष्णदण्डं **स्वभक्तपुञ्जेषु कृतां रक्षां च नभसि** गगने **गातुं** गानं कर्तुम् **उभौ** शिक्षागाने एकं रक्षागाने अपरमित्युभौ गायकौ **चिकीर्षन्निव** । उभावित्यनेन दुष्टशिक्षायाः भक्तरक्षायाश्च प्रत्येकमपि बहुलत्वेन एकेन गातुमशक्यत्वं ध्वन्यते । यमलार्जुनभञ्जनेनापि तदाश्रितासुरशिक्षा नलकूबरमणिग्रीवयोः रक्षा च कृतेति द्योत्यते । अनेनानयोर्वृक्षयोः स्वभक्तव्यतिरिक्तौ शिक्षायोग्यौ द्वावसुरौ तिष्ठत इति सूच्यते । **द्वौ पादपौ विपाटयामास** [1]बभञ्ज ॥ १३ ॥

---

१ सुतस्य मातृवश्यतां प्रदर्श्य धर्ममीश्वरः ।
बभञ्ज तौ दिविस्पृशौ यमार्जुनौ सुरात्मजौ ॥
पुरा धुनिश्चमुस्तथाऽपि पूतनासमन्वितौ ।
अनोक्षसंयुतौ तपः प्रचक्रतुः शिवां प्रति ॥
तया वरोऽप्यवध्यता चतुर्षु च प्रयोजितः ।
अनन्तरं तृणोद्भ्रमिस्तपोऽचरद्वरं च तम् ॥

**स्वभृत्यभीमानुजमद्वितीयं प्रियं विधित्सुर्दययेव देवः ।**
**स भूरुहावर्जुनसञ्ज्ञितौ तौ बभञ्ज कञ्जायतमञ्जुनेत्रः ॥ १४ ॥**

**व्या : स्वभृत्येति** । **कञ्जवत्** जलजवत् आयते दीर्घे **मञ्जुनी** मनोहरे **नेत्रे** यस्य स तथोक्तः । **स देवः** क्रीडादिगुणविशिष्टः श्रीकृष्णः । **स्वभृत्यस्य भीमस्य** भीमसेनस्यानुजम् ।[1] स्वभृत्यश्चासौ **भीमानुज**श्चेत्युभयत्रापि स्वभृत्यपदस्य सम्बन्धः । तम् अर्जुनम् । **दयया** कृपया । **अद्वितीयं** न विद्यते **द्वितीयो** अर्जुनो

---

अवाप ते त्रयो हताः शिशुस्वरूपविष्णुना ।
धुनिश्चमुश्च तौ तरू समाश्रितौ निषूदितौ ॥
तरुप्रभङ्गतोऽमुना तरू च शापसम्भवौ ।
पुरा हि नारदान्तिके दिगम्बरौ शशाप सः ॥
धनेशपुत्रकौ द्रुतं तरुत्वमाप्नुतं त्विति ।
ततो हि तौ निजां तनुं हरेः प्रसादतः शुभौ ।
अवापतुः स्तुतिं प्रभोर्विधाय जग्मतुर्गृहम् ॥
नलकूबरमणिग्रीवौ मोचयित्वा तु शापतः ।
वासुदेवोऽथ गोपालैर्विस्मितैरभिवीक्षितः ॥ म.भा.ता.नि. (१३/१९-२५)

१ देहेऽपि यत्र पवनोऽत्र हरिर्यतोऽसौ तत्रैव वायुरिति वेदवचः प्रसिद्धम् ।
कस्मिन् वहन्त्विति तथैव हि सोऽवतारे तस्मात् स मारुतिकृते रविजं ररक्ष ॥
एवं स कृष्णतनुरर्जुनमप्यरक्षद्भीमार्थमेव तदरिं रविजं निहत्य ।
पूर्वं हि मारुतिमवाप रवेः सुतोऽयं तेनास्य वालिनमहन् रघुपः प्रतीपम् ॥
एवं सुराश्च पवनस्य वशे यतोऽतः सुग्रीवमत्र तु परत्र च शक्रसूनुम् ।
सर्वे श्रिता हनुमतस्तदनुग्रहाय तत्रागमद्रघुपतिः सह लक्ष्मणेन ॥
- म.भा.ता.नि (५/४६-४८)

भीमार्थं केशवोऽन्ये च देवाः फल्गुनपक्षिणः ।
आसन् यथैव रामाद्याः सङ्ग्रहेण हनूमतः ।
सुराः सुग्रीवपक्षस्था पूर्वमासंस्तथैव हि ॥
तदर्थमेव भीमस्य ह्यनुजत्वं सुरेश्वरः ।
आप पूर्वानुतापेन तेन भीमस्तथाऽकरोत् ॥ - म.भा.ता.नि. (१५/५१,५२)
- इत्यादिवचनैः प्रतिपादितस्यार्जुनस्य श्रीहरिवाय्वोः विशेषप्रीति विषयत्वमनेन समर्थितमिति ज्ञेयम् ।

यस्येत्यद्वितीयः तम् । अर्जुनान्तररहितमित्यर्थः । अर्जुनाभिधानयोरनयोः सत्वे तस्य सद्वितीयत्वं स्यादिति शङ्क्येति भावः । **विधित्सुरिव** विधातुमिच्छुरिव **अर्जुनसंज्ञितौ** अर्जुनाभिधानौ तौ । भुवि रुहत इति **भूरुहौ** वृक्षौ । ''पार्थेऽर्जुनः केकिनि कार्तवीर्ये नेत्रामयेऽप्यर्कसुते च मातुः । वर्णे द्रुमे चाथ'' इति भास्करः । **बभञ्ज** विपाटयामास ॥ १४ ॥

**तदङ्गबन्धप्रतिबन्धपुण्यबलेन सिद्धौ तत उत्थितौ द्वौ ।**
**प्रशंस्य वृन्दावनवल्लभं तं तदेयतुस्तन्मनसौ स्वलोकम् ॥१५॥**

**व्या :** तदङ्गेति । तदङ्गे कृष्णाङ्गे यो **बन्धो** मातृकृतस्तस्य **प्रतिबन्धेन** तत्स्हबद्धोलूखलप्रतिरोधजन्यप्रतिबन्धेन । अनेन कृष्णस्य बन्धाभावप्रतिपादनं द्योत्यते । जातं यत्पुण्यं तस्य **बलेन** कृष्णस्य नित्यमुक्तत्वेन प्रकृतिबन्धराहित्यं वदतो महत्पुण्यं जायत इति भावः । सामर्थ्येन **सिद्धौ** ज्ञानादिसम्पन्नौ । **द्वौ** नळकूबरमणिग्रीवौ । **ततः** भग्नार्जुनवृक्षाभ्यां **उत्थितौ** वृक्षशरीरं त्यक्त्वा स्वरूपेणागतौ । **वृन्दावनवल्लभं** वृन्दावनपतिम् । अनेन भविष्यद्वृन्दावनगमनं सूच्यते । तं कृष्णं **प्रशंस्य** स्तुत्वा । तस्मिन् कृष्णे मनो ययोस्तौ **तन्मनसौ** तत्स्मरणयुक्तावित्यर्थः । तादृशौ सन्तौ **स्वलोकमीयतुर्ययतुः** ॥ १५ ॥

**बृहद्वने स्वस्य हि सन्निधानान्महापुरीसाम्यमुपेयुषीत्थम् ।**
**[1]वनप्रियोऽसौ चकमे रमेशो मनोज्ञवृन्दावन एव [2]वासम् ॥१६॥**

**व्या :** **बृहद्वनमिति** ॥ बृहद्वनमिति नन्दव्रजस्य नाम । तस्मिन् इत्थमुक्तप्रकारेण जनसम्पत्तिभिः पूर्यत इति पुरी । महती च सा पुरी चेति **महापुरी** पत्तनं तस्याः **साम्यं** सादृश्यं **उपेयुषि** गच्छति सति । वनं प्रियो यस्यासौ **वनप्रियः** रमेशः कृष्णः। **मनोज्ञवृन्दावने** मनोज्ञं यद्वृन्दावनं तस्मिन्नेव **वासं** निवासम्।

---

१ सज्जनसङ्गतिप्रियः । इत्यपि ज्ञेयम् । 'वनं सज्जनसङ्गतिः' इत्युक्तेः

२ वस्तुमिति । पा.

''वस्तुम् '' इति पाठे वासं कर्तुमित्यर्थः । चकमे ऐच्छत् । वनप्रियस्य वन एवाभिरुचिर्युक्तेति भावः ।। १६ ।।

**विरोधिदैतेयपराभवेन स्थिरेह नोत्थास्यति बन्धुतेयम् ।**
**इति प्रभुः स्वप्रियसाध्वसाय [१]वृकाननेकांश्च ससर्ज रोम्णः ।।१७।।**

---

१ वृन्दावनमियासुः सन्नन्दसूनुर्बृहद्वने ।
ससर्ज रोमकूपेभ्यो वृकान् व्याघ्रसमान् बले ।।
अनेककोटिसङ्घैस्तैः पीड्यमाना व्रजालयाः ।।
ययुर्वृन्दावनं नित्यानन्दमादाय नन्दजम् ।। - इति म.भा.ता.नि.(१३/२६,२७)
एवं कथयतस्तस्य वासुदेवस्य धीमतः ।
प्रादुर्बभूवुः शतशो रक्तमांसवसाशनाः ।।
घोराश्चिन्तयतस्तस्य स्वतनूरुहजास्तदा ।
विनिष्पेतुर्भयकराः सर्वशः शतशो वृकाः ।।
निष्पतन्ति स्म बहवो व्रजस्योत्सदनाय वै ।
वृकान् निष्पतितान् दृष्ट्वा गोषु वत्सेष्वथो नृषु ।।
गोपीषु च यथाकामं व्रजे त्रासोऽभवन्महान् ।
ते वृकाः पञ्चबद्धाश्च दशबद्धास्तथा परे ।।
त्रिंशद्विंशतिबद्धाश्च शतबद्धास्तथा परे ।
निश्चेरुस्तस्य गात्रेभ्यः **श्रीवत्सकृतलक्षणाः** ।।
कृष्णस्य कृष्णवदना गोपानां भयवर्धनाः ।
भक्षयद्भिश्च तैर्वत्सास्त्रासयद्भिश्च गोव्रजान् ।।
निशि बालान् हरद्भिश्च वृकैरुत्साद्यते व्रजः ।
न वने शक्यते गन्तुं न गाश्च परिरक्षितुम् ।।
न वनात् किञ्चिदाहर्तुं न च वा तरितुं नदीम् ।
त्रस्ता ह्युद्विग्नमनसोऽगतास्तस्मिन् वनेऽवसन् ।।
एवं वृकैरुदीर्णैस्तु व्याघ्रतुल्यपराक्रमैः ।
व्रजो निष्पन्दचेष्टस्य एकस्थानचरः कृतः ।। - इति हरिवंशे (२/८/३०-३८)
वृन्दावनं यियासुः सन्नन्दसूनुर्बृहद्वने ।
ससर्जरोमकूपेभ्यो वृकान् व्याघ्रसमान् बले ।।

**व्या :** विरोधीति। विरोधिनो दैतेयाः दैत्याः तेषां **पराभवेन** पराजयेन इह बृहद्वने **स्थिरा** सुस्थिरा **बन्धुता** बन्धुवर्गः । ग्रामजनवन्धुभ्यस्तल्[1] इति तल् प्रत्ययः । इतोऽन्यत्र गन्तुं **नोत्थास्यति** । उपप्लवाभावादिति भावः । इति **प्रभुः** समर्थः कृष्णः **स्वप्रियसाध्वसाय** स्वबन्धुभयाय । 'भीतिर्भीः साध्वसं भयम् इत्यमरः । स्वबन्धूनां भयोत्पादनार्थं **रोम्णः** रोमकूपेभ्यः जात्येकवचनम्। **अनेकान् वृकान्** कोकमृगान्। कोकस्त्वीहामृगो वृकः' इत्यमरः । **ससर्ज** सृष्टवान् ॥१७॥

**इह स्वकीयान् निहतान् निशम्य न मां व्रजस्थं प्रति यान्ति दैत्याः ।**
**स इत्थमालोच्य विभुः स्वकीयान् न्ययुङ्क्त वृन्दावनमेव गन्तुम् ॥१८॥**

**व्या :** इहेति। **दैत्याः इह** व्रजे। **स्वकीयान् निहतान् निशम्य** श्रुत्वा। **व्रजस्थं मां प्रति न यान्ति**। स्वेषां पराजयहेतुस्थानत्वादिति भावः । **स विभुः** कृष्णः **इत्थमालोच्य** विचार्य । **स्वकीयान्** नन्दादीन् । **वृन्दावनं गन्तुमेव न्ययुङ्क्त** न्ययोजयत्॥ १८ ॥

**भारान् स्वानधिरोप्य चारुशकटश्रेण्यामरण्यालया**
**गोपा गोधनवृद्धमुग्धललनाबालादिभिः संयुताः ।**
**वीणावेणुमृदङ्गशृङ्गनिनदैः सम्पूरिताशाः शनैः**
**रामश्रीरमणाश्रयाः प्रति ययुर्वृन्दावनं पावनम् ॥ १९ ॥**

**व्या :** भारानिति। **गोधनं** गोरूपधनं **वृद्धाः** वयोवृद्धाः **मुग्धललनाः** मनोहरस्त्रियः **बाला** बालकास्त एवादयो येषां ते **गोधनवृद्धमुग्धललनाबालादयः** तैः **संयुताः**

---

तत्रोत्पातभिया गोपा आपुर्वृन्दावनं वनम् ॥ - मणिमञ्जर्याम् (३/३०)
ते च स्थलान्तरगमनमनसा श्रीकृष्णेन बहिराविर्भावितास्तदात्मका इति ज्ञेयम्।
श्रीवत्सकृतलक्षणा इति तदसाधारणलक्षणोक्तेः ।
- श्रीमद्भागवतटिप्पणयां श्रीसत्यधर्मतीर्थकृतायाम् (१०/१२/१२)

१ पा.सू. ४/२/४३

**रामो** बलभद्रः **श्रीरमणः** श्रीकृष्णः तावाश्रयौ येषां ते तथोक्ताः । **अरण्यालया** वनौकसः **गोपाः** । **स्वान्** **भारान्** । **चारुशकटश्रेण्यां** चारूणि मनोहराणि च शकटानि तेषां श्रेणी समूहः तस्याम् । मनोहरशकटसमूहे **अधिरोप्य** निक्षिप्य । **वीणास्तन्तु**वाद्यविशेषा वल्लक्यादयः **वेणवो** वंशाः सुषिरवाद्यविशेषाः **मृदङ्गा** मुरजाः आनद्धवाद्यविशेषाः । 'ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् । वंशादिकं तु सुषिरम्' इत्यमरः । **शृङ्गाणि** शृङ्गनिर्मितानि वाद्यानि तेषां **निनदैः** स्वनैः **सम्पूरिता आशा** दिशो यैस्तथोक्ताः सन्तः **पावनं** पवित्रं **वृन्दावनं प्रति शनैः** कृष्णरामाश्रयत्वेन भयाभावान्मन्दं मन्दं **ययुः** ॥ १९ ॥

**[1]जृम्भच्चम्पकगुम्फितोच्चकबरीभाराश्चलत्कञ्चुकाः**
**सिञ्जन्मञ्जुलभूरिभूषणधरा गोप्यः समाप्य क्रियाः ।**
**कृष्णस्याद्भुतकर्म रामचरितैः साकं जगुः कृत्स्नशः**
**स्वाभीष्टाप्त्युचितस्थलीगतिमिव प्रेक्ष्य प्रहृष्टाः पथि ॥ २० ॥**

**व्या : जृम्भदिति** । **जृम्भच्चम्पकैः** विकसच्चम्पककुसुमैः । **चञ्चच्चम्पके**ति पाठे मनोहरचम्पकैरित्यर्थः । **गुम्फितायाः उच्चकबर्या** उन्नतधम्मिल्लस्य **भारो** यासां ताः **चलत्कञ्चुकाः** चलत्कूर्पासकाः । **सिञ्जन्ति** क्वणन्ति **मञ्जुलानि** मनोहराणि **भूरिभूषणानि** सुवर्णाभरणानि बहुभूषणानि इति वा । 'भूरि स्वर्णे बहौ त्रिषु' इति भास्करः । धरन्तीति **सिञ्जन्मञ्जुलभूरिभूषणधराः गोप्यः** व्रजाङ्गनाः **क्रियाः** गृहकार्याणि । **समाप्य** [2]**स्वाभीष्टस्य** वृन्दावने करिष्यमाणरासक्रीडा-

१ चञ्चच्चम्पकगुम्फितोच्चकबरीभाराश्चलत्कञ्चुकाः । इति पा.

२ व्रजात् स्वान् स्वान् समायुज्य ययू रूढपरिच्छदाः ।
वृद्धान् बालान् स्त्रियो राजन् सर्वोपस्करणानि च ।
अनस्स्वारोप्य गोपाला यत्ता आत्तशरासनाः ।
गोधनानि पुरस्कृत्य शृङ्गाण्यापूर्य सर्वतः ।
तूर्यघोषेण महता ययुः सहपुरोहिताः ॥

लक्षणस्याप्तिः प्राप्तिः तस्याः **उचिता** योग्या **स्थली** तस्याः **गतिं** गमनं **प्रेक्ष्येव प्रहृष्टाः** सत्यः । **पथि** मार्गे । **कृत्स्नशः** साकल्येन । **कृष्णस्याद्भुतकर्म** आश्चर्य-व्यापारं **रामचरितैर्**बलरामचरितैः [1]**साकं** [2]**जगुः** ।। २० ।।

**गवां खुरैर्गोपपदैरनोभिः समुत्थधूली सवितुः करौघम् ।**
**रुरोध दूरे किल तां स्वमूर्ध्नि स एव वोढुं ध्रुवमुन्निनाय ।।२१।।**

**व्या : गवामिति** । धेनूनां **खुरैः गोपानां पदैः** चरणैः **अनोभिः** शकटैः **समुत्थधूली** उद्गतरेणुः **सवितुः** सूर्यस्य **करौघं** किरणसमूहं **दूरे रुरोध किल**। अत्रोत्प्रेक्षते। **स एव** सूर्य एव **स्वमूर्धनि** स्वशिरसि **तां** धूलिं **वोढुं ध्रुवं** स्वकिरण**मुन्निनाय** । [3]विष्णुवैष्णवगोपादरजसः परमपावनत्वाच्छिरसा धर्तुं रजःसम्बन्धिस्वकिरणं स्वयमेवोन्निनायेव । अनेन [4]गोगोपानां ऋषिदेवप्रवरत्वेन देवमान्यत्वं ध्वन्यते ।।२१।।

**पुष्पैर्वृक्षगणा मनोज्ञवचनैः कीराः स्वरैः कोकिला**
**नृत्तैः केकिवरा गजाश्च गतिभिः शैलाः स्रवन्निर्झरैः ।**

---

गोप्यो रूढरथा नृत्यत्कुचकुङ्कुमकान्तयः ।
कृष्णलीला जगुः प्रीताः स्निग्धकण्ठ्यः सुवाससः ।।
- भागवते (१०/१२/३०-३२)

१ 'सहयुक्ते अप्रधाने' – पा.सू. (२/३/१९)

२ पुरतो मधुरस्वनैर्वदद्भिः स्वकृताः कर्णसुखा मुकुन्दगाथाः ।
धृतपङ्कजबीजचक्रचिह्नैः कृतनृत्तैश्चतुरैर्निषेव्यमाणम् ।।
(मध्वविजये १३/२५) इतिवज्ज्ञेयम्।

३ विना महत्पादरजोभिषेकम्। इति च भागवते (५/१२/१३)
नैषां मतिस्तावदुरुक्रमाङ्घ्रिं स्पृशत्यनर्थापगमो यदुत्थः ।
महीयसां पादरजोभिषेकं निष्किञ्चनानां न वृणीत यावत् ।।
– इति च भागवते (७/६/३२)

४ अथान्ये ये यादवास्तेऽपि सुराः सगोपाः ।। - म.भा.ता.नि (११/२३३)

**सुच्छायैर्मणिकुट्टिमस्थलचयैः सा भूर्मृगा वीक्षणै-**
**स्तद्वृन्दावनमच्युतार्हभवनं नूनं तदा तेनिरे ॥ २२ ॥**

**व्या :** पुष्पैरिति । वृक्षगणाः पुष्पैः प्रसूनैः कीराः शुकाः **मनोज्ञवचनैः** । 'कुकवृकआदान' इति धातोः सुस्वरेण चित्तं कोकन्ते गृह्णन्तीति **कोकिलाः** पिकाः सुस्वरैः **केकिवरा** मयूरश्रेष्ठाः **नृत्तैः गजा गतिभिः** मन्दगमनैः **शैलाः** पर्वताः **स्रवन्निर्झरैः** स्रवन्तो ये निर्झराः वारिप्रवाहाः तैः । 'वारिप्रवाहो निर्झरो झरः' इत्यमरः । **मृगाः** हरिणाः **ईक्षणैरवलोकनैः सा भूर्वृन्दावनभूमिः** सुनिबिडा **छाया** येषां तैः **मणिकुट्टिमस्थलचयैः** रत्ननिबद्धभूप्रदेशसमूहैः **तदा** कृष्णागमनकाले **तद्वृन्दावनम् अच्युतार्हभवनं** कृष्णयोग्यमन्दिरं [1]**नूनं तेनिरे** चक्रिरे । पुष्पोपहारमधुरवचनगीतनृत्तगतिविलासोदकसुच्छायाद्युपचारवत् खलु राजभवनं, तत्सर्वं वृन्दावनेऽप्यभवत् इत्यर्थः ॥ २२ ॥

**स लब्धजन्मा मधुराख्यपुर्यां व्रजेऽभिवृद्धः कतिचिद्दिनानि ।**
**उपेत्य वृन्दावनमेष कृष्णस्त्रिधामतां[2] दर्शयतीव देवः ॥२३॥**

**व्या :** स इति । **स** कृष्णः । **मधुराख्यपुर्यां** मधुरापत्तने । **लब्धजन्मा** प्राप्तप्रादुर्भावः । अनन्तरं **व्रजे** गोकुले **कतिचिद्दिनानि** केषुचिद्दिवसेषु । 'कालाध्वनोरत्यन्तसंयोगे'[3] इति द्वितीया । **अभिवृद्धः** सन् । इदानीं **वृन्दावनमुपेत्य त्रिधामतां** त्रीणि धामानि स्थानानि यस्य स त्रिधामा तस्य भावस्त्रिधामता तां

---

१ नृत्यन्त्यमी शिखिन ईड्य मुदा हरिण्यः कुर्वन्ति गोप्य इव ते प्रियमीक्षणेन ।
सूक्तैश्च कोकिलगणा गृहमागताय धन्या वनौकस इयान् हि सतां निसर्गः ॥
- भागवते (१०/१३/७)

२ त्रिककुब्धामा - इति विष्णुसहस्रनामसु ।
अनन्तासतवैकुण्ठनारायणपुराणि तु ।
त्रीणि धामानि वै विष्णोः - इति ब्रह्माण्डे (भा.ता. २/६/१९.)

३ पा.सू. (२/३/५)

दर्शयतीव । ''त्रिधामा करुणाकरः'' इति स्मृतेः । अनन्तासनश्वेतद्वीपवैकुण्ठाख्यत्रिधामस्थितत्वेन मधुरादित्रिधामस्थितत्वरूपनिमित्तमुत्प्रेक्षत इति विभावनोत्प्रेक्षणयोः संसृष्टिरलङ्कारः ।।२३।।

**फलैः प्रसूनैः पयसा तृणेन विधाय गोगोपनिकायरक्षाम् ।**
**वनं स्वनामानुगुणं बभाज [1]हरौ प्रसन्ने किमिहास्त्यसाध्यम् ।।२४।।**

**व्या :** फलैरिति । वनं वृन्दावनं **फलैः प्रसूनैः** कुसुमैः **पयसा** जलेन **तृणेन** यवसेन **गावो गोपास्तेषां निकायस्य रक्षां विधाय । स्वनाम** स्वस्य वृन्दावनमिति नामधेयम् **अनुगुणम्** । वृन्दं समूहम् अवति रक्षतीति अनुरूपं **बभाज** भेजे। तथाहि । **हरौ** कृष्णे **प्रसन्ने** सति **इह** लोके **असाध्यम**लभ्यं **किमस्ति** । सर्वं सुलभमित्यर्थः ।। २४ ।।

**ततः स गोरूपधरैर्नियुद्ध्यंश्चचार चारूपलमुत्क्षिपंश्च ।**
**वनेऽनुशिक्षन्निव वत्सदैत्यरणं तथोत्क्षेपणमेव तन्वाः ।।२५।।**

**व्या :** तत इति । ततो वृन्दावनप्रवेशानन्तरं **स** कृष्णः **वत्सदैत्यरणं** भविष्यद्वत्सासुरयुद्धं **अनुशिक्षन्निव गोरूपधरै**र्वत्सरूपधरैः गोपालपुत्रैः सह **नियुद्ध्यन् तथा** अस्य वत्सासुरस्य **तन्वाः** शरीरस्य **उत्क्षेपणं** उपरिप्रक्षेपं **शिक्षन्निव** अभ्यसन्निव **उपलं** पाषाणं **चारु** सम्यक् **उत्क्षिपंश्च वने** वृन्दावने **चचार** । इदं च

''क्वचिद्वादयतो वेणुं क्षेपणैः क्षिपतः क्वचित् ।
वृषायमाणौ नदतौ युयुधाते परस्परम् ।।''

इति[2] भागवतोत्प्रेक्षणम् ।। २५ ।।

---

१ किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने । भागवते (१०/३७/२)
तुष्टे किमलभ्यं रमेशे । - म. भा. ता. नि (१२/८८)
पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ।। - गीता (९/२६)

२ भागवते (१०/११/३९)

**प्लवङ्गवेषैरनुगैः समेतः स सेतुबन्धादिविहारशीलः ।**
**चरन्नरण्ये रघुराममरूपं स्वकीयमाज्ञापयति स्म देवः ॥ २६ ॥**

**व्या :** प्लवङ्गेति । **प्लवङ्गवेषैः** कपिवेषैः । 'कपिः प्लवङ्गः' इत्यमरः । **अनुगैः** भृत्यैः गोपैः **समेतः** सेतुबन्धः आवालबन्धः आदिर्यस्य **स सेतुबन्धादिः** विहार एव शीलं स्वभावो यस्य स तथोक्तः । **अरण्ये** वने **चरन्** स **देवः** कृष्णः **रघुरामरूपं** रघुकुलोत्पन्नत्वात् रघुश्चासौ रामश्चेति रघुरामः तस्य रूपं स्वकीयं स्वीयम् आज्ञापयति स्म । कपिवेषधारिगोपैरनुगतत्वात् सेतुकरणादरण्ये सञ्चरणादहमेव रघुराम इति प्रकटयामासेत्यर्थः । कृष्णेनोक्तक्रीडा कृतेति पौराणिकी कथा ।।२६।।

**सहानुगैर्गाः किल चारयन्तं खलोऽभ्यगात् तं पशुवेषधारी ।**
**अहं महान्तं प्रतियास्यतोऽस्य[१] पशुत्वमाजानजमेव मन्ये ।।२७।।**

**व्या :** सहानुगैरिति । **अनुगैः** भृत्यैः गोपालैः **सह गाः** धेनूश्चारयन्तं तृणजलोपेतप्रदेशेषु सञ्चारयन्तं कृष्णम् । **पशुवेषधारी** वत्सवेषधारी **खलः** असुरः **अभ्यगात् किल** । पशुवेषं धृत्वा युद्धाय कृष्णमाजगाम किलेत्यर्थः । किलेत्यैतिह्ये । **अहम्,** अयं न पशुवेषधारी किन्तु महान्तमतिसमर्थं कृष्णं **प्रतियास्यतो** युद्धार्थमागच्छतोऽस्य दैत्यस्य **पशुत्वं** स्वपरसामर्थ्यविवेकशून्यत्वलक्षणपशुत्वम् **आजानजं** जननमारभ्यजातं सहजं **मन्ये** ।। २७ ।।

**तद्वृन्दावनभूगणं पदरुचा प्रागङ्कयन् सोऽसकृत्**
**पश्चात् तद्रुमरुद्गणं च वरयन् कुर्वन्निवान्तर्वनम् ।**
**सद्भास्वद्गणशोभि लेखसवयो हृद्वयोगणौ चाश्रयन्**
**लक्ष्मीशोऽनुकरोति तत्र विचरन् शार्दूलविक्रीडितम् ।। २८ ।।**

---

१ ते नराः पशवो लोके किं तेषां जीवने फलम् ।
यैर्न लब्धा हरेर्दीक्षा नार्चितो वा जनार्दनः ।। -इति कृष्णामृतमहार्णवे (३)

**व्या : तद्वृन्दावनम्** इति। **तत्र** वृन्दावने **विचरन् लक्ष्मीशः** कृष्णः। **शार्दुलविक्रीडितं** वत्सासुरवधे व्याघ्रव्यापार**मनुकरोति** शार्दूलवदाचरति। वत्सवधे शार्दूलानुकरणस्योचितत्वादिति भावः। शार्दूलविक्रीडितमनुकरोती-त्यनेन शार्दूलविक्रीडितस्य वृत्तस्य सादृश्यं व्यज्यते। किं कुर्वन्। तस्य **वृन्दावनस्य भूगणं** स्थलसमूहं **प्राक्** प्रथमं **पदरुचा** पादकान्त्या **अङ्कयन्** भूषयन्। 'अङ्को नाटकविच्छेदे सङ्ख्यायां युधि भूषणे' इति रत्नमाला। शार्दूलविक्रीडितवृत्तस्यापि सुप्तिङन्तपदेन प्रथमं भूमिदेवताकमगणाङ्कितत्वात् उपमा। पुनः किं कुर्वन् **पश्चात्** अनन्तरं **तद्रमरुद्गणं** वृन्दावनगतमन्दमारुतसमूहं **पदरुचा असकृत् मुहुर्वरयन्** सञ्चरणजनितश्रमपरिहारार्थं अङ्गीकुर्वन्। कृष्णपादारविन्दसमीपे मन्दमारुतो वातीत्यर्थः। वृत्तमपि वायुदेवताकसगणद्वयमङ्गीकरोति। पुनः किं कुर्वन्। **पदरुचा अन्तर्वनं** वनमध्यं **सद्धास्वद्गणशोभि** सत्सूर्यसमूहशालि **कुर्वन्निव**। कृष्णपादस्य कोटिसूर्यसदृशकान्तियुक्तत्वादिति भावः। वृत्तमपि द्वयोः सगणयोर्मध्ये सूर्यदेवताकजगणशालि। पुनः किं कुर्वन्। **पदरुचा** चित्रे लिख्यन्त इति **लेखाः** देवाः। 'लेखा अदितिनन्दनाः' इत्यमरः। **सवयसः** स्निग्धाः गोपाः। 'स्निग्धो वयस्यः सवयाः' इत्यमरः। तेषां **हृद्द्योगणौ** हृदयाकाशसमूहौ। 'द्यौ दिवौ द्वे स्त्रियामभ्रम्' इत्यमरः। देवानां हृदयाकाशगणः सवयसां हृदयाकाशगणश्चेति द्वौ लेखसवयोहृद्द्योगणौ **आश्रयन्** तद्ध्यानविषयीभवन्नित्यर्थः। वृत्तमप्याकाशदेवताकतगणद्वयशोभीति भावः। गणलक्षणं तूक्तं वृत्तरत्नाकरे – ''सर्वगुर्मो मुखान्तलौ यरावन्तर्गलौ सतौ। ग्मध्याद्यौ ज्भौ त्रिलोनोष्टौ भवन्त्यत्र गणास्त्रिकाः'' इति। गणदेवतास्तु [1]अमृतानन्दीये कथिताः। ''शुभदो मो भूमिमयः सो वायव्यः जक्षयप्रदः। जः सूर्यो रोगदः प्रोक्तोऽनैश्वर्यो नभस्तुतः'' इति। 'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्'[2] ॥ २८ ॥

---

१ जः सूर्यो रोगदः प्रोक्तः सो वायव्यः सुखप्रदः।
शुभदो मो भूमिमयो नो गौर्धनकरो मतः ॥ - अमृतानन्दीयालङ्कारसङ्ग्रहे (१/३४)

२ इति वृत्तरत्नाकरे (३/९९)

**उदक्षिपत् तं हरिरात्मदोर्भ्यामधः पपाताशु स वत्सदैत्यः ।**
**व्रजाधिनाथस्य स एष धर्मो गृहीतमायस्य च तस्य पातः ॥२९॥**

**व्या :** उदक्षिपदिति । **हरिः** **तं** दैत्यम् । **आत्मदोर्भ्यां** स्वहस्ताभ्यां गृहीत्वा **उदक्षिपत्** । उपरि कपित्थवृक्षाग्रे चिक्षेप । **सः** **वत्सदैत्यः** **आशु** **अधः** **पपात** । कृष्णस्योत्क्षेपणकर्म दैत्यस्याधःपात इत्युभयं युक्तमित्याह – **व्रजाधिनाथस्येति** । **व्रजाधिनाथस्य** कृष्णस्य । वत्सासुरस्योपरिप्रक्षेपणरूपो योऽसौ व्यापारः **स एष धर्मः** । स्वरक्ष्यवत्सवेषधारिणो ऊर्ध्वगतिप्रेषणं युक्तमित्यर्थः । **गृहीतमायस्य** गृहीतछद्मनः वत्सासुरस्याधःपातोऽपि **धर्मो** युक्तः । ऊर्ध्वगतिसाधके हरौ विद्यमानेऽपि दातुरेव विरोधकृतां दैत्यानामधःपात एवेति भावः ॥ २९ ॥

**स पातयामास पतन् कपित्थफलानि लोलद्रुमसञ्चयेभ्यः ।**
**तथाहि कृष्णप्रतिपक्षिपक्षः कथं न पातैकफलस्त्रिलोक्याम् ॥३०॥**

**व्या :** **स** इति । **स** दैत्यो वत्सासुरः **पतन्** अधः पतन् । **लोलद्रुमसञ्चयेभ्यः** स्वपार्श्वाभिघातेन चलद्द्रुमसमूहेभ्यः । कपिनो मथ्नन्तीति **कपित्थाः** तेषां फलानि **पातयामास** । **तथाहि** तद्युक्तं हि । **कृष्णप्रतिपक्षिणो** दैत्यास्तेषां **पक्षः** पार्श्वं यस्य स तथोक्तः । कृष्णोत्क्षिप्तवत्सासुरस्यात्मसात्करणात् सहाय इति ध्वनिः । 'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु' इति यादवः । स **त्रिलोक्यां** पात एव एकं मुख्यं फलं यस्य स **पातैकफलः** **कथं न** भवेत् । भवत्येवेत्यर्थः । [1]द्वेषिवद्द्वेषिपक्षपातिनोऽपि पात एवेति भावः ॥ ३० ॥

**अन्योन्याश्रितरागरज्जुवितते संसृत्यभेद्यद्रुमे**
**सङ्गृह्य प्रतिकल्पमब्जजमुखान् भुङ्क्ते सुपर्णानिह ।**

---

१ नारायणद्विट्-तदनुबन्धिनिग्रहः क्षत्रियाणां परमो धर्मः तद्विरुद्धः सर्वोऽप्यधर्मः - इत्यादि गीताभाष्याद्युक्तदिशा ज्ञेयम् ।

**तं विश्वाद्भुतलुब्धकं दितिसुतः श्रुत्वा बकोऽभ्याययौ**
**नूनं मीनतनुं तिमिङ्गिलमिव व्यत्यस्तबुद्धिर्बकः ॥३१॥**

**व्या :** **अन्योन्येति**। यः कृष्णः इह जगति **अन्योन्यं** भर्तृरागो भार्यायां भार्यारागो भर्तरीति परस्पराश्रितो **राग** एव **रज्जुर्जालम्** । जालस्याप्यन्योन्यनिबद्धरज्जु-निर्मितत्वादिति भावः । तया **वितते** आस्तृते **संसृतिः** संसार एवाभेद्यद्रुमः विष्णुप्रसादव्यतिरेकेण केनाप्यविनाश्यवृक्षः तस्मिन् । **रागरज्जुवितते संसृत्यभेद्यद्रुम** इत्यनेन राग एव संसारमूलकारणमिति सूचयति । **प्रतिकल्पं** कल्पे कल्पे। **अब्जजो** ब्रह्मा **मुखं** येषां ते तान् **सुपर्णान्** पक्षिणः ब्रह्मादिपिपीलिकान्तजीवाख्यपक्षिण इत्यर्थः। **सङ्गृह्य** गृहीत्वा **भुङ्क्ते**। अभिसंहरतीत्यर्थः। यथा लुब्धकः जालं वृक्षे विस्तार्य तत्र स्थितान् पक्षिणः सङ्गृह्य भक्षयति तद्वदित्यर्थः। **विश्वाद्भुतलुब्धकं** जगदाश्चर्यधीवरं **तं** कृष्णं बकः बकपक्ष्याकारः **दितिसुतो** दैत्यः । **मीनतनुं** मत्स्यावतारे मीनाकृतिं **श्रुत्वा** । बकस्य मीनाशित्वादिति भावः। **व्यत्यस्तबुद्धिर्**विपरीतबुद्धिः **बकः** बकपक्षी तिमिं दशयोजनं महामीनं गिलतीति **तिमिङ्गिलः** **तमिव**। अनेनाद्भुतमीनाकारत्वान्मत्स्याकारोऽपि हरिः दैत्यसंहारीति सूचितम्। **अभ्याययौ**। यथा मीनाशया तिमिङ्गिलसमीपमागतस्य बकपक्षिणः तत एव नाशः तथा तं कृष्णं हन्तुमागतस्य बकासुरस्य कृष्णादेव नाशो भविष्यतीति भावः ॥ ३१ ॥

**कृष्ण त्वन्नाम जिह्वा न कथयति ममेत्यास्यमादर्शयन् स्वौ**
**पक्षौ नो कृष्णपक्षस्त्विति विशदयितुं प्रोत्क्षिपन्नङ्घ्रियुग्मम् ।**
**पश्चाद्भागे विधुन्वन् हरिनिलयमहीसङ्गभीत्येशकेशं**
**मत्वा व्योमाध्वनाऽसौ यदुकुलतिलकं सत्वरोऽभ्याजगाम ॥३२॥**

**व्या :** **कृष्णेति** । **असौ** बकाकारो असुरः । हे **कृष्ण** **मम** **जिह्वा** **त्वन्नाम** **न** **कथयति** इतीव आस्यं वदनम् **आदर्शयन्** । सरोवराभ्याशे आहारापेक्षया

मुखं व्यक्तीकृत्य गमनं बकपक्षिणो जातिः । अहं **कृष्णपक्षः** कृष्णस्य मित्रं **नो** भवामीति । 'पक्षः सहायगरुदन्तिकसाध्यभित्तिमित्रेषु चुल्लिविवरे नृपकुञ्जरे च' इति रत्नमाला । **इति विशदयितुं** स्पष्टीकर्तुमिव । **स्वौ** स्वकीयौ **पक्षौ** गुरुतरौ **प्रोत्क्षिपन्** वितत्य चालयन् । इयमपि पक्षिणो जातिः । **हरिनिलयमहीसङ्गभीत्या** विष्णुक्षेत्रभूसम्बन्धभयेनेव । **अङ्घ्रियुग्मं** चरणयुगलं **पश्चाद्भागे** पृष्ठभागे **विधुन्वन्** पदे पृष्ठतः कृत्वा गमनं बकजातिः । नन्वेतादृशविष्णुविद्वेषिणो बकस्य विष्णुपदे सञ्चरणं कथमित्याशङ्कायामाह – **ईशकेशमिति** । व्योम गगनम् । 'व्योमकेशो भवो भीमः' इत्यभिधानात् । शिवकेशं मत्वा । **व्योमाध्वनेत्यत्र** व्योमेति व्योमाध्वनेति च पदविभागः कर्तव्यः । **सत्वरः** त्वरया सहितः सन् **व्योमाध्वना** गगनमार्गेण **यदुकुलतिलकं** कृष्णं **अभ्याजगाम** । **स्रग्धरावृत्तम्** । 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्'[1] ॥ ३२ ॥

**हरिं प्रजग्रास ततः खलोऽसौ रुरोध कण्ठश्वसनं ज्वलन् सः ।**
**पुनश्च चच्छर्द स एव नूनं निरक्रमीत् तस्य हृदोऽघपूर्णात् ॥३३॥**

**व्या :** हरिमिति । ततः आगमनानन्तरम् **असौ** बकरूपी **खलः** असुरः । **हरिं** कृष्णं **प्रजग्रास** भक्षितवान् । **सः** बककुक्षिगतः कृष्णः **ज्वलन्** अग्निवत् प्रज्वलन् **कण्ठश्वसनं** कण्ठान्निर्गच्छदुच्छ्वासं **रुरोध** । **पुनश्च** स खलः कृष्णं **चच्छर्द** तदौष्ण्यमसहमानः बहिर्निःसारयामास । अत्रोत्प्रेक्षयति । **स एव** कृष्ण एव **तस्य** बकस्य । **अघपूर्णात्** अघेन पापेन पूर्णात् व्याप्तात् **हृदः** हृदयात् स्वयमेव **निरक्रमीत्** निश्चक्राम । नहि पापिनां हृदये कृष्णः तिष्ठतीति भावः ॥ ३३ ॥

**प्राग्बालग्रहरूपिणीं स शकटे सङ्कल्प्य रज्जुग्रहां**
**तद्वाहान् खरकेशिवत्सवृषभान् निःशेषदैत्यासुवत् ।**

---

१ इति वृत्तरत्नाकरे (३/१०२)

**संयोज्यानिलरूपदैत्यमधुना तच्चिह्नमत्यद्भुतं**
**कृष्णः प्रेषयतीव हस्तगबको गाढं तमः प्रापयन् ॥ ३४ ॥**

**व्या : प्रागिति ।** **हस्तगबकः** हस्तस्थबकासुरः शकटेन सकलदैत्यान् गाढं तमः **प्रापयन् स** कृष्णः **प्राक्** प्रथमं **शकटे** शकटासुराख्या **बालग्रहरूपिणीं** बालमारिकां पूतनां रज्जुग्रहां शकटनिबद्धरश्मिग्रहां **सङ्कल्प्य** पुच्छस्यापि बालशब्दवाच्यत्वात् अनसि निवद्धबलीवर्दपुच्छाभिमर्दनेन अनश्चालयितुं बालग्रहरूपिणीं **रज्जुग्रहां** सङ्कल्प्येत्यर्थः । **तद्वाहान्** तस्य शकटस्य वाहान् रासभरूपी **खरः** अश्वरूपी **केशी वत्सरूपी** वत्सासुरः बलीवर्दरूपी **वृषभः** तान् युगद्वयबद्धपशुचतुष्टयमित्यर्थः । सङ्कल्प्य मनसा निरूप्य खरादित्रित-यवधस्य करिष्यमाणत्वात् सङ्कल्प्येत्युक्तम् । **निःशेषदैत्यासुवत्** सकलदैत्यानां सुररूपप्राणविलक्षणप्राणानिलवत् । सुररूपप्राणस्य **कृष्णेन** वियोजितत्वादिति भावः । अनिलरूपदैत्यं वातासुरं शकटमारुह्य गन्तारं **संयोज्य** सम्बद्ध्य **अधुना अत्यद्भुतम्** अतिभयानकं बकं **तच्चिह्नं** तस्य शकटस्य चिह्नं ध्वजस्थितलक्षणं गाढं तमः प्रापयन् प्रेषयन् प्रेषयतीव ॥ ३४ ॥

**पतत्त्रिणं तं परिगृह्य दोर्भ्यां विभिद्य तुण्डं विनिपात्य भूमौ ।**
**स यातनामीनभुजं विधातुं न्ययोजयन्नारकवापिकासु ॥ ३५ ॥**

**व्या : पतत्त्रिणमिति ।** **स** कृष्णः **तं पतत्त्रिणं** [1]बकम् । 'पतत्त्रिपत्रि-पतगपतत्पत्त्ररथाण्डजाः' इत्यमरः । **दोर्भ्यां** हस्ताभ्यां **परिगृह्य तुण्डं** वदनं **विभिद्य** विपाट्य **भूमौ विनिपात्य** यातनास्तीव्रवेदना एव मीनास्तान् भुङ्क्ते इति **यातनामीनभुक्** तम् । **विधातुं नारकवापिकासु** निरयकूपेषु **न्ययोजयत्** प्रेषयामास ॥३५ ॥

---

१ आक्रम्य पादमपि पादतलेन तस्य दोर्भ्यां प्रगृह्य च परं विददार भीमः ।
मृत्वा स चोरुतम एव जगाम पापो विष्णुद्विडेव हि शनैरनिवृत्ति चोग्रम् ॥
- म.भा.ता.नि. (१९/९१)

आभासकोऽस्य पवनः । - म.भा.ता.नि. (१/१४)

**ततः स पश्यन् परितो वसन्तश्रियं मरुन्मर्दितघर्मबिन्दुः ।**
**चचार चामीकरचारुवासाः प्रसूनमृद्वङ्घ्रितलोऽम्बुजाक्षः ॥३६॥**

**व्या :** वसन्तर्तुं वर्णयितुमारभते – तत इति । **मरुता** वायुना **मर्दिता** निरस्ता **घर्मबिन्दवः** स्वेदबिन्दवो यस्य स तथोक्तः । 'घर्मो निदाघः स्वेदः स्यात्' इत्यमरः । **चामीकरवत्** सुवर्णवत् **चारु** मनोहरम् । पीतमित्यर्थः । **वासो** वस्त्रं यस्य स तथोक्तः । **प्रसूनवत् मृदुनी अङ्घ्रितले** यस्य स तथोक्तः । **अम्बुजवदक्षिणी** यस्य स तथोक्तः । कृष्णः **वसन्तश्रियं** वसन्तर्तोः कान्तिं **परितः** समन्तात् **पश्यन् चचार** ॥ ३६ ॥

**बर्हाक्षीं प्रसवाननामलिकुलोत्फुल्लालकां पल्लव-**
**प्रान्तस्कन्धभुजां लतामृदुतनुं रक्ताम्बरारञ्जिताम् ।**
**माद्यत्कोकिलसुस्वनां शुकवचश्चाटुं पलाशाधरां**
**शक्तोऽभूद्वनदेवतामृतुमतीमप्युज्झितुं नो हरिः ॥ ३७ ॥**

**व्या :** **बर्हाक्षीमिति** । **बर्हाणि** मयूराङ्गेभ्यो निपतितानि पिच्छान्येवाक्षिणी यस्यास्ताम् । **प्रसवाः** पुष्पाण्येवाननं यस्यास्ताम् । 'प्रसवः पुष्पफलयोः योजनानुज्ञयोः सुते । पारम्पर्यप्रसङ्गे च प्राणिगर्भविमोचने' इति रत्नमाला। **अलीनां** भ्रमराणाम् । 'षट्पदभ्रमरालयः' इत्यमरः । **कुलमेव** समूह एव **उत्फुल्ला** मनोहरा **अलका** यस्यास्ताम् । पल्लवा रक्तकरतलस्थानीयाः **प्रान्ते** येषां ते **पल्लवप्रान्ताः** ते च ते **स्कन्धाः** प्रकाण्डा एव । 'अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधिस्तरोः' इत्यमरः । **भुजौ** यस्यास्ताम् । **लतैव मृद्वी तनुर्यस्यास्ताम्** । **रक्तं** प्रवालादिरागदिग्धं **अम्बरं** व्योमैवाम्बरं वस्त्रम् । 'अम्बरं व्योम्नि वाससि' इति रत्नमाला । तेन आरञ्जिताम् । परितो विसर्पि-प्रवालादिरागदिग्धगगनाख्यकुसुम्भरागरञ्जितरक्तवस्त्रालङ्कृतामित्यर्थः । अनेन पुरुषवशीकरणौचित्यं सूच्यते । **माद्यन्तश्चूतपल्लवादिरसास्वादजन्यमदोपेताः**

**कोकिला**स्तेषां **सुस्वन** एव स्वनो यस्यास्ताम्। **शुकानां** कीराणां **वचांस्येव चाटवः** प्रियवाक्यानि यस्यास्ताम् । **पलाशान्येव** पलाशपुष्पाण्येवा**धरो** यस्यास्ताम्। **वनदेवतां** वनाभिमानिदेवतां **हरिः** कृष्णः **ऋतुमतीमपि** वसन्तर्तुमतीमपि। रजस्वलामपीति ध्वनिः । 'ऋतुर्ग्रीष्मादौ स्त्रीरजस्यपि' इत्यभिधानात्। अपिपदेन रजस्वलागमनं निन्दितमिति सूच्यते । **उज्झितुं** हातुं **शक्तः** समर्थो **नोऽभूत्** । 'रक्तं वश्यकरं भवेत्' इति वचनात् वशीकरणोचितरक्तवस्त्रालङ्कृतां सङ्गीतचाटूक्तिचतुरां दृगन्ताद्यङ्गसौन्दर्योपेतां वनितां रसिकपुरुषः [1]रजस्वलामपि न त्यजतीति ध्वनितोऽर्थः । स्त्रीपक्षे स्पष्टः । बर्हवदक्षिणी प्रसववदाननं यस्या इत्याद्युपमासमासं कृत्वा योज्यम् । निषिद्धकालेऽपि रमणं स्वापरित्यागिनं कुर्वन्त्याः कान्तायाः लावण्यातिशयः कथं कथनीय इति भावः ।। ३७ ।।

**सजलशीकरदक्षिणवायुना कुसुमसञ्चयकम्पनचञ्चुना ।**
**व्यजनपाणितलेव तमन्वगाद्वनरमा नरमानसमण्डनम् ।।३८।।**

**व्या : सजलेति** । **वनरमा** वनलक्ष्मीः **कुसुमानां सञ्चयस्य** समूहस्य **कम्पनेन चञ्चुना** मनोज्ञेन । अनेन मान्द्यं सौरभ्यं च द्योत्यते । जलशीकरैः जलकणैः सहितः **सजलशीकरः दक्षिणः** दक्षिणदिग्भवः **वायु**र्मलयानिल इत्यर्थः । तेन सह **व्यजनपाणितलेव** व्यजनं तालवृन्तं पाणितले यस्याः सा तथोक्तेव । **नराणां मानसमण्डनं** हृदयालङ्कारम्। हृद्यमित्यर्थः। **तं** कृष्ण**मन्वगात्** अन्वगच्छत्। कृष्णः वने यत्र यत्र सञ्चरति तत्र फलपुष्पादिवनसौरभ्यादिगुणयुक्तो वायुस्तिष्ठतीति भावः। द्रुतविलम्बितवृत्तम्। 'द्रुतविलम्बितमाह नभौ भरौ'[2] इत्युक्तत्वात् ।।३८।।

**परिलसत्सहकारनवाङ्कुरे पिकगणः शुशुभे शनकैर्ध्वनन् ।**
**स्मररहस्यमनूनिव सञ्जपन्नखिलदर्पकदर्पकसायके ।। ३९ ।।**

---

१ नोपगच्छेत् प्रमत्तोऽपि स्त्रियमार्तवदर्शने । - मनुस्मृतिः (४/४०)

२ इति वृत्तरत्नाकरे (३/५०)

**व्या : परिलसदिति । पिकगणः** परभृतसमूहः **परिलसतः** प्रकाशमानस्य सहकारस्यातिसौरभयुक्तचूतस्य । 'आम्रश्चूतो रसालश्च सहकारोऽतिसौरभः' इत्यमरः । **नवाङ्कुरे** नूतनकिसलयाङ्कुरे । **शनकैर्मन्दं ध्वनन्** । अखिलान् कामिनो दर्पयतीत्यखिलदर्पकः । स चासौ **दर्पक**श्च कन्दर्पः । 'कन्दर्पो दर्पकोऽनङ्गः' इत्यमरः । तस्य **सायके** बाणे । चूतस्य कामबाणत्वादिति भावः । **स्मररहस्यमनून्** मन्मथस्य गोप्यमन्त्रान् । **सञ्जपन्निव** स्त्रीवशीकरणाय मन्त्रजपं कुर्वन्निव । **शुशुभे** बभौ ॥३९ ॥

**कुसुमचुम्बनकृन्मधुरध्वनिः प्रियजनानिति शिक्षति षट्पदः ।**
**मृदुगिराऽब्जमुखीसरसाधरं पिबत मा बत मान इहोचितः ॥४०॥**

**व्या : कुसुमेति** । कुसुमानां चुम्बनं करोतीति **कुसुमचुम्बनकृत्** । अनेन कमलसदृशकान्तामुखचुम्बनशिक्षा दर्शिता । **मधुरः** मनोहरः **ध्वनिर्यस्य स तथोक्तः** । अनेन नायिकाकोपशान्त्यै सान्त्ववचनं वक्तव्यमिति शिक्षितम् । **षट्पदो** भ्रमरः । **मृदुगिरा** मधुरवचनेन । **अब्जमुख्याः** कमलवदनायाः कान्तायाः **सरसः** स्वादुयुक्तः **अधरः** अधरोष्ठस्तम् । **बत** हे कामिजनाः । 'बतानुकम्पासन्तोषखेदा मन्त्रण-विस्मये' इति रत्नमाला । **पिबत** पानं कुरुत । **इह** भोगोचिते वृत्तौ । **मानो** गर्वः कोपो वा । **मोचितः** युक्तो न भवति । 'अमानोनाः प्रतिषेधे' इति वचनादत्र माशब्दः प्रतिषेधार्थक **इति प्रियजनान् शिक्षति** उपदिशति । चूताङ्कुरास्वादमधुरकण्ठपिकस्वरश्रवणे सुतरां कामोद्रेको भवति । षट्पद इत्यनेन एतादृशप्रार्थनानङ्गीकारे नायकस्यान्यत्र गमने शिक्षा स्वापराधश्च द्योत्यते ॥४०॥

**मरुति वाति शुचा पथिकाङ्गना नयनवारि युयोज पथि स्पृशन् ।**
**अमुमवैतु पतिर्मम वेदनामलिकुलालिकुलाभ्युदितामिति ॥४१॥**

**व्या : मरुतीति** । पन्थानं गच्छतीति **पथिकः** । तस्याङ्गना प्रवासिपुरुषस्त्री । **मरुति** वायौ **वाति** सति । **शुचा** प्रियस्मरणजन्यशोकेन । **अमुं** वायुम् ।

पथि मार्गे । **स्पृशन्** । अस्य वायोस्तत्रापि गमनसम्भवादिति भावः । **मम पतिः** प्रियः । **अलिकुलान्येव अलिकुलानि** सखीनिवहाः तैरभ्युदिताम् उक्ताम् । भ्रमराणां वायुमनुसृत्य गमनादिति भावः । मम **वेदनां** दुःखमवैतु जानीयादितीव **नयनवारि** नेत्रजलं वायौ **युयोज** अङ्गुल्यग्रेणोदक्षिपदित्यर्थः । अनेन पथिकाङ्गनायाः मोहावस्था दर्शिता ।। ४१ ।।

**मधुनियुक्तभुजङ्गचयः स्तने रहसि नूत्नशिवं रचयन्निव ।**
**नखपदेन्दुकलां वसनच्युतिं वितनुतेऽतनुतेजसि योषिताम् ।।४२।।**

**व्या : मधुनियुक्तेति** । **मधुना** वसन्तेन । 'चैत्रवसन्तमधुद्रुमदैत्यविशेषेषु पुंसि मधुशब्दः' इति रत्नमाला । **नियुक्तः** अस्मत्सुहृन्मदनविनाशकस्य शिवस्य प्रतिशिवं कर्तुं प्रेरितः **भुजङ्गचयः** विटसमूहः । 'भुजङ्गौ विटपन्नगौ' इति रत्नमाला । **योषितां** स्त्रीणाम् । **अतनुतेजसि** अनल्पकान्तौ **स्तने** कुचे । **नूत्नशिवं** नवीनशङ्करम् । 'नवीनं नूतनं नूत्नम्' इत्यमरः । **रहसि** एकान्ते **रचयन्निव** कुर्वन्निव । बलवद्विरोधस्य प्रकटतया कर्तुमशक्यत्वादिति भावः । **नखपदेन्दुकलां** नखस्य यत्पदं स्थानं क्षतमिति यावत् । तदेव इन्दुकला ताम् । नखक्षताख्यचन्द्रकलां **वसनस्य** स्तनश्रितवस्त्रस्य **च्युतिं**राकर्षणं **वितनुते** करोति । शिवस्यापि चन्द्रमौलित्वात् दिगम्बरत्वादिति भावः । शिवनिर्माणे तदाभरणत्वेन तत्परिचितभुजङ्गानां सामर्थ्यमस्तीति द्योतनाय विटपदे भुजङ्गचय इत्युक्तम् । अनेन रत्यारम्भः सूच्यते ।। ४२ ।।

**मृगमदेन सितेतरकण्ठतां करयुगाम्बुजवेष्टितमूर्धताम् ।**
**हृदयमन्दिरतां समदृश्यतां रुचिरतां चिरतान्तमुखैः स्वकैः ।।४३।।**

**व्या : मृगमदेनेति** । **मृगमदेन** कस्तूर्या । 'मृगनाभिर्मृगमदः कस्तूरी चाथ कोलकम्' इत्यमरः । **सितेतरकण्ठतां** नीलकण्ठतां **करयुगमेवाम्बुजं** तेन **वेष्टितः** पिहितः **मूर्धा** मस्तको यस्य स तथोक्तः । तस्य भावस्तत्ता **ताम्** । अनेन

कस्तूर्यादिपरिमलद्रव्येण कुचालङ्करणं कुचग्रहणलक्षणप्रथमा रतिः सूच्यते । शिवस्यापि नीलकण्ठत्वादर्चकार्पिताम्बुजमस्तकत्वादिति भावः । **हृदयमन्दिरतां** स्ववक्षोनिलयतां **समदृश्यतां** सम्यगदृश्यताम् । अनेन गाढालिङ्गनलक्षणा मध्या रतिः सूच्यते । स्वकैः **स्वकीयैः चिरेण** सुरतेन **तान्तानि** श्रान्तानि यानि **मुखानि** तैः । **रुचिरतां** मनोहरताम् । रतावसाने श्रान्तिपरिहाराय कुचोपरि शिरः कृत्वा निद्रां चक्र इति भावः । अनेन सुरतान्तः सूच्यते । **वितनुत** इति पूर्वेण सम्बन्धः । शिवस्यापि स्मरज्जनहृन्निलयत्वादयोग्यजनादृश्यत्वाद्भुजङ्गमु-खैर्भूषितत्वाच्चेति भावः ॥४३॥

**मदनवह्निसखः प्रियशीतलः कुसुमगन्धवहः किल सेव्यते ।**
**मरुदुपारतमन्मथसङ्गरैः स परितः परितप्तमुखैर्नरैः ॥ ४४ ॥**

**व्या : मदनेति । मदनवह्निसखः** मन्मथाग्नेः सुहृत् । मन्मथोद्दीपनकारीत्यर्थः । प्रियश्चासौ शीतलश्चेति प्रियशीतलः । कुसुमानां गन्धमामोदं वहति प्रापयतीति **कुसुमगन्धवहः सः** शैत्यसौरभ्यमान्द्यलक्षणगुणत्रययुक्तः **मरुत्** वायुः **उपारतः** उपरतो निवृत्त इत्यर्थः । **मन्मथसङ्गरः** कामयुद्धं येषां ते निवृत्तसुरता इत्यर्थः । तैः **परितप्तमुखैः** सुरतश्रमेण म्लानमुखैः **नरैः** पुरुषैः **परितः** समन्तात् **सेव्यते** । मदनवह्निसख इत्यनेन कुसुमगन्धवह इत्यनेन च वायुगुणातिशयेन समापितरतीनामपि रिरंसा जायते इति द्योत्यते ॥ ४४ ॥

**दाक्षिण्यं प्रकटीकरोति मरुता रागं प्रवालैः पिकै-**
**र्माधुर्यं प्रियभाषणं शुकचयैर्गीतानि भृङ्गैर्मधुः ।**
**स्नानं सन्मधुनाऽर्चनं च कुसुमैश्छत्रं तरुच्छायया**
**स्वाधीशं जनयिष्यतोऽस्य हृदयं व्यग्रं विधास्यन्निव ॥ ४५ ॥**

**व्या : दाक्षिण्यमिति । मधुर्वसन्तः स्वाधीशं** स्वस्वामिनं कामं **जनयिष्यतः** प्रद्युम्नरूपेण प्रसविष्यतोऽस्य कृष्णस्य **हृदयं** मनः **व्यग्रं** त्वरायुक्तं **विधास्यन्निव**

**मरुता** मलयमारुतेन दाक्षिण्यं दक्षिणदिग्भवत्वम् । अनेनानुसरणपक्षे सरलत्वं व्यज्यते। 'दक्षिणः सरले याम्यदिक्स्थे छन्दानुवर्तिनि' इति भास्करः।**प्रकटीकरोति** प्रकाशयति । **प्रवालैः** किसलयैः **रागमनुरागं पिकैर्माधुर्यं शुकचयैः प्रियभाषणं** प्रियोक्तिं **भृङ्गै**र्भ्रमरैः **गीतानि सन्मधुना** सत्पुष्परसेन । 'मधु मद्ये पुष्परसे' इत्यमरः। **स्नानं कुसुमैरर्चनं** पूजां **तरूणां छायया छत्रमातपत्रं** प्रकटीकरोतीति सर्वत्रान्वयः। कार्यार्थिनो हि किं किं न कुर्वंति । अतः छत्रपादुकादिधारणमपि कुर्वन्तीति भावः। अनेन चित्तव्यग्रीकरणायोद्दीपनविभावाः वसन्तकालस्वभावानुसारतो नीतयश्च दर्शिताः ॥ ४५ ॥

**वसन्तकाले वनितासहायं लषन्ति मर्त्या इति किं विचित्रम् ।**
**यतः सरागास्तरवोऽपि तन्वीर्लता न वाताचलितास्त्यजन्ति ।४६।**

**व्या : वसन्तकाल** इति। **वसन्तकाले मर्त्याः** मनुजाः **वनितासहायं** कान्तासहायं **लषन्ति** अभिलषन्तीति **किं विचित्रं** किमाश्चर्यम् । **यतः** कारणात् **तरवोऽपि** वृक्षा अपि **सरागाः** रागसहिताः सन्तः अनुरागसहिता इति ध्वनिः । **वातेन** वायुना **आचलिताः** समन्तात् कम्पिताः । अनेनाङ्गीकारे वैमुख्यं ध्वन्यते। **तन्वीः** कृशा **लता** वल्लीः **न त्यजन्ति** । वसन्तकाले किसलयरागयुक्ताः तरवो लतामाश्लिष्य शोभन्ते, इति भावः ॥ ४६ ॥

**अधरपाणिपदूर्जितपल्लवो मधुरवेणुरवः कलभाषणः ।**
**वदनगन्धवहश्वसनोऽजयत् सकुसुमः कुसुमाकरमच्युतः ॥४७॥**

**व्या : अधरेति** । **अधरः** अधरोष्ठं **पाणी** हस्तौ **पदौ** च अधरपाणिपत् तदेव **ऊर्जितः** सन्नद्धः **पल्लवो** यस्य स तथोक्तः । **मधुरः** मनोहरो **वेणुरवो** यस्य स तथोक्तः । अनेन पिकप्रतिनिधिः सूच्यते । **कल**मव्यक्तमधुरम् । 'ध्वनौ तु मधुरास्फुटे । कलो मन्द्रस्तु गम्भीरे' इत्यमरः ।**भाषणं** वचो यस्य स तथोक्तः। अनेन शुकप्रतिनिधिः सूच्यते । **वदनगन्धवहः** मुखमारुत एव **श्वसनो**

मन्दवायुर्यस्य स तथोक्तः । **सकुसुमः** कुसुमैः सहितः । **अच्युतः** कृष्णः । **कुसुमाकरं** वसन्तम्। **अजयत्** । अच्युत इत्यनेन ऋतोर्मासद्वयपर्यन्तमेतादृश-त्वात् कृष्णस्य च्युतिरहितत्वेन सर्वदैतादृशत्वात् तज्जयो युक्त इति द्योत्यते।। ४७।।

**विततपल्लवफुल्लवने क्वचित् तरुतटे वसतोऽस्य पदाम्वुजम् ।**
**उपचचार वरानुगमण्डलीभुजगतो जगतोऽभयसिद्धये ।।४८।।**

**व्या :** वितेति । **वरानुगमण्डली** श्रेष्ठभृत्यवर्गः । **क्वचित्** कदाचित् । **विततः** विस्तृतः **पल्लवो** यस्य तत् विततपल्लवं तच्च तत् **फुल्लं** विकसितश्च तत् **वनं** च तस्मिन्नधिकरणे **तरुतटे** वृक्षप्रान्ते **वसतो** निवसतोऽस्य कृष्णस्य **पदाम्वुजं** पादारविन्दं **भुजगतः** कालियसर्पाज्जगतो विश्वस्याभयसिद्धये विषपरिहारसिद्धये **उपचचार** । पदेन हि कालियं नियम्य विषभयं परिहरिष्यतीति अतः पादोपचार एव युक्त इति भावः । "पादसंहननं चक्रुः किञ्चित् तस्य महात्मनः"[१] इति भागवतवचनोक्तस्य निमित्तान्तरोत्प्रेक्षेयमित्यवगन्तव्यम्[२] ।। ४८ ।।

---

१ भागवते १०/१५/१७.

२ क्वचिद्वादयतो वेणून् क्षेपणैः क्षिपतः क्वचित् ।
क्वचित् पदैः किङ्किणीभिः क्वचित् कृत्रिमगोवृषैः ।।
वृषायमाणौ नर्दन्तौ युयुधाते परस्परम् ।
अनुकृत्य रुतैर्जन्तून् चेरतुः प्राकृतौ यथा ।। -भाग.(१०/१२/३९,४०)
क्वचिद् गायति गायत्सु मदान्धालिष्वनुव्रतैः ।
उपगीयमानचरितः सखिसङ्कर्षणान्वितः ।।
क्वचिच्च कलहंसानामनुकूजति कूजितम् ।
अभिनृत्यति नृत्यन्तं वर्हिणं हासयन् क्वचित् ।।
मेघगम्भीरया वाचा नामभिर्दूरगान् पशून् ।
क्वचिदाह्वयति प्रीत्या गोगोपालमनोज्ञया ।।
चकोरक्रौञ्चचक्राह्वभारद्वाजालिवर्हिणाम् ।

**फणिफणाङ्कणनर्तनकौशलाभ्यसनधीरिव सर्वविदां वरः ।**
**स शिखिताण्डवमन्वकरोत् क्वचिद्धृतशिखण्डशिखण्डसुमण्डितः ४९**

**व्या :** फणिफणाङ्कणेति । **धृतः** शिखण्डः बर्हो येन सः स चासौ शिखण्डः काकपक्षः तेन **सुमण्डितः** सम्यक् अलङ्कृतः । काकपक्षः शिखण्डकः । 'शिखा चूडा शिखण्डश्च पिच्छबर्हे नपुंसकः' इति चोभयत्रामरः । **सर्वविदां** सर्वज्ञानां ब्रह्मादीनां **वरः** श्रेष्ठः स कृष्णः । **फणिनः** कालियस्य **फणाङ्कणे** यन्नर्तनं तस्य यत्कौशलं चातुर्यं तस्याभ्यसने धीर्बुद्धिर्यस्य स इव । क्वचित्प्रदेशे शिखिताण्डवं मयूरनृत्यम् **अन्वकरोत्** अनुचकार । फणिफणाङ्कणनर्तनाभ्यसनं फणिविरोधिनो मयूरादेव कर्तव्यमिति भावः । अत एव धृतशिखण्डेत्युक्तम् । कृष्णः गोपैः सह क्वचिन्मयूरवत् ननर्तेति पौराणिकी कथा ।। ४९ ।।

**मुनिमनःसरसीरुहहंसराट् तदुचितस्वरशिक्षणधीरिव ।**
**अनुननाद स हंसकदम्बकश्रुतिमनोऽतिमनोरमकूजितम् ।। ५० ।।**

**व्या :** मुनिमन इति । मुनीनां ऋषीणां **मनांस्येव सरसीरुहाणि** कमलानि तत्र हंसराट् हंसश्रेष्ठः । मुनिहृदयकमलवासीत्यर्थः । स कृष्णः तेषां हंसानामुचितः

---

अनुरौति स्म सत्वानां भीतवद् व्याघ्रसिंहयोः ।।
क्वचित् क्रीडापरिश्रान्तं गोपोत्सङ्गोपवर्हणम् ।
स्वयं विश्रामयत्यार्यं पादसंवाहनादिभिः ।।
नृत्यतो गायतो वाऽपि वल्गतो युद्ध्यतो मिथः ।
गृहीतहस्तौ गोपालान् हसन्तौ प्रशशंसतुः ।।
क्वचित् पल्लवतल्पेषु नियुद्धश्रमकर्शितः ।
वृक्षमूलाश्रयः शेते गोपोत्सङ्गोपवर्हणः ।।
पादसंवाहनं चक्रुः केचित् तस्य महात्मनः ।
अपरे हतपाप्मानो व्यजनैः समवीजयन् ।।
अन्ये तदनुरूपाणि मनोज्ञानि महात्मनः ।
गायन्ति स्म महाराज स्नेहक्लिन्नधियः शनैः ।। - भागवते (१०/१३/९-१७)

योग्यः **स्वरः** हंसजातीयस्वर इत्यर्थः । तस्य **शिक्षणे** अभ्यसने **धी**र्बुद्धिर्यस्य स इव । **हंसकदम्बकस्य** हंससमूहस्य **श्रुतिमनोऽतिमनोरमं** श्रोत्रमनसोरतिमधुरं च तत् कूजितं च श्रुतिमनोऽतिमनोरमकूजितम् **अनुननाद** हंसपक्षिवच्चुकूजेत्यर्थः । हंसजात्यनुसारिस्वराभावे स्वस्य हंसत्वायोगादिति भावः ।

'क्वचिच्च कलहंसानामनुकूजति कूजितम् ।
अभिनृत्यति नृत्यन्तं बर्हिणं हासयन् क्वचित् ॥'

इति [१]भागवतवचनकथितकथाद्वयमनेन श्लोकद्वयेन उत्प्रेक्षितमिति द्रष्टव्यम् ॥५०॥

**मधुवशीकृतचित्त इवोष्णभा वरुणपालितदिङ्मृगलोचनाम् ।**
**समधिगम्य दिवः स्वमपीपतद्दुरितवारितवाजिमना इव ॥५१॥**

**व्या : मध्विति । उष्णभाः** उष्णदीधितिः सूर्यः । **मधुना** वसन्तेन । **वशीकृतं चित्तं** यस्य स तथोक्त **इव** । अनेन मद्यपानपारवश्यं व्यज्यते । **वरुणेन** प्रचेतसा **पालिता दिक्** प्रतीचीदिगेव **मृगलोचना** तां मृगाक्षीं **समधिगम्य** । अनेन परस्त्रीगमनं ध्वन्यते । **दुरितेन** [२]परस्त्रीसङ्गजन्यपापेन **वारितानि** निवारितानि **वाजिना**मश्वानां **मनां**सि यस्य स तथोक्त **इव** । **दिवः** आकाशात् **स्व**मात्मानं **अपीपतत्** पातयामास । तदा सूर्यः अस्तङ्गत इत्यर्थः ॥ ५१ ॥

**मुदितगोनिकरैः परिवारितः सखिजनैः सह वेणुमुदीरयन् ।**
**निजगृहं प्रविशन् स निशामुखे नरमणी रमणीः समहर्षयत् ॥५२॥**

**व्या : मुदितेति । मुदिताः** प्रमुदिताः गावस्तासां **निकरैः परिवारितः** परिवृतः । **सखिजनैः** सुहृज्जनैः **सह वेणुं** वंशवाद्य**मुदीरयन्** । **निशामुखे** प्रदोषकाले ।

---

१ भागवते १०/१३/१०

२ न हीदृशमनायुष्यं लोके किञ्चन विद्यते ।
याद‍ृशं पुरुषस्येह परदारोपसेवनम् ॥
- भारते (१३/१०४/२१); मनुस्मृतौ च (४/१३४)

'प्रदोषो रजनीमुखम्' इत्यमरः। **निजगृहं प्रविशन् नरमणिः** पुरुषरत्नं पुरुषश्रेष्ठः श्रीकृष्णः **रमणीः** सुन्दरीः गोपीः **समहर्षयत्** ॥ ५२ ॥

**प्रतिगृहं प्रमदाभिरितस्ततः सकुतुकाभिरसौ परिसेवितः।**
**स्मितकटाक्षमनोरमविभ्रमः स्मरजनी रजनीश इवाबभौ ॥५३॥**

**व्या :** प्रतिगृहमिति। **सकुतुकाभिः** सकुतूहलाभिः **प्रमदाभिः** स्त्रीभिः **प्रतिगृहं इतस्ततः** समन्तात् **परिसेवितः स्मितकटाक्षयोः मनोरमः विभ्रमः** विलासो यस्य स तथोक्तः। स्मरस्य कामस्य जनिरुत्पत्तिः यस्मात् स **स्मरजनिः असौ** कृष्णः **रजनीश इवाबभौ**। आह्लादकरत्वात् रात्रावपि प्रकाशमानत्वादिति भावः ॥ ५३ ॥

**यदुपतिः स निजैः सह निर्मलं स्वगृहमेत्य शनैरलसां निशाम्।**
**तनुरुचा बहुदूरपलायितां महितया हितया व्यतनोत् सताम् ॥५४॥**

**व्या :** यदुपतिरिति। **यदुपतिः** कृष्णः **निजैः** स्वानुचरैः **सह स्वगृहं शनैरेत्य अलसां** जडां **निशां** रात्रिं **महितया** व्याप्ततया **सतां** स्मरतां सज्जनानां **हितया** सुखदया **तनुरुचा** तनुकान्त्या **बहुदूरपलायितां** बहुदूरगतां प्रातरन्धकारस्य मेरुपृष्ठगमनादिति भावः। **व्यतनोत्** अकरोत्। प्रातःकालो जात इत्यर्थः ॥ ५४ ॥

**स्वतनयां सरितं विषवर्जितां करुणया हरिरद्य करिष्यति।**
**इति मुदेव गिरिं रविरीक्षितुं परवशो रवशोभितमारुहत् ॥५५॥**

**व्या :** स्वतनयामिति। **परवशः** परमात्माधीनः। 'भीषोदेति सूर्यः' इति[1] श्रुतेः। **रविः**। परवश इत्यनेन हर्षपारवश्यं द्योत्यते। **अद्य हरिः** कृष्णः **करुणया** कृपया [2]**स्वतनयां सरितं** यमुनां **विषवर्जितां** कालियनिष्कासनेन विषरहितां **करिष्य-**

१ तैत्तिरीयोपनिषत्। २/८

२ काळिन्दीशब्दवाच्येयं यमुना न कृष्णभार्या किन्तु काळिन्द्याः अग्रजाता अन्या काचन

तीति **मुदा** स्वपुत्र्याः विषपरिहारेण निरामयीकरणजन्यसन्तोषेण । **तामीक्षितुमिव** द्रष्टुमिव । **रवैः** पक्षिनिनदैः **शोभितं** गिरिम् उदयाद्रिम् । **आरुहत्** आरुरोह । यथा लोके युद्धादिकं द्रष्टुं उच्चसौधादिकमारुहन्ति तद्वदिति भावः ॥ ५५ ॥

**तदनु भोगिकुलाग्रगमग्रजं स हि विसृज्य तदन्वयसम्भवम् ।**
**[१]नमयितुं यमुनामगमद्विभुः सभुजगां भुजगान्तकवाहनः ॥५६॥**

**व्या : तदिति** । **तदनु** तदनन्तरम् । **भुजगान्तकवाहनः स विभुः** कृष्णः । **भोगिकुलाग्रगं** सर्पकुलाग्रेसरम् **अग्रजं** श्रेष्ठं बलरामम् । बलरामस्य शेषावतारत्वादिति भावः । **विसृज्य** विहाय । **तदन्वयसम्भवं** तस्य शेषस्य वंशसम्भवं कालियनागं **नमयितुं** नम्रीकर्तुं । **दमयितुमिति** पाठे शिक्षयितुमित्यर्थः । **सभुजगां** ससर्पां **यमुनामगमत्** अगच्छत् ॥ ५६ ॥

**यदि रसातलमेति तदैम्यहं दमयितुं तमितीव स पादपात् ।**
**अपतदम्बुनि विस्मयकारकः सवयसां वयसामिव वल्लभः ॥५७॥**

**व्या : यदीति** । **यदि** कालियः **रसातलमेति** तदा **अहं तं** कालियं **दमयितुं** शिक्षयितुम् **एमि** गच्छामीतीव **सवयसां** वयो येषां ते तथा वयस्यानां **विस्मयकारकः** आश्चर्यकरः कृष्णः **पादपात्** कदम्बवृक्षात् [२]**अम्बुनि**

---

देवता । - 'सोऽन्यां काळिन्दीं ददृशे तत्स्वसारं सा सूर्यपुत्री यमुनानुजाता तपश्चरन्ती कृष्णपत्नित्वकामा' - म.भा.ता.नि (२०/४४,४५) इत्युक्तेः ।

१ दमयितुम् (पा.)

२ सार्पह्रदः पुरुषसारनिपातवेगसङ्क्षोभितोरगविषोच्छ्वसिताम्बुराशिः ।
पर्यक् प्लुतो विषकषायविभीषणोर्मिभीमो धनुःशतमनन्तबलस्य किं तत् ॥
तच्चित्रताण्डवविरुग्णफणातपत्रो रक्तं मुखैरुरु वमन् नृप भग्नगात्रः ।
स्मृत्वा चराचरगुरुं पुरुषं पुराणं नारायणं तमरणं मनसा जगाम ॥
कृष्णस्य गर्भजगतोऽतिभरावसन्नपार्ष्णिप्रहारपरिरुग्णफणातपत्रम् ॥
-भाग.(१०/१४/७,३०,३१)

यमुनाजले वयसां पक्षिणां वल्लभो गरुड इव । यथा शाखाग्रे स्थितो गरुडो जलान्तस्थितसर्पग्रहणाय अधः पतति तथा अपतत् । जले बहुदूरं मिमंक्षुः उन्नतवृक्षशैलादिकमारुह्य निपततीति भावः ॥ ५७ ॥

**कृष्णालिङ्गनकातरैः करसमैरोघैर्निवृत्तैरिव**
**स्वप्रान्तस्थिततत्पदाङ्कमुरसा धर्तुं धियेवार्कजा ।**
**सुप्रेमाम्बुधिमिश्रणादिव जगद्बन्धस्य पातादिव**
**स्निग्धा तं [1]मदनाकृतिं स्वहृदयेनाश्लिष्य साऽवर्धत ॥ ५८ ॥**

---

ज्येष्ठं विहाय स कदाचिदचिन्त्यशक्तिर्गोगोपगोगणयुतो यमुनातटेषु ।
रेमे भविष्यदनुवीक्ष्य हि गोपदुःखं तद्बोधनाय निजमग्रजमेषु सोऽधात् ॥
तं ब्रह्मणो वरबलादुरगं त्ववध्यं सर्वैरवार्यविषवीर्यमृते सुपर्णात् ।
विज्ञाय तद्विषविदूषितवारिपानसन्नान् पशूनपि वयस्यजनान् स आवीत् ॥
तद्दृष्टिदिव्यसुधया सहसाऽभिवृष्टाः सर्वेऽपि जीवितमवापुरथोच्चशाखम् ।
कृष्णः कदम्बमधिरुह्य ततोऽतितुङ्गादास्फोट्य गाढरशनो न्यपतद्विषोदे ॥
सार्पह्रदः पुरुषसारनिपातवेगसङ्क्षोभितोरगविषोच्छ्वसिताम्बुराशिः ।
पर्यक्प्लुतो विषकषायविभीषणोर्मिभीमो धनुःशतमनन्तबलस्य किं तत् ॥
तं यामुनह्रदविलोलकमाप्य नागः काल्यो निजैः समदशत् सह वासुदेवम् ।
भोगैर्बबन्ध च निजेश्वरमेनमज्ञः सेहे तमीश उत भक्तिमतोऽपराधम् ॥
उत्पातमीक्ष्य तु तदाऽखिलगोपसङ्घस्तत्राजगाम हलिना प्रतिबोधितोऽपि ।
दृष्ट्वा निजाश्रयजनस्य बहोः सुदुःखं कृष्णः स्वभक्तमपि नागममुं ममर्द ॥
तस्योन्नतेषु स फणेषु ननर्त कृष्णो ब्रह्मादिभिः कुसुमवर्षिभिरीड्यमानः ।
आर्तो मुखैरुरु वमन् रुधिरं स नागो नारायणं तमरणं मनसा जगाम ॥
तच्चित्रताण्डवविरुग्णफणातपत्रं रक्तं वमन्तमुरु सन्नधियं नितान्तम् ।
दृष्ट्वाऽहिराजमुपसेदुरमुष्य पत्न्यो नेमुश्च सर्वजगदादिगुरुं भुवीशम् ॥
ताभिः स्तुतः स भगवानमुना च तस्मै दत्वाऽभयं यमसहोदरवारितोऽमुम् ।
उत्सार्य निर्विषजलां यमुनां चकार संस्तूयमानचरितः सुरसिद्धसाध्यैः ॥
- म.भा.ता.नि. (१३/३४-४२)

१ साक्षान्मन्मथमन्मथः । - भागवते (१०/३१/२)

**व्या :** कृष्णनिपतनानन्तरं यमुनाभिवृद्धौ हेतुमुत्प्रेक्षयति – **कृष्णेति** । **स्निग्धा** स्नेहयुक्ता **सा अर्कजा** सूर्यपुत्री यमुना । **कृष्णस्यालिङ्गने कातरैः** पुरतो गमने कृष्णस्यालिङ्गनाभावो भवेदिति **कातरैः** आसक्तैः अत एव **निवृत्तैः करसमैः** कराकारैः दीर्घैरित्यर्थः । **ओघैः** प्रवाहै**रिव** । प्रवाहस्य निवृत्तौ जलाभिवृद्धिर्भवतीति भावः । **स्वप्रान्ते** स्वतटे **स्थितं तत्पदाङ्कं** कृष्णपादचिह्नं **उरसा** वक्षसा **धर्त्तुं धियेव** बुद्ध्येव । तावत्पर्यन्तमभिवृद्धत्वादिति भावः । **सुप्रेमाम्बुधिः** सुस्नेहसमुद्रः तस्य **मिश्रणात्** संयोगादिव । समुद्रसङ्गमने नद्याः जलाभिवृद्धेर्जायमा- नत्वादिति भावः। **जगद्वन्द्यस्य** विश्वपूज्यस्य कृष्णस्य **पातादिव** । उत्तमनायकस्य स्वचरणादौ निपतने कान्ताया हर्षोद्रेकेण देहाभिवृद्धेर्जायमानत्वादिति भावः । मद- नस्याकृतिरिवाकृतिर्यस्य **मदनस्याकृतिर्यस्मात्** इति वा । अतिसुन्दरमित्यर्थः । **तं** कृष्णं **स्वहृदयेनाश्लिष्य** आलिङ्ग्य **अवर्धत** ववृधे । प्राणकान्तालिङ्गनस्याप्यभि- वृद्धिहेतुत्वादिति भावः । अनेन कालिन्द्यां कालिन्दीनाम्नी कृष्णपत्नी तिष्ठतीति गम्यते । **मालोत्प्रेक्षेयम्** ॥ ५८ ॥

**कलिलयन्तमपः पुरुषोत्तमं फणिपतिः किल [१]दंशितुमग्रहीत् ।**
**नहि स वेत्ति बलं [२]श्रवणोज्झितः परमया रमया श्रुतिभिः स्तुतम् ।५९।**

**व्या :** **कलिलयन्तमिति** । **फणिपतिः** कालियः **अपः** वारीणि **कलिलयन्तं** विलोडयन्तं **पुरुषोत्तमं** कृष्णं **दंशितुं** दन्तैरिति शेषः । **हिंसितुमिति** पाठे हन्तुमित्यर्थः । **अग्रहीत्** । ननु परमपुरुषं कथमग्रहीदित्यत आह – **नहीति**। **श्रवणोज्झितः** कर्णरहितः स कालियः **परमया** उत्तमया **रमया** दुर्गारूपया लक्ष्म्या **श्रुतिभिर्वेदैः** **स्तुतम्** अभिवर्णितम् । 'कर्तृकरणयोस्तृतीया'[३] इति

---

१ हिंसितुम् (पा.)

२ आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः । - बृहदारण्यकोपनिषत्

३ पा.सू. २/३/१८

तृतीया। बलं सामर्थ्यं न वेत्ति हि। 'औपनिषदः पुरुषः' इति श्रुतेरौपनिषदस्य कृष्णस्य श्रौतं सामर्थ्यं शब्दग्राहकश्रवणाभावान्न जानातीत्यर्थः ॥ ५९ ॥

**उत्पातचकिता गोपाः कृष्णसन्दर्शनार्थिनः ।**
**पुरोधाय ययू रामं शेषमार्गगता इव ॥ ६० ॥**

**व्या :** उत्पातेति। भूकम्पाद्युत्पातेन चकितास्त्रस्ताः **गोपाः**। कृष्णसन्दर्शनमर्थयन्त इति **कृष्णसन्दर्शनार्थिनः** सन्तः। **रामं** बलभद्रं **पुरोधाय**ाग्रे कृत्वा **शेषमार्गगता इव ययुः**। मोक्षगन्तॄणां [1]मार्गद्वयं गरुडमार्गः शेषमार्ग इति। तत्र शेषमार्गगामिनः शेषं पुरोधाय गच्छन्तीति प्रमेयस्य श्रुतिसिद्धत्वात् बलभद्रस्यापि शेषत्वादिति भावः ॥ ६० ॥

**व्रजाम व्रजगोपाला यमुनाममुनाऽध्वना ।**
**पदानि पथि कृष्णस्य लक्ष्यन्ते लक्षणैः सह ॥ ६१ ॥**

**व्या :** व्रजामेति। हे **व्रजगोपालाः अमुना अध्वना** मार्गेण **यमुनां** नदीं **व्रजाम** गच्छामः। यतः **पथि** मार्गे **कृष्णस्य पदानि** चरणचिह्नानि **लक्षणै**र्ध्वजवज्रादिभिः[2] **सह लक्ष्यन्ते** दृश्यन्ते ॥ ६१ ॥

**इत्थं विमर्शतः प्राप्तान् दृष्ट्वा स्वान् सर्पमूर्ध्नि सः ।**
**ननर्त किल नर्नर्ति सुहृदागमने न कः ॥ ६२ ॥**

---

१ सोमस्तु वारीशयुतोऽनिरुद्धं विशत्यसौ काममसौ तु वारुणीम् ॥
सा शेषदेवं स गिरं च सैव वायुं विशत्यञ्ज इतीह निर्णयः ।
- अनुव्याख्याने (४/२/१३४)

स्वोत्तमप्रवेशद्वारा शेषमार्गगरुडमार्गाभ्यां गतानाम् । - इति श्रीव्यासगद्ये

२ सञ्चिन्तयेद्भगवतश्चरणारविन्दं वज्राङ्कुशध्वजसरोरुहलाञ्छनाढ्यम् ।
- भागवते (३/२९/२१)

**व्या :** इत्थमिति । **इत्थम्** उक्तप्रकारेण । **विमर्शतः प्राप्तान्** विचारेणागतान् **स्वान्** आत्मीयान् **दृष्ट्वा स** कृष्णः । **सर्पमूर्ध्नि ननर्त** किल । तथाहि **सुहृदागमने** सति **कः** पुमान् **न नर्नर्ति** अतिशयेन न नृत्यति । 'नृती गात्रविक्षेपे' । विमर्शतः श्रवणादिविचारेणागतान् शेषमार्गेण वैकुण्ठं प्रत्यागतान् स्वान् भृत्यान् दृष्ट्वा परमात्मा सर्पमूर्ध्नि तदीयमृत्युलक्षणकालोरगशिरसि नृत्यतीति ध्वनितोऽर्थः ॥ ६२ ॥

**सरत्नकृष्णाहिफणाङ्कणेषु ननर्त कृष्णः किल लोकवन्द्यः ।**
**पदं गरुत्मत्करमुख्यदैवमिवौषधं तद्दमने विधित्सन् ॥ ६३ ॥**

**व्या :** सरत्नेति । **लोकवन्द्यः** भुवनस्तुत्यः कृष्णः । **सरत्नाः** रत्नसहिताः **कृष्णाहिफणाः** कृष्णसर्पशिरांसि तेषामङ्कणेषु प्रदेशेषु **गरुत्मत्करमुख्यदैवं** गरुडहस्तयोर्मुख्यदैवं **पदं** पादम् । स्कन्धाधिरूढस्य कृष्णस्य पादयोर्गरुडकरगतत्वादिति भावः। **तद्दमने** तस्य कालियस्य दमने विषनिःसरणरूपशिक्षणे **औषधं** निर्विषं **विधित्सन्निव** कुर्वन्निव **ननर्त**। गरुडस्मरणमात्रेण विषपरिहारो जायते किल, किं पुनर्गरुडकरस्पर्शि-कृष्णपादसम्बन्धेनेति भावः ॥ ६३ ॥

**उन्नीय कालियफणीन्द्रविराजिपुच्छं**
**खिन्नं ममर्द विषदूषितमस्य वक्त्रम् ।**
**तस्यान्तराश्रितमशेषमसावसह्यं**
**निष्कासयन्निव विषं विनताननेन ॥ ६४ ॥**

**व्या :** उन्नीयेति । असौ कृष्णः **कालियस्य फणीन्द्रस्य विराजिपुच्छं** विशोभिबालं **उन्नीय** उन्नमय्य **विषदूषितं** विषदुष्टं **खिन्नं** श्रमेणोत्पन्नखेदम् **अस्य** कालियस्य **वक्त्रं तस्य** वक्त्रस्यान्तराश्रितं अन्तर्गतमसह्यं सोढुमशक्यम् **अशेषं** समस्तं **विषं विनताननेन** अधःकृतमुखेन **निष्कासयन्निव** बहिः कुर्वन्निव **ममर्द**

पादकुट्टनैर्मर्दयामास । यथा चीलादिस्थितं तण्डुलादिकं निःशेषतया निष्कासयितुं चीलपुच्छमूर्ध्वीकृत्य मुखमधःकारयन्ति तथेति भावः ।। ६४ ।।

**स दन्दशूकस्य मुखं विभिन्दन् तदीयपुच्छं जगृहे करेण ।**
**यथापराधं ननु दण्डदाता निरागसं कं वरयेन्न शौरिः ।।६५।।**

**व्या : स** इति । **स** कृष्णः । अतिशयेन दंशतीति **दन्दशूकः** पन्नगः । 'दन्दशूको बिलेशयः उरगः पन्नगो भोगी' इत्यमरः । तस्य **मुखं विभिन्दन्** पादघातेन विदारयन् । **करेण** हस्तेन **तदीयपुच्छं** कालियसम्बन्धिपुच्छं **जगृहे**। पदा यावत्कुट्टनं करोति तावत्पुच्छं सम्यग्गृहीतवानित्यर्थः । अर्थान्तरं न्यस्यति – **शौरिः** कृष्णः **यथापराधम्** अपराधमनतिक्रम्य । अपराधानुसारेणेत्यर्थः । **दण्डदाता ननु** शिक्षाप्रदो हि । **निरागसम्** अपराधरहितं **कं** नरं **न वरयेत्** न परिगृह्णीयात् । मुखेन दंशतीति अपराधिनो मुखस्य दमनमुचितम् । निरपराधिनः पुच्छस्य परिग्रहणं चोचितमिति भावः ।। ६५ ।।

**विदारयन्नप्यहिराजमौलिं करेण पस्पर्श तमार्तबन्धुः ।**
**निजेषु शिक्षाऽपि हि तस्य विष्णोः परं परानुग्रहहेतुरेव ।।६६।।**

**व्या :** विदारयन्निति । **आर्तबन्धुः** कृष्णः **अहिराजमौलिं** सर्पराजशिरः **विदारयन्नपि** विभिन्दन्नपि **तं** कालियं **करेण पस्पर्श** अग्रहीत् । अर्थान्तरं न्यस्यति – तथाहि । **तस्य विष्णोः निजेषु** स्वभक्तेषु **शिक्षाऽपि परम्** अतिशयेन **परानुग्रहहेतुरेव** उत्तमानुग्रहकारणमेव । अनुग्रहार्थं विष्णुर्भक्तांच्छिक्षयति न त्वसुरवत् तमः प्रापयितुमिति भावः ।। ६६ ।।

**नृत्यन्तमेनं निजनाथमेत्य भृत्या भवाब्जासनमुख्यदेवाः ।**
**विष्वग्गृणन्तः किल तस्थुरार्तसर्पाश्रिताज्ञानमिवापहर्तुम् ।।६७।।**

**व्या :** नृत्यन्तमिति । **भवः** रुद्रश्च अब्जं आसनं यस्य सः **अब्जासनः** ब्रह्मा च तौ **मुख्यौ** येषां ते **देवाः** । **निजः** स्वकीयः **नाथः** स्वामी तम् । **नृत्यन्तं एनं** कृष्णं

विष्वक् समन्तात् गृणन्तः स्तुवन्तः सन्तः । आर्तसर्पाश्रितं यदज्ञानं कृष्णविषयका-ज्ञानमपहर्तुमिव विष्वक् परितः तस्थुः किल । देवैरस्माभिः कृष्णपरिचर्यायां कृतायां अयं कृष्णः साक्षात्परमात्मेति जानीयात् कालिय इतीवोपतस्थुरित्यर्थः ।।६७।।

**अनीनदत् पद्मभवो मृदङ्गं जगौ हनूमान् जगतामधीशम् ।**
**अदर्शयत् तालगतीः कपर्दी ननर्त गोपालकबालमौलिः[1] ।।६८।।**

**व्या :** अनीनददिति । **पद्मभवो** ब्रह्मा । **मृदङ्गं** मर्दलम् । **अनीनदत्** नादयामास । **हनूमान् जगौ** गानं चकार । **कपर्दी** शिवः । 'उग्रः कपर्दी' इत्यमरः । **तालस्य** कांस्यवाद्यस्य **गतीः** द्रुतविलम्बितादिलयभेदम**दर्शयत्** । **गोपालकानां** ये **बालाः** तेषु **मौलिः** कृष्णः **ननर्त** नृत्तं[2] चकार । अनेन एतादृशकृष्णस्य गोपालकत्वं लोकविडम्बनार्थमिति ध्वन्यते ।। ६८ ।।

**ततोऽहिपत्नीप्रियमञ्जुवाक्यं निशम्य तं निर्भयमाशु चक्रे ।**
**तथाहि नारीमृदुभाषणेन न कस्य चित्तं मृदुतामुपैति ।।६९।।**

**व्या :** तत इति । **ततः** । कृष्णः **अहेः** सर्पस्य कालियस्य पत्न्यस्तासां **प्रियमञ्जुवाक्यं** प्रियमधुरोक्तिं **निशम्य** श्रुत्वा । **तं** कालियम् । **आशु निर्भयं** भयरहितम् **चक्रे** । **तथाहि** तद्युक्तम् । **नारीमृदुभाषणेन** कामिनीकोमलवचनेन **कस्य** प्राणिनश्चित्तं **मृदुतां** मार्दवं **नोपैति** । अतिपरुषोऽपि पुरुषः कामिनीवचनेन मृदुर्भवतीति भावः ।। ६९ ।।

**विषाश्रयत्वेन गुणेन नाम्ना द्वयोः स साम्येऽपि भुजङ्गमं तम् ।**
**निपीड्य भास्वत्तनयां जुगोप न कस्य योषित्सु हि पक्षपातः ।७०।**

---

१ डोलिन मेल्कय्य भरमप्प हाक्यानु
ताळव शिवनप्प कटेदान्म्या ।
ओळ्ळोळ्ळे पदगळ हनुमप्प हाड्यानु
चेलुव कनकप्प कुणिदान्म्या ।। -इति श्रीकनकदासानां वचनम् अस्यानुवादरूपं भाति ।

२ नृत्तं गीतं च वाद्यं च त्रयं सङ्गीतमुच्यते ।

**व्या : विषाश्रयत्वेनेति । सः** कृष्णः **द्वयोः** कालियकालिन्द्योः **विषाश्रयत्वेन** विषाधारत्वेन । 'विषं तु गरले जले' इत्यभिधानात् । एकस्य गरलाश्रयत्वेन अन्यस्याः जलाश्रयत्वेनेत्युभयोर्विषाश्रयत्वसाम्यादिति भावः । **गुणेन** उभयोरपि नीलगुणविशिष्टत्वेन । **नाम्ना** कृष्णः कृष्णेत्यभिधया । **साम्येऽपि** स्वनामधारकत्वसाम्येऽपीत्यर्थः । **तं भुजङ्गमं निपीड्य । भास्वत्तनयां** सूर्यतनयां यमुनां **जुगोप** विषमपसार्य लोके सेव्यतां कृत्वा ररक्ष । ननु द्वयोः साम्ये एकस्य शिक्षणमपरस्याः रक्षणं कथं घटत इत्यत आह – **न कस्येति । योषित्सु** स्त्रीषु **कस्य** पुरुषस्य [१]**पक्षपातो न भवेत्** । सर्वेषां स्त्रीपक्षपातो भवेदेवेत्यर्थः ॥ ७० ॥

**आगस्कृतं नागपतिं स कृष्णः पादेन शिक्षन्नपि तत्कृताङ्कैः ।**
**तार्क्ष्याद्भयं तस्य जहार भक्ते क्रोधोऽपि देवस्य वरेण तुल्यः ॥७१॥**

**व्या : आगस्कृतमिति । स कृष्णः आगस्कृतम्** अपराधकृतं **नागपतिं** कालियं **पादेन शिक्षन्नपि तत्कृताङ्कैः** पादकृतचिह्नैः । **तस्य** गरुडभीत्या यमुनां प्रविष्टस्य कालियस्य । **तार्क्ष्यात्** गरुडात् **भयं जहार** परिहृतवान् । **देवस्य** विष्णोः **भक्ते क्रोधोऽपि वरेण** अनुग्रहेण **तुल्यः** सदृशः । **'क्रोधोऽपि देवस्य वरेण तुल्यः'** इत्येतद्वचनं भक्तजनविषयम् । नाभक्तजनविषयमिति भावः ॥ ७१ ॥

**स्वपक्षपातिप्रियमक्षिकर्णविमर्दनान्नूनमसौ प्रसाध्य ।**
**विधाय चास्याभयमञ्जसाऽन्ते मुदं स्वतल्पाय ददावनल्पाम् ॥ ७२ ॥**

**व्या : स्वपक्षपातीति । असौ** कृष्णः **अक्षिणी** एव **कर्णौ** यस्य कालियस्य सर्पस्य **विमर्दनात् स्वपक्षपातिप्रियं** पक्षाभ्यां पातो अस्यास्तीति पक्षपाती गरुडः स्वस्य

१ वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति । - इति ब्रह्मसूत्रे(२/१/३५)
कर्मापेक्षया फलदातृत्वान्न तस्य वैषम्यनैर्घृण्ये ।
'पुण्येन पुण्यं लोकं नयति पापेन पापम्' इति हि श्रुतिः ॥
- इति ब्रह्मसूत्रभाष्ये (२/१/३५)

पक्षपाती स्वपक्षपाती । अनेन गरुडस्य कृष्णपक्षपातित्वं व्यज्यते । तस्य प्रियमिष्टं प्रसाध्य । सपत्नविमर्दनादिति भावः । अन्ते अस्य कालियस्याञ्जसा सम्यक् अभयं गरुडभयाभावं विधाय । स्वतल्पाय स्वशयनीयाय शेषाय स्वजातीयस्याभयदानादनल्पां बह्वीं मुदं सन्तोषं ददौ । शेषगरुडयोः समानत्वादुभयप्रीतिकरणस्यावश्यकत्वादिति भावः ।। ७२ ।।

**रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि**
**प्रेम्णा चिन्तयतां विचित्रविमलश्लाघ्यार्थसन्दायिनि ।**
**सञ्जाते भुवि रुग्मिणीशविजये सद्वादिराजोदिते**
**सञ्जातः सुरमण्डलीषु महितः सर्गश्चतुर्थो मुदाम् ।। ७३ ।।**

**।। इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थश्रीचरणविरचिते श्रीरुग्मिणीशविजये महाकाव्ये चतुर्थः सर्गः ।। ४ ।।**

**व्याः** रोम्णामिति । उक्त एवार्थः ।

**।। इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थश्रीचरणविरचितस्य श्रीरुग्मिणीशविजयमहाकाव्यस्य व्याख्यायां श्रीनारायणभट्टविरचितायां श्रीगुरुभावप्रकाशिकायां चतुर्थः सर्गः ।।**

*****

# पञ्चमः सर्गः

**स यामुनाम्भस्यवगाहनोत्थशरीरशैत्यं शमयन्निवेशः ।**
**निशि प्रवृद्धं नवकाननाग्निं पपौ दयालुः स्वजनस्य गुप्त्यै ॥१॥**

**व्या :** वन्द्येन्दिरासदावासं श्रये कृष्णसरोरुहम् ।
यल्लीलामकरन्देन सन्तुष्टः सज्जनालयः ॥

**स** इति । **स ईशः** समर्थः । **दयालुः** श्रीकृष्णः । **यामुनं** यमुनासम्बन्धि **अम्भः** जलं तस्मिन् **अवगाहनेन** निमज्जनेन । **उत्थम्** उत्पन्नं **शरीरशैत्यं शमयन्निव** परिहरन्निव । 'अग्निर्हिमस्य भेषजम्'[१] इति श्रुतेरिति भावः । **निशि** रात्रौ । **प्रवृद्धं नवकाननाग्निं** नूतनदावाग्निं । **स्वजनस्य** बन्धुजनस्य । **गुप्त्यै** रक्षायै । **पपौ** पीतवान् ॥ १ ॥

**स्तुवन्तु सर्वे वनवह्निपानकृतानुभावं न वयं मुरारेः ।**
**स्वजन्मभूमिं शिखिनि प्रविष्टे क ईशितुस्तेन कृतोऽनुभावः ॥२॥**

**व्या : स्तुवन्त्विति** । **सर्वे** जनाः । **मुरारेः** श्रीकृष्णस्य । **वनवह्निपानकृतानुभावं** दावाग्निपानकृतसामर्थ्यम् । **स्तुवन्तु** वर्णयन्तु । **वयं न** स्तुमः । कुतः । **शिखिनि** वह्नौ । 'शिखी केतुग्रहे वह्नौ मयूरे कुक्कुटे द्रुमे' इति रत्नमाला । **स्वजन्मभूमिं** स्वोत्पत्तिस्थानं मुखम् । 'मुखादिन्द्रश्चाग्निश्च'[२] इति श्रुतेः । **प्रविष्टे** सति । **तेन ईशितुः** समर्थस्य श्रीकृष्णस्य । **कोऽनुभावः** कः प्रभावः । **कुतः** सम्पादितः । वह्नौ स्वजन्मभूमिं प्रविष्टे सति श्रीकृष्णस्तुतिकरणं व्यधिकरणमिति भावः । व्याजस्तुतिरलङ्कारः ॥ २ ॥

---

१ वाजसनेयी संहिता - २३/१०, तैत्तिरीय संहिता. ७/४/१८

२ मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत । -इति पुरुषसूक्ते (ऋ.)
'...स्वोत्पत्त्यङ्गं च देवानां विष्णोश्चिन्त्यं सदैव तु ।
तेषां तत्र प्रवेशो हि मुक्तिरित्युच्यते बुधैः ॥
तदाश्रिताश्च ते नित्यं ततश्चिन्त्यं विशेषतः' इति ॥ - ब्रह्मसूत्रभाष्ये (४/१/६)

**स्वजनैर्निजपादाब्जभजनैः सहितस्ततः ।**
**व्रजमार्जितसर्वार्थव्रजं निविविशेऽच्युतः ।। ३ ।।**

**व्या :** स्वजनैरिति। निजपादाब्जयोर्भजनम् एषां तैः **स्वजनैः सहितः अच्युतः**। **ततः** कालीयह्रदात् । **आर्जितः** उपार्जितः । **सर्वार्थव्रजः** समस्तपुरुषार्थसमूहः यस्य स तथोक्तः । तं **व्रजं** गोष्ठम् । 'व्रजा गोष्ठाध्वसञ्चया' इति रत्नमाला । **निविविशे** प्रविष्टवान् । 'विश् प्रवेशने' लिट् इत्यात्मनेपदम् ।। ३ ।।

**निजबलकरमग्निं कृष्णपीतं निशम्य**
**ज्वलित इव ससूर्यः प्रादुरासीन्निदाघः ।**
**स्वकृतिमथ सनाम्ना निर्णिनीषुर्विचिन्त्य**
**द्रुतमृतुपतिनेव प्राप गोपो वनान्तम् ।। ४ ।।**

**व्या :** ग्रीष्मर्तुं वर्णयति – **निजेति** । **निदाघः** ग्रीष्मः । 'ग्रीष्म ऊष्मकः । निदाघ उष्णोपगम उष्ण ऊष्मागमस्तपः' इत्यमरः । **निजस्य** स्वस्य **बलं** परसन्तापकरणसामर्थ्यं करोतीति **निजबलकरम्**। ग्रीष्मो हि दावाग्निना लोकान् सन्तापयतीति भावः । **अग्निं** दावाग्निम्। **कृष्णेन पीतं निशम्य** श्रुत्वा। **ज्वलित इव** स्वसहायनाशजन्यकोपात् प्रज्वलित इव । **ससूर्यः** एकस्मिन् सहाये गते सहायान्तरेण कार्यं साधयामीति वा सूर्येण सहितः सन्। ग्रीष्मे सूर्यस्यातितैक्ष्ण्यादिति भावः । **प्रादुरासीत्** प्रादुर्बभूव । **अथ** ग्रीष्मप्रादुर्भावानन्तरम्। **गोपः** श्रीकृष्णः। **स्वकृतिं** स्वकार्यं **सनाम्ना** माधव इति समानं नामधेयं यस्य तेन **ऋतुपतिना** ऋतुश्रेष्ठेन वसन्तेन सह । **विचिन्त्य निर्णिनीषुरिव** निर्णेतुमिच्छुरिव । **द्रुतं** शीघ्रम् । **वनान्तं** वनमध्यं **प्राप** । प्रतिरोधिनि आगते तत्प्रतिक्रियायाः सुहृदा सह विचार्य कर्तव्यत्वात् । एकनाम्नोः सदा प्रीतिरिति वसन्तस्य समाननामत्वेन श्रीकृष्णसुहृत्त्वमिति भावः ।। ४ ।।

**तापे तद्वनमाधवेन विजिते भास्वत्प्रभासम्भवे**
**दावे च व्रजमाधवेन दमिते ग्रीष्मो जजृम्भे क्षणात् ।**
**कोपेनेव वसन्तपुष्पनिचयं शुष्कं विधायानिलं**
**तप्तं चम्पककम्पितांश्च मधुपान् मूकान् पिकादीन् खगान् ॥५॥**

**व्या :** ताप इति । **भास्वतः** सूर्यस्य **प्रभया सम्भवो** उत्पत्तिर्यस्य स तथा तस्मिन् **तापे** सन्तापे । **तद्वनस्य** वृन्दावनस्य सम्बन्धिना **माधवेन** वसन्तेन । **विजिते** तरुच्छायादिना निर्जिते सति । अनेन ग्रीष्मसहायसूर्यस्य कृष्णसहायेन वसन्तेन पराभवो जात इति द्रष्टव्यम् । **दावे च** वनाग्नौ च 'वनवह्न्यनलौ दावौ' इति रत्नमाला । **व्रजमाधवेन** गोकुलस्थकृष्णेन **दमिते** शिक्षिते सति । **ग्रीष्मः कोपेनेव** स्वसहायभूतयोर्वह्निसूर्ययोः पराभवजन्यामर्षेणेव । **वसन्तपुष्पनिचयं** वसन्तर्तुसम्बन्धिकुसुमसमूहम् । **शुष्कं** म्लानं **विधाय** । **अनिलं** मन्दवायुं **सन्तप्तं विधाय** । **मधुपान्** भ्रमरान् । **चम्पककम्पितान्** चम्पककुसुमैश्चलितान् । भृङ्गाणां चम्पकगन्धस्यानिष्टत्वादिति भावः । **पिकादीन् खगान्** पक्षिगणान् **मूकांश्च विधाय** । उष्णकाले पक्षिणो वृक्षकोटरेषु मूकीभूय तिष्ठन्तीति भावः । **क्षणात्** तत्क्षणात् । **जजृम्भे** दिदीपे ॥ ५ ॥

**पाथः शीतमशीतलोष्णधरिणीं भास्वद्बलेनोष्णय-**
**न्नूर्ध्वं गन्धवहं नयन् त्रिवृतमप्यम्मात्रपात्रं वपुः ।**
**कुर्वन् कृष्णकृतेर्विरोधमिव तद्वासं च वाः शोषयन्**
**विश्वं तस्य वशं दवेन च दहन् वैरीव सोऽदृश्यत ॥ ६ ॥**

**व्या :** पाथ इति । **स** ग्रीष्मः । 'यतो वा इमानि भूतानि जायन्ते'[1] इति श्रुतेः । विश्वस्य कृष्णसंसृष्टत्वं निशाम्य **कृष्णकृतेः** श्रीकृष्णकर्मणः । **विरोधं**

---

१ तैत्तिरीयोपनिषत् (३/१)

कुर्वन्निव। कृष्णेन यद्यद्वस्तु यादृशं यादृशं कृतं तस्य तस्य वस्तुनः वैपरीत्यं **कुर्वन्निव। शीतं** शीतस्पर्शयुक्तं **पाथः** उदकम्। 'कबन्धमुदकं पाथः' इत्यमरः। शीतला च सा **उष्णा** च शीतलोष्णा सा न भवतीति **अशीतलोष्णा** सा चासौ **धरिणी** च ताम्। अनुष्णाशीतस्पर्शवर्ती भूमिमित्यर्थः। **भास्वद्बलेन** सूर्यसामर्थ्येन। **उष्णयन्** औष्ण्यं प्रापयन्। उभयमप्युष्णस्पर्शवत् कुर्वन्नित्यर्थः। **गन्धवहं** वायुं तिर्यग्गमनस्वभावं वायुम्। **ऊर्ध्वम्** उपरि **नयन्** प्रापयन्। ग्रीष्मे चक्रवात्याया ऊर्ध्वगमनादिति भावः। **त्रिभिस्तेजोऽबन्नैः वृतं** आवृतं **वपुः** शरीरम् **अम्मात्रपात्रं** जलमात्रयोग्यम्। ग्रीष्मे बहुजलपानकरणादिति भावः। **कुर्वन्। तद्वासं** तस्य श्रीकृष्णस्य वासं निवासस्थानं। **वाः** वारि च **शोषयन्।** उदकशोषणे तदाश्रयत्वनिमित्तकनारायणनामैव नाशितं भवेदिति भावः। किञ्च तस्य श्रीकृष्णस्य **वशमधीनं विश्वं** जगत्। **दवेन** दावाग्निना। **दहन्** श्रीकृष्णेन स्थितौ क्रियमाणायां मया संहारः क्रियत इति भावेन भस्मीकुर्वन्। **वैरीव** शत्रुरिवा**दृश्यत**। अनेनार्कस्य तैक्ष्ण्यं भूजलादीनामौष्ण्यं चक्रवातोत्पत्तिः पिपासा जलशोषणं दावाग्निना वनस्थप्राणिनाशश्चेति ग्रीष्मधर्मा वर्णिताः ॥६॥

**सुच्छायैः शुकमण्डितैः शुभफलैरुद्यत्प्रसूनोद्गमै-**
**र्वृक्षैर्माधवपक्षगैः प्रशमिते खेदे निदाघोद्भवे।**
**दैत्यः कोऽपि तरुत्वमेत्य वरतस्तत्पक्षपातीव त-**
**च्छायावाससुखात् सहस्रगुणितं शोकं वितेने वने ॥ ७ ॥**

**व्या : सुच्छायैरिति। सु** निबिडा **छाया** येषां तैः **शुकैः** कीरैर्मण्डितैरलङ्कृतैः **शुभानि फलानि** येषां तैः। **उद्यत्प्रसूनानां** प्रकाशमानकुसुमानाम् **उद्गमो** येषां तैः **माधवपक्षगैः** वसन्तपक्षपातिभिः **वृक्षैः। निदाघोद्भवे** ग्रीष्मोद्भवे **खेदे** श्रमे **प्रशमिते** सति **कोऽपि** कश्चन **दैत्यः। वरतः** ब्रह्मदत्तवरात्। **वने** वृन्दावने **तरुत्वं** विषवृक्षत्वम् **एत्य तत्पक्षपातीव** ग्रीष्मपक्षपातीव। **तच्छायावायुसुखात्**

तेषां वृक्षाणां छायानिवासजन्यसुखात् । **सहस्रगुणितं** सहस्रगुणपरिमितं ततोऽप्यधिकमित्यर्थः । **शोकं** दुःखं **वितेने** चक्रे ॥ ७ ॥

**तरुत्वमप्याप्य वनं मुरारेरदूषयद्धन्त विषैः समन्तात् ।**
**स्वनासिकाच्छेदमपीह सोढ्वा खलो निरुन्धे खलु सत्प्रयाणम् ॥८॥**

**व्या :** तरुत्वमिति । स दैत्यः **तरुत्वमपि** दर्शनाभिवादनहीनयोनिमपि । आप्य प्राप्य **मुरारेः** श्रीकृष्णस्य । **वनं** वृन्दावनं **समन्तात्** परितः । **विषैरदूषयत्** दुष्टमकरोत् । **हन्त** कष्टम् । 'हन्त हर्षे विषादे च वाक्यारम्भानुकम्पयोः' इति रत्नमाला । तथाहि । **इह** लोके **खलो** दुर्जनः **स्वनासिकाच्छेदमपि सोढ्वा** मर्षित्वा स्वनासिकां छित्वाऽपीत्यर्थः । **सतां प्रयाणं** गमनं **निरुन्धे खलु** अपशकुनं कृत्वा गमनप्रतिबन्धं करोति हीत्यर्थः ॥ ८ ॥

**विनाश्य वृन्दावनवासिपक्षिमृगादिनानाविधजीववर्गम् ।**
**वरप्रदातुस्तरसा विधातुरसौ विशङ्को विदधे प्रतीपम् ॥ ९ ॥**

**व्या :** विनाश्येति । **असौ** विषवृक्षरूपी दैत्यः । **विशङ्कः** निःशङ्कः सन् । **वृन्दावनवासिनां पक्षिमृगादिनानाविधजीवानां वर्गं** समूहम् । **तरसा** जवेन **विनाश्य** । **वरप्रदातुः** स्वस्य वरप्रदातुः । विधत्त इति सृष्टिं करोतीति **विधाता** सृष्टिकर्ता तस्य [1]ब्रह्मणः । **प्रतीपं** विरोधं **विदधे** । तत्सृष्टस्य जीववर्गस्य

१ इत्थं सुरासुरगणैरविचिन्त्यदिव्यकर्माणि गोकुलगतेऽगणितोरुशक्तौ ।
कुर्वत्यजे व्रजभुवामभवद्विनाश उग्राभिधादसुरतस्तरुरूपतोऽलम् ॥
तद्गन्धतो नृपशुमुख्यसमस्तभूतान्यापुर्मृतिं बहुलरोगनिपीडितानि ।
धातुर्वराज्जगदभावकृतैकबुद्धिर्वध्यो न केनचिदसौ तरुरूपदैत्यः ॥
सङ्कर्षणेऽपि तदुदारविषानुविष्टे कृष्णो निजस्पर्शतस्तमपेतरोगम् ।
कृत्वा बभञ्ज विषवृक्षममुं बलेन तस्यानुगैः सह तदाकृतिभिः समस्तैः ॥
दैत्यांश्च गोवपुष आत्तवरान् विरिञ्चान्मृत्यूज्झितानपि निपात्य ददाह वृक्षान् ।
विक्रीड्य रामसहितो यमुनाजले स नीरोगमाशु कृतवान् व्रजमब्जनाभः ॥
- म. भा. ता. नि (१३/४४-४७)

नाशकरणादिति भावः । कृतघ्नाः खलु दुर्जनाः स्वोपकारिणामपि अपकारं कुर्वन्तीति भावः ।। ९ ।।

**तदीयगन्धेन फलेन पुष्पकुलेन मूलाश्रयणेन लोकः ।**
**तदैव नाशं किल याति कृष्णविपक्षमैत्री किमु सौख्यदात्री ।।१०।।**

**व्या :** तदीयेति । लोको जनः । तदीयेन विषवृक्षसम्बन्धिना **गन्धेन** परिमलेन । **फलेन पुष्पकुलेन मूलाश्रयणेन तदैव** तत्क्षणादेव **नाशं याति किल** । तथाहि । **कृष्णविपक्षमैत्री** श्रीकृष्णविद्वेषिसख्यम् । **सौख्यदात्री** सुखमेव सौख्यम् । तस्य दात्री **किमु** । दुर्जनमैत्र्या दुःखकरत्वादिति भावः ।। १० ।।

**किं वाच्यमस्यातिविषोल्बणत्वं यस्मात् स दर्वीकरवर्गमौलिः ।**
**रामोऽपि तत्सङ्गतवायुनैव ग्लानिं सतां ग्लानिहरोऽप्यवाप ।।११।।**

**व्या :** **किं** वाच्यमिति । **अस्य** विषवृक्षस्य । **अतिविषोल्बणत्वं** अत्यन्तविषोत्कटत्वम् । **किं वाच्यं** किं वक्तव्यम् । **यस्मात्** कारणात् । **दर्वीकराणां** सर्पाणाम् । 'दर्वीकरो दीर्घपृष्ठो दन्दशूको बिलेशयः' इत्यमरः । **वर्गस्य** समूहस्य **मौलिरपि** प्रधानोऽपि **सतां** सज्जनानां **ग्लानिहरोऽपि** श्रमहरोऽपि । **स रामोऽपि** शेषात्मको बलभद्रः । **तत्सङ्गतवायुनैव** तद्विषवृक्ष-सम्बन्धिवायुमात्रेण । **गानिमवाप** । [१]शेषात्मकबलभद्रस्यापि ग्लानिकरत्वा-दस्य विषौत्कटच्यं किं वर्णनीयमित्यर्थः ।।११।।

**फलैः प्रसूनैर्विलसत्प्रवालैर्दलैर्विलोलैः स शुभायितोऽपि ।**
**बिभर्ति हालाहलमेव मध्ये खलः प्रकृत्या खलु गूढवृत्तिः ।।१२।।**

---

१ सङ्कर्षणेऽपि तदुदारविषानुविष्टे । - म. भा. ता. नि (१३/४६)

**व्या :** फलैरिति । फलैः प्रसूनैः कुसुमैः । विलसत्प्रवालैः विलोलैः चञ्चलैः दलैः पर्णैः । 'दलं पर्णं छदः पुमान्' इत्यमरः । शुभायितोऽपि शुभवदाचरमाणोऽपि सज्जनवत् प्रतीयमानोऽपि । स वृक्षः मध्ये हालाहलमेव कालकूटमेव बिभर्ति । तथाहि खलः दुर्जनः प्रकृत्या स्वभावेन गूढवृत्तिः गूढचेष्टः । खलु ॥ १२ ॥

**पतत्त्रिणां पत्रफलाशनानां वनेऽतिरम्ये वसतां सतां च ।**
**निरागसां द्रोहमहो व्यधाद्यस्तमुग्रनामार्हचरित्रमूहे ॥ १३ ॥**

**व्या :** पतत्त्रिणामिति । अतिरम्ये मनोहरे वने वृन्दावने । वसतां निवसताम् । पत्रफलान्येवाशनं येषां तेषाम् । अत एव निरागसां निरपराधिनां पतत्त्रिणां पक्षिणां सतां च यः वृक्षरूपी दैत्यः । द्रोहम् अपकारं व्यधात् व्यतनोत् । अहो निरपराधिष्वपकारकरणमाश्चर्यम् । अत एव तं दैत्यम् उग्रनामार्हचरित्रम् उग्र इति यन्नाम तस्य अर्हं योग्यं चरित्रं व्यापारो यस्य सः तम् । ऊहे प्रतर्के । अनेनास्य दैत्यस्योग्रनामकत्वं ध्वन्यते ॥ १३ ॥

**नगं तमुत्पाट्य समं समाधिकृच्छ्रमाख्यवृक्षेण स गोस्वरूपिणः ।**
**खलांश्च तेनैव जघान लीलया प्रभोः क्रियैकाऽप्युरुकार्यसाधिका[1] १४**

**व्या :** नगं तमिति । स कृष्णः । तं नगं विषवृक्षं समाधिकृतां एकाग्रचित्तानां ऋषीणाम् । श्रमाख्यवृक्षेण समं साकम् । उत्पाट्य । गोस्वरूपिणः गोरूपधारिणः खलान् असुरांश्च । तेनैव विपाटितविषवृक्षेणैव । लीलया विलासेन न तु प्रयासेन । जघान । प्रभोः समर्थस्य श्रीकृष्णस्य । एकाऽपि क्रिया उरुकार्यसाधिका । विषवृक्षोत्पाटनं सतां श्रमनिर्हरणम् गोरूपासुरव-धश्चेति बहुकार्यसाधिका ॥ १४ ॥

**अहो निदाघोत्थभयादिवेशो बिभर्ति गङ्गां जलधौ स शेते ।**
**रमापतिः पङ्कजविष्टरश्च चतुर्मुखस्तं विषहेत कोऽन्यः ॥१५॥**

---

१ एका क्रिया द्व्यर्थकरी बभूव ।- इत्युक्तेः

**व्या :** प्रासङ्गिकं समाप्य पुनर्निदाघं वर्णयति – **अहो** इति । **ईशः** शिवः निदाघोत्थभयादिव **घर्मभयादिव** । **गङ्गां** सुरनिम्नगां **बिभर्ति** । **स रमापतिर्लक्ष्मीपतिः** जलधौ क्षीरसमुद्रे **शेते** । **चतुर्मुखः पङ्कजविष्टरो बभूव** । तं निदाघम् । **अन्यः** शिवाद्यतिरिक्तः **कः पुमान् विषहेत** सोढुं शक्नुयात् । न कोऽपीत्यर्थः ॥ १५ ॥

**तदाऽपि सिद्धाश्चतुरग्निमध्ये प्रहृष्टरोमावलयः स्मरन्ति ।**
**निमीलिताक्षाः परमं पुमांसं फलार्थिनां किं न विषह्यमस्ति ॥१६॥**

**व्या :** तदाऽपीति । **तदाऽपि** घर्मकालेऽपि **सिद्धा**स्तपस्विनः **प्रहृष्टरोमावलयः** हरिस्मरणजन्यहर्षाज्जातरोमाञ्चाः सन्तः । **निमीलिताक्षाः** मुकुलीकृताक्षाः सन्तः । **चतुर्दिक्षु** स्थितानां चतुर्णामग्नीनां **मध्ये** स्थित्वा । **परमं पुमांसं** पुरुषोत्तमं **स्मरन्ति** । तथाहि । **फलार्थिनां** [1]फलाकाङ्क्षिणां **विषह्यं** सोढव्यं **किं नास्ति** । फलार्थिनो हि सर्वं कष्टं सहन्त इत्यर्थः । सिद्धास्तु मोक्षरूपफलार्थिन इति भावः ॥ १६ ॥

**सुशीतलः कृष्णपदाब्जयुग्ममितः स्पृशत्युज्ज्वलकाननाग्निम् ।**
**ततः समुत्थापयति स्म वायुरयं स्वभावः खलु चञ्चलानाम् ॥१७॥**

**व्या :** सुशीतल इति । **वायुः इतः** वृन्दावने **सुशीतलः** सन् । श्रीकृष्णपदाब्जयुग्मं **स्पृशति स्म** । **ततः** वृन्दावनात् बहिरुज्ज्वलकाननाग्निं **समुत्थापयति** । वायुवशात् वृक्षसङ्घर्षेण दावाग्न्युत्पत्तेरिति भावः । तथाहि । **चञ्चलानाम्** अस्थिराणाम् । **अयं** सुजनसमीपे सौजन्यं [2]दुर्जनसमीपे दौर्जन्यमित्यनेकप्रकारः । **स्वभावः खलु** ॥१७॥

**प्रियास्तनाख्यान् परिरभ्य कुम्भान् सुधां तदीयाधरजां पिबन्तः ।**
**विन्दन्त्यहो नागरिका न तापं न वा पिपासां गिरिकुञ्जवासाः ॥१८॥**

---

१ साधनस्योत्तमत्वेन साध्यं चोत्तममाप्नुयुः । - ब्रह्मसूत्रभाष्ये (३/३/२०)

२ वीरदृष्टिकृतसिंहविभ्रमः शान्तदृष्टिकृतशान्तसम्मदः । -इति सुमध्वविजयवचनवज्ज्ञेयम् ।

**व्या :** प्रियेति । **गिरौ** पर्वते ये **कुञ्जाः** लतादिपिहितानातपप्रदेशाः तेषु तापपरिहाराय वसन्तीति **गिरिकुञ्जवासाः नागरिका** नगरे भवाः विलासिनः । **प्रियाणां स्तनाः** कुचा इत्याख्या येषां ते तथा तान् **कुम्भान्** पयःपूर्णकलशान् । **परिरभ्य** आलिङ्ग्य । **तदीयाधरजां** प्रियाधरजन्यां **सुधां पिबन्तः** सन्तः । **तापं पिपासां वा न विन्दन्ति** । गिरिकुञ्जवासेन स्तनपरिरम्भणेन च **तापं न विन्दन्ति**। 'कूपोदकं वटच्छाया ताम्बूलं तरुणीस्तनौ'[१] इति वचनात् । अधरामृतपानेन च पिपासां न विन्दन्तीत्यर्थः ॥१८॥

**जहार [२]कृष्णस्तपनोत्थतापं मुखेन्दुना दृष्टिपथङ्गतेन ।**
**सुधार्द्रवीक्षामयवृष्टिभिश्च व्रजौकसां काननवासिनां च ॥१९॥**

**व्या :** जहारेति । श्रीकृष्णः **व्रजौकसां** गोष्ठालयानां **काननवासिनां** वृन्दावनवासिनाम् । **तपनोत्थतापं** सूर्यजन्यसन्तापं **दृष्टिपथङ्गतेन** लोचनविषयेण **मुखेन्दुना** मुखचन्द्रेण । **सुधार्द्रा** अमृतक्लिन्ना [३]**वीक्षा** अवलोकनम् । वीक्षैव वीक्षामयाः ताश्च ता **वृष्टयः** ताभिः तन्मयवृष्टिभिः । **जहार** परिहृतवान् । चन्द्रोदये **वृष्टौ** च तपनतापनिवृत्तेरिति भावः ॥ १९ ॥

**नीलां कुम्भकसम्भवामलभत स्वीयां स जित्वा वृषान्**
**शौरिः सप्त स चापि नीलमणिभिर्नीलां करे तत्पुरीम् ।**
**धातून् सप्त निगृह्य कुम्भकबलाच्छृङ्गप्रहारैर्द्रव-**
**त्कुम्भाभाङ्ग्युजोऽपरेऽपि बहवो नीलां मुखस्य प्रभाम् ॥२०॥**

---

१ शीतकाले भवेदुष्णमुष्णकाले च शीतलम् । -इत्यस्य उत्तरार्धं चाणक्यनीतिशास्त्रे । (९६)

२ वर्हापीडं नटवरवपुः कर्णयोः कर्णिकारं
विभ्रद्वासः कनककपिशं वैजयन्तीं च मालाम् ।
रन्ध्रान् वेणोरधरसुधया पूरयन् गोपवृन्दै-
र्वृन्दारण्यं स्वपदरमणं प्राविशद्गीतकीर्तिः ॥ - भागवते (१०/१९/५)

३ निखिलाघौघविनाशनपरसौख्यप्रदहृष्टे ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ - द्वादशस्तोत्रे (१०/१८)

**व्या : नीलामिति । स शौरिः सप्त वृषान्** उक्ष्णः । 'वृषो धर्मोऽक्षकुञ्जेषु' इति रत्नमाला । **जित्वा** । निगृह्य [1]**कुम्भकसम्भवां** । कुम्भको नाम कश्चन गोपालः । तत्सम्भवां तत्पुत्रीं **स्वीयां नीलां** नीलानाम्नीं स्त्रियम् **अलभत । स च** नीलापिता कुम्भकोऽपि **सप्त धातून्** [2]त्वक्चर्ममांसरुधिरमेदोमज्जास्थ्याख्यान् । **कुम्भकबलात्** कुम्भाख्यप्राणायामबलात् । **निगृह्य** प्राणायामबलेन सप्तधात्वात्मकशरीरे अनास्थां सम्पाद्येत्यर्थः । **नीलमणिभिः** इन्द्रनीलरत्नैः । **नीलां** श्यामाम् । तस्य कृष्णस्य **पुरीं** वैकुण्ठनगरीम् । **करे** हस्ते **अलभत** । श्रीकृष्णाय कन्यादानपुण्येन कुम्भकस्य मोक्षः करस्थो जात इत्यर्थः । **अपरे बहवो** नीलाशयागता राजानश्च । **शृङ्गप्रहारैः** वृषाणां शृङ्गाभिघातैः । **द्रवत्कुम्भानां** द्रवद्घटानां **आभेव** आभा येषां तैः **अङ्गैर्गात्रैर्युजो** युक्ताः सन्तः । शृङ्गाभिघातेन स्रवद्रक्ताङ्गा इत्यर्थः । **नीलां** मेचकां **मुखस्य प्रभां** कान्तिम् **अलभन्त** । कृष्णो नीलां स्त्रियम्, कुम्भको नीलां पुरीम्, अन्ये नीलां मुखकान्तिमिति त्रयाणामपि नीलाप्राप्तिरभूदिति भावः । नीलायाः कुम्भकगोपजन्यत्वात् वैकुण्ठप्राप्तेरन्तःकरणशुद्धिद्वारा कुम्भकप्राणायामजन्यत्वात् मुखनैल्यस्य कुम्भसदृशशरीरक्षतजन्यत्वात् तत्प्राप्तनीलाया अप्येवं कुम्भकसम्भवत्वादित्यपि द्रष्टव्यम् ।। २० ।।

**अथापरो रासभवेषधारी वनं समाक्रम्य मुकुन्दयोग्यम् ।**
**जघान जन्तून् बत तादृशोऽसौ खरः प्रकृत्येति मम प्रतर्कः ।।२१।।**

---

१ सप्तोक्षणोऽतिबलवीर्ययुतानदम्यान् सर्वैर्गिरीशवरतो दितिजप्रधानान् ।
हत्वा सुतामलभदाशु विभुर्यशोदाभ्रातुः स कुम्भकसमाह्वयिनोऽपि नीलाम् ।
या पूर्वजन्मनि तपः प्रथमैव भार्यां भूयासमित्यचरदस्य हि सङ्गमो मे ।
स्यात् कृष्णजन्मनि समस्तवराङ्गनाभ्यः पूर्वं त्विति स्म तदिमां प्रथमं स आप ।।
अग्रे द्विजत्वत उपावहदेष नीलां गोपाङ्गना अपि पुरा वरमापिरे यत् ।
संस्कारतः प्रथममेव सुसङ्गमो नो भूयात् तवेति परमाप्सरसः पुरा याः ।।
- इति म.भा.ता.नि. (१३/४८-५०)

२ सप्त स्थूलशरीरेऽस्मिन् वर्तन्ते सर्वदैव हि ।। - अध्यात्ममालायाम् (श्लो.२)

**व्या :** अथेति । **अथ** अनन्तरम् । **अपरः** उग्रविषधारिवृक्षरूपिदैत्यात् अन्यो असुरः । **रासभवेषधारी सन्** । **मुकुन्दयोग्यं वनं** वृन्दावनं **समाक्रम्य जन्तून्** प्राणिनः **जघान** । **बत** खेदे । **तादृशस्तथाविधो** मुकुन्दयोग्यवनदूषक इत्यर्थः। **असौ** दैत्यः । **प्रकृत्या** स्वरूपेण **खरो** रासभ इति **मम प्रतर्कः** ऊहः। अत्यन्ताविवेकिनो लोके रासभत्वेन व्यवहारात् प्रकृत्या **खर** इत्युक्तम्। पुण्यक्षेत्रदूषकस्य रासभत्वमाजानजमित्यर्थः ॥ २१ ॥

**क्षुधाऽतिलोलाः किल गोपबालाः सहाच्युतेनाभिययुर्वनं तत् ।**
**तथाहि दुष्टस्य विनाशतोऽन्यत् सतां मनस्तृप्तिकरं किमस्ति ॥२२॥**

**व्या :** क्षुधेति। **क्षुधया** बुभुक्षया **अतिलोला** अधिकतृष्णाः। 'लोलश्चलसतृष्णयोः' इति भास्करः । **गोपबालाः अच्युतेन** कृष्णेन सह । **तत्** खराक्रान्तवनम् । **अभिययुः**। क्षुत्परीतानां वनस्थखरनाशेन कथं तत्परिहार इत्यत आह – **तथाहीति** । **तथाहि** तद्युक्तं हि । **दुष्टस्य** दुर्जनस्य । **विनाशतोऽन्यत्** व्यतिरिक्तम्। **सतां** सज्जनानाम् । **मनस्तृप्तिकरं** चित्ताह्लादकरम् । **किमस्ति** न किमपीत्यर्थः ॥ २२ ॥

**अथाससादासुरवर्गवर्यो बलश्च तं प्रत्यगमद्बलाढ्यः ।**
**निजध्वजक्ष्माजसमाजराजद्वनं तदाक्रान्तमिवेर्ष्यमाणः ॥२३॥**

**व्या :** अथेति । **अथ** श्रीकृष्णगमनानन्तरम् । **असुरवर्गवर्यः** असुरश्रेष्ठो धेनुकः । **आससाद** युद्धार्थं श्रीकृष्णमगमत् । **बलाढ्यो** बलसम्पन्नो **बलश्च** बलभद्रश्च । **निजध्वजाः** निजध्वजजातीयाः **क्ष्माजाः** तालवृक्षाः । **बलस्य** तालध्वजत्वादिति भावः । तेषां **समाजेन** समूहेन **राजत्** शोभमानं **वनं** तालवनम्। **तदाक्रान्तं** धेनुकाक्रान्तम् । **ईर्ष्यमाण इव** । **तं** धेनुकं **प्रत्यगमत्** प्रतिययौ । स्वध्वजछत्रादीनां सपत्नाक्रमणोपेक्षा शूराणामयशस्करीति भावेनेव बलरामः स्वयं युद्धार्थमगमदित्युत्प्रेक्षा ॥ २३ ॥

**स[1] धेनुकस्तं निजपार्ष्णिपद्भ्यां प्रताडयन् गाढमसह्यसत्त्वः ।**
**प्रगृह्य तावुत्क्षिपतो बलस्य खलः सहायोऽभवदस्तमायः ॥२४॥**

**व्या : स** इति । **असह्यसत्वः** अन्यैर्दुःसहसामर्थ्यः । **अस्तमायः** निजरूपेणैवागमनादिति भावः । **खलो** दुष्टो **स धेनुको निजपार्ष्णिपद्भ्यां तं** बलभद्रम् । **प्रताडयन्** । **तौ** पादौ **गाढं** दृढं **प्रगृह्य** उत्क्षिपतो **बलस्य सहायो** अनुकूलोऽभवत् । आभिमुख्येनागमने पार्ष्णिपादग्रहणायोगादिति भावः ॥२४॥

**उत्क्षिप्य तं तालमहीरुहाग्रे सम्प्रेषयामास सतां विपक्षम् ।**
**विष्वक्फलालम्बिनि पादपाग्रे धृत्वोपलं बाल इवात्तलीलः ॥२५॥**

**व्या :** उत्क्षिप्येति । स बलभद्रः **सतां** सज्जनानां **विपक्षं** शत्रुं **तं** धेनुकं **उत्क्षिप्य** उन्नमय्य । **तालमहीरुहाग्रे** तालवृक्षोपरि **विष्वक्** सर्वतः **फलै**राल-**म्बिनि** अवस्रंसिनि **पादपाग्रे** वृक्षाग्रे । **उपलं** पाषणं **धृत्वा** । **आत्तलीलः** आत्ता उपात्ता लीला येन सः तथा **बाल इव सम्प्रेषयामास** प्रेषितवान् ॥२५॥

**व्यसुरथ निपतन् स स्वाङ्घ्रिपानेव कांश्चि-**
**द्द्रुतमतनुरुच्चैः पातयामास दैत्यः ।**

---

१ तत्राथ कृष्णमवदन् सबलं वयस्याः पक्वानि तालसुफलान्यनुभोजयेति ।
इत्यर्थितः सबल आप स तालवृन्तं गोपैर्दुरासदमतीव हि धेनुकेन ॥
विघ्नेशतो वरमवाप्य सुदुष्टदैत्यो दीर्घायुरुत्तमबलः कदनप्रियोऽभूत् ।
नित्योद्धतः स उत राममवेक्ष्य तालवृन्दात् फलानि गलयन्तमथाभ्यधावत् ॥
तस्य प्रहारमभिकाङ्क्षत आशु पृष्ठपादौ प्रगृह्य तृणराजशिरोऽहरत् सः ।
तस्मिन् हते खरतरे खररूपदैत्ये सर्वे खराश्च खरतालवनान्तरस्थाः ॥
प्रापुः खराः खरतराः खरराक्षसारिं कृष्णं बलेन सहितं निहताश्च तेन ।
सर्वान् निहत्य खररूपधरान् स दैत्यान् विघ्नेश्वरस्य वरतोऽन्यजनैरवध्यान् ।
पक्वानि तालसुफलानि निजेषु चादाद्दुर्वारपौरुषगुणोद्धरितो रमेशः ॥
- म.भा.ता.नि. (१३/५१-५४)

**हरिपदविमुखानां पोषणस्योचितं ते**
**फलमलभिषतालं तैः सहेत्यस्मदूहः ॥ २६ ॥**

**व्या :** व्यसुरिति । **अथ** अनन्तरम् । **गुरुतमतनुः** स्थूलशरीरः । **व्यसुर्विगतप्राणो** दैत्यः धेनुकः । **निपतन् कांश्चित् स्वांघ्रिपानेव स्वीयवृक्षानेव । उच्चैः पातयामास ।** **ते** वृक्षाः **हरिपदविमुखानां** श्रीविष्णुद्वेषिणाम् । **पोषणस्य** फलपुष्पादिना कृतभरणस्य । **उचितम्** अर्हं **फलम् । तैः** श्रीविष्णुपदविमुखैः **सह । अलं** सम्यक् । **अलभिषत** अलभन्त । **इत्यस्मदूहः** अस्मत्प्रतर्कः । श्रीहरिविमुखपोषकाणां तैः सह पातो युक्त इति भावः ॥ २६ ॥

**मुनिकृताग्रजनाम गुणोचितं विरचयन्निव सानुगधेनुकम् ।**
**हलधरेण हतं समकारयत् सुरनतो रणतोषितनाकिना ॥२७॥**

**व्या :** मुनिकृतेति । **सुरैर्नतः** प्रणतः श्रीकृष्णः । मुनिना गर्गेण **कृतं** यदग्रजस्य **नाम** बलभद्र इति नामधेयं तत् **गुणोचितम्** अन्वर्थं **विरचयन्निव । सानुगधेनुकं** भृत्यसहितं धेनुकासुरम् । **रणतोषितनाकिना** रणेन युद्धेन तोषिताः नाकिनो देवाः येन स तेन **हलधरेण** बलरामेण **हतं समकारयत् ।** बलकार्यदर्शनेन बलभद्र इति नाम्नोऽवैय्यर्थ्यमिति भावः ॥ २७ ॥

**ग्रीष्मे भास्वति चापराधकृति सङ्क्रुद्धः [१]प्रलम्बं हली**
**लीलायाश्छलतो जघान मुरजिव्योमं मयस्यात्मजम् ।**

---

१ पक्षद्वयेन विहरत्स्वथ गोपकेषु दैत्यः प्रलम्ब इति कंसविसृष्ट आगात् ।
कृष्णस्य पक्षिषु जयत्सु स राममेत्य पापः पराजित उवाह तमुग्ररूपः ॥
भीतेन रोहिणिसुतेन हरिः स्तुतोऽसौ स्वाविष्टतामुपदिदेश बलाभिपूर्त्यै ।
तेनैव पूरितबलोऽम्बरचारिणं तं पापं प्रलम्बमुरुमुष्टिहतं चकार ॥
तस्मिन् हते सुरगणा बलदेवनाम रामस्य चक्रुरतितृप्तियुता हरिश्च ।
वह्निं पपौ पुनरपि प्रदहन्तमुच्चैर्गोपांश्च गोगणमगण्यगुणार्णवोऽपात् ॥
-म.भा.ता.नि.(१३/५५-५७)

**युक्तं तद्धि मनःप्रियान् जनयिता सन्तर्जयन् स्वान् शिशून्**
**तत्प्रान्तस्थशिलादि हस्तलगुडैस्तप्तोऽपि यत् ताडयेत् ॥२८॥**

**व्या : ग्रीष्मेति** । **ग्रीष्मे** ग्रीष्मर्तौ । **भास्वति** सूर्ये च । **अपराधकृति** सति। **हली** बलः । **क्रुद्धः** सन् । **लीलायाः** क्रीडायाः छलतो व्याजेन । **प्रलम्बं** प्रलम्बनामकासुरं **जघान** । **मुरजित्** कृष्णः **मयनामकस्यासुरस्य** त्वष्टुरात्मजं तनूजं [1]**व्योमं** व्योमनामानम् असुरं । **लीलायाः** छलतो **जघान** । ननु ग्रीष्मसूर्ययोरपराधे असुरयोरनयोः शिक्षा कथं युज्यत इत्यत आह – **युक्तमिति**। **तद्युक्तं हि** । **तप्तोऽपि** स्वशिशुदौर्जन्येन क्रुद्धोऽपि **जनयिता** पिता **मनःप्रियान्** इष्टान् **स्वान्** स्वकीयान् **शिशून् सन्तर्जयन्** भीषयन् **हस्तलगुडैः** करस्थदण्डैः **तत्प्रान्तस्थशिलादि** तेषां शिशूनां समीपस्थशिलास्तम्भादि वस्तु **ताडयेत्**। यथा लोके पिता स्वसुतादीन् तत्समीपस्थस्तम्भभित्त्यादि प्रताड्य भीषयति तद्वदिति भावः । अनेन ग्रीष्मसूर्ययोः स्वकीयत्वं ध्वन्यते ॥ २८ ॥

**पराभवं वीक्ष्य ततो निदाघः ससर्ज दावानलमुज्ज्वलन्तम् ।**
**हरिः पपौ तं च जगन्निवासो विनाशशून्यस्य हि किं न कार्यम् २९**

**व्या : पराभवमिति** । **ततः** अनन्तरं **निदाघः** श्रीकृष्णात् **पराभवं वीक्ष्य** । **उज्ज्वलन्तं दावानलं** दावाग्निं **ससर्ज** सृष्टवान् । **जगतां निवासो हरिः** श्रीकृष्णः । **तं च** दावाग्निं च । [2]**पपौ** पीतवान् । चशब्देन पूर्वकृतदावाग्निपानं समुच्चिनोति। तथाहि । **विनाशशून्यस्य** मृतिरहितस्य **किं न कार्यम्** । मरणभयाभावादिति भावः ॥२९॥

---

१ व्योमश्च नाम मयसूनुरजप्रसादाल्लब्धामितायुरखिलान् विदधे बिले सः ।
तं श्रीपतिः सुरपतिः पशुवद्विशस्य निःसारितान् बिलमुखादखिलांश्चकार ॥
- म.भा.ता.नि.(१३/८२)

२ वह्निं पपौ पुनरपि प्रदहन्तमुच्चैर्गोपांश्च गोगणमगण्यगुणार्णवोऽपात् ॥
- म.भा.ता.नि.(१३/५७)

**मेघाः सवर्णस्य हरेः सहायं प्रायो विधातुं परितः समेत्य ।**
**भास्वन्तमङ्गैः पयसा निदाघमाच्छाद्य विश्वं पुपुषुस्तदीयम् ॥३०॥**

**व्या :** वर्षर्तुं वर्णयति – **मेघा** इति । **मेघाः सवर्णस्य** श्यामत्वेन समानवर्णस्य **हरेः** कृष्णस्य **सहायं प्रायो विधातु**मिवेत्युत्प्रेक्षा । **परितः** समन्तात् **समेत्य अङ्गैः** शरीरैः **भास्वन्तं** सूर्यम् **आच्छाद्य पयसा** जलेन **निदाघं** घर्मम् । **आच्छाद्य** परिहृत्य **तदीयं** कृष्णसम्बन्धि **विश्वं पुपुषुः** पोषितवन्तः ॥ ३० ॥

**आश्रित्य विष्णुपदमर्थिषु यच्छतोऽम्बु**
**मेघस्य सारथिरभूज्जलनायकोऽपि ।**
**नित्यं मुकुन्दचरणार्पितवैभवस्य**
**मर्त्योपकारनिरतस्य न कः सहायः ॥ ३१ ॥**

**व्या :** आश्रित्येति । **विष्णुपदम्** आकाशम् **आश्रित्य** । **अर्थिषु** जलार्थिषु । **अम्बु** जलं **यच्छतः** प्रयच्छतो **मेघस्य** । **जलनायकोऽपि** समुद्रोऽपि **सारथिरभूत्**। अपिपदात् 'जलं नीरे जडे त्रिषु' इत्यभिधानात् मूर्खोऽपीत्यर्थो व्यज्यते । समुद्राज्जलस्वीकारादिति भावः । अर्थान्तरं न्यस्यति – **नित्यमिति** । **नित्यं** सदा **मुकुन्दचरणे** श्रीकृष्णपादे **अर्पितं वैभव**मैश्वर्यं येन तस्य श्रीकृष्णार्पणीकृतसमस्तभाग्यस्येत्यर्थः । **मर्त्योपकारनिरतस्य** पुरुषस्य **कः सहायो न** । सर्वोऽपि सहायो भवतीत्यर्थः । मेघस्यापि विष्णुपदार्पितविभ-वत्वाज्जीवनदानेन मनुष्योपकारित्वादिति भावः ॥ ३१ ॥

**लोकस्य शोकहरवार्यभिवर्षतोऽलं**
**मेघस्य योगकृदभूदमतोऽपि वातः ।**
**कामं परोपकृतिलग्नमनोरथानां**
**क्षेमङ्करत्वमुपयान्ति हि शत्रवोऽपि ॥३२॥**

**व्या : लोकस्येति** । **लोकस्य** जनस्य । 'लोकस्तु भुवने जने' इत्यमरः । **शोकहरवारि** श्रमहरजलम् **अलं** सम्यक् **अभिवर्षतो मेघस्य अमतोऽपि** शत्रुरपि। **वातो** वायुः । झङ्झानिलेन मेघानामपसारणादिति भावः । **योगकृत्** आकाशे मेघान्तरेण सङ्गतिकृत् **अभूत्** । पुरोवातस्य मेघमेलनकारित्वादिति भावः । अर्थान्तरन्यासमाह – **कामं** यथेष्टं **परोपकृतिषु** परोपकारेषु **लग्नमनोरथानां** प्राणिनां **शत्रवोऽपि क्षेमङ्करत्वं** हितकरत्वम् **उपयान्ति हि** ॥ ३२ ॥

**उद्यद्विद्युति वक्रशक्रधनुषि व्योमाग्रसीमाश्रये**
**वर्षत्यूर्जितगर्जितेऽतिचकिता मर्त्याः पयोधारिणि ।**
**नेत्रान्तभ्रुकुटीबलं कृशलसन्मध्योर्ध्वभागोदितं**
**नारीपीनपयोधरं भयहरं भेजुः क्वणद्भूषणम् ॥ ३३ ॥**

**व्या : उद्यदिति** । उद्यन्ती प्रकाशमाना **विद्युत्** सौदामिनी यस्य तत्। 'तटित्सौदामिनी विद्युत्' इत्यमरः । तस्मिन् । **वक्रं** कुटिलं **शक्रधनु**रिन्द्रायुधं यस्य तस्मिन् । 'धनुषश्च'[1] इति प्राप्तस्य अनङो 'वा सङ्ज्ञायाम्'[2] इति वैकल्पिकत्वात् । **व्योमाग्रसीमै**वाकाशाग्रभाग एवा**श्रयो** यस्य तस्मिन् । **ऊर्जितम्** उच्चं **गर्जितं** यस्य तस्मिन्। **पयोधारिणि** मेघे **वर्षति** सति । **मर्त्याः** वियोगिमनुजाः **अतिचकिताः** सन्तः । **नेत्रान्तभ्रुकुट्योः** कटाक्षभ्रूभङ्गयोः **बलं** यस्य स तथोक्तः तम् । स्तनपरिरम्भणस्य कटाक्षविक्षेपणादिना पुरुषवशीकरणानन्तरभावित्वादिति भावः । अनेन तटिदिन्द्रचापयोः प्रतिकृतिरुक्ता । **कृशलसन्मध्य**स्य तनुमनोहरोदरस्य **ऊर्ध्वभागे उदितं** जातम्। अनेन **व्योमाग्रसीमाश्रय** इत्यस्य प्रतिकृतिरुक्ता। **क्वणन्ति भूषणानि** यस्य स तथोक्तः । अनेन गर्जितस्य प्रतिकृतिरुक्ता । **भयहरं** कामभयहरं **नारीपीनपयोधरं** कान्तापीनकुचं **भेजुः** आश्रितवन्तः । राजभयस्य तत्सदृशराजान्तराश्रयणेन

---

१ पा.सू. ५/४/१३२
२ पा.सू. ५/४/१३३

परिहारवत् पयोधरजन्यभयस्य तत्सदृशपयोधरान्तरं समाश्रित्य परिहर्तव्यत्वादिति भावः । विद्युदादीनां बिम्बप्रतिबिम्बभावगतत्वेन दृष्टान्तालङ्कारः ॥ ३३ ॥

**कादम्बिन्यै वितरति पयोबिन्दुमात्रं पयोधा-**
**वासीद्वृद्धिः सकलसरितां स्वात्मनश्चेति युक्तम् ।**
**नित्यं विष्णोः पदमधिगतायात्युदाराय दाना-**
**दब्बिन्दूनामपि शतगुणा वृद्धिरद्धा स्ववर्गे ॥ ३४ ॥**

**व्या :** कादम्बिन्या इति । **पयोधौ** समुद्रे । **कादम्बिन्यै** मेघमालायै । 'कादम्बिनी मेघमाला' इत्यमरः । पयसः **बिन्दुः** लवः **पयोबिन्दुः** । केवलं पयोबिन्दुः **पयोबिन्दुमात्रम्** । तत् **वितरति** ददति सति । **सकलसरितां** समस्तनदीनाम् । **स्वात्मनश्च** स्वस्यापि **वृद्धिरासीत्** । वर्षाकाले सकलनदीनां समुद्रस्यापि जलाभिवृद्धेर्जायमानत्वादिति भावः । इति यत् तद्युक्तम् । **नित्यं** सर्वदा । **विष्णोः पदम्** आकाशं हरिचरणमिति ध्वनिः । **अधिगताय** आश्रिताय **अत्युदाराय** यावदार्जितं तावद्व्ययं कुर्वते मेघाय दानशीलायेति ध्वनिः । **अब्बिन्दूनामपि** [1]**दानात् स्ववर्गे** स्वजनसमूहे **शतगुणा** शतगुणिता **वृद्धिरभिवृद्धिर्भवति । अद्धा** निश्चयः । सरितां पत्नीत्वात् समुद्रस्य पतित्वाच्च सरिदादिवृद्धिरपि स्ववर्गवृद्धिरेवेति भावः । अनेन मेघस्वभावः सत्पात्रे दानं च वर्णितं भवति । **मन्दाक्रान्तावृत्तम्** । 'मन्दाक्रान्ता जलधिषडगैम्भौं नतौ ताद्गुरू चेत्'[2] ॥३४॥

**मेघागमोऽसह्यमपि प्रजह्रे ग्रीष्मस्य सत्त्वं सकलं तथा तत् ।**
**सर्वंसहाजीवनहर्तुरस्य दुर्वारतेजोऽपि किमेति वृद्धिम् ॥३५॥**

---

१ सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे ।
स्वाधीते शतसाहस्रमनन्तं वेदपारगे ॥ -मनुस्मृतौ (७/८५)

२ वृत्तरत्नाकरे (३/९४)

**व्या :** **मेघागम** इति । **मेघागमः** **असह्यमपि** सोढुमशक्यमपि **ग्रीष्मस्य** **सकलं सत्त्वं** सर्वं सामर्थ्यं **प्रजह्रे** आहृतवान् । तत् ग्रीष्मसामर्थ्यापहरणं **तथा** **युक्त**मित्यर्थः। **सर्वंसहाया** [1]भूमेः । **जीवनम्**[2] उदकं हरतीति **सर्वंसहाजी-वनहर्ता** **तस्य** । अनेन सहनशीलाया नार्याः प्राणापहरणलक्षणदौर्जन्यं व्यज्यते। **अस्य** ग्रीष्मस्य **दुर्वारतेजोऽपि** दुर्निवार्यसामर्थ्यमपि **वृद्धिम्** अभिवृद्धिं **एति** प्राप्नोति **किम्** । न प्राप्नोतीत्यर्थः ।। ३५ ।।

**साधूनां वरमानसाकृति सरः संशोधयत् तन्मुख-**
**प्रख्यं पद्मचयं प्रहर्षयदलं पङ्कं च सङ्खण्डयत् ।**
**हृद्व्योमेव घनापिधानरहितं कुर्वन्नभः संहरत्**
**तामिस्रं हरिवीर्यकीर्तिसदृशौ सूर्योडुपौ स्पष्टयत् ।। ३६ ।।**

**व्या :** शरत्कालं वर्णयति – **साधूनामिति** । उज्जृम्भितमुद्भूतं **शरत्साम्राज्यं** [3]शरत्कालैश्वर्यं **सच्छास्त्रमेव** श्रीमध्वशास्त्रमेव **प्रतिकृति**रुपमानं यस्य तत्तथोक्तं

---

१ समुद्रवसने देवि पर्वतस्तनमण्डिते ।
विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ।
विष्ठामूत्रकफोत्सर्गमपराधं क्षमस्व मे ।।

२ जीवनं भुवनं वनम् । इत्यमरः ।

३ व्योम्नोऽब्दमभ्रशाबल्यं भुवः पङ्कमपां मलम् ।
शरज्जहाराश्रमिणां कृष्णभक्तिर्यथाऽशुभम् ।।
सर्वस्वं जलदा हित्वा विरेजुः शुभ्रवर्चसः ।
यथा त्यक्तैषणाः शान्ता मुनयो मुक्तकल्मषाः ।।
गिरयो मुमुचुस्तोयं क्वचिन्न मुमुचुः शिवम् ।
यथा ज्ञानामृतं काले ज्ञानिनो ददते न वा ।।
नैवाविदन् क्षीयमाणं जलं गाधजलेचराः ।
यथाऽऽयुरन्वहं क्षय्यं नरा मूढाः कुटुम्बिनः ।।
गाधवारिचरास्तापमविन्दन् शरदर्कजम् ।
यथा दरिद्रः कृपणः कुटुम्ब्यविजितेन्द्रियः ।।

तत् । **अलक्ष्यत** सच्छास्त्रवदद्दश्यतेत्यर्थः । किंकुर्वत् **साधूनां वरमानसस्य आकृतिरिवाकृतिर्यस्य** तत्तथोक्तम् । **सरः** सरोवरं **संशोधयत्** निर्मलीकुर्वत्। शरदो जलनैर्मल्यहेतुत्वादिति भावः । शास्त्रमपि सतामन्तःकरणशुद्धिकृत् । पुनः किंकुर्वत् । **तन्मुखप्रख्यं** तन्मुखानां साधुमुखानां प्रख्येव **प्रख्या** अभिख्या यस्य स तथोक्तः तम् । 'सुषमा परमा शोभाऽभिख्या कान्तिर्द्युतिश्छविः' इत्यमरः । साधुमुखसदृशमित्यर्थः । साधुमुखैः प्रख्यः समानः तमिति व । 'प्रख्यः प्रकाशः प्रतिमः' इति हलः । तं **पद्मचयं** कमलसमूहम् । **प्रहर्षयत्** मेघावृतेरभावादर्ककिरणसम्पर्केणोद्बोधयत् । शास्त्रं च तन्मुखविलासकृत् । पुनः किंकुर्वत् । **पङ्कं च** कर्दमं च । अलम् अत्यर्थम् । **सङ्खण्डयत्** शास्त्रं च श्रवणमात्रेण पापपरिहारकृत् । 'पङ्कः कर्दमपापयोः' इत्यभिधानात् । पुनः किंकुर्वत् । **हृद्व्योमेव** साधूनामित्येतदत्रापि सम्बद्ध्यते । **साधूनां हृव्योमेव** हृदयाकाशमिव । **नभः** गगनं **घनापिधानरहितं** मेघावरणरहितं **कुर्वत्** । शास्त्रमपि सतां हृदयाकाशगतप्रकृतिबन्धनलक्षणनिबिडावरणनिरासकृत् । पुनः किङ्कुर्वत् । **तामिस्रं** वर्षाकालीनतमः **संहरत्** । शास्त्रमपि अज्ञानध्वंसकृत् । पुनः किङ्कुर्वत् । **हरिवीर्यकीर्तिसदृशौ सूर्योडुपौ**

---

शनैश्शनैर्जहुः पङ्कं स्थलान्यासंश्च वीरुधः ।
यथाऽहम्ममतां धीराः शरीरादिष्वनात्मसु ॥
निश्चलाम्बुरभूत् तूष्णीं समुद्रः शरदागमे ।
आत्मन्युपरते यद्वन्मुनिर्व्युपरतागमः ॥
केदारेभ्यस्त्वपोऽगृह्णन् कर्षका दृढसेतुभिः ।
यथा प्राणैः स्वविज्ञानं तन्निरोधेन योगिनः ॥
शरदर्कांशुजं तापं भूतानामुडुपोऽहरत् ।
देहाभिमानजं बोधो मुकुन्दो व्रजयोषिताम् ॥
शरदर्कांशुजं तापं भूतानामुडुपोऽहरत् ।
सत्त्वयुक्तं यथा चित्तं शब्दब्रह्मार्थदर्शनम् ॥
अखण्डमण्डलं व्योम्नि रराजोडुगणैः शशी ।
यथा यदुपतिः कृष्णो वृष्णिचक्रैर्वृतो भुवि ॥ - भागवते (१०/१८/३२-४२)

[1]सूर्याचन्द्रमसौ **स्पष्टयत्** शरदि चन्द्रार्कयोः प्रकाशवैशद्यादिति भावः। शास्त्रमपि विष्णुमहिमाप्रकटनकृत् ॥३६॥

**संसाराख्यमभेद्यबन्धनमिव प्रावृट्कृतं बन्धनं**
**भिक्षूणां वणिजामधःकृतजलं विच्छेदयन्मोदयत् ।**
**मोक्षानन्दमहाप्रवाहतुलनैर्गोक्षीरपानैर्जनान्**
**सच्छास्त्रप्रतिकृत्यलक्ष्यत शरत्साम्राज्यमुज्जृम्भितम् ॥ ३७ ॥**

**व्या : संसाराख्यमिति** । पुनः किङ्कुर्वत् । अधःकृतम् अल्पीकृतं **जलम्** उदकं येन तत्तथा तत् । **संसाराख्यमभेद्यवन्धनमिव भिक्षूणां** सन्न्यासिनां **वणिजां** विशां च । **प्रावृट्कृतं बन्धनं** वर्षाकृतपर्यटनप्रतिबन्धनम् । वर्षाकाले सन्न्यासिनां सञ्चरणस्य निषिद्धत्वादिति भावः । विशां च बलीवर्दादीनां मार्गस्य कर्दमबद्धत्वेन सञ्चरणानर्हत्वादिति भावः । **विच्छेदयत्** । शास्त्रमप्यधःकृतजलम् अधरीकृतमूर्खं संसारबन्धध्वंसकृत् । पुनः किंकुर्वत् । **मोक्षानन्दमहाप्रवाहतुलनैः** मुक्तिमुखप्रवाहसदृशैः **गोक्षीरपानैः जनान् मोदयत्** हर्षयत् । शरदि पित्तोपशमनाय गोक्षीरपानस्य **वैद्यशास्त्रे** विहितत्वादिति भावः । **इति श्लोकद्वयस्य एकान्वयः** । अन्तःकरणशुद्धिर्मुखविकासः पापपरिहारः प्राकृतावरणनिवृत्तिरज्ञानध्वंसः अपरोक्षज्ञानं संसारनिवृत्तिः स्वरूपानन्दाविर्भावश्च शास्त्राद्भवतीति भावः । **प्रतिवस्तूपमालङ्कारः** ॥ ३७ ॥

**पद्मासेव्यगुणौघविस्तृतिकरः स्पष्टीभवच्छारदा-**
**नन्दः कम्पितभोगिराजशिरसा मान्यागमः सन्ततम् ।**
**सन्मार्गाश्रितपङ्कशोषणकरः सत्पान्थघर्मापहो**
**नित्यं विष्णुपदाश्रयः परिलसत्पुण्याम्बुपूतोऽसकृत् ॥ ३८ ॥**

---

१ गीतातात्पर्यभाष्याभ्यामाभ्यां विश्वं प्रकाश्यते ।
गोगणैरप्रतीकारैरर्केन्दुभ्यामिवाधिकम् ॥ (मध्वविजये १५/७५) इतिवत् ।

**व्या : पद्मेति** । अत्रापि पूर्ववत् श्लोकद्वयस्यैकान्वयः । **पद्मानां** कमलानाम् **आसेव्या** आदरणीया ये **गुणाः** परिमलाः । तेषाम् **ओघस्य** समूहस्य **विस्तृतिं** करोतीति **पद्मासेव्यगुणौघविस्तृतिकरः** । अन्यत्र पद्मया लक्ष्म्या सेव्यो नारायणः तस्य गुणा ज्ञानानन्दादयः तेषामोघस्य विस्तृतिकृत् श्रीमदाचार्यैरेव 'एष सर्वज्ञ एष सर्वेश्वरः'[1] इत्यादिश्रुतिभिः, 'आनन्दमयोऽभ्यासात्'[2] 'अन्तस्तद्धर्मोपदेशात्'[3] इत्यादि सूत्रैः, 'मय्यनन्तगुणेऽनन्ते'[4] इत्यादिस्मृतिभिश्च विष्णोर्गुणानां प्रतिपादितत्वादिति भावः । शरदि विद्यमानः शारदः । स चासावानन्दश्चेति **शारदानन्दः** । **स्पष्टीभवत् शारदानन्दो** यस्मात् सः तथा। अन्यत्र शारदाया भारत्या आनन्दः **शारदानन्दः** । **स्पष्टीभवत् शारदानन्दो** यस्माच्छास्त्रादिति । विचित्रशब्दप्रयोगेण वाग्देव्याः सन्तोषजननादिति भावः। **कम्पितेन** चलितेन भोगः स्त्रीसम्भोगसुखमेषामस्तीति **भोगिनो** राजानः । तेषां **शिरसा मान्यः आगमः** आगमनं यस्य सः । स्त्रीसम्भोगजश्रमपरिहाराय मन्दवायोर्मान्यत्वादिति भावः। अन्यत्र **कम्पितभोगिराजशिरसा** सन्तोषेणान्दोलितशेषमूर्ध्नि[5]। 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्युभयत्राप्यमरः। **मान्य** आदरणीयः **आगमः** शास्त्रं यस्य स तथोक्तः । **सन्मार्गाश्रितस्य** सञ्चरणार्हमार्गस्थितस्य **पङ्कस्य शोषणकरः** । अन्यत्र **सतां मार्गः** शास्त्रमार्गः। तदाश्रितानाम् अन्तःकरणविषयः **पङ्कः** मिथ्याज्ञानं तस्य **शोषणकरः** । **सत्पान्थाः** सत्पथिकास्तेषां **घर्मापहः** घर्मजन्यखेदापहः । अन्यत्र **सत्पान्थाः**

---

१ ब्रहदारण्यकोपनिषत् (४/४/२१)

२ ब्रह्मसूत्रम् १/१/१२

३ ब्रह्मसूत्रम् १/१/२०

४ भागवते ६/४/४८

५ प्रचुरान्तरप्रवचनं फणिराड्डपशुश्रुवान् ससनकादिमुनिः ।
गगनेऽल्पदृष्टवपुरत्र जनैस्त्वरितं निलीनरुचिराप पदम् ।। - सुमध्वविजये (११/१)

मोक्षमार्गचराः। तेषां **घर्मापहः** तापापहः। **नित्यं विष्णुपदाश्रयः** आकाशाश्रयः। अन्यत्र हरिचरणासक्तः। **असकृत्** बहुशः **पुण्याम्बुभिः** भागीरथ्यादितीर्थतोयैः **पूतः** शुद्धः। अन्यत्र परिलसत्पुण्यान्येव अम्बूनि जलानि। तैः **पूतः** शुद्धः॥३८॥

**रामायोगिजनस्य भीमचरितः सद्वंशजातं मुहुः**
**प्रेमालम्बनशब्दहृद्यवदनं कुर्वन् स्वकीयागमैः।**
**सुक्षेमं सुमनश्चयस्य विदधत्सुव्याप्तमूर्तिः क्षितौ**
**सच्छास्त्रे सुखतीर्थवन्मरुदभून्मूर्धाभिषिक्तस्तदा॥ ३९॥**

**व्या : रामायोगीति। रामायोगिजनस्य** कान्तावियोगिजनस्य। **भीमचरितः** भयङ्करसञ्चारः। अन्यत्र **रामे** रघुपतौ **अयोगिजनः** भक्तियोगरहितजनः। तस्य। **भीमचरितः** भयङ्करचारित्रः। [१]सहस्रचतुष्टयकदलीफलभक्षणेन बहुक्षीरपानादिना भीमसेनचरित इति वा। अनेन श्रीमदाचार्यस्य भीमत्वं द्योत्यते। **स्वकीयागमैः** स्वकीयाः ये आगमानानि तैः। **सद्वंशजातं** सन्तः समीचीनाः ये वंशाः वेणवः तेषां जातः समूहः तत्। **मुहुः** पुनःपुनः। **प्रेमालम्बनशब्देन** स्नेहास्पदध्वनिना। **हृद्यवदनं** मनोहररन्ध्रं **कुर्वन्**। अन्यत्र **स्वकीयागमैः** स्वशास्त्रैः। **सद्वंशजातं** सत्कुलप्रसूतं **प्रेमालम्बनशब्दहृद्यवदनम्** आदराश्रयीभूतशब्दैः हृद्यं मुखं **कुर्वन्। सुमनश्चयस्य** पुष्पसमूहस्य। **सुक्षेमं** सम्यक्कुशलं **विदधत्**। अन्यत्र **सुमनसां** देवानां **चयस्य** सङ्घस्य। **सुक्षेमं** मोक्षं **विदधत्**। **क्षितौ** भूमौ **सुव्याप्तमूर्तिः** सम्यग्विततमूर्तिः। इदमुभयत्रापि समानम्। **मरुत्** वायुः। **तदा** शरत्काले। **सच्छास्त्रे** समीचीनब्रह्ममीमांसाशास्त्रे। **सुखतीर्थवत्**

---

१ स शङ्करपदद्विजोपहृतमाप्य गोवाख्यगां गरिष्ठकदलीलसद्दशशतीचतुष्कं चरन्।
पयः कलशपञ्चकत्रिकयुगाभिपूर्णं पपावदृष्टगतिरप्यभून्नृपनृमण्डलैरुद्यतैः॥
- इति सुमध्वविजये (१०/५२)

श्रीमदानन्दतीर्थवत् । **मूर्धाभिषिक्तः** पट्टाभिषिक्तः **अभूत्** । विशिष्टस्याश्लिष्टत्वात् तुल्ययोगित्वमलङ्कारः ॥ ३९ ॥

**वियुक्तनारीमुखपद्मपुञ्जैः सहाम्बुजातं शिथिलं वितन्वन् ।**
**प्रबोधकल्पं रविमल्पकान्तिं विधाय हेमन्त उपाजगाम ॥४०॥**

**व्या :** हेमन्तर्तुं वर्णयति – **वियुक्तेति** । **अम्बुजातं** कमलं **वियुक्तनारीमुखपद्मपुञ्जैः** विरहिणीवदनाम्बुजसमूहैः **सह शिथिलं** क्षीणं **वितन्वन्** । हिमस्य पद्मशैथिल्यकारित्वादिति भावः । **प्रबोधकल्पं** ईषदूनः प्रबोधः प्रबोधकल्पः । तं ज्ञानसदृशमित्यर्थः । **रविं** सूर्यम् **अल्पकान्तिं** तनुप्रकाशं **विधाय** । हिमकाले नीहारावृतत्वेन सूर्यस्याल्पकान्तित्वादिति भावः । **हेमन्तः** हेमन्तर्तुः । **उपाजगाम** प्राप्तवान् ॥ ४० ॥

**हिमार्दिताङ्गः सकृदुष्णरश्मिरपि स्म वह्निं स्वकरैर्दधानः ।**
**विशत्यजस्रं जलधिं ततस्तां कथं हिमानीमबलाः सहन्ते ॥४१॥**

**व्या :** हिमार्दिताङ्ग इति । **उष्णरश्मिः** सूर्योऽपि । **सकृत्** एकवारम् । **हिमार्दिताङ्गः** शीतेन व्यथिताङ्गः सन् । **स्वकरैः** स्वकिरणैः । **वह्निं दधानः** । **अजस्रं** नित्यम् । **जलधिं** समुद्रं **विशति** प्रविशति **स्म** । सायं सूर्यः स्वकिरणान् वह्नौ निधायास्तं यातीत्यागमप्रसिद्धिः । **ततः** कारणात् । **तां हिमानीं** हिंमसंहतिम् । **अबलाः** बलरहिताः नार्यः । **कथं सहन्ते** । हिममसहमाना मानिन्यः प्रार्थनां विना स्वरमणानङ्गीकुर्वन्तीति भावः ॥४१॥

**पतिं वशीकर्तुमयं हि काल इतीव कृष्णं पतिमाप्तुकामाः ।**
**व्रतं वितेनुः किल गोपकन्या वितर्क्य तस्यासमधाम धन्याः ॥४२॥**

**व्या :** पतिमिति । **श्रीकृष्णं** यशोदातनयम् । **पतिं** भर्तारम् । **आप्तुकामाः** प्राप्तुं कामवत्यो **गोपकन्याः** । **पतिं** भर्तारं **वशीकर्तुं अयं कालः** समयो **हि** ।

हिमकाले पुरुषाः प्रयत्नं विना स्वयमेव स्त्र्यधीना भवन्ति । कान्ताकुचालिङ्गनेन हिमनिवृत्तेरिति भावः । **इति धियेव** इति बुद्ध्येव । **धन्याः** सत्यः दुर्गापूजासाधनसम्पत्तिमत्यः सत्यः । **तस्य** श्रीकृष्णस्य **असमधाम** असदृशतेजो **वितर्क्य** मत्वा । अनेन श्रीकृष्णः लौकिकवल्लभ्यो न भवति किन्तु प्रयत्नलभ्य इति सूच्यते । अत एव **व्रतं** दुर्गापूजानियमं **वितेनुः** चक्रुः ॥ ४२ ॥

**पुमांसमभ्यर्चयितुं[1] सलज्जाः समान्तरङ्गा वरवर्णिनीश्च ।**
**सहोदरीं श्रीरमणस्य दुर्गामपूजयंस्ताः कृतविश्वसर्गाम् ॥४३॥**

**व्या :** इन्द्रादिपुरुषान् उर्वश्यादिनारीश्च विहाय दुर्गाव्रतचरणे निमित्तमुत्प्रेक्षयन्नाह – **पुमांसमिति** । **ताः** गोपकन्याः । **पुमांसं** पुरुषं श्रीकृष्णम् । श्रीकृष्णोऽस्माकं पतिर्भूयादिति **अभ्यर्चयितुं समान्तरङ्गाः** समानान्तःकरणाः समानकामा इत्यर्थः । **वरवर्णिनीः** अङ्गनाश्च उर्वश्याद्यप्सरसश्च । श्रीकृष्णसौन्दर्यदर्शनेन सर्वासामपि स्पृहोत्पत्तेरिति भावः । **अभ्यर्चयितुं सलज्जाः** लज्जायुक्ताः सत्यः । ननु दुर्गाया अपि विष्णुपत्नीत्वात् कथं सपत्नीप्रार्थना घटत इत्यत आह – **सहोदरीमिति** । **श्रीरमणस्य** श्रीकृष्णस्य **सहोदरीं** स्वसारम् । नन्दवसुदेवयोर्मातृभेदेऽपि शूराख्यपित्रैक्येन ज्येष्ठकनिष्ठत्वात्[2] नन्दकुमार्यपि दुर्गा श्रीकृष्णस्य सहोदरीति भावः । **कृतः विश्वस्य सर्गो** यया तां **दुर्गामपूजयन्**। दुर्गाया विष्णुपत्नीत्वेऽपि श्रीकृष्णावतारे तत्सहजातत्वात् तत्प्रार्थना युक्तेति भावः । **कृतविश्वसर्गामि**त्यनेन दुर्गाया मातृत्वात् मातरि स्वाभिलषितकथनं न लज्जाकरमिति द्योत्यते । उत्प्रेक्षालङ्कारः ॥ ४३ ॥

**कृष्णं पतिं ताः किल कामयन्त्यो लक्ष्मीं प्रसन्नां विदधुर्व्रतेन ।**
**स्वप्रेयसीवैरिवधूः कथं तास्तुष्टाः प्रभुः सोऽपरथा विदध्यात् ॥४४॥**

---

१ पुमांसमभ्यर्थयितुम् । इति पा.

२ स च शूरतातसुतस्य वैश्याप्रभवोऽथ गोपः । - इति म.भा.ता.नि. (११/२८)

**व्या :** कृष्णमिति । **ताः** गोपकुमारिकाः । श्रीकृष्णं **पतिं** कामयन्त्यः सत्यः । **लक्ष्मीं दुर्गां व्रतेन** पूजानियमेन **प्रसन्नां विदधुः** । **किल** । **अपरथा** लक्ष्मीप्रसादाभावे । **स प्रभुः** श्रीकृष्णः । **स्वप्रेयसीवैरिवधूः** स्वप्रेयस्याः स्वप्राणकान्तायाः लक्ष्म्याः वैरिवधूः सपत्नीः **ताः** गोपकन्याः **तुष्टाः** स्वसम्भोगादिना सन्तुष्टाः । **कथं विदध्यात्** । प्रेमास्पदीभूतज्येष्ठपत्न्यनुमतिं विना पत्न्यन्तरप्रतिग्रहस्याशक्यत्वादिति भावः ॥४४॥

**नेमुस्तां प्रणयापराधशमने नम्रोऽस्तु कृष्णस्त्विति**
**प्रेम्णा पुष्पमवेदयन् स्वकबरीं तैः सन्दधात्वित्यलम् ।**
**धूपं मज्जनमारचय्य सह तद्धूमेन तां शोषय-**
**त्वालिङ्ग्यातनुतादितीव तिलकं गन्धं च तस्यै ददुः ॥४५॥**

**व्या :** नेमुस्तामिति । गोपकन्याः **प्रणयापराधशमने** कर्तव्ये श्रीकृष्णः अस्माकं **नम्रः** प्रणतोऽस्त्विति **तां** दुर्गां **नेमुः** । नमस्कारेण प्रह्वीभूताः जाताः । **स कृष्णः स्वकबरीं** अस्मद्धम्मिल्लम् । **तैः** कुसुमैः **अलम्** अत्यर्थं **सन्दधातु** संयोजयतु । इति **प्रेम्णा** भक्त्या **पुष्पम् अवेदयन्** अर्पितवत्यः । स **कृष्णः** अस्माभिः **सह मज्जनं** मङ्गलस्नानं **आरचय्य** कृत्वा **ताम्** अस्मत्कबरीं **तद्धूमेन** धूपधूमेन **शोषयत्विति धूपमवेदयन्** । श्रीकृष्णः अस्मान् **आलिङ्ग्य** स्वतिलकेन स्वगन्धेन अस्माकं **तिलकं** विशेषकं **गन्धम्** अनुलेपं **अतनुतात्** कुर्यादिति **तिलकं गन्धं च तस्यै** दुर्गायै **ददुः** । [1]"सेवानुसारिफलस्य दात॰ यत्वादिति भावः ॥ ४५ ॥

**ताम्बूलं च मुकुन्दचर्वितलसत्ताम्बूलसिद्ध्यै पय-**
**स्तद्बिम्बोष्ठसुधाप्तये मृदुतनौ भूषावलीं सन्दधुः ।**
**रत्यन्ते समलङ्करोतु गलिताकल्पौघमस्मत्तनु-**
**ष्वित्यादीप्सितलब्धयेऽतिकुशलास्तामर्चयाञ्चक्रिरे ॥ ४६ ॥**

---

१ ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् । - (गीता ४/११)

**व्या :** ताम्बूलमिति । अतिकुशला अतिप्रौढाः गोपकन्याः । **मुकुन्दचर्वितल-सत्ताम्बूलसिद्ध्यै** श्रीकृष्णभक्षितमनोहरताम्बूलप्राप्त्यर्थमित्यर्थः । **ताम्बूलं च ददुः** । **तद्बिम्बोष्ठसुधाप्तये** श्रीकृष्णाधरामृतप्राप्तये **पयः** क्षीरं **ददुः** । **स कृष्णः रत्यन्ते** सुरतान्ते । **गलिताकल्पौघं** विभ्रष्टाभरणसमूहम् । **अस्मत्तनुषु** अस्मदवयवेषु निधाय **समलङ्करोतु** सम्यगलङ्कुरुतात् । व्रजकुमार्यवयवानां भूषणभूषणत्वादिति भावः । **मृदुतनौ दुर्गायाः** कोमलशरीरे । **भूषावलीं** भूषणश्रेणीं **सन्दधुः** संयोजयामासुः । **इत्यादीप्सितलब्धये** । इत्येवमादिः यस्य तदित्यादि तच्च तत् ईप्सितं च तस्य सिद्धये तां दुर्गां **अर्चयाञ्चक्रिरे** पूजयामासुः ॥ ४६ ॥

**ततः सपत्न्यर्चनतत्पराणां व्रतं विरुद्धं व्रजबालिकानाम् ।**
**स भग्नमाधातुमिवाम्बराणि जहार धीरोऽम्बुविहारकाले ॥४७॥**

**व्या :** तत इति । **ततः** दुर्गापूजानन्तरं **सपत्न्यर्चनतत्पराणां** सपत्न्याः लक्ष्म्याः अर्चने पूजने तत्पराणाम् आसक्तानां **व्रजबालिकानां विरुद्धं व्रतं** दुर्गापूजा-नियमम् । पतिकामनया सपत्नीप्रार्थनाया विरुद्धत्वादिति भावः । **भग्नमाधातुमिव** कर्तुमिव **धीरः** मनीषी श्रीकृष्णः **अम्बुविहारकाले** जलक्रीडासमये । **अम्बराणि** वस्त्राणि । **जहार** अपहृतवान् ॥ ४७ ॥

**देहीशाम्बरमस्मदीयमबला दत्तं क्व तद्वर्तते**
**मध्ये वः प्रतिभाति तर्हि न कथं सन्दृश्यतेऽस्मद्दृशा ।**
**मुग्धास्तार्किकमौलियुक्त्यकलितं तन्नैव वः शक्यते**
**द्रष्टुं चञ्चललोचनैरिति वदन् कृष्णः स पुष्णातु माम् ॥४८॥**

**व्या :** देहीति । हे ईश श्रीकृष्ण । **अस्मदीयम्** अस्मत्सम्बन्धि । **अम्बरं** वस्त्रम् । 'अम्बरं व्योम्नि वाससि' इत्यमरः । **देहि** दिशेति गोपीनां वचनम् । हे **अबलाः** अम्बरं **दत्तमिति** गूढाभिसन्धेः श्रीकृष्णस्य [1]छलोत्तरम् । श्रीकृष्णस्य

---

१ परोक्तस्य तदभिप्रेतार्थान्तरं परिकल्प्य तद्दूषणेन परोक्तभङ्गः छलम् ।

सर्वस्रष्टृत्वाद्गोपिकानां मध्यस्यापि तत्सृष्टत्वाद्दत्तमित्युचितम् । हे **ईश** त्वया **दत्तमम्बरं क्व** कुत्र **वर्तत** इत्यभिसन्धिमजानतीनां गोपीनां प्रत्युक्तिः । हे **अवलाः** मया दत्तमम्बरं **वो** युष्माकं **मध्ये** । जात्येकवचनम् । मध्येषु **प्रतिभाति** । इति गूढाभिसन्धेः श्रीकृष्णस्य पुनर्वचनम् । स्त्रीणां मध्यस्यातिसौक्ष्म्यादप्रकाशमानत्वेनाम्बरत्वव्यपदेशः । अनेन गोपीषु श्रीकृष्णेन तनुमध्या इति स्वानुरागनिवेदनरूपा स्तुतिः कृतेति व्यज्यते । यदि अम्बरमस्माकं मध्ये तिष्ठति **तर्ह्यस्मद्दृशा** अस्मद्दृष्ट्या **कथं न सन्दृश्यत** इति गोपीनां पुनर्वचनम् । श्रीकृष्णः स्वाभिप्रायमुद्धाटयति – **मुग्धा** इति । हे **मुग्धाः** मूढाः । **तार्किकमौलीनां** तार्किकश्रेष्ठानां गौतमादीनां **युक्तिभिर**नुमानै**रकलित**मज्ञातं **तत्** अम्बरं व्योम । **वो** युष्माकं **चञ्चललोचनैः** चपलनयनैः । अनेन व्योम्नः सुतरां लोचनागोचरत्वं सूच्यते । **द्रष्टुं नैव शक्यते** । अनुमानागोचरस्यातीन्द्रियस्य साक्षिसिद्धस्य गगनस्य चक्षुषा द्रष्टुमशक्यत्वादिति भावः । इति **वदन् सः कृष्णः मां पुष्णातु** पोषयतु ॥४८॥

**ततः क्रमेणाङ्कुरिताङ्गजाता निरीक्ष्य ताश्चञ्चललोचनान्ताः ।**
**स्वसङ्गयोग्या इति तर्कयन् स ददौ मुदा तद्वसनानि मानी ॥४९॥**

**व्या : तत** इति । **ततः** वस्त्रयाचनानन्तरम् । **सः मानी** अभिमानी श्रीकृष्णः । **चञ्चललोचनान्ताः** लोलकटाक्षान्ताः गोपकुमारीः **क्रमेण** अभ्यासपरिपाट्या **अङ्कुरिताङ्गजाताः** सञ्जाताभिलाषाः । अनेनासां कामजननीत्वं द्योत्यते । **निरीक्ष्य** दृष्ट्वा **स्वसङ्गयोग्याः** स्वपरिग्रहार्हाः । काममातुः श्रीकृष्णस्य पत्नीत्वादिति भावः । **तर्कयन्निव** जानन्निव । **मुदा** सन्तोषेण **तद्वसनानि** तासां वस्त्राणि **ददौ** दत्तवान् ॥ ४९ ॥

---

यथा गृष्टिविवक्षया गामानयेत्युक्ते पृथिवीविवक्षया गवानयनमशक्यमिति ।
- इति प्रमाणपद्धतौ

**ततो वने सञ्चरणादतिश्रान्ताः कदाचन ।**
**अन्नार्थिनो ययुर्गोपाः पूर्णां यज्ञसभां द्विजैः ॥ ५० ॥**

**व्या :** तत इति । ततोऽनन्तरं **कदाचन** कदाचित् । **वने** वृन्दावने । **सञ्चरणात्** पर्यटनात् । **अतिश्रान्ता** अत्यन्तखिन्नाः **गोपा अन्नार्थिनो** अन्नकाङ्क्षिणः सन्तः । **द्विजै**र्विप्रैः । 'दन्तविप्राण्डजा द्विजाः' इत्यमरः । **पूर्णां** जुष्टां **यज्ञसभां** यज्ञवाटिकां **ययुः** ॥ ५० ॥

**क्षुत्पीडिताऽपि परमानुगमण्डली सा**
**कृष्णाय भोज्यमिति विप्रचयं ययाचे ।**
**युक्तं हि तन्मुररिपोरनुगा विरागा**
**यत्नं कदाचिदपि न स्वकृते प्रकुर्युः ॥ ५१ ॥**

**व्या :** क्षुत्पीडितेति । **सा परमानुगमण्डली** श्रीकृष्णभृत्यवर्गः । **क्षुत्पीडिताऽपि** क्षुधार्दिताऽपि । **श्रीकृष्णाय भोज्यम्** अन्नं देयमिति **विप्रचयं** ब्राह्मणसमूहं **ययाचे** याचितवती । **तत्** स्वस्याः क्षुद्बाधे कृष्णायान्नाभ्यर्थनं **युक्तं हि** । **विरागाः** स्वोदरभरणे अनास्थावन्तः **मुररिपोरनुगाः** मुरारिभृत्याः । **कदाचिदपि स्वकृते** स्वार्थं **यत्नं न प्रकुर्युः** । हरिभक्ता हि न स्वोदरभरणे प्रयत्नं कुर्वन्ति किन्तु श्रीविष्णुपूजार्थमेव यतन्ते इति भावः ॥ ५१ ॥

**स्वीयक्रियाभङ्गभयेन विप्राः श्रेयस्कृते ते न ददुः किलान्नम् ।**
**भृत्यैः सहाश्नाति मखेऽस्मदीय इत्थं विदित्वेति मम प्रतर्कः ॥५२॥**

**व्या :** स्वीयेति । तैर्गोपैः अभ्यर्थिता **विप्राः** । **स्वीयक्रियाभङ्गभयेन** स्वीयकर्मवैगुण्यभिया । **श्रेयस्कृते** मोक्षदात्रे श्रीकृष्णाय । **अन्नं न ददुः किल** । किलेत्यस्वरसे । कृष्णो **मदीये** अस्मत्सम्बन्धिनि **मखे** यज्ञे । 'यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः' इत्यमरः । **भृत्यैः** ब्रह्मादिभिः **सह अश्नाति** भुनक्ति ।

इत्थम् अनेन प्रकारेण **विदित्वैवान्नं न ददुरिति मम प्रतर्कः**। कर्मवैगुण्यभिया अन्नं न ददुरिति न, किन्तु मखे भृत्यैः सहाश्नाति। नह्यश्नतः क्षुत्पीडा भवतीति भावेनैवान्नं न ददुरित्यर्थः। स्वपत्नीभिरन्नदानानन्तरं [1]पश्चात्तापस्य जातत्वात् ब्राह्मणानां शुभजीवत्वमुत्प्रेक्षितुः कवेर्हृदयम् ॥५२॥

**विप्राङ्गनाः स्वप्रभवे प्रहृष्टाः प्रत्यर्प्य सर्पिर्दधिपायसादि।**
**मुक्तिं करस्थां किल ता वितेनुः पुंस्त्वेन किं पूरुषमौलिभाजाम् ॥५३॥**

---

१ दृष्ट्वा स्त्रीणां भगवति कृष्णे भक्तिमलौकिकीम्।
आत्मानं च तया हीनमनुतप्ता व्यगर्हयन् ॥
धिग् जन्म नस्तु धिग् बुद्धिं धिग् वृत्तं धिग् बहुज्ञताम्।
धिक् कुलं धिक्क्रियादाक्ष्यं विमुखा ये त्वधोक्षजे ॥
नूनं भगवतो माया मायिनामपि मोहिनी।
यद्वयं गुरवो नृणां स्वार्थे मुह्यामहे द्विजाः ॥
अहो पश्यत नारीणामपि कृष्णे जगद्गुरौ।
दुरन्तभावं यश्छिन्द्यान्मृत्युपाशान् गृहाभिधान् ॥
नासां द्विजातिसंस्कारो न निवासो गुरावपि।
न तपो नात्ममीमांसा न शौचं न क्रियाः शुभाः ॥
अथापि ह्युत्तमश्लोके कृष्णे योगेश्वरेश्वरे।
भक्तिर्दृढा न चास्माकं संस्कारादिमतामपि ॥ - भागवते (१०/२१/३८-४३)
कृष्णं कदाचिदतिदूरगतं वयस्या ऊचुः क्षुधार्दिततरा वयमित्युदारम्।
सोऽप्याह सत्रमिह विप्रगणाश्चरन्ति तान् याचतेति परिपूर्णसमस्तकामः ॥
तान् प्राप्य काममनवाप्य पुनश्च गोपाः कृष्णं समापुरथ तानवदत् स देवः।
पत्नीः समर्थयत मद्वचनादिति स्म चक्रुश्च ते तदपि ता भगवन्तमापुः ॥
ताः षड्विधान्नपरिपूर्णकराः समेताः प्राप्ता विसृज्य पतिपुत्रसमस्तबन्धून्।
आत्मार्चनैकपरमा विससर्ज कृष्ण एका पतिप्रविधृता पदमाप विष्णोः ॥
भुक्त्वाऽथ गोपसहितो भगवांस्तदन्नं रेमे च गोकुलमवाप्य समस्तनाथः।
आज्ञातिलङ्घनकृतेः स्वकृतापराधात् पश्चात् सुतप्तमनसोऽप्यभवन् स्म विप्राः ॥
-म.भा.ता.नि.(१३/५८-६१)

**व्या :** विप्राङ्गना इति । **विप्राङ्गना** ब्राह्मणपत्न्यः । **प्रहृष्टाः** कृष्णायान्नं देयमिति वाक्यं श्रुत्वा सन्तुष्टाः सत्यः । [1]**स्वप्रभवे** स्वनाथाय श्रीकृष्णाय । 'नाथः परिवृढः प्रभुः' इति धनञ्जयः । **सर्पिर्दधिपायसादि** घृतदधिपरमान्नभक्ष्यादि **प्रत्यर्प्य** समर्प्य **मुक्तिं** मोक्षं **करस्थां** हस्तस्थितां **वितेनुः** कृतवत्यः **किल** । ननु स्त्रीणां कथं मोक्ष इत्यत आह – **पुंस्त्वेति** । **पूरुषमौलिभाजां** पुरुषोत्तमभक्तानां **पुंस्त्वेन** पुरुषत्वेन **किं** प्रयोजनम् । मुक्तौ पुंस्त्वं न प्रयोजकं हरिभक्तिरेव प्रयोजिकेत्यर्थः ॥५३॥

**स विप्रपत्न्यर्पितभक्तभुक्त्या विभुः समासक्तमना इवैन्द्रम् ।**
**अभुङ्क्त भोज्यं गतभीर्गिरीन्द्रवपुः स्वकीयार्पितमप्रतीतः ॥५४॥**

**व्या : स** इति । **विभुः** समर्थः । अत एव **गतभीः** निर्गतेन्द्रभयः । [2]**गिरीन्द्रः** पर्वतश्रेष्ठ इव **वपुर्यस्य स** तथोक्तः । **अप्रतीतः** अदृश्यः **स** कृष्णः । **विप्रपत्न्यर्पितं** यद्भक्तमन्नं तस्य **भुक्त्या** भोजनेन **समासक्तमनाः** संसक्तमना **इव** । [3]वैकुण्ठे प्राकृतान्नभोजनस्य कदाऽप्यसत्वेन अपूर्वरसविशेषसल्लग्नचित्त इवेत्यर्थः । **स्वकीयैः** गोपैः । **अर्पितमैन्द्रम्** इन्द्राय दीयमानं भोज्यम् **अभुङ्क्त** । इन्द्राय यागं त्याजयित्वा तदर्थं कल्पितं बलिं स्वयं जग्रासेत्यर्थः ॥ ५४ ॥

---

१ प्राणबुद्धिमनःस्वात्मदारापत्यधनादयः ।
यत्सम्पर्कात् प्रिया आसंस्ततः को न्वपरः प्रियः ॥
नासां द्विजातिसंस्कारो न निवासो गुरावपि ।
न तपो नात्ममीमांसा न शौचं न क्रियाः शुभाः ॥
- भागवते (१०/२१/२७,४२)

२ यजनान्ते तदन्नं तु तत्पयो दधि चोत्तमम् ।
मांसं च मायया कृष्णो गिरिर्भूत्वा समश्नुते ॥...
भुक्त्वा चावभृथे कृष्णः पयः पीत्वा च कामतः ।
सन्तृप्तोऽस्मीति दिव्येन रूपेण प्रजहास वै ॥
तं गोपाः पर्वताकारं दिव्यस्रगनुलेपनम् ।
गिरिं मूर्ध्नि स्थितं दृष्ट्वा कृष्णं जग्मुः प्रधानतः ॥ - हरिवंशे (१/१७/२०-२३)

३ 'औपनिषदः पुरुषः' । - इति श्रुतेः ।

**प्रदक्षिणीकृत्य गिरिं स्ववर्गैर्मुदाऽर्पितं पर्वतरूपधारी ।**
**बलिं च कृष्णः शतमन्युमन्युविवर्धनोऽसावुररीचकार ॥५५॥**

**व्या :** **प्रदक्षिणीकृत्येति** । शतं मन्यवः क्रतवो यस्य सः शतमन्युरिन्द्रः तस्य **मन्युं** कोपं विवर्धयतीति **शतमन्युमन्युविवर्धनः** । 'मन्युः क्रोधे' इति रत्नमाला । **असौ** श्रीकृष्णः । **गिरिं** गोवर्धनपर्वतम् । **प्रदक्षिणीकृत्य पर्वतरूपधारी** सन् । **स्ववर्गैः** स्वात्मीयैः । **मुदा** सन्तोषेण । **अर्पितं बलिं** पूजोपहारम् । **उररीचकार**ाङ्गीकृतवान् । उपेन्द्ररूपेण अस्मत्पक्षपाती कृष्णः । 'बलिः पूजोपहारे च करे दैत्यान्तरेऽपि च' इत्यभिधानात् । इदानीमस्मद्विरोधिनं बल्याख्यदैत्यमङ्गीकरोति पर्वतं च मानयतीति शतमन्योः कोपाभिवृद्धिजननाय तावङ्गीचकारेति ध्वनितोऽर्थः ॥ ५५ ॥

**सहस्रनेत्रोऽपि स कृष्णसत्त्वं मनागविज्ञाय दिदेश मेघान् ।**
**प्रवर्षणार्थं निगमैकवेद्ये किमक्षिबाहुल्यमुपैति कृत्यम्[१] ॥५६॥**

**व्या :** **सहस्रनेत्र** इति । **स** इन्द्रः **सहस्राणि नेत्राणि** यस्य स तथोक्तोऽपि दर्शने बहुसाधनवानपीत्यर्थः । श्रीकृष्णस्य **सत्त्वं** सामर्थ्यं **मनाक्** स्वल्पम् । अविज्ञाय अज्ञात्वा । **प्रवर्षणार्थं** प्रकृष्टवृष्ट्यर्थं **मेघान् दिदेश** आज्ञापयामास । तथाहि । **निगमैकवेद्ये** वेदैकबोध्ये श्रीकृष्णे । **अक्षिबाहुल्यं** नेत्रबहुत्वं **किं कृत्यं** किं प्रयोजन**मुपैति** । **किमपि** नोपैतीत्यर्थः । 'नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति' इति श्रुतेः । लोचनाविषये वस्तुनि लोचनबाहुल्यमप्रयोजकमिति भावः ॥५६॥

**शतक्रतौ वर्षति वासुदेवो गिरिं समुद्धृत्य बभूव तूष्णीम् ।**
**जिहीर्षुभिः स्वासमशत्रुशौर्यं तदाद्यवैर्युद्धरणं हि कार्यम् ॥५७॥**

---

१ नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति तस्मादाहुर्वेदा इति ।
-इति विष्णुतत्त्वविनिर्णयोद्धृत पिप्पलादश्रुतिः

**व्या :** शतक्रताविति । **वासुदेवः** श्रीकृष्णः । **शतक्रतौ** इन्द्रे **वर्षति** सति । **गिरिं** गोवर्धनं [१]**समुद्धृत्य तूष्णीं बभूव** । एतद्युक्तमित्याह – **जिहीर्षुभिरिति। स्वासमशत्रुशौर्यं** स्वासदृशवैरिसामर्थ्यं **जिहीर्षुभिः** परिहर्तुमिच्छुभिः **तदाद्यवैर्युद्धरणं** तस्य शत्रोराद्यः प्राथमिको यो वैरी तस्योद्धरणं धनादिदानेनोन्नमनं

---

१ देवे वर्षति यज्ञविप्लवरुषा वज्राश्मवर्षानिलैः
सीदद्बालपशु स्त्रियाऽऽत्मशरणं दृष्ट्वाऽनुकम्प्युत्स्मयः ।
उत्पाट्यैककरेण शैलमबलो लीलोच्छिलीन्ध्रं यथा
बिभ्रद् गोष्ठमपान्महेन्द्रमदभित् प्रीयान्न इन्द्रो गवाम् ॥ - भागवते (१०/२४/२५)
कृष्णोऽथ वीक्ष्य पुरुहूतमहप्रयत्नं गोपान् न्यवारयदविस्मरणाय तस्य ।
मा मानुषोऽयमिति मामवगच्छतात् स इत्यव्ययोऽस्य विदधे महभङ्गमीशः ॥
गोपांश्च तान् गिरिमहोऽस्मदुरुस्वधर्म इत्युक्तिसच्छलत आत्ममहेऽवतार्य ।
भूत्वाऽतिविस्तृततनुर्बुभुजे बलिं स नानाविधान्नरसपानगुणैः सहैव ॥
इन्द्रोऽथ विस्मृतरथाङ्गधरावतारो मेघान् समादिशदुरूदकपूगवृष्ट्यै ।
ते प्रेरिताः सकलगोकुलनाशनाय धारा वितेरुरुरुनागकरप्रकाराः ॥
ताभिर्निपीडितमुदीक्ष्य स कञ्जनाभः सर्वं व्रजं गिरिवरं प्रसभं दधार ।
वामेन कञ्जदलकोमलपाणिनैव तत्राखिलाः प्रविविशुः पशुपाः स्वगोभिः ॥
वृष्ट्वोरुवार्यथ निरन्तरसप्तरात्रं त्रातं समीक्ष्य हरिणा व्रजमश्रमेण ।
शक्रोऽनुसंस्मृतसुरप्रवरावतारः पादाम्बुजं यदुपतेः शरणं जगाम ॥
तुष्टाव चैनमुरुवेदशिरोगताभिर्गीर्भिः सदाऽगणितपूर्णगुणार्णवं तम् ।
गोभृद्गुरुं हरगुरोरपि गोगणेन युक्तः सहस्रगुरगाधगुमग्र्यमग्र्यात् ॥
त्वत्तो जगत् सकलमाविरभूदगण्यधाम्नस्त्वमेव परिपासि समस्तमन्ते ।
अस्ति त्वयैव जगतोऽस्य हि बन्धमोक्षौ न त्वत्समोऽस्ति कुहचित् परिपूर्णशक्ते ॥
क्षन्तव्यमेव भवता मम बाल्यमीश त्वत्संश्रयोऽस्मि हि सदेत्यभिवन्दितोऽजः ।
क्षान्तं सदैव भवतस्तव शिक्षणाय पूजापहारविधिरित्यवदद्रमेशः ॥
गोविन्दमेनमभिषिच्य स गोगणेशो गोभिर्जगाम गुणपूर्णममुं प्रणम्य ।
गोपैर्गिराम्पतिरपि प्रणतोऽभिगम्य गोवर्धनोद्धरणसङ्गतसंशयैः सः ॥
कृष्णं ततःप्रभृति गोपगणा व्यजानन् नारायणोऽयमिति गर्गवचश्च नन्दात् ।
नारायणस्य सम इत्युदितं निशम्य पूजां च चक्रुरधिकामरविन्दनेत्रे ॥
- म.भा.ता.नि. (१३/६२-७१)

कार्यं हि । नाल्पशत्रुर्महाशूरेण गन्तव्य इति महाशूरस्य श्रीकृष्णस्य अल्पसुरेन्द्रं प्रति गमनादेर्हीनत्वात् । इन्द्रस्य [1]शत्रुं पर्वतं समुद्धृत्य तूर्ष्णीभावो युक्त एवेत्यर्थः ॥५७॥

**मयीश्वरे भूभृति जागरूके स्वयं च भूभृत् किल बुद्धिशून्यः ।**
**स इत्यमर्षादिव भूधरेन्द्रं करेण भूमेरुदबीभिदत् तम् ॥ ५८ ॥**

**व्या :** मयीति । स कृष्णः । ईश्वरे समर्थे **मयि भूभृति** कूर्मादिरूपेण भूधारिणि **जागरूके** सति जाग्रति सति । **बुद्धिशून्यः** विवेकरहितः गोवर्धनपर्वतः **स्वयं च भूभृत् किल** । किलेत्यस्वरसे । यदि त्वमपि भूभृत् तर्हि त्वदुन्मूलने भूमेः पातः स्यादित्यमर्षादिव कोपादिव । **भूधरेन्द्रं** पर्वतश्रेष्ठं तं गोवर्धनम् । **करेण** हस्तेन । **भूमेः** सकाशात् उदवीभिदत् भेदयामास ॥ ५८ ॥

**रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि**
**प्रेम्णा चिन्तयतां विचित्रविमलश्लाघ्यार्थसन्दायिनि ।**
**सञ्जाते भुवि रुग्मिणीशविजये सद्वादिराजोदिते**
**सञ्जातः सुरमण्डलीषु महितः सर्गो मुदां पञ्चमः ॥ ५९ ॥**

**॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थश्रीचरणविरचिते श्रीरुग्मिणीशविजये महाकाव्ये पञ्चमः सर्गः ॥५॥**

**व्या :** रोम्णामिति । व्याख्यातमेतत् ॥ ५९ ॥

**॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थश्रीचरण-विरचितस्य श्रीरुग्मिणीशविजयमहाकाव्यस्य व्याख्यायां श्रीनारायण-भट्टविरचितायां श्रीगुरुभावप्रकाशिकायां पञ्चमः सर्गः ॥**

*****

---

१ यः पर्वतान् प्रकुपितानरम्णात् । - ऋग्वेदे (२/१२/२)
श्यालो हरस्य गिरिपक्षविनाशकाले ... -म.भा.ता.नि(७/२)
इन्द्रायुधं हीन्द्रकराभिनुन्नं चिच्छेद पक्षान् क्षितिधारिणां प्राक् ।-मध्वविजये (१/२९)

## षष्ठः सर्गः

**महेन्द्रविज्ञप्तघनालिमुक्तपयःप्रवाहावृतभिन्नभागम् ।**
**मुकुन्दहस्तोद्धृतमद्रिराजमनुद्धृतं तं मनुजा व्यजानन् ॥ १ ॥**

**व्या :** खर्वीकृतसुपर्वेशगर्वसर्वस्वपावकः ।
उर्वीतापहरः कृष्णवार्वाहः स्यान्मुदे मम ॥

**महेन्द्रेति** । **मनुजाः** गोपाः । **महेन्द्रेण** देवेन्द्रेण **विज्ञप्ता**नां प्रेरितानां **घनानाम्** मेघानाम् **आलिभिः** समूहैः **मुक्तस्य पयसो** जलस्य **प्रवाहेण आवृत** आच्छन्नः **भिन्नभागो** उन्मूलितप्रदेशो यस्य तम् । **मुकुन्दहस्तेन उद्धृतम्** उन्मूल्य धृतमपि । **तमद्रिराजं** गोवर्धनम् **अनुद्धृतम्** अनुन्मूलितं **व्यजानन्** विदुः । वृष्टिबाहुल्या-दविच्छिन्नपयःप्रवाहैः खण्डद्वयान्तरस्याच्छादनादिति भावः । **भ्रान्तिरलङ्कारः** । 'भ्रान्तिर्विपर्ययज्ञानम्' इत्युक्तत्वादिति ॥ १ ॥

**वर्षासु वर्षसहतामधिगम्य वार्षु तप्तुं तपः कृतपदस्य पदं प्रपेदे ।**
**शर्मान्यजन्मनि सिषाधयिषोर्महीध्रो हृन्मध्यलब्धपरमस्य तदोपमायाः २**

**व्या : वर्षास्विति** । **महीध्रः** पर्वतः । **तदा** वर्षणकाले । **वर्षासु** वर्षाकालेषु । 'स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षाः' इत्यमरः । **वर्षसहतां** वृष्टिसहिष्णुताम् । वृष्टिर्वर्षमित्यमरः । **अधिगम्य** प्राप्य **वार्षु** जलेषु । 'वार्वारि सलिलं जलम्' इत्यमरः । **तपः तप्तुं कृतपदस्य** । कृतं पदं स्थानं येन सः तथा तस्य । **अन्यजन्मनि** जन्मान्तरे **शर्म** सुखं **सिसाधयिषोः** साधयितुमिच्छोः **हृन्मध्यलब्धपरमस्य** हृन्मध्यगतपरमपुरुषस्य परमात्मध्यानयुक्तस्येत्यर्थः । एतादृशस्य कस्यचिदृषेः उपमायाः सादृश्यस्य पदं स्थानं **प्रपेदे** । जलमध्यस्थितत्वात् शिरसि पतद्वृष्टित्वात् स्वान्तर्गतकृष्णत्वाच्चेति भावः । **उपमालङ्कारः** ॥ २ ॥

**अन्तः कृपाविपुलधारविलोचनश्री-**
**कान्ताख्यमेघविभवेक्षणलोलनेत्रैः ।**

**सन्तोषहेतुषु गुहासु गतैः स सत्त्वैः**
**क्रान्तो बहिश्च घनदर्शिभिरद्रिरासीत् ॥ ३ ॥**

**व्या :** अन्तरिति। **सः अद्रिः** गोवर्धनपर्वतः कृपाविपुलधारे दयाख्यनिबिडजलधारे **विलोचने** यस्य श्रीकान्ताख्यमेघस्य कृष्णाख्यमेघस्य। **विभवेक्षणे** सम्पद्दर्शने। **लोलानि** सतृष्णानि **नेत्राणि** येषां तैः। **सत्त्वैः** गोगोपादिप्राणिभिः **अन्तः बहिश्च घनदर्शिभिः** मेघदर्शिभिः **सन्तोषहेतुषु** वृष्टिभयाभावात् सन्तोषकारणीभूतासु **गुहासु गतैः** स्थितैः सत्त्वैर्मृगादिभिः **क्रान्तः** पूर्णः **आसीत्**। पर्वतान्तर्बहिस्थितानामुभयेषां धाराधरेक्षणं तुल्यमासीदिति भावः ॥ ३ ॥

**सुवर्णशृङ्गैः कलशोपमानैर्मृगादिभिः कृत्रिमसन्निभैश्च।**
**गुहोल्लसद्द्वारगणैः समन्ताद्वृतो गिरिर्गोपुरतीव विष्णोः ॥४॥**

**व्या :** सुवर्णशृङ्गैरिति। कलशा एव उपमानम् येषां तानि तैः **सुवर्णशृङ्गैः** हेमशिखरैः। 'कूटोऽस्त्री शिखरं शृङ्गम्' इत्यमरः॥ **कृत्रिमसन्निभैः** शीतभयात् निश्चलाङ्गत्वेन कृत्रिमप्रतिमासदृशैः **मृगादिभिः**। **समन्तात्** चतुर्दिक्षु **गुहोल्लसद्द्वारगणैः** गुहाख्यशोभमानद्वारसमूहैश्च **वृतः** युक्तो **गिरिः** पर्वतः। **विष्णोः** स्वान्तस्थितस्य **गोपुरतीव** 'उपमानादाचारे'[1] इति गोपुरशब्दात् क्विप्। 'सनाद्यन्ताधातवः'[2] इति धातुसञ्ज्ञायां बादयः। प्रासादतीव। प्रासादविशेषवद्भातीत्यर्थः। गोपुरस्यापि सुवर्णकलशोपेतत्वात् चित्रलिखितमृगादियुक्तत्वाच्चतुर्दिक्षु द्वारसमेतत्वाच्चेति भावः ॥४॥

**बभौ समुत्तुङ्गनगं दधानः स भाविमल्लेन्द्रजयोपयोगि।**
**तदीयविद्याभ्यसनं विधातुं शिलोच्चयं बिभ्रदिवाभ्रलग्नम् ॥५॥**

---

१ पा.सू. ३/१/१०
२ पा.सू. ३/१/३२

**व्या : बभाविति । समुत्तुङ्गनगम्** अत्युच्छ्रितपर्वतं **दधानः स** कृष्णः **भाविनि** भविष्यति **मल्लेन्द्रस्य** मल्लश्रेष्ठस्य चाणूरस्य **जये उपयोगि** उपयुक्तं **तदीयाया:** मल्लेन्द्रसम्बन्धिन्याः **विद्यायाः** । 'पुंवत्कर्मधारय...' इत्यादिना[१] पुंवद्भावः । **अभ्यसनम्** अभ्यासं **विधातुं** मल्लविद्याभ्यासं कर्तुम् । **अभ्रलग्नं** गगनचुम्बि **शिलोच्चयं** शिलासमूहं **बिभ्रदिव बभौ** । मल्ला हि स्वविद्याभ्याससमये शिलाभारं हस्तेनोद्धृत्य इतस्ततश्चालयन्ति तथेति भावः । अन्यथा पर्वतधारणे प्रयोजनाभावात् गोपादिरक्षणस्य प्रकारान्तरेणापि सम्भवादिति भावः ॥ ५ ॥

**कृष्णधृतः सुरविस्मयकारी विस्तृतपुष्करमध्यगतार्द्रः ।**
**सिन्धुकबन्धसमुद्धृतभास्वन्मन्दरकान्तिमचूचुरदद्रिः ॥ ६ ॥**

**व्या : कृष्णधृत** इति । कृष्णेन धृतः । सुराणां देवानां **विस्मय**माश्चर्यं **करो**तीति तथोक्तः । **विस्तृत**स्य **पुष्कर**स्य जलस्य **मध्यं गतः** । 'कबन्धमुदकं पाथः पुष्करं सर्वतोमुखम्' इत्यमरः । अत एवा**र्द्रः** क्लिन्नः **अद्रिः सिन्धोः** समुद्रस्य **कबन्धा**दुदकात् **समुद्धृत**स्य **भास्वन्मन्दर**स्य लसन्मन्दरपर्वतस्य **कान्तिं** शोभाम**चूचुरत्** चोरितवान् । चुर स्तेये लुङ् । मन्दरोऽपि श्रीकृष्णेन कूर्मरूपेण नारायणेन धृतः । स्पष्टमन्यत् । **पूर्णोपमा** । **दोधकवृत्तम्** । दोधकवृत्तमिदं भभभाद्गौ ॥६॥

**अनुचक्रेऽम्भसाश्चक्रे लसता तेन भूभृता ।**
**तितीर्षोर्व्रजवर्गस्य शमितोपप्लवः प्लवः ॥ ७ ॥**

**व्या : अनुचक्र** इति । **अम्भसां** जलानां **चक्रे** समूहे **लसता** प्रकाशमानेन **भूभृता** महीधरेण **तितीर्षो**स्तर्तुमिच्छोः वृष्टिजन्यभयाब्धिमिति शेषः । 'नादृश्यत नगोन्नतिम्' इति वचनात् । स्वपरितः स्थितागाधसमुद्रोपमजलं वा तितीर्षोरित्यर्थः। **व्रजवर्गस्य** गोष्ठसमूहस्य **शमितो** नाशितः **उपप्लवः**

---

१ पुंवत्कर्मधारयजातीयदेशीयेषु । - पा.सू. ६/४/४२

वृष्ट्यातपादिबाधो येन स तथोक्तः । वर्षाकाले वृष्टिनिवारणाय स्वोपरि नारिकेलपत्रादिना अद्रिशृङ्गवत् कृतगृह इत्यर्थः । **प्लवः** तरी । 'उडुपं तु प्लवः कोलः' इत्यमरः । **अनुचक्रे** अनुकृतः । **उपमालङ्कारः** ॥ ७ ॥

**खगान् सवृष्टेर्द्रुमकोटरेषु मृगान् जुगोप स्वगुहागृहेषु ।**
**मुनीन् घनात्युच्छ्रितमेखलासु विपत्सु कः स्वीयमुपेक्षतेऽग्र्यः ॥८॥**

**व्या : खगानिति** । स भूधरः **खगान्** पक्षिणः । **द्रुमकोटरेषु मृगान्** कृष्णसारादीन् । **स्वगुहागृहेषु** स्वगुहाख्यालयेषु मुनींस्तपस्तप्तुं समागतान् ऋषीन् । **घनेभ्यः** मेघेभ्यः । **अत्युच्छ्रिताः मेखलाः** अधित्यकाः **तासु** निधाय । **वृष्टेः** सकाशा**ज्जुगोप** ररक्ष । युक्तमेतदित्याह – **विपत्स्विति** । **विपत्सु स्वीय**माश्रितं **को** वा **अग्र्यः** आर्य **उपेक्षते** । स्वाश्रितपरिपालनमग्र्याणां सहजमित्यर्थः ॥८॥

**प्रसूनकोशैर्घनवर्षपातनिपातितैरङ्कितसर्वगात्रः**[1] **।**
**मुकुन्दहस्ताम्बुजसङ्गसौख्यप्रहृष्टरोमालिरिवाद्रिरास्ते ॥ ९ ॥**

**व्या : प्रसूनेति** । **घनवर्षपातेन** निबिडवृष्टिपातेन **निपातितैः प्रसूनकोशैः** कुसुमकुड्मलैः । 'कोशोऽस्त्री कुड्मले दिव्ये शास्त्रार्थौघे गृहे तथा' इति यादवः । **अङ्कितं** भूषितं **सर्वगात्रं** सर्वावयवो यस्य स तथोक्तः । **'अङ्कितभृङ्गजालः'** इति पाठे स्पष्टोऽर्थः । अद्रिः पर्वतः **मुकुन्दस्य** श्रीकृष्णस्य । **हस्ताम्बुजसङ्गेन** करकमलसम्बन्धेन जातं यत्**सौख्यं** सुखं तेन **प्रहृष्टा** उद्गता **रोमालिः** रोमराजिः यस्य स **इवास्ते** ॥ ९ ॥

**स भूधरः साशनिवर्षपातसमाहतोऽप्यण्वपि नो चकम्पे ।**
**तथाहि गोब्राह्मणरक्षकस्य क्व कृष्णदोर्दण्डधृतस्य कम्पः ॥१०॥**

**व्या : स** इति । **सः भूधरो** गोवर्धनः । अशनिना सहितं **साशनि** तच्च तत् **वर्षं** च तस्य **पातेन** वज्रनिर्घोषसहितवृष्टिपातेन । **समाहतोऽपि** पीडितोऽपि । **अण्वपि**

---

१ प्रसूनकोशैर्घनवर्षपातनिपातितैरङ्कितभृङ्गजालः । - इति पा.

किञ्चिदपि। **नो चकम्पे** कम्पं न प्राप। **तथाहि** तद्युक्तं हि। **गोब्राह्म-णरक्षकस्य** श्रीकृष्णस्य **दोर्दण्डेन** भुजदण्डेन **धृतस्यास्य** पर्वतस्य **कम्पः क्व**। गोविप्रपूजकस्य श्रीहरिभक्तस्य किमपि [१]भयं न भवतीति भावः ॥ १० ॥

**पयःश्रितस्वप्रतिबिम्बलोलं पततप्रसूनाञ्चितशृङ्गजालम्।**
**स्वकुक्षिमध्यार्पितनन्दबालं जनोऽद्भुतं सम्पुटमाशशङ्के ॥११॥**

**व्या : पयःश्रितेति।** पयसि जले **श्रितम्** आश्रितं यत् **स्वप्रतिबिम्बं** स्वच्छाया तेन **लोलं** मनोहरम्। सम्पुटत्वोपपादनायेदम्। प्रतिफलनस्य वैपरीत्येन जायमानत्वात् प्रतिबिम्बस्य सम्पुटपूर्वार्धता उपरिस्थितबिम्बभूतस्य पर्वतस्य उत्तरार्धतेति सम्पुटत्वमुपपद्यत इति भावः। वृष्टिपातवशात् **पतन्ति प्रसूनानि** तैरञ्चितं पूजितं **शृङ्गजालं** शिखरसमूहो यस्य तम्। **स्वकुक्षिमध्ये** स्वोदरमध्ये **अर्पितः** स्थापितः **नन्दबालः** श्रीकृष्णो येन तं पर्वतम्। **जनो** लोकः **अद्भुतम्** आश्चर्यं **सम्पुटं** देवस्थापनयोग्यकरण्डिकाविशेष**माशशङ्के** अतर्कयत्॥ ११ ॥

**त्रिविष्टपाभ्रप्रतिरूपधारी स पर्वतः स्फाटिकतुङ्गशृङ्गे।**
**हरेर्निदेशादपराधिशक्रघनालयौ तौ ग्रसतीव लोकौ ॥१२॥**

**व्या : त्रिविष्टपेति। स्फाटिकतुङ्गशृङ्गे** स्फटिकमयोच्चशिखरे। **त्रिविष्टपस्य** स्वर्गस्य **अभ्रस्य** आकाशस्य च **प्रतिरूपं** प्रतिबिम्बं धरतीति **त्रिविष्टपाभ्रप्रतिरूपधारी। सः पर्वतः हरेः** श्रीकृष्णस्य **निदेशाद**नुशासनात् **अपराधिनोः शक्रघनयोः** इन्द्रमेघयोः **आलयौ** आश्रयौ **तौ** त्रिविष्टपाभ्राख्यौ **लोकौ। ग्रसतीव** कवलीकरोतीव ॥

**स पर्यटत्कुञ्जरपुञ्जशोभं धरं यदा श्रीपतिरुद्दधार।**
**तदा समस्यां परिपूरयन्ति शिशोः करे हस्तिसहस्रमस्ति ॥१३॥**

---

१ अभयं सत्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम्॥ - गीता(१६/१)

**व्या : स** इति । **सः** श्रीपतिः श्रीकृष्णः । **पर्यटतां कुञ्जराणां** गजानां **पुञ्जस्य शोभा** कान्तिर्यस्य तम् । अनेन वृष्ट्युपरमः सूच्यते । **धरं** पर्वतं **यदा उद्धधार** हस्तेनोद्धृतवान् । **तदा** तस्मिन् काले । **कवयः शिशोर्बालस्य करे** हस्ते **हस्तिसहस्रं** गजसहस्रमस्ति तिष्ठतीति **समस्यां परिपूरयन्ति** । कवीनां **''शिशोः करे हस्तिसहस्रमस्ति''** इति [१]विषमसमस्यापूरणस्यावकाशो जात इत्यर्थः ॥ १३ ॥

**स भासुरश्रीशकपोललग्ननखोल्लसद्रत्नकराग्रसंस्थः ।**
**बिभर्ति कूर्माश्रितनागराजफणास्थपृथ्वीश्रियमद्रिराजः ॥१४॥**

**व्या : स** इति । **स अद्रिराजः** पर्वतश्रेष्ठो गोवर्धनः । **भासुरे** मनोहरे **श्रीशस्य** श्रीकृष्णस्य **कपोले** गण्डस्थले **लग्नः** सम्बद्धः स चासौ **नखोल्लसद्रत्नकरश्च** तस्याग्रे **सन्तिष्ठतीति** तथोक्तः । नखाख्योल्लसद्रत्नयुक्तहस्ताग्रसंस्थः सन्नित्यर्थः। **कूर्माश्रितस्य** [२]**नागराजस्य** शेषस्य **फणास्था** [३]फणाश्रिता या **पृथ्वी** तस्याः

---

१ क्वचित् पृथिव्यां परितश्चरन्ती नभःस्थलं चापि मुहुर्व्रजन्ती ।
विपक्षविध्वंसविधौ स्फुरन्ती **कात्यायनी कन्दुकवद्विभाति** ॥
- इति तीर्थप्रबन्धे (१/५७)

**समस्यापूरकमिदं पद्यम्** । - इति तद्व्याख्याने

२ अथो हनूमानुरगेन्द्रभोगसमं **स्वबाहुं** ... - इति म.भा.ता.नि. (८/७७)
**भुजगभोगाभमुद्यम्य** हृद्यं निजभुजं दक्षिणं लक्षणाढ्यम् ।
ललितमुद्रिक्तविज्ञानमुद्रं भज भजानन्तमित्यालपन्तम् ॥ - इति श्रीपूर्णबोधस्तोत्रे

३ सहस्रमूर्ध्नोऽस्य बतैकमूर्धनि ससप्तपातालगिरीन्द्रसागरा ।
धराऽखिलेयं ननु सर्षपायति प्रसह्य को नाम हरेत् तमेनम् ॥
- म.भा.ता.नि.(८/८८)

कूर्मो वृहदण्डवोढा - म.भा.ता.नि. (३/४४)
'बिभर्त्यण्डं हरिः कूर्मस्त्वण्डे चाप्युदकं महत् ।
उदके कूर्मरूपस्य वायुः पुच्छं समाश्रितः ।

श्रियं बिभर्ति । पर्वतोद्धरणसमये फणासदृशहस्ताग्रयुक्तबाहुमूलस्य कूर्मसदृश-कपोलसङ्गतत्वाद्बाहोः कूर्माश्रितशेषोपमा ।।१४।।

**उद्गच्छदूष्मावलिधूमलिङ्गमद्रिं द्रवद्धातुरसार्द्रशृङ्गम् ।**
**विष्वक्पतद्रत्नचयस्फुलिङ्गमग्न्यस्त्रमीशाचरितं प्रतर्के ।।१५।।**

**व्या :** उद्गच्छदिति । उद्गच्छदूष्मणाम् आविर्भवद्बाष्पाणाम् । 'ग्रीष्मोष्णबाष्पा ऊष्माणः' इति रत्नमाला । **आवलिरेव** राजिरेव **धूमः** स एव **लिङ्गं** चिह्नं यस्य तम् । अग्नेर्धूमध्वजत्वादिति भावः । **द्रवद्धातूनां** निष्पन्दद्गैरिकाणां **रसेन** जलेन । 'धातुः स्वर्णे कफादौ च गैरिकाश्मविकारयोः' इति धनञ्जयः । **आर्द्राणि** क्लिन्नानि **शृङ्गाणि** सानूनि यस्य तम् । 'शृङ्गं प्राधान्यसान्वोः' इत्यमरः । रक्तधातुरसार्द्रत्वेन अङ्गारसदृशशृङ्गवन्तमिति भावः । **विष्वक्** समन्तात् **पततां रत्नानां चयः** समूहः स एव **स्फुलिङ्गो** अग्निकणो यस्य तम् । **अद्रिं** पर्वतम् । **ईशेन** कृष्णेन **आचरितं** वृष्टिशान्त्यै प्रयुक्तं **अग्न्यस्त्रं** अग्निदेवताकं बाणं **प्रतर्के** । **उत्प्रेक्षालङ्कारः** । बाष्पादीनां धूमादित्वनिरूपणाददिः अग्न्यस्त्ररूपेण सङ्कीर्त्यते । अनेन वृष्टिः सर्वथा गतेति ध्वन्यते ।। १५ ।।

**अद्रिस्तं घनमिन्द्रनीलधरणीकान्त्या शिखण्डश्रिया**
**तस्याखण्डलचापमम्बुनिचयं मुक्ताफलानां रुचा ।**
**सौवर्णस्थलशोभया च तटितं पञ्चास्यनादेन त-**
**न्नादं साधु जिगाय किं न सुकरं नित्यं क्षमाधारिणः ।। १६ ।।**

---

वायोः पुच्छं समाश्रित्य शेषस्तु पृथिवीमिमाम् ।
बिभर्ति तस्यां च जगदिदं सर्वं प्रतिष्ठितम्' इति वैभवे । - इति बृहद्भाष्ये
स एष कूर्मरूपेण वायुरण्डोदके स्थितः ।
विष्णुना कूर्मरूपेण धारितोऽनन्तधारकः । ...' इति प्रभञ्जने । - इति बृहद्भाष्ये

**व्या : अद्रिरिति।** **अद्रिः** पर्वतः। **इन्द्रनीलधरिणीकान्त्या तं घनं शिखण्डश्रिया** पिच्छकान्त्या। 'पिच्छबर्हे नपुंसके' इत्यमरः। **तस्य** मेघस्य। **आखण्डलचापम्** इन्द्रचापम्। **मुक्ताफलानां रुचा**। वृष्ट्या क्षालितत्वादुद्गच्छन्मौक्तिककान्त्या **अम्बुनिचयं** जलसमूहम्। **सौवर्णस्थलशोभया** सुवर्णभूप्रदेशकान्त्या अस्य मेघस्य **तटितं** सौदामिनीं **पञ्चास्यनादेन** सिंहध्वनिना। 'सिंहो मृगेन्द्रः पञ्चास्यः' इत्यमरः। **तन्नादं** तस्य मेघस्य ध्वनिं **च**। **साधु** सम्य**ग्जिगाय** अजयत्। अद्रिस्थनीलरत्नादिकान्त्या आविर्भूतमेघनैल्यादिकं नष्टमिति यावत्। वृष्टिः सर्वथा गतेति भावः। तद्युक्तमित्याह। **नित्यम्** अनवरतम्। [1]**क्षमाधारिणः** भूधरस्य तितिक्षावत इति ध्वनिः। 'क्षमा क्षोण्यां तितिक्षायाम्' इति भास्करः। **किं न सुकरम्**। 'क्षमया किं न साध्यते' इति वचनात् सर्वं सुकरमित्यर्थः। **इन्द्रनीलधरिणीकान्त्ये**त्यादिना उपमायाः **जिगाये**ति क्रियापदस्य प्रत्येकं सम्बन्धाद्दीपकस्य **क्षमाधारिण** इति श्लिष्टस्य च **किं न सुकर**मित्यर्थान्तरन्यासस्य च गम्यमानत्वादेतेषां **सङ्करोऽलङ्कारः** ॥१६॥

**निर्गत्य पश्यताटोपः किमद्याप्यस्ति वार्मुचाम्।**
**इत्युक्तः[2] कोऽपि गोपस्तद्विदित्वा वक्ति माधवम्॥ १७॥**

**व्या : निर्गत्येति।** हे गोपाः **वार्मुचां** जलदानां **आटोपः** आडम्बरः **अद्यापि** अधुनाऽपि **अस्ति किम्? निर्गत्य** बहिर्गत्वा **पश्यत** इति कृष्णेनोक्तः **कोऽपि** कश्चन **गोपः तद्विदित्वा** बहिर्निर्गत्य तत् मेघवृत्तान्तं ज्ञात्वा पुनरागत्य **माधवं** श्रीकृष्णं **वक्ति** वदति॥ १७॥

---

१ कर्ता च सर्वजगतः सुखदुःखयोर्हि नारायणस्तदनुदत्तमिहास्य सर्वम्।
तस्मान्न कोपविषयोऽस्ति कुतश्च कश्चित् तस्मात् क्षमैव सकलेषु परोऽस्य धर्मः॥
-म.भा.ता.नि.(२२/६८)

२ खं व्यभ्रमुदितादित्यं वातवर्षं च दारुणम्।
निशाम्योपरतं गोपान् गोवर्धनधरोऽब्रवीत्॥ - भागवते (१०/२३/२५)

**धारा नैव पयोमुचां यदुपते प्रेमाश्रुधारा परं**
**स्वानां नापि च गर्जितं स्तुतिकृतां सिद्धेश्वराणां ध्वनिः ।**
**विद्युन्नामरनर्तकीकरचयालङ्कारकान्तिः प्रभो**
**नो वायुः सुरवृष्टपुष्पसहगानल्पालिपक्षैर्मरुत् ॥ १८ ॥**

**व्या :** धारेति । हे **यदुपते** कृष्ण । **पयोमुचां** मेघानां **धारा** आसारः । 'धारा सम्पात आसारः' इत्यमरः । **नैव** नास्त्येव । अन्या धाराऽस्तीत्याह । **स्वानाम्** अस्मज्ज्ञातीयानाम् । 'स्वमज्ञातिधनाख्यायाम्'[१] इति ज्ञातिवाचिनः स्वशब्दस्य सर्वनामतानिषेधात् । **प्रेमाश्रुधारा** स्वरक्षार्थं त्वत्कृतगिर्युद्धरणाख्यमहाप्रयत्नदर्शनजनितस्नेहजानन्दाश्रुधारा **परं** केवलम् अस्ति । वृष्टिर्गता, तत उद्वेजितानां स्वकीयानां आनन्दो जात इति भावः । **गर्जितं** मेघनिर्घोषो **न** अस्ति। अपि किन्तु **स्तुतिकृतां** स्तोत्रं कुर्वतां **सिद्धेश्वराणां** देवश्रेष्ठानां **ध्वनि**रस्ति । पर्वतधारणाद्यद्भुतं कर्म दृष्ट्वा सिद्धेश्वराः स्तुवन्तीत्यर्थः । **विद्युत्** सौदामिनी **न** किन्त्व**मरनर्तकी**नामप्सरसां **करचये** हस्तसमूहे योऽ**लङ्कारः** रत्नखचितविभूषणं तस्य **कान्ति**रस्ति । नृत्यसमये इतस्ततो हस्तविक्षेपादलङ्कारकान्तेर्विद्युद्वच्चलनादिति भावः । तव महिमानं दृष्ट्वा अप्सरसो नृत्यन्तीत्यर्थः । **वायु**र्वातोऽपि **नो** नास्ति वर्षावातो गतः । अन्यो वातोऽस्तीत्याह । **सुरै**र्**वृष्टा**नां **पुष्पा**णां **सहगा**नाम् अनुचराणां व्यधिकरणषष्ठी । **अनल्पाली**नां बहुभ्रमराणां **पक्षैः** पक्षपातैः जातो **मरुत्** वायुरस्ति । देवैर्बहुतरपुष्पवृष्टिः कृतेत्यर्थः । मेघाटोपः सर्वोऽपि गतः स्वकीयानां देवादीनां सन्तोषो जात इतीममर्थं भङ्ग्यन्तरेण वदतो गोपस्य प्रागल्भ्यातिशयः कथं कथनीय इति भावः । **विनिमयालङ्कारः** । 'सदृशवस्तुनोस्तुल्यायव्ययत्वे विनिमयः' इत्युक्तेः ॥ १८ ॥

**नीलं नैव नभः सुलज्जितशचीभर्तुर्मुखे नीलिमा**
**मेघाः क्वापि न सन्ति किन्तु दिविजभ्राजद्विमानाम्बुदाः ।**

---
१ पा.सू. १/१/३५

**तामिस्रं नहि दिश्यथेदृशमपि त्वां मानुषं मन्वतां**
**चित्तेष्वस्ति न वेपथुर्निजजने भीतेन्द्रगात्रे परम् ॥ १९ ॥**

**व्या :** नीलमिति। हे यदुपते श्रीकृष्ण। **नभः** गगनं **नीलं नैव** निर्मुक्तजलमेघत्वान्नभसि नीलिमा नास्ति । अन्यत्रास्तीत्याह । **सुलज्जितस्य** पराभवेन सम्यगज्जायुक्तस्य **शच्या** इन्द्राण्याः **भर्तुर्देवेन्द्रस्य मुखे** वक्त्रे **नीलिमाऽस्ति** । शचीभर्तुरित्यनेन अभिमानिनां स्त्रीसमक्षं जातः पराभवो अतिलज्जाकर इति ध्वन्यते । किञ्च **मेघाः क्वापि** कुत्रापि **न सन्ति । किन्तु दिविजानां** देवानां **भ्राजद्विमानान्येव** लसत्पुष्पकाण्येवा**म्बुदाः** मेघाः सन्ति। मेघाः न सन्ति। नभस्तु इन्द्रजयादिमाहात्म्यं दृष्ट्वा कृष्णदर्शनायागतानां देवानां पुष्पकैः सङ्कुलं दृश्यत इत्यर्थः । अपि च **दिशि तामिस्रं** मेघावरणजन्यं तमो **नास्ति** । **हि**शब्दो वाक्यालङ्कारे । अथ तमोऽन्यत्रास्तीत्याह । **ईदृशमपि** महापर्वतोद्धरणेन्द्रजयसिद्धस्तुत्यत्वस्वगोकुलरक्षणाद्यमानुषगुणयुक्तमपि **त्वां मानुषं** मनुष्यमिति **मन्वतां** मूर्खाणां **चित्तेषु** हृदयेषु **तमोऽ**ज्ञान**मस्ति** । अपि च **निजजने** स्वकीयवर्गे **वेपथुः** शीतजन्यकम्पो **नास्ति परन्तु भीतेन्द्रगात्रे** कृष्णः कोपात् किं करिष्यतीति भययुक्तेन्द्रशरीरे वेपथुरस्ति। इन्द्रश्चकितो जात इत्यर्थः ॥ १९ ॥

**ततः परीतः स्वैर्गोपैर्गोपीभिर्गोधनैरपि ।**
**[1]प्रतस्थे प्रयतं गोष्ठं स्तूयमानः सुरैर्नरैः ॥ २० ॥**

**व्या :** तत इति । **ततः** वृष्टिशान्त्यनन्तरं श्रीकृष्णः । **स्वैः** स्वकीयैः । **गोपैर्गोपीभिः गो**रूप**धनैरपि** । **अपि**शब्दः समुच्चये । **परीतः** सन् । **सुरै**र्देवैः । **नरै**रपि **स्तूयमानः** सन् । **प्रयतं** स्वपादस्पर्शात् पवित्रं **गोष्ठं प्रतस्थे** ॥ २० ॥

---

१ भगवानपि तं शैलं स्वस्थाने पूर्ववत् प्रभुः ।
पश्यतां सर्वभूतानां स्थापयामास लीलया ॥ - भागवते (१०/२३/२८)
यः सप्तहायनो बालः करेणैकेन लीलया ।
कथं विभ्रद् गिरिवरं पुष्करं गजराडिव ॥ - भागवते (१०/२४/३)

**नाथापराधकृदुपेत्य सुलज्जितोऽथो**
**शक्रोऽच्युतं रहसि रम्यतमं त्रिलोक्याम् ।**
**मूर्ध्ना प्रणम्य सदयं सुधयाऽभ्यषिञ्च-**
**द्गोविन्दनाम[1] च पठन् स्वकृताघशान्त्यै ॥ २१ ॥**

**व्या : नाथेति** । **अथो** गिर्युदरान्निर्गमनानन्तरम् । **नाथस्य** स्वामिनः कृष्णस्य । अपराधं करोतीति स तथोक्तः । अत एव **सुलज्जितः शक्रः** त्रयाणां लोकानां समाहारस्त्रिलोकी । 'तद्धितार्थो...'[2] इत्यादिना समासः । 'सङ्ख्यापूर्वो द्विगुः' इति द्विगुसञ्ज्ञा । 'अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते'[3] इति स्त्रीत्वं द्विगोरिति ङीप्। तस्याम् । **रम्यतमम**तिसुन्दरं **सदयं** दयासहितं **अच्युतं** श्रीकृष्णम् । **रहस्ये**कान्ते **उपेत्य** । **स्वकृताघशान्त्यै** स्वाचरितस्वामिद्रोहलक्षणपापपरिहाराय। **मूर्ध्ना प्रणम्य** । **गोविन्दनाम च पठन्** । इन्द्रेण गोविन्दनाम न दत्तं किन्तु अच्युतानन्तगोविन्देति[4] नामत्रयपाठस्य प्रायश्चित्तविधिषु विहितत्वात् पूर्वं विद्यमानस्यैव गोविन्दनाम्नः पाठ एव कृत इति भावः । अनेन श्रीकृष्णस्य गोविन्दनामेन्द्रेण दत्तमिति[5] पुराणवचनस्य तात्पर्यमुक्तं भवति ।

---

१ गोविन्दमेनमभिषच्य स गोगणेशो गोभिर्जगाम गुणपूर्णममुं प्रणम्य ।
गोपैर्गिरांपतिरपि प्रणतोऽभिगम्य गोवर्धनोद्धरणसङ्गतसंशयैः सः ॥
-इति महाभारततात्पर्यनिर्णये (१३/७०)

२ तद्धितोत्तरपदसमाहारे च । पा.सू. २/१/५१

३ वार्तिकम्

४ अच्युतानन्तगोविन्दनामोच्चारणभेषजात् ।
नश्यन्ति सकला रोगाः सत्यं सत्यं वदाम्यहम् ॥
- इति कृष्णामृतमहार्णवे (श्लो. २०६)

५ इन्द्रः सुरर्षिभिः साकं चोदितो देवमातृभिः ।
अभ्यषिञ्चत दाशार्हं **गोविन्द** इति चाभ्यधात् ॥ - भागवते (१०/२५/२३)

**सुधया** अमृतेन । **अभ्यषिञ्चत्** अभिषेकं कृतवान् । विष्णुप्रणामाभिषेकनामोच्चारणानां महापापपरिहारहेतुत्वं विष्णुद्रोहस्य महापातकत्वं चानेन द्योत्यते ॥२१॥

**बद्ध्वा निनाय किल नन्दमकालवारि-**
**मध्यप्रविष्टमनुगः सलिलेश्वरस्य ।**
**भृत्यच्छलेन स समन्युरमुं बबन्ध**
**श्रुत्वा स्वनाथपितरं त्विति मे प्रतर्कः ॥ २२ ॥**

**व्या :** बद्ध्वेति । **सलिलेश्वरस्य** वरुणस्य । **अनुगो** भृत्यः । अकाले द्वादश्यतिलङ्घनभयात् स्नानकालव्यतिरिक्तकाले **वारिमध्यप्रविष्टं** स्नातुं जलमध्यप्रविष्टं **नन्दं** नन्दगोपं **बद्ध्वा निनाय किल** । वरुणालयमिति शेषः । **किलेत्यनेन** कथायाः [1]पौराणिकत्वमभिप्रैति । **स** वरुणः **स्वनाथस्य** स्वस्वामिनः कृष्णस्य **पितरं श्रुत्वा समन्युः** कोपसहितः सन् । नन्दगोपस्य कृष्णपितृत्वमसहमानः सन् । **भृत्यच्छलेन** भृत्यव्याजेन । स्वयमेवामुं नन्दं **बबन्धेति मे** मम तु **प्रतर्कः** ऊहः ॥२२ ॥

**कृष्णोऽपि वीक्ष्य दृढभक्तिमिव प्रतुष्टः**
**कृत्यच्छलेन निजदर्शनमेव दित्सन् ।**
**गत्वाऽम्बुराशिनिलयं जनकेन साक-**
**मभ्यर्चितः स्वभवनं पुनराजगाम ॥ २३ ॥**

---

१ एकादश्यां निराहारः समभ्यर्च्य जनार्दनम् ।
स्नातुं नन्दस्तु कालिन्द्या द्वादश्यां जलमाविशत् ॥
तं गृहीत्वाऽनयद् भृत्यो वरुणस्यासुरोऽन्तिकम् ।
अविज्ञायासुरीं वेलां प्रविष्टमुदकं निशि ॥ - भागवते (१०/२६/१,२)
नन्दं यदा च जगृहे वरुणस्य दूतस्तत्रापि मां जलपतेर्गृहमाशु यान्तम् ।
सम्पूज्य वारिपतिराह विमुच्य नन्दं नायं सुतस्तव पुमान् परमः स एषः ॥
- म.भा.ता.नि.(१४/११०)

**व्या :** कृष्णोऽपीति । **कृष्णोऽपि दृढभक्तिं** वरुणस्य निश्चलभक्तिम् । पितृत्व प्रथामात्रमप्यसहमानत्वादिति भावः । **वीक्ष्य प्रतुष्टः** सन्तुष्ट इव । **कृत्यच्छलेन** नन्दानयनरूपकार्यव्याजेन । **निजदर्शनं** स्वदर्शनम् । **दित्सन्** दातुमिच्छन्नेव । **अम्बुराशिनिलयं** समुद्रगृहं **गत्वा वरुणेनाभ्यर्चितः** पूजितः सन् । **जनकेन** नन्देन **साकं** सार्धं **स्वभवनं पुनराजगाम** ॥ २३ ॥

**तप्तं हेम कृशानुसङ्गि गगने वातायने भाजने**
**माहेन्द्र्याः शुभकुण्डलं रचयितुं देवैरुपायाद्दिशः ।**
**सङ्गृह्याम्बुनि सन्निवेशितमिवोत्तुङ्गस्फुलिङ्गावृतं**
**तेजोराशिरिनो जगाम जलधिं रागाङ्कितः पश्चिमम् ॥२४॥**

**व्या :** इदानीं कतिपयपद्यैः सूर्यास्तमयं वर्णयन्ति । तप्तमिति । **वातायने** वातमार्गे **गगने** गगनाख्ये **भाजने** पात्रे । आकाशमूषायामित्यर्थः । **कृशानोरग्नेः सङ्गि** संयोगि । 'दिवाऽग्निः सूर्यं प्रविशति' इति स्मार्तप्रसिद्धेः । अत एव **तप्तम्** । अत एव **उत्तुङ्गस्फुलिङ्गैः** उद्गच्छदर्चिभिः । **आवृतं** युक्तं **माहेन्द्र्याः** महेन्द्रसम्बन्धिन्याः **दिशः** प्राचीदिगङ्गनाया इत्यर्थः । **शुभकुण्डलं** शोभनताटङ्कं **रचयितुं** कर्तुम् । प्रातः कुण्डलाकारेण प्राच्यामुदेष्यमाणत्वादित्यर्थः । **माहेन्द्र्या** इत्यनेन इन्द्रवदिन्द्रपत्न्यपि देवैर्मान्येति ध्वन्यते । ज्योतिश्चक्रस्य देवैश्चाल्यमानत्वात् । अमरैरुपायात् **सङ्गृह्य** । अग्नितप्तस्य साक्षाद्धस्तेन स्प्रष्टुमशक्यत्वादिति भावः । **अम्बुनि** जले । **सन्निवेशितं** निक्षिप्तं **हेमेव** सुवर्णमिव । **तेजोराशिः** । **स्फुलिङ्गावृतत्वोपपादनायेदम्** । **रागेण** रक्तिम्नाऽङ्कितः । तप्तत्वोपपादनायेदम् । **इनः** सूर्यः **पश्चिमं जलधिं** समुद्रं **जगाम** प्राप । यथा आभरणकर्तारः कारवो धमन्यादिवातसञ्चारयोग्यमूषायां सुवर्णं निधाय अनलसंयोगेन तप्तं कृत्वाऽयोमयदण्डेनोद्धृत्य जले प्रक्षिपन्ति तद्वदिति भावः । सूर्यास्तमयो जात इत्यर्थः । **उपमामूलकोत्प्रेक्षालङ्कारः** ॥२४॥

**करैर्गिरीन्द्रान् परितो दधानोऽप्यसौ विवस्वान् पतितः किलाब्धौ।**
**ममेत्थमाभाति सरिच्छरीरविशोषकं तत्पतिरग्रसीत् तम् ॥२५॥**

**व्या :** **करैरिति** । **असौ विवस्वान्** सूर्यः । **करैः** किरणैः । 'बलिहस्तांशवः कराः' इत्यमरः । **गिरीन्द्रान्** पर्वतश्रेष्ठान् । **परितः** समन्तात् **दधानोऽपि** । सायम् अर्ककिरणानां पर्वताग्रभागे निपतनादिति भावः । **अब्धौ** समुद्रे **पतितः किल** । किलेत्याश्चर्ये । अनेककरैर्गिरीन्द्रानवलम्ब्य स्थितस्यापि कथं पात इत्यत्र निमित्तमुत्प्रेक्षते । **सरितां** नदीनां **शरीराणि** शररिभूतजलानि **विशोषयतीति सरिच्छरीरविशोषकः** । **तं** सूर्यं **तत्पतिः** सरित्पतिः समुद्रः स्वयमेव । **अग्रसीदिति इत्थं मम आभाति** अहमित्थं तर्कयामीत्यर्थः । **उत्प्रेक्षालङ्कारः**। स्त्रीविषये परैरपकृता गूढमन्यवः पुरुषाः स्वानुकूलकाले बहुसाधनवन्तमपि स्वविरोधिनं पातयन्तीत्यलङ्कारेण वस्तुध्वनिः ॥ २५ ॥

**त्यक्त्वा क्रमेण सहजातमपि स्वरागं**
**[1]चक्राब्जमानितकरः प्रततोर्ध्वपादः ।**
**आश्रित्य विष्णुपदमुग्रतपोऽतपद्य-**
**स्तस्यैव धाम स जगाम कुतोऽस्य पातः ॥ २६ ॥**

**व्या :** सूर्यस्य पातमसहमान आह – **त्यक्त्वेति** । **चक्रै**श्चक्रवाकैः **अब्जैः** कमलैः **मानिताः** सत्कृताः **कराः** किरणा यस्य स तथोक्तः । अन्यत्र **चक्राब्जाभ्यां मानितौ** अलङ्कृतौ **करौ** बाहू यस्य स तथोक्तः । 'लवणाम्बुजयोरब्जं क्लीबे शङ्खे तु पुंसि च' इति भास्करः । **'चक्रातिमानितकरः'** **इति पाठे** चक्रैश्च-क्रवाकैरतिमानिताः बहुमानिताः कराः किरणा यस्य सः । तपस्विपक्षे चक्रेण सुदर्शनेनातिमानितः करो यस्य । **प्रतताः** वितताः **ऊर्ध्वं** गताः **पादाः** किरणा यस्य स तथोक्तः । अस्तमयसमये सूर्यकिरणानामूर्ध्वगमनादिति भावः । अन्यत्र प्रततौ विस्तृतौ ऊर्ध्वपादौ ऊर्ध्वगतौ चरणौ यस्य स तथोक्तः । 'पादो बुध्ने

१ चक्रातिमानितकरः । - इति पा.

तुरीयांशे शैलप्रत्यन्तपर्वते। चरणे किरणे चाथ' इति रत्नमाला। मूर्धानमधरीकृत्य तपस्विभिस्तपश्चरणादिति भावः। **यः सूर्यः सहजातमपि** उदयकालीनतया सहजमपि **स्वरागं** स्वगतरक्तिमानं **क्रमेण त्यक्त्वा**। उदयकालीनार्कगतरागस्य प्रहरादुपर्यभावादिति भावः। अन्यत्र **सहजातमपि** स्वाभाविकमपि दुस्त्यजम-पीत्यर्थः। **रागं** विषयतृष्णां **क्रमेणा**भ्यासपरिपाटवात् **त्यक्त्वा**। तपस्विनो वैराग यार्जनस्यावश्यकत्वादिति भावः। **विष्णुपदमाकाशमाश्रित्य**। अन्यत्र **विष्णोः पदं** चरणम् **आश्रित्य** मनसा ध्यात्वेत्यर्थः। **उग्रतपस्तीव्रसन्तापम्**। 'तप सन्तापे' इति धातोः। **अतपत्** अकरोत्। अन्यत्रोग्रतपस्यामतपत्। **स सूर्यः** तस्यैव **धाम** यमुद्दिश्य तपश्चकार तस्यैव विष्णोर्धाम गृहभूतं जलधिं **जगाम**। विष्णोः समुद्रशायित्वादिति भावः। **अस्य** विष्णुसालोक्यं गतस्य **पातः कुतः**। अनेन मुक्तस्य कदाऽपि संसारे पातो नास्तीति ध्वन्यते॥ २६॥

**तप्तं तपस्विनिवहं भुवि यस्ततान**
**पृथ्व्याश्च जीवनमहो स्वकरैर्जहार।**
**लक्ष्मीं तथोडुनिकरस्य वृथैव भानो-**
**स्तस्यास्य पातमपि युक्तिसहं वदामः॥ २७॥**

**व्या : तप्तमिति**। **यः** सूर्यः **स्वकरैः** स्वकिरणैः स्वहस्तेनेति ध्वन्यते। **भुवि तपस्विनिवहं** तपस्विनां निवहं **तप्तं ततान** चकार। **पृथ्व्याः** जीवनं जलं **च**। जीवितमिति ध्वनिः। **स्वकरैर्जहार** अपहृतवान् अहो स्वहस्तेनैव वृथा स्त्रीह ननाचरणमाश्चर्यतममित्यर्थः। **तथा** यथा पृथ्वीजीवनं जहार तथेत्यर्थः। **उडुनिकरस्य** नक्षत्रसमूहस्य **लक्ष्मीं** कान्तिं सम्पत्तिमिति ध्वनिः। वृथा जहार। **तस्य** तादृशस्यास्य **भानोः पातमपि**। अपिपदेन पातस्य गर्हितत्वं व्यज्यते। युक्तिसहं गर्हितमपि पातं युक्त्या सह्यत इति **युक्तिसहः** तम्। युक्तियुक्तं **वदामः**। पापिनः पातो युक्त एवेति भावः। तप्तमित्यादिपदार्थैः पातस्योपपादनात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः॥ २७॥

**स लब्धजन्मा दिशि वज्रपाणेः प्रवृद्धगात्रो गगनस्य मध्ये ।**
**अगाद्विनाशं द्युमणिः प्रतीच्यां विधेर्निदेशो महताऽप्यलङ्घ्यः ।२८।**

**व्या : स** इति । स **द्युमणिः** सूर्यः । 'द्युमणिस्तरणिर्मित्रः' इत्यमरः । वज्रं पाणौ यस्य स **वज्रपाणिः** । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ'[१] इति पाणिशब्दस्य परनिपातः । इन्द्रस्य **दिशि** प्राच्यां **लब्धजन्मा** लब्धोदयः सन् गगनस्याकाशस्य मध्ये प्रवृद्धं गात्रं वपुर्यस्य स तथोक्तः सन् प्रतीच्यां **दिशि** विनाशमस्तमयं अगमत्। तेजस्विनः सूर्यस्य एकत्रोत्पत्तिरपरत्राभिवृद्धिः अन्यत्र मृतिः कथमित्याशङ्क्य शिरोलिखितं केनाप्यलङ्घ्यमित्याह । **विधेर्निदेश** इति । विधेर्ब्रह्मणः निदेशः कुत्रचिद्भवितव्यं कुत्रचित् स्थातव्यं कुत्रचिन्मर्तव्यमिति ललाटलिखितलक्षणः । महता तेजस्विनाऽप्यलङ्घ्यः लङ्घयितुमशक्यः ।।२८।।

**रागं पयोधरतटे हरिदङ्गनानां रागी समर्प्य सविता समगादगान्तम् ।**
**कूजद्विहङ्गमरवैरिव ता रुदन्त्यो भेजुस्तमस्ततिमथान्तरिवोरुमूर्च्छाम् २९**

**व्या : रागमिति** । **रागी** रागवान् अनुरागवानिति ध्वनिः । सविता सूर्यः **हरिदङ्गनानां** दिगङ्गनानां **पयोधरतटे** मेघप्रान्ते स्तनतट इति ध्वनिः । **रागं** रक्तिमानम्। सायं मेघेषु रक्ततादर्शनात् । अनुरागं चेति ध्वनिः । **समर्प्या** अगस्य पर्वतस्यान्तम् **अगात्** अगमत् । यथा विदेशगमनोद्युक्तः कामुकः स्वानुरागं स्वकान्ताकुचमण्डले समर्प्य तदेव ध्यात्वा गच्छति तद्वदिति भावः । कूजद्विहङ्गमरवैः ध्वनत्पक्षिनिनदैः सायं वृक्षेषु स्थित्वा पक्षिणो ध्वनन्तीति भावः । रुदन्त्य इव व्यवस्थितास्ता **हरिदङ्गना** उरुमूर्च्छामिवान्तस्तमस्ततिमन्धकारसमूहं भेजुः । सायं दिशस्तमोव्याप्ता बभूवुरित्यर्थः । विप्रलम्भः शृङ्गारः । 'अयुक्तयोस्तरुणयोर्योऽ-नुरागः परस्परम् । दर्शनस्पर्शनादीनामनवाप्तौ प्रकृष्यते । स विप्रलम्भो विज्ञेयः' इत्युक्तेः । अयं तु रागपयोधरशब्दयोः श्लिष्टत्वात् तदुज्जीवितोत्प्रेक्षालङ्कारेण ध्वन्यत इति अलङ्कारेण रसध्वनिः ।।२९।।

---

१ वार्तिकम्

**अम्भोधिहृत्कृतपदं प्रतिरूपमर्कः**
**सन्दृश्य साधु धवलीकृततज्जलौघम् ।**
**शान्तो हि सर्वहृदयङ्गमतामुपैती-**
**त्यन्ते शमं समधिगम्य विवेश सोऽब्धिम् ।। ३० ।।**

**व्या :** अम्भोधीति । सः **अर्कः** सूर्यः **अम्भोधेः** समुद्रस्य हृदि अन्तः **कृतं पदं** स्थानं येन तत् **साधु** सम्यक् **धवलीकृतः** शुभ्रीकृतः तस्य समुद्रस्य ओघो जलप्रवाहो येन तत् **प्रतिरूपं** स्वप्रतिबिम्बरूपं **सन्दृश्य** दृष्ट्वा मम बहिरवस्थाने किं निबन्धनमिति विचार्य **शान्तः** पुरुषः **सर्वहृदयङ्गमतां** सर्वलोकप्रियताम् **उपैति हि** । प्रतिबिम्बस्य कान्तिमत्वेऽपि औष्ण्याभावादिति भावः । **इति** निश्चित्यान्ते अस्तमयसमये क्रौर्यं त्यक्त्वा **शमं** शान्तिं **समधिगम्याब्धिं** समुद्रं **विवेश** प्रविष्टवान् ।। ३० ।।

**मित्रेऽम्बुजातनिकरस्य नितान्तमित्रे**
**ह्यस्तं समीयुषि मुखं मुकुलीबभूव ।**
**पद्मस्य शुद्धजलगस्य च मुद्रयन्ति**
**नष्टाः प्रियाः खलु समृद्धियुजोऽपि वक्त्रम् ।। ३१ ।।**

**व्या :** मित्र इति । **अम्बुजातनिकरस्य** कमलसमूहस्य **नितान्तमित्रे** अत्यन्तसुहृदि । अथ मित्रं सखा सुहृदित्यमरः । मित्रे द्युमणौ । 'द्युमणिस्तरणिर्मित्रः' इत्यमरः । **अस्तम्** अस्तमयं **समीयुषि** गच्छति सति **शुद्धजलगस्य** स्वच्छोदकस्थस्य **च** । चशब्दोऽप्यर्थे । उदकस्थस्यापीत्यर्थः । **पद्मस्य** कमलस्य **मुखं मुकुलीबभूव** । सूर्यास्तमये सति कमलानां मुकुलीभावो जात इत्यर्थः । अर्थान्तरं न्यस्यति । **नष्टाः** विनिष्टाः **प्रियाः** सखायः **समृद्धियुजोऽपि** सम्पन्नस्यापि स्वीयस्य **वक्त्रं** मुखं **मुद्रयन्ति खलु** । इष्टनाशे कस्य मुद्रणं न जायत इत्यर्थः ।। ३१ ।।

**आकण्ठोदकवासि हृद्रमधुकृज्झङ्काररम्योंकृति**
**भ्राजत्कण्टककण्टकद्युति मुहुर्मन्त्रार्थसञ्चिन्तया।**
**ईषत्कम्पितमूर्धशोभि नलिनं हंसौघसंशिक्षितं**
**स्वान्तःस्थापितधातृ साधु तपतीवाकाङ्क्य मित्रोदयम् ॥३२॥**

**व्या : आकण्ठेति** । आकण्ठं कण्ठपर्यन्तमुदके वसतीत्या**कण्ठोदकवासि** । तपस्व्यपि कण्ठदघ्नोदके स्थित्वा तपश्चरणात् तथाविधः **हृद्रस्य** मुकुलीभावसमये उदरगतस्य मधुकृतो मधुकरस्य झङ्कार एव रम्या रमणीया ॐकृतिरोङ्कारः प्रणवो यस्य तत् तथोक्तम् । भ्राजन्तः लसन्तः कण्टका कमलनालस्थकण्टका एव कण्टका रोमाञ्चाः । रोमहर्षे तु **कण्टक** इत्यमरः । तेषां **द्युतिः** कान्तिर्यस्य तत्तथोक्तम् । तपस्व्यपि ध्यानजानन्देन पुलकितो भवति । मुहुर्मन्त्रार्थसञ्चिन्तयेव। मन्त्रस्य योऽर्थः तस्य अनुसन्धानेनेव । **ईषत्** किञ्चित् **कम्पितेनान्तः**स्थभ्रमरचलनेन चालितेन मूर्ध्ना शोभत इति तथोक्तम् । तपस्विनोऽपि स्वजप्यमन्त्रार्थध्यानेन शिरःकम्पो जायते । स्वान्तः स्वोदरे स्थापितः सन्निधापितः धाता चतुर्मुखो येन तत्तथोक्तम् । चतुर्मुखस्य कमलासनत्वादिति भावः । तपस्व्यपि स्वेष्टदेवतां हृदि ध्यात्वा तपः करोति । प्रकृते मित्रसृष्टेरपेक्षितत्वात् सृष्टिकर्तृश्चतुर्मुखस्यान्तःस्थापनं युक्तमिति भावः । **हंसौघैः** हंसपक्षिसमूहैः **संशिक्षितं** तुण्डैर्व्रणीकृतम्। तपस्व्यपि परमहंसैर्गुरुभिः संशिक्षितो भवति । **नलिनं** पद्मं मित्रस्य सुहृदो मित्रस्य सूर्यस्योदयमुत्पत्तिमाकांक्ष्य साधु सम्यक् तपतीव तपस्यां करोतीव । अत्राप्रकृततपस्विसाम्येनौपम्यादप्रकृतगोचरात् तुल्ययोगिता । न तु शेषः । तस्य विशेष्यस्यापि श्लिष्टत्वनियमात् ।

''प्रस्तुतानां तथाऽन्येषां केवलं तुल्यधर्मतः ।
औपम्यं गम्यते यत्र सा मता तुल्ययोगिता''

इत्युक्तेः । उत्प्रेक्षाव्यञ्जकेवशब्दप्रयोगात् स्वोज्जीवितोत्प्रेक्षया सङ्कीर्यते ॥३२॥

**दिगायताक्षीमपरामुपेत्य दिशापतौ रागमुपेयुषीन्दुः ।**
**अदृश्यतैन्द्र्यां दिशि रोषरक्तं निबद्धनीलभ्रुकुटीव वक्त्रम् ॥३३॥**

**व्या :** चन्द्रोदयं वर्णयति – **दिगायताक्षीमिति** । **दिशापतौ** दिक्पतौ । टापं चैव हलंतानामिति टापो विधानात् । सूर्ये अपरामन्यां दिगायताक्षीं दिगङ्गनां प्रतीचीदिशमित्यर्थः । उपेत्य गत्वा । अनेन कस्यचित्कान्तस्यान्यासङ्गो ध्वन्यते । रागं रक्तिमानम् उपेयुषि गच्छति सति । न केवलं सपत्नीगमनमात्रं तत्रानुरागमपि सम्पादितवानिति ध्वनिः । इन्दुश्चन्द्रः **ऐन्द्र्यांदिशि** इन्द्रसम्ब-न्धिन्यां दिशि प्राच्यामित्यर्थः । अनेन नायिकाया उत्तमत्वं ध्वन्यते । **अदृश्यत** । सूर्यास्तमयानन्तरं चन्द्रोदयोऽपि जात इत्यर्थः । कथमिव प्रियेऽन्यासङ्गिनि सति रोषेणामर्षेण रक्तं निबद्धा नीला भ्रकुटी भ्रूभङ्गो यस्य तत्तथोक्तम् । अपराधिनं नायकं रोषेण पश्यन्त्या **ऐन्द्र्याः** नायिकायाः **वक्त्रमिव** । उत्प्रेक्षालङ्कारः । अत्र प्रस्तुतापराधिनायकस्य खण्डितायाः नायिकायाः प्रतीतेः समासोक्त्या सङ्कीर्यते । नायको दक्षिणः । तुल्यो नैकत्र दक्षिण इत्युक्तेः । नायिका विप्रलब्धा खण्डिता च । 'ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता' इत्युक्तेः ॥३३॥

**नक्षत्रालिभिरिन्द्रदिङ्मृगदृशं सन्धाय पूर्वं पुन-**
**स्तत्पादे प्रणतिं विधाय नितरामाशान्तरासक्तिजम् ।**
**तस्याः कोपसमं तमः परिहरन् स्वीयैः करैस्तां स्पृशन्**
**वक्त्राम्भोरुहचुम्बनाय शनकैरुद्याति नूनं शशी ॥ ३४ ॥**

**व्या : नक्षत्रालिभिरिति** । **शशी** चन्द्रः **पूर्वं** प्रथमतः **इन्द्रदिङ्मृगदृशं** प्राचीदिगङ्गनां नक्षत्रालिभिः ताराख्यसखीभिः करणैः । 'आलिः सखी वयस्या च' इत्यमरः । **सन्धाय** सन्धिं कृत्वा चन्द्रोदयात् पूर्वं नक्षत्रोदयस्य जायमानत्वात् । चन्द्रस्य नक्षत्राधिपतित्वेन नक्षत्रस्यापि चन्द्रप्रेष्यत्वमिति भावः । **पुनस्तस्याः** दिशः **पादे** चरणे **प्रणतिं** नमस्कारं **विधाय** दिगधोभागे

चन्द्रोदयस्य जायमानत्वादिति भावः। सखीद्वारा किञ्चित् कोपशान्तावपि पादप्रणामं विना सर्वथा कोपशान्तेरभावात्। पादप्रणाममपि कृत्वेत्यर्थः। **आशान्तरासक्तिजं** दिगन्तरसम्बन्धजन्यं तमसश्चन्द्रदेशादन्यप्रदेशस्थितेः। तस्या इन्द्रदिङ्मृगलोचनायाः कोपसमं कोपसदृशं तमोऽन्धकारं परिहरन् स्वकीयैः करैः किरणैः तां दिशं स्पृशन्। चन्द्रोदयानन्तरं किरणप्रसारैः प्रथमतस्तस्यां दिश्येव तमोनाशादिति भावः। **वक्त्राम्भोरुहचुम्बनाय** मुखारविन्दचुम्बनाय शनकैः मन्दम् उद्याति ऊर्ध्वं याति **नूनं** निश्चयः। यथा अपराधी नायकः कुपितां नायिकां स्वसखीप्रेषणप्रणामकरग्रहणादिना कोपं परिहृत्य आननचुम्बनं करोति तद्वदिति भावः। उपमासमासोक्त्योः सङ्करः। **नायिकानायकविभेदस्तु ग्रन्थगौरवभयान्न लिख्यते** ॥ ३४ ॥

**चन्द्रस्य कोमलकरै रचिताङ्गसङ्गाः**
**सान्द्रान्धकारमपि ताः सहसा विहाय।**
**ईशं स्वपत्स्वखिलजन्तुषु वव्रुरेन-**
**माशा हि नूत्नविषया गणयन्ति नैनः ॥ ३५ ॥**

**व्या : चन्द्रस्येति**। ताः सूर्यभार्यात्वेनोक्ताः दिशः पराङ्गना इति ध्वनिः। **चन्द्रस्य** सुन्दरपुरुषस्येति ध्वनिः। **कोमलकरैर्मृदुकिरणैः** हस्तेनेति ध्वनिः॥ **रचितः अङ्गसङ्गो** यासां ताः आलिङ्गिता इति ध्वनिः। **सान्द्रान्धकारमपि** निबिडान्धकारमपि भर्तृविरहजदुःखमपीति ध्वनिः। **विहाय** त्यक्त्वा अखिलजन्तुषु सकलप्राणिषु स्वपत्सु निद्रितेषु सत्सु परपुरुषगमनस्य जनसञ्चाररहितकालिकत्वादिति भावः। एनं चन्द्रम् **ईशं** प्राणेशं वव्रुः अङ्गीकृतवत्यः। अन्यस्त्रीणां अन्यपुरुषस्वीकारः कथं युज्यत इत्यत आह। आशा हीति। **नूत्नविषयाः** नूतनवस्तुविषयाः आशा अभिलाषाः। 'आशा दिगभिलाषयोः' इति भास्करः। एनः पापं न गणयन्ति हि। दिशामप्याशात्वादिति

भावः। अर्थान्तरन्यासः। तेनोत्कटो रागः विवेकिनामपि बलवदनिष्टविषयकं ज्ञानं प्रतिबध्नातीति वस्तु व्यज्यते। नायक उपपतिः। "लङ्घिताचारया यस्तु विनाऽपि विधिना स्त्रिया। सङ्केतं नीयते प्रोक्तो बुधैरुपपतिस्तु सः" इत्युक्तेः। नायिका जारिण्यः अभिसारिकाश्च। "स्मरार्ताऽभिसरेत् कान्तं सारयेद्वाऽभिसारिका" इत्युक्तेः। सम्भोगः शृङ्गारः। "अनुकूलौ निषेवेते यत्रान्योन्यं विलासिनौ। दर्शनस्पर्शनादीनि सम्भोगोऽयमुदाहृतः" इत्युक्तेः॥ ३५॥

**पूर्वाब्धाववगाह्य फेननिचयश्रीखण्डलेपद्युतिः**
**स्वाङ्कालङ्कृतिमूलनीलतिलकस्तारौघहारान् दिशन्।**
**व्योमाख्यां कबरीं प्रगृह्य सुकरैराश्लिष्य दिक्कामिनी-**
**मैन्द्रीमिन्दुरसौ चुचुम्ब सरसो रागेण तां रञ्जयन्॥ ३६॥**

**व्या : पूर्वाब्धाविति**। सरसो विलासी असाविन्दुश्चन्द्रः **पूर्वाब्धौ** प्राचीसमुद्रे **अवगाह्य** स्नात्वा प्रसाधनविधेः स्नानपूर्वकत्वादिति भावः। **फेननिचय** एव **श्रीखण्डलेपः** श्रीगन्धानुलेपः तस्य **द्युतिः** कान्तिर्यस्य सः। श्रीखण्डलेपेन द्योत्यत इति वा। स्वस्याङ्क एव कलङ्क एवालङ्कृतेरलङ्कारस्य मूलमाद्यं **नीलं** कस्तूर्यादिरचितत्वेन श्यामं **तिलकं** विशेषको यस्य स तथोक्तः। 'तमालपत्रतिलकचित्रकाणि विशेषकम्' इत्यमरः। **तारौघहारान्** नक्षत्रचयाख्यमुक्ताहारान् दिशन् वितरन् सुकरैः शोभनकिरणैः। ऊर्ध्वमुखैर्हस्तैरिति ध्वनिः। **व्योमाख्याम्** आकाशस्य नीलत्वात् तद्रूपां कबरीं केशवेशम्। 'कबरी केशवेशोऽथ धम्मिल्लः संयताः **कचाः**' इत्यमरः। **प्रगृह्य** गृहीत्वा **ऐन्द्रीं** इन्द्रसम्बन्धिनीं दिगङ्गनां प्राचीदिशमित्यर्थः। **सुकरैस्तिर्यगायतैः** किरणैश्च **आश्लिष्यालिङ्ग्य** तां **दिक्कामिनीं रागेण** स्वरक्तिम्ना अनुरागेणेति ध्वनिः। **रञ्जयन्** रागयुक्तं कुर्वन् **चुचुम्ब** चुम्बनं कृतवान्। क्रमेण चन्द्र ऊर्ध्वं गत इत्यर्थः। रूपकमलङ्कारः। अत्र नायको दयितः। "वासोऽङ्गरागमाल्याद्यैः हृद्यैर्यः प्रेयसीं रहः। प्रसादयन् रमयति

दयितः सोऽभिधीयते'' इत्युक्तेः । ऐन्द्रीमित्याद्युक्त्या अलङ्कारदानेन च नायिका परकीयेति ध्वन्यते । सम्भोगः शृङ्गारः ॥ ३६ ॥

**सुवर्णसंवीतवरेन्द्रनीलसुमध्यनिष्काञ्चितकृष्णवक्षः ।**
**सहारमन्वेत्युदितोर्ध्वरश्मिशशाङ्कसङ्ग्यभ्रमुदारतारम् ॥३७॥**

**व्या : सुवर्णेति** । उदाराः उत्कृष्टाः ताराः नक्षत्राणि यस्य तत्तथोक्तम् । उदितस्य **ऊर्ध्वं रश्मयः** किरणाः यस्य तस्य **शशाङ्कस्य** चन्द्रस्य **सङ्गः** सम्बन्धः अस्यास्तीति तत्तथोक्तम् । **अभ्रं** गगनम् । **सहारं** मुक्ताहारसहितं **सुवर्णसंवीतम्** तप्तहेमपरिवीतम् । **वरेन्द्रनीलम्** उत्तमनीलरत्नं **सुमध्ये** यस्य तेन **निष्केण** ग्रैवेयेण **अञ्चितमलङ्कृतं** तच्च तत् **श्रीकृष्णस्य वक्षः** उरःस्थलमन्वेति अनुकरोति । तत्साम्यं प्राप्नोतीत्यर्थः । पूर्णोपमा । अनया गोपीनां कामोद्दीपनकारित्वं चन्द्रस्य ध्वन्यते, इत्यलङ्कारेण धर्मध्वनिः ॥३७॥

**वार्वाहावृतसर्वभागमुदितं बिम्बं शशाङ्कं विधो-**
**रीषद्दर्शितकोणमच्युतमनस्तोषं नभोऽग्रस्थितम् ।**
**रेजे कुङ्कुमशोभि रम्यवसनच्छन्नं मरुद्दर्शित-**
**प्रान्तं श्रीकुचकोशमीषदुदयन्मध्योपरिष्टादिव ॥ ३८ ॥**

**व्या : वार्वाहावृतेति** । वार्वाहैर्मेघैः आवृतः आच्छन्नः सर्वभागः सर्वप्रदेशो यस्य तत् । **शश एवाङ्कश्चिह्नं** यस्य तत्तथोक्तम् । **ईषद्दर्शितः कोणः** एकदेशो यस्य तत्तथोक्तम् । नभसः आकाशस्याग्रे स्थितम् **अच्युतस्य** श्रीकृष्णस्य मनस्तोषो यस्मात् तदुदितं विधोश्चन्द्रस्य **बिम्बं** मण्डलं रम्यवसनेन मनोहरोत्तरीयेण छन्नम् आच्छन्नम् । कुङ्कुमेन काश्मीरजेन । 'अथ कुङ्कुमं काश्मीरजन्माग्निशिखम्' इत्यमरः । शोभत इति **कुङ्कुमशोभि** मरुता वायुना उत्तरीयावधूननाद्दर्शितः **प्रान्तो** यस्य **तत्** । **मध्योपरिष्टात्** मध्योर्ध्वभागे ईषदुदयत् किञ्चिदाविर्भवत् **श्रियः** लक्ष्म्याः **कुचकोशमिव** स्तनमुकुलमिव । 'कोशोऽस्त्री कुड्मलेऽर्थौघे

गुह्याण्डे शस्त्रदिव्ययोः' इति रत्नमाला । अत एवाच्युतमनस्तोषमित्युक्तम् । रेजे शुशुभे । पूर्णोपमा ॥ ३८ ॥

**गते दिशां भर्तरि देशमन्यं दिवाकरे मन्दमुपेत्य चन्द्रः ।**
**तदम्बरं यज्जगृहे करैः स्वैस्ततः कलङ्कीति मम प्रतर्कः ॥३९॥**

**व्या :** गत इति । **दिशां भर्तरि** भरणकर्तरि पत्यौ । 'कर्तृकर्मणोः कृति'[1] इति षष्ठी । **दिवाकरे** सूर्ये अन्यदेशं देशान्तरं **गते** सति **चन्द्रः मन्दं** शनैः **उपेत्य** । अनेन चौर्येण गमनं द्योत्यते । **तदम्बरं** तासां दिशामम्बरम् आकाशम् अवकाशमित्यर्थः । वस्त्रमिति ध्वनिः । **स्वकरैः** अंशुभिः हस्तेनेति ध्वनिः । **यद्यस्माज्जगृहे** गृहीतवान् **ततः** परदाराम्बरग्रहणात् कारणात् **कलङ्कीति** अपवादवान् न तु लाञ्छनवानिति **मम प्रतर्कः** । 'कलङ्कोऽङ्कापवादयोः' इत्यमरः । उत्प्रेक्षालङ्कारः ॥३९॥

**यत्पूर्णं पौर्णमास्यामुदयति निशि तत्कीर्तिनार्याः कुमार्या**
**वक्त्रं कस्तूरिकाक्तं प्रविरलकचविन्यस्तपुष्पं हि मन्ये ।**
**स्तोत्रव्याजेन देवैर्वदनविनिहितं नन्दसूनोर्न चेत् तत्**
**प्रीत्यै गोपाङ्गनानां कथमहितवधूवर्गतापाय च स्यात् ॥४०॥**

**व्या :** यदिति । **पौर्णमास्यां** पूर्णिमायां **यत्पूर्णं** पुष्कलं वस्तु **निशि** रात्रौ **उदयति** । **तत् नन्दसूनोः** श्रीकृष्णस्य **कुमार्याः** बालायाः **कीर्तिनार्याः** यशोङ्गनायाः **वक्त्रं** मुखं **मन्ये** । कीदृशं वक्त्रं **कस्तूरिकया आक्तं** सिक्तम् । कस्तूरीतिलकोपेतमित्यर्थः । अनेन कलङ्कस्य निर्वाहः कृतः । पुनः कीदृशं **प्रविरलानि** प्रकीर्णानि **कचविन्यस्तानि** केशपाशनिहितानि **पुष्पाणि** यस्य तत्तथोक्तम् । अनेन नक्षत्राणां निर्वाहः कृतः । पुनः कीदृशं **स्तोत्रव्याजेन** स्तुतिकरणव्यपदेशेन **देवैर्वदने** मुखे **विनिहितं** निक्षिप्तम् । अनेन प्रतिदिनं

१ पा.सू. २/३/६५

क्रियमाणकलापानस्य गतिरुक्ता । न चेच्छ्रीकृष्णकीर्तिनारीमुखं न भवति चेत् **गोपाङ्गनानां** गोपस्त्रीणां **प्रीत्यै** हर्षाय । **अहितानां** कृष्णविरोधिनां **वधूवर्गस्य** कान्तासमूहस्य **तापाय** सन्तापाय **च कथं स्यात्** । गोपीनां सन्तोषं अहित-वधूनां सन्तापश्च कथं दद्यादिति भावः । व्याजेनेति सत्यार्थापह्नव-प्रतीतेरपह्नवगर्भितोत्प्रेक्षालङ्कारः । स चोक्तार्थापत्तिप्रसादेन लब्ध इति तयोः सङ्करः । **स्रग्धरावृत्तम्**। 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्'[1] इत्युक्तेः ॥ ४० ॥

**दिवसकरे हृततस्करप्रचारे नरनयनस्य विदूरवर्त्म याते ।**
**रजनिकरोऽयमुपेत्य मानवानां श्रममधरीकुरुते स्म पूर्णबिम्बः ॥४१॥**

**व्या :** दिवसकर इति । **हृतः** परिहृतः **तस्कराणां** चोराणां **प्रचारः** सञ्चारो येन तस्मिन् दिवसकरे सूर्ये **नराणां** मनुष्याणां **नयनस्य** लोचनस्य । जात्येकवचनम्। **विदूरवर्त्म** विदूरमार्गं **याते** गते सति **पूर्णबिम्बः** सम्पूर्णमण्डलः **अयं रजनिकरः** चन्द्रः **उपेत्य** आगत्य **मानवानां श्रमं** खेदम् **अधरीकुरुते स्म** अपाकरोत् । अनेन प्रजापालके वृद्धे राज्ञि गते सति अर्वाचीनोऽपि तत्पुत्रस्ततोऽप्यधिकं प्रजाः सुखयतीत्ययमर्थो ध्वन्यते । तुरगरयं वृत्तम् । 'तुरगरयं कथित नजौ जरौगः' ॥ ४१ ॥

**स मारमौर्वीस्थितमल्लिकेषुरिव व्रजस्त्रीहृदयं विजित्य ।**
**हरेः पदं प्राप शनैः स्मरेण तमात्मसात्कर्तुमिवोत्प्रयुक्तः ॥४२॥**

**व्या :** स इति । **स्मरेण** मन्मथेन **तं** श्रीकृष्णम् **आत्मसात्कर्तुम्** आत्माधीनं कर्तुमिव **उत्प्रयुक्तः** उत् ऊर्ध्वं प्रयुक्तः मुक्तः मारस्य मदनस्य मौर्व्यां सिञ्जिन्यां संस्थितो मल्लिकेषुः मल्लिकाकुसुमाख्यबाण इव **स्थितः** स चन्द्रः **व्रजस्त्रीहृदयं विजित्य हरेः** पदमाकाशं हरेः श्रीकृष्णस्य **पदं** पादमिति ध्वनिः । श्रीकृष्णमपि

---

१ वृत्तरत्नाकरे (३/१०२)

जेतुमागत इत्यर्थः । त्रिविक्रमरूपश्रीकृष्णपादस्यापि तत्र सत्त्वादिति भावः। हरेः पदमित्यनेन व्रजस्त्रीजयवन्न श्रीकृष्णजयः किन्तु पादप्रणामादिना अभिमुखीकरणमात्रमिति ध्वन्यते । चन्द्रोदयं वीक्ष्य व्रजाङ्गनानां श्रीकृष्णेन रन्तुमिच्छा श्रीकृष्णस्य ताभिः सह रन्तुमिच्छा चोत्पन्नेति भावः ॥ ४२ ॥

**गन्धर्वगीतवृतमभ्रमपारतारं चन्द्रेण रञ्जितमुदीक्ष्य मुदा मुकुन्दः ।**
**वृन्दावनं मधुपमञ्जुरवं प्रसूनसन्दोहसान्द्रमविशत् तरुजालनीलम् ॥४३॥**

**गन्धर्वेति** । **मुकुन्दः** श्रीकृष्णः **गन्धर्वाणां गीतेन** गानेन **वृतं** आवृतं अपारतारम् अनेकनक्षत्रं **चन्द्रेण रञ्जितम् अभ्रं** गगनमुदीक्ष्य दृष्ट्वा मधुपानां भ्रमराणां मञ्जु मनोहरो रवो यस्मिन् तत् । अनेन **गन्धर्वगीत**प्रतिरूपकमुक्तं प्रसूनसन्दोहैः पुष्पनिचयैः सान्द्रं निबिडम् । अनेन नक्षत्रप्रतिरूपकमुक्तम् । तरूणां जालैः समूहैः नीलं श्यामलम् । अभ्रसाम्यार्थमिदम् । **वृन्दावनं** मुदा सन्तोषेण अविशत् प्रविष्टवान् । चन्द्रस्य श्रीकृष्णः प्रतिनिधिरिति बोद्धव्यम् । अत्र बिम्बप्रतिबिम्ब-भावेनौपम्यस्य गम्यत्वात् उपमालङ्कारः ॥ ४३ ॥

**इन्दुः स्वरम्यकिरणैर्विपिनं पुपूर**
**मन्दानिलश्च मुदितोत्पलमान्यगन्धैः ।**
**सान्द्रप्रसूननिचयैस्तरवः समन्तात्**
**कन्दर्पतातमवलोक्य पिकाश्च गीतैः ॥ ४४ ॥**

**व्या :** इन्दुरिति । **कन्दर्पतातं** मन्मथजनकं श्रीकृष्णमभिवीक्ष्य इन्दुश्चन्द्रः स्वरम्यकिरणैः **विपिनं** वृन्दावनं **पुपूर** आपूरयत् । मदनमित्रत्वाच्चन्द्रः स्वमित्रतातप्रविष्टे वने स्वकिरणान् प्रसारितवानिति भावः । एवमुत्तरत्रापि द्रष्टव्यम्। **मन्दानिलश्च मुदितस्य** चन्द्रकिरणसम्पर्कात् प्रमोदयुक्तस्य विकसितस्येत्यर्थः । उत्पलस्य कुमुदस्य **मान्यगन्धैः** सेव्यपरिमलैः पुपूरेति

प्रत्येकं सम्बन्धः । **तरवो** वृक्षाः **सान्द्रप्रसूननिचयैः** निबिडकुसुमसमूहैः **पिकाः** कोकिलाश्च **गीतैः** रुतैः **पुपूरुः** । दीपकमलङ्कारः ॥ ४४ ॥

**विश्वस्य मोहन इतीश यशो मदीयं**
**विस्तारयेह ललनासहितो विहृत्य ।**
**इत्यर्थनाकृदिव वृक्षतलप्रविष्टैः**
**कृष्णाङ्घ्रिमास्पृशति हृद्यकरैर्हिमांशुः ॥ ४५ ॥**

**विश्वस्येति** । **हिमांशुश्**चन्द्रः हे **ईश** स्वामिन् श्रीकृष्ण **विश्वस्य** जगतः 'कर्तृकर्मणोः कृति'[1] इति षष्ठी । मोहयतीति **मोहनः** । कर्तरि ल्युट् टित्करण-सामर्थ्याल्ल्युटः स्त्रीलिङ्गत्वम् । वशीकरणशक्तिमानिति **मदीयं यशः** कीर्तिं **ललनाभिः** कामिनीभिः सहितस्त्वम् **इह** वृन्दावने **विहृत्य विस्तारय** विस्तृतिं कुरु । श्रीकृष्णस्यापि मोहकश्चन्द्र इति मम **यशो**विस्तारो भवेत् इत्यनेन प्रकारेण। 'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' इत्यमरः । **अर्थनाकृदिव** याञ्चां कुर्वन्निव **वृक्षतलप्रविष्टैः** तरुपत्रान्तरेण वृक्षमूलगतैः **हृद्यकरैः** मनोहरकिरणैः **कृष्णाङ्घ्रिं** श्रीकृष्णचरणम् **आस्पृशति** आ समन्तात् स्पृशति । यत्र यत्र गच्छति तत्र तत्र स्पृशतीत्यर्थः । पौनःपुन्येन प्रार्थनालक्षणमिदम् । **उत्प्रेक्षालङ्कारः** ॥

**व्याकीर्णकाम इव तैर्विविधैर्विभावै-**
**राकर्षयन् व्रजवधूर्निजसङ्गयोग्याः ।**
**वेणुं क्रमेण रणयन् बहुतानगान-**
**मानङ्गमौलिरुदगायदधीश्वरोऽसौ ॥४६॥**

**व्या : व्याकीर्णकाम** इति । **विविधैः** नानाप्रकारैः **तैः** पूर्वोक्तैः **विभावैः** रत्याख्यस्थायिभावस्य रसत्वापादकैः चन्द्राद्युद्दीपनविभावैः । तदुक्तम्। 'विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः । आनीयमानः स्वादुत्वं

---

१ पा.सू. २/३/६५

स्थायिभावो रसः स्मृतः'[१] इति । तत्र विभावास्तु द्विविधाः । आलम्बनविभावा उद्दीपनविभावाश्चेति । 'चन्द्रोदयो घनध्वानः कोकिलारणितं मधुः । उद्दीपनविभावाः स्युः' इति । **व्याकीर्णः** रसीभूतः **कामः** रतिरिच्छाविशेषो यस्य स इव कामोद्रेकवानिवेत्यर्थः । **निजसङ्गस्य** स्वसम्बन्धस्य **योग्याः** पात्रीभूताः [२]**व्रजवधूः** व्रजाङ्गनाः आकर्षयन् **बहवस्तानाः** स्वरविशेषास्तैर्युक्तं **गानं** गीतं तस्य **मानं** प्रमाणं जानन्तीति तथोक्तास्तेषां मौलिर्मुकुटभूतः श्रेष्ठ इत्यर्थः । धम्मिल्ले मुकुटे मौलिरिति भास्करः । **अधीश्वरः** जगदीश्वरः **असौ** श्रीकृष्णः क्रमेण वेणुं रणयन् उदगायत् उत्कृष्टतया गानं कृतवान् ।। ४६ ।।

**हृद्गं हृद्यनुरञ्जयन् सवयसः संहर्षयन् कर्षयन्**
**गोपस्त्रीहृदयं पशून् ऋषिगणान् निश्चेष्टयन् स्पष्टयन् ।**
**विश्वं स्वस्य वशं वियद्गृहवधूः सम्मूर्च्छयंश्चारणान्**
**सिद्धान् सन्त्रपयन् सुरान् विनमयन् वेणुं पुपोषाच्युतः ।।४७।।**

**व्या : हृद्गमिति** । अच्युतः श्रीकृष्णः **हृद्गं** हृदयगतं कुक्षिस्थमित्यर्थः । जगत् **हृद्येवानुरञ्जयन्** अनुरक्तं कुर्वन् **सवयसः** स्निग्धान् **संहर्षयन्** सम्यक् सुखयन् **गोपस्त्रीणां हृदयं** मनः **कर्षयन्** आकर्षयन् **पशून्** गवादितिर्यक्प्राणिनः **ऋषीन्** मुनींश्च **निश्चेष्टयन्** निर्व्यापारीकुर्वन् वियदेवाकाश एव गृहं यासां ताः **वियद्गृहाः** ताश्च ता वध्वश्च ताः । श्रीकृष्णगीतश्रवणायाकाशगतसुरवधूरित्यर्थः। **सम्मूर्च्छयन्** विवशीकुर्वन् **चारणान् सिद्धान्** सङ्गीताभिज्ञदेवयोनिभेदान् **सन्त्रपयन्** स्वसङ्गीतविद्यायामेतादृशप्रावीण्याभावात् लज्जासहितान् कुर्वन् **सुरान्** देवान् **विनमयन्** नम्रान् कुर्वन् **विश्वं** जगत् उक्तप्रकारेण **स्वस्य** वशमधीनं **स्पष्टयन्** प्रकटयन् **वेणुं** [३]मुरलीं **पुपोष** ध्वनयामासेत्यर्थः ।। ४७ ।।

---

१ इति रसार्णवसुधाकरे (श्रीसिंहभूपालविरचिते) – १/५८

२ ऋते रमां जातु ममाङ्गसङ्गयोग्याङ्गना नैव सुरालयेऽपि ।
- म.भा.ता.नि. (११/१२६)

३ वर्हापिच्छो वनचरवपुः कर्णयोः कर्णिकारः

**शुष्कामपि स्म सरसामधरामृतेन**
**हृद्यस्वनामपि विधाय मृदूक्तिशून्याम् ।**
**छिद्रं निगूह्य मुरलीं मुरजिच्चुचुम्बे**
**सद्वंशजातललनासु न कस्य पक्षः ॥ ४८ ॥**

**व्या :** शुष्कामिति । मुरं मुरनामकासुरं जयतीति मुरजित् श्रीकृष्णः शुष्कामपि नीरसामपि । वंशस्यार्द्रतायां स्वराणामभिव्यक्तेरभावादिति भावः । [१]मुरलीं वेणुम् अधरामृतेन अधरोष्ठसुधया सरसाम् आर्द्रां विधाय । अनेन कठिण हृदया या नायिका तामप्युपायेन मृदुचित्तां कुर्वन् नायकश्च ध्वन्यते । मृदूक्तिशून्यामपि जडत्वान्मृदुवचनरहितामपि हृद्यः मनोहरः स्वनो ध्वनिर्यस्याः तां विधाय । पूर्ववत् ध्वनिः । छिद्रं रन्ध्रभागं **निगूह्य** अङ्गुलिभिः पिधाय दोषमाच्छाद्येति ध्वनिः । चुचुम्बे आचुम्बितवान् । नन्वेतावन्तं प्रयासम् । अनुभूय तदङ्गीकारे किं निमित्तमित्यत आह । सद्वंशजातेति । **सद्वंशे** सत्कुले **जातासूत्पन्नासु ललनासु कस्य** आभिजात्यकामस्य **पक्षः** पक्षपातो **न** । आभिजात्यकामाः पुरुषाः कुललोभाद्गुणहीनामपि गुणवतीं कृत्वा रमयन्तीत्यर्थः । 'कीचकान्वययोर्वंशः' इत्यभिधानात् मुरल्या अपि वक्त्रव्रणादिदोषरहितवंशजातत्वादिति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । प्रकृतमुरलीविशेषणसामान्याद-प्रकृतगुणहीनकुलाङ्गनाप्रतीतेः समासोक्त्या सङ्कीर्यत इति ।

---

सव्ये बाहौ निहितवदनः सज्ज्मन्यत्र हस्ते ।
भ्रूविन्यासाङ्गुलिभी रणयन् गापयन् गोपवृन्दान्
भूतग्रामं तर्हि रमयन् ब्रह्म गान्धर्वमेव ॥ - भागवते (१०/१९/६)

वामबाहुकृतवामकपोलो वल्गितभ्रुरधरार्पितवेणुः ।
कोमलाङ्गुलिभिराश्रितमार्गं गोप्य ईरयति यत्र मुकुन्दः ॥
व्योमयानवनिताः सह सिद्धैर्विस्मितास्तदुपधार्य सलज्जाः ।
काममार्गणसमर्पितचित्ताः कश्मलं ययुरपस्मृतनीव्यः ॥
- भागवते (१०/३५/१,२)

१ श्रीदेवी वेणुमाश्रित्य रेमे कृष्णमुखाम्बुजे । - इति भागवततात्पर्ये ।

''प्रकृतानां तथाऽन्येषां केवलं तुल्यधर्मतः ।
उक्तिसङ्क्षेपरूपत्वात् समासोक्तिर्हि सा मता'' इत्युक्तेः ।। ४८ ।।

**अपरवशमपीशं स्वानुरक्तं विधत्ते**
**सहजमपि विरोधं हन्ति जन्तुष्वभेद्यम् ।**
**वशयति जगदेतन्मान्यतामाप वेणु-**
**र्मधुरनिनदभाजां [1]किं न साध्यं हि लोके ।। ४९ ।।**

**व्या :** अपरवशमपीति । वेणुः परवशो न भवतीत्यपरवशः । तमपि स्वतन्त्रमपीत्यर्थः। ईशं श्रीकृष्णं **स्वानुरक्तं** स्वस्मिन्ननुरक्तं **विधत्ते** करोति । जन्तुषु गोव्याघ्रादिषु **सहजमपि** स्वाभाविकमपि अत एवाभेद्यं केनाप्यनाश्यं **विरोघं** वैरं **हन्ति** । वेणुगीतरसश्रवणपारवश्यात् जन्तवः स्वाभाविकमपि विरोधं न स्मरन्तीति भावः । गोव्याघ्रौ सर्पनकुलौ गजसिंहौ श्रीकृष्णगीत-पारवश्यात् स्ववैरं विहाय सहैव परितः स्थिता इति पौराणिकप्रसिद्धेः । एतज्जगत् विश्वं **वशयति** स्वाधीनं करोति । **मान्यतां** कविवर्ण्यताम् आप । वेणोरेतद्युक्तमित्याह । हीति। तथाहि । मधुरनिनदभाजां मधुरस्वनभाजां मृदुभाषिणामित्यर्थः । **लोके किं न साध्यम्** । वाङ्माधुर्यात् सर्वमपि कार्यं साधयितुं शक्यत इत्यर्थः । ''वाङ्माधुर्यात् सर्वलोकप्रियत्वम्'' इत्यन्यत्रोक्तेः ।। ४९ ।।

**स जयति यदुनाथः श्रावितानेकगीतः**
**करधृतवरवेणुः[2] कामिनीकामधेनुः ।**

---

१ अभ्यावहति कल्याणं विविधं वाक् सुभाषिता ।
सैव दुर्भाषिता राजन् हन्यादपि सबान्धवम् ।। - इति महाभारते (५/३४/७८)

२ वेणुगीता :
वामबाहुकृतवामकपोलो वल्गितभ्रुरधरार्पितवेणुः ।
कोमलाङ्गुलिभिराश्रितमार्गं गोप्य ईरयति यत्र मुकुन्दः ।।
व्योमयानवनिताः सह सिद्धैर्विस्मितास्तदुपधार्य सलज्जाः ।

## सुललितवनमालः सुन्दरापाङ्गलीलः

कामममार्गणसमर्पितचित्ताः कश्मलं ययुरपस्मृतनीव्यः ॥
हन्त चित्रमबलाः शृणुतेदं हारभास उरसि स्थितविद्युत् ।
नन्दसूनुरयमार्तजनानां शर्मदो यर्हि कूजितवेणुः ॥
वृन्दशो व्रजवृषा मृगगावो वेणुवाद्यहृतचेतस एत्य ।
दन्तदष्टकवला धृतकर्णानिद्रिता लिखितचित्रमिवासन् ॥
बर्हिणः स्तबकधातुपलाशैर्बद्धमल्लपरिबर्हविडम्बः ।
कर्हिचित् सबल आलि स गोपैर्गाः समाह्वयति यत्र मुकुन्दः ॥
तर्हि भुग्नगतयः सरितो वै तत्पदाम्बुजरजोऽनिलनीतम् ।
आमृशन् पयसि वा बहुपुण्याः प्रेमवेपितभुजा हतवेगाः ॥
अनुचरैः समनुवर्णितवीर्य आदिपूरुष इवाचलभूतिः ।
वनचरो गिरितटेषु चरन्तीर्वेणुनाऽऽह्वयति गाः स यदा हि ॥
वनलतास्तरव आत्मनि विष्णुं व्यञ्जयन्त इव पुष्पफलाढ्याः ।
प्रणतभारविटपा मधुधाराः प्रेमहृष्टतनवः ससृजुः स्म ॥
दर्शनीयविकचोत्पलमालादिव्यगन्धतुलसीमधुमत्तैः ।
अलिकुलैरलघुगीतमभीष्टमाद्रियद् यर्हि सन्धितवेणुः ॥
सरसि सारसहंसविहङ्गाश्चारुगीतहृतचेतस एत्य ।
हरिमुपासत ते यतचित्ता हन्त मीलितदृशो धृतमौनाः ॥
सहबलः स्रगवतंसविलासः सानुषु क्षितिभृतो व्रजदेव्यः ।
आह्वयद् यर्हि वेणुरवेण जातहर्ष उपरम्भति विश्वम् ॥
महदतिक्रमणशङ्कितचेता मन्दमन्दमनुगर्जति मेघः ।
सुहृदमभ्यवर्षत् सुमनोभिश्छायया च विदधे वितपत्रम् ॥
विविधगोपचरणेषु विदग्धो वेणुवाद्यमधुरां निजशिक्षाम् ।
तव सुतः सति यदाऽधरबिम्बे दत्तवेणुरनयत् स्वरजातीः ॥
सुमनस्तदुपधार्य सुरेशाः शक्रशर्वपरमेष्ठिपुरोगाः ।
कवय आनतकन्धरगात्राः विस्मयं ययुरनिश्चिततत्त्वाः ॥
निजपदाब्जदलैर्ध्वजवज्रनीरजाङ्कुशविचित्रललामैः ।
व्रजभुवः प्रशमयन् खुरतोदं वर्ष्मधुर्यगतिरीरितवेणुः ॥
व्रजमितेन वयं सविलासवीक्षणार्पितमनोभववेगाः ।
व्रजगतिं गमिता न विदामः कश्मलेन कबरं वसनं वा ॥

**सजलजलदमूर्तिः साधुभिर्गीतकीर्तिः ॥ ५० ॥**

**व्या : स** इति । **करेण धृतः वरः** उत्तमः **वेणुर्येन** स तथोक्तः । **श्रावितानि** अनेकानि **गीतानि** येन स तथोक्तः । [1]**कामिनीनां** गोपीनां **कामधेनुरिव** कामधेनुः अभीष्टदातेत्यर्थः । **सुललिता** अतिमनोहरा **वनमाला** यस्य स तथोक्तः। **सुन्दरा** रमणीया [2]**अपाङ्गस्य** नेत्रस्य **लीला** विलासो यस्य स तथोक्तः। **सजलः** जलसहितः **जलदो** मेघस्तद्वन्**मूर्ति**र्यस्य स तथोक्तः । **साधुभिः** सज्जनैर्गीता

---

मणिधरः क्वचिदागमयन् गा मालया दयितगन्धतुलस्या ।
प्रणयिनोऽनुचरस्य कदांऽसे प्रक्षिपन् भुजमगायत यत्र ॥
क्वणितवेणुमुप वञ्चितचित्ताः कृष्णमीयुरनु कृष्ण गृहिण्यः ।
गुणगणार्णवमनुगम्य हरिण्यो गोपिका इव विमुक्तगृहेशाः ॥
कुन्ददामकृतकौतुकवेषो गोपगोधनवृतो यमुनायाम् ।
नन्दसूनुरनघे तव वत्सो नर्मदः प्रणयिनां विजहार ॥
मन्दवायुरुपवात्यनुकूलं मानयन् मलयजस्पर्शेन ।
वन्दिनस्तमुपदेवगणा ये वाद्यगीतबलिभिःपरिवव्रुः ॥
वत्सलो व्रजगवां यदगाधो वन्द्यमानचरणः पथि वृद्धैः ।
कृत्स्नगोधनमपोह्य दिनान्ते गीतवेणुरनुगोद्धृतकीर्तिः ॥
उत्सवं श्रममपोह्य दृशीनामुद्वहन् खुररजश्छुरितस्रक् ।
दित्सयैति सुहृदाशिष एष देवकीजठरभूरुडुराजः ॥
मदविघूर्णितलोचन ईषन्मानदः स्वसुहृदां वनमाली ।
वदरपाण्डुवदनो मृदुगण्डं मण्डयन् कनककुड्मललक्ष्म्या ॥
यदुपतिर्द्विरदराजविहारो यामिनीपतिरिवैष दिनान्ते ।
मुदितवक्त्र उपयाति दुरन्तं मोचयन् व्रजगवां दिनतापम् ॥
श्री शुक उवाच -
एवं व्रजस्त्रियो राजन् कृष्णलीला नु गायतीः ।
रेमिरेऽहःसु तच्चित्तास्तन्मनस्का महोदयाः ॥ - भागवते (१०/३५/१-२६)

१ **परमाप्सरसाः पुरा याः** - म.भा.ता.नि. (१३/५०)

२ श्रीर्यत्कटाक्षबलवत्यजितं नमामि - द्वादशस्तोत्रे

कीर्तिर्यस्य स तथोक्तः । [१]**यदूनां नाथः** स्वामी **स** कृष्णः **जयति** उत्कृष्टो वर्तते। गोपीनां चित्तं पराभावयतीति वा ।

'जयेर्जयाभिभवयोराद्येऽर्थेसावकर्मकः ।
उत्कर्षप्राप्तिराद्योऽर्थो द्वितीयेऽर्थे सकर्मकः'[२]

इति वचनात् ।। ५० ।।

**चन्द्रे जृम्भति तन्मुखत्विषि मुहुर्मन्दानिले तद्वपु-**
**र्गन्धे वाति वियोगवह्निसचिवे तत्कोमलालापवत् ।**
**वेणौ कूजति पञ्चबाणविशिखैः शाणाशितैस्ताडिता**
**मानिन्योऽपि ययुर्मनोभवपितुः श्रेयोनिधिं सन्निधिम् ।।५१।।**

**व्या :** चन्द्र इति । तन्मुखस्य श्रीकृष्णवदनस्य त्विडिव त्विट् कान्तिर्यस्य सः । 'स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः' इत्यमरः । तस्मिन् **चन्द्रे जृम्भति** विकसति सति **तद्वपुषः** श्रीकृष्णशरीरस्य गन्ध इव गन्धो यस्य तस्मिन् । **वियोगवह्निसचिवे** विरहाग्निसहाये **मन्दानिले** मन्दानिलस्योद्दीपनविभावत्वादिति भावः । **मुहुर्वाति** सति सञ्चरति सति तस्य श्रीकृष्णस्य **कोमलालापवत्** मृदुवचनवत् **वेणौ कूजति** सति ध्वनति सति मानिन्यो मानवत्योऽपि सगर्वा अपीत्यर्थः । 'मानश्चित्तसमुन्नतिः' इत्यमरः । गोप्यः **शाणया** शस्त्राणां तैक्ष्ण्यापादकयन्त्रोपलेन **शितैस्तीक्ष्णैः पञ्चबाणस्य** कामस्य **विशिखैः** [३]बाणैः । 'पृषत्कबाणविशिखाः' इत्यमरः । **ताडिताः** सत्यः

---

१ त्वं पासि नस्त्रिभुवनं च तथाऽधुनेश भारं भुवो हर यदूत्तम वन्दनं ते ।
- भागवते (१०/३/४१)

२ मायावादखण्डतटीकायां टीकाकृत्पादैरुद्धृतम् ।

३ अरविन्दमशोकं च चूतं च नवमल्लिका ।
नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः ।। -अमरकोशे

कामार्ता इत्यर्थः । उद्दीपनविभावानामपि चन्द्रादीनां श्रीकृष्णसम्बन्धित्वेनैव मोहकत्वोक्त्या श्रीकृष्णस्य सौन्दर्यगुणातिशयः तासां श्रीकृष्णैकशरणत्वञ्च ध्वन्यते । श्रेयांसि निधीयन्ते अस्मिन्निति **श्रेयोनिधिः** तं श्रेयसामाश्रयमित्यर्थः । **मनोभवस्य** मनसिजस्य **पितुः** श्रीकृष्णस्य **सन्निधिं** समीपं ययुः प्रापुः । यथा पुत्रदौर्जन्यमावेदयितुं तत्पितृसमीपं गच्छन्ति तद्वदिति भावं द्योतयितुं मनोभवपितुरित्युक्तम् ।। ५१ ।।

**दोहं कापि विहाय कृष्णसुरभिं दोग्धुं समस्तेप्सितं**
**तद्बिम्बोष्ठसुधातिलुब्धहृदया भुक्तिं विसृज्यापरा ।**
**कान्तं काचन सद्गुणार्णवभृते भर्त्रे स्पृहां बिभ्रती**
**तोकं कृष्णविहारयोग्यविभवा कन्येति काचिद्गता ।। ५२ ।।**

**व्या :** वेणुनादेन विमोहितानां गोपीनां श्रीकृष्णं प्रति गमनप्रकारं वर्णयति – [१]**दोहमित्यादिना** । **कापि** काचित् स्त्री **दोहं** दोहनक्रियां **विहाय** त्यक्त्वा **कृष्णसुरभिं** कृष्णाख्यकामधेनुं **समस्तेप्सितं** सकलेष्टं **दोग्धुम्** । दुहेर्द्विकर्म-

---

१ दुहन्त्योऽभिययुः काश्चिद् दोहं हित्वा समुत्सुकाः ।
पयोऽधिश्रित्य संयावमनुद्वास्यापरा ययुः ।।
परिवेशयन्त्यस्तद् हित्वा पाययन्त्यः शिशून् पयः ।
शिश्रूषन्त्यः पतीन् काश्चिदश्नन्त्योऽपास्य भोजनम् ।।
लिम्पन्त्यः प्रमृजन्त्योऽन्या अञ्जन्त्यः काश्च लोचने ।
व्यत्यस्तवस्त्राभरणाः काश्चित् कृष्णान्तिकं ययुः ।।- भागवते (१०/२७/५-७)
ता वार्यमाणाः पतिभिः पितृभिर्भ्रातृवन्धुभिः ।
गोविन्दापहृतात्मानो न न्यवर्तन्त योषितः ।।
दुस्सहप्रेष्ठविरहतीव्रतापधुताशुभाः ।
ध्यानप्राप्ताच्युताश्लेषनिर्वृत्या क्षीणमङ्गलाः ।।
तमेव परमात्मानं जारबुद्ध्याऽपि सङ्गताः ।
जहुर्गुणमयं देहं सद्यः प्रक्षीणबन्धनाः ।। - भागवते (१०/२७/९-११)

कत्वात् । गता याता । सत्यां कामधेनौ धेनुमात्रदोहनस्यानुचितत्वादिति भावः । **अपरा** अन्या गोपी तस्य श्रीकृष्णस्य ओष्ठो बिम्बमिव **विम्बोष्ठं** तत्र या **सुधा** तत्रापि **लुब्धम्** अतिलालसं **हृदयं** चित्तं यस्याः सा सती **भुक्तिं** भोजनं **विसृज्य** गता । अमृतभोजने विद्यमाने मानुषान्नभोजनस्यायुक्तत्वादिति भावः । **काचन** गोपी सन्तो **गुणाः** ज्ञानानन्दादय एवार्णवस्तं बिभर्तीति तस्मै **भर्त्रे** सर्वदा पोषणकर्त्रे श्रीकृष्णाय **स्पृहां बिभ्रती**। 'स्पृहेरीप्सितः'[१] इति चतुर्थी। सती कृष्णं पतिमाकांक्षमाणा सतीत्यर्थः । **कान्तं** स्वपतिं विसृज्य गता । गुणभरितं कान्तं विहाय निर्गुणपुरुषग्रहणस्याप्रौढिहेतुत्वादिति भावः । अन्या स्त्री **श्रीकृष्णस्य विहारयोग्यो विभवः** तारुण्यादिसम्पत्तिर्यस्याः सा अहं **कन्येति** प्रदर्शनाय तोकं शिशुं स्तनन्धयं बालम् । 'तुक् तोकस्तनयश्च नन्दन इति प्राज्ञैरपत्यं स्मृतम्' इति हलः । विहाय गता नूनं निश्चयः । शिशुना सह गमने गतयौवनेति मां नाङ्गीकुर्यादिति धियेति भावः ॥ ५२ ॥

**गोप्यन्याऽञ्जनरूषितं स्वनयनं कुर्वन्त्यगात् सत्वरा**
**तज्ज्ञानाञ्जनतुष्टधीरिव पदोर्भूषां स्वदोष्णीतरा ।**
**सन्धायाच्युतसन्निधिं समगमत् कृष्णाङ्घ्रिसेवां सदा**
**तन्वन्त्याः करभूषणं मम भवेत् तत्पादयोर्भूषणम् ॥५३॥**

**व्या : गोपीति** । स्वनयनम् **अञ्जनेन** नेत्रालङ्करणमष्या **रूषितं** युक्तं कुर्वती अन्या **गोपी** तस्य श्रीकृष्णस्य ज्ञानं साक्षाद्दर्शनमेवाञ्जनं तेन तुष्टधीरिव सन्तुष्टबुद्धिरिव श्रीकृष्णदर्शनमेव नेत्रालङ्कारो नान्य इति निश्चित्येवेति भावः । **सत्वरा** त्वरया सहिता **अगात्** । इतरा कृष्णाङ्घ्रिसेवां **सदा तन्वन्त्याः** कुर्वत्याः **मम** तत्पादयोः श्रीकृष्णचरणयोः **भूषणं** नूपुराद्याभरणं **करभूषणं** हस्तालङ्कारो भवेत् । पादसेवाकरणसमये श्रीकृष्णपादभूषणानां करसम्बन्धादिति भावः ।

---

१ पा. सू. १/४/३६

इतीव पदोः पादयोः सम्बन्धिनीं **भूषामाभरणं स्वदोष्णि** स्वबाहौ **सन्धाय समर्प्याच्युतसन्निधिं** श्रीकृष्णसन्निधिमगमत् ययौ[1] ॥ ५३ ॥

**आनन्दपूर्णतां कृष्णः स्वानां सन्दर्शयन् विभुः ।**
**आनता अपि ताः प्रीता मानिनीरित्यचीकथत् ॥ ५४ ॥**

**व्या :** आनन्दपूर्णतामिति । **विभुः श्रीकृष्णः** स्वस्यानन्दपूर्णताम् आनन्देन पूर्णभावं **स्वानां** स्वकीयानां **सन्दर्शयन् आनता अपि** नम्रीभूता अपि **प्रीताः** आत्मानं दृष्ट्वा सन्तुष्टास्ताः **मानिनीः** गोपीः इति वक्ष्यमाणप्रकारेण **अचीकथत्** अकथयत् ॥ ५४ ॥

**[2]पितृभर्तृजनन्यादेः परिचर्या यतोऽर्थदा ।**
**व्रजत व्रजमेवातः कुरुत स्मरतां हितम् ॥ ५५ ॥**

**व्या :** पित्रिति । हे गोप्यः **पिता** जनकः **भर्ता** पतिः **जननी** माता च ता आदिर्यस्य बन्धुजनस्य तस्य **परिचर्या** सेवा यतः कारणात् **अर्थदा** पुरुषार्थदात्री अतः कारणात् व्रजं गोष्ठमेव **व्रजत** गच्छत । **स्मरताम्** । भवतीरिति शेषः । पित्रादीनां **हितं कुरुत** आचरत इत्यचीकथदिति पूर्वेणान्वयः ॥ ५५ ॥

---

१ गोप्यः किमाचरदयं कुशलं स्म वेणुर्दामोदराधरसुधासरसाग्र्यगेयम् ।
भुङ्क्ते स्वयं यदवशिष्टरसौघमार्गे हृष्टत्वचोऽश्रु मुमुचुस्तरवः सदर्भाः ॥
नद्यस्तदा तदुपधार्य मुकुन्दगीतमावर्तलक्षितमनोभवभग्नवेगाः ।
आलिङ्गनप्रमुदितोर्मिभुजैर्मुरारेर्गृह्णन्ति पादयुगलं कमलोपहाराः ॥
- भागवते (१०/१९/१०,१६)

२ पतिर्हि देवो नारीणां पतिर्बन्धुः पतिर्गतिः ।
पत्या समा गतिर्नास्ति दैवतं वा यथा पतिः ॥ - महाभारते (१३/१४६/५५)
पुत्रः सखा वा भ्राता वा पिता वा यदि वा गुरुः ।
रिपुस्थानेषु वर्तन्तो हातव्या भूतिमिच्छता ॥ - महाभारते (१/१४१/५२)

**यदीश तेषां हितमेव कार्यं तदाऽङ्ग नाज्ञापय गन्तुमस्मान् ।**
**वियोगदग्धैर्बत नः शरीरैर्मही न तां प्रेतमहीं विधेहि ॥ ५६ ॥**

**व्या : यदीति** । हे ईश स्वामिन् अङ्ग प्रिय श्रीकृष्ण यद्यस्माभिः **तेषां** पित्रादीनां **हितमेव** कार्यं तदा तर्ह्यस्मान् गन्तुं व्रजं प्रति **गन्तुं नाज्ञापय** आज्ञां न कुरु । **अस्मान् गन्तुम्** आज्ञापयसि चेत् तेषां हितं **न** भविष्यति प्रत्युतानर्थ एव भविष्यतीत्याहुः । **वियोगदग्धैरिति** । वियोगेन विरहाग्निना दग्धैर्भस्मीकृतैर्नोऽस्माकं **शरीरैस्तां मही** गोष्ठभूमिं **प्रेतमहीं** श्मशानभूमिं न **विधेहि न** कुरु[1] । बत । व्रजेति

---

१ मैवं विभोऽर्हति भवान् गदितुं नृशंसं सन्त्यज्य सर्वविषयांस्तव पादमूलम् ।
भक्त्या भजेम दुरवग्रह मा त्यजास्मान् देवो यथादिपुरुषो भजतो मुमुक्षून् ॥
यत्पत्यपत्यसुहृदामनुवृत्तिरङ्ग स्त्रीणां स्वधर्म इति धर्मविदा त्वयोक्तम् ।
अस्त्येव तत् तदपि देव वरे त्वयीशे प्रेष्ठो भवांस्तनुभृतां किल बन्धुरात्मा ॥
कुर्वन्ति हि त्वयि रतिं कुशलाः स्व आत्मन् नित्याप्रियैः पतिसुतादिभिरार्तिदैः किम् ।
तन्नः प्रसीद वरदेश्वर मा स्म छिन्द्या आशां धृतां त्वयि परामरविन्दनेत्र ॥
चित्तं सखे न भवताऽपहृतं गृहेषु यन्निर्विशत्युत करावपि गृह्यकृत्ये ।
पादौ पदं न चलतस्तव पादमूलाद्यामः कथं व्रजमथो करवाम किंवा ॥
सिञ्चाङ्ग नस्त्वदधरामृतपूरकेण हासावलोककलगीतजहृच्छयाग्निम् ।
नो चेद्वयं विरहजाग्न्युपयुक्तदेहा ध्यानेन याम पदयोः पदवीं सखे ते ॥
यर्ह्यम्बुजाक्ष तव पादतलं रमाया दत्तक्षणं क्वचिदरण्यजनप्रियस्य ।
अस्प्राक्ष्म तत्प्रभृति नान्यसमक्षमङ्ग स्थातुं त्वया विरहिता बत पारयामः ॥
श्रीर्यत्पदाम्बुजरजश्चकमे तुलस्या लब्ध्वाऽपि वक्षसि पदं किल भृत्यजुष्टम् ।
यस्याः स्ववीक्षणकृतोऽन्यसुरप्रयासस्तद्वद्वयं च तव पादरजःप्रपन्नाः ॥
तन्नः प्रसीद वृजिनार्दन तेऽङ्घ्रिमूलं प्राप्ता विसृज्य वसतीस्त्वदुपासनाशाः ।
त्वत्सुन्दरस्मितनिरीक्षणतीव्रकामतप्तात्मना पुरुषभूषण देहि दास्यम् ॥
वीक्ष्यालकावृतमुखं तव कुण्डलश्रीगण्डस्थलाधरसुधं हसितावलोकम् ।
दत्ताभयं च भुजदण्डयुगं विलोक्य वक्षः श्रियैकरमणं च भवाम दास्यः ॥
का स्त्र्यङ्ग ते कलपदामृतवेणुगीतसम्मोहिताऽऽर्यचरितान्न चलेत् त्रिलोक्याम् ।
त्रैलोक्यसौभगमिदं च निरीक्ष्य रूपं यद्गोद्विजद्रुममृगाः पुलकान्यबिभ्रन् ॥
- भागवते (१०/२७/३१-४०)

वचनश्रवणमात्रेण अङ्कुरितो वियोगाग्निर्मार्गे किञ्चित्किञ्चिदभिवृद्धः गृहं प्रति गमने नैराश्यात् सम्यगभिवृद्धोऽस्मान् धक्षति । तदा बहुसङ्ख्याकास्मद्देहहानेन सा मही त्याज्यैव स्यादिति भावः । आक्षेपालङ्कारः । 'आक्षेपः प्रतिषेधोक्तिः' इत्युक्तेः ॥५६॥

**पत्यादिसेवाऽपि भवत्प्रसादप्राप्त्यर्थमेवेति वदन्ति सन्तः ।**
**त्वत्पादमूलं विधिनोपनीताः कस्मान्मुधाऽऽज्ञापयसीश गन्तुम् ।५७।**

**व्या :** पत्यादीति । हे ईश कृष्ण **सन्तो** बुधाः । 'सन् सुधीः कोविदो बुधः' इत्यमरः । **पत्यादिसेवाऽपि** पतिपित्रादिपरिचर्याऽपि **भवत्प्रसादस्य** पादमूलप्राप्तिलक्षणमोक्षसाधनस्य **प्राप्त्यर्थमेव** सिद्ध्यर्थमेव कर्तव्येति **वदन्ति** । अधुना **त्वत्पादमूलं** भवच्चरणतलं **विधिना** भागधेयेन । 'दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः' इत्यमरः । **उपनीताः** प्रापिताः अस्मान् **कस्मात्** कारणाद्गन्तुं **मुधा** वृथा **आज्ञापयसि** । निष्पन्नफलं प्रति परम्परासाधनविध्यनुशासनस्य व्यर्थत्वादिति भावः । अत्रापि आक्षेपालङ्कारः ॥ ५७ ॥

**नानायोनिषु सम्भवे सति कति श्रीनाथ नो मातृतां**
**मान्यत्वं पितृतां प्रियत्वमगमंस्तत् कुत्र कुर्मोऽर्चनम् ।**
**वैरं वा कतिवारमेषु न कृतं विश्वान्तरात्मन् विभो**
**तन्नित्यं पितरं[1] पतिं च जननीं त्वामेव सेवामहे ॥ ५८ ॥**

**व्या :** नानेति । हे **श्रीनाथ** लक्ष्मीपते श्रीकृष्ण **नो**ऽस्माकं **नानायोनिषु सम्भवे सति** उत्पत्तौ सत्यां **कति** कियन्तो जनाः **मातृतां** मातृत्वं **मान्यतां** पूज्यत्वं **पितृतां** पितृत्वं **प्रियत्वं** भर्तृत्वम् । 'धवः प्रियः पतिर्भर्ता' इत्यमरः । **अगमन्** अगच्छन् । तत् तस्मात् कारणात् कुत्र कस्मिन् जन्मनि विद्यमानस्य पित्रादेरर्चनं

---

१ तं देवं पितरं पतिं गुरुतमं वन्दे रमावल्लभम् ॥
- इति श्रीजयतीर्थश्रीचरणाय तत्त्वनिर्णयटीकायाम् ।

**कुर्मः** करवामः । पितृत्वादेर्व्यभिचारित्वादिति भावः । न केवलं पितृत्वादेर्व्यभिचरितत्वात् तत्सेवा व्यर्था किन्त्विदानीन्तनपित्रादिसेवाऽपि एतज्जन्मनि पितृत्वं प्राप्तस्यैव जन्मान्तरे शत्रुत्वप्राप्तेः सम्भावितत्वेन तदानीन्तनवैरस्य च तुल्यायव्ययत्वादपीत्याहुः । वैरमिति । **एषु** पित्रादिषु **वैरं वा कतिवारं** कियद्वारं **न कृतम्** । बहुधा वैरकरणस्य सम्भावितत्वादिति भावः । तत् तस्माद्यस्मात् पितृत्वादेर्व्यभिचरितत्वात् मानावमानयोस्तुल्यायव्ययत्वाच्च तत्सेवा व्यर्था तस्मात् कारणादित्यर्थः । हे **विश्वान्तरात्मन्** जगदन्तरात्मन् **विभो** समर्थ श्रीकृष्ण **नित्यं** सर्वदा **पितरं पतिं च जननीं** मातरञ्च **त्वामेव सेवामहे** परिचरामहे परिचरामः । पूर्वोक्तदोषद्वयाभावादिति भावः । काव्यलिङ्गमलङ्कारः ॥ ५८ ॥

**जगत्पिता त्वं न पिता किमासां जगत्प्रसूतिर्जननी न किं नः ।**
**जगत्पतिः किं न पतिः सखे नस्तदन्यजुष्ट्याऽलमरिष्टवृष्ट्या ।५९।**

**व्या :** श्रीकृष्णस्य पतित्वादिकमुपपादयन्त्यो वदन्ति – **जगत्पितेति** । हे **सखे** श्रीकृष्ण **जगत्पिता** विश्वजनकस्त्वम् **आसां** जगदन्तर्गतानां गोपीनां **नः पिता न किम्** । **जगतो** विश्वस्य **प्रसूति**रव्यवधानेनोत्पत्तिर्यस्मात् स तथा **त्वं नः जननी** माता **न किम्** । **जगत्पति**स्त्वं नोऽस्माकं **पतिः न किं** । कस्मान्न भवसि यत् यस्मात् पितृत्वादिकं त्वय्येवास्ति । तत् तस्मात् कारणादरिष्टस्यानिष्टस्य वृष्टिर्वर्षं यस्याः तया अन्यजुष्ट्या त्वद्व्यतरिक्तपित्रादिसेवयाऽलम् । अन्यसेवा माऽस्त्वित्यर्थः । त्वत्परित्याग एव पित्रादिपरित्यागदोषापत्तेरिति भावः । **'यस्मिन् विरुद्धगतयोऽप्यनिशं पतन्ति'**[१] इति स्मृतेः । त्वत्सहजपत्न्या अपि लक्ष्म्याः स्वेतरसर्वकर्ता त्वं कर्तैवेति युक्तेश्च त्वयि पितृत्वं पतित्वं च न विरुद्धमिति गोपीनां हृदयम् ॥५९॥

**कान्तः स एव यः स्थैर्यशौर्यसौन्दर्यसागरः ।**
**सुखस्यान्तकरं कान्तमपरं तर्कयामहे ॥ ६० ॥**

१ भागवते ४/९/१६

**व्या :** कान्त इति । **यः** पुमान् **स्थैर्य**मचाञ्चल्यं **शौर्यं** पराक्रमः **सौन्दर्यं** लावण्यमेतैः **सागर** इव स्थैर्यादिगुणभरित इत्यर्थः । **स एव कान्तः** प्रियो भवेत्। **अपरं** अन्यं **कान्तं सुखस्यान्तकरं तर्कयामहे** तर्कयामः । कं सुखं तस्यान्तो नाशो यस्मादिति व्युत्पत्तेरिति भावः ।। ६० ।।

**यः सारभागमनुभूय शरीरभाजां**
**शिष्टं प्रयच्छसि किलारसमल्पभोग्यम् ।**
**दुःखातिदूर गतपार सुखैकभोक्तु-**
**स्तस्येश योग्यमखिलं तव तर्कयामः ।। ६१ ।।**

**व्या :** परदारगमनं निषिद्धं कथं कर्तुं शक्यत इत्याशङ्क्य अयं निषेधो लौकिकानां नत्वलौकिकस्य तवेत्याहुः – **य** इति । हे ईश यस्त्वं **सारभागं** शरीरिभिरनुभूयमानं विषयसारांशम**नुभूय** भुक्त्वा । 'शुभं पिबत्यसौ नित्यम्'[१] इति स्मृतेः । **शिष्टम्** उच्छिष्टम् **अरसं** रसरहितम् **अल्पभोग्यं** किञ्चिद्भोग्यं विषयजातं शरीरभाजां शरीरिणां प्रयच्छसि किल किलेत्युक्तेऽर्थे प्रमाणप्रसिद्धिं द्योतयति । **दुःखादिदूरं** दुःखासंस्पृष्टं **गतपारं** अनन्तमित्यर्थः । यत्सुखं तस्य एकभोक्तुर्मुख्यभोक्तुस्तस्य **तव अखिलं** वस्तु भोग्यं भोगार्हं **तर्कयामः** । अखिलसारभोक्तृत्वात् पतिभिरस्माभिः सह क्रियमाणभोगस्यापि मुख्यतः त्वमेव भोक्तेति । वयमपि तवैव भोग्या इत्यस्मन्निषेधस्तव न युक्त इति भावः ।। ६१ ।।

**धर्मो न वोऽयं श्रुतिसङ्गताक्ष्यो धर्मो नवोऽयं श्रुतिसङ्गताक्ष ।**
**माऽन्यं भजध्वं रमणं विहाय मान्यं भजामो रमणं विहाय ।।६२।।**

**व्या :** आपाततोऽनङ्गीकारमन्ततोऽङ्गीकारं एकयैवोक्त्या गूढाभिसन्धिना वदतः श्रीकृष्णस्य अभिसन्धिं जानन्तीनां गोपीनाम् उक्तिप्रत्युक्तीः वर्णयति – **धर्म** इति ।

---

१ 'शुभं पिबत्यसौ नित्यं नाशुभं स हरिः पिबेत् ।
पूर्णानन्दमयस्यास्य चेष्टा न ज्ञायते क्वचित्' ।। इति पाद्मे ।।
- इति ब्रह्मसूत्रभाष्ये (१/२/११)

हे **श्रुतिसङ्गताक्ष्यः** श्रुतिभिर्वेदैः सङ्गतानि सम्बद्धानि अक्षीणि यासां तास्तासां सम्बुद्धिः । ''जुगुप्सितञ्च सर्वत्र त्वौपपत्यं कुलस्त्रियः''[१] इत्याद्यागमज्ञा इत्यर्थः । **अयं** परपुरुषपरिग्रहः **वो** युष्माकं **धर्मो न** भवति । तस्माद्गन्तव्यमित्यनङ्गीकारो बाह्यः । आन्तरस्तु हे **श्रुतिसङ्गताक्ष्यः** श्रुतिभिः श्रवणैः सङ्गतानि अक्षीणि लोचनानि यासां ताः । 'बहुव्रीहौ सक्थ्यक्ष्णोः' इति[२] षच् । षिद्गौरादिभ्यश्चेति[३] ङीप् । आकर्णान्तलोचना इति गोपीनां चित्ताकर्षणार्थं स्तुतिः । 'श्रवणाम्नाययोः श्रुतिः' इत्युभयत्रापि यादवः । अयं पत्यादिकं परित्यज्य मत्सेवैव कर्तव्येति भवतीभिरुक्तो धर्मो नवः नूतनः अपूर्व इत्यर्थः । ''सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज''[४] इति प्रमाणप्रसिद्धत्वादिति भावः । इति कृष्णोक्ताः गोप्यः श्रीकृष्ण-स्याभिसन्धिमुद्धाटयन्ति । धर्म इति । श्रुतिभ्यां श्रोत्राभ्यां सङ्गते अक्षिणी यस्य स तथा । हे **श्रुतिसङ्गताक्ष** कर्णान्तायतलोचन श्रीकृष्ण अयं गोपीनां प्रेमोद्रेकोत्सवात् त्वत्सेवारूपो धर्मो नवः नूतनः विषयासक्तैरज्ञातचरः । पुनर्गुढाभिसन्धिः कृष्णो वदति । **माऽन्यमिति** । **रमणं** स्वपतिं **विहायान्यं मा** भजध्वम् । इदं तु बाह्यम् । **रमणं विहाय मान्यं** जगत्पूज्यं मामेव **भजध्वम्** औपपत्यनिषेधस्तु लौकिक-पुरुषनिषेधपर इति हृदयम् । गोप्योऽपि हृदयमुद्धाटयन्ति । मान्यमिति । हे कृष्ण **रमणं** पतिं **विहाय मान्यं** पूज्यं त्वामेव **भजामः** ॥ ६२ ॥

---

१ दुश्शीलो दुर्भगो वृद्धो जडो रोग्यधनोऽपि वा ।
पतिः स्त्रीभिर्न हातव्यो लोके शुचिरपातकी ॥
अस्वर्ग्यमयशस्यं च फल्गु कृच्छ्रं भयावहम् ।
जुगुप्सितं च सर्वत्र त्वौपपत्यं कुलस्त्रियः ॥
श्रवणाद्दर्शनाद्ध्यानान्मयि भावोऽनुकीर्तनात् ।
न तथा सन्निकर्षेण प्रतियात ततो गृहान् ॥ - भागवते (१०/२७/२५-२७)

२ पा.सू. ५/१४/११३

३ पा.सू. ४/१/४१

४ गीता १८/६६

**हिताहिताज्ञा बत यूयमङ्गना**
**यतो ह्यधर्मे मतिरस्ति निश्चला ।**
**हिताहितज्ञा वयमच्युत प्रभो**
**यतो ह्यधर्मे मतिरस्ति निश्चला ॥६३॥**

**व्या :** हिताहितेति । हे अङ्गनाः गोप्यः **यूयं** हितम् इष्टं अहितम् अनिष्टम् च न जानन्तीति **हिताहिताज्ञाः** । कुतः **यतः** कारणात् **अधर्मे** निषिद्धे **निश्चला** दृढा मतिर्बुद्धिरस्ति हि । **बत** खेदे इति बाह्यम् । हे **अङ्गनाः** शुभाङ्ग्य इति स्तुतिः । यूयं हितेन सर्वभूतानां हितोपदेष्ट्रा पितामहेनाहिता दत्ता आज्ञा यासां ताः । ''जनिष्यते तत्प्रियार्थं सम्भवन्तु सुरस्त्रियः''[1] इति भागवतवचनादिति भावः । कुतः यतः कारणात् **अस्य** अकारवाच्यस्य परमात्मनः सम्बधिनि । 'अ इति ब्रह्म' इति श्रुतेः[2] । धर्मे वैष्णवधर्मे, इत्यर्थः । निश्चला मतिरस्तीति हृदयम् । हृदयमुद्धाटयन्ति । हे **अच्युत प्रभो** श्रीकृष्ण **वयं हिताहितज्ञाः यतः अधर्मे निश्चला मतिरस्ति** । अक्षरार्थस्तूक्तः । वाकोवाक्यमलङ्कारः ''उक्तिप्रत्युक्तिचातुर्यं वाकोवाक्यम्'' इत्युक्तेः ॥ ६३ ॥

**वाग्वैखरीमिव निरीक्ष्य स बल्लवीनां**
**प्रीतः [3]प्रियोक्तिपरिरम्भणचुम्बनाद्यैः ।**
**सुप्तं प्रबोध्य मदनं समभूदहृश्यः**
**सत्यां विधातुमिव कामिविदूरतां स्वाम् ॥ ६४ ॥**

---

१ भागवते १०/१/२३

२ ऐतरेयोपनिषत् १३/८/६

३ वाहुप्रसारपरिरम्भकरालकोरुनीवीस्तनालभननर्मकराग्रपातैः ।
क्ष्वेलावलोकहसितैर्व्रजसुन्दरीणामुत्तम्भयन् रतिपतिं रमयाञ्चकार ॥
- भागवते (१०/२७/४६)

**व्या :** **वाग्वैखरीमिति** । **स कृष्णः वाग्वैखरीं** परवचनेनैव परस्योत्तररूपां वाक्प्रौढिं **निरीक्ष्येव प्रीतः** सन्तुष्टः सन् **प्रियोक्तिपरिरम्भणचुम्बनाद्यैः** प्रिय॰ ाचनालिङ्गनचुम्बनादिभिः सुप्तमनाविर्भूतं मदनं कामं प्रबोध्याविर्भूतं कृत्वा **स्वां** स्वकीयां **कामिविदूरतां** कामिजनाप्राप्यतां सत्याम् अबाध्यां **विधातुं** कर्तुमिव **बल्लवीनां** गोपीनाम् **अदृश्यः समभूत्** अन्तर्दधे । शान्तावस्थायां ताभिः सह सम्भाषणं कृत्वा तासां कामितायां **सत्याम्** अदृश्यत्वे स्वस्य कामिविदूरत्वं स्पष्टं भवतीति भावः । अत एव **सुप्तं प्रबोद्ध्ये**त्युक्तम् ॥ ६४ ॥

**ताः [1]पत्यपत्यभवनेषु विरक्तचित्ताः**
**श्रीपुण्डरीकनयनेक्षणकार्यसक्त(क्ता)ः ।**
**आरण्यकेषु मुनिवर्ग इवातिमुग्धा-**
**श्चेरुर्विमृग्य बहुधा तमरण्यकेषु[2] ॥ ६५ ॥**

**व्या :** **ता इति** । **पत्यपत्यभवनेषु** पतिपुत्रागारेषु **विरक्तं** रागरहितं **चित्तं** यासां **ताः** विषयद्वेषावस्थां प्राप्ता इत्यर्थः । **पुण्डरीकवत्** श्वेताम्बुजवत् । **पुण्डरीकं** सिताम्भोज इत्यमरः । **नयने** यस्य श्रीपुण्डरीकाक्षस्य श्रीकृष्णस्य ईक्षणमेव दर्शनमेव कार्यं कर्तव्यं तत्र सक्ता आसक्ता **अतिमुग्धा** अतिमनोहराः । मोहावस्थां प्राप्ता इति **वा** । ताः गोप्यः **आरण्यकेषु** विपिनेषु तं श्रीकृष्णं बहुधा विमृग्यान्विष्य चेरुः इतस्ततः पर्यटनं चक्रुः । कथमिव पत्यपत्यभवनेषु विरक्तचित्तः वैराग्य-रूपप्रथमसाधनवान् **श्रीपुण्डरीकनयनेक्षणकार्यसक्तः** अपरोक्षज्ञानार्थीत्यर्थः । **मुनिवर्गः** मुनिसमूहः **आरण्यकेषु** उपनिषत्स्विव ॥ ६५ ॥

---

१ यत्पत्यपत्यसुहृदामनुवृत्तिरङ्ग स्त्रीणां स्वधर्म इति धर्मविदा त्वयोक्तम् ।
अस्त्येव तत् तदपि देववरे त्वयीशे प्रेष्ठो भवांस्तनुभृतां किल बान्धवात्मा ॥
- भागवते (१०/२७/३२)

२ गायन्त्य उच्चैरमुमेव सङ्गता विचेरुरुन्मत्तकवद् वनाद् वनम् ।
पप्रच्छुराकाशवदन्तरं बहुर्भूतेषु सन्तं पुरुषं वनस्पतीन् ॥ - भागवते (१०/२८/४)

**सममुदितविमोहावस्थया कापि मुग्धाः**
**समुदितघनचिन्तावस्थया कापि शान्ताः ।**
**वशयितुमिव कान्तं योगिपूगैकचिन्त्यं**
**मधुरवचनदक्षास्तं जगुस्ताः परोक्षम् ॥ ६६ ॥**

**व्या : सममुदितेति** । समं यथा भवति तथा उदिता सञ्जाता **विमोहावस्था** उन्मादावस्था तया **कापि** कचित् **मुग्धाः** वक्तव्यावक्तव्यविवेकशून्याः । **समुदिता** समुत्पन्ना **घना** निबिडा **चिन्तावस्था** ध्यानावस्था तया **कापि** कचित् **शान्ता** विवेकवत्यस्ता गोप्यः । **योगिपूगैकचिंत्यं** मुनिवृन्दैर्मुख्यतो ध्येयं **कान्तं** श्रीकृष्णं **वशयितुमिव** वशीकर्तुमिव । इवेत्यनेन योगिभिरपि ध्येयस्यास्य वशीकरणं दुःसहमिति द्योतयति । **मधुरवचनदक्षाः** मधुरोक्तौ समर्थाः सत्यः **परोक्षम**दृश्यं श्रीकृष्णं **जगुः** [१]गानं चक्रुः ॥ ६६ ॥

---

१ गोपिगीतम्

जयति तेऽधिकं जन्मना व्रजः श्रयत इन्दिरा साधु तत्र हि ।
दयित दृश्यतां त्वां दिदृक्षतां त्वयि धृतासवस्त्वा विचिन्वते ॥ १ ॥
व्रजजनार्तिहन् वीरयोषितां निजजनस्मयध्वंसनस्मित ।
भजसखे भवे किङ्करीः स्म नो जलरुहाननं चारु दर्शयन् ॥२॥
शरदुदाशये साधु जातसत्सरसिजोदरश्रीमुषा दृशा ।
सुरतनाथ ते शुल्कदासिका वरद निघ्नतो नेह किं वधः ॥ ३ ॥
विषजलाशयाद्व्यालराक्षसाद्वर्षमारुताद्वैद्युतानलात् ।
वृषमयान्द्वयाद्विश्वतोमुखाद्वृषभ ते वयं रक्षिता मुहुः ॥ ४ ॥
न खलु गोपिकानन्दनो भवानखिलदेहिनामन्तरात्मदृक् ।
विखनसार्चितो विश्वगुप्तये सख उदेयिवान् सात्वतां कुले ॥ ५ ॥
विरचिताभयं वृष्णिवर्य ते शरणमीयुषां संसृतेर्भयात् ।
करसरोरुहं कान्त कामदं शिरसि धेहि नः श्रीकरग्रहम् ॥ ६ ॥
प्रणतदेहिनां पापकर्शनं तृणचरानुगं श्रीनिकेतनम् ।

फणिफणार्पितं ते पदाम्बुजं कृणु कुचेषु नः कृन्धि हृच्छयम् ॥ ७ ॥
मधुरया गिरा वल्गुवाक्यया बुधमनोज्ञया पुष्करेक्षण ।
विधिकरीरिमा वीर मुह्यतीरधरसीधुनाऽऽप्याययस्व नः ॥ ८ ॥
तव कथामृतं तप्तजीवनं कविभिरीडितं कल्मषापहम् ।
श्रवणमङ्गलं श्रीमदाततं भुवि गृणन्ति ते भूरिदा जनाः ॥ ९ ॥
प्रहसितं प्रिय प्रेमवीक्षणं विहरणं च ते ध्यानमङ्गलम् ।
रहसि संविदो या हृदिस्पृशः कुहक नो मनः क्षोभयन्ति हि ॥ १० ॥
चलसि यद् व्रजाच्चारयन् पशून् नलिनसुन्दरं नाथ ते पदम् ।
शिलतृणाङ्कुरैः सीदतीति नः कलिलतां मनः कान्त गच्छति ॥ ११ ॥
दिनपरिक्षये नीलकुन्तलैर्वनरुहाननं बिभ्रदावृतम् ।
वनरजस्वलं दर्शयन् मुहुः मनसि नः स्मरं वीर यच्छसि ॥ १२ ॥
प्रणतकामदं पद्मजार्चितं धरणिमण्डनं ध्येयमापदि ।
चरणपङ्कजं शन्तमं च ते रमण नस्तनेष्वर्पयाधिहन् ॥ १३ ॥
सुरतवर्धनं शोकनाशनं स्वरितवेणुना सुष्ठु चुम्बितम् ।
इतररागविस्मारणं नृणां वितर वीर नस्तेऽधरामृतम् ॥ १४ ॥
अटति यद्भवानह्नि काननं त्रुटि युगायते त्वामपश्यताम् ।
कुटिलकुन्तलं श्रीमुखं च ते जडवदीक्षतां पक्ष्मनुद्दृशाम् ॥ १५ ॥
पतिसुतान्वयभ्रातृबान्धवानतिविलङ्घ्य ते ह्यच्युतागताः ।
गतिविदस्तवोद्गीतमोहिताः कितव योषितः कस्त्यजेन्निशि ॥ १६ ॥
रहसि संविदं हृच्छयोदयं प्रहसिताननं प्रेमवीक्षणम् ।
बृहदुरःश्रियो वीर वीक्ष्य ते मुहुरतिस्पृहा मुह्यते मनः ॥ १७ ॥
व्रजवनौकसां व्यक्तिरङ्ग ते वृजिनहन्त्र्यलं विश्वमङ्गलम् ।
भज मनाक् च नस्त्वत्सृहात्मनां स्वजनहृद्रुजां यन्निषूदनम्॥ १८ ॥
श्रीशुक उवाच
इति गोप्यः प्रगायन्त्यः प्रलपन्त्यश्च चित्रधा ।
रुरुदुः सुस्वरं राजन् कृष्णदर्शनलालसाः ॥ १९ ॥
तासामाविरभूच्छौरिः स्मयमानमुखाम्बुजः ।
पीताम्बरधरः स्रग्वी साक्षान्मन्मथमन्मथः ॥ २० ॥

रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि
प्रेम्णा चिन्तयतां विचित्रविमलश्लाघ्यार्थसन्दायिनि ।
सञ्जाते भुवि रुग्मिणीशविजये सद्वादिराजोदिते
सञ्जातः सुरमण्डलीषु महितः सर्गश्च षष्ठो मुदाम् ॥ ६७ ॥

॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थश्रीचरणविरचिते
श्रीरुग्मिणीशविजये महाकाव्ये षष्ठः सर्गः ॥ ६ ॥

व्या : रोम्णामिति । व्याख्यातमेतत् ॥ ६७ ॥

॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थश्रीचरण-
विरचितस्य श्रीरुग्मिणीशविजयमहाकाव्यस्य व्याख्यायां श्रीनारायण-
भट्टविरचितायां श्रीगुरुभावप्रकाशिकायां षष्ठः सर्गः ॥

*****

# सप्तमः सर्गः

**यदुतिलक गतोऽस्मान् धैर्यमात्रेण हित्वा**
**त्यजसि कथमयाश्चाप्राप्तसङ्गं न चेत् त्वम् ।**
**तदिदमुचितमस्य श्रीभृतो यत्समर्था**
**चरणकमलधूलिस्तन्वि तन्वीं विधातुम् ॥ १ ॥**

रासक्रीडारसोत्कण्ठमानिनीमानसालयः ॥
पद्मापद्मभवस्तुत्यः कृष्णः पुष्णातु मां विभुः ॥ १ ॥
हयग्रीवकृपादृष्टिदृष्टेन कृतिना मया ॥
गुरूपदेशातिशयाद्विशेषोऽप्यत्र लिख्यते ॥ २ ॥

**व्या : यदुतिलकेति** । हे **यदुतिलक** हे श्रीकृष्ण । **अस्मान् धैर्यमात्रेण** एताः किञ्चिदायासयिष्यामीति धाष्टर्यमालम्ब्यैव नत्वस्मत्परित्यागसामर्थ्यसद्भावेनापीत्यर्थः ॥ **हित्वा** त्यक्त्वा गतोऽसि यथा त्वद्विरहासहिष्णुत्वमस्माकं तथाऽस्मद्विरहासहिष्णुत्वं तवाप्यस्तीति भावः । **न चेत्** एवं न चेत् **त्वम्** अयाश्चाप्राप्तसङ्गम् अप्रार्थनालब्धसुन्दरीसम्बन्धं **कथं त्यजसि** "स्वयमेवागता वराः" इत्युक्तेः । इति मोहावस्थापन्नानां वचनम् । एतादृशीः प्रति शान्तावस्थापन्ना काचन गोपी वदति – **तदिदमिति** । हे **तन्वि** कृशाङ्गि । जात्येकवचनम् । उरसि श्रियं बिभर्तीति **श्रीभृत् तस्य** श्रीकृष्णस्य **तदिदम**स्मत्परित्यागलक्षणं कार्यम् **उचितं** युक्तमेव । लक्ष्मीपतेः किं त्वयेति भावः । **यद्**यस्मात् कारणादस्य श्रीकृष्णस्य **चरणकमलधूलिः** पादाम्बुजरेणुः **तन्वीं** [१]नारीं **विधातुं** कर्तुं **समर्था** भवति ।

---

१ अथो अहल्यां पतिनाऽभिशप्तां प्रधर्षणादिन्द्रकृताच्छिलीकृताम् ।
स्वदर्शनान्मानुषतामुपेतां सुयोजयामास स गौतमेन ॥
बलं स्वभक्तेरधिकं प्रकाशयन्ननुग्रहं च त्रिदशेष्वतुल्यम् ।
अनन्यभक्तां च सुरेशकाङ्क्षया विधाय नारीं प्रययौ तयाऽर्चितः ॥
- म.भा.ता.नि. (४/१०,११)

रामावतारे शिलीभूताया योषित्करणात्। अनेन राम एव कृष्ण इति सूच्यते। पादधूलिमात्रेणास्मत्तोऽप्यधिकस्त्रीकरणसमर्थस्य किमस्माभिः कृत्यमिति भावः ॥१॥

**अश्वत्थद्रुम नः प्रियः किल भवन्मध्ये[1] सदा वर्तते**
**तस्मै ज्ञापय बल्लवीजनदशां कष्टामदृष्टप्रियाम्।**
**नो चेत् त्वद्धृदि लग्नमग्निमथवा त्वत्संस्थितिं तेऽभिधां**
**नो देह्यङ्ग वियोगरोगरहितां त्वं मर्त्यतामाश्रय ॥ २ ॥**

**व्या :** श्रीकृष्णान्वेषणायेतस्ततो वने चरन्त्यो मोहावस्थां प्राप्ता अश्वत्थादिवृक्षान् प्रति वदन्ति – **अश्वत्थेत्यादिना** । हे **अश्वत्थद्रुम** [2]पिप्पलतरो । नोऽस्माकं **प्रियः** प्राणेश्वरः श्रीकृष्णः **भवन्मध्ये** त्वदुदरे **सदा वर्तते** तिष्ठति किल । किलेत्यनेन

'मूलतो ब्रह्मरूपाय मध्यतो विष्णुरूपिणे ।
अग्रतः शिवरूपाय वृक्षराजाय ते नमः ॥'[3]

इति स्मार्तप्रसिद्धिं द्योतयति । **भवन्मध्ये वर्तत** इत्यनेन उक्तवचने रूपशब्दस्य प्रतिमार्थकत्वमुक्तं भवति । ततश्च किमित्यत आहुः – **तस्मा** इति । **अदृष्टः प्रियो** यस्यां सा ताम् । अत एव **कष्टां** क्लेशदायिनीं **बल्लवीजनानां** गोपीजनानां **दशाम्** अवस्थां **तस्मै** त्वन्मध्यस्थिताय **ज्ञापय** विज्ञापय भवद्विरहेण गोप्योऽतिकष्टमापन्ना

---

पातिव्रत्यपरिक्षयाख्यललनादोषाङ्कुरच्छेदनं
पापाणीकृतगौतमार्यवनिताविज्ञानदानक्षमम् ।
साम्राज्योचितभोग्यभोगविरसं श्रीराम तेऽङ्घ्रिं श्रये
नैर्मल्याय निरन्तरस्मृतिकृते वैराग्यभाग्याय च ॥ - तीर्थप्रबन्धे (४/२८)

१ अश्वत्थः सर्ववृक्षाणाम् - गीता (१०/२७)
'मध्यस्थकृष्ण परिपालय भक्तवर्गम्' - तीर्थप्रबन्धे (१/६९)

२ दृष्टो वः कच्चिदश्वत्थ प्लक्ष न्यग्रोध किंशुक ।
नन्दसूनुरिहागात् किं सह हासावलोकनैः ॥ - भागवते (१०/२८/५)

३ ब्रह्माण्डपुराणान्तर्गत-अश्वत्थनारायणस्तोत्रवचनम् ।

इति कथयेत्यर्थः । **नो चेत्** मया किमर्थं कथनीयमिति अस्मानुपेक्ष्य न ज्ञापयसि चेत् । **अङ्ग** अश्वत्थ । **त्वद्धृदि** त्वदुदरे **लग्नं** सम्बद्धं स्थितमित्यर्थः । **अग्निं** वह्निम् । वह्निगर्भः शमीगर्भ इत्यश्वत्थस्याग्निगर्भत्वोक्तेरिति भावः । **अथवा त्वत्संस्थितिं** तव संस्थां तरुत्वम् इत्यर्थः । **अथवा ते तवाभिधां** अश्वत्थ इति नाम **नो देहि** । ततः किमित्यत आहुः – **वियोगरोगरहितामिति** । **वियोग** एव **रोगस्तेन रहिताम्** । इदं च विशेषणं सर्वत्र सम्बद्ध्यते । त्वद्दत्ताग्निनाऽस्माकं भस्मीभावे तरुत्वावस्थायां वा श्वो न तिष्ठतीत्यश्वत्थ इति नामधारणे वा अद्यैव मरणप्राप्त्या वियोगस्याकिञ्चित्करत्वात् इति भावः । श्वो न तिष्ठतीत्यश्वत्थ इत्यत्र वह्निरश्वरूपेणात्र तिष्ठतीत्यश्वत्थः । इति नैघण्टुकनिरुक्तवन्निरुक्तत्वात् सकारलोपः । मदीयं सर्वं युष्मभ्यं दत्तं चेत् मया कथं स्थातव्यमित्यत आहुः – **त्वमिति** । **त्वं मर्त्यतामस्मदीयमनुष्यतामाश्रय** भज । श्रीकृष्णकृपाविधुराणां मरणं वा वरमिति भावः॥२ ॥

**मूलासेचनपूर्वकं परिसरंस्त्वामार्द्रवस्त्रः पुमान्**
**स्वाभीष्टं लभते किल प्रतिवनं विष्वक् चरन्तीर्बत ।**
**कायप्रेशवशात् समुत्थितघनस्वेदाम्बुनाऽऽर्द्राम्बरा-**
**श्चास्रौघैः किमुपेक्षसे विदधतीरार्द्रां भवद्वेदिकाम् ॥ ३ ॥**

**व्या : मूलासेचनेति** । आर्द्रं क्लिन्नं **वस्त्रं** यस्य स **पुमान्** पुरुषः **मूले** अङ्घ्रिप्रदेशे **आसेचनपूर्वकं** जलप्रक्षेपपूर्वकं यथा तथा **परिसरन्** परितो गच्छन् । प्रदक्षिणीकुर्वन्नित्यर्थः । **स्वाभीष्टं** स्वस्य पुत्रधनाद्यभीष्टं **लभते** प्राप्नोति **किल** । किलेत्यनेन स्मार्तप्रसिद्धिं[१] द्योतयति । **बत** आश्चर्ये । हे अश्वत्थानेनैव विधिना प्रदक्षिणीकुर्वन्तीषु अस्मासु उपेक्षा किमर्थं क्रियत इत्याहुः – **प्रतिवनमिति**।

---

१ वर्धितैः सेवितैः किं तैः सत्यश्वत्थेऽन्यपादपैः ।
वर्धितो नरकाद्रक्षेत् स्पृष्टोऽरिष्टानि हन्ति यः ॥ - इति स्मृत्युक्तिः ।

वने वने **प्रतिवनम्** । [१]'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावः । **विष्वक् समन्ताच्चरन्तीः** कृष्णान्वेषणार्थं परितो गच्छन्तीः । न केवलं तवैव प्रदक्षिणमस्माभिः क्रियते किन्तु त्वज्जातीयानामपीति भावः । नन्वार्द्रवस्त्राद्यङ्गाभावे कथं फलं भविष्यतीत्यत आहुः – **कायेति** । **कायप्रेशवशात्** व्यायामजन्यशरीरायासवशाद्धेतोः **समुत्थितं यद्धनं** बहुतरं **स्वेदाम्बु** तेनार्द्राणि क्लिन्नान्यम्बराणि यासां ताः अनेनार्द्राम्बरता सम्पादिता ।**अस्रौघैः** श्रीकृष्णविरहजनिताश्रुप्रवाहैः। 'रोदनं चास्रमश्रु च' इत्यमरः । **भवतस्तव वेदिकां** वितर्दिम् । 'स्याद्वितर्दिस्तु वेदिका' इत्यमरः । **आर्द्रां** क्लिन्नां **विदधतीः** कुर्वतीः । न केवलं मूलमात्रस्यासेचनं कृतं किंत्वाधारबन्धस्यापीति भावः । एवं साङ्गं प्रदक्षिणकर्म चरतीर्नः **किं किमर्थमुपेक्षसे** । श्रीकृष्णसन्दर्शनलक्षणफलं किमर्थं न ददासीति भावः । किंशब्द आक्षेपे । वैदिकस्य साङ्गस्य कर्मणः [२]फलवैकल्ये वेदाप्रामाण्यप्रसङ्गादिति भावः । अत्र मूलासेचनाद्यसम्बन्धेऽपि सम्बन्धोक्त्या **सम्बन्धातिशयोक्त्यालङ्कारः** । किंशब्देनोपेक्षां न कुर्वित्याक्षेपात् **आक्षेपालङ्कारेण** सङ्कीर्यते ।। ३ ।।

**न वदति बत सख्यो नः प्रियं विप्रियं वा**
**न दिशति फलमिष्टं स्वैरमाराधितोऽपि ।**

---

१ पा.सू. २/१/१४

२ ओं दृश्यते तु ओं ।। - ब्रह्मसूत्रे (२/१/५)

अधिकारिणां फलम् । भविष्यत्पुराणे च-
'ऋग्यजुः सामाथर्वाख्या मूलरामायणं तथा ।
भारतं पञ्चरात्रं च वेदा इत्येव शब्दिताः ।।
पुराणानि च यानीह वैष्णवानि विदो विदुः ।
स्वतःप्रामाण्यमेतेषां नात्र किञ्चिद्विचार्यते ।।
यत् तेषूक्तं न दृश्येत पूर्वकर्मात्र कारणम् ।
नाप्रामा ण्यं भवेत् तेषां दृश्यते ह्यधिकारतः ।।
इतः प्रामाण्यमन्येषां न स्वतस्तु कथञ्चन ।
अदृश्योक्तौ ततस्तेषामप्रामाण्यं न संशयः' इति ।। - ब्रह्मसूत्रभाष्ये (२/१/५)

**हरिचरणविदूराः को नु सम्भाषयेन्नः**
**सुकृतमपि तदाज्ञारूपमापादयेत् किम् ॥ ४ ॥**

**व्या : न वदतीति** । हे **सख्यः** अयमश्वत्थो **नोऽस्माकं प्रियं विप्रियं वा न वदति** । **बत** खेदे । **स्वैरं** यथेष्टम**माराधितोऽपि** पूजितोऽपि **इष्टम**भिलषितं श्रीकृष्ण-दर्शनलक्षणं **फलं न दिशति** न ददाति । इति मुग्धावचनम् । काचनाऽर्धमुग्धा वदति – **हरिचरणौ विदूरे** यासां ताः । श्रीकृष्णवैमुख्यं गता इत्यर्थः । **नोऽस्मान् को नु** को वा **सम्भाषयेत्** । **तदाज्ञारूपं** श्रीकृष्णाज्ञारूपं **सुकृतमपि** पुण्यमपि **किं** फलम् **आपादयेत्** सम्पादयेत् । हरिविमुखः सर्वजनवैमुख्यं प्राप्नोतीति भावः । तरुत्वान्न वदतीत्यज्ञानादस्मिन्नंशे मोहः हरिविमुखानां किमपि न भवतीत्यंशे विवेकः । अत एवावतारिकायामर्धमुग्धेत्युक्तम् । **विभावनमलङ्कारः** ॥ ४ ॥

**प्रेष्ठं स्वान्तरसंस्थितं न दिशतीत्यार्ताः समस्ता भृशं**
**कोपाच्छापमयोजयन्निव सतां स्यात् त्वत्फलं निष्फलम् ।**
**विष्ठातो जनिरस्तु ते निशि तव छाया विगेयाऽस्त्वियं**
**क्रूरस्ते हृदि वह्निरस्तु न[1] सदा स्पर्शस्य योग्यो भव ॥ ५ ॥**

**व्या : प्रेष्ठमिति** । अयमश्वत्थः **स्वान्तरे** स्वमध्ये **स्थितं प्रेष्ठं** प्रियं श्रीकृष्णं **न दिशति** न ददातीति कृत्वा **भृश**मत्यर्थम**मार्ताः** दुःखिताः गोप्यः **कोपा**दश्वत्थोपरि क्रोधात् । **शापमयोजयन्निव** ददुरिव । कथमित्याशङ्कायामाह – हे अश्वत्थ **त्वत्फलं सतां** सन्नृणां **निष्फल**मनुपादेयं **स्यात्** । **ते तव विष्ठातः** काकविष्ठातः **जनि**रुत्पत्ति**रस्तु** । "काकविष्ठासमुद्भवः" इत्युक्तेः । **इयं तव छाया निशि** रात्रौ **विगेया** निन्दिताऽ**स्तु** ।

---

१ मन्दवारे सदा ह्येनं लक्ष्मीरत्रागमिष्यति ।
अस्पृश्योऽसौ भवेत् तस्मान्मन्दवारं विना किल ॥
- इति पद्मपुराणे क्रियाखण्डे (१६०)

''दिवा बिभीतकच्छाया रात्रावश्वत्थसम्भवा ।
दिवानिशि नरच्छाया हन्ति पुण्यं पुराकृतम्''

इति वचनादिति भावः । निशीत्यनेन रात्रौ स्वेष्टाप्रदानेन निश्येव **छायायाः विगेयत्वरूपशापप्रदानाद्गोपीभिरपि** अपराधानुसारिदण्डः कृत इति द्योत्यते। **ते हृदि** तवोदरे **क्रूरस्तीक्ष्णो वह्निरस्तु** । वह्निस्तवोदरं दहत्वित्यभिशापः। कुपितस्त्रीणामियं जातिः । **सदा** सर्वदा **स्पर्शस्य योग्यो न भव** [१]अस्पृश्यो भवेत्यर्थः । 'अश्वत्थसागरौ सेव्यौ न स्प्रष्टव्यौ कदाचन' इति स्मृतेः । उच्चनीचाश्वत्थस्वभावाभ्यां गुणदोषत्वकल्पनया स्तुतिशापपर्यवसानात् **उत्प्रेक्षालङ्कारः** । अनेन कार्यार्थितया अगुणमपि गुणीकृत्य स्तवनात् तदसिद्धावदोषमपि दोषीकृत्याभिशापप्रदानाद्गोपीनां कृष्णदर्शनकार्ये आग्रहातिशयो वर्णितो भवति । एवमुत्तरत्रापि द्रष्टव्यम् ।। ५ ।।

**अस्माकं नहि यः शृणोति वचनं प्रत्युत्तरं वक्ति नो**
**मूकोऽसौ बधिराग्रणीश्च भवतु स्वान्तस्थितोऽप्यच्युतः ।**
**नैतद्दृष्टिपथं प्रयातु रमणं यो दर्शयेन्नैव न-**
**स्तत्पार्श्वे वसतादसौ द्विजकुले यः प्रेत्य न स्वर्गतः ।। ६ ।।**

**व्या : अस्माकमिति** । यो अश्वत्थः **अस्माकं वचनं** न **शृणोति प्रत्युत्तरं** वा **नो वक्ति** न वदति अतःकारणादसावश्वत्थः **बधिराग्रणीः** कर्णशून्याग्रेसरः **मूकश्च** वाग्व्यापारशून्यश्च **भवतु** । अपराधानुसारादिति भावः । **योऽश्वत्थो नोऽस्माकं रमणं** कान्तं श्रीकृष्णं **नैव दर्शयेन्न** दर्शयति । अतः **स्वान्तस्थितोऽप्यच्युतः** श्रीकृष्णः एतस्याश्वत्थस्य **दृष्टिपथं** लोचनमार्गं **न प्रयातु** स्वसन्निहितमपि श्रीकृष्णं न पश्यत्वित्यर्थः । किं बहुना तस्य अश्वत्थस्य **पार्श्वे असौ** पुरुषः

१ अश्वत्थं मन्दवारे च समुद्रं पर्वणि स्पृशेत् - स्मृतिः

वसतात् तिष्ठतु । यः द्विजकुले प्रेत्य मृत्वा स्वः स्वर्गं न गतः । पिशाचत्वं प्राप्तः ब्रह्मराक्षसस्तस्याश्रयो भवतु नात्रास्माभिः स्थातव्यमित्यर्थः । अश्वत्थमूले ब्रह्मराक्षसस्तिष्ठतीति लोकप्रसिद्धेरिति भावः ॥ ६ ॥

**हे जाति मालति तुलस्ययि मल्लिकेऽग्र्ये**
**योगं समादिशत योगिजनप्रियस्य ।**
**यर्ह्येकजन्मनि कदापि तदङ्घ्रिसङ्गो**
**युष्मभ्यमाभिरबलाभिरदायि साध्व्यः ॥ ७ ॥**

**व्या :** हे जातीति । **हे जाति हे मालति** हे **अग्र्ये तुलसि अयि मल्लिके योगिजनप्रियस्य** परमहंसप्रियस्य कृष्णस्य अनेन श्रीकृष्णस्य । कामुकत्वं ध्वन्यते । **योगं** सम्बन्धं **समादिशत** ददत । हे **साध्व्यः** शोभनाः **यर्हि** यदि अनन्तजन्ममध्ये **एकजन्मनि** तत्रापि **कदाऽपि** कदाचिदाभिरबलाभिरस्माभिस्तस्य श्रीकृष्णस्याङ्घ्रिसङ्गः चरणसम्बन्धो **युष्मभ्यमदायि** दत्तः । यद्यस्माभिर्भवतीनां श्रीकृष्णाङ्घ्रिसङ्गो दत्तस्तर्हीदानीमस्माकं भवतीभिरपि श्रीकृष्णाङ्घ्रिसङ्गो देय इत्यर्थः । उपकारस्य प्रत्युपकारचारितार्थ्यादिति बाह्यो भावः । आन्तरस्तु जन्मान्तरे पुष्पैः श्रीकृष्णः समाराधितश्चेत् स लभ्यतामिति ॥ ७ ॥

**[1]तुलसि मिलसि कृष्णाङ्घ्र्यम्बुजे पुण्यभूजे**
**वरय वरयतीन्द्रैर्वन्दितेऽस्मान् वयस्याः ।**
**मनसि मनसिजादेर्निर्वृतिं निर्मिमीते**
**वनजवनजगन्धोऽप्यन्तरेणाम्ब न त्वाम् ॥ ८ ॥**

---

१ कच्चित् तुलसि कल्याणि गोविन्दचरणप्रिये ।
सह त्वालिकुलैर्बिभ्रद् दृष्टस्तेऽतिप्रियोऽच्युतः ॥ - भागवते (१०/२८/७)
उपकर्णममुष्य भासिता तुलसी मन्त्रयतीव लालिता ।
मम नाथ पदं न मत्सराज्ज्वलजाद्यानि हरेयुरित्यलम् ॥ - मध्वविजये (७/४२)

**व्या :** तुलसीति । पुण्यभूजे पवित्रभूरुहे । **वरयतीन्द्रैः** परमहंसैः **वन्दिते** नमस्कृते हे **तुलसि** । त्वं **कृष्णाङ्घ्र्यम्बुजे** श्रीकृष्णचरणकमले **मिलसि** मेलनं प्राप्नोषि । **वयस्याः** सखीरस्मान् **वरयाङ्गीकुरु** । मेलनसमयेऽस्मानपि श्रीकृष्णाङ्घ्रिं नयेत्यर्थः । हे **अम्ब** मातस्तुलसि **त्वामन्तरेण** विना । 'अन्तरान्तरेण युक्ते'[1] इति द्वितीया । वने जले जायन्त इति वनजानि कमलानि । 'जीवनं भुवनं वनम्' इत्यमरः । तेषां **वनं** समूहः तज्जो **गन्धः** आमोदः । अनेन गन्धस्य बाहुल्यं सूच्यते । **मनसिजस्य** मन्मथस्यादेर्हेतुभूतस्य पितुरित्यर्थः । कृष्णस्य **मनसि** चित्ते **निर्वृतिं** सुखं **न निर्मिमीते** न जनयति । तुलसीं विना केवलपुष्पैर्विष्ण्वर्चनस्य निषिद्धत्वादिति[2] भावः ॥ ८ ॥

**वृन्दावनं किल वनं भवदीयवास-**
**श्चान्द्रप्रमोदकरचारुकराभिरामम् ।**
**कन्दर्पबाणदलितं बत यूयमासां**
**वृन्दं वृथा कुरुथ हा व्रजसुन्दरीणाम् ॥ ९ ॥**

**व्या :** **वृन्दावनमिति** । हे **बत** जात्यादिपुष्पलताः चन्द्रस्य सम्बन्धिनश्**चान्द्राः** प्रमोदं कुर्वन्तीति **प्रमोदकराः** ते च ते **चारुकराश्च** मनोहरकिरणाश्च **तैरभिरामं सुन्दरम्** । वृन्दस्यावनं रक्षणं यस्मात् **तद्वृन्दावनं** वृन्दावनाख्यं **वनं** विपिनं **भवदीयवासः किल** भवतीनां निवासस्थानं किल । यद्यपि वृन्दायाः स्त्रियो वनं वृन्दावनमिति वस्तुस्थितिः । तथापि विमोहाद्वा कार्यार्थितया वा वृन्दस्यावनं यस्मादिति पदच्छेदादियमुक्तिः । भवन्मातृस्थानीयस्यापि वनस्य

---

१ पा.सू. २/३/४

२ त्वत्पत्ररहितं यत् तु पत्रं वा पुष्पमेव वा ।
सुवर्णेन कृतं पुष्पं रजतं रत्नमेव वा ॥
मम पादाब्जपूजायामनर्हं भवति ध्रुवम् ॥ - स्मृतिः

वृन्दरक्षकत्वं **किल** किमु भवतीनामपीति भावः । एतादृशस्थले वर्तमाना **यूयं** **व्रजसुन्दरीणां** व्रजवधूनां **वृन्दं** समूहं **वृथा** निरर्थकं **कन्दर्पस्य** मदनस्य **बाणैः** शरैर्दलितं छिन्नम् । जात्यादीनां कामोद्दीपनत्वात् इति भावः । **कुरुथ** । **हा** कष्टम् । वृन्दविघातकत्वानर्हस्थले उत्पन्नानां भवतीनां व्रजाङ्गनावृन्दविघातकत्वं कुलोचितं नेत्यर्थः । उत्तमाः स्वकुलानुसारेण कार्यं कुर्वन्तीति भावः ॥ ९ ॥

**नः सन्दिशन्तु नयनोत्सवमच्युतं तं**
**नक्रातिभीतगजगीतचरित्रजातम् ।**
**पश्चात् तदङ्घ्रियुगले विनिवेश्य कुर्मः**
**पद्मासनादिसुरसञ्चयसत्कृता वः ॥ १० ॥**

**व्या :** स्तुतिकुलप्रशंसाभ्यामजायमाने कार्ये मध्यमप्रकृतय एता इति मत्वोपकारं निवेद्यापि स्वाभीष्टं प्रार्थयन्ते – **नः सन्दिशन्त्विति** । हे **साध्व्यः** भवत्यः **नक्रात्** ग्राहात् । 'ग्राहोऽवहारो नक्रः' इत्यमरः । **अतिभीतो** यो **गजेन्द्रः** तेन **गीतम्** अभिवर्णितं **चरित्रजातं** चरित्रसमूहो यस्य स तथोक्तस्तम् । अनेन मन्दबुद्धित्वान्नास्मदुपेक्षा कर्तव्येति सूच्यते । **नयनानामुत्सवो** हर्षो यस्मात् **तमच्युतं तं** कृष्णं **नो**ऽस्माकं **सन्दिशन्तु** प्रदिशन्तु । **पश्चात्** कृष्णप्राप्त्यनन्तरं **वो** युष्मान् तस्य श्रीकृष्णस्याङ्घ्रियुगले **विनिवेश्य** समर्प्य । **पद्मासनो** ब्रह्मा **आदि**र्येषां ते **सुराः** देवाः तेषां **सञ्चयेन** समूहेन **सत्कृताः** मानिताः **कुर्मः** । पूर्वमनर्पितबुद्ध्याऽनङ्गीकृताः वः अस्माभिः श्रीकृष्णपादार्पणे कृते ब्रह्मादयो देवाः हरिनिर्माल्यबुद्ध्या शिरसा धारयिष्यन्तीति महानुपकारो भवतीति भावः। यद्यपि पूर्वस्मिन् श्लोकेऽप्युपकारो निवेदितः तथापि तस्यातीतत्वेन तमनुसृत्य कार्यकरणमुत्तमस्वभाव इति नासौ मध्यकोटौ निवेशितः । अत एवात्र **पश्चा**दित्युक्तम् ॥ १० ॥

**बत नतजनबन्धुं सान्द्रसौन्दर्यसिन्धुं**
**यदुनृपकुलसारं यच्छतोदारहारम् ।**
**तदनु शिरसि युष्मान् धारयामः कृतेष्टाः**
**परमपदयुगाब्जे पूरयामः प्रहृष्टाः ॥ ११ ॥**

**व्या :** उपकारान्तरमपि निवेदयन्ति – **बतेति** । हे **बत** जात्यादयः **नतजनस्य** नम्रजनस्य **बन्धुं** सुहृदं **सान्द्रं** घनीभूतं यत्सौन्दर्यं लावण्यं तेन **सिन्धुरिव** तम् । **उदारहारम्** उत्कृष्टमुक्ताहारं **यदुनृपस्य कुलं** वंशस्तत्र **सारं** श्रेष्ठम् । यदुकुलावतंसमित्यर्थः । कृष्णं **यच्छत** प्रयच्छत । **तदनु** श्रीकृष्णप्रदानानन्तरं **प्रहृष्टाः** सन्तुष्टाः वयं **कृतम् इष्टं** याभिस्ताः **युष्मान् परमपदयुगाब्जे** कृष्णपादयुगलारविन्दे **पूरयामः** समर्पयामः । **तदनु** समर्पणानन्तरं **शिरसि धारयामः** । इदानीं कृष्णविरहात् स्रगाद्यसहिष्णुतालक्षणविषयद्वेषेणास्माभिः परित्यक्ता वः श्रीकृष्णप्राप्त्यनन्तरं श्रीकृष्णाय समर्प्य शृङ्गारार्थं कबरीषु धारयाम इति हृदयम् । शिरसा धारणलक्षणः प्रत्युपकारः प्रातीतिकः ॥११॥

**गच्छन्तु पत्युर्गतिमासु नैता**
**वक्ष्यन्ति गाढं परिरम्भणे नः ।**
**स्वायासमाशङ्क्य तदीयगेय-**
**मालाः समालम्ब्य कृताङ्गसङ्गाः ॥ १२ ॥**

**व्या :** इदानीं स्वापकारमाशङ्क्यास्मद्याश्वां निघ्नन्त्य एता उदरम्भरत्वेनाधमा इत्यभिप्रायेणाहुः – **गच्छन्त्विति** । **तदीयाः** कृष्णसम्बन्धिन्यः **गेयमालाः** स्तुत्यमालाः **समालम्ब्य** आश्रित्य **कृतो अङ्गसङ्गः** श्रीकृष्णस्योरोलक्षणाङ्ग-सम्बन्धो याभिस्ताः । अनेन सपत्नीत्वं ध्वनयन्ति । **एता** जात्यादयः **गाढं** दृढं **नो** अस्माकं **परिरम्भणे** आलिङ्गने श्रीकृष्णेन कृते सति **स्वायासं** स्वप्रयासम् । उभयोरङ्गसङ्गेन मध्यस्थितानां चूर्णीभावेन स्वरूपहानिमित्यर्थः । **आशङ्क्य आसु**

गोपीषु **पत्युः** कृष्णस्य **गतिं** अनेन मार्गेणैव कृष्णो गत इति गमनं **न वक्ष्यन्ति** न वदिष्यन्ति यतोऽतोऽन्यत्र **गच्छन्त्विति** कस्याश्चिद्वचनम् । तरुत्वादवचने आयासशङ्काया निमित्तत्वकल्पनात् **विभावनालङ्कारः** । कल्पनमपि विमोहेनेति भ्रममूलकः । अनेन श्रीकृष्णो लभ्यते चेद्दृढं परिरम्भणं करिष्याम इति गोपीनां रणरणिका व्यज्यते ॥ १२ ॥

**अन्याञ्चनान्मुकुलितं सरसीरुहास्य-**
**मन्वेति मन्दमरुता चलितं द्विरेफः ।**
**सन्नाथ पश्य सदयाग्रग साधुवश्य**
**किं नः परित्यजसि खिन्नहृदस्त्वदर्थे ॥ १३ ॥**

**व्या :** वायुना चलितं मुकुलितं कमलम् अन्वीयमानं भ्रमरं दृष्ट्वा दम्पती प्रकल्प्य श्रीकृष्णं प्रति वदन्ति – **अन्याञ्चनात्** इति । **द्विरेफः अन्यस्यां** वल्ल्याम् **अञ्चनात्** गमनात् अन्यस्त्रीगमनादिति ध्वनिः । अञ्चनादित्यनेनार्हणपूर्वकं गमनं न तु यदृच्छयेति ध्वन्यते । **मुकुलितं** मुद्रितम् । कान्ताङ्गीकारे वैमुख्यमिति ध्वनिः । **मन्दमरुता** मन्दानिलेन **चलितं** कम्पितम् । **मन्दे**त्यनेन नायकस्यापराधितया भीरुत्वं द्योत्यते । **चलितमि**त्यनेन कान्तप्रार्थनानङ्गीकारसूचकं शिरोऽवधूननं द्योत्यते । **सरसीरुहस्य** कमलस्य **आस्यं** मुख**मन्वेति** अनुसरति । **सरसीरुह**मित्यनेन नायिकायाः किञ्चित्कोपशान्तिर्ध्वन्यते । **अन्वेती**त्यनेन रसिकपुरुषः अङ्गीकारपराङ्मुखीमपि स्वचाटूक्त्यादिना अभिमुखीकरोतीति सूच्यते । तथा प्रियवचःस्वभावेन दक्षिणत्वं द्योत्यते । हे **सन्नाथ** सतां पते **सदयाग्रग** दयया सहिताः सदयाः तेषा**मग्रग** अग्रेसर । **साधुवश्य** सज्जनाधीन हे कृष्ण विमुखीमपि अनुसरन्तं **द्विरेफं पश्य** । वयं तु कमलिनीवत् सापराधेऽपि त्वयि न विमुखाः इत्याहुः ॥ **त्वदर्थे** त्वत्प्राप्त्यर्थे **खिन्नहृदः** इतस्ततः पर्यटनात् खेदयुक्तचित्ताः **नो**ऽस्मान् **किं** किमर्थं **परित्यजसि** । सत्पतित्वात् कृपायुक्तत्वात् त्वत्सङ्गाभिमुखीनाम् अस्माकं परित्यागो नोचित इति भावः ॥ १३ ॥

**हे पद्मिनि प्रियमुदीरय पीवरांसं**
**नारायणः स तु तवास्त्युदरे निगूढः ।**
**त्वं हि स्वभावमधुरेति बतार्थ्यसेऽम्ब**
**नो चेद्दृगम्बुनिकरैः कलुषा खलु स्याः ॥ १४ ॥**

**व्या :** हे पद्मिनीति । **हे पद्मिनि** पद्मवति सरसि । **पीवरौ** पीनावंसौ स्कन्धौ यस्य तम् । 'स्कन्धो भुजशिरोंऽसोऽस्त्री' इत्यमरः । **प्रियं** प्राणकान्तमस्माकम् उदीरय श्रीकृष्णः क्व तिष्ठति तत्कथय । श्रीकृष्णः कुत्र तिष्ठतीति न ज्ञायते कथं वक्तव्यमित्यत आहुः – **स** इति । **स तु नारायणः** नारा आपो अयनम् आश्रयो यस्य स **नारायणः** श्रीकृष्णः ।

"आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः"[1]

इति वचनात् । जलवासित्वात् **तवोदरे** । सरस्या जलात्मकत्वादिति भावः । **निगूढः सन्नस्ति** तिष्ठति अतस्तव श्रीकृष्णाज्ञानं नास्तीत्यर्थः । भवतीषु मया किमर्थं कथनीयम् इत्यत आहुः – **त्वं हीति** । **बत** हे **अम्ब** पद्मिनि **त्वं स्वभावतो मधुरा** माधुर्योपेता । अपां मधुररसस्य स्वाभाविकत्वाद्रसान्तरस्यौपाधिकत्वा-दिति भावः । मृदुस्वभावेति ध्वनिः । इति कृत्वा **अर्थ्यसे** प्रार्थ्यसे । सरलहृदयेषु याञ्चा न व्यर्था भवतीति भावः । विपक्षे बाधकमप्याहुः – **नो चेदिति** । **नो चेत्** कृष्णं न वदसि चेत् **दृशां अम्बुनिकरैः** अश्रुसमूहैः त्वं **कलुषा** आविला **स्याः खलु** । अस्मच्छोकाश्रुप्रवाहस्योष्णत्वेन तव माधुर्यहानिः स्यादिति भावः ॥१४॥

**पत्या समं तव जले विमले विहृत्य**
**कुर्मः कुचौघकृतकुङ्कुमरञ्जितां त्वाम् ।**

---

१ मनुस्मृतिः १०/१

**मुग्धप्रसन्नमुखसारसशोभमानां**
**स्वर्मुक्तपुष्पनिकरैः परितः सुपूर्णाम् ॥ १५ ॥**

**व्या :** पत्येति। हे **पद्मिनि विमले** निर्मले **तव जले** सलिले **पत्या** श्रीकृष्णेन **समं** सार्धं **विहृत्य त्वां कुचौघे** स्तनसमूहे **कृतेन** लिप्तेन **कुङ्कुमेन** रञ्जिताम्। **मुग्धानि** मनोहराणि **प्रसन्नानि मुखान्येव सारसानि** सरसीरुहाणि **तैः शोभमानाम्। स्वः** स्वर्गात् **मुक्तानि** देवैर्वृष्टानि **पुष्पाणि** तेषां **निकरैः** समूहैः **परितः** समन्तात् **सुपूर्णां** च **कुर्मः** । **स्वर्मुक्ते**त्यादिना स्त्रीक्रीडासमये ब्रह्मादिदेवैः पुष्पवर्षस्य क्रियमाणत्वात् श्रीकृष्णस्य साक्षात्परब्रह्मत्वं द्योत्यते ॥ १५ ॥

**नैषा नवाम्बुदतनुं कथयेन्निजं नः**
**स्वीयप्रवाहभरधिक्कृतलोकवार्ता ।**
**सा चुम्बिताखिलसरोरुहकोमलास्या**
**भृङ्गावलीभिरितरार्तिमजानती या ॥ १६ ॥**

**व्या :** इदानीं पद्मिनीमाक्षिपन्ति – **नैषे**ति । **या** पद्मिनी **स्वीयप्रवाह**स्य निर्झरस्य **भरेण धिक्कृता** आक्षिप्ता श्रवणपथं न प्रापितेत्यर्थः । **लोक**स्य जनस्य **वार्ता** वृत्तान्तो यया **सा** सेयं **भृङ्गावलीभिः** भ्रमरसमूहैश्**चुम्बितानि अखिलानि सरोरुहाण्येव कोमलं** मनोज्ञमास्यं मुखं **यस्याः** अत एवे**तरार्तिं** परदुः**खमजानती** ''नहि वन्ध्या विजानाति गुर्वीं प्रसववेदनाम्''[1] इति न्यायात् स्वयं सुखितया परदुःखानभिज्ञेत्यर्थः । सैषा पद्मिनी **नवाम्बुदतनुं** नूतनमेघसदृशं शरीरं यस्य तं **निजं** श्रीकृष्णं नो अस्माकं न **कथयेत्**। **स्वीयप्रवाहभरे**त्यादिना ऐश्वर्यमत्तः पुरुषः न केवलं परैः सार्धं न वदति किन्तु परेषां वचनमपि न शृणोतीति द्योत्यते। अतोऽस्मत्प्रयोजनमत्र न भवत्यतोऽन्यत्र गच्छाम इति भावः ॥१६॥

---

१ विद्वानेव विजानाति विद्वज्जनपरिश्रमम् ।
नहि वन्ध्या विजानाति गुर्वीं प्रसववेदनाम् ॥ - इति सूक्तिः

**पद्मानि शंसत पयोब्धिसुताकलत्रं**
**युष्मद्वनेषु वसतीति वदन्ति सन्तः ।**
**कुक्षिस्थिताय विधयेऽपरथा ललाट-**
**लेखां स्म जीवनकृते रचितां विमार्ष्टुम् ।। १७ ।।**

**व्या :** पद्मानीति । हे **पद्मानि** कमलानि **पयोब्धेः** क्षीरसागरस्य **सुता** लक्ष्मीः सैव **कलत्रं** जाया यस्य तं श्रीकृष्णं **शंसत** कथयत । स कुत्र तिष्ठतीत्यत आहुः । युष्मदिति । **युष्मद्वनेषु वसतीति सन्तो** सज्जना **वदन्ति** आहुः ।

"तुलसीकाननं यत्र यत्र पद्मवनानि च ।
वसन्ति वैष्णवा यत्र तत्र सन्निहितो हरिः"[१]

इति वचनादिति भावः । अपरथा भवत्यः श्रीकृष्णं न कथयन्ति चेत् इदं वा कर्तव्यमित्याहुः । जीवनकृतेति । **जीवनकृते** प्राणधारणाय **रचितां** लिखितां **ललाटलेखां** ललाटाक्षरं **विमार्ष्टुं** मार्जयितुं **कुक्षिस्थिताय** कमलासनत्वात् त्वदुदरस्थिताय विधये ब्रह्मणे वा **शंसत** कथयत । श्रीकृष्णविरहं सोढ्वा क्षणमात्रमपि जीवनान्मरणमेव वरमिति भावः ।। १७ ।।

**इमानि लक्ष्म्याः किल नः सपत्न्याः**
**समाननामानि सदा गृहाणि ।**
**अस्त्राणि चास्मान् द्विषतस्तदीय-**
**पुत्रस्य तद्गच्छत देशमन्यम् ।। १८ ।।**

**व्या :** पद्मानां स्वाभाविकमेव धर्मं स्वप्रयोजनासिद्धौ निमित्तं मत्वाऽऽहुः – इमानीति । यद्यस्मादिमानि पद्मानि नोऽस्माकं **सपत्न्याः** समान एकः पतिर्यस्यास्तस्याः **लक्ष्म्याः** श्रीदेव्याः **समानं** पद्मेत्येकं **नाम** नामधेयम् एषां तानि

---

१ इति तुलसीमहात्म्ये

सपत्नीनामधारणात् तद्दासभूतानीत्यर्थः । अतोऽस्मत्प्रयोजनमत्र न भवतीति भावः । किञ्च तस्याः **सदा गृहाणि** मन्दिराणि लक्ष्म्याः [१]पद्मालयत्वादिति भावः । अपि **चास्मान् द्विषतः** तस्याः लक्ष्म्याः सम्बन्धी तदीयः स चासौ **पुत्रश्चेति** तदीयपुत्रः तस्य कामस्यास्त्राणि च 'अरविन्दमशोकं च...'[२] इति तद्बाणेषु पाठादिति भावः । **तत्** तस्मात् कारणादन्यं **देशं गच्छत** व्रजत । नहि शत्रुसम्बन्धिनोऽस्मत्प्रयोजनं सिद्ध्यतीति भावः ॥ १८ ॥

**हे [३]चूत कृष्णपदवीं वद नः कृशानां**
**हे नारिकेल पनसाम्ल परान् हि यूयम् ।**
**पुष्णीथ पुष्पफलवल्कलमूलपत्र-**
**च्छायासमुल्लसितपल्लवकोटराद्यैः ॥ १९ ॥**

**व्याः** : चूतादीन् प्रत्याहुः – हे चूतेति । **हे चूत कृशानां नो** अस्माकं **कृष्णपदवीं** श्रीकृष्णमार्गं **वद** शंस । **हे नारिकेल हे पनस** कण्टकिफल **हे आम्ल** तिंत्रिणि श्रीकृष्णपदवीं वदेत्यस्य प्रत्येकं सम्बन्धः । **हि** यस्माद्यूयं **पुष्पाणि फलानि वल्कलानि** त्वचः **मूलानि पत्राणि छाया समुल्लसितपल्लवाः** शोभमानकिसलयानि **कोटराणि** सुषिराणि **आद्यानि** निर्यासादीनि तैः **परान् पुष्णीथ** पोषणं कुरुथ । सर्वस्वैरपि परपोषणं कुर्वतां वाङ्मात्रेणास्मत्प्रयोजनसाधने कः प्रयास इति भावः ॥ १९ ॥

---

१ 'वाचं पद्मालयां पद्माम्' । - इति लक्ष्म्यष्टोत्तरशतनामस्तोत्रे ।

२ अरविन्दमशोकं च चूतं च नवमल्लिका ।
नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः ॥ - इत्युक्तानि ।

३ चूतप्रियालपनसासनकोविदारजम्ब्वर्कविल्वबकुलाम्रकदम्बनीपाः ।
येऽन्ये परार्थभविनो यमुनोपकूलाः शंसन्तु कृष्णपदवीं रहितात्मनां नः ॥
- भागवते (१०/२८/९)

**तिन्त्रिण्यास्व यतः फलान्यपि सदा वक्त्राणि ते प्राणिनां**
**सा त्वं ताडनकर्मसूपकुरुषे किं नारिकेलेन नः ।**
**मस्ते यः फलमभ्रचुम्बिनि नरालभ्ये त्वचा पक्षिणाऽ-**
**प्यग्राह्यं दधदध्वनीनमृतिदं शस्त्रेण साध्यं बलात् ॥ २० ॥**

**व्या :** प्रतिवचनादानात् तानधिक्षिपन्ति । **तिन्त्रिणी**त्यादिना । हे **तिन्त्रिणि** त्वम् **आस्व** तूर्ष्णीं तिष्ठ । त्वत्तो अस्मत्प्रयोजनाभावादिति भावः । **यतः** कारणात् **ते** तव **फलान्यपि सदा** सर्वदा **वक्राणि** कुटिलानि फलप्रदानसमयेऽपि कौटिल्यं न त्यजसीत्यर्थः । तिन्त्रिणीफलानां वक्रत्वादिति भावः । त्वं केवलं नोपकारिणीति प्रत्युतापकारिणीत्याहुः । **सेति** । **सा** फलदानसमये **वक्रा त्वं प्राणिनां ताडनकर्मसूपकुरुषे** तत्रोपयुक्ताऽसीत्यर्थः । अतस्तूष्णीमास्वेति पूर्वेणान्वयः । **नो**ऽस्माकं **नारिकेलेन किं** प्रयोजनं न किमपीत्यर्थः । हे नारिकेल **य**स्त्वम् **अभ्रचुम्बिनि** अभ्रङ्कषे अत एव **नरालभ्ये** मनुष्याप्राप्ये **मस्ते** मस्तके **त्वचा पक्षिणा** शुकादिपतत्त्रिणापि अम्बरचरणसमर्थेनापीति भावः । **अग्राह्यं** गृहीतुमशक्यम् **अध्वनीनां** पान्थानाम् । 'अध्वनीनोऽध्वगो ध्वन्यः पान्थः पथिक इत्यपि' इत्यमरः । **मृतिदं** मरणप्रदं स्वच्छायाश्रितानां उपरिपतनादिति भावः । **वलात्** वलात्कारेण **शस्त्रेण** लवित्राद्यायुधेन **साध्यं** फलं **दधत्** स त्वम् आस्वेति पूर्वेणान्वयः । अनेन याचकानुपकारिराजाद्यपहार्यवित्तसङ्ग्रही निष्ठुरप्रकृतिर्लुब्धो ध्वन्यते ॥ २० ॥

**यः पक्कं फलसम्मितं भुवि गतैरज्ञेयमावेष्टितं**
**धत्ते दुर्जरकण्टकैः स पनसः प्राक् काकभोग्यो ध्रुवम् ।**
**चूतोऽयं फलपुष्पतोषितखगः स्वोपान्तगानां नृणां**
**पक्कानि प्रदिशन् स चापि मनसस्तोषाय न स्यात् सखि ॥२१॥**

**व्या : य इति** । **यः** पनसः **पक्कं** पाकावस्थां प्राप्तं **फलसम्मितम**पक्कं फलसदृशं पाकापाकयोरपि कदलीफलवद्वर्णविशेषाभावात् अत एव **भुवि गतैः** स्थितैरज्ञेयं **दुर्जरकण्टकै**र्दुःसहकण्टकैः **आवेष्टितं** फलं **धत्ते** । **सः पनसः प्राक्** प्रथमं

**काकभोग्यः** काकभक्ष्यः **ध्रुवं** निश्चयः । वृक्षे पक्वस्य पनसफलस्य प्राक्काक-भोग्यत्वनियमादिति भावः । अत्रापि पूर्ववल्लुब्धो ध्वन्यते । तस्मात् पनसादपि नास्मदिष्टसिद्धिरिति भावः । हे सखि **फलपुष्पैस्तोपिताः खगाः** पक्षिणो येन सः **स्वोपान्तगानां** स्वसमीपङ्गतानां **नृणां** पक्वानि फलानि **प्रदिशन् योऽयं चूतः स चापि नोऽस्माकं मनस्तोपाय न स्यात्** ॥ २१ ॥

**कन्दर्पमन्त्रिणि समीयुषि यः सराग-**
**स्तत्पक्षपातिपिकगायकहर्षहेतुः ।**
**तद्वन्दिनः शुकचयस्य सखा तदीय-**
**बाणौघजन्मधरणी स हि चूत एव ॥ २२ ॥**

**व्या :** पूर्ववत्परित्यागनिमित्ताभावेऽपि निमित्तान्तरमस्तीत्याहुः । **कन्दर्पम-न्त्रिणीति** । **हि** यस्मात् कारणात् **स** एषः **चूतः कन्दर्पमन्त्रिणि** वसन्ते **समीयुषि** समागते सति । इण् गताविति धातोर्लिटः क्वसुः । **सरागः** पल्लवरागेण सहितः स्नेहवानिति ध्वनिः । तस्य कन्दर्पस्य **पक्षपाती** पक्षी हित इति ध्वनिः । स चासौ पिकश्च स एव **गायकः** तस्य **हर्षहेतुः** पल्लवाङ्कुरप्रत्यर्पणेन सन्तोषहेतुः **तस्य** कामस्य **बन्दिन**स्तुतिपाठकस्य **शुकचयस्य** मञ्जुलवाक्यत्वादिति भावः । **सखा** सुहृत् **तदीयबाणौघस्य** कामसम्बधिशरव्रातस्य **जन्मधरणी** उत्पत्तिमही उत्पत्तिस्थानं भवति । 'चूतश्च नवमल्लिका' इत्युक्तेः । अस्मद्विरोधिमदनपरिवारस्य सर्वस्य सहायभूतत्वान्मनस्तोपाय न स्यादिति भावः ॥ २२ ॥

**हे माधवि प्रान्तनिगूढवल्लि श्रीमानिनीमानदमादिशेह ।**
**देहि त्वदीयां स्थितिमेव नो चेन्नाम्नाऽपि यत्रास्ति हि माधवीत्वम् ।२३।**

**व्या :** हे **माधवीति** । **प्रान्ते** समीपे **निगूढा** उत्पन्नाः **वल्यः** [१]लताः यस्याः सा तस्याः सम्बुद्धिः । अनेन योषिदन्तरासहिष्णुत्वं नास्तीति ध्वन्यते । हे

---

१ पश्यतेह लता बाहूनप्याश्लिष्टा वनस्पतेः ।
नूनं तत्करजस्पर्शाद् बिभ्रत्युत्पुलकान्यहो ॥ - भागवते (१०/२८/१२)

**माधवि** माधवीति काचन लता **हे** वासन्ति । 'वासन्ती माधवीलता' इति हलः । इहास्मासु **श्रीमानिन्या** लक्ष्म्याः । मानं चित्तसमुन्नतिं ददातीति स तथोक्तस्तं श्रीकृष्णम् । अनेन श्रीकृष्णस्य श्रीप्रियत्वमस्मदभावेऽप्यालस्याभावश्च ध्वन्यते । आदिश प्रदिश । **नो चेत्** श्रीकृष्णं न दिशसि चेत् **त्वदीयां** त्वत्सम्बन्धिनीं स्थितिमवस्थां माधवीलतात्वम् इत्यर्थः । **देहि हि यस्माद्यत्र माधवील**तात्वे **नाम्नाऽपि** नाममात्रेणापि **माधवीत्वम्** अस्ति । माधवस्येमाः माधव्य इति व्युत्पत्तेः । नाम्ना वा तदीया भवाम इत्याशयः ॥२३॥

**अशोक एषोऽपरवेदनाज्ञः पदाहतेरेव परोपकर्ता ।**
**न कार्यकारी शिथिलात्मनां नस्ततोऽपरत्र प्रतियात सख्यः ॥२४॥**

**व्या : अशोक** इति । **एषः** पुरोवर्ती [१]**अशोको** वृक्षविशेषः शोकरहित इति ध्वनिः । अत एव परेषामन्येषां वेदनां न जानतीत्य**परवेदनाज्ञः** किञ्च पदस्याहतेस्ताडनादेव **परोपकर्ता** परोपकारशीलः स्त्रीवामपादताडनादशोकः पुष्पितो भवतीति दोहदे [२]कथितत्वादिति भावः । **शिथिलात्मनां** श्रीकृष्णवियोगेन शिथिलाङ्गानां पादप्रहारासमर्थानामिति भावः । **नः** अस्माकं **कार्यकारी** प्रयोजनकारी **न** स्यान्न भवति । **ततः** तस्मात् कारणात् हे सख्यो **परत्र** अन्यत्र **प्रतियात** गच्छत । यातेर्लोट् ॥ २४ ॥

**हे पारिजात सुरसंसदि गीत दातः**
**श्रीनन्दनन्दनमुदीरय सिद्धगम्यम् ।**

---

१ कच्चित् कुरवकाशोक नाग पुन्नाग चम्पक ।
रामानुजो मानिनीनां दोग्धा नन्दस्य चात्मजः ॥ - भागवते (१०/२८/६)

२ पादाघातादशोकं विकसति - साहित्यदर्पणे इति । पादाहतः प्रमदया विकसत्यशोकः । - इति अन्यत्र.

सनूपररवेण स्त्रीचरणेनाभिताडनम् ।
दोहदं तदशोकस्य ततः पुष्पोद्गमो भवेत् ॥ - इति नैषधीये ।

**रत्नानि रास्युरुविधानि किलाश्रिताना-**
**मस्मभ्यमच्युतहरिन्मणिमेव[1] देहि ॥ २५ ॥**

**व्या :** हे पारिजातेति । सुरसंसदि देवसभायां **गीत** स्तुत । सुरतरुत्वादिति भावः । दातर्दानशील । कल्पतरुत्वादिति भावः । **हे पारिजात हे** [2]पारिजाततरो **सिद्धगम्यं श्रीनन्दनन्दनं** श्रीकृष्ण**मुदीरय** कथय । त्वमाश्रितानां **उरुविधानि** इन्द्रनीलादि**रत्नानि रासि किल** ददासि किल । **अस्मभ्यम् अच्युतहरिन्मणिं** श्रीकृष्णाख्यमरकत**मेव देहि** । एवेत्यनेन तदतिरिक्तरत्नाशाराहित्येन वैराग्यं व्यज्यते ॥ २५ ॥

**तदङ्घ्रिलाभेन निजावमानविशङ्किचेता न दिशेन्निजं नः ।**
**सहोदरोऽयं ननु सिन्धुपुत्र्याः सहस्रनेत्रार्हणदृप्तवृत्तिः ॥२६॥**

**व्या :** इदानीं पारिजातमधिक्षिपन्ति । तदङ्घ्रीति । तस्य श्रीकृष्णस्याङ्घ्रिस्तस्य **लाभेन** प्राप्त्या **निजस्य** स्वस्यावमानं अवज्ञां विशङ्कत इति **निजावमानविशङ्कि** तच्चेतो यस्य सः तथोक्तः । **अयं** पारिजातः । पारिजातादपि श्रीकृष्णाङ्घ्रेः सहस्र-गुणितफलदातृत्वमस्तीति भावः । अत एव **निजं** श्रीकृष्णं नोऽस्माकं **न दिशेत्**। श्रीकृष्णपादप्राप्तौ न स्वात्मानमेताः प्रार्थयिष्यन्तीति भीत्येति भावः । किञ्च अयं पारिजातः **सिन्धुपुत्र्याः नः** सपत्न्या लक्ष्म्याः **सहोदरो** भ्राता **ननु** उभयोरपि क्षीरसमुद्रोत्पन्नत्वात् । अपि च **सहस्रनेत्र**स्य इन्द्रस्या**र्हणेन** पूजया जलादिदानेन **दृप्ता वृत्ति**र्वर्तनं यस्य स तथोक्तः । तस्मान्न दिशेदिति पूर्वेणान्वयः ॥ २६ ॥

---

१ याचे वरदराज त्वां काञ्चीशेह न किञ्चन ।
चेतनाचेतनजगद्वरं त्वामेव देहि मे ॥ (तीर्थप्रबन्धे ३/३२) इतिवत् ।

२ वरपारिभद्रकसुकल्पतरुव्रजपारिजातहरिचन्दनवत् ।
सहितं समादिपदताननगैः परिभूषयन्ति तदहो ऋतवः ॥ - मध्वविजये (११/३८)
पञ्चैते देवतरवो मन्दारः पारिजातकः ।
सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम् ॥ - इत्यमरः

**गीतेन ते गीष्पतिशर्वपूर्वगीर्वाणवर्याः किल नम्रभावम् ।**
**नीतास्तदस्मान् स्ववशे विधातुमेतावता किं कमनीयमूर्ते ॥२७॥**

**व्या :** गीतेनेति । हे **कमनीयमूर्ते** मनोहरविग्रह श्रीकृष्ण दर्शनमात्रेण वशीकरणसमर्थेत्यर्थः । ते तव **गीतेन** गानेन गिरः सरस्वत्याः पतिः **गीष्पतिः** ब्रह्मा शर्वः शिवः एतौ **पूर्वौ** प्राथमिकौ एषां ते **गीर्वाणवर्याः** देवश्रेष्ठाः **नम्रभावं** नम्रत्वं **नीताः** प्रापिताः **किल** । किलेत्यनेन "शर्वशक्रपरमेष्ठिपुरोगाः कवय आनतकन्धरगात्राः"[१] इति पुराणप्रसिद्धिं द्योतयति । तत् तस्मात् कारणात् **अस्मान् स्ववशे विधातुं** कर्तुमेतावता अदृश्यत्वदूरगमनादिना किं प्रयोजनम् ॥ २७ ॥

**मुरलि मुररिपुं तं मोहनं शंस हंसा-**
**भ्युदयमुदयदिन्दुश्रीमुखं वीतशोकम् ।**
**विरहदहनभासा निर्दहामोऽत्र नो चेत्**
**तरुणि कुलमिदं ते हन्त वृन्दावनान्ते ॥ २८ ॥**

**व्या :** मुरलीति । हे **मुरलि मोहनं** मनोहरं **हंसानां** यतीनाम् **अभ्युदयो** अभिवृद्धिर्यस्मात् तम् **उदयदिन्दु**वत् **श्रीमुखं** यस्य तं **वीतः** गतः **शोको** यस्मात् स तथोक्तः । **तं मुररिपुं** श्रीकृष्णं **शंस** वद **नो चेत्** तं न वदसि चेत् हे **तरुणि मुरलि अत्रा**स्मिन् **वृन्दावनान्ते इदं** दृश्यमानं **ते** तव **कुलं** वंशं कीचकसमूहमित्यर्थः । **विरहदहनभासा** अस्मन्निष्ठकृष्णवियोगाख्याग्नितेजसा **निर्दहामः** भस्मीकुर्मः । **हन्त** खेदे । कुलनाशस्त्वया कथं सोढव्य इति भावः । त्वं तु सदा श्रीकृष्णसंयोगिनी नास्माभिश्चालयितुमपि शक्या कुलनाशभयादेव शंसेति भावः ॥ २८ ॥

**हे वृन्दावन कृष्णवर्त्म वद नो नो चेत् पुमांसं हि तं**
**दास्यामः प्रियविप्रयोगजनितं तेन त्वदीयोदयैः ।**

---

१ भागवते १०/३३/१५

**साकं प्रज्वलितेऽङ्ग गोपललनाभास्वच्चकोरीचये**
**लोके नाम निरर्थकं तव पुनः को वा कविः कीर्तयेत् ॥२९॥**

**व्या :** हे वृन्दावनेति । हे **वृन्दावन** नोऽस्माकं **कृष्णवर्त्म** श्रीकृष्णस्य मार्गं **वद** शंस । **नो चेत्** न वदसि चेत् **प्रियस्य** श्रीकृष्णस्य **विप्रयोगो** विरहः तेन **जनित**मुत्पन्नं **पुमांसं तं** कृष्णवर्त्मानम् अग्निमित्यर्थः । हीत्यनेन पुल्लिङ्गतायां कृष्णवर्त्मशब्दस्याग्निवाचकत्वे निघण्टुप्रसिद्धिः द्योत्यते । ''बर्हिः शुष्मा कृष्णवर्त्मा' इत्यमरः । **दास्यामः** तुभ्यम् इति शेषः । ततश्च किमित्यत आहुः । **तेनेति** । हे **अङ्ग तेना**ग्निना **त्वदीयोदयै**स्तवाभ्युदयैः लतावृक्षादिरूपैः **साकं** सार्धं **गोपललना**ः गोपस्त्रियः ता एव **भास्वच्चकोर्यः** तासां **चय**स्तस्मिन् । चकोरीचय इत्यनेन श्रीकृष्णस्य चन्द्रसदृशत्वं ध्वनयति । **प्रज्वलिते** सति पुनस्तव **निरर्थकम्** अर्थरहितं वृक्षादिदाहे सति बहुवृक्षसमूहात्मकवनत्वायोगादिति भावः । **नाम** नामधेयं **को वा कविः कीर्तयेत्** कथयेत् । मिथ्यावादित्वप्रसङ्गादिति भावः ॥ २९ ॥

**सखि तरुरयमज्ञो नैव जानाति कृष्णं**
**किमिति विधिनिदेशाज्ज्ञानशून्यो हि वृक्षः ।**
**यदुतिलकवियोगादस्तु मे ज्ञानहानि-**
**र्गतविरहभयस्य ज्ञानहानिः कुतोऽस्य ॥ ३० ॥**

**व्या : सखीति** । हे **सखि अज्ञः** ज्ञानरहितः लौकिकेऽपि बाहुल्येन ज्ञानरहितोऽयं **तरु**रेतावत्कालं त्वया प्रार्थ्यमानो वृक्षः । जात्येकवचनम् । **कृष्णं** न **जानात्येव** । एवकारेण श्रीकृष्णस्यालौकिकत्वं ध्वन्यते । इति शान्ताया वचनम् । [१]**किमिति** कस्मादिति मुग्धाया वचनम् । **विधे**र्ब्रह्मणो **निदेशा**दाज्ञातः **वृक्षो ज्ञानशून्यो**

---

१ किं ते कृतं क्षिति शुभं बत केशवाङ्घ्रिस्पर्शोत्सवोत्पुलकिताङ्गरुहैर्विभासि ।
अप्यङ्घ्रिसम्भव उरुक्रमविक्रमाद् वा आहो वराहवपुषा परिरम्भणेन ॥
- भागवते (१०/२८/१०)

हि यस्मात् तस्मादिति पुनः शान्ताया वचनम् । **यदुतिलकस्य** श्रीकृष्णस्य **वियोगाद्विरहात्** मम **ज्ञानहानिरस्तु** प्रियविरहस्य चित्तवैकल्यहेतुत्वादिति भावः । **गतं विरहभयं** यस्य तस्य **वृक्षस्य ज्ञानहानिः कुतः** । चित्तवैकल्यहेतु-प्रियवियोगाभावादिति भावः । इति पुनर्मुग्धोक्तिः ॥३०॥

**सखि कथय स कोऽयं तन्वि पीयूषरश्मि-**
**र्दिशति कथमुदग्रं तर्हि मे कालकूटम् ।**
**हरिरिव पदमात्रशाघ्यधर्मः स नूनं**
**वहति गरमगौरं ह्रासभागेष चन्द्रः ॥ ३१ ॥**

**व्या : सखीति** । हे **सखि अयं** गगने दृश्यमानः **क** इति मुग्धावचनम् । हे **तन्वि** कृशाङ्गि **पीयूपरश्मिर**मृतकिरणश्चन्द्र इति शान्तावचनम् । यद्येवं **तर्हि मे उदग्रं** तीक्ष्णं **कालकूटं कथं दिशति** इति पुनर्मुग्धोक्तिः । इति चन्द्रप्रसङ्गाच्छान्ताऽपि विमोहिता सती तां प्रत्याह । हरिरिति । **स एष** चन्द्रः **हरिरिव** श्रीकृष्ण इव **पदमात्रशाघ्यधर्मा** पदमात्रेण नाममात्रेण शाघ्यः यथा हरिपदवाच्यता इत्याक्रोशाद्दृष्टान्तीकरणम् । **ह्रासभाक् अगौरं** श्यामं **गरं** विषं हृदि **वहति नूनं** निश्चयः । अत एव ह्रासभागित्युक्तम् ॥ ३१ ॥

**धन्ये यामिनि कामिनीव शशिनं सानन्दमाचुम्ब्य या**
**मान्यैस्तस्य करैः सुधारसधरैरालिङ्गिताङ्गी सदा ।**
**विशेषाच्चकिताऽनुयासि बत तं देशान्तरे प्रस्थितं**
**कृष्णायाध्वनि शंस कञ्जनयनायास्मन्मनोवेदनाम् ॥३२॥**

**व्या : धन्य इति** । **धन्ये** कृतार्थे हे **यामिनि** रजनि । 'रजनी यामिनी तमी' इत्यमरः । **या** त्वं **कामिनीव** कामवती नारीव **सानन्दं** आनन्देन सहितं यथा भवति तथा **मान्यैः** सुधारसं धारयन्तीति **सुधारसधराः** तैस्तस्य **करैः** किरणैः **सदालिङ्गिताङ्गी** सती यावत्प्रदेशो रात्रिः तावच्चन्द्रकिरणव्याप्तेरिति भावः ।

**शशिनं** पतिम् । चन्द्रस्य निशापतित्वादिति भावः । **आचुम्ब्य** चुम्बनं कृत्वा रात्रेरुपरिभागे अन्तरिक्षे चन्द्रस्य स्थितेस्तथोक्तिः । **देशान्तरे** मेरोरपरदेशे **प्रस्थितं** यान्तं **विशेषात्** वियोगात् **चकिता** सती **अनुयासि** गच्छसि **वत** यत्र यत्र चन्द्रस्तत्र तत्र रात्रेर्गमनादिति भावः । **अध्वनि** मार्गे । अनेन **कृष्णस्य** व्याप्तत्वं सूचयन्ति । **कञ्जनयनाय** पुण्डरीकाक्षाय नेत्रसौन्दर्यलक्षणतच्चिह्नो-क्त्यर्थमिदम् । **श्रीकृष्णायास्मन्मनोवेदनां** मनोदुःखं **शंस** कथय । अनेन श्रीकृष्ण-विरहान्वितम्बगौरवेण गमने आयासविशेषाच्च अतीता अल्पाऽपि रात्रिर्बह्वी उर्वरिता । बह्वी अप्यल्पीयसीति तासां भ्रमो व्यज्यते । अत एव भ्रमालङ्कारस्य व्यङ्ग्यता ॥३२॥

**निशाचराः प्राणहराश्च चोराश्चरन्ति यस्यां न बुधाः सुबोधाः ।**
**स्वयं च कृष्णाप्रियसौभगा या किमस्मदानन्दकरीयमार्याः ॥३३॥**

**व्या :** जडत्वात् प्रत्युत्तरादाने गर्वेणानुक्तिरिति भ्रान्त्याऽधिक्षिपन्ति । **निशाचरा** इति । **यस्यां** रात्र्यां **निशाचराः** राक्षसाः **प्राणहराश्चोराश्च** । प्राणहरा इति गवाक्ष-दीपिकान्यायेनोभयत्रान्वेति । चरन्ति **सञ्चरन्ति सुबोधाः** शोभनबुद्धयो **बुधाः** विद्वांसो **न** चरन्तीति पूर्वेणान्वयः । निशीथे पिशाचादीनां सञ्चारादन्येषामसञ्चारादिति भावः । **या** यामिनी **स्वयञ्च** कृष्णे कृष्णपक्षे अप्रियं चन्द्राभावेन लोकानामप्रियं **सौभगं** सौभाग्यं यस्याः सा तथोक्ता । अस्मत्प्रियस्य श्री **कृष्णस्य अप्रियसौभगेति** ध्वनिः । हे **आर्याः** इयं रात्रिरस्मदानन्दकरी **किं** श्री कृष्णभक्तानां गोपीनामस्माकं सन्तोषकारिणी किं? । न सन्तोषकारिणीत्यर्थः ॥३३॥

**कालिन्दि तं कथय कञ्जदलायताक्षं नाम्ना गुणेन सदृशी ननु नन्दसूनोः ।**
**ब्रह्मण्यदेवमृषयः सखि शान्तगम्यं ब्रह्महृदे कृतगृहं ब्रुवते भवत्याः ३४**

**व्या :** कालिन्दीति । हे **कालिन्दि** यमुने कञ्जवद्विशाले अक्षिणी यस्य **तं** श्रीकृष्णं कथय । श्रीकृष्णस्त्वद्वाक्यं श्रोष्यतीत्याशयेनाहुः । **नाम्नेति** । नाम्ना

श्रीकृष्णेति **नाम्ना गुणेन** नैल्येन **नन्दसूनोः** श्रीकृष्णस्य **त्वं सदृशी** समाना ननु निश्चयः । तमहं न जानामीत्यत आहुः । **ब्रह्मण्यदेवमिति** । हे **सखि** कालिन्दि । सखीत्याभिमुख्यकरणोपायः । **ऋषयः शान्तगम्यं** ज्ञानिगम्यम् । अनेनाक्रूरगम्य इति तासामनागतज्ञानं गम्यते । ब्रह्मण्यो ब्राह्मणप्रियः स चासौ तं श्रीकृष्णं **भवत्याः ब्रह्महृदे** ब्रह्महृदाख्यतीर्थे अक्रूराय श्रीकृष्णः स्वात्मानं यत्रादर्शयत् तस्य नाम **ब्रह्महृद** इति । तस्मिन् **कृतगृहं** कृतालयं सन्निहितमित्यर्थः । वैकुण्ठलोकस्य तत्र प्रदर्शितत्वात् कृतगृहमित्युक्तम् । **ब्रुवते** वदन्ति । अतस्त्वं जानासीति भावः ॥ ३४ ॥

**कालिन्दि त्वमघान्वितानपि सतः कृत्वा पवित्रात्मनो**
**गन्तुं नैव कदापि मुञ्चसि तव भ्रातुर्निकेतं प्रति ।**
**किन्तु क्षीरपयोब्धिवासनिरतान् प्रीता करोष्याश्रितान्**
**स्निग्धे भर्तरि कामिनीजनरुचिस्तत्पक्ष एव ह्यलम्[1] ॥३५॥**

**व्या : कालिन्दीति** । हे **कालिन्दि त्वम् अघेन** पापेनान्वितान् युक्तानपि **सतः** सज्जनान्**पवित्रात्मनः** पूतात्मनः **कृत्वा** तव **भ्रातु**र्यमस्य **निकेतं** प्रति गृहं

---

१ श्लोकोऽयं तीर्थप्रबन्धेऽपि वर्तते (७/३५), तत्रत्यव्याख्यानं तु –
**कालिन्दीति** । हे कालिन्दि त्वं अघेन पापेनान्वितान् युक्तानपि सतः सज्जनान् पवित्रात्मनः पूतात्मनः कृत्वा तव भ्रातुर्यमस्य निकेतं प्रति गृहं प्रति गन्तुमेव न मुञ्चसि । यातना तु दूरतोऽपास्तेति भावः । किन्तु प्रीता त्वमाश्रितान् तान् क्षीरपयोब्धिवासनिरतान् क्षीरसमुद्रमध्यस्थश्वेतद्वीपवासिनः करोषि । कालिन्दीनिषेवणानन्तरं नरकादर्शनं कर्मक्षयः साक्षान्मुक्तिश्च भवतीति भावः । तथाहि भर्तरि स्निग्धे स्नेहयुक्ते सति । क्षीरसमुद्रस्य तु चिक्कणताख्यगुणयुक्तत्वात् स्निग्ध इत्युक्तम् । अत एव श्लिष्टगर्भोऽर्थान्तरविन्यासः। कामिनीनां कामवतीनां नारीणां जनस्य रुचिः प्रीतिरलमत्यर्थं तस्य भर्तुः पक्ष एव हि भर्तृप्रेमातिजन्मसुखाभिज्ञत्वात् । अस्माकमपि भर्तारं दिशेति भावः । श्वेतद्वीपं प्रति प्रेषणेन श्रीकृष्णसङ्घटकत्वशक्तिरस्तीति ध्वन्यते । पूर्वार्धेन श्रीकृष्णविरहेण त्वत्तीरस्थानामस्माकं यमलोकप्राप्तिरपि त्वया परिहार्या । श्रीकृष्णसङ्गमप्रतिवन्धकदुरितध्वंसोऽपि कार्य इति ध्वन्यते ।'' इति ।

प्रति **गन्तुमेव न मुञ्चसि** । यातना तु दूरतोऽपास्तेति भावः । **किन्तु प्रीता त्वमाश्रितान् तान् क्षीरपयोब्धिवासनिरतान्** । भर्तरि स्नेहयुक्ते सति क्षीरसमुद्रस्य तु चिक्कणताख्यगुणयुक्तत्वात् **स्निग्ध** इत्युक्तम् । अत एव श्लिष्टगर्भोऽर्थान्तरविन्यासः । कामिनीनां कामवतीनां नारीणां जनस्य रुचिः प्रीतिरलमत्यर्थं तस्य भर्तुः **पक्ष एव** हि भर्तृप्रेमातिजन्यसुखाभिज्ञत्वात् । अस्माकमपि भर्तारं दिशेति भावः । श्वेतद्वीपं प्रति प्रेषणेन श्रीकृष्णसङ्घटकत्वशक्तिरस्तीति ध्वन्यते । पूर्वार्धेन श्रीकृष्णविरहेण [1]त्वत्तीरस्थानामस्माकं यमलोकप्राप्तिरपि त्वया परिहार्या । श्रीकृष्णसङ्गमप्रतिबन्धकदुरितध्वंसोऽपि कार्य इति ध्वन्यते ॥३५॥

---

१ यत्र च तीर्थाद्येव मुक्तिसाधनमुच्यते-

'ब्रह्मज्ञानेन वा मुक्तिः प्रयागमरणेन वा ।
अथवा स्नानमात्रेण गोमत्यां कृष्णसन्निधौ' इत्यादौ

तत्र पापादिमुक्तिः । स्तुतिपरता च । तत्रापि हि कुत्रचिद्ब्रह्मज्ञानसाधनत्वमेवोच्यतेऽन्यथामुक्तिं निषिद्ध्य-

'ब्रह्मज्ञानं विना मुक्तिर्न कथञ्चिदपीष्यते ।
प्रयागादेस्तु या मुक्तिर्ज्ञानोपायत्वमेव हि' इत्यादौ ।

न च तीर्थस्तुतिवाक्यानि तत्प्रस्तावेऽप्युक्तं ज्ञाननियमं घ्नन्ति । यथा कश्चिद्दक्षं भृत्यं प्रत्युक्तानि 'अयमेव हि राजा किं राज्ञा' इत्यादीनि । यथाऽऽह भगवान्-

'यानि तीर्थादिवाक्यानि कर्मादिविषयाणि च ।
स्तावकान्येव तानि स्युरज्ञानां मोहकानि वा ।
भवेन्मोक्षस्तु मद्दृष्टेर्नान्यतस्तु कथञ्चन' इति नारदीये ।

अतोऽपरोक्षज्ञानादेव मोक्षः । कर्म तु तत्साधनमेव । - इति गीताभाष्ये (३/२०)

दानतीर्थतपोयज्ञपूर्वाः सर्वेऽपि सर्वदा ।
अङ्गानि हरिसेवायां भक्तिस्त्वेका विमुक्तये ॥ - म.भा.ता.नि. (१/९९)

'तीर्थशब्दो मुख्यतः पावनेषु वर्तते । नान्यत्र । तत्र प्रयोगस्तु न तत्त्वविदां मनोज्ञः । तादृशास्तु भगवत्तत्त्वविदो भागवता एव । अतस्तेभ्यः उपदेशाद्यर्थं तद्गवेषणाय अटनमेव तीर्थाटनं नाम । तदेव कर्तव्यं कुशलेन, न तु मूढाभिमततीर्थाटनमिति ॥

- श्रीविष्णुतीर्थाः (भागवतसारोद्धारे)

**रङ्गत्तरङ्गचयसङ्गतवायुना त्वं**
**माङ्गल्यदा किल समीपकृतालयानाम् ।**
**भृङ्गीरिवान्तिकवने तव सञ्चरन्तीः**
**सङ्गीतकृष्णचरिताः किमुपेक्षसे नः ।। ३६ ।।**

**व्या :** रङ्गदिति । हे कालिन्दि **रङ्ग**न्तश्चलन्तस्**तरङ्गा**स्तेषां **चयेन सङ्गतः** सम्बद्धः स चासौ **वायु**श्च तेन समीपे तव निकटे **कृतालयानां** स्थितानामित्यर्थः। **माङ्गल्यदा** शोभनदा **किल भृङ्गीरिव** भ्रमरीरिव **तवान्तिकवने** समीपवने **सञ्चरन्तीः सङ्गीतं** सम्यग्गीतं **कृष्णस्य चरितं** याभिस्ताः नोऽस्मान् किं कस्मादुपेक्षसे । त्वत्तीरवासमात्रेण फलदायास्तव हरिप्रसङ्गसाधनवतीषूपेक्षा नोचितेति भावः ।।३६।।

**हे मन्दमारुत मुकुन्दपदाब्जगन्ध-**
**श्रीमाननीय तमिहानय मान्यगम्यम् ।**
**नो चेद्बहिर्नय तवाङ्गसमानजातिं**
**प्राणं हृदि स्थितमथार्पय कृष्णपादे ।। ३७ ।।**

**व्या :** हे मन्दमारुतेति । **मुकुन्द**स्य मोक्षप्रदस्य श्रीकृष्णस्य **पदाब्जगन्धश्रिया** चरणारविन्दामोदसम्पदा **माननीय** पूज्य हे **मन्दमारुत** मानिभिरहङ्कारि-भिरगम्यमप्राप्यं तं श्रीकृष्णम् इह अस्मन्निकटे आनय । वायोरुन्नयनानयनसा-मर्थ्यादिति भावः । हे अङ्ग प्रिय वायो नोचेन् तं नानयसि **चेत् नो हृदि** स्थितं **तव समानजाति**मेकजातिं **प्राणं बहिर्नय** । अस्मदनुपकर्तुस्तव जातिमेव न सहाम इति बाह्यो भावः । आन्तरं तु मरणं ध्वन्यते । अथ हृदयदेशान्नयनानन्तरं **कृष्णपादे** अर्पयतु । दुर्विषयसम्बन्धो माऽस्त्विति भावः । अनेन मरणानन्तरमपि श्रीकृष्णसम्बन्धाभिलाषो ध्वन्यते ।। ३७ ।।

**अतीन्द्रियस्यामितविक्रमस्य प्रदर्शयस्यङ्ग पदाब्जगन्धम् ।**
**अपेक्षसे किं परमस्य साम्यमदृश्य दृश्यात्मविशेषधर्मन् ॥३८॥**

**व्या :** अतीन्द्रियस्येति । [१]अतीन्द्रियस्येन्द्रियागोचरस्यामितविक्रमस्यापरिमितपराक्रमस्य श्रीकृष्णस्य **पदाब्जगन्धं प्रदर्शयसि** हे **अदृश्य अतीन्द्रिय**। **दृश्यः** प्रत्यक्षयोग्यः **आत्मनः** स्वस्य **विशेषधर्मः** अपाकजानुष्णाशीतस्पर्शाख्यो यस्य तस्य सम्बुद्धिः **दृश्यात्मविशेषधर्मन्** वायो । **परमस्य** कृष्णस्य **साम्यमपेक्षसे किम्** । स्वरूपेणातीन्द्रियत्वं धर्मेणैन्द्रियकत्वमिति त्वदीयोऽर्धजरतीयन्यायः योग्यानां सगुणतया दृश्यरूपस्यायोग्यानां सर्वात्मनाऽदृश्यस्यास्मत्कृष्णस्य न संयोजनीय इति भावः ॥ ३८ ॥

**हे पक्षिणः कृष्णमुदीरयध्वं पापापहं पावनपावनं तम् ।**
**नो चेद्भवत्कण्ठविशोषणैर्नः श्रोत्रस्य शल्योपमितैः किमेतैः ॥३९॥**

**व्या :** हे पक्षिण इति । हे **पक्षिणः पापापहं** पापघ्नं **पावनपावनं** पवित्राणां पवित्रं[२] **श्रीकृष्णमुदीरयध्वम्** । श्रीकृष्णोऽत्रास्तीति कथयध्वम् । तेन पापनाशनादिना भवतां श्रीकृष्णप्राप्त्या अस्माकमपि साफल्यमिति भावः । **नो चेत् भवतां कण्ठशोषणैर्नो**ऽस्माकं **श्रोत्रस्य** । जात्येकवचनम् । श्रोत्राणामित्यर्थः । **शल्योपमितैः** वक्रशरोपमैरेतैर्वृथास्वरैः **किम्?** । उभयेषामप्यनिष्टप्राप्तेरिति भावः ॥३९॥

**स्वरेण स्मारयन् शौरिं प्रयच्छति न नः सखि ।**
**परपुष्टः स विस्पष्टं पोष्टुर्वै विप्रलम्भकः ॥ ४० ॥**

---

१ अचेतनः स्पर्शगम्यः । - इति काठकोपनिशद्भाष्ये
वायुस्पर्शोऽपि त्वचो विषयः । - प्रमाणपद्धतौ
२ पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् । - इति विष्णुसहस्रनामस्तोत्रे

**व्या : स्वरेणेति** । हे सखि **स्वरेण** कृष्णसदृशस्वरेण **शौरिं** श्रीकृष्णं **स्मारयन्** अयं **परपुष्टः** कोकिलो **नः** अस्माकं **न प्रयच्छति** । तथाहि । **स** परपुष्टः परेण काकेन पुष्टः अनेन परान्नोपजीवी लुब्धो ध्वन्यते । **विशेषेण स्पष्टं** यथा भवति तथा **पोष्टुः** पोषकस्य **विप्रलम्भको वै** वञ्चकः खलु । पक्षोत्पत्तिपर्यन्तं काकैः पोषितस्तदनन्तरं तान् वञ्चयित्वा अन्यत्र गच्छतीति प्रसिद्धिः । एतादृशस्यास्मद्वञ्चनं न दुष्करमिति भावः ॥ ४० ॥

**हे कृष्णसार कृतकौतुकमात्मदृष्टेः**
**श्रीकृष्णवर्ष्म किमलक्षि भरं बिभर्षि ।**
**नेत्रोदयस्य मुरलीवररञ्जितस्य**
**श्रोत्रस्य चोन्नतिरियं भवतश्चकास्ति ॥ ४१ ॥**

**व्या : हे कृष्णसारेति** । हे **कृष्णसार** [१]मृग **आत्मदृष्टेः** स्वनयनस्य **कृतं कौतुकं** कौतूहलं येन तत् **श्रीकृष्णवर्ष्म** शरीरम् । 'शरीरं वर्ष्म विग्रहः' इत्यमरः । त्वया **अलक्षि** किम् अदर्शि **किम्** । लक्षतेः कर्मणि लुङ् । किमिति प्रश्ने । तत्र निमित्तमाहुः । यतस्त्वं **नेत्रोदयस्य** नेत्रोत्सवस्य भरमतिशयम् । 'भरोऽतिशयभारयोः' इत्यमरः । **बिभर्षि** दधासि । **मुरलीरवेण** वेणुनादेन **रञ्जितस्य भवतः श्रोत्रस्येयमुन्नतिरौन्नत्यं च चकास्ति** शोभते । अनेन श्रीकृष्णविलासदर्शनं विना नयनाद्युत्सवकारणमन्यं नास्तीत्यनन्यभक्तियोगो ध्वन्यते । इतः पूर्वतनपद्येषु वृक्षादीनामामन्त्रणात् प्रायो मोहावस्था । 'उन्मादश्चित्तवैकल्यात्' इत्युक्तेः ॥ ४१ ॥

---

१ अप्येणपत्न्युपगतः प्रिययेह गात्रैस्तन्वन् दृशां सखि सुनिर्वृतिमीश्वरो वः ।
कान्ताङ्गसङ्गकुचकुङ्कुमरञ्जितायाः कुन्दस्रजः कुलपतेरिह वाति गन्धः ॥
बाहुं प्रियांस उपधाय गृहीतपद्मो रामानुजस्तुलसिकालिकुलैर्मदान्धैः ।
अन्वीयमान इह वस्तरवः प्रणामं किं वाऽभिनन्दति चरन् प्रणयावलोकैः ॥
- भागवते (१०/२८/११,१२)

**यदि निगमविदूरस्त्वं नृणां दूरदूरो**
**हृदयकमलतः किं नाथ नापैषि तर्हि ।**
**तरुणि तनुवियोगः किं मतस्ते मनोज्ञे**
**प्रियपुरुषवियोगाद्दुस्सहं तं न मन्ये ।। ४२ ।।**

**व्या :** अन्यतः स्वकार्यमलभमानाः श्रीकृष्णमेव प्रार्थयन्ते[१] – **यदीति** । हे **नाथ** कृष्ण **निगमस्य** वेदस्य **विदूरो** अगोचरः । 'यतो वाचो निवर्तन्त' इति श्रुतेः। **त्वं नृणां दूरदूरः**[२] अतिशयेनागोचरः यदि **तर्हि** अतिसमीपाद्धृ-दयकमलतः **किं** किमर्थं **नापैषि** अन्यत्र न गच्छसि गच्छत्यर्थः । अन्या एवं वदन्त्याः आशयमुद्धाटयति । हे **तरुणि** अनेन मरणयोग्यकालो ध्वन्यते । **तनुवियोगः** शरीरत्यागः ते तव संमतः अभिमतः किमिति प्रश्ने । हृदयात्कृ-ष्णापसरणस्य "ब्रह्मणा त्यक्तदेहस्तु मृत इत्युच्यते नरः" इति[३] स्मृतेस्तस्या मरणरूपत्वादिति भावः । एवमुक्ता साऽप्यनुमतिं सयुक्तिकं करोति । हे **मनोज्ञे** हृदयज्ञे **तं** तनुवियोगं **प्रियस्य** प्रेमास्पदस्य **पुरुषस्य वियोगाद्**विरहा**द्दुःसहं** सोढुमशक्यं **न मन्ये** । श्रीकृष्णकृपारहितानां मरणमेव वरमिति भावः ।।४२।।

**त्वयि न वहति मानं न प्रगल्भेति कृष्णो**
**यदजनि तनुकार्श्यं दैन्यमन्तः क्षणेन ।**
**न हि सखि मम दैन्यं दीननाथप्रयुक्तं**
**कृशतरनिखिलाङ्ग्याः किन्तु विशेषवह्नेः ।। ४३ ।।**

---

१ तैत्तिरीयोपनिषत् (२/४)

२ तद्दूरे तद्वन्तिके । - इति ईशावास्योपनिषत् ।

दूराद्दूरतरं यत् तु तदेवान्तिकमन्तिकात् । - इति द्वादशस्तोत्रे ।

३ विष्णुतत्त्वविनिर्णयोद्धृतमहाभारतवचनम् ।

**व्या :** त्वयीति । हे तरुणि **श्रीकृष्णः** त्वं प्रौढा **प्रगल्भा न** भवसीति **त्वयि मानं** बहुमानं **न** वहति । अप्रौढौ हेतुमाह । **यत्** यस्मात् कृष्णविरहेक्षणमात्रेण **तनुकार्श्यं** शरीरस्य **कृशता अजनि** जातम् । अनेन तनुतालक्षणावस्था दर्शिता। तदभावात् तनोः कामज्वरेण तनुता यथेत्युक्तत्वात् । **अन्तः** हृदयान्तः **दैन्यं** दीनभावश्च । अनेन नायिकायाः अधीरता द्योत्यते । अजनीति पूर्वेण सम्बन्धः। प्रगल्भा हि उत्पन्नमपि दुःखं निगृह्य धीरेव तिष्ठति । त्वं तु न तथा । तस्मान्न प्रगल्भेति भावः । एवमुक्ता प्रत्याह । हे **सखि कृशतरनिखिलाङ्ग्याः** अत्यन्तकृशीभूतसर्वावयवायाः मम दैन्यं दीननाथेन श्रीकृष्णेन प्रयुक्तं नहि **किन्तु विशेषवह्नेः** विरहाग्नेः प्रयुक्तमिति शेषः । अनेन स्वधीरताप्रदर्शनाय श्रीकृष्णं धिक्कर्तुं कामनयाऽपि [1]घट्टकुट्टीप्रभातदृष्टान्तेन वाचो भङ्ग्यन्तरेण श्रीकृष्णमेव हेतूकृत्य स्वप्रेमातिशयः प्रदर्शितो भवति । अत एव तत्प्रयुक्तस्वदैन्यदृढीकरणाय दीननाथेत्येवमुक्तम् । उद्बोधितयाऽपि मया श्रीकृष्णोऽवज्ञातुं न शक्यत इति भावः। श्रीकृष्णावज्ञाकरणोद्योगात् स्पष्टमवज्ञाने अकौशल्याच्च मध्येयं नायिकेति ज्ञातव्यम् ॥ ४३ ॥

**अनृतलपितमेनं नार्थयध्वं तथा त-**
**द्विदधति बत चेतः प्रार्थनाशीलमेते ।**
**परभृतशुकभृङ्गा गीतवाक्यालकाभाः**
**पथि पथि परमस्य श्रीमुखश्रीश्च चन्द्रः ॥ ४४ ॥**

**व्या :** तत्रैका सर्वाः प्रत्याह । **अनृतेति** । अनृतं लपितं भाषितं यस्य तम्। 'व्याहार उक्तिर्लपितम्' इत्यमरः । युष्मान् सुखयिष्यामीत्यार्यावतचर्या-

१ शुल्कदानभिया विपथेन रात्रौ पलायमानस्य चौरवणिजः घट्टस्य कुटीसमीपे प्रभाते यथाऽभिष्टसिद्ध्यभावः । एवं विपथेन भावमानस्य तद्दोशतादवस्थ्यरूपो हि न्यायभेदः तथा भूतः । 'तदिदं घट्टकुट्टीप्रभातवृत्तान्तमनुसरति' । -इति वाचस्पत्ये ।

समये उक्तस्येदानीमन्यथाकरणादिति भावः । एतं कृष्णं **नार्थयध्वं** न प्रार्थयध्वम् । एवमुक्ताः प्रत्याहुः । **तत्** त्वयोक्तं **तथा** परन्तु श्रीकृष्णस्य गीतं गानं वाक्यं वचनम् । अलकाः कुन्तलाः तेषामाभेवाभा येषां ते तथोक्ताः । परभृतः गायन्तः पिकाः शुकाः चाटुवचनाः कीराः भृङ्गाः नीलवर्तुलभ्रमराश्च ते **परभृतशुकभृङ्गाः**। अस्य श्रीकृष्णस्य **श्रीमुखस्य श्रीरिव** श्रीर्यस्य स **चन्द्र** इत्येते **पथि पथि** प्रतिमार्गं **चेत**श्चित्तं **प्रार्थना**शीलं **विदधति** कुर्वन्ति **बत** । तूर्णीं गच्छाम इत्युक्तेऽप्येते स्मारयन्ति किं कुर्म इति भावः । अत्रापि पूर्ववदेव द्योत्यं द्रष्टव्यम् ॥ ४४ ॥

**रमणि रुचिररूपः किं नु दूरे तवासी-**
**न्नहि नहि मम पुण्यं तन्वि दूरे प्रयातम् ।**
**बत यदुकुलनाथः स त्वया मृग्यते किं**
**नहि सखि सह नीतं चित्तमन्वेषयामि ॥ ४५ ॥**

**व्या :** कृष्णेन स्वसमूहाद्या प्रेम्णेव नीता तामपि वियुक्तां दृष्ट्वा सोपहासमाहुः । **रमणीति**। हे **रमणि** मनोहरे इत्युपहासः **रुचिररूपः** मनोज्ञरूपः बलाद्धैर्यमालम्बितुं उद्युक्तायाः रूपस्मारणेन धैर्यं प्रच्यावयितुं मयैव त्यक्त इत्यहङ्कारोत्त्यनवसरार्थं चेदम् । सौन्दर्यातिशयेन त्यागायोगात् । श्रीकृष्णस्तवापि दूर आसीत् किं। प्रत्याह । नहि नहीति । द्विरुक्तिः स्वाहङ्कारपरिरक्षणाय । कृष्णो न दूरं गत इत्यर्थः । किन्तु हे तन्वि बह्वीष्वेकवचनप्रयोगो [१]विरहजनितचित्तवैकल्येन। मम पुण्यमेव सुकृतमेव दूरे प्रयातं गतम् । अत्रापि पुण्यलभ्यः श्रीकृष्णः पुण्यहीनायाः कथं **मम** लभ्य इति भावः । तथा चैतदुपहासपरिहाराय वाचोभङ्ग्या स्वाहङ्कारं रक्षितुमुद्युक्ताया अपि पुण्यहीनाया मम कथं **स** लभ्य इति पुण्यहीन-

१ परिहासप्रलापादिष्वन्यथा वाक् क्वचित् भवेत् ।
- इति भागवततात्पर्योद्धृत-शब्दनिर्णयवचनम् । ५/२/७

त्वश्रीकृष्णवियुक्तत्वाभ्यां दैन्यप्रदर्शनेन सुतरामहङ्कारप्रच्युतिरेव कृता भवतीति कृष्णाख्यवस्त्वतिशयः स्वप्रेमातिशयश्च द्योत्यते । हे **बत सखि यदुकुलनाथः** कृष्णस्त्वया मृग्यतेऽन्विष्यते किमिति पुनः सर्वासां वचनं प्रत्याह । **सखीति ।** मदुपहासेनालमित्याभिमुख्यसम्पादनाय सखीति सम्बुद्धिः । अत्रापि बहुष्वेकवचनं लज्जाकृतभ्रमेण[१] । **नहि** श्रीकृष्णान्वेषणं न क्रियते । किन्तु **सह** श्रीकृष्णेन साकं **नीतं मनो**ऽन्वेषयामि **मृगयामि** । अत्रापि पूर्ववद्वस्त्वतिशयादिकं द्योत्यमूह्यम् ।। ४५ ।।

**वितनुत बत सख्युः सुस्थिरं चित्तमस्म-**
**न्मृदुलहृदवलोक्य स्थैर्यमालम्बयत् सः ।**
**अनुवनमयि कान्तं सञ्चरन्तं समन्ता-**
**दनुसरदनुरक्तं कारयेत् कः स्थिरं तत् ।। ४६ ।।**

**व्या :** वितनुतेति । बत हे सख्यः चित्तं सुस्थिरं सम्यक् स्थिरं वितनुत कुरुत यस्मात् कारणात् अस्माकं मृदुलं हृद्धृदयमवलोक्य स कृष्णः स्थैर्यमागमने स्थिरताम् आलम्बयेदाश्रयेत् । अयि सखि अनुवनं प्रतिवनं समन्तात् परितः सञ्चरन्तं कान्तं कमनीयं श्रीकृष्णम् अनुसरत् अनुसृत्य गच्छत् । अनुरक्तं स्नेहयुक्तं तत् चित्तं कः स्थिरं कारयेत् कुर्यात् ।। ४६ ।।

**स विधिरपि निदेशं तस्य नूनं विधत्ते**
**विरहदहनशान्तिं यन्न मूर्छां ददाति ।**
**अपि निशि हृदयान्तः कृष्णसंश्लेषशङ्की**
**न दिशति च सुषुप्तिं हा हताः किं विधेयम् ।। ४७ ।।**

---

१ सन्तापक्रोधरागादिष्वनर्थकवचः क्वचित् ।।
- इति भागवततात्पर्योद्धृत-शब्दनिर्णयवचनम् । ६/४/५८

**व्या : स** इति । स प्रसिद्धः ब्रह्माऽपि **तस्य** श्रीकृष्णस्य **निदेशम्** आज्ञां **नूनं** निश्चयेन **विधत्ते** कुरुते **यत्** यस्मात् कारणात् **विरहदहनस्य** विरहाग्नेः **शान्तिः** शमनं यस्यां तां **मूर्छां न ददाति । अपि च हृदयान्तः** हृदयमध्ये **श्रीकृष्णसंश्लेषशङ्की** सुप्तिदशायां श्रीकृष्णालिङ्गनमासां स्यादिति शङ्की सन् । 'प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद'[१] इति श्रुतेः । **निशि** रात्रौ **सुपुप्तिं** निद्रां **न दिशाति । हा कष्टं हताः** नष्टाः स्मः । अत्र **किं विधेयं** किं कर्तव्यम् । स्वविरहेणास्मान् क्लेशयतः श्रीकृष्णस्याज्ञाधर इव मूर्छास्वप्नयोर-प्रदानेन स्वयमपि क्लेशयति इति भावः । केनचिव्द्याजेन श्रीकृष्णस्य ब्रह्मादि नयामकत्वरूपमहामाहात्म्यमेव कथितं भवति । अनेन जागरावस्था दर्शिता । ''प्रियानवाप्त्या तच्चित्तसातत्याज्जागरो यथा'' इत्युक्तेः ।। ४७ ।।

**यदि मधुरमपायि स्वीयगाथामृतं प्राक्**
**स्फुरदधरसुधां स्वां तर्हि यच्छेन्मुकुन्दः ।**
**क्वचिदपि निजधाम स्थावरं जङ्गमं वा**
**यदि विमलमदर्शि स्वं तदा दर्शयेन्नः ।। ४८ ।।**

**व्या : यदीति** । यद्यस्माभिः **मधुरं** स्वादुतरं **स्वीयं** श्रीकृष्णसम्बन्धि **गाथामृतं** कथापीयूषं **प्राक्** पूर्वमपायि पीतम् । पिबतेः कर्मणि लुङ् । **तर्हि मुकुन्दः** श्रीकृष्णः **स्वां** स्वकीयां **स्फुरतो** लसतः अधरस्य सुधाम् अस्माकं **यच्छेत्** प्रयच्छेत् प्रागप्यमृतपानस्यौचित्यादधुनाऽप्यमृतमेव देयमिति बाह्यो भावः । श्रीकृष्णकथाकथनादिना पुण्यमस्ति चेत् कृष्णो लभ्यतामिति हृदयम् । एवं उत्तरत्रापि द्रष्टव्यम् । किञ्च **क्वचिदपि** कुत्रचित् प्रदेशे **विमलं स्थावरं** जडं **जङ्गमं** चरं **वा निजधाम** स्वसन्निधानमन्दिरं प्रतिमेत्यर्थः । यद्यदर्शि दृष्टम् । दृशेः कर्मणि लुङ् । तदा तर्हि स्वमात्मानं **दर्शयेत्** ।। ४८ ।।

---

१ इति बृहदारण्यकोपनिषत् (६/३/२१)

**कररुहपदभास्वद्गात्रविशेषभीत्या**
**न मृतिरनुमता नः कृष्ण तेऽदर्शनाच्च ।**
**असुभृतिरपि तस्मात् सौम्य सौन्दर्यधाम-**
**न्नधिगहनमुभाभ्यां बद्धकण्ठा इव स्मः ॥ ४९ ॥**

**व्या :** कररुहेति ॥ हे सौम्य हे सुमुख **सौन्दर्य**स्य **धाम** मन्दिरं यस्मिन् सः । गमकत्वाव्यधिकरणबहुव्रीहिः । तस्य सम्बुद्धिः **कृष्ण** । **कररुहा**णां नखानां पदं स्थानं क्षतमित्यर्थः । तेन **भास्वत्** लसत् **गात्रं** शरीरं तस्य **विशेषो** वियोगः तस्माद्भीतिः तया **नो**ऽस्माकं **मृति**र्मरणं **अनुमता** सम्मता **न** भवति । शरीरलोभान्न मृतिरनिष्टा किन्तु तव विलासचिह्नलोभादिति वदन्तीभिः कृष्णस्नेहातिशयः प्रदर्शितो भवति । एवमुत्तरत्रापि द्रष्टव्यम् । ते तवादर्शनाद्दर्शनाभावात् असुभृतिश्च प्राणधारणं चानुमता यस्मात् तस्मादधिगहनं वनमध्ये उभाभ्यां पुरुषाभ्यामुभयतो **बद्धकण्ठा इव स्मः** वर्तयामः ॥ ४९ ॥

**नयनगनलिनेषुं कान्तवक्त्रेन्दुकान्त्या**
**नवपदरविभासा नः कुचस्थोत्पलेषुम् ।**
**शमय सदय गाढालिङ्गनेनार्धगात्री-**
**र्विरचय तव दासीस्तेन कन्दर्पदर्पम् ॥ ५० ॥**

**व्या :** **नयनगे**ति । नयनं नेत्रं गतः प्राप्तो नयनगः स चासौ नलिनेषुश्च कामस्य पद्मशरः तम् । अनेन स्वभावत एव स्वकीयमरविन्दवत् फुल्लं लोचनं अरविन्दशरघातेन फुल्लं विभावयन्तीभिः श्रीकृष्णदर्शनौत्कण्ठ्यं सूचितं भवति । अत एव विभावनालङ्कारेण वस्तुसूचनम् । हे **कान्त** कृष्ण ते तव **वक्त्रेन्दुकान्त्या** मुखचन्द्रश्रिया शमय नाशय । चन्द्रस्यारविन्दविरोधित्वात् त्वन्मुखदर्शनावधिः चक्षुःकाम इति भावः । **नवपदरविभासा** नूतनपादाख्यसूर्यतेजसा नोऽस्माकं [1]**कुचस्थमुत्पलेषुं** कामस्योत्पलशरं **शमय** । सूर्यस्य कुमुदविरोधित्वात् । अत्रापि

---

१ फणिफणार्पितं ते पदाम्बुजं कृणु कुचेषु नः कृन्धि हृच्छयम् । - इति गोपिगीता

स्वभावत एव नीलस्य कुचाग्रस्य नीलोत्पलशरघातेन नीलतां बिभावयन्तीभिः हृद्गतकामातिशयः तस्य कृष्णपादस्पर्शावधित्वं च सूचितम्। हे **सदय** दयासहित श्रीकृष्ण तव **दासीर्नः गाढालिङ्गनेनार्द्धगात्रीः** परिदृश्यमानार्धशरीरवतीः **विरचय** । अर्धमस्मद्गात्रमर्धं त्वद्गात्रमिति मिलित्वा यथा एकं शरीरमिति प्रतीतिः स्यात् तथा गाढालिङ्गनं कुर्वित्यर्थः । तेन बहुसङ्ख्याकार्धनारीश्वरप्रतीतया एकस्मादप्यर्धनारीश्वराद्बिभ्यतः **कन्दर्पस्य दर्पं** गर्वं शमय । अस्मत्पूर्णकामोद्रेकस्तव गाढालिङ्गनावधिरिति भावः । अनेन त्रपानाशावस्था सूचिता। ''मानत्यागस्त्रपानाशो गौरवागणना यथा'' इत्युक्तेः ॥ ५० ॥

**अयि रमण मुरारे सुन्दरीकान्त शौरे**
**नरकमथन कृष्ण प्रौढ वाराशिधिष्ण्य ।**
**करजितसुरवृक्षाहंकृतात्मीयशिक्ष**
**स्वकविजयसहाय ध्वस्तधर्मान्तराय ॥ ५१ ॥**

**व्या :** अयीति । अयि हे **रमण मुरारे** । अनेन मुरनामकदैत्यं हनिष्यसीति स्वासामनागतज्ञानित्वं सूच्यते । **सुन्दरीणां** रमणीनां **कान्त** मनोहर । नरकरुद्धनारीपरिणयस्यानागतस्य ज्ञानमनेन सूच्यते । **शौरे** शूरपुत्र इदानीं नन्दसूनुतया प्रतीयमानस्त्वं वस्तुगत्या वसुदेवसूनुरित्यतीतज्ञानम् **नरकमथन** स्मरतां निरयविनाशन । नरकासुरं हनिष्यसीत्यनागतज्ञानम् । **प्रौढ** कुशल । अनेनास्मदुक्तिचातुर्यज्ञस्त्वमेवेति सूचितम् । **वाराशिधिष्ण्य** क्षीराब्धिमन्दिर। अनेन समुद्रमध्ये द्वारावतीनिर्माणस्यानागतस्य ज्ञानम् । **करेण** हस्तेन दानशक्त्येत्यर्थः। **जितस्तिरस्कृतः सुरतरुः** कल्पवृक्षो येन स तथोक्तस्तस्य सम्बुद्धिः। स्वकरेण पारिजातहरणमनागतं सूच्यते। **अहङ्कृतानाम्** अहङ्कारिणाम् **आत्मीयानां** स्वभक्तानां **शिक्षा** यस्मात् स तथा तस्य सम्बुद्धिः । अनेन पारिजातापहारकाले अहङ्कारेण युद्धार्थमागतानां देवानामागामिनी शिक्षा द्योत्यते। **स्वकानां** स्वभक्तानां **विजयस्योत्कर्षस्य सहाय** सम्पादक । अनेन

स्वभक्तस्य विजयस्यार्जुनस्य सारथ्यकरणमनागतं सूचितम् । **ध्वस्तः धर्मस्य** पुण्यस्यान्तरायो विघ्नो येन सः तस्य सम्बुद्धिः । अनेन धर्मस्य युधिष्ठिरस्य अन्तराय-भूतदुर्योधनसेनासंहारोऽप्यागामी सूचितः । हे **कृष्ण** गाढालिङ्गनेनार्धगात्रीर्वि-रचयेति पूर्वेणान्वयः । ज्ञानिप्रियस्त्वमतीतानागतज्ञानवतीरस्मान्नोपेक्षस्वेति भावः ॥ ५१ ॥

**[1]वृक्षेषु पक्षिषु मृगेषु विचारयन्तीः**
**प्रेक्ष्य प्रमुग्धहृदयाः श्रुततत्त्वकान्तीः ।**
**आविर्बुभूषुरपि रम्यतदीयवाक्य-**
**भावं पुनर्विविदिषुः स तदा तिरोऽभूत् ॥ ५२ ॥**

**व्या :** वृक्षेष्विति । **वृक्षेषु पक्षिषु मृगेषु** कृष्णं **विचारयन्तीः** प्रमुग्धहृदयाः मोहावस्थां प्राप्ताः श्रुतं तत्त्वं यैस्ते **श्रुततत्वाः** तत्त्वज्ञानिनस्तेषां **कान्तिरिव** कान्तिर्यासां ताः वृक्षादिषु कृष्णविचारेण स्वसर्वव्याप्तिरूपतत्त्वज्ञानवतां सदृशीरित्यर्थः । **प्रेक्ष्याविर्बुभूषुरपि** प्रत्यक्षीभवितुमिच्छुरपि **रम्याणां** मनोह-राणां **तदीयानां** गोपस्त्रीणां सम्बन्धिनां **वाक्यानां भावम**भिप्रायं **पुनर्विविदिषु-**र्विज्ञातुमिच्छुः अथापि किञ्चित्कालमेवं स्तुवन्त्विति इच्छावानित्यर्थः । **स** कृष्णः **तदा** तस्मिन् काले **तिरोभूत्** तिरोदधे ॥ ५२ ॥

---

१ एवं कृष्णं पृच्छमाना वृन्दावनलतास्तरून् ।
व्यचक्षत वनोद्देशे पदानि परमात्मनः ॥
पदानि व्यक्तमेतानि नन्दसूनोर्महात्मनः ।
लक्ष्यन्ते हि ध्वजाम्भोजवज्राङ्कुशलतादिभिः ॥
तैस्तैः पदैस्तत्पदवीमन्विच्छन्त्योऽग्रतोऽबलाः ।
वध्वाः पदैः सुपृक्तानि विलोक्यार्ताः समब्रुवन् ॥
कस्याः पदानि चैतानि यातायाः नन्दसूनुना ।
असन्यस्तप्रकोष्ठायाः करिण्याः करिणा यथा ॥
अनयाऽऽराधितो नूनं भगवान् हरिरीश्वरः ।
यन्नो विहाय गोविन्दः प्रीतो यामनयद् रहः ॥ -भागवते (१०/२८/१३-१८)

**कामिनीति जितापद्यां निनाय सुखयन् सुखी ।**
**कामिनीतिजिता पद्यां काश्चिदासाद्य सोज्झिता ।। ५३ ।।**

**व्या :** कामिनीति । जिता आपत् दुःखं येन स सुखी कृष्णः **कामिनी** रागवतीति कृत्वा यां गोपीं **सुखयन्** हर्षयन् **निनाय** नीतवान् । **जितापत्सुखीत्यनेन** परार्थमेव कृष्णस्य प्रवृत्तिः[१] न तु स्वदुःखपरिहाराय सुखप्राप्तये वेति द्योत्यते । कामिनां कामुकानां नीतिं रीतिं जयतीति कामिनीतिजित् तेन कृष्णेन **काश्चित् पद्यां** मार्गम् । 'सरणिः पद्धतिः पद्या' इत्यमरः । **आसाद्य** प्राप्य सा नारी उज्झिता त्यक्ता कामी चेत् तां न त्यजेदेव त्यागात् कामिनां स्वभावो जित इति भावः। यमकमलङ्कारः । अर्थालङ्कारस्तु स्वभावादिर्यथासम्भवमूह्यः । यमकलक्षणन्तु दण्डिनोक्तम् ।

''अव्यपेतव्यपेतात्मा व्याहृतिर्वर्णसंहतेः ।
यमकं तच्च पादानाम् आदिमध्यान्तगोचरम् ।
एकद्वित्रिचतुष्पादयमकानां विकल्पना ।
आदिमध्यांतमध्यान्तमध्याद्याद्यन्तसर्वतः ।
अत्यन्तबहवस्तेषां भेदाः सम्भेदयोनयः ।
सुकरा दुष्कराश्चैव वर्ण्यन्ते तत्र केचन''

इति । अस्मिन् श्लोके आदिपादयमकम् ।। ५३ ।।

**साऽरसाऽसारसंसारे ससार सुरसूरसम् ।**
**सुसारसरसारोरःसरसीसरसारसी ।। ५४ ।।**

**व्या :** सारसेति । सा अरसा असारसंसारे ससार सुरसूरसं सुसारसर-सारोरःसरसीसरसारसीति पदच्छेदः । न विद्यते सारः सुखं यस्मिन् सः स चासौ

---

१ 'न प्रयोजनवत्त्वात्' इति ब्रह्मसूत्रे (२/१/३३)
'नानवाप्तमवाप्तव्यम्' इति गीता (३/२२)

संसारश्च तस्मिन्नरसा रागरहिता। 'निर्यासरागगरलद्रवपारदेषु' इति रत्नमाला। सा कृष्णेन त्यक्ता गोपी सुरान् देवान् सूते प्रसूत इति सुरसूः सुरमाता लक्ष्मीः उरसि यस्य तं कृष्णम्। सुरसुवः सुरमातुर्लक्ष्म्याः रसः शृङ्गारो यस्मादिति वा। सुरसुवः उरः श्रेष्ठो वर इति वा। उरसी श्रेष्ठवक्षसी इति रत्नमाला। ससार अनुससार अनुगतेत्यर्थः। श्रीललनासहितः कृष्णः अनयैवानुसर्तव्य इति द्योतनायेदम्। सा कथंभूता सुसाराः अत्यन्तं वराः सराः मुक्तासरास्तैः सारं श्रेष्ठं तच्च तदुरश्च तदेव सरसी सरोवरं सुसारसरा एव सारं जलं यस्या इति वा। 'सारो बले स्थिरांशेऽर्थे पुमान् न्याय्येऽम्बरे त्रिषु। क्लीबमम्बुनि' इति रत्नमाला। तां सरति गच्छतीति सुसारसरसारोरः सरसीसरा सा च सा। सारसी च सारसपक्षिणः स्त्रीभूता सती ससारेति पूर्वेणान्वयः। सारसी प्राक् स्वावाससरोवरमिव कृष्णेनोरसि धृत्वा प्राङ्नीता गोपी तत्रैव स्नेहादनुससारेति भावः। यद्वा सुसारसरसारोरःसरसीसरे स्वोरस्थलाख्यसरसीसरे स्वोरसि चलन्त्यावित्यर्थः। सारस्यौ कुचाख्यौ सारास्यौ यस्याः सा द्रुतगमनाच्चलत्कुचा सती दुद्रावेति भावः। **सारसेतिपाठे** कुचाख्यक मलकोशवतीत्यर्थः। द्रुतगमनवशात् वक्षसि पतितशिरोलङ्कारभूतकमलवतीति वा। व्यक्षरयमकमिदम्॥ ५४॥

**अलक्षयन्ती स्मरतातमेनं हृदात्तखेदा स्मरता तमेनम्।**
**जगाद सौम्यं नय नातिदूरं विधे न कुर्या नयनातिदूरम्॥५५॥**

**व्या : अलक्षयन्तीति। स्मरस्य तातं** पितरम् अतिसुन्दरत्वादसह्यं तददर्शनमिति सूचनायेदम्। एनं कृष्णमलक्षयन्ती अपश्यन्ती तं परोक्षमेनं कृष्णं **स्मरता** चिन्तयता **हृदा** हृदयेन। **आत्तः** धृतः **खेदो** दुःखं यया सा गोपी **जगाद** किमिति हे **विधे सौम्यं** सुमुखं कृष्णम् **अतिदूरं न नय न** प्रापय। रूपविशेषेण गतस्यापि कृष्णस्य एकरूपेण त्वत्समीपे स्थितत्वात् कुतः प्रार्थनेत्यत आह। **नयनेति**। नयनयोर्नेत्रयोरतिदूरं न **कुर्याः** न कुरु। समीपे स्थितस्यापि

तस्य लोचनाविषयत्वादेव चिन्तेति भावः । अङ्गालिङ्गनादावाशावत्या मम स्मरणमात्रेण न तृप्तिरिति तु **स्मरता हृदा** आत्तखेदेत्यनेनैव सूचितम् ।। ५५ ।।

**कान्तोपमानेन दिवाऽपि कुट्यामन्तर्हितं कालभतेजसा यम् ।**
**स्वान्ते बिभर्मीश विनेह तं त्वामन्तर्हितं का लभतेऽज सायम् ।५६।**

**व्या : कान्तोपमानेनेति** । हे ईश कान्त **दिवाऽपि कुट्यामपि** गृहेऽपि । गेहं कुट्टी च मन्दिरमिति हलः । **अन्तर्हितं** वनगमनेन व्यवहितं **यं त्वां कलभस्य** करिशावकस्य बालगजस्येत्यर्थः । सम्बन्धि कालभम् । कलभः करिशावक इत्यमरः । तच्च तत्तेजश्च तेन उपमानेन दृष्टान्तेन । पुष्टत्वनीलत्वमन्दगमनादिसादृश्यात् । **स्वान्ते** हृदये । **स्वान्तं** हृन्मानसं मन इत्यमरः । **बिभर्मि** धारयामि ध्यायामीत्यर्थः । अनेन चित्तासक्तिलक्षणा अवस्था दर्शिता । ''चित्तासक्तिर्मुहुश्चिन्ता प्रतिकृत्यादिभिर्यथा'' इत्युक्तत्वात् । **इह** वने **सायं तं त्वां विना** हे **अज** जननरहित कृष्ण **का** नारी **अन्तर्हितं** सुखं **लभते** प्राप्नोति । न कापीत्यर्थः । अह्नि मन्दिरेऽपि त्वव्द्यवधानं मम दुःखप्रदं रात्रौ वने दुःखप्रदमिति किं वक्तव्यमिति भावः । मध्यान्तपादयमकमिदम् ।। ५६ ।।

**रासि सारोऽसि सुरसमेहि हेमहि मामिह ।**
**दार्सीं ससादां सदसि वेदवादविदो वद ।। ५७ ।।**

**व्या : रासीति** । हे ईश त्वं [१]**सारः** श्रेष्ठोऽसि कुतः । **सु** शोभनं **रसं** सुखं शृङ्गारं वा **रासि** ददासि । रा दान इति धातोर्लट् । तस्मादेहि आगच्छ **हे महि** पृथ्वि **इह** वने **दार्सीं मां ससादां** दुःखसहितां **वेदवादविदः** कृष्णस्य **सदसि** सभायां **वद** कथय व्यक्षरपादोपेतयमकमिदम् ।। ५७ ।।

**मधुपालिरीश सरसा सरसामुपकण्ठमेत्य मुदितामुदिता ।**
**अनुयाति पश्य सभया सभयामनुनीय चालिमधुना मधुना ।।५८।।**

---

१ रसः सारो वरश्चेति सर्वे पर्यायवाचकाः । - छान्दोग्योपनिषद्भाष्ये(१/८/१)

**व्या :** मधुपालिरिति ॥ हे ईश कृष्ण **सरसा** सस्नेहा मधुपानामालिः पङ्क्तिः **सरसां** सरोवराणामुपकण्ठं समीपमेत्य **मधुना** मकरन्देन **मुदितां** सन्तुष्टां **सभया** अनुष्ठातृब्राह्मणसंसदा कारणेन **सभयां** भयसहितां आलिं सखीं भृङ्गी अनुनीय सान्त्वयित्वा उदिता ऊर्ध्वङ्गता सती। अनेन भृङ्ग्या अप्यूर्ध्वगमनमुन्नीयते अधुना इदानीं वसन्तकाल इत्यर्थः। अनुयाति अनुसरति च पश्य। इदानीं भृङ्गोऽपि भृङ्गीमनुसरति त्वया तु अनुसरन्त्यप्यहम् उपेक्षितेत्यन्यापदेशः। मत्तोऽपि भार्यां न मुञ्चति किमु विवेकीति सूचनाय मधुपेत्युक्तम्। प्रमिताक्षरावृत्तम्। 'प्रमिताक्षरा सजससैरुदिता'[१]। चतुष्पदान्तयमकम् ॥५८॥

**नगायताकाशमितागसानु समेत्य पुंस्कोकिलसुस्वनेन।**
**न गायता का शमितागसा नु त्वया मृगाक्षी विमदीकृताङ्ग ॥५९॥**

**व्या : न गायतेति।** हे **अङ्ग** प्रिय कृष्ण नगैर्वृक्षैः। अगो नगश्च भुजगे भानौ भूरुहि भूधरे इति रत्नमाला। आयतः विस्तृतः आकाशमितः आकाशपरिमितः अभ्रङ्कष इत्यर्थः। एतादृशोऽगः पर्वतः गोवर्धनः तस्य सानुतटं **नगायताकाशमितागसानु** कर्म समेत्य प्राप्य **गायता** गानं कुर्वता **पुंस्कोकिलवत् सुस्वनेन** शोभनस्वनवता अत एव **शमितागसा** परिहृतापराधेन। 'आगोऽपराधो मन्तुश्च' इत्यमरः। त्वद्गानश्रवणमात्रेण त्वत्कृतसर्वापराधशान्तिर्भवतीति भावः। एतादृशेन **त्वया का नु** का वा **मृगाक्षी** मृगलोचना न **विमदीकृता** मदरहिता कृता न भवति। गानश्रवणेनास्मन्मनसि स्थितः सर्वोऽपि गर्वो गतः तत्किमदर्शनेनेति भावः। इदमपि आदिपादद्वययमकम् ॥ ५९ ॥

**कन्दर्पसर्पतल्पस्य नन्दनानन्दकारण।**
**तं देशं नय मां यत्र बन्धुरास्ते सतां हरिः ॥ ६० ॥**

**व्या :** सोपद्रवकारिणं कामं प्रत्याह। **कन्दर्पेति।** **सर्पतल्पस्य** सर्पशयनस्य कृष्णस्य **नन्दन** कुमार **आनन्दकारण कन्दर्प** काम **मां तं देशं नय** प्रापय।

---
१ वृत्तरत्नाकरे (३/६२)

यत्र यस्मिन् देशे **सतां** सज्जनानां **बन्धुः** सुहृत् **हरिः** कृष्णः **आस्ते** तिष्ठति। मातृस्थानीयानामस्माकं हानिर्न द्रष्टव्या त्वयेति भावः ॥ ६० ॥

**र मा नयाहङ्कृतिदूरवृत्तिरमानयाऽहङ्कृतिदूरवृत्तिः।**
**रमा न याऽहं कृतिदूरवृत्तिरमानयाहङ्कृतिदूरवृत्तिः ॥ ६१ ॥**

**व्या : रमेति। रमा नय अहं कृतिदूरवृत्तिः** अमानया अहङ्कृतिदूरवृत्तिः **रमा न या अहं कृतिदूरवृत्तिः अमानयाहङ्कृतिदूरवृत्तिः** इति पदच्छेदः । हे र काम । 'रः पुमान् पावके कामे' इति रत्नमाला । या अहं कृतेः गमनादिव्यापारस्य दूरवृत्तिः वर्तनं यस्याः सा अस्मि अत एवामानया अहङ्काररहितया मया कारणेनाहङ्कृतेरहङ्कारस्य दूरा वृत्तिर्वर्तनं यस्य स त्वं अहङ्काररहितायां मयि त्वयाऽप्यहङ्कारो न कर्तव्य इति भावः । मा मां नय कृष्णसमीपं प्रापय। मानयत्येकं पदं वा। तदा मामिति पूर्वश्लोकादावर्तनीयम्। मां मानय सत्कुरु कृष्णसमीपप्रापणमेव मानमिति सूचनाय पूर्वयोजना । अथवा हे कन्दर्पेति पूर्वश्लोकादावर्तनीयम्। हे कन्दर्प रमत इति रः तं रमणं कृष्णम्। रमतेः कर्तरि औणादिको डप्रत्ययः। आनय इहानय मयीव तस्मिन्नप्युज्जृम्भितो भवेति भावः। यद्वा अमानया अनया मया सह हे कृष्ण **अहङ्कृतिदूरवृत्तिः** त्वं **रम** रमस्वेति कृष्णं प्रत्येव प्रार्थना। तव रमणमस्मदर्थमेव न तु स्वप्रयोजनमिति सूचनाय। "चान्द्रादयस्तु मन्यन्ते सर्वस्मादुभयं पदम्" इत्यनुशासनमनुसृत्य रमेति परस्मैपदप्रयोगः। सकृदप्यहङ्कारः कृतः खल्वित्यत आह। रमेति। या कृतेः उत्पत्तेर्दूरा वृत्तिः वर्तनं देहाद्यवस्थानं यस्याः सा अप्राकृतविग्रहेत्यर्थः । अत एवामायाः अज्ञानस्य अनयस्यान्यायस्याहङ्कृतेरहङ्कारस्य दूरा वृत्तिरन्तःकरणं यस्याः सा रमा लक्ष्मीः सा अहं न भवामि हि। प्राकृतास्वस्मासु तद्वत् सर्वदाऽहङ्कारादिदोषविरहस्यायोगादिति भावः । अथवा सर्वत्र विद्यमानस्य कृष्णस्य वियोग एव त्वया कथं शङ्क्यत इत्यत आह। रमेति। उक्त एवार्थः। अरमण एव

वियोग इति भावः । अहङ्कृतेरहङ्कारतत्त्वस्य दूरा ततोऽप्यधिकदेशकालव्यापिनी वृत्तिरवस्थितिर्यस्या इति विशेषः । मर्त्यावतारत्वादत्र रमाघटनानुपदर्शनेऽपि समव्याप्त्या । अन्यत्र स्पष्टम् । कृष्णालिङ्गने रमायाः अदूरत्वोक्त्या अज्ञानाभावेन नित्यापरोक्षत्वात्तद्दर्शनेन सन्तुष्टा स्यामिति भावः । पादचतुष्टयस्याप्येक-प्रकारत्वात् सम्पूर्णचतुष्पादयमकम् ॥ ६१ ॥

**ततातततातीततत्त्वततिताताेऽतते तु तत् ।**
**तत्तातौतातितेती तेऽतातातीते ततोऽत्ति ताम् ॥ ६२ ॥**

**व्या : ततेति ॥ ततातततातीततत्त्वततितातः । अतते तु तत् तत्तातौतातितेती ते अतात अतीते ततः अत्ति तामिति** पदच्छेदः । हे अतात जनकरहित अनुत्पन्न कृष्ण भवान् यत् यस्मात् कारणात् ततं व्याप्तं गगनादि **अततम्** अव्याप्तं पृथि० यादि अतीतम् अतिशयेन इतं त्वत्समीपं प्राप्तं संसारमतिक्रम्य इतं प्राप्तमिति वा अतीतं मुक्तमित्यर्थः । इण् गताविति धातोः कर्तरि क्तः । ततातततातीतानि च तानि तत्त्वानि मुक्तामुक्तप्रपञ्चानीत्यर्थः तेषां ततिः समूहः तस्यास्तातो जनकः सकलजगत्स्रष्टेत्यर्थः । यस्माद्भवान् तां पूर्वोक्ततत्त्वततिं तु विशेषेण नियामकतयेत्यर्थः । अतते व्याप्नोति । अत सातत्यगमन इति धातोः कर्तरि लट् । यस्माच्च ततः स्थित्यनन्तरं तां पूर्वोक्तां तत्त्वततिम् अत्ति भक्षयति संहरतीत्यर्थः । तत् तस्मात् कारणात् ते तव तत्ता तस्य जगतो भावस्तत्ता मायावाद्युक्तं जगत्तादात्म्यमित्यर्थः । तौतातितानां मीमांसकानाम् ईतिर्बाधा । मीमांसकोक्त नरीश्वरत्वलक्षणस्वरूपबाधेत्यर्थः । तत्ता च तौ तातितेतिश्च तत्तातौतातितेती अतीते अतिक्रान्ते परिहृते इत्यर्थः । अनेन तवानुत्पन्नत्वाज्जगतः उत्पन्नत्वात् तव स्रष्टृत्वाज्जगतः सृज्यत्वाद्भवतो नियामकत्वाज्जगतो नियम्यत्वात् तव संहर्तृत्वाज्जगतः संहार्यत्वात् उत्पन्नानुत्पन्नयोः सृज्यस्रष्ट्रोः नियम्यनियामकयोः संहर्तृसंहार्ययोश्च भेदावश्यम्भावादिति तादात्म्यनिरासे युक्तिचतुष्टयमुक्तं भवति ।

अतीतपदेन मुक्तानां ग्रहणात् तन्नियामकत्वात् मुक्तामुक्तयर्भेदस्याविद्यानिवृत्तिरूपमुक्तिकालीनत्वेनाविद्यकत्वं चोक्तं भवति । सृष्टिनियमनसंहाराणां कार्यत्वेन सकर्तृकत्वावश्यम्भावाद्व्याप्तगगनादिकर्तृत्वस्यास्मदादिष्वसम्भवात् कर्तुरीश्वरस्य सिद्ध्या निरीश्वरत्वञ्च निरस्तं भवति । अत एव तत्त्वेत्युक्तम् । तत्त्वपदेनानारोपितत्वरूपजगत्सत्यत्वं सूचितम् । उपपादनं तूत्तरत्र करिष्यत इत्यलम् । ६२।

**अधरामृतं प्रदिश ते दिशते तनुमर्पये विहरतेह रते ।**
**विहिते हर्तिं विरचयेऽरचये स्फुटमित्यदायि भवताऽभवता ॥६३॥**

**व्या :** अधरामृतमिति । हे कृष्ण **ते** तव **अधरामृतम्** अधरोष्ठसुधां **प्रदिश** देहि। **दिशते** अधरामृतं ददते तुभ्यम् । **तनुं** मच्छरीरम् **अर्पये** ददामि **विहरता** क्रीडता त्वया **इह** तनौ **रते** सुरते **विहिते** कृते सति अराणां पापानां **चये** समूहे **हर्तिं विरचये** करोमि । त्वदङ्गसङ्गात् पापं संहरामीत्यर्थः । इत्यनेन प्रकारेण **भवता** त्वया न विद्यते भवः संसारो यस्य सोऽभवः तस्य भावो **अभवता** मुक्तत्वमित्यर्थः । **स्फुटं** स्पष्टम् **अदायि** दत्ता । अन्ततः सर्वपापक्षयेन मोक्षस्यावश्यंभावादिति भावः ॥ ६३ ॥

**इत्थं गिरा कापि तमर्चयन्ती यं तीव्रयोगैर्मुनयोऽगुरन्ते ।**
**रन्तेति मत्वा गलितात्महारा हा राम कृष्णेत्यपतच्छुचार्ता ॥६४॥**

**व्या :** इत्थमिति । **मुनयस्तीव्रयोगैः** उत्कृष्टध्यानैः **अन्ते यं** कृष्णम् **अगुः** प्रापुः तं हरिं **रन्ता** रतिशील **इति मत्वा** निरूप्य **गिरा** वाचा **इत्थ**मनेन प्रकारेणा**र्चयन्ती गलिताः** विरहवशाद्विगलिताः **आत्मनः** स्वस्याः **हाराः** यस्याः सा **हे राम** हे **कृष्ण हा** कष्टमिति **शुचा** दुःखेन **आर्ता कापि** गोपी **अपतत्** भूमौ निपतिता। अनेन **मूर्च्छावस्था** दर्शिता । ‘‘मुहुरिन्द्रियवैकल्यान्मूर्च्छा ज्ञानक्षये सति’’[१] इत्युक्तेः ॥६४॥

---

१ इत्यमृतानन्दीये (३/११)।

रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि
प्रेम्णा चिन्तयतां विचित्रविमलश्लाघ्यार्थसन्दायिनि ।
सञ्जाते भुवि रुग्मिणीशविजये सद्वादिराजोदिते
सञ्जातः सुरमण्डलीषु महितः सर्गो मुदां सप्तमः ॥ ६६ ॥

॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थश्रीचरणविरचिते श्रीरुग्मिणीशविजये महाकाव्ये सप्तमः सर्गः ॥७॥

व्या : रोम्णामिति । उक्तोऽर्थः ॥ ६५ ॥

॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थश्रीचरण-विरचितस्य श्रीरुग्मिणीशविजयमहाकाव्यस्य व्याख्यायां श्रीनारायण-भट्टविरचितायां श्रीगुरुभावप्रकाशिकायां सप्तमः सर्गः ॥

*****

# अष्टमः सर्गः

विरहवह्निबला मलयानिला
जगदिवाखिलधाम लयानिलाः ।
चलति वीक्ष्य भियाऽमल यानिला
बत तुदन्तितरामलयानिलाः[1] ॥ १ ॥

---

१ श्रीमान् र(ल)घुपोऽर(ल)घुपः सदयः सदयो गुणैकखनिरीशः ।
ममताममतां न दिशेत् प्रदिशेत् सकलासु कलासु दृशं सदृशीम् ॥
कमलं विमलं कुरुते कुरुते कविभिः कविभिः सरसी स रसी ।
विरुतो रविराविरमन् क्व वसन् अपि सन्नविता सविता भविता ॥
अधुना विधुना विधुता मधुता सरसे विरसे दयिते मयि मे ।
मदने मदनेषणपेषणके करुणां मुरभिद्वितरातितराम् ॥
सरसे सुरशेखर इत्यमले शमले शमलेखकृते विकृते ।
विभवे भवदाविरभूत् भुवि यन् अममौपयिकं च ममौ मनसि ॥
स्मरतः स्मरतोऽप्यवने नवने यदुपो यदुपोतपदो विपदः ।
वितुदन्न तु दम्भवतो भवतो मनुजान्नु जातुतरां तिरयेत् ॥
जनने जननेतुरुपानुपमे सति सत्यपि मे कपिमेलनवान् ।
नहि नह्यति मा कृपयाऽनपया सरमापरमे वरमापरमः ॥
पतितं पतितं चरणे च रणेऽवति मावति मा विषमा न समे ।
इति यन्मतिमद्वचनं न च नो विषये विषयेऽनृतमास ऋतम् ॥
अचलं न चलन् धृतिमान् धृतवान् अवने स वने ज्वलितं ज्वलनम् ।
अपिबच्च बत स्ववधूरधुना किमुपैक्षत वीक्षितमोक्षसुखः ॥
जननी जननीतिकृते सुकृतात् जनको जनकोऽपि वृतानुवृतः ।
न रमा नरमानसमुन्नमुदे क्व वयं क्वयस्तव नस्तवनम् ॥
न विनाथ विनाथगमं सुगमं सुखिनी सखिनीतियुतेऽप्ययुते ।
विषये विषमेषुमहं विषहे कथयाम्ब कथं खगमाध्वसुखम् ॥
विधुतोऽसि विधो धवमाधवया रचयारचयातिकमन्तिकगम् ।
सति निर्मतिके त्वयि संशयितः स हरिर्धुरि सेति दशां प्रदिशेत् ॥
अवनं पवनातनुषे तनुषः सुहितेट् सहितो मम चेन्न च चेत् ।
उपयाह्युपयाहि हृदोऽप्यसुहृत् त्यज वा भज गामिह हम्पदम् ॥

विजने निजनेमिदलैर्दलयन् धुरि वैरिजनं निजमाव इति ।
गद भो गदपूर्वज मे विरहोऽपि रहो न तयाऽऽमयकृन्मम यः ।।
अनुजस्य निजस्य मतेन यतो न कुलं न कुलारिवरोऽणुतरम् ।
अशितुं श्वसितं त्यजतीत्यजता गलिताङ्गलता क्व पुरः सरणिः ।।
मृगयस्ययि किं मृगदृग् गद मे नयनानयनोरमणो रमणि ।
न हितो हिततः श्रुतिमर्थवर्ती स हि सिंहविलोकनयेन नयी ।।
रमणी रमणातितरामितराः सुखयन् सुखमेहि शुभं भवतु ।
न पराधमगां नपराधमवत् स्मृतिगां कुरु वा कुरु मां स्मृतिगाम् ।।
यदि तास्तदिता वनतेवनकृत् प्रथिमाः प्रथिमानबला अबलाः ।
न वयो न वयोगमनेन विना न गुणो न गणो न कुलं न कुलम् ।।
अनुवेणु नवेऽणुनिवासवने जघनेन घनेन लसन्त्यलसा ।
चलितुं व लता रहिता हरिणा हरिणाक्ष्यनुगेन नगेन विना ।।
कललं किल लक्ष्यतु ईक्षणतस्त्वयि मय्यसि चेत् सदयाभ्युदया ।
न बहिर्हय हेत्यगदद्गदितां वरबुद्बुदवागिनयुज्यदद: ।।
समुदस्य पतिं समुदस्व पतिं वृतवत्यसि नौ सुखमेव सखि ।
प्रमदे नभिदेत्यगदद्गदिता धव उद्धववान् किल तेऽस्त्यबले ।।
यदिवो स दिवोषगतः प्रगतः सुकृतं फलितं विकृतं गलितम् ।
विषयो निमिषो न च तद्वचसः तदुरुर्मदुरुर्गद किं गदनात् ।।
न हिमांशुसुवंशभवो विभवं तदरेर्वद रे च रवेः समवेत् ।
वद सद्वदने सुगुणे शृणु मे स तदन्वयजात्युदरान्वययुक् ।।
सममस्तु समस्तुकरः सुकरः गतमत्सर मत्सरनो हि बहिः ।
इति सन्मतिकां रमणीं रमणो रमयन् शमयन्नरतिं स्वरतः ।।
स्मर संस्मर नाद्य समुद्यत नो भव समुद्यत इत्यबलाबलः ।
उचितं रचितं धवमाधवया परदारुतमेतदलं च चलम् ।।
सति भो सति हापघनेऽतिघने लव एव लवेऽप्यहितो विहिताम् ।
रचयेत् स च यो विधिना विधिना वपुराप ममेत्यममानुपमः ।।
यदुदारमते समुदा रमतेऽनययाऽप्यनयोष्णकरोष्णवने ।
इदमेव दमे वदमेऽलमलं प्रहिणोमि हिनोम्यणिमानमनम् ।।
विरहोऽपि रहो यदहो न महो महतो महतः प्रबलं शबलम् ।
मम तेऽमित यन् मितिदं च शुचा क्व रतिः क्व मतिः क्व पतिः क्व कृतिः ।।

व्याहारैर्दीनताधारैरुदारैर्मधुरैरपि ॥
कृष्णं गोपीभिराकृष्टं नौमि नावं भवाम्बुधेः ॥ १ ॥

**व्या :** विरहेति ॥ पदच्छेदः । [1]**विरहवह्निबलाः मलयानिलाः जगत् इव अखिलधाम लयानिलाः चलति वीक्ष्य भिया अमल यान् इला वत तुदन्तितराम् अलयानिलाः** । हे बत अमल निर्दोष श्रीकृष्ण यान् मलयानिलान् वीक्ष्य भिया भीत्या इलाऽपि भूरपि चलति । वायौ वाति सति धूलेरुत्थानाद्भीत्या चलतीति भ्रमः । विरहवह्नेः वियोगाग्नेः बलं येभ्यस्ते न विद्यते लयानिलो मन्दवायूपघातको झञ्झानिलो येषां ते अलयः नाशरहितः अनिलः प्राणवायुः यासां ताः जीववतीरित्यर्थः । अस्मानिति वा । मलयानिलाः मलयमारुताः अस्मान् तुदन्तितरामतिशयेन व्यथयन्ति । 'तिङश्च' इति[2] तरप् ''किमेत्तिङव्ययघादाम्बद्रव्यप्रकर्षे''[3] इत्यामुप्रत्ययश्च । कथमिव । अखिलानां धाम आश्रयं

---

अनृताप्यनृतं नयतोऽनयतोऽज गतौ जगति त्वयि मय्यहह ।
तदिवाविरभूत् कुत इत्यकुतोभय मेऽप्युभयोर्नतिरस्तु नुतिः ॥
भुवि दाशरथिं कपिराप सुखं स इवाधिरथिं कृपणोऽकृपणः ।
अमरा अमृतं हरिमागुरिमाः ललना किल नायकमेत्य समम्॥ १-२९॥
लसतात् ललनासुखकौतुककृत् यदुराट्चरितातनुरत्नयुता ।
प्रथमाप्रथमार्थितदाशरथिप्रभुसम्पुटिका कविकण्ठमणिः ॥
- इति श्रीसत्यधर्मतीर्थश्रीपादकृत 'कविकण्ठमणि' नामककृतिरस्य सर्गस्य विवरणरूपा वर्तते ।

१ ततश्चान्तर्दधे कृष्णः सा वधूरन्वतप्यत ।
हा नाथ रमण प्रेष्ठ क्वासि क्वासि महाभुज ॥
दास्यास्ते कृपणाया मे सखे दर्शय सन्निधिम् ।
अन्विच्छन्त्यो भगवतो मार्गं गोप्योऽविदूरतः ॥
ददृशुः प्रियविश्लिष्टां मोहितां दुःखितां सतीम् ।
तया कथितमाकर्ण्य मानप्राप्तिं च माधवात् ॥
अवमानं च दौरात्म्याद् विस्मयं परमं ययुः ॥ - भागवते (१०/२८/३१-३३)

२ पा.सू. ५/३/५६.

३ पा.सू. ५/४/११

जगत् भुवनं लयानिला इव प्रलयकालीनवाता इव । अनेन विषयद्वेषावस्था सूचिता । [1]प्रियवादिनी वृत्तम् । भुवि भवेन्नभजरैः प्रियवादिनी [2]।। १ ।।

**देवेश देवेऽशनिवर्षहेतौ पाताऽसिपातासितघातकल्पे ।**
**दावेऽष्टदावेष्टयतीह योऽभूर्मा नः समानः स निजे त्यजाद्य[3] ।।२।।**

**व्या :** देवेशेति । हे अष्टद अणिमाद्यष्टैश्वर्यप्रद रक्षाशक्तिद्योतनायेदम् । **देवेश** देवश्रेष्ठ श्रीकृष्ण **देवे** इन्द्रे **अशनि**सहितवर्षस्य मध्यमपदलोपीसमासः । **हेतौ** कारणभूते सति **वर्ष**ति सतीत्यर्थः । **असिपातात्** खड्गपाताज्जातः **असितः** खड्गनिष्ठतैलधारया श्यामः । अथवा षिञ्बन्धन इति धातोस्तन्तुना त्वचोऽन्योन्यबन्धरहितः अकृतपरिहार इति यावत् । यो **घातः** क्षतं तस्य **कल्पे** समाने निशितखड्गप्रहारसदृश इत्यर्थः । **दावे** वनाग्नौ । 'वनवह्निर्दवो दावः' इति हलायुधः । **आवेष्टयति** सति इहास्मान् परितो वेष्टयति सति यस्त्वं **पाता** रक्षिता **अभूः** । **निजे** स्वभक्ते **समानः** अभिमानसहितः स **त्वम् अद्य** अधुना **नः** अस्मान् **मा त्यज** न परित्यज । इदानीं त्यागे पूर्वमस्मद्रक्षार्थं कृतप्रयासवैय्यर्थ्यापत्तेरिति भावः । गृहीतग्राहिपादचतुष्टयं यमकमिदम् ।। २ ।।

**नानाननानननुन्नूनं नैनोऽनन्नेऽन्निनां नु नौः ।**
**नानान्ननुन्नेनानेन नोनो नेन न नो ननु[4] ।। ३ ।।**

---

१ प्रियंवदा इति क्वचित् ।

२ 'भुवि भवेन्नभजरैः प्रियंवदा' - इति वृत्तरत्नाकरे (३/५७)

३ गत्वा वनाद् वनं चन्द्रज्योत्स्ना यावद्विभाव्यते ।
तमःप्रविष्टमालक्ष्य ततो निववृतुः स्त्रियः ।।
तन्मनस्कास्तदालापास्तद्विचेष्टास्तदात्मिकाः ।
तद्गुणानेव गायन्त्यो नात्मागाराणि सस्मरुः ।।
पुनः पुलिनमागत्य कालिन्द्याः कृष्णभावनाः ।
समवेता जगुः कृष्णं तदागमनकाङ्क्षिताः ।। - भागवते (१०/२८/३४-३६)

४ नानेनेनानेनानेनोनूनेन ननु नुन्नाः ।

**व्या :** कृतापराधासु कथं रक्षेत्यत आहुः । **नानेति** । पदच्छेदः – **नानाननानननुत् नूनं न एनः अनन्ने अन्निनां नु नौः नानान्ननुन्नेन अनेन न ऊनः ना इन न नः ननु** । हे **नानाननानननुत् नाना** अनेकानि आननानि मुखानि यस्य सः चतुर्मुखः पञ्चमुखो रुद्रो वा । अनः प्राणो मुख्यप्राणः तौ नुदति प्रेरयतीति नानाननानननुत् । तस्य सम्बुद्धिः । ब्रह्मरुद्रादीनामपि त्वत्प्रेरणयैव दोषपरिहारः किमस्माकमिति द्योतयितुमिदं विशेषणम् । हे इन स्वामिन् कृष्ण । 'एनः पापम्। 'एनः कल्मषमशुभम्' इति हलः । नूनं प्रायेण अनन्ने अन्नरहिते त्यक्ताहारे पुरुष इत्यर्थः । न नास्ति । अन्नजन्यचित्तविकाराभावात् तस्यैव निर्दोषत्वमिति भावः । ''विषया विनिवर्तन्ते निराहारस्य देहिनः'' इति[१] वचनात् । विपक्षे बाधकं चाहुः । **अन्निनामिति** । अन्नम् एषामस्तीति अन्निनः तेषामन्नवतां विषयलालसानाम् । सः अनन्नः पुरुषः नौः तरी ननु । अन्नरहितस्य योगिनोऽपि दोषित्वे संसारोदधिमग्नानाम् अस्मदादीनां उत्तारकाभावेनानिर्मोक्षप्रसङ्ग इति भावः । नानान्नः नानाविधान्नैः षड्रसान्नैरित्यर्थः । नुन्नेन प्रेरितेन उत्पन्नेनेत्यर्थः । अनेन एनसा ना पुरुषोऽपि । 'पुरुषाः पूरुषा नरः' इत्यमरः । ऊनः न्यूनः रहित इत्यर्थः । न न भवति । ''मानुषान्नोपभोगेन''[२] इति वचनात् वेदशास्त्रविदः देवांशपुरुषस्यापि अन्नकृतविकारोऽस्त्येवेति भावः । केवलं नो अस्माकमेव न ननु न भवति खलु । एकाक्षरमिदम् ॥ ३ ॥

**मनसामहित स्वरमित्रहृदामनसामहितस्वरमित्र हृदा ।**
**मनसा महित स्वरमित्रहृदामनसाऽमहितस्वर मित्र हृदा ॥४॥**

**व्या : मनसामिति** । पदच्छेदः – **मनसाम् अहित स्वरमित्रहृदाम् अनसामहितस्वरमित्र हृदा मनसा महित स्वरमित्रहृदाम् अनसा अमहितस्वर**

---

नानाना नो नूनं नानेनानूननाऽनुन्नः ॥ - सुमध्वविजये (१०/६)

१ गीता २/५९

२ म. भा. ता. निर्णये । (१८/१५३)

**मित्र हृदा** । स्वः स्वर्गस्य अमित्रं विरोधि हृत् मनो येषां ते **स्वरमित्रहृदः** । दैत्या इत्यर्थः । तेषां **मनसां** चित्तानाम् **अहित** दुःखद । अनेन त्वया दुःखं दैत्यानामेव देयं नास्माकमिति सूचितम् । **हृदा** हृदयेन अनस्य श्रीमुख्यप्राणस्य सामानि बृहद्रथन्तरादीनि श्रीमुख्यप्राणेन गीयमानसामानि इत्यर्थः । तेषां **हिताः** सुखकराः **स्वराः** निषादादिसप्तस्वराः तेषां **मित्र** प्रिय मनःपूर्वकं श्रीमुख्य-प्राणगीतसामवेदप्रियेत्यर्थः । अनेन वेदाभ्यासेन त्वत्प्रीतिसम्पादकत्वं श्रीमुख्यप्राणस्यैव नास्माकमिति सूच्यते । **स्वरे** प्रणवे **मित्रं** स्नेहयुक्तं **हृत्** हृदयं येषां ते प्रणवोपासकाः परमहंसा इत्यर्थः । 'स्वरेण मन्त्रेण' इति प्रयोगात् । 'अचः स्वराः' इति वा स्वरशब्दः प्रणववाची । तेषां **मनसा** चित्तेन **महित** पूजित । अनेन मानसपूजादिना त्वत्प्रीतिसम्पादकत्वं परमहंसानामेवेति सूच्यते। अनसा शकटासुरेण **अमहितः** असत्कृतः स्वरः रोदनस्वरो यस्य तस्य सम्बुद्धिः । ''रुदताऽनेन पादेन क्षिप्तमेतन्न संशयः''[1] इति भागवतोक्तेः । रुदता श्रीकृष्णेन शकटस्य चूर्णितत्वात् । अनेन पूर्वोक्तं दैत्याहितत्वं दर्शितं भवति । हृदा वक्षसा मित्र इव सूर्यवद्दीप्यमानवक्ष-स्थलयुक्तेत्यर्थः । श्रीकृष्ण । अनेन सरूपत्वसावयवत्वादिना एकैकावयवमात्र-ध्यानमस्माकमप्यस्तीति सूचितम् । एतावतैवास्मान् वरय इत्युत्तरेणान्वयः । एकपादयमकमिदम् । **तोटकवृत्तम्** । 'इह तोटकमम्बुधिसैः प्रथितम्'[2] ॥ ४ ॥

**वरयासुरमोदारे तरसा किङ्करीरिमाः ।**
**वर यासु रमोदारे त्वयि नेदं गुणोचितम् ॥ ५ ॥**

**व्या : वरयेति** । हे **असुरमोदारे** असुराणाम् दैत्यानां मोदस्य हर्षस्य अरे शत्रो **वर** श्रेष्ठ कृष्ण **यासु** अस्मासु **रमा** लक्ष्मीः वर्तते । ता **इमाः किङ्करीः**

---

१ भागवते १०/७/९

२ इति वृत्तरत्नाकरे (३/४९)

दासीः **तरसा** शीघ्रेण **वरय** अङ्गीकुरु । यासुरमेत्यनेन श्रीलक्ष्मीसन्निधानरूपं स्ववरणे कारणान्तरम् । अस्मत् त्यागे स्वपरमप्रियलक्ष्मीत्यागोऽपि स्यादिति बाधकं सूचयन्ति । निमित्तान्तरमप्याहुः । **उदारे** औदार्यगुणयोगिनि **त्वयि** इदमस्मदुपेक्षणं गुणोचितं न भवति । अस्मदभीप्सिताप्रदानेन औदार्यं भज्येतेति भावः । पदच्छेदः – **वरय असुरमोदारे तरसा किङ्करीः**[१] **इमाः वर यासु रमा उदारे त्वयि न इदं गुणोचितम्** ॥ ५ ॥

**वृणीत दासीर्यदि नो वने नः कवीश गौरीश हृताऽऽत्मवृत्ता ।**
**कवीशगौरीशहृतात्मवृत्तावृणी तदासीर्यदिनोऽवने नः ॥६॥**

**व्या :** स्ववरणे निमित्तान्तरमप्याहुः । **वृणीतेति** । हे **कवीश** कवीनां ज्ञानिनामीश स्वामिन् कृष्ण **यदि** भवान् **वने** अरण्ये **दासीर्नः** अस्मान् **नो वृणीत** नाङ्गीकुर्यात् । तर्हि हे **ईश आत्मवृत्ता** आत्मनः स्वस्माद्वृत्ता प्रवृत्ता । 'तत्प्रियार्थं सम्भवन्तु सुरस्त्रियः'[२] इति स्वोक्तेरित्यर्थः । यद्यपीदं चतुर्मुखवचनं । तथापि "गां पौरुषीं मे शृणुत"[३] इति वचनाच्छ्रीकृष्णोक्तस्यैव तेनापि कथनादात्मवृत्तेत्युक्तम् । गौर्वाक् । 'स्वर्गेषु पशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्योः स्त्रियां पुंसि गौः' इत्यमरः । **हृता** अपहृता त्यक्तेत्यर्थः । स्ववचनव्याघातभियाऽस्मान् वरयेति भावः । **आत्मवृत्तौ** स्वान्तःकरणे कवीशगौरीशहृता कः ब्रह्मा **वीशः** गरुडः **गौरीशः** शिवः तैर्हृत बलादास्थापिता तद्ध्यातेत्यर्थः । यत् यस्मात् त्वं नोऽस्माकमवने रक्षणे **इनः** समर्थः तत् स्मात् कारणात् तदनङ्गीकारे **ऋणी** ऋणकः **आसीः** अभवः । [४]वाग्दत्तस्याप्रदाने ऋणित्वस्य स्मृतिसिद्धत्वादिति भावः ।

---

१ **भज सखे भवेः किङ्करीः स्म नः** । इति भागवते १०/३१/६.

२ भागवते १०/१/२३

३ भागवते १०/१/२१

४ 'सकृदाह ददानीति' इति भारते (वन. २९६/२६)

अनेन ऋणभिया वा वरयेति निमित्तान्तरं सूचितं भवति । पदच्छेदः – वृणीत दासीः यदि नो वने नः कवीश गौः ईश हृता आत्मवृत्ता कवीशगौरीशहृत आत्मवृत्तौ ऋणी तत् आसीः यत् इनः अवने नः ॥ ६ ॥

**जानतीर्नस्तवामानवेषु स्थितिं**
**न त्यजेमाः प्रभो मा नवेषु स्थितिम् ।**
**कुर्वसौ किं प्रिया मा नवेषुः स्थितिं**
**नेह किन्तु प्रियेमा नवेषुस्थितिम् ॥७॥**

**व्या :** ज्ञानशून्यत्वाद्भुक्तभोगत्वान्नाङ्गीकरोमीत्यत आहुः – **जानतीरिति** । हे **प्रभो** श्रीकृष्ण **तव अमानवेषु** देवेषु । निर्धारणे सप्तमी । देवानां मध्ये इत्यर्थः । तेन श्रेष्ठेति लभ्यते **स्थितिमवस्थितिं जानतीः इमाः नः न त्यज** । **नवेषु** नूतनेषु अभुक्तपूर्वेष्वित्यर्थः । स्त्रीजनेषु **स्थितिं** अवस्थानं मा कुरु । **असौ** तव **प्रिया** प्राणकान्ता **मा** लक्ष्मीः **नवा** नूतना अभुक्तपूर्वा **किं** नैव । कुत इत्यतः तस्या अनादिपत्नीत्वादिति युक्तिसूचनायासावित्युक्तम् । प्रलयकालेऽपि विद्यमानेत्यर्थः । स्वानङ्गीकारे मरणाख्यदशमावस्थाऽपि स्यादित्याहुः । हे **प्रिय इमाः** गोप्यः **इह** भूलोके स्थितिमवस्थानं **न ईषुः** नैच्छन् **किन्तु नवे** नूतने इषौ शरे शराग्र इत्यर्थः । शराग्रस्यातितैक्ष्ण्यसूचनाय नवेत्युक्तम् । स्थितिमवस्थानं बलात्पातमित्यर्थः । ईषुः ऐच्छन् । त्वदनङ्गीकारे शरमुखे देहं पातयित्वा मरिष्याम इति भावः । स्रग्विणीवृत्तम् । 'रैश्चतुर्भिर्युता स्रग्विणी सम्मता'[१] । पदच्छेदः–जानतीः नः तव अमानवेषु स्थितिं न त्यज इमाः प्रभो मा नवेषु स्थितिं कुरु असौ किं प्रिया मा नवा ईषुः स्थितिं न इह किन्तु प्रिय इमाः नवेषुस्थितिम् ॥ ७ ॥

**व्रजे महं तोषसितं विकुण्ठं भजेम चक्षुर्विषये त्वयीश ।**
**व्रजेम हन्तोषसि तं विकुण्ठं न चेत् त्वदीक्षोत्सवभङ्गहीनम् ॥८॥**

---

१ इति वृत्तरत्नाकरे (३/५६)

**व्या :** मरणेऽपि मद्वियोगो न परिहरिष्यत इत्यत आहुः । व्रज इति । हे **ईश** स्वामिन् **त्वयि चक्षुर्विषये** सति **व्रजे** गोकुले **तोपेण** सन्तोषेण **सितं** बद्धम् । षिञ् बन्धन इति धातोः क्तप्रत्यये 'धात्वादेः षः सः'[1] इति षस्य सकारः । **विकुण्ठं** कुण्ठनरहितं नाशरहितमित्यर्थः । **महम्** उत्सवम् । 'मह उद्धव उत्सवः' इत्यमरः । **भजेम** सेवेमहि । सन्तोषेण गोकुले वसाम इत्यर्थः । **न चेत्** चक्षुर्विषयो न भवसि चेत् तवेक्षा दर्शनं सैवोत्सवः तस्य भङ्गो नाशः तेन हीनं रहितं प्रसिद्धं विकुण्ठं वैकुण्ठलोकम् । विकुण्ठं नाशरहितं तं प्रसिद्धं लोकमिति वा । उषसि प्रातः व्रजेम गच्छेम । हन्त मरणानन्तरं त्वद्वियोगभयरहितं त्वल्लोकमेव गच्छामेति भावः । पदच्छेदः – **व्रजे महं तोषसितं विकुण्ठं भजेम चक्षुर्विषये त्वयि ईश व्रजेम हन्त उपसि तं विकुण्ठं न चेत् त्वदीक्षोत्सवभङ्गहीनम्** ॥ ८ ॥

**वियोगे तव गोविन्द दिवसोऽपि भयङ्करः ।**
**इयं निशा दिशाव्याप्ततमिस्रा कान्त किं पुनः ॥ ९ ॥**

**व्या :** वियोग इति । हे **गोविन्द** वेदप्रतिपाद्य श्रीकृष्ण **तव वियोगे** सति **दिवसोऽपि** वासरोऽपि **भयङ्करः** भयजनकः । हे **कान्त** श्रीकृष्ण **दिशा**सु **व्याप्तं तमिस्रं** यस्यां सा **इयं निशा** रात्रिः भयङ्करीति **किं** वक्तव्यम् ॥ ९ ॥

**समायतेयं न शरैः समाऽयते समायते स्वेषु किलासमायते ।**
**समाय तेनाङ्ग नमः समाय ते स मा यतेर्वर्त्म भजासमाय ते ॥१०॥**

**व्या :** समायतेति । पदच्छेदः – **समायता इयं न शरैः समा अयते समायते स्वेषु किल असमायते समाय तेन अङ्ग नमः समाय ते सः मा यतेः वर्त्म भज असमाय ते** । हे श्रीकृष्ण **शरैः** शल्यैः **समा** सदृशी **समायता** सम्यग्दीर्घा । हिमकाले [2]रात्रेर्बाहुल्यात् **इयं** निशा **नायते न** गच्छति । अय गताविति

---

१ पा. सू (६/१/६४)

२ 'त्रुटि युगायते त्वामपश्यताम्' - इति गोपीगीता(भागवते)(१०/२९/१५)

धातुः । हे असमायते असमा असदृशी आयतिर्व्याप्तिर्यस्य तस्य सम्बुद्धिः श्रीकृष्ण भवान् स्वेषु स्वभक्तेषु समायते किल समवदाचरति किल । सर्वानपि भक्ताननुगृह्णातीत्यर्थः । तेन भक्तेषु वैषम्याभावेन हे समाय मायासहित मायाविन् अङ्ग श्रीकृष्ण मया लक्ष्म्या सहितः समः तस्मै समाय ते तुभ्यं नमः । हे असमाय असमः असदृशः आयः लाभो यस्य तस्य सम्बुद्धिः । अवाप्तसकलकामेत्यर्थः । स त्वं ते तव सम्बन्धिनः यतेः सन्यासिनः[१] । ''भिक्षुभिः शाघिता मुधा''[२] इति श्रीकृष्णेनैवोक्तत्वात् । तव यतेरित्युक्तम् । वर्त्म कान्तापरित्यागलक्षणं मार्गं मा भज मा श्रय । अवाप्तसकलकामत्वेन सन्यासिमार्गाश्रयणस्याप्रयोजकत्वादिति भावः ॥ १० ॥

**करोऽतिकार्योदधिमन्थसङ्गमपि स्म कर्तुं यतते न तेन ।**
**त्वदङ्घ्रिजुष्टेरपरं मुरारे करोति काऽऽर्योदधिमन्थसङ्ग ॥ ११ ॥**

**व्या : करोतीति** । हे उदधिमन्थसङ्ग उदधेर्मन्था मन्थानो मन्दरस्तस्य सङ्गो यस्य तस्य सम्बुद्धिः । 'मन्था मन्थश्च मन्थानः' इति हलायुधः । **मुरारे** श्रीकृष्ण येन कारणेन अतिक्रान्तं कार्यं कर्म येन **सोऽतिकार्यः** । कार्यकारीत्यर्थः । करोऽस्मद्धस्तः दध्नो मन्था निर्मथनदण्डः तस्य सङ्गं सम्बन्धमपि **कर्तुं न यतते** स्म प्रयत्नं नाकरोत् । स्मातीते । गोकुले भवद्भिरहदशायामेव माभूदित्यर्थः । तेन कारणेन **त्वदङ्घ्रिजुष्टेः** त्वत्पादसेवायाः अपरमन्यत्कार्यं का वा आर्या श्रेष्ठा नारी करोति । न कापीत्यर्थः । पदच्छेदः – **करः अतिकार्यः दधिमन्थसङ्गम् अपि स्म कर्तुं यतते न तेन त्वदङ्घ्रिजुष्टेः अपरं मुरारे करोति का आर्या** उदधिमन्थसङ्ग ॥ ११ ॥

---

१ ननु विरक्तस्य मम किमासक्त्येत्यत आहुः - ते यतिता सन्यासित्वं न इति ।
- इति श्रीसत्यधर्मतीर्थकृतभागवतटिप्पण्याम् (१०/२९/१)

२ भागवते (१०/६०/१६) श्रीकृष्णरुग्मिणीप्रेमकलहप्रसङ्गे ।

**दयाऽङ्ग यद्यासु न दीनबन्धो प्रियेयमाप्या हि नदीनबन्धो ।**
**हृतोऽरिरस्या यदसौ भगस्य तवौजसा तोयदसौभगस्य ॥१२॥**

**व्या :** दयेति । दीनानाम् आर्तानां **बन्धो** सुहृत् हे **अङ्ग** प्रिय श्रीकृष्ण यदि यद्यप्यास्वस्मासु तव **दया** कृपा **न** नास्ति । तथापि इनस्य सूर्यस्य **बन्धो** श्रीकृष्ण सदा सूर्यमण्डले स्थितत्वादिति भावः । अत एव **प्रिया इयं नदी** सूर्यपुत्री तव आप्या प्राप्या **हि** । प्रियत्वमेवोपपादयन्ति । **हृत** इति । **अस्याः** यमुनायाः **भगस्य** सर्वजनसेव्यत्वरूपभाग्यस्य **अरिः** विरोधी **असौ** कालीयः **यत्** यस्मात् कारणात् **तोयदस्य** मेघस्य **सौभगं** सौभाग्यमिव सौभाग्यं यस्य नीलमेघश्यामस्येत्यर्थः । **तवौजसा** सामर्थ्येन **हृतः** नदीतो निष्कासित इत्यर्थः । पदच्छेदः – दया अङ्ग यदि आसु न दीनबन्धो प्रिया इयम् आप्या हि नदी इनबन्धो हृतः अरिः अस्याः यत् असौ भगस्य तव ओजसा तोयदसौभगस्य ॥१२॥

**इहागता हन्त सुरानुदारानमुं च रामावर सिद्धभद्राः ।**
**विहाय लोकं तव सङ्गसिद्ध्यै न मुञ्च रामा वरसिद्धभद्राः ॥१३॥**

**व्या :** इहेति । हे **रामावर** बलरामानुज श्रीकृष्ण । **हन्त उदारान्** श्रेष्ठान् **सुरान् अमुं लोकं** देवलोकं **च विहाय** त्यक्त्वा **तव सङ्गसिद्ध्यै इह** भूमौ **आगताः** आप्ताः । अनेन स्वासामप्सरस्त्वं[1] सूचयन्ति[2] । **वरेण** भवतीनां कृष्णाङ्गसङ्गो भवत्विति अस्मदाराधितदेवप्रदत्तवरेण **सिद्धं** सम्पन्नं **भद्रं** मङ्गलं यासां ताः ।

---

१ अग्रे द्विजत्वत उपावहृदेष नीलां गोपाङ्गना अपि पुरा वरमापिरे यत् ।
संस्कारतः प्रथममेव सुसङ्गमो नो भूयात् तवेति परमाप्सरसः पुरा याः ॥
- म.भा.ता.नि. (१३/५०)

२ विमुक्तावपि कामिन्यो विष्णुकामा व्रजस्त्रियः। -इति भागवततात्पर्ये १०/२७/१५
कामभक्त्याऽप्सरःस्त्रीणामन्येषां नैव कामतः । ...
जारत्वेनाप्सरःस्त्रीणां कासाञ्चिदिति योग्यता ॥
- भागवततात्पर्योद्धृतभद्रिकावचनम् (१०/२७/१५)

सिद्धानां देवयोनिभेदानामपि **भद्राः** मनोहराः **रामाः** सुन्दरीः **न मुञ्च** न त्यज। पुण्यहीनत्वलावण्यविधुरत्वरूपत्यागकारणाभावात् स्वयमेवागतत्वरूपाङ्गीकारकारणसद्भावाच्चेति भावः ॥ १३ ॥

**उचितैव नाथ सुदयासु दया चकितासु दुष्टभयदाभ यदा।**
**न भवांस्तदा गृहमदोहमदो भयदं किमुत्स्वनवनं न वनम् ॥१४॥**

**व्या :** उचितैवेति। **सुदय** शोभनदयायुक्त दुष्टानां भयदायिनी **आभा** शोभा यस्य तस्य सम्बुद्धिः। तेजोमात्रेण दुष्टानां भयजनकेत्यर्थः। हे **नाथ** श्रीकृष्ण **चकितासु** भीतासु **आसु** अस्मासु गोपीषु **दया** कृपा **उचितैव**। तवार्तबन्धुत्वादिति भावः। **यदा भवान्** न वर्तते **न** तिष्ठति **तदा अदोहं** न विद्यते दोहो यस्मिन् तददोहं दोहनक्रियया रहितम् **अदो** एतत् **गृहम्** अस्मद्गृहमपि **भयदम्** त्वद्विरहदशायां गृहेऽपि कष्टमेवेति भावः। **उत्** उत्कृष्टः **स्वनो** ध्वनिः यस्मात् **उत्स्वनं** निर्झरोदकं यस्मिन् तद्वनमरण्यं भयदं न किम्। भयदमेवेत्यर्थः। 'वनं काननणीरयोः' इति रत्नमाला ॥ १४ ॥

**भ्रमरञ्जितस्तव पदाब्जयुगे भ्रमरं जितारिकुल नः सदय।**
**हृदयं वियुक्ततरुणीस्थिरताहृदयं विभोऽर्दयति भृङ्गचयः ॥१५॥**

**व्या :** **भ्रमरञ्जित** इति। **जितमरिकुलं** शत्रुकुलं येन तस्य सम्बुद्धिः। **सदय** दयासहित। **विभो** श्रीकृष्ण **भ्रमेण** परिभ्रमणेन रञ्जितः शोभितः **वियुक्तानां तरुणीनां** कान्तानां **स्थिरतां** स्थैर्यं हरतीति वियुक्ततरुणीस्थिरताहृत्। **अयं** भृङ्गान्वयः भ्रमरसमूहः **तव पदाब्जयुगे भ्रमरं** भृङ्गायमाणं **नः हृदयं** चित्तम् **अर्दयति** व्यथयति। जितारिणा त्वया त्वत्पदाब्जभ्रमरस्यास्मन्मनसः भ्रमरान्तरकृतपराभवः परिहरणीय इति भावः ॥ १५ ॥

**चरणाम्बुजं करसरोजरुचं कविवर्णनाकरसरोजरुचम्।**
**तव नाभिमच्युत दिदृक्षति दृग्विषयेक्षया सपदि दृक्क्षतिदृक् ॥१६॥**

**व्या :** चरणाम्बुजमिति । हे **अच्युत** श्रीकृष्ण विषयेक्षया विषयदर्शनेन **सपदि** तत्क्षणे दृशः ज्ञानस्य क्षतिः विनाशः दृक्क्षतिः तां पश्यतीति **दृक्क्षतिदृक्**। एतादृशी **दृक्** अस्मद्दृष्टिः **तव चरणाम्बुजं** पादारविन्दं **करसरोजरुचं** करपद्मकान्तिं **कवीनां वर्णनस्याकरः** आश्रयभूतं यत्सरः तद्रूपकं अजस्य ब्रह्मणः रुक् कान्तिर्यस्मात् तम् अजरुचिं **नाभिं** च **दिदृक्षति** द्रष्टुमिच्छति । **प्रमिताक्षरा वृत्तम्** । 'प्रमिताक्षरा सजससैरुदिता'[१] ।। १६ ।।

**[२]पदारविन्दं हृदि देहि नः प्रियं सदास्मरन्निर्मलदेहिनः प्रियम् ।**
**तदेहि शान्तस्तवनन्दनोऽज यन्निहन्ति शान्तस्तव नन्दनो जयन् ।।**

**व्या :** पदारविन्दमिति । **सदा** सर्वदा **स्मरतः निर्मलस्य** निर्दोषस्य **देहिनः** **प्रियम**िष्टं **नः** अस्माकं **प्रियं** प्रीतिजनकं ते **पदारविन्दं हृदि** वक्षसि **देहि** स्थापयेत्यर्थः । हे **अज** श्रीकृष्ण **यत्** यस्मात् कारणात् **शान्ता**नां गर्वरहितानां **स्तवं** स्तोत्रं नन्दति हृष्यतीति **शान्तस्तवनन्दनः** स्तोत्रप्रिय इत्यर्थः । तत् तस्मादेहि आगच्छ । **शान्तः** पूर्वं परिरम्भणादिना ईषच्छान्तः **तव नन्दनः** कुमारः कामः अधुना विरहवशात् **जयन्** उत्कृष्टः सन् **नः** अस्मान् **निहन्ति** । तत् एहीति पूर्वेणान्वयः ।। १७ ।।

**ननु चम्पकाच्युत पदाम्बुजयोदयमस्ति तेऽच्युतपदाम्बुजयोः ।**
**उचितं च पुष्पमलिनाकलितं तमिहेक्षयाशु मलिनाकलितम् ।।१८।।**

**व्या :** नन्विति । हे **चम्पक** वृक्ष जयस्याभिवृद्धेः उदयः यस्मात् तत् जयोदयम् **अच्युतपदात्** श्रीविष्णुपदादाकाशात् वृष्टम् **अम्बु** जलं **ते** तवास्ति **ननु** । **अच्युतस्य** श्रीकृष्णस्य **पदाम्बुजयोः** पादपद्मयोः **उचितं** योग्यम् अलिना

१ वृत्तरत्नाकरे (३/६२)

२ फणिफणार्पितं ते पदाम्बुजं कृणु कुचेषु नः कृन्धि हृच्छयम् ।
- भागवते (१०/२९/७)

भृङ्गेन **अकलितम्** **अनाकलितम्** अनाघ्रातमित्यर्थः । **पुष्पं** चास्ति । ननु । अतस्त्वं श्रीकृष्णं परिचिनोषीति भावः । मलिनैर्दोषिभिः अकलितमज्ञातं तं श्रीकृष्णमिहाशु ईक्षय दर्शय ॥ १८ ॥

**अलिरयं नहि वेत्ति मधुद्विषं तदपि नात्र शिवेऽत्ति मधु द्विषन् ।**
**बहुपदे प्रकृतिर्विषमस्थितिः परमिहातनुते विषमस्थितिः ॥१९॥**

**व्या :** अलिरिति । **अयमलिः** भ्रमरः **मधुद्विषं** श्रीकृष्णं **नहि वेत्ति** हि । न जानाति हि । येन तद्वत् सरसानां परित्यागः सम्भवेत् **तदपि** तथापि **शिवे** शोभने अत्र चम्पककुसुमे **द्विषन्** द्वेषं कुर्वन् **मधु** मकरन्दं **नात्ति** नास्वादयति । एतद्युक्तमित्याहुः । बह्विति । **बहूनि पदानि** यस्य तस्मिन् षट्पद इत्यर्थः । बहुषु स्त्रीजनेषु पदं स्थानं यस्येति बहुस्त्रीवल्लभ इति । श्रीकृष्णं कटाक्षीकृत्येति ध्वनिः। **विषमा** एकत्र प्रीतिः अपरत्राप्रीतिरित्येवमाकारा **स्थितिः** अवस्थितिः यस्याः सा तथा । **प्रकृतिः** स्वभावः इह अस्मन्निकटे अस्थितिः श्रीकृष्णस्यानवस्थानं परं केवलं विषं कालकूटम् **आतनुते** विस्तारयति । तस्यायं स्वभाव एवास्माकं तु महानायास इति भावः ॥ १९ ॥

**मुरली मनो विजयतेऽज यतेरपि मोहदाग्र्यवलयेव लये ।**
**कमला तवाधरसुधारसुधाः पिबति त्वदुद्यमहिता महिता ॥२०॥**

**व्या :** मुरलीति । हे **अज** श्रीकृष्ण **यतेरपि** सन्न्यासिनोऽपि **मोहदा** त्वदुद्यमस्य तवोद्योगस्य अस्मदाकर्षणलक्षणस्य हिता अनुकूला **महिता** पूजिता तव मुरली वेणुः **मनः** अस्मच्चित्तं **विजयते** पराभावयति । या **लये** प्रलयकाले **अग्र्यः** श्रेष्ठः **वलयः** कटकं यस्याः सा **कमलेव** लक्ष्मीरिव **तवाधरस्य** शोभना **धारा** यासां ताः **सुधाराः** ताश्च ताः **सुधा अधरसुधाः पिबति** पानं करोति अस्मद्योग्यत्व-दधरपानस्य स्वयं करणात् अस्माकं मनोगानिरिति भावः ॥२०॥

**तव वेणुना सुरनता रणता विनता वधूततिजितातिजिता ।**
**यमुना गतान्तिकमलं कमलं ददतीव ते करमुदार मुदा ॥२१॥**

**व्या :** तवेति । हे उदार श्रीकृष्ण **रणता** ध्वनिं कुर्वता वधूनां स्त्रीणां ततिं जयतीति **वधूततिजित्** तेन **तव वेणुना** सुरैः नता **सुरनता** देवश्रेष्ठेत्यर्थः । **विनता** नम्रीभावं प्राप्ता । एतादृशेन **वेणुना अतिजिता** अतिशयेन जिता **यमुना** नदी **ते** तुभ्यं **मुदा** हर्षेण **कमलं** पद्मं **करम्** उपायनं **ददतीव** अर्पयन्तीव **अलम्** अत्यर्थम् अन्तिकं समीपम् प्राप्ता । एतादृशानामपि तव वेणुनादेन वशीकरणे अस्माकमागमनं किं वक्तव्यमिति भावः ॥ २१ ॥

**करजप्रसक्त्युरुरुचा रुरुचार्ववलोकनाकलितयालि तया ।**
**कमलाऽन्वकारि रुचिरारुचिराश्यपहप्रियोष्ठरसतीरसती ॥२२॥**

**व्या :** करजेति । हे आलि सखि **करजानां** नखानां **प्रसक्त्या** सम्बन्धेन उर्वी रुक् शोभा यस्याः सा **तया रुरुवत्** कृष्णसारवत् **चारु** मनोहरम् **अवलोकनं** तेन **आकलितया** दृष्ट्या **तया** मुरल्या **रुचिरा** मनोहरा **अरुचीनाम्** अस्वरसानां **राशिः** समूहः तम् अपहन्तीति **रुचिराश्यपहः** स **चासौ प्रियोष्ठः** भर्तुरोष्ठश्च तत्रत्यो रसः **प्रवहमानः** तस्य तीरे सती तिष्ठती आचुम्बनं कुर्वतीत्यर्थः । एतादृशी **कमला** लक्ष्मीः **अन्वकारि** अनुकृता । एतानि विशेषणानि विभक्तिविपरिणामेन उभयत्र द्रष्टव्यानि ॥ २२ ॥

**मुरलीममानय तवायतवाग्जितचेतसान्तिकमिताः कमिता ।**
**विसृजेन्निजेऽभिनवधूर्नवधूर्न चकास्ति साध्वि विनताविनता ॥२३॥**

**व्या : मुरलीति** । हे **मुरलि** इमं श्रीकृष्णं **आनय** । **तव आयतवाक्** विस्तृतवाक् गीतप्रबन्धाद्यनुकारी शब्दः तया **जितचेतसा** हृतचित्तेन कारणेनान्तिकं समीपं **इताः** प्राप्ताः **वधूः नः** । **निजे** भक्तजने **अभिनवा** नूतना **धूः** भारो यस्य सः **कमिता** कान्तः श्रीकृष्णः **न विसृजेत्** न त्यजेत् । हे **साध्वि** मुरलि

विनतौ सत्यां नम्रीभावे सति इनता प्रभुत्वं न चकास्ति न शोभते । नम्रेषु प्रभुत्वदर्शनमनुचितमिति भावः ॥ २३ ॥

**व्रजभूरियं भुवि तताविततताऽप्युदभूत् तवेश्वर जनेरजने ।**
**कमलाऽपि तत्र लसतेऽलसतेऽत्यधुनोत्सृजेत् सुरमणे रमणे ॥२४॥**

**व्या : व्रजभूरिति** । हे **अजने** जननरहित **ईश्वर** श्रीकृष्ण **तव जनेः** प्रादुर्भावात् अविभिरुरणैः **तता**ऽपि व्याप्ताऽपि **इयं व्रजभूः** गोष्ठभूमिः **भुवि** लोके **तता** ख्याता **उदभूत्** । हे **सुरमणे** सुराणां मणिः श्रेष्ठः तस्य सम्बुद्धिः । सुरश्रेष्ठ श्रीकृष्ण **कमलाऽपि** श्रीरपि **तत्र** गोष्ठे **लसते** चकास्ति । **अधुना** सा कमला **रमणे** त्वयि अलसस्य भावः **अलसता** आलस्यं किं गोष्ठवासेनेत्युपेक्षणमस्तीति कृत्वा **उत्सृजेत्** गोष्ठं त्यजेत् ॥ २४ ॥

**विजने वने स्वजनमुत्सृजतस्तव नागमं यदि मनो मनुते ।**
**विनिहंसि हंसनुतपुण्ययशस्तवनागमं परम तर्हि तव ॥२५॥**

**व्या : विजने इति** । हे **परम** उत्तम श्रीकृष्ण **विजने** जनरहिते **वने** विपिने **स्वजनं** भक्तजनम् **उत्सृजतः** परित्यजतः **तव मनः** चित्तमागमम् **आगमनं यदि न मनुते** नाङ्गीकरोति । **तर्हि** तव **हंसैः** सन्यासिभिः **नुतं** स्तुतं **पुण्यं** पवित्रं यशः तत् स्तौतीति **पुण्ययशस्तवनः** स चासावागमः गीताशास्त्रम् । ''तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्''[1] इत्यादिकं **विनिहंसि** नाशयसि। तव भक्तानामस्माकं परित्यागे 'नित्याभियुक्तानां योगक्षेमं वहाम्यहम्' इति प्रतिज्ञाया हानिरिति भावः ॥ २५ ॥

**अयोगभिन्ना नयतीशमानी तवाङ्घ्रिदासीर्बत दण्डपाणिः ।**
**अयोगभिन्ना न यतीशमानी ह्रियेत कस्तेन भवद्वियोगे ॥२६॥**

---

१ गीता (९/२२)

**व्या : अयोगेति** । हे श्रीकृष्ण **ईशमानी** अतः परमेतासाम् अहमेवेश्वर इत्यभिमानवान् **दण्डपाणिः** यमः **अयोगेन** तव विरहेण **भिन्नाः** विशीर्णाः **तवाङ्घ्रेः** श्रीपादस्य **दासीर्नः** नयति बत खेदे । तथाहि । तेन **दण्डपाणिना भवद्वियोगे** विरहे सति अयः अश्मसारम् अगं च पर्वतं च भिनत्तीत्ययोगभित् अतिसमर्थ इत्यर्थः । एतादृशः **ना** पुरुषः **यतीशमानी** यतीश्वर इत्यभिमानवान् योगी वा कः न **ह्रियेत** । अतिसुन्दरस्य तव **वियोगे** सर्वेषामपि दशमावस्था स्यादेवेति भावः ॥ २६ ॥

**विनाशनानामयदेहपुष्टीरनादितस्त्वं परमुज्झसीश ।**
**विनाशनानामयदेहपुष्टीर्लभेमहि त्वत्तुलनां वयं च ॥ २७ ॥**

**व्या :** विनाशेति । हे ईश श्रीकृष्ण **अनादितः** अनादिकालमारभ्य **विनाशः** मृतिः **नानामयः** नानाविधव्याधयः **देहपुष्टिः** शरीरपोषणं ताः परं केवलं त्वमुज्झसि । इदानीं **वयं च** वयमपि **अशनं** भोजनम् **अनामयः** व्याधिपरिहारः **देहपुष्टिः** देहपोषणं ताः विना त्यक्त्वेत्यर्थः । **त्वत्तुलनां** तव साम्यं **लभेमहि** । त्वद्विरहात् येनकेनचित्प्रकारेण देहं त्यक्त्वा मुक्तौ त्वत्साम्यम् अनुप्राप्स्याम इति भावः ॥ २७ ॥

**विधिशर्वपूर्वसुमनःसुमनःसरसीनिवास जगताज गता ।**
**त्वदभिन्नता तुहिनतोऽहि नतो दहनोऽपरोऽसदृश तादृशता ॥२८॥**

**व्या :** अधुना ज्ञानित्वं विस्तारयन्ति । **विधीति** । विधिर्ब्रह्मा शर्वः शिवः तौ पूर्वौ येषां ते ते च ते सुमनसः देवाः तेषां सु शोभनं मनश्चित्तं तदेव सरसी सरोवरं तत्र निवसतीति **विधिशर्वपूर्वसुमनःसरसीनिवासः** तस्य सम्बुद्धिः । अनेन ध्येयत्वतदभावरूपविरुद्धधर्माक्रान्तत्वम् अभेदनिरासहेतुः सूचितो भवति । हे **अज** जनिरहित श्रीकृष्ण **जगता** प्रपञ्चेन सह **त्वदभिन्नता** तवाभेदः **गता** निरस्तेत्यर्थः । तत्र दृष्टान्तमाहुः । **तुहिनतः** हिमात् **नतः** यज्विभिर्नमस्कृतः दहनो वह्निः अपरो

हि भिन्नो हि । अनेन दहनतुहिनयोर्दार्ष्टान्तिकानुसारेण नम्यत्वानम्यत्वरूपविरुद्धधर्मः प्रदर्शितो भवति । निगमनं कुर्वन्ति । हे **असदृश** सदृशरहित श्रीकृष्ण युवयोरपि तादृशता तत्सदृशता दहनतुहिनवत् विरुद्धधर्मवत्तया **भिन्नते**त्यर्थः । अनेन जीवपरमौ परस्परं भिन्नौ विरुद्धधर्माक्रान्तत्वात् दहनतुहिनवत्, इमौ च तादृशौ तस्माद्भिन्नाविति पञ्चावयवानुमानमुक्तं भवति ।। २८ ।।

**कमलासनाच्च भवतोऽभवतो महतीन्दिरा किल तया लतया ।**
**तरुवद्भवान् परिवृतोऽरिवृतोदयदाव सेदमनु ते मनुते ।। २९ ।।**

**व्या :** ननु जीवपरयोर्भेदेऽपि साम्यमेवास्त्वित्यत अम्भ्रणीसूक्तोक्तप्रमेयेन सर्वोत्तमत्वं समर्थयन्ते । **कमलासनादिति** । **इन्दिरा** श्रीमहालक्ष्मीः **कमलासनात्** चतुर्मुखात् **भवतः** भवात् शिवात् **अभवतः** न विद्यते भवः संसारो यस्येति अभवान्मुक्तादित्यर्थः । जात्येकवचनम् । **महती किल** उत्तमा किल । किलेत्यनेन ''यं कामये तन्तमुग्रं कृणोमि'' इति श्रुतिः सूचिता । **अरिभिः** शत्रुभिः **वृतः प्राप्तः उदयः** अभ्युदयः तस्य **दाव** वनाग्ने । नाशकेत्यर्थः । एतादृश हे श्रीकृष्ण । **तया** लक्ष्म्या **भवान् लतया** वल्ल्या **तरुवत्** तरुरिव **परिवृतः** किल अङ्गीकृतः । अत्रापि किलेत्यनेन 'मम योनिः' इति श्रुतिं सूचयन्ति । अस्तु ब्रह्मभवोत्तमता, सर्वोत्तमता तु कथमित्यत आहुः । **सेति** । **ते** तव सम्बन्धिनी **सा** लक्ष्मीः **इदं** सर्वं जगत् **अनु** स्वस्याः अनन्तरं निकृष्टमित्यर्थः । **मनुते** जानाति किल । किलेत्यनेन [1]''अहं रुद्रेभिः'' इति समग्रा श्रुतिः सूचिता । ब्रह्मादिसकलजग-

१ व्याख्यातोऽयं श्लोकः श्रीवादिराजतीर्थश्रीचरणैः स्वकृत- उपन्यासरत्नमालायाम् -
कमलासनाच्च भवतोऽभवतो महतीन्दिरा किल तया लतया ।
तरुवद्भवान् परिवृतोऽरिवृतोदयदाव सेदमनु ते मनुते ।।
जडाजडमुक्तामुक्तसकलप्रपञ्चात् सविस्तरं श्रियो महत्त्वं निरूप्य तस्याश्च पतित्वेन हरेर्निरवधिकमहत्त्वं प्रतिपादयितुमिदं पद्यं प्रवृत्तम् । भवतः त्वत्तः, भवतः जायमानात् भवान् न भवतीत्यभवान् तस्मात्, अभवतः भवव्यतिरिक्तात्, कमलासनात् ब्रह्मणः कमलासनाद्भवतः जायमानात् । अभवतः भवव्यतिरिक्तात् भवतः शिवात् । ब्रह्म-

दभ्यधिकलक्ष्मीपतित्वं श्रौतं सर्वोत्तमत्वे केवलव्यतिरेकी हेतुः सूचितो भवतीत्यर्थः २९

शिवाख्यतदन्तर्यामिभगवद्रूपव्यवच्छेदायोभयत्राप्यभवत इति विशेषणम् । अनेन ब्रह्मा स्वान्तर्यामिब्रह्मरूपाद्भिन्नः तत्पुत्रत्वात्, शिवः स्वान्तर्यामिशिवरूपाद्भिन्नः तत्पौत्रत्वादित्यनुमानद्वयं ब्रह्मशिवयोरुक्तस्वस्वान्तर्यामिरूपाद्भिन्नत्वे प्रमाणं सूचितम्। 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति श्रुतेः, 'शम्भोः पितामहो ब्रह्मपिता शक्राद्यधीश्वरः' इति स्मृतेः । स्वस्वस्रष्टृमूलरूपस्यैवोभयत्रापि प्रवेशान्नासिद्धो हेतुः। कमलायाः लक्ष्म्याः आसनात् पत्या सह शयने शय्यारूपाच्छेषात् । 'भू प्राप्तौ' इति धातोः भवतः गच्छतः भवतः तव षष्ठ्यर्थभूतवाहकभावेन विद्यमानाद्गरुडात् कानां जलानां मलेन फेनेन अस्यति निरस्यति शत्रुमिति कमलासनः इन्द्रः तस्मात् ''अपां फेनेन नमुचेः शिर इन्द्रोदवर्तयः''(ऋग्वेद.८/१४/१३) इति श्रुतेः । भवतः त्वत्तो, भवतो जायमानात् कामात् कमलासनात् 'पद्मासनं पद्मकरम्' इति श्रुत्या पद्मविष्टरसूर्यात् कमलं अस्यति मुद्रणप्रापणेन निरस्यतीति, कमलासनात् चन्द्रात् । भवतो भवतः शिवाद्भवतः जायमानात् विनायकात् षण्मुखाच्च । कमलासनात् ब्रह्मणः, भवतः जायमानान्मरीचेः भवतो जायमानात् कश्यपात्, भवतः तव, मनोऽनुकूलतया विद्यमानात् देवनागादिसमूहात् भवतः तव, अभवतः अननुकूलात् दैत्यादिदुर्जीवसमूहाच्च उक्तव्युत्पत्त्या कमलासनात् सूर्यात्, भवतो जायमानात् कमलासनात् चन्द्राच्च भवतः जायमानात्, उभयवंशजातचक्रवर्तिसमूहादित्यर्थः। कमलासनाद्भवतः जायमानाद्वसिष्ठनारदादिऋषिसमूहात् कमलासनात् ब्रह्मणः उक्तव्युत्पत्त्या, कमलासनात् सूर्याच्च भवतः प्रतिकल्पं जायमानान्महदहङ्कारादेः पातालरसातलादेश्च जडप्रपञ्चात् कमलासनात् ब्रह्मणः, भवतश्च, अभवतः अजायमानात् अपौरुषेयवेदादेः कमलासनात् कमलासनान्निमित्तात्, तदर्थमित्यर्थः । भवतः मूलरूपाद्व्यासादिरूपाच्च भवतः जायमानात् पञ्चरात्रभारतपुराणब्रह्मसूत्रादिपौरुषेयग्रन्थसमूहात् । कमलायाः सम्पदः असनात् निरसनात् । वैराग्यादित्यर्थः कशब्दवाच्यशिरसो मलभूतकेशानां असनात् निरसनात् सन्यासाश्रमग्रहणादिति यावत् । मुक्तियोग्यजीवेषु यथायोग्यं वैराग्यसम्पत्तेरनन्तरमिति भावः।भवतः त्वत्तः, त्वदाज्ञयेत्यर्थः।भवतः भूमौ जायमानात् कमलासनात् उक्तविधया विरक्ताद्यतिरूपिणो भाविब्रह्मणो मध्वाद् भवतः जायमानस्य तत्कृतभाष्यादिग्रन्थस्य भवतः अनुभवितृगणादित्यर्थः । ''कानीन्द्रियाणि'' इति श्रुतेः कमलासनात् कशब्दवाच्यमनोमलभूतमिथ्याज्ञाननिरसनान्मननादित्यर्थः । ल्यब्लोपनिमित्तपञ्चमीमपेक्ष्य कमलासनात् कमलासनं, भवतः भवं भवतः शिवात् भवतः भवन्तं जायमानं, षण्मुखविनायकादिकं परदेवतात्वेनानङ्गीकृत्य च

गुरुत्वेनाङ्गीकृत्य च भवत एव भवतः परदेवतात्वेनानुभवात् कमलासनात् कमलाया विष्टरस्थानीयवक्षःस्थलान्नारायणात् प्रसिद्धकमलासनाच्च गुरोः भवतः जायमानात् भवतः तव भवतः भवात् भक्तेर्भावनाख्यध्यानात् प्राप्त्यर्थधातोर्ज्ञानार्थत्वात्, भवतः अपरोक्षज्ञानाच्च भवतो जायमानात्, कमलासनात् कशब्दवाच्यमौक्तसुखस्य मलरूपदुः-खोदर्कसांसारिकसुखनिरसनादनन्तरं भवतः तव भवतः सायुज्यसामीप्यादिसम्ब-न्धवत्तया जायमानाद्यथायोग्यं चतुर्विधमुक्तेः पात्रीभूतादिति भावः। अभवतः न विद्यते भवः संसारो यस्येति व्युत्पत्त्या मुक्तात् प्रागुक्तव्युत्पत्त्यैव कमलासनादिशब्दवाच्यान्मु-क्तब्रह्मादिसज्जीवादिसमूहादिति यावत्। एवं चान्तर्बहिर्वर्तिप्रपञ्चप्रतीतत्वादभूतपूर्वत्रै-विक्रमपदत्रयोपममिदं पदत्रयमिति ज्ञातव्यम्।

इन्दिरा लक्ष्मीः, महती किल विष्णुव्यतिरिक्तचेतनाचेतनात्मकसकलप्रपञ्चा-दभ्यधिकेत्यर्थः। हे अरिवृतोदयदाव कृष्ण इतरावध्यकंसादिवधेनापि भगवतस्सर्वोत्त-मत्वादिसूचनायेदं विशेषणम्। लतया तरुवत् तया लक्ष्म्या भवान् परिवृतः परितः सर्वतो वृतः अवतारादिष्वपि सेवालोलुपा सा त्वां न मुञ्चतीत्यर्थः। गुणत्रयादुपरि व्याप्ताव्याकृतमहाकायस्य हरेः श्रीरेव कटकमुकुटाद्याकारेण सर्वाङ्गमावृत्य तिष्ठतीति सूचयितुं परिवृत इत्युक्तम्। तरुदृष्टान्तेन 'यस्याङ्घ्रिरेणुं जुषतोऽनभीप्सोः' इति स्मृत्युक्त-भगवतो नैरपेक्ष्यं सूच्यते।

एवं च सकलजगदुत्तमलक्ष्मीतत्त्वादप्युत्तमत्वाद्भगवानेव निरवधिकसर्वोत्तम इति गोपीनां हृदयम्। किलेत्यनेनास्मिन्नर्थेऽम्भ्रणीसूक्तवर्गद्वयम्,

मयाऽपि बाल्ये स्वपितुः प्रजा दृष्टा बुभुक्षिताः।
दुःखादशक्तया पोष्टुं श्रियमाराध्य वै भृताः॥
तया संवर्धिताभ्यश्च प्रजाभ्यो भवदादयः।
विलसन्तीशशक्राद्याः ससुहृन्मित्रबान्धवाः॥
तया विना क्व देवत्वं क्वैश्वर्यं क्व परिग्रहः।
सर्वे भवन्ति जीवन्तो यातनास्विह संस्थिताः॥
तामृते नैव धर्मोऽर्थः काममोक्षौ विदूरतः।
क्षुधितानां दुर्भगानां कुतो योगसमाधयः॥
स च संसारसारैकः सर्वलोकैकनायकः।
वशगा कमला यस्य त्यक्त्वा त्वामपि शङ्कर॥
अनौद्धत्येन शौचेन स्नेहेनार्जवसम्पदा।

सर्वातिशायिवीर्येण सम्पूर्णस्य महात्मनः ॥
कस्तेन समतामेति देवदेवेन विष्णुना ।
यस्यांशांशावतारेण विना सद्यो विलीयते ॥
जगदेतत् तथाऽप्याहुर्दोषानस्य विमोहिताः ।
नास्य जन्म जरा मृत्युर्नाप्राप्यं स्वार्थ एव वा ॥(पद्मपुराणे उत्तरखण्डे. ७१)
-इति वासुदेवसहस्रनाम्नि पार्वतीवचनरूपस्मृतिं च सूचयति ।

तत्राम्भ्रणीसूक्तस्य लक्ष्मीसूक्तत्वे निरुक्तमेव प्रमाणयन्तो यथाशक्ति सूक्तार्थं वदामः। 'अम्भ्रणीवागात्मानं तुष्टाव' इति निरुक्तात् अं परमात्मानं स्वहृदि स्वाभिमन्य-मानवेदप्रतिपाद्यत्वेन च बिभर्ति । 'वेदगर्भो विभुर्विष्णुः श्रीमांस्त्रैलोक्यभूषणः' इति विष्णुनामसु पठात् अं बिभर्ति नयति चेति विग्रहः । नयति वेदाध्येतृसज्जनमनस्सु चेति अम्भ्रणीशब्दवाच्या वाग्वेदाभिमानिनी लक्ष्मीरात्मानं तुष्टाव । 'अ इति ब्रह्म' इति श्रुतेः । 'भृञ् भरणे, णीञ् प्रापणे' इति धातोश्च नापूर्वोऽयमर्थः । रूढ्या अम्भ्रणीशब्दवाच्यदेवतायाः काप्यप्रसिद्धेः । उक्तयोगाश्रयणेन श्रीरेवात्र प्रतिपाद्या न तु सरस्वती । अम्भ्रणीशब्दविरोधात् । सरस्वत्यादेः ब्रह्मलयेऽपि विद्यमानवेदाभि-मानित्वायोगात् । तं ब्रह्माणं कृणोमि । अस्य जगतः पितरं स्रष्टारं चतुर्मुखं, मूर्धन् मूर्ध्नि, सर्वलोकोपरिस्थितसत्यलोकपरिपालनाय । तादर्थ्ये सप्तमी । सुवे=योनिद्वारा सृजामि अप्स्वन्तः = समुद्रोदकमध्ये । मम योनिः = भरणादौ हेतुभूतो भर्ता नारायणस्तिष्ठति इत्यादिवक्ष्यमाणसूक्तस्थबह्वर्थानां लक्ष्म्या अन्यत्रायोगाच्च ।

अहं रुद्रेभिः = एकादशरुद्रैः वेदोक्तसकलरुद्रपरिग्रहाय छान्दसः प्रयोगः । वसुभिः = अष्टवसुभिः सह चरामीत्येकान्वयः । अत्र बहुमूर्तेः स्वस्याः प्रत्येकं मूर्तावपि सह-सञ्चारसूचनाय द्विरहम्पदप्रयोगः । आदित्यैर्विश्वेदेवैश्च सह चरामि । मम सञ्चारसमये एते सर्वे ममानुचराः इति भावः । मित्रावरुणा = मित्रावरुणौ उभा = उभौ, इन्द्राग्नी, उभा = उभौ । अश्विना = अश्विनौ च बिभर्मि ॥ १ ॥

आहनसं = आसमन्तात् हन्यते इति आहनाः आसमन्तात् हन्यमानसो-मलताभिमानिनमित्यर्थः । सोमं = चन्द्रं; त्वष्टारं = विश्वकर्माणं, त्वष्टुनामकसूर्यं वा, पूषणं; उत = पूषणं च । भगं = भगनामकं च । एतावपि सूर्यौ । विष्टिगृहीतानां पूर्वर्च्युक्तरुद्रादीनां न मया सह सञ्चरणम् । किन्तु धनदानादिषोषितानामेवेति सूचनाय बिभर्मीत्युत्तरर्च्यपि प्रागादित्यशब्दोक्तपूषादीनामेव सर्वोपलक्षकतया पुनर्वचनम् । अत्रैवोक्तेन्द्रादीनां च बाल्यत्वादेव लक्ष्म्यनुचरत्वं ज्ञेयम् । भरणं च नाधाराधेयभावेन,

किन्तु द्रव्यदानेन च इत्याह - अहमिति । सुप्राव्ये = सुष्ठु प्रकर्षेण राजादिभ्योऽप्य-तिशयेनान्तरपि स्थित्वा इत्यर्थः । अव्ये = रक्षणयोग्ये इति लोकत्रयसङ्ग्राहकम् । प्रमामनुपमृद्यैव ददामीति सूचनाय लोक इत्यनुक्त्वा अव्ये इत्युक्तम् । सुन्वते = सोमसवनं कुर्वते । हविष्मते = यज्ञयोग्यबह्वन्नवते । यजमानाय = ब्रह्मेन्द्रादिरूपयजमानाय द्रविणं दधामि । 'तृतियोऽतिशये' इति महाव्याकरणवचनात् अतिशयेन ददामि । दत्तं च 'डुधाङ् धारणपोषणयोः' इति धातोः । दधामि = धारयामि चोरादिभयं निवार्य रक्षामि वृद्ध्यादिना पोषयामि च ॥ २ ॥

राष्ट्रादेव द्रव्यसम्पत्तिः किं त्वयेत्याशङ्कां वारयितुमाह - अहं राष्ट्रीति । अहं राष्ट्री = भूरूपेण राष्ट्राभिमानिनी । वसूनां = धनधान्यरत्नादीनाम् । सङ्गमनी = सम्यक् प्रापयन्ती । यज्ञियानां = वसूनां । प्रथमा = आदिभूता । चिकितुषी कर्त्री । पुण्यहेतुत्वात् यज्ञयोग्यवसूनामितरद्रव्येभ्योऽपि आदित एव कर्त्री इत्यर्थः । धनादिदानं च न त्रिविधजीवानामेकप्रकारेण किन्तु तत्तद्योग्यतामर्यादया इत्याह - तामिति । याऽहं पुरुत्रा = पुरूणि ब्रह्मादिजगन्ति पालयन्ती तां, मा = मां, देवाः भूरिस्थात्राम् । भूरीणि द्रव्याणी स्थात्रीं स्थापयन्तीं, स्थिरीकुर्वाणां भूरि = बहुविधद्रव्यं; आ = तेषां तेषां योग्यतामर्यादया वेशयन्तीं = तत्तद्गृहे प्रवेशयन्तीं; उत्तमानां गृहे चिरकालस्थायि, अधमानामल्पकालस्थायि, मिश्राणामुभयविधं च वेशयन्तीमित्यर्थः । व्यदधुः = कृतवन्तः । ''ऋते भवत्पादपरायणं न मां विदन्त्यहं त्वद्धृदया यतोऽजित''(भा.५.१८;२२) । इति भागवतोक्तस्वाभिप्रायं स्फोरयितुं 'आ' इत्युपसर्गः ॥ ३ ॥

अत एव यो विरुद्धतया पश्यति मदुक्ततत्त्वाद्वैपरीत्येन पश्यति । यः प्राणिति = जीवनमात्रं कृत्वा तिष्ठति । यः ईं = इत्थं । उक्तं = मदुक्तं सकलं तत्त्वं । शृणोति = शिष्यत्वेन शृणोति । वाक्यखण्डत्रयस्य जीवत्रयपरत्वसूचनाय त्रिशोऽपि यच्छब्दग्रहणम् । स सर्वोऽपि मया अन्नमत्ति । अयोग्यदत्तान्नस्य बहुकालासम्बन्धसूचनाय विसन्धीकरणं । तस्यैवादावुक्तत्वात् तदेव सृष्टयति । मां अमन्तवः = अवमन्तारः मां भगवदैश्वर्यं चावमन्तारो ये = ते । उप = समीपे । क्षियन्ति = क्षयं प्राप्नुवन्ति । अहं श्रद्धिवं = श्रद्धावद्भिः प्राप्यं वचनं 'वा गतिगन्धनयोः' इति धातोः । ते = तव, वदामि । तत् त्वं श्रुधि = श्रुणु । श्रुत तटस्था अपि श्रुणुत ॥ ४ ॥

देवेभिः = देवैः । मानुषेभिः = उत्तममानुषैश्च । जुष्टं इदं वचनं अहमेव स्वयं वदामि; न तु गीतापाठवत् अन्यवचनानुवादरूपमिदं येन वक्ष्यमाणमहिमा मम न सिद्ध्येत्

इति भावः । यं यं उग्रं रुद्रपदयोग्यं जीवं उग्रं = रुद्रं कर्तुं कामये, 'तं तं' इति वीप्साबलात् तु 'यं यं' इति लभ्यते। कृणोमीति विधायकपदमहिम्ना कर्तुमिति लभ्यते। कामनाकरणयोरेकविषयत्वादुग्रमित्यपि लभ्यते । तं तं उग्रं रुद्रं कृणोमि । 'उग्रः कपर्दी श्रीकण्ठः' इत्यभिधानात् । यं यं ब्रह्माणं ऋषिं सुमेधसं च कर्तुं कामये, तं तं ब्रह्माणमृषिं सुमेधसं च कृणोमीति योजना द्रष्टव्या । अतिसमर्थरुद्रब्रह्मादीनामप्युत्पादने स्थापने च अहमेव समर्था इति श्रियो भावः । स्वभर्तृसमतया प्रसिद्धरुद्रब्रह्मादीनां स्वतोऽप्यधःकरणात् स्वभर्तृभक्तैरत्यादरणीयमिदमिति सूचनाय प्रागस्य प्रशंसा। अत एव न तुच्छार्थस्य प्रवेशः । रुद्रादिसकलसुरसेव्यत्वप्रतिपादकपूर्ववाक्यान्यप्रस्तूयातिप्रशंसापूर्वकमुक्तेऽस्मिन् वाक्ये ततोऽप्यतिशयितार्थस्यैव वक्तव्यतया 'उग्रो रुद्र' एव 'ब्रह्मा चतुर्मुख एव' 'ऋषिः सर्वज्ञः' 'सुमेधाः अपरोक्षज्ञानी परममुक्तो वा' । अत एव सुमेधामिति शोभनमेधात्वोक्तिः । एवं च हरीतरसकलजगत्प्रवर्तकयोक्तायाः स्वस्याः वक्ष्यमाणयोनिरपि हर्याख्यपरदेवतैव ॥ ५ ॥

अहं प्रळयकाले ब्रह्मद्विषे = ब्रह्मणः पञ्चमशिरश्छेत्रे ''शृ हिंसायां'' इति धातोः । शरवे = जगत्संहर्त्रे । रुद्राय हन्तवे = हन्तुमेव । ''तुमर्थे से सेनसेऽसेक्से कसेनध्यै अध्यैन् कध्यैन् शध्यै शध्यैन् तवै तवेङ् तवेन'' इत्यनेन सूत्रेण (पा.सू. ४/४/९) तुमर्थे तवैन् प्रत्ययः । स्वकृतरुद्रहननानन्तरं कल्पान्तरे शेषपदप्राप्तावपि रुद्रपदस्य सर्वथा त्यागात् हन्तुमेव इत्युक्तम् । महारुद्रस्यैव परिग्रहाय ब्रह्मद्विषे शरवे इति विशेषणद्वयमुक्तम् । अतः प्रागुक्तरुद्रो महारुद्र इति ज्ञातव्यम् । ब्रह्मवधात् जगद्वधाच्च मत्पत्युः नारायणस्यैव अलेपो, न रुद्रस्य इति सूचनाय विशेषणद्वयम् । एवं च महतां द्रोहिणो हिंसा सर्वथा कार्या इति सूचनाय वा हन्तुमेव इत्युक्तम् । धनुः आतनोमि = आकर्णं आकर्षयामि । अहं जनाय समदं = सन्तोषेण सहितं कैवल्यमपि कृणोमि । द्यावापृथिवी = द्यावापृथिव्यौ । आ = सम्यक् । विवेश = अभिमानितया प्रविष्टा अस्मि ॥ ६ ॥

अस्य पितरं = ब्रह्माणं, मूर्धन् = मूर्ध्नि, अस्य जगतो मूर्ध्नि सत्यलोके, जगतो मूर्ध्नि धर्तुं योग्यं सर्वाग्रेसरमिति वा अर्थः । अहं सुवे । समुद्रे अन्तः अप्सु मध्ये मम योनिरस्ति । स्वपतेर्वामतः उक्तसमस्तमहिमवत्याः अपि मम सकलचेष्टाकारणभूतः कश्चन पुरुषोत्तमोऽस्ति । अहमेव निरवधिकसर्वोत्तमा न भवामि इत्यर्थः । अभिमान्यभिमन्यमानयोः समुद्रजलयोः उभयोरपि आधारत्वोक्त्या सर्वान्तर्यामिहरिरेव योनिः इति श्रियो हृदयम् । प्राक् वरुणस्य स्वपोष्यत्वोक्त्या च न तस्य अत्र प्रवेशः ।

प्रलये स्वपतिना सह स्थितायाः स्वस्याः उत्पत्तेरेव असम्भवाच्च नान्यो योनिः । उत अस्यां ऋचि वक्ष्यमाणसर्वाधारत्वादेः अन्यत्र असम्भवाच्च साक्षात् स्वस्याः अपि नियामको हरिरेव योनिः । हरिरेव स्वोक्तश्रुत्युक्तयोनित्वे हेत्वन्तरं चाह तत इति । विश्वा = विश्वानि मदादीनि, भुवना = भुवनानि, ततः मम योनिभूतात् नारायणात् वितिष्ठे = विशेषेण धृतान्यासन् इति यावत् । करतलमिलितामलकवल्लीलया धृतं इति सूचनाय एकवचनान्तक्रियापदप्रयोगः । स्वातन्त्र्येण धारणं तस्यैव इति सूचनाय वि इत्युपसर्गः । अनु इत्यनेन स्वोक्तार्थस्य 'एको दधार' इति श्रुत्यनुसारितां सूचयति । ननु त्वयाऽपि सकलधारणं क्रियते खलु इत्यत आह, अहं च अमूं = पृथिवीं, द्यामुत =द्यां च, वर्ष्मणा =देहेन, उप = समीपे स्पृशामि भगवतैव धृते जगति निमित्तमात्रतया अहमपि स्पृष्ट्वा तिष्ठामि । धारकस्तु स एव । पूर्वोक्तः सर्वोऽपि मे महिमा स्वातन्त्र्येण मदन्तर्यामिणः तस्यैव इति भावः ।।७।।

तत्कृपया मयि ''अन्नं हि प्राणः'' इति श्रुतेः अन्नवस्त्रहिरण्यादिपदवाच्यायाः स्वस्याः प्राणाद्याधारत्वस्य स्पष्टमुक्तत्वात् प्राणपदप्रयोगादेव प्राणिनां प्राणाधीनत्वस्यैव सूचितत्वात् मम पुत्रस्य मुख्यप्राणस्य अयं महिमा नान्यस्य इत्याह । विश्वा भुवनानि धर्तुं कर्तुं हर्तुं चारभमाणा अहमेव वात इव मुख्यप्राण इव प्रवामि भगवद्दत्तयशसा जगत् प्रकर्षेण सुरभीकरोमि । 'वा गतिगन्धनयोः' इति धातुः । विष्णोः ब्रह्माद्युत्तमलक्ष्मीतत्त्वादपि उत्तमत्वेन निरवधिकसर्वोत्तमत्वम्। लक्ष्म्यादीनां चाल्पमहिमत्वेन तद्भृत्यानां च स्फोरयन्ती उपसंहरति 'पर' इति । एना = अस्याः पृथिव्याः = पृथिव्यभिमानिभूरूपादित्यर्थः । 'सुपां सुपो भवन्ति' इति वचनात् तृतीया पञ्चम्यर्थे । ब्रह्माद्युत्तमलक्ष्मीरूपपत्न्याः सर्वोत्तमत्वे पतिः सर्वोत्तमः इति भगवदुत्तमत्वज्ञापने लिङ्गतया 'ततो वितिष्ठे' इत्यादिना उपदेष्टृतया च करणत्वमपि ज्ञापयितुं तृतीया । सः परमात्मा परः = उत्तमः । अहं तु महिना = महिम्ना; एतावती बभूव = इयत्तापरिमाणवती बभूव । मदादयः सर्वेऽपि परिच्छिन्नज्ञानसुखादिगुण-वन्तः, भगवांस्तु निरवधिकसकलगुणपरिपूर्णः इति वर्गद्वयाभिप्रायः ।। ८ ।। स्मृतेरर्थस्तु स्पष्ट एव ।

कृष्णस्य सर्वोत्तमत्वे लक्ष्मीमपि साक्षित्वेन प्रमाणयन्तीत्याहुः । सा इन्दिरा इदं जगत् ते - तव सकाशात्, अनु = अनन्तरं नीचमित्यर्थः, मनुते = जानाति । इदं च -

त्वं न्यस्तदण्डमुनिभिर्गदितानुभाव आत्माऽत्मदश्च जगतामिति मे वृतोऽसि ।
हित्वा भवद्भ्रुवदुदीरितकालगन्धध्वस्ताशिषोऽब्जभवनाकपतीन् कुतोऽन्यान् ।

नूनं तपो यत्र न मन्युनिर्जयो ज्ञानं क्वचित् तच्च न सङ्गवर्जितम् ।
कश्चिन्महांस्तस्य न कामनिर्जयः स ईश्वरः किं परतो व्यपाश्रयः ।
धर्मः क्वचित् तत्र न भूतसौहृदं त्यागः क्वचित् तच्च न मुक्तिकारणम् ।
वीर्यं न पुंसोऽस्त्यजवेगनिष्कृतं न हि द्वितीयो गुणसङ्गवर्जितः ।
क्वचिच्चिरायुर्न हि शीलमङ्गलं क्वचित् तदप्यस्ति न वेद्यमायुषः ।
यतोऽभयं कुत्र च सोऽप्यमङ्गलः सुमङ्गलः कश्चन काङ्क्षते हि माम् ।।
एवं विमृश्याव्यभिचारिसद्गुणं पदं निजैकाश्रयिसद्गुणाश्रयम् ।
वव्रे वरं सर्वगुणैरपेक्षितं रमा मुकुन्दं निरपेक्षमीप्सितम् ।।

- इति भागवतवचनादुक्तसूक्तान्नावगम्यते । जगतामात्मदः = आत्मानं त्रिविधजगत्स्वभावं अन्ते ददातीति तथोक्तः । अत एव "तनुभृत्स्वभावसम्भूतये" इत्याहुः । आत्मा= परमात्मा 'स्वभावं परमात्मनि' इति वचनात् । त्वं भवतः = त्वत्तः, भवत् = जायमानम् , उदीरितम्=उदीरणं यस्य स तथोक्तः । तस्य कालस्य गन्धेन परनामनिमेषकाख्यलेशेन ध्वस्ता आशिषः, अखिलैकसम्पदो येषां तान् अब्जो ब्रह्मा 'अद्भ्यः सम्भूतो हिरण्यगर्भः' इति वचनात्, भवः=शिवः, नाकपतिः=इन्द्रः, बहुवचनबलादेवमेवार्थो वक्तव्यः । हित्वा मे मया वृतोऽसि । अन्यान् हित्वा वृतोऽसीति । कुतः किं वक्तव्यमिति नाशाभावं सूचयति । यत्र तपनं, यत्र दहनं, वसिष्ठविश्वामित्रादौ । तप सन्तापे, तप आलोचने, इति धातोरौष्ण्यरूपध्यानरूपं तपो नूनमस्ति मन्युनिग्रहो न । प्रलयकाले दहनतपनयोर्जगद्दाहकत्ववत् ऋषीणां शापादिदानेन च मन्युफलदर्शनादिति भावः । क्वचिद्=बृहस्पतिशुक्रादौ ज्ञानं = विद्याऽस्ति तज्ज्ञानं सङ्गेन=धनासक्त्या वर्जितं न। देवदानवपौरोहित्याश्रयणात् । कश्चित्=ब्रह्मा महान्=सकलजीवेभ्यः श्रेष्ठः । तस्य कामनिर्जयो न

वाचं दुहितरं तन्वीं स्वयम्भूर्हरतीं मनः ।
अकामां चकमे क्षत्तः सकाम इति नः श्रुतम् ।।

-इति भागवते अविहितस्वदुहितृकामदर्शनादिति भावः । व्यपगतोऽन्य आश्रयो यस्य सोऽयं व्यपाश्रयः ।-

रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः ।
ब्रह्मा मामाश्रितो नित्यं नाहं कञ्चिदुपाश्रितः ।।

इति वचनात् इन्द्राद्याश्रयरुद्रादिवत् अयं आश्रय एव स्वयं पुनराश्रयान्तरसापेक्षो न भवतीति यावत् । परतः = परमपुरुषात् एतादृशो व्यपाश्रयो यस्य रुद्रस्य स परतो

व्यपाश्रयः। स्वतन्त्रनारायणमाश्रित्य तद्बलेनैव स्ववैरिणं भस्मासुरं नाशयन् स्वात्मानं रक्षंश्चेति यावत्। स रुद्र ईश्वरः किमु = ईश्वरशब्दवाच्यसर्वेश्वरत्ववान् किमु, नैव। भगवन्नामधारकयैवायमीश्वरो नतु भगवानिव परममुख्यया वृत्त्या तच्छब्दवाच्य इति भावः।

मुमुचुः पुष्पवर्षाणि हते पापे वृकासुरे।
देवर्षिपितृगन्धर्वा मोचितः सङ्कटाच्छिवः॥
य एवमव्याकृतशक्त्युदन्वतः परस्य साक्षात्परमात्मनो हरेः।
गिरीशमोक्षं कथयेच्छृणोति वा विमुच्यते संसृतिभिस्तथाऽरिभिः॥

इति भागवतवचनात् सिद्धोऽयमर्थः। क्वचित् =पर(य)मेऽपि धर्मोऽस्ति, धर्मराजत्वात्। भूतसौहृदं न। क्वचित् = मनुबल्यादौ त्यागः =स्वाधिकारसमाप्तौ मनूनामीश्वरभयादैश्वर्यत्यागः। बलेश्च वामनभयादन्यायार्जितत्रैलोक्यत्यागः। अत एव न मुक्तिकारणम्। अजः =कालः तस्य वेगेन निष्कृतं=अपरिहृतं, वीर्यं=सामर्थ्यं पुंसः= पुंमात्रस्य न। द्वितीयः=भगवतोऽन्यः गुणसङ्गवर्जितः= गुणत्रयनिमित्तककामक्रोधलोभमोहादिदोषसङ्गवर्जितो नहि। इमौ दोषौ सकलचेतनावशेषितत्वात् शीलमङ्गलं = परोपकार दयालुत्वादिशीलं, दम्पत्योर्वैधव्यवैधुर्याद्यमङ्गलहेतुत्वान्मङ्गलं च नहि। क्वचित्=कामादौ तच्छीलं मङ्गलमस्ति पुत्रपौत्रादिवृद्धिहेतुत्वात्। आयुषः वेद्यं जातकादिना वेदनयोग्यं स्वरूपं न। इतरदेवेषु जीवत्स्वेवास्य शिवेन भस्मीकृतत्वात्। यतः=यत्र कुत्रचिच्चन्द्रादौ अभयं=घर्मश्रमादिहरणमस्ति, आह्लादहेतुत्वात्। सोऽप्यमङ्गलः = स्वोच्चबृहस्पतिदारधर्षणान्मङ्गलशून्यः। कश्चन = इन्द्रः सुमङ्गलो भवति। शतक्रतुत्वेन विधूतसकलपापत्वात् ''इन्द्रो वृत्रं हत्वा महानभवत्'' इति हि श्रुतिः। सोऽपि मां काङ्क्षते, ऐश्वर्याभिवृद्ध्यर्थम्। ब्रह्मादीनां सर्वेषां स्वसन्तानत्वात्, विष्णुभक्तत्वाच्च तेषु वात्सल्यवती तत्तद्दोषोद्घाटनसमये विशिष्य न तन्नाम जग्राह इति ज्ञातव्यम्। एवमुक्तप्रकारेण रमा सर्वान् देवान् विमृश्य एकैकगुणवत्त्वेऽपि गुणान्तररहितवान् इतरसाधारणगुणवतश्च विचार्य अव्यभिचारिसद्गुणं प्रमेयत्वस्येव विवक्षितस्थलादन्यत्रापि वृत्तिरेको व्यभिचारः। कृतकत्वं नित्यत्वं विनेव गुणान्तरं विहाय गुणान्तरस्याप्यवस्थितिरपरो व्यभिचारः। तदुभयव्यभिचाररहिता इतरसाधारण्येनावर्तमानाः सकलशुभगणैः सहैव वर्तमानाश्च सद्गुणा यस्य तं, अव्यभिचारिसद्गुणम्। एवमुक्तप्रकारेण भगवद्व्यतिरिक्तं लोके काप्यविद्यमानं विमृश्य निजैकाश्रयिसद्गुणाश्रयं निजैकाश्रयिणः =इतरसाधारण्यं विना

**निगमोऽस्ति ते मतिमतोऽतिमतो निखिलेश्वरत्वसमयेऽसमये।**
**तमपि त्यजन्त्यसुभृतः सुभृतः स्वनयः कुतोऽक्षरहितैरहितैः ॥३०॥**

**व्या :** निगम इति। हे **असम** असदृश श्रीकृष्ण **ते** तव **निखिलेश्वरत्वसमये** निरवधिकसर्वोत्तमत्वसिद्धान्ते **मतिमतः** बुद्धिमतः पुरुषस्य **अतिमतः** अतिशयेन संमतः निगमः साक्षात्सर्वोत्तमताप्रतिपादकः "एष सर्वेश्वरः"[1]। "न ते विष्णो जायमानः"[2]। "न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः"[3] इत्यादिको वेदोऽस्ति। ये **असुभृतः** पुरुषाः **तं** प्रसिद्धं वेदमपि अतत्त्वावेदकत्वोक्त्या **त्यजन्ति** उपेक्षन्ते। **अक्षरहितैः** चक्षुर्हीनैः अन्धैः तैः अस्मन्मतवैरिभिरित्यर्थः। **स्वनयः** अद्वैतादिरूपः स्वसिद्धान्तः **कुतः** प्रमाणात् **सुभृतः** सुष्ठु धृतः वेदत्वाविशेषादस्मदीयवेदवत् स्वाभिमतवेदस्यापि त्यागसम्भवेन स्वमतेऽपि प्रमाणाभावादिति भावः। अत एव स्वव्याघातमपश्यन्तः **अक्षरहिता** इत्युक्तम् ॥३०॥

---

केवलं स्वस्मिन्नेव विद्यमानाः सद्गुणाः सर्वेश्वरत्वसर्वकर्तृत्वस्वतन्त्रत्वनिरवधिकसर्वज्ञत्वपूर्वा गुणाः तेषामाश्रयम्। ते च एकेनापि शुभगुणेन व्यभिचारवन्तो न किन्तु सर्वगुणैरपेक्षितम्। भगवद्गुणानां चेतनत्वात् भगवानेवास्माकमाधारो भवेत्, न त्वन्य इत्यपेक्षितम्। पदं = पद्यत इति व्युत्पत्त्या उक्तद्विविधगुणवत्तया वेदप्रतिपाद्यं मुकुन्दमेव अव्यभिचारिसद्गुणं= उक्तव्यभिचारद्वयरहितसद्गुणवन्तं विमृश्य=निश्चित्य, निरपेक्षं = स्वस्मिन्नप्यपेक्षारहितं ईप्सितं = सर्वैरप्यपेक्षितं तमेव वरं वव्रे इति योजना। तत्र "त्वं न्यस्तदण्डमुनिभिः" इत्येकं पद्यं प्रणयकलहसमये रुग्मिणीवाक्यम्। "नूनं तपः" इत्यादि पदानि स्वयंवरस्थललक्ष्मीवाक्यानि। तत्राद्यपद्येश्वनाशस्वैश्वर्यनाशाख्यदोषद्वयेन स्वनीचत्वस्य रुग्मिणीरूपश्रियैव कथनात्। उत्तरपद्येषु तु ब्रह्मादिसकलदेवानामपि विविच्य कामक्रोधादिदोषग्रस्तत्वेन भगवत्सकाशात्, नीचत्वस्य मूलरूपश्रियैव कथनाच्च "यद्धि मनसा ध्यायति तद्वाचा वदति" इति प्रमितत्वात् सा इदं जगत् ते अनुमनुत इति गोपीभिरुक्तं युक्तमिति स्थितम्। -उपन्यासरत्नमाला

१ गीता (११/४३)

२ ऋग्वेदे (७/९९/२)

३ गीता (११/४३)

**अनृतं जगत् कलयतेऽलय ते यदि कोऽपि मानसहितं स हितम् ।**
**रुचिरं कथं निजनयेजनयेन्न हि रज्ज्वहेः क्षतिरभूतिरभूत् ॥३१॥**

**व्या :** ननु ब्रह्मव्यतिरिक्तस्य सर्वस्य मिथ्यात्वाद्भवदुक्तभेदादिप्रमेयं तत्प्रतिपादकं वेदादिप्रमाणं वा किमपि नास्तीत्यत उक्तमेव प्रमेयमुपपादयन्ति । **अनृतमिति** । हे अलय नाशरहित श्रीकृष्ण यः **कोऽपि** वादी **मानेन** प्रमाणेन **सहितं ते जगत्** त्वदधीनं विश्वम् अनृतं मिथ्याभूतं **कलयते** मनुते । स वादी **निजनये** स्वसिद्धान्ते हितमिष्टं ऐक्यादिकं **रुचिरं** मनोहरं पराङ्गीकारार्हमित्यर्थः । **कथं जनयेत्** । प्रमाणाभावेन परबोधनासम्भवात् मिथ्याभूतप्रमाणेन बोधयामीत्यतस्तस्य स्वरूपत एवाभावात् न साधकत्वं सम्भवतीत्याहुः । **नहीति** । रज्वहेः रज्जौ आरोपितसर्पात् **अभूतिः** मरणहेतुत्वादमङ्गला **क्षतिः** क्षतं **नाभूत् हि** । यदि मिथ्याभूतमप्यर्थं साधयेत् तर्हि रज्जुसर्पादपि दंशनं स्यादिति भावः । अतो ज्ञायते न मिथ्याभूतमर्थसाधकमिति । नच प्रातिभासिकत्वमेव तत्रासाधकत्वे तन्त्रमिति वाच्यम् । प्रातिभासिके असति च असाधकत्वप्रयोजकतया प्रसिद्धस्य स्वरूपाभावस्यैवासाधकत्वप्रयोजकताया वक्तव्यत्वात् । उभयोः प्रयोजकत्वे गौरवात् । इदमपि प्रसिद्धिद्योतकेन हिशब्देन सूचितम् ॥ ३१ ॥

**भयहेतुताऽस्य न च कम्पकतोभयहेतुताऽस्य चित एव परम् ।**
**न हि चिद्गतेऽर्थमहिमा निशितानहिचिद्गतेऽर्थ इह राति हि तान् ।३२।**

**व्या :** भयकम्पादिहेतुत्वं रज्जुसर्पस्यास्तीत्यत आहुः । **भयेति** । **अस्य** रज्जुसर्पस्य **न** केवलं दंशनहेतुत्वाभावः **भयहेतुता** भयजनकत्वं कम्पकस्य भावः **कम्पकता** कम्पजनकत्वमित्यर्थः । **न** नास्ति । तर्हि कुतो भयाद्युत्पत्तिरित्यत आहुः । अस्य रज्जुसर्पस्य **चित एव** ज्ञानस्यैव भयहेतुता भयकम्पहेतुत्वम् । कुत इत्यतः तयोर्ज्ञानकार्यत्वे अन्वयव्यतिरेकौ दर्शयन्ति । नहीति । **निशि** रात्रौ **चित्** ज्ञानं गता यस्मात् स **चिद्गतः** सुप्त इत्यर्थः । तस्मिन् पुरुषे **अर्थमहिमा** सर्परूपार्थस्य

सामर्थ्यं सुप्तस्योपरि सर्पोपसर्पणेऽपीति भावः । **तान्** उभयान् भयकम्पाख्यान् **न राति** न प्रदिशति हि । अनेन सत्यप्यर्थे ज्ञानाभावान्न भयकम्पादीति व्यतिरेको दर्शितः । इह रज्जुसर्पस्थले अर्थे गतेऽपि सर्परूपार्थाभावेऽपीत्यर्थः । [1]अहिचित् सर्पज्ञानम् अयं सर्प इति भ्रममात्रमित्यर्थः । **तान्** उभयान् भयादीन् **राति हि** दिशति हि । अनेनार्थाभावेऽपि ज्ञाने सति भयकम्पादिकमित्यन्वयो दर्शितः । अर्थस्य पूर्वपादे अन्वयतो व्यभिचारः । उत्तरपादे व्यतिरेकतो व्यभिचारश्चाहेतुतासमर्थनाय निरूपितो भवति । अत एव तत्रार्थमहिमा अत्र तु गतेऽर्थ इत्युक्तम्।। ३२ ।।

**यदि भेदशून्यमखिलं मखिलङ्घ्यसुरार्दिता सुरसभाऽऽर सभा ।**
**तव धाम किं मुररिपोऽररिपो स्तुतिरप्युदारचरिताचरिता ।।३३।।**

**व्या :** इदानीं दशमस्कन्धोक्तप्रमेयेनैवाभेदं दूषयन्ति । यदीति । हे **अररिपो** दोषशत्रो **उदारचरित** उत्कृष्टचरित्र **मुररिपो** श्रीकृष्ण **यदि अखिलं** समस्तं जगत् **भेदशून्यं** भेदरहितं तर्हि मखिनः याज्ञिकान् लङ्घयन्तीति **मखिलङ्घिनः** ते च ते असुराश्च तैरर्दिता पीडिता **सभा** भासा कान्त्या सहिता **सुराणां** ब्रह्मरुद्रादीनां **सभा तव धाम** मन्दिरं क्षीरसमुद्रं **किं** किमर्थम् **आर** प्राप। काकतालीयं गमनमित्यत आहुः । **स्तुतिरपि** पुंसूक्तेन स्तोत्रमपि **किं** किमर्थमा**चरिता** कृता। अनेन भेदे गम्यगन्तृभावस्तोतृस्तुत्यभावसम-र्थासमर्थभावरूपाः विरुद्धधर्माः स्मार्ताः कथिता भवन्ति । ''जगाम सत्रिनयनः तीरं क्षीरपयोनिधेः''[2] इत्यादेः ।। ३३ ।।

**अमितोरुविक्रम तवामतवागभिदां वदन् खरमते रमते ।**
**क्व विरुद्धधर्मजलधीजडधीकलिताभिदा क्व निजयोनिजयोः।।३४।।**

---

१ सर्पभ्रमादावपि हि ज्ञानमस्त्येव तादृशम् । - इति अनुवाख्याने ।

२ भागवते १०/१/१९

**व्या :** उपपादिताभेदनिरासमुपसंहरन्ति । **अमितेति** । **अमिता** अपरिमिताः **उरवः** श्रेष्ठाः **विक्रमाः** पराक्रमा यस्य तस्य सम्बुद्धिः । श्रीकृष्ण तवाभिदामैक्यं वदन् **अमतवाक्** श्रुत्याद्यसम्मतवचनः । वादी **खरमते** [1]रासभसिद्धान्ते **रमते** ऐक्यवादी खर इत्यर्थः । [2]**विरुद्धधर्मैः** पूर्वोक्तैः **जलधी** इव समुद्राविव विद्यमानौ जीवपरमौ **क** पूर्णत्वापूर्णत्वोपजीव्यत्वोपजीवकत्वबद्धत्वमुक्तत्वाद्यनन्त**विरुद्ध-धर्म**सङ्ग्रहाय **जलधि**पदम् । निजश्च योनिजश्च **निजयोनिजौ** तयोरुत्पन्नानुत्पन्न-योरित्यर्थः । प्रलयकालेऽप्शायिनः श्रीनारायणस्य सृष्टिकालमात्रवर्तिनो जीवस्य च निजयोनिजत्वाख्यविरुद्धधर्मावपि बोधयितुमिदं विशेषणम् । जीवपरमयोः जलानां जडानां मूर्खाणामित्यर्थः । धिया बुद्ध्या **कलिता** निरूपिता जडैः स्वकपोलकल्पितेत्यर्थः । डलयोरभेदान्न यमकभङ्गः । **अभिदा** अभेदः **क** अभेदस्त्वत्यन्तासम्भवीति भावः ॥ ३४ ॥

**स्मृतिभारताव्रणपुराणपुरातनवेदशास्त्रविभवं विभवम् ।**
**परमं च मानसमयैः समयैरनृतं वदन्न सुसभासु सभाः ॥३५॥**

---

१ अल्पशक्तिरसार्वज्ञं पारतन्त्र्यमपूर्णता ।
उपजीवकत्वं जीवत्वमीशत्वं तद्विपर्ययः ।
स्वाभाविकं तयोरेतन्नान्यथा स्यात् कथञ्चन ।
वदन्ति शाश्वतावेतावत एव महाजनाः ॥ इति महाविष्णुपुराणे ।
- गीतातात्पर्ये (२/२१)

यतः स्वरूपतश्चान्यो जातितः श्रुतितोऽर्थतः ।
कथमस्मि स इत्येव सम्बन्धः स्यादसंहितः ॥ (भारते-मोक्षधर्मपर्वणि २१८/३५)
अल्पसम्पूर्णशक्तित्वात् अल्पपूर्णगुणत्वतः ।
अल्पसम्पूर्णदर्शित्वान्न साम्यं जीवकृष्णयोः॥ इति ब्रह्माण्डे ।
- (भा.ता.१०/७५/४२)

२ नैवैक एव पुरुषः पुरुषोत्तमोऽसावेकः कुतः स पुरुषो यत एव जात्या ।
अर्थाच्छ्रुतेश्च गुणतो निजरूपतश्च नित्यान्य एव कथमस्मि स इत्यपि स्यात् ॥
- म. भा. ता. नि (१/२८)

**व्या :** इदानीं पूर्वोक्तमिथ्यात्वनिराकरणमुपसंहरन्ति । **स्मृतीति** । **स्मृतयश्च भारतं** च न विद्यन्ते व्रणानि येषां तानि **अव्रणानि** [१]निर्दोषाणि यानि **पुराणानि** च सात्विकपुराणानीत्यर्थः । **पुरातनः** अपौरुषेयो **वेदश्च शास्त्रं** च ब्रह्ममीमांसा च तेषां **विभवं** सम्पदम् । विगतः भवः संसारो यस्मात् स विभवः अविद्याबन्धरहित इत्यर्थः । तम् । **परमं** श्रीनारायणं **च मानसमयैर्मा**नसविकारैः स्वमनोविकार मात्रकृतैरित्यर्थः । **समयैः** सिद्धान्तैः **अनृतं** मिथ्याभूतं **वदन्** मायी **सुसभासु** शोभनसभासु श्रोत्रियसभास्वित्यर्थः । **सभाः** भासा सहितो न न भवति । एतादृशवादिनं [२]बौद्ध इति श्रोत्रियाः तिरस्कुर्वन्तीति भावः ॥ ३५ ॥

**फणिराजगर्वशमनः शमनःक्षयकारकः स कुरुतात् कुरुतात् ।**
**चकितात्मनामिह वने हवने विनुतः कृपावसुहृदां सुहृदाम् ॥३६॥**

**व्या :** फणिराजेति । फणिराजः कालियः तस्य गर्वं शमयतीति **फणिराज-गर्वशमनः** । **अनसः** शकटासुरस्य **क्षयं** करोतीति स तथोक्तः । **हवने** यज्ञे **विनुतः** स्तुतः **स** श्रीकृष्णः **इह वने कुरुतात्** कुत्सितघूकसिंहादिरवात् । 'तिरश्चां वासितं रुतम्' इत्यमरः । **चकितात्मनां** भीतमनसां **कृपैव वसु** द्रव्यं तस्मिन् हृत् हृदयं यासां तासां **सुहृदां** बन्धूनां अस्माकं **शं** सुखं **कुरुतात्** करोतु ॥ ३६ ॥

**मुखसारसं च सुरसं सुरसंस्तुतचारुभावयुगलं युगलम् ।**
**नयनाब्जयोरज मनोजमनोजयि सुस्मितं हृदयतेऽदय ते ॥३७॥**

**व्या : मुखसारसमिति** । **अज** जननरहित **अदय** दयारहितेत्याक्रोशेन सम्बुद्धिः । हे श्रीकृष्ण **नः** अस्माकं हृन्मनः । **सुरसं** लावण्यरसभरितं **ते** तव **मुखसारसं**

१ न चैतेषां वचनानामेवाप्रामाण्यम् । अपौरुषेयत्वाद्वेदस्य । 'इतिहासपुराणः पञ्चमो वेदानां वेदः' इति तद्गृहीतत्वाच्च । - विष्णुतत्त्वविनिर्णये

२ असत्पदेऽसन् सदसद्विविक्तं मायाख्यया संवृतिमभ्यधत्त ।
ब्रह्माप्यखण्डं बत शून्यसिद्धै प्रच्छन्नबौद्धोऽयमतः प्रसिद्धः ॥
- मध्वविजये (१/५१)

मुखारविन्दम् **अलम्** अत्यर्थं **सुरैः** संस्तुतः **चारुभावः** मनोहरत्वं तेन युज्यत इति युक्। **नयनाब्जयोः युगलं** युग्मं **मनोजस्य** कामस्य **मनः** चित्तं जयतीति **मनोजमनोजयि**। तत् सुस्मितं च अयते गच्छति स्मरतीत्यर्थः ॥ ३७ ॥

**गोपीनां परितापमित्युडुपतिः कृष्णाय शंसन्निव**
**प्रापाब्ध्यन्तिकमच्युतेन्दुरुदितस्तत्पुण्यपुञ्जाचलात्।**
**वक्षोजाख्यगिरिं करैः परिमृजन् नेत्रोत्पलं हर्षयन्**
**हृव्योमाप्यनुरञ्जयन् विरचयन् वृद्धिं प्रमोदाम्बुधेः ॥३८॥**

**व्या :** गोपीनामिति। **उडुपतिः** श्चन्द्रः इत्यनेन प्रकारेण **गोपीनां** गोपस्त्रीणां **परितापं** श्रीकृष्णविरहजन्यं सन्तापं **श्रीकृष्णाय शंसन्निव** कथयन्निव **अब्धेः** श्रीकृष्णनिवासभूतसमुद्रस्य **अन्तिकं** समीपं **प्राप**। चन्द्रः प्रतीच्यां दिशि गत इत्यर्थः। एतस्य चन्द्रस्यापसरणे सति गोपीनां **वक्षोजाख्यगिरिं** स्तनाख्यपर्वतं **करैर्हस्तैः परिमृजन्** संस्पृशन् चन्द्रोऽप्युदयकाले पर्वताग्रे करान् प्रसारयति। एवमुत्तरत्रापि द्रष्टव्यम्। **नेत्रोत्पलं** तासां नयनेन्दीवरं **हर्षयन्** सन्तोषयन् **हृव्योम** तासां हृदयाकाशमपि **अनुरञ्जयन्** रागयुक्तं कुर्वन्। चन्द्रपक्षे। रागो रक्तिमा **प्रमोदाम्बुधेः** तासां सन्तोषसमुद्रस्य **वृद्धिमभिवृद्धिं विरचयन्** [१]**अच्युतेन्दुः** श्रीकृष्णाख्यचन्द्रः तासां **पुण्यपुञ्जः** पुण्यसमूहः स एवाचलः पर्वतस्तस्मादुदितः दर्शनसमय एव विलासं कुर्वन् तासां पुण्यवशादागत इत्यर्थः। एकपक्षेऽपि कलाच्युतिराहित्यसूचनायाच्युतपदम्। विनिमयालङ्कारः। स च रूपकेण गर्भितः ॥ ३८ ॥

**काचिन्मुकुन्दमुखसारससौरभाढ्यं ताम्बूलचर्वितमभक्षयदम्बुजाक्षी।**
**अन्तर्निलीनमदनायुधजातघातशान्तिं विधातुमिव सञ्चितपुण्यशेषा ॥३९॥**

---

१ जयत्यजोऽक्षीणसुखात्मबिम्बः स्वैश्वर्यकान्तिप्रततः सदोदितः।
स्वभक्तसन्तापदुरिष्टहन्ता रामावतारो हरिरीशचन्द्रमाः ॥
- म.भा.ता.नि. (३/२)

**व्या : काचिदिति । सञ्चितस्यार्जितस्य पुण्यस्य शेषो** यस्याः सा अम्बुजवदक्षिणी यस्याः सा हर्षोद्रेकेण विकसितनयनेत्यर्थः । **काचित्** गोपी **अन्तः** हृदि **निलीनः गूढः मदनस्तस्यायुधैः** शरैर्जातः **घातः** क्षतं तस्य **शान्तिं** परिहारं **विधातुमिव** । मुखस्थवीटिकया आयुधघातशान्तिर्भवतीति प्रसिद्धिः। **मुकुन्दस्य** श्रीकृष्णस्य **मुखसारसं** मुखारविन्दं तस्य **सौरभेण** परिमलेनाढ्यं सम्पन्नं [१]**ताम्बूलचर्वितं** चित्तस्थव्रणपरिहाराय ताम्बूलचर्वितस्यान्तःप्रवेशनमेव न्याय्यमिति मन्वानेवाभक्षयत् । [२]श्रीकृष्णोच्छिष्टवीटिकाभक्षणेनैव विरहजन्य-मदनवेदना परिहृतेत्यतः श्रीकृष्णस्य सौन्दर्यं किं वर्णनीयमिति भावः ॥३९॥

**अन्या तदंसपरिलम्बितपाणिपद्मा धन्या स्फुरन्मकरकुण्डलशोभिगण्डम् ।**
**प्रेष्ठान्तराङ्कुरितरासविलासतृष्णापुष्टिप्रदेव मृदु हृष्टमुखी चुचुम्बे ॥४०॥**

**व्या : अन्येति** । तस्य श्रीकृष्णस्यांसे बाहुमूले **परिलम्बितं पाणिपद्मं** करसरोजं यस्याः सा अत एव **धन्या** पुण्यवती **हृष्टं** हर्षयुक्तं **मुखं** यस्याः सा अपरा गोपी **प्रेष्ठस्य** प्रियस्य श्रीकृष्णस्यान्तरे हृदि **अङ्कुरिता** ईषदुत्पन्ना रासविलासस्य रासक्रीडायाः **तृष्णा** आकांक्षा तस्याः **पुष्टिमभिवृद्धिं प्रददाति** तथोक्ता सेव । परस्परमंसालम्बितपाणिपद्मयोः स्त्रीपुंसयोः चुम्बनादिविलासः रासविलासः अनयाऽपि तथैव चुम्बनात् ज्ञातास्वादस्य श्रीकृष्णस्य तत्र तृष्णाऽभिवर्धिष्यत इति बुद्ध्यैवेति भावः । **स्फुरती** लसती **मकरकुण्डले** ताभ्यां **शोभिगण्डः** तं **मृदु** यथा भवाति तथा **चुचुम्बे** ॥ ४० ॥

**काचिच्च दष्टमृदुलोष्ठपुटी मुकुन्दं तन्वी ततान तरलात्मकटाक्षलक्ष्यम् ।**
**भ्रूसञ्ज्ञयैव रमणं प्रति दर्शयन्ती बिम्बोष्ठचुम्बनरुचिं रुचिरालकास्यम् ॥**

---

१ 'ताम्बूलं च मुकुन्दचर्वितलसत्ताम्बूलसिद्ध्यै' (५/४६) इत्युक्तमत्राप्यनुसन्धेयम् ।

२ त्वयोपभुक्तस्रग्गन्धवासोलङ्कारचर्चिताः ।
उच्छिष्टभोजिनो दासास्तव मायां जयेमहि ॥ - भागवते (११/६/४६)

**व्या : काचिदिति।** काचिच्च तन्वी गोपी रुचिराः अलकाः चूर्णकुन्तलाः यस्य तत् **रुचिरालकम् आस्यं** मुखं यस्य सः तं **रमणं** श्रीकृष्णं **प्रति** [1]**बिम्बोष्ठस्य चुम्बनस्य रुचिमभिरुचिं भ्रूसञ्ज्ञया दर्शयन्तीव दष्टं मृदुलं** पेशलम् **ओष्ठस्य पुटं** यस्याः सा तथा सती तं **मुकुन्दं** तरलस्य चञ्चलस्यात्मकटाक्षस्य स्वकीयापाङ्गदर्शनस्य लक्ष्यं **ततान** चकार । अनेन च हार्दी प्रीतिरेवास्या दर्शिता॥ ४१ ॥

**न स्वैरिणीति नयकोविद मय्युपेक्षा युक्ता तवेति तमिव प्रतिबोधयन्ती।**
**पस्पर्श पाणिकमलं सुखजाश्रुधारा हस्तेन हर्षकरकङ्कणसुस्वनेन ॥४२॥**

**व्या : न स्वैरिणीति ।** काचिद्गोपी **नये** नीतौ **कोविद** कुशल हे श्रीकृष्ण अहं स्वैरिणी व्यभिचारिणीति कृत्वा मयि तवोपेक्षा न युक्तेति तं श्रीकृष्णं **प्रति बोधयन्तीव** विज्ञापयन्तीव सुखात् आनन्दात् जातानि उत्पन्नानि अश्रूणि तेषां धारा यस्याः सा **सुखजाश्रुधारा** सती। अनेन कन्यादानधारोदकं सम्पादितम्। हर्षं कुर्वन्तीति **हर्षकराः कङ्कणानां** करभूषणानां **सुस्वना** यस्य सः । **अनेन** विवाहोचिततूर्यस्वनश्च सम्पादितः । तेन **हस्तेन** स्वहस्तेन **पाणिकमलं** श्रीकृष्णस्य पाणिपद्मं **पस्पर्श** किल । जग्राह किल । किलेत्यनेन पौराणिकी प्रसिद्धिः[2] सूचिता। अनेन भार्यात्वोचितपाणिग्रहणं सूचितम्॥ ४२ ॥

**रत्युत्सवार्हतनुमन्दिरसङ्गितुङ्गवक्षोजसत्कलशमण्डनधीरिवान्या।**
**संयोज्य तच्चरणपल्लवमाशु मारधिकारचिह्नमखनद्ध्वजमुत्पताकम् ॥४३॥**

**व्या : रतीति ।** अन्या गोपी **रत्युत्सवार्हं** सुरतोत्सवयोग्यं **तनुमन्दिरं** स्वशरीराख्यगृहं तत्र **सङ्गिनौ** सम्बन्धवन्तौ **तुङ्गौ** उच्चौ **वक्षोजौ** कुचौ तावेव

---

१ 'पयस्तद्बिम्बोष्ठसुधाप्तये' (५/४६)

२ तत्रैकांसगतं बाहुं कृष्णस्योत्पलसौरभम्।
चन्दनालिप्तमाघ्राय हृष्टरोमा चुचुम्ब ह॥ -भागवते १०/३१/१३

**सत्कलशौ** शोभनपूर्णकुम्भौ । यथा क्रीडागृहं पूर्णकुम्भादिना अलङ्कुर्वन्ति तद्व-च्छ्रीकृष्णसम्भोगगृहस्थानीयस्य स्वशरीरस्य स्तनावेव पूर्णकुम्भाविति भावः । तयोर्मण्डनं विकसितपल्लवैरलङ्कारः तस्मिन् धीः बुधिर्यस्याः सेव अलङ्कर्तुकामेवेत्यर्थः । **तच्चरणपल्लवं** श्रीकृष्णपादपल्लवं **संयोज्य** स्वकुचे स्थापयित्वा **आशु** शीघ्रं **मारस्य** कामस्य **धिक्कारः** पराभावः तस्य **चिह्नम् उत्पताकम्** उच्छ्रितः **पताकः** ध्वजपटो यस्य तं **ध्वजं अखनत्** स्थापितवती। श्रीकृष्णपादसम्बन्धमात्रेण कामशान्तौ स्वकुचकुम्भोपरिदृश्यमानतत्पादस्थ-पताकध्वजरेखया कामजयसूचकध्वजं निचखानेति भावः । पल्लवैः कुचकुम्भा-लङ्करणाय पादपल्लवं निक्षिपन्त्याः ध्वजादिविजयचिह्नप्राप्त्युक्त्या हरिकिङ्करा-णामेकोद्देशेन प्रवृत्तावनुद्दिष्टप्रयोजनान्तरं सिद्ध्यतीति द्योतितम् ।। ४३ ।।

**अन्या च तं हृदि निधाय निमीलिताक्षी**
**धन्या प्रियं पुलकशोभितसर्वगात्री ।**
**सर्वाभिराभिरनुभूतमभुङ्क्त भोगं**
**किं नाम नास्ति मुनिमार्गजुषां हि लोके ।। ४४ ।।**

**व्या :** अन्या चेति । **पुलकैः** रोमाञ्चैः **शोभितानि गात्राणि** अवयवाः यस्याः सा **धन्या** कृतार्था **अन्या च** काचित् **तं** श्रीकृष्णं **हृदि निधाय** ध्यात्वा **निमीलिताक्षी** मुकुलिताक्षी सती **आभिः** पूर्वोक्ताभिः **सर्वाभिः** गोपीभिः **अनुभूतं भोगं** वीटिका-भक्षणकण्ठालिङ्गनचुम्बनपाणिस्पर्शादिकम् **अभुङ्क्त** अनुभूतवती । तथाहि। **लोके मुनिमार्गजुषाम्** ऋषिमार्गसेविनां **किंनाम** फलं **नास्ति** । सर्वफलमस्त्येवेत्यर्थः । ध्यानधारणादेर्मुनिमार्गत्वादिति भावः । अनेन सङ्कल्पावस्था दर्शिता । ''मनोरथैः प्रियावाप्तिः सङ्कल्पः'' इत्युक्तत्वात् ।।४४।।

**नयनैर्दधुर्मुखविधुं खविधुं विहसन्तमस्य चरणे च रणे ।**
**जयदायिनि स्तनयुगेन युगे क्षणतां शमावधिगतेऽधिगते ।।४५।।**

**व्या : नयनैरिति** । गोप्यः खे गगने विधुश्चन्द्रः तं **विहसन्तं** विशेषेण परिहसन्तं ततोऽप्यधिककान्तिमिति यावत् । **अस्य** श्रीकृष्णस्य **मुखविधुं** मुखचन्द्रं **नयनैः** स्वनेत्रैः **दधुः** धृतवत्यः । सोत्कण्ठमीक्षितवत्य इत्यर्थः । अनेन चक्षुःप्रीत्यवस्था दर्शिता । **रणे** युद्धे **जयदायिनि** जयप्रदे स्मरतामिति शेषः । अस्य श्रीकृष्णस्य **चरणे** पादौ । 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमरः । **स्तनयुगेन** कुचयुग्मेन दधुः । **शमस्य** स्वगर्वशमनस्य **अवधिं** पर्यन्तं **गते** स्वगर्वविनाशपर्यन्तम् अदर्शनं गत इत्यर्थः । श्रीकृष्णे **अधिगते** सति दृष्टे सति **युगे** युगपरिमितकाले **क्षणताम्** अल्पकालतां दधुः । प्रियागमसन्तोषेण महानपि [1]कालोऽल्प इवाभवदिति भावः ॥ ४५ ॥

**स्वानन्दं प्रकटीचकार सुखदं सायुज्यमालिङ्ग्य ताः**
**साधर्म्यं स्वकृतानुलेपतिलकैर्मोक्षं हृदिस्थावृतेः ।**
**ताभिः सस्मितमीक्षितो यदुपतिः सारूप्यसार्ष्टी दिशन्**
**रासाख्यं च तथोत्सवं नहि कथा व्यर्था परब्रह्मणः ॥४६॥**

**व्या : स्वानन्दमिति** । ताभिः गोपीभिः सस्मितं स्मितेन सहितं यथा भवति तथा ईक्षितः दृष्टः श्रवणजन्यापरोक्ष इति ध्वनिः । यदुपतिः श्रीकृष्णः हृदिस्थायाः आवृतेराच्छादनस्य कुचाच्छादनवस्त्रस्येत्यर्थः । हृन्निष्ठप्रकृतिरूपाच्छादनस्येति ध्वनिः । **मोक्षम्** अपसरणं **प्रकटीचकार** । **स्वानन्दं** स्वविलासजनितसुखम् । स्वरूपं सुखमिति ध्वनिः । प्रकटीचकारेत्यस्य सर्वत्रान्वयः । **ताः** गोपीः **आलिङ्ग्य सुखदं सायुज्यं** दृढसंयोगम् । सायुज्याख्यमोक्षमिति ध्वनिः । **स्वेन कृतः** गाढालिङ्गनवशाद्गोपीषु **कृतः अनुलेपाः** अङ्गालङ्कारभूतचन्दनानुलेपनानि । **तिलकाः** ललाटालङ्कारभूतकस्तूरीतिलकाश्च तैः **साधर्म्यं**

---

१ अहस्तु मासशब्दोक्तं यत्र चिन्तायुतं व्रजेत् ।
एवं संवत्सरभाद्यं च विपरीते विपर्ययः' इति नाममहोदधौ ॥
- इति भागवततात्पर्ये (४/१३/२)

समानधर्मत्वम् । श्रीकृष्णाङ्गानुलेपनतिलकवत् गाढालिङ्गने सति तासामप्यङ्गानुलेपनतिलकानां जातत्वादिति भावः । **साधर्म्यं** मोक्षमिति ध्वनिः । सारूप्यसार्ष्टी समानरूपत्वं सारूप्यम् । ''कृत्वा तावन्तमात्मानं यावतीर्गोपयोषितः''[१] इति वचनादिति भावः । सारूप्यमोक्षमिति ध्वनिः। अन्योन्यकण्ठालम्बितपाणितया खेलनं सार्ष्टिः । **सार्ष्टि**नामकमोक्षमिति ध्वनिः । ते उभे **दिशन्** प्रदिशन् तथा रासाख्यमुत्सवम् च प्रकटीचकारेति पूर्वेणान्वयः । तद्युक्तमित्याह । **नहीति**। **परब्रह्मणः** श्रीकृष्णस्य **कथा व्यर्था नहि** । यथा परब्रह्मकथाश्रवणादिना अपरोक्षज्ञानं तज्जन्यमोक्षावस्थाविशेषश्च भवति । तथा श्रीकृष्णस्यापि परब्रह्मस्वरूपत्वाद्रमणाशया गोपीभिः कृताऽपि तत्कथा मोक्षसदृशविलासानेव तत्फलतया ददाविति । परब्रह्माख्यवस्तुस्वभावोऽपि दर्शितः । यद्यपि **साधर्म्यं** [२]**सारूप्यं** चान्येषामेकमेव तथापि गोपीनां मुक्तावपि एवमेव रासक्रीडादिविलासम्भवात् समसङ्ख्यरूपत्वाख्यसारूप्यमन्यदेवेति द्रष्टव्यम् ।। ४६ ।।

**रम्यस्थलीं रासमहाय शौरिरागादसौ सारजनीहिताय ।**
**आसामभूदीप्सितदातरीशे रागादसौ सा रजनी हिताय ।।४७।।**

**व्या : रम्यस्थलीमिति** । **असौ शौरिः** श्रीकृष्णः **सारा** श्रेष्ठा जनिरुत्पत्तिर्यासां तासां गोपीनामी**हिताय** इष्टाय **रासमहाय** रासाख्योत्सवाय **रम्यां** समायतां **स्थलीम् अगात्** अगमत् । **आसां** गोपीनामीप्सितदातरि **ईशे** श्रीकृष्णे **रागात्** स्नेहात् **सा रजनी** रात्रिः **असुः** प्राणः तस्मिन् विषये **हिताया**नुक्रमणरूपहिताय

---

१ भागवते १०/३३/१०

२ आनन्द एव स भवत्यानन्दस्य सार्ष्टितां सलोकतां सायुज्यमाप्नोति' इति माध्यन्दिनायनश्रुतिः ।। - भा.ता. (१०/७२/४९)

चत्वारि तीर्थानि विधाय पाजके प्राबोधि तन्मोक्षचतुष्टयप्रदम् ।
रामेण नो सार्ष्टिदमित्यसौ मरुत् तीर्थं चकारेति ममावभासते ।।
-श्रीहृषीकेशतीर्थकृतसम्प्रदायपद्धतौ (६)

अभूत् । पूर्वं श्रीकृष्णवियोगे यस्यां रात्र्यां प्राणोऽप्यसह्य आसीत् । तदानीं तत्समागमे सह्य एवासीदिति भावः ।। ४७ ।।

**कण्ठाश्लेषकराग्रपातमधुरव्याहारमन्दस्मितै-**
**र्लोलापाङ्गनिरीक्षणेन मरुता गीतेन शीतांशुना ।**
**शृङ्गारं रसमुच्चकैः कुसुमिते वृन्दावने पोषयन्**
**गोपीमण्डलमण्डितं मधुपती रासोत्सवं निर्ममे ।। ४८ ।।**

**व्या :** कण्ठेति । **मधुपतिः** श्रीकृष्णः **कण्ठस्याश्लेषो** आलिङ्गनं **कराग्रस्य** नखस्य पातः प्रक्षेपः **मधुरः** मनोहरः **व्याहार** उक्तिः **मन्दस्मितं** मन्दहासः तैः **लोलापाङ्गनिरीक्षणेन** चञ्चलकटाक्षवीक्षणेन एतैरालम्बनविभावैः **मरुता** मन्दवायुना **गीतेन** सङ्गीतेन **शीतांशुना** चन्द्रेण एतैरुद्दीपनविभावैश्च **शृङ्गाररसं पोषयन्** पुष्टीकुर्वन् **उच्चकैः** सम्यक् **कुसुमिते** पुष्पिते **वृन्दावने** । अयमप्युद्दीपनविभावः । **गोपीनां मण्डलेन** समूहेन **मण्डितमलङ्कृतं रासोत्सवं** रससम्बन्धी रासः स चासौ उत्सवश्च तं शृङ्गाररसभरितोत्सवमित्यर्थः । **निर्ममे** कृतवान् ।। ४८ ।।

**प्रेष्ठस्यांसयुगं करैरुभयतः प्रेमोत्थरोमोद्गमैः**
**सुष्ठ्वालिङ्ग्य पुनः पलायनभियेवौत्सुक्यतो वीक्षताम् ।**
**सिद्धानां नयनैः समं समुदितं शृङ्गारसञ्ज्ञं रसं**
**मध्यस्थं मुमुचुर्मिथो धृतकरा गन्तुं बहिर्न क्वचित् ।। ४९ ।।**

**व्या :** प्रेष्ठस्येति । **प्रेम्णा** उत्सवेन स्नेहेनोत्थाः उत्पन्नाः **रोमोद्गमाः** रोमाञ्चाः येषां तैः **करैः** स्वहस्तैः **प्रेष्ठस्य** परमप्रियस्य श्रीकृष्णस्यांसयुगं **पुनः पलायनभियेवोभयतः** पार्श्वद्वये **सुष्ठु** दृढमालिङ्ग्य **औत्सक्यतः** कौतूहलात् **वीक्षतां** पश्यतां **सिद्धानां नयनैः समं** साकं **समुदितमुत्पन्नं मध्यस्थं**

मण्डलाकारेण स्थितानां स्वासां मध्ये स्थितं शृङ्गारसञ्ज्ञं **रसं मिथः** परस्परं **धृताः कराः** याभिस्ताः **बहिः क्वचिदपि गन्तुं न मुमुचुः**। यथा स्नेहास्पदं कान्तं **मिथः** गृहीतप्रसारितहस्ताः नायिकाः बहिर्निर्गन्तुं न मुञ्चन्ति। तद्वन्मध्यस्थरसिद्धनयनयोर्बहिर्गमननिरोधाय मिथः हस्तं जगृहुरिवेत्यर्थः। मनोहरस्त्रीपुरुषविलासैरुज्जृम्भितः शृङ्गाररसः रासमण्डलमध्य एव तिष्ठति सिद्धानां नयनानि च तदीक्षणोत्सुकानि तत्रैव तस्थुरिति भावः॥ ४९॥

**स नेष्यति [१]प्रागिव काञ्चिदासां मनोरमां शौरिरितीव भीत्या।**
**परस्पराबद्धमनोज्ञहस्ता विरेजुरिन्दीवरलोचनास्ताः॥ ५०॥**

**व्या :** स इति। इन्दिवरलोचनाः गोप्यः **सः शौरिः प्रागिव** पूर्ववत् आसाम् अस्माकं मध्ये **मनोरमां** काञ्चिन्नारीं **नेष्यतीति** भियेव **परस्पराबद्धमनोज्ञहस्ताः** सत्यः **विरेजुः**॥ ५०॥

**विष्वग्विसर्पिनयनाः परिमुच्यमान-**
**वक्षोजवस्त्रकबरीभरभव्यनीव्यः।**
**सिञ्जद्विभूषणगणा मिषतामलौल्यं**
**नाट्यच्छलेन चरणैः कणशो वितेनुः॥ ५१॥**

**व्या :** विष्वगिति। **विष्वक्** समन्तात् **विसर्पीणि** रसविशेषप्रदर्शनाय पतन्ति **नयनानि** यासां ताः **परिमुच्यमानं** विशथमानं **वक्षोजवस्त्रं** कुचवस्त्रं **कबरीभरः** केशपाशश्च **भव्या** शोभना नीवी च यासां ताः **सिञ्जन्** शब्दं कुर्वन् **विभूषणगणः** आभरणसमूहो यासां ताः। गोप्यः **नाट्यच्छलेन** नृत्यव्याजेन **मिषतां** पश्यतां सिद्धादीनाम् **अलौल्यम**चाञ्चल्यं धैर्यमित्यर्थः। **चरणैः कणशः**

---

१ कामिनीति जितापद्यां निनाय सुखयन् सुखी।
कामिनीतिजिता पद्यां काञ्चिदासाद्य सोज्झिता॥ इत्युक्तस्य विवररूपम् (७/५३)।

कणान् चूर्णमित्यर्थः । वितेनुः यथा किञ्चित् कठिनं वस्तु पादघातेन चूर्णयन्ति तद्वदिति भावः ॥ ५१ ॥

**कृष्णांसविन्यस्तकराब्जमालाहृष्टाः स्त्रियस्ता ननृतुः सलीलाः ।**
**आनन्दमूर्तिं परिरभ्य मर्त्यः को नाम नो नृत्यति सिद्धकृत्यः ॥५२॥**

**व्या :** कृष्णांसमिति । श्रीकृष्णस्यांसे विन्यस्ता निहिता कराब्जमाला यासां ताः हृष्टाः संहृष्टाः सलीलाः विलाससहिताः ताः स्त्रियः ननृतुः । तथाहि । आनन्दमूर्तिं परिरभ्य सिद्धकृत्यः कृतकृत्यः को नाम मर्त्यः मनुष्यः नो नृत्यति सर्वोऽपि नृत्यत्येवेत्यर्थः ॥ ५२ ॥

**आवद्ध्य मुक्तगणवल्लभकण्ठमेका बाला विमुक्तकबरीभरबन्धनाय ।**
**चक्रे न यत्नमलसा गुरुकार्यलाभे लघ्वर्थसाधनकृतिर्नहि दृष्टपूर्वा ॥५३॥**

**व्या :** आवद्ध्येति । एका बाला मुक्तानां गणस्य वल्लभः श्रीकृष्णस्तस्य कण्ठम् आवद्ध्य बाहुलतया बद्ध्वा आश्लिष्येत्यर्थः । विमुक्तकबरीभरबन्धनाय श्लथद्धम्मिल्लबन्धनाय अलसा जडा सती यत्नं प्रयत्नं न चक्रे न कृतवती । तथाहि । गुरुकार्यस्य महाकार्यस्य लाभे सति लघ्वर्थस्य तुच्छप्रयोजनस्य साधने सम्पादने कृतिः प्रयत्नः दृष्टपूर्वा पूर्वं दृष्टा नहि । नित्यमुक्तस्य बन्धनलक्षणमहाप्रयोजने लब्धे सद्योमुक्तमात्रकबरीभरबन्धनायासायोगादिति भावः ॥५३॥

**कृष्णालिङ्गनभङ्गशङ्किहृदयाः स्रस्तं कचं प्रच्युतं**
**वक्षोजाम्बरमुद्गतामपि न ता नीवीं बबन्धुः किल ।**
**तद्भर्त्रा रतिसूचकं मृगदृशो दृष्ट्वा प्रहृष्टानना**
**रत्यन्तोचितकर्म चक्रुरमतं नैवेति चेतो मम ॥ ५४ ॥**

**व्या :** कृष्णेति । कृष्णालिङ्गनस्य भङ्गं विच्छेदं शङ्कत इति कृष्णालिङ्गनभङ्गशङ्कितं च तत् हृदयं मनो यासां ताः गोप्यः स्रस्तं कचं प्रच्युतं यद्वक्षोजाम्बरम् उद्गतां मुच्यमानां नीवीं च न बबन्धुः किल । किलेत्यस्वरसे । भर्त्रा श्रीकृष्णेन सह रतिसूचकं तत् कबरीवक्षोजाम्बरनीवीमोचनं दृष्ट्वा प्रहृष्टाननाः रतिर्भविष्यतीति

प्रहृष्टमुख्यः मृगदृशः अमतमनभिमतं रत्यन्तोचितकर्म सुरतान्ते क्रियमाणं कर्म कबरीबन्धनादिकं न चक्रुरेवेति मम चेतः मम हृदयं ममाभिप्राय इत्यर्थः ॥५४॥

**काचिच्चुचुम्बे[१] कमलेक्षणस्य कारुण्यसिन्धोः करमब्जनेत्रा ।**
**आश्लिष्य कण्ठं बत पूर्ववन्मां स्वीयां न मुञ्चेति तमञ्चयन्ती ॥५५॥**

**व्या :** काचिदिति । अब्जनेत्रा कमलाक्षी काचित् कारुण्यसिन्धोः कमलेक्षणस्य श्रीकृष्णस्य करं हस्तं मम कण्ठमाश्लिष्य पूर्ववत् बत हे श्रीकृष्णकर स्वीयां मां न मुञ्चेति तं करम् अञ्चयन्तीव चुचुम्बे ॥ ५५ ॥

**श्रीलोलकोमलकपोलविलग्नगण्ड-**
**लोलं कयाऽप्यबलयाऽऽननमन्यवध्वाः ।**
**जघ्ने स्ववक्त्रगतवीटिकया तदेव**
**कृष्णस्य सूचकमभूदिव दित्सतस्ताम् ॥ ५६ ॥**

**व्या :** श्रीलोलेति । श्रियां लोलः आसक्तः तस्य लक्ष्मीपतेः श्रीकृष्णस्य कोमले कपोले विलग्नः सम्बन्द्धः गण्डः तेन लोलं मनोहरम् अन्या च सा वधूश्च तस्याः आननं कयाऽप्यबलया गोप्या स्ववक्त्रगतवीटिकया जघ्ने ताडितम् । तदेव वीटिकाताडनमेव तां वक्त्रगतवीटिकां तस्याः दित्सतः दातुमिच्छतः श्रीकृष्णस्य सूचकमभूदिवेति उत्प्रेक्षा । श्रीकृष्णः स्वकपोललग्नकपोलायाः तस्याः स्ववक्त्रवीटिकां ददाविति कथान्तरं सूचितं भवति । 'गण्डे गण्डं सन्दधत्या अधात्ताम्बूलचर्वितम्'[२] इति कचित् पाठः । 'आदात्' इति कचित् । पाठद्वयार्थसूचनायेत्थमुदितम् ॥ ५६ ॥

---

१ तत्रैकांसगतं बाहुं कृष्णस्योत्पलसौरभम् ।
चन्दनालिप्तमाघ्राय हृष्टरोमा चुचुम्ब ह ॥ -भागवते १०/३१/१३

२ भागवते (१०/३१/१४)

**विलासमस्यां वरसिद्धसत्कृताविलाऽसमस्याम्बरसिद्धसत्कृता ।**
**ततान वीणाध्वनिगानविद्ययाऽऽतता नवीनाध्वनि गानविद्यया ॥५७॥**

**व्या : विलासमिति । विलासम् अस्यां वरसिद्धसत्कृताविला ।** वबयोरभेदान्न यमकभङ्गः । **असमस्य अम्बरसिद्धसत्कृता ततान । वीणाध्वनिगानविद्यया । आतता ।** नणयोरभेदान्नवीनाध्वनिगानवित् यया इति पदच्छेदः । अस्यां रासक्रीडायां वरेण सिद्धं लब्धं सत्कृतं सत्कर्म पुण्यमित्यर्थः । तेनाविला सम्मिश्रा अम्बरसिद्धैः आकाशस्थितसिद्धैः सत्कृता मानिता वीणायाः ध्वनिवत् मनोहरा **या गानविद्या** तया आतता आ समन्तात् पूर्णा काचित् असमस्यासदृशस्य विलासं ततान । श्रीकृष्णवत् स्वयमप्यगायदित्यर्थः । यया नार्या लोको इतरो जनः **नवीनाध्वनि** नूतनगानमार्गे गानवित् गानज्ञः अभूत् । सेति शेषः । "काचित् समं मुकुन्देन स्वरजातीरमिश्रिताः । उन्निन्ये"[1] इति कथासूचनार्थमिदम् ॥५७॥

**भर्तुर्मृदुस्वरकृतानुकृतिः स्वगीतं विस्तार्य हृद्यकलकण्ठवधूरिवाद्धा ।**
**मुग्धीभवत्सु सकलेषु मुकुन्दवक्त्रं स्निग्धा चुचुम्ब रहसीव विशङ्कमेका ॥**

**व्या : भर्तुरिति । भर्तुः** श्रीकृष्णस्य **मृदुस्वरेण** मनोहरसङ्गीतस्वरेण **कृता अनुकृतिः** अनुकरणं यया सा काचिद्गोपी । **हृद्यकलकण्ठवधूरिव** मनोहरपिकपत्नीव । **स्वगीतं विस्तार्य** वितत्य **सकलेषु** जनेषु **अद्धा** निश्चयेन **मुग्धीभवत्सु** विवशीभूतेषु सत्सु **रहसीव** एकान्त इव **विशङ्कं** निःशङ्कं यथा तथा **स्निग्धा** सती **मुकुन्दवक्त्रं चुचुम्ब** । सङ्गीतरसातिशयात् सम्मोहनास्त्रादिव अखिलेषु तदेकविधतां गतेषु व्यापारान्तरानभिज्ञेषु सत्सु स्वयं चुचुम्ब इत्यर्थः ॥ ५८ ॥

**किमाप्तकामस्य तवाभिरीश तथापि नस्तोषयसे विलासैः ।**
**इतीरयन्तीव करं मुरारेः स्तने न्यधात् कापि बलेन बाला ॥५९॥**

**व्या : किमिति ।** हे **ईश** श्रीकृष्ण **आप्तकामस्य** अवाप्तसकलकामस्य पूर्णस्येत्यर्थः । **तव आभिः** अस्माभिः **किं** कार्यं न किमपीत्यर्थः । **तथापि**

[1] भागवते (१०/३३/१०)

**विलासैः** स्वविलासैः **नः** अस्मान् **तोषयसे** सुखयसीति **इत्थम्** **ईरयन्ती** वदन्तीव **कापि बाला मुरारेः** श्रीकृष्णस्य **करं** हस्तं **स्तने** स्वकुचे **बलेन** बलात्कारेण **न्यधा**दर्पितवती । ''पार्श्वस्थाच्युतहस्ताब्जं श्रान्ताऽधात्स्तनयोः शिवम्''[1] इति कथासूचनायेदम् ॥ ५९ ॥

**उरोजयुग्माङ्कितकुङ्कुमाङ्कमसावसाधारणमात्मभर्तुः ।**
**करे स्थिरीकृत्य चकार चारुं तमन्यमानिन्यभिरुच्ययोग्यम् ॥६०॥**

**व्या :** उरोजेति । या बाला श्रीकृष्णकरं स्वस्तने न्यधात् । **असौ** गोपी **असाधारणं** **साधारणो** न भवतीत्यसाधारणः तम् । आत्मनिष्ठमित्यर्थः। **उरोजयुग्मे** स्वकुचयुग्मे **अङ्कितस्य** चिह्नितस्य **कुङ्कुमस्य** **अङ्कं** चिह्नम् **आत्मभर्तुः** स्वरमणस्य श्रीकृष्णस्य **करे** स्वस्तनसङ्गिहस्ते **स्थिरीकृत्य** चिरस्थापनेन दृढीकृत्य **चारुं** मनोहरं **तं** श्रीकृष्णकरम् **अन्यासां** **मानिनीनाम्** **अभिरुचेः** आकाङ्क्षायाः **अयोग्यं** सपत्नीकुचकुंकुमाङ्कसाहित्यादनर्हं **चकार** । स्वविलासैकयोग्यं चकारेत्यर्थः ॥ ६० ॥

**मुदावहा भासुरगीतशोभा विभाति वृन्दावनरासलीला ।**
**हरेश्च मूर्तिः शतशोऽङ्गनाल्यामुदावहाभा [2]सुरगीतशोभा ॥६१॥**

---

१ भागवते (१०/३३/१४)

२ विष्णुपुराणोक्तरासक्रीडावार्णम् –
वनराजिं तथा कूजद्भृङ्गमालामनोहराम् ।
विलोक्य सह गोपीभिर्मनश्चक्रे रतिं प्रति ॥
विना रामेण मधुरमतीव वनिताप्रियम् ।
जगौ कलपदं शौरिस्तारमन्द्रकृतक्रमम् ॥
रम्यं गीतध्वनिं श्रुत्वा सन्त्यज्यावसथांस्तदा ।
आजग्मुस्त्वरिता गोप्यो यत्रास्ते मधुसूदनः ॥
शनैः शनैर्जगौ गोपी काचित् तस्य लयानुगम् ।
दत्तावधाना काचिच्च तमेव मनसाऽस्मरत् ॥
काचित् कृष्णेति कृष्णेति प्रोच्य लज्जामुपाययौ ।

यथौ च काचित् प्रेमान्धा तत्पार्श्वमविलम्बितम् ।।
काचिच्चावसथस्यान्ते स्थित्वा दृष्ट्वा बहिर्गुरुम् ।
तन्मयत्वेन गोविन्दं दध्यौ मीलितलोचना ।।
तच्चित्तविमलाह्लादक्षीणपुण्यचया तथा ।
तदप्राप्तिमहादुःखविलीनाशेषपातका ।।
चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम् ।
निरुच्छ्वासतया मुक्तिं गताऽन्या गोपकन्यका ।।
गोपीपरिवृतो रात्रिं शरच्चन्द्रमनोरमाम् ।
मानयामास गोविन्दो रासारम्भरसोत्सुकः ।।
गोप्यश्च वृन्दशः कृष्णचेष्टास्वायत्तमूर्तयः ।
अन्यदेशं गते कृष्णे चेरुर्वृन्दावनान्तरम् ।।
कृष्णे निबद्धहृदया इदमूचुः परस्परम् ।।
कृष्णोऽहमेव ललितं व्रजाम्यालोक्यतां गतिः ।
अन्या ब्रवीति कृष्णस्य मम गीतिर्निशम्यताम् ।।
दुष्ट कालिय तिष्ठात्र कृष्णोऽहमिति चापरा ।
बाहुमास्फोट्य कृष्णस्य लीलया सर्वमाददे ।।
अन्या ब्रवीति भो गोपा निश्शङ्कैः स्थीयतामिति ।
अलं वृष्टिभयेनात्र धृतो गोवर्धनो मया ।।
धेनुकोऽयं मया क्षिप्तो विचरन्तु यथेच्छया ।
गावो ब्रवीति चैवान्या कृष्णलीलानुसारिणी ।।
एवं नानाप्रकारासु कृष्णचेष्टासु तास्तदा ।
गोप्यो व्यग्राः समं चेरू रम्यं वृन्दावनान्तरम् ।।
विलोक्यैका भुवं प्राह गोपी गोपवराङ्गना ।
पुलकाञ्चितसर्वाङ्गी विकासिनयनोत्पला ।।
ध्वजवज्राङ्कुशाब्जाङ्करेखावन्त्यालि पश्यत ।
पदान्येतानि कृष्णस्य लीलाललितगामिनः ।।
कापि तेन समायाता कृतपुण्या मदालसा ।
पदानि तस्याश्चैतानि घनान्यल्पतनूनि च ।।
पुष्पापचयमत्रोच्चैश्चक्रे दामोदरो ध्रुवम् ।
येनाग्राक्रान्तमात्राणि पदान्यत्र महात्मनः ।।

**व्या : मुदावहेति** । मुदं सन्तोषमावहति प्रापयतीति **मुदावहा भासुरं** शोभमानं यद्गीतं गानं तस्य **शोभा** कान्तिर्यस्याः सा **वृन्दावने रासलीला** रासाख्यक्रीडा **विभाति** । **अङ्गनाल्यां** स्त्रीसमूहे उदम् उदकम् आवहति प्रापयतीति उदावहो

---

अत्रोपविश्य वै तेन काचित् पुष्पैरलङ्कृता ।
अन्यजन्मनि सर्वात्मा विष्णुरभ्यर्चितस्तया ॥
पुष्पबन्धनसम्मानकृतमानामपास्य ताम् ।
नन्दगोपसुतो यातो मार्गेणानेन पश्यत ॥
अनुयातैनमत्रान्या नितम्बभरमन्थरा ।
या गन्तव्ये द्रुतं याति निम्नपादाग्रसंस्थितिः ॥
हस्तन्यस्ताग्रहस्तेयं तेन याति तथा सखी ।
अनायत्तपदन्यासा लक्ष्यते पदपद्धतिः ॥
हस्तसंस्पर्शमात्रेण धूर्तेनैषा विमानिता ।
नैराश्यान्मन्दगामिन्या निवृत्तं लक्ष्यते पदम् ॥
नूनमुक्ता त्वरामीति पुनरेष्यामि तेऽन्तिकम् ।
तेन कृष्णेन येनैषा त्वरिता पदपद्धतिः ॥
प्रविष्टो गहनं कृष्णः पदमत्र न लक्ष्यते ।
निवर्तध्वं शशाङ्कस्य नैतद्दीधितिगोचरे ॥
निवृत्तास्तास्तदा गोप्यो निराशाः कृष्णदर्शने ।
यमुनातीरमासाद्य जगुस्तच्चरितं तथा ॥
ततो ददृशुरायान्तं विकासिमुखपङ्कजम् ।
गोप्यस्त्रैलोक्यगोप्तारं कृष्णमक्लिष्टचेष्टितम् ॥
काचिदालोक्य गोविन्दमायान्तमतिहर्षिता ।
कृष्ण कृष्णेति कृष्णेति प्राह नान्यदुदीरयत् ॥
काचिद्भ्रूभङ्गुरं कृत्वा ललाटफलकं हरिम् ।
विलोक्य नेत्रभृङ्गाभ्यां पपौ तन्मुखपङ्कजम् ॥
काचिदालोक्य गोविन्दं निमीलितविलोचना ।
तस्यैव रूपं ध्यायन्ती योगारूढेव सा बभौ ॥
ततः काश्चित् प्रियालापैः काश्चिद्भ्रूभङ्गवीक्षितैः ।
निन्येऽनुनयमन्यां च करस्पर्शेन माधवः ॥ - विष्णुपुराणे (५/१३/१५-४७)

मेघः । तस्याभेवाभा यस्याः सा सुरैर्गीता वर्णिता शोभा कान्तिर्यस्याः सा तथा। हरेः श्रीकृष्णस्य **मूर्तिः** एकैव शतशः [1]बहुसङ्ख्याका भूत्वा विभाति । यावत्यो गोप्यः तावत्यः, भूत्वेत्यर्थः । अत एव सारूप्यमिति प्रागुक्तम् ॥६१॥

**रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि**
**प्रेम्णा चिन्तयतां विचित्रविमलश्लाघ्यार्थसन्दायिनि ।**
**सञ्जाते भुवि रुग्मिणीशविजये सद्वादिराजोदिते**
**सञ्जातः सुरमण्डलीषु महितः सर्गोऽष्टमोऽयं मुदाम् ॥६२॥**

**॥ इति श्रीवादिराजतीर्थप्रणीतरुग्मिणीशविजये अष्टमः सर्गः ॥८॥**

**व्या : रोम्णामिति** । उक्तोऽर्थः ॥ ६२ ॥

**॥ इति रुग्मिणीशविजयटीकायां गुरुभावप्रकाशिकायाम् अष्टमः सर्गः ॥**

*****

---

१ म.भा.ता.निर्णयोक्तबहुसङ्ख्याकरामरूपवर्णनं यथा
त्रिंशत्सहस्राणि महौघकानामक्षोहिणीनां सहषट्सहस्रम् ।
श्रमेण संयोजयताशु रामं सज्जीभवानीति दिदेश रावणः ॥
तदप्रधृष्यं वरतः स्वयम्भुवो युगान्तकालार्णवघूर्णितोपमम् ।
प्रगृह्य नानाविधमस्त्रशस्त्रं बलं कपीन् शीघ्रतमं जगाम ॥
आगच्छमानं तदपारमेयं बलं सुघोरं प्रलयार्णवोपमम् ।
भयात् समुद्वीक्ष्य विषण्णचेतसः कपिप्रवीरा नितरां प्रदुद्रुवुः ॥
वरो हि दत्तोऽस्य पुरा स्वयम्भुवा धरातलेऽल्पेऽपि निवासशक्तिः ।
अजेयता चेत्यत एव सार्कजाः प्लवङ्गमा द्रष्टुमपि स्म नाशकन् ॥
प्रगृह्य रामोऽथ धनुः शरांश्च समन्ततस्तानवधीच्छरौघैः ।
स एव सर्वत्र च दृश्यमानो विदिक्षु दिक्षु प्रजघान सर्वशः ॥
क्षणेन सर्वांश्च निहत्य राघवः प्लवङ्गमानामृषभैः सुपूजितः ।
अभिष्टुतः सर्वसुरोत्तमैर्मुदा भृशं प्रसूनोत्करवर्षिभिः प्रभुः ॥
- महाभारततात्पर्यनिर्णये(८/१७९-१८४)

# नवमः सर्गः

**मण्डलीकृतमनोरमरामा कुण्डलद्युतिसुदीपितसीमा।**
**गण्डचुम्बनकुतूहलकामा खण्डिताननसरोरुहधामा[1] ॥ १ ॥**

---

१ कृत्वा तावन्तमात्मानं यावतीर्गोपयोषितः।
रराम भगवांस्ताभिरात्मारामोऽपि लीलया ॥
धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम्।
तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा ॥ - भागवते (१०/३१/२१,३१)
ताभिः प्रसन्नचित्ताभिर्गोपीभिः सह सादरम्।
ररास रासगोष्ठीभिरुदारचरितो हरिः ॥
रासमण्डलबन्धोऽपि कृष्णपार्श्वमनुज्झता।
गोपीजनेन नैवाभूदेकस्थानस्थिरात्मना ॥
हस्तेन गृह्य चैकैकां गोपीनां रासमण्डलम्।
चकार तत्करस्पर्शनिमीलितदृशं हरिः ॥
ततः प्रववृते रासश्चलद्वलयनिस्वनः।
अनुयातशरत्काव्यगेयगीतिरनुक्रमात् ॥
कृष्णश्शरच्चन्द्रमसं कौमुदीं कुमुदाकरम्।
जगौ गोपीजनस्त्वेकं कृष्णनाम पुनः पुनः ॥
परिवृत्तिश्रमेणैका चलद्वलयलापिनीम्।
ददौ बाहुलतां स्कन्धे गोपी मधुनिघातिनः ॥
काचित् प्रविलसद्बाहुः परिरभ्य चुचुम्ब तम्।
गोपी गीतस्तुतिव्याजान्निपुणा मधुसूदनम् ॥
गोपीकपोलसंश्लेषमभिगम्य हरेर्भुजौ।
पुलकोद्गमसस्याय स्वेदाम्बुघनतां गतौ ॥
रासगेयं जगौ कृष्णो यावत्तारतरध्वनिः।
साधु कृष्णेति कृष्णेति तावत् ता द्विगुणं जगुः ॥
गतेऽनुगमनं चक्रुर्वलने सम्मुखं ययुः।
प्रतिलोमानुलोमाभ्यां भेजुर्गोपाङ्गना हरिम् ॥
स तथा सह गोपीभी ररास मधुसूदनः।

**व्या :** रासक्रीडावितृष्णाय कृष्णायानन्दमूर्तये ।
नमः कारुण्यधिष्ण्याय विष्णवे केशिजिष्णवे ।। १ ।।
तुरङ्गतुण्डकरुणामण्डितः खण्डितेषणः ।
धरासुराग्रणीर्दद्याद्वादिराजगुरुर्दृशम् ।। २ ।।

इदानीमेकादशपद्यैः रासविलासं वर्णयति । **मण्डलीकृतेति** । **मण्डलीकृतानां** मण्डलाकारतया स्थितानां **मनोरमाणां रामाणां** स्त्रीणां **कुण्डलद्युतिभिः** ताटङ्ककान्तिभिः **सुदीपिता** सम्यक्प्रकाशिता **सीमा** रासभूप्रदेशो यस्मिन् स तथोक्तः । **गण्डचुम्बने** कपोलचुम्बने **कुतूहलं** कौतुकं येषां तानि **कामेन** रागेण **अखण्डितानि** अभग्नानि युक्तानीत्यर्थः । अतिर्यक्कृतानीति वा । **आननान्येव सरोरुहाणि** तेषां **धाम** यस्मिन्नसौ रासविलासः जयतीत्युत्तरकुलकम्[1] । **स्वागता** वृत्तम् । 'स्वागतेति रनभाद्गुरुयुग्मम्'[2] ।। १ ।।

**मुच्यमानकबरीभरबन्धः प्रोच्यमानरसदातृमुकुन्दः ।**
**प्रथ्यमाननखलाञ्छनचन्द्रः कथ्यमानहरिविक्रमवृन्दः ।।२।।**

---

यथाब्दकोटिप्रतिमः क्षणस्तेन विनाऽभवत् ।।
ता वार्यमाणाः पतिभिः पितृभिर्भ्रातृभिस्तथा ।
कृष्णं गोपाङ्गना रात्रौ रमयन्ति रतिप्रियाः ।।
सोऽपि कैशोरकवयो मानयन् मधुसूदनः ।
रेमे ताभिरमेयात्मा क्षपासु क्षपिताहिताः ।।
तद्भर्तृषु तथा तासु सर्वभूतेषु चेश्वरः ।
आत्मस्वरूपरूपोऽसौ व्यापी वायुरिव स्थितः ।।
यथा समस्तभूतेषु नभोऽग्निः पृथिवी जलम् ।
वायुश्चात्मा तथैवासु व्याप्य सर्वमवस्थितः ।। -विष्णुपुराणे (५/१३/४८-६२)

१ श्लो. (१-११) ।

२ इति वृत्तरत्नाकरे (३/४०)

**व्या :** मुच्यमानेति । नृत्तातिशयान्मुच्यमानकबरीभरबन्धः धम्मिल्लस्य बन्धः यस्मिन् स तथा । **प्रोच्यमानः** कथ्यमानः गोपीभिर्वाच्यमान इत्यर्थः । **रसः** सुखं तस्य दाता मुकुन्दो यस्मिन् स तथोक्तः । **प्रथ्यमानः** कुचकण्ठपार्श्वादौ विस्तीर्यमाणः नखलाञ्छनमेव चन्द्रः यस्मिन् स तथोक्तः । नखलाञ्छनस्यार्धचन्द्राकारत्वात् । कथ्यमानं हरिविक्रमाणां कृष्णपराक्रमाणां वृन्दं समूहः यस्मिन् स तथोक्तः ॥२॥

**हृष्टरोमनिकरैर्वनसत्त्वैर्दृष्टरम्यविभवो हृतचित्तैः ।**
**तुष्टनिर्जरगणैर्गगनस्थैर्वेष्टितः स्तुतमुकुन्दचरित्रैः ॥ ३ ॥**

**व्या :** हृष्टेति । **हृष्टरोमनिकरैः** प्रहृष्टरोमोद्गमैः **हृतं चित्तं** येषां तैः **वनसत्त्वैः** वृन्दावनस्थमृगादिप्राणिभिर्दृष्टः **रम्यः विभवः** सम्पत् यस्य स तथोक्तः । **गगनस्थैः** स्तुतानि मुकुन्दस्य चरित्राणि यैस्तैः तुष्टनिर्जरगणैः सन्तुष्टदेवसमूहैः वेष्टितः आवेष्टितः ॥ ३ ॥

**चारुपादतलसन्नखकान्त्या धीरनूपुररुचा विचरन्त्या ।**
**साररत्नमयमण्डपपङ्क्त्याहारिभूमिविभवो विलसन्त्या ॥ ४ ॥**

**व्या :** चार्विति । विलसन्त्या चारुपादतलसन्नखकान्त्या पद्मरागमौक्तिकप्रतिनिधिभूतया विचरन्त्या नृत्यवशात् प्रसर्पंत्या अधीरनूपुररुचा चञ्चलनानारत्नखचितमञ्जीरकान्त्या **साररत्नमयमण्डपाः** उत्तमातिशयितरत्नखचितमण्टपाः तेषां **पङ्क्तीः** आहरते जयतीति तथोक्तः **भूमेः** क्रीडाभुवः विभवो यस्य स तथोक्तः ॥४॥

**वेणुवाद्यपटुना व्रजनारीमानदेन हरिणान्तरहारी ।**
**आनताब्जजनिमारुतगौरीप्राणनाथनयनोत्सवकारी ॥५॥**

**व्या :** वेणुवाद्येति । **वेणुवाद्यपटुना** वेणुवाद्यवादनकुशलेन **व्रजनारीमानदेन** हरिणा कृष्णेन **अन्तरहारी** मनोहरः **आनताः** नम्राः **अब्जजनिः** ब्रह्मा **मारुतो** मुख्यप्राणः **गौरीप्राणनाथः** शिवः तेषां **नयनोत्सवकारी** ॥ ५ ॥

**पादसञ्चरणदर्शिततालः स्वादुगीतवरविभ्रमजालः ।**
**मोदितद्विजमृगाङ्घ्रिपशैलः श्रीधरेक्षणरसायनलोलः ॥ ६ ॥**

**व्या :** पादेति । पादसञ्चरणेन **दर्शितः तालो** यत्र स तथोक्तः । **स्वादूनि गीतानां** गानानां **वरविभ्रमाणां**[1] श्रेष्ठविलासानां वीक्षणचुम्बनस्मितादीनां **जालानि** यस्मिन् स तथोक्तः । **मोदिताः । द्विजाः** पक्षिणः **मृगाः** हरिणाः **अङ्घ्रिपाः** वृक्षाः **शैलाः** पर्वताः येन स तथोक्तः । स्थावरतिरश्चामप्यानन्दकारी किमन्येषामिति भावः । **श्रीधरस्य** श्रीकृष्णस्य **ईक्षणं** दयावलोकनं तदेव **रसायनममृतं** तेन **लोलः** मनोहरः ॥ ६ ॥

**कृष्णमूर्तिशतवासवनीलः पुष्टगोपतरुणीमणिमालः ।**
**घृष्टपाणिवरदामविलोलश्चित्रहारसरहारणशीलः ॥ ७ ॥**

**व्या :** कृष्णमूर्तीति । **कृष्णस्य मूर्तीनां** [2]**शतं** तदेव **वासवनीलानि** इन्द्रनीलरत्नानि यस्मिन् स तथोक्तः । **पुष्टगोपतरुण्य** एव **मणयः** स्वर्णमणयः मौक्तिकानि वा तेषां **माला** पङ्क्तिः यस्मिन् स तथोक्तः । **घृष्टा** अन्योन्यसम्बद्धाः **पाणय** एव **वरं** श्रेष्ठं **दाम** सूत्रं तेन **विलोलः** मनोहरः । **चित्रहारसरस्य** इन्द्रनीलरत्नमौक्तिकाभ्यां रचितकण्ठमालायाः **हारणं** विद्रावणं तिरस्कार इत्यर्थः । तत्र **शीलं** स्वभावो यस्य स तथोक्तः । अन्योन्याबद्धबाहुसूत्रनद्धानां गोपीनां मध्ये मध्ये स्थितकृष्णमूर्तीनां च मण्डलाकारतया एकैकानन्तर्येणावस्थानादिति भावः ॥ ७ ॥

**हारभास्वदुरसा सकलाशापूरितस्मरशताधिकभासा ।**
**शारदाम्बुजदृशा वरभूषाधारिणाऽतिरुचिरः कमलेशा ॥ ८ ॥**

---

१ 'विभ्रमः संशये भ्रान्तौ शोभायां च' इति यादवः
- इति श्रीविजयध्वजतीर्थकृतभागवतटीकायाम् (४/२९)

२ 'शब्दो बहुत्ववचनः शतमित्यतश्च' - इति म.भा.ता.नि. (१/१६)

**व्या : हारभास्वदिति ।** हारेण **भास्वत्** **उरो** यस्य तेन **सकलाशासु** सर्वदिक्षु **पूरिताः स्मरशताधिकाः** कामशतादप्यूर्जिताः **भासः** अवयवशोभा यस्य तेन **शारदाम्बुजदृशा** शरत्कालकमलवत् विकासिनयनेन **वरभूषाधारिणा** उत्तमालङ्कारधारिणा **कमलायाः** लक्ष्म्याः **ईट्** ईशः तेन कृष्णेनातिरुचिरः अत्यन्तमनोहरः ॥ ८ ॥

**सप्रियामरविमानवितानस्तृप्तबन्दिचयमानवितानः ।**
**स्वल्पमेघरवमर्द्दलसान्द्रः स्वःप्रसूनरुचिमद्दलसान्द्रः ॥ ९ ॥**

**व्या : सप्रियेति ।** प्रियाभिः प्राणकान्ताभिः सहिताः ते च ते **अमराश्च** तेषां **विमानान्येव वितानानि** यस्मिन् **तृप्तानां** तुष्टानां बन्दिनां स्तुतिपाठकानां **चयस्य** समूहस्य मानम् उपमानं यस्य सः **वीनां** पक्षिणां **तानः** विस्तारः यस्मिन् स तथोक्तः । **बन्दिवत्** स्तोतृशुकादिपक्षिसमूहैः परितः अवस्थितः स्वल्पमेघरवः ईषन्मेघरवः स एव मर्दलः वाद्यविशेषः तेन सान्द्रः निरन्तरः **स्वःप्रसूनानां** स्वर्गाद्वृष्टपुष्पाणां **रुचिमन्ति** कान्तिमन्ति **दलानि** पादघाताद्दलीभूतानि तैः **सान्द्रः** निबिडः रासविलासः ॥ ९ ॥

**जृम्भमाणनवपल्लवशोभे शम्बरारिपितृपल्लवशोभे ।**
**अम्बुजेऽर्पितहृदा हिमदात्रा जृम्भितश्च मरुताऽहिमदात्रा ॥१०॥**

**व्या : जृम्भमाणेति । जृम्भमाणानां** विकचानां **नवपल्लवानां** नूतनकिसलयानां **शोभा** यस्य तस्मिन् **शम्बरारिपितुः** मनसिजपितुः कृष्णस्य पत् पादस्तस्य **लवशोभा** अल्पकान्तिर्यस्मिन् तस्मिन् । **अम्बुजे** अरविन्दे **अर्पितं** स्थापितं **हृत्** यस्य तेन । अनेन मान्द्यसौरभ्ये दर्शिते । **हिमस्य** शीतस्य **दाता** तेन **अहिः** सर्पः मदि हर्ष इति धातोः **मदाय** हर्षाय **अत्ता** भक्षकः यस्य सर्पाहारो योग्य इत्यर्थः । **अहिमम्** उष्णं द्यति खण्डयतीत्यहिमदाता तेनेति वा । तेन **मरुता** मन्दवायुना **जृम्भितः** उज्जृम्भितः ॥ १० ॥

**मञ्जुशिञ्जदतिभासुरभूषः कञ्जनाभबहुसुन्दरवेषः ।**
**अंसलग्नकरसारसपाशः संश्रुतो जयति [1]रासविलासः ॥११॥**

**व्या :** मञ्जुसिञ्जदिति । **मञ्जु** यथा तथा **सिञ्जन्त्यः अतिभासुरा भूषाः** नूपुरवलयाद्याभरणानि यस्मिन् स तथा । **कञ्जनाभस्य** कृष्णस्य बहवः **सुन्दरा** मनोहराः **वेषाः** रूपाणि यस्मिन् सः **अंसलग्नाः करसारसपाशाः** करकमलपाशाः यस्मिन् सः । **संश्रुतः** प्रथितः **रासविलासः** रासमहोत्सवो **जयति** ॥ ११ ॥

**पुण्डरीकमुखमुख्यविकासः खण्डितारितिमिरोरुतराशः ।**
**शौण्डमध्वकविवर्ण्यविलासः पाण्डुरङ्गरविरत्र ललास ॥१२॥**

**व्या :** पुण्डरीकेति । **पुण्डरीकमुखस्य** पुण्डरीकाख्यमुनिमुखस्य **मुख्यः** श्रेष्ठः **विकासो** यस्मात् अन्यत्र सिताम्भोजमुखस्य **खण्डिताः** नाशिताः **अरयः** शत्रवो दैत्या एव **तिमिराणि** तमांसि तेषामुरुतरा बहुला **आशा** अभिलाषो येन । अन्यत्र खण्डितानि नाशितानि अरितिमिराणि यासां ताः । उरुतराः आशा दिशो यस्य स तथोक्तः । **शौण्डः** कुशलः **मध्वकविः** मध्वाख्यकविः तेन **वर्ण्यः विलासः** यस्य सः । अन्यत्र कविवर्ण्यविलासः सूर्योदयस्य काव्येषु वर्णनात् **पाण्डुरङ्गरविः** श्रीविठ्ठलाख्यरविः **अत्र** रासक्रीडायां **ललास** बभासे ॥१२॥

**गातृकोकिलरवश्रुतिपूर्तौ स्फीतभृङ्गनिनदैः श्रुतिपूर्तौ ।**
**जातु यत्पदमसिद्धमृगाद्यैर्ध्यातमेतदिह सिद्धमृगाद्यैः ॥ १३ ॥**

**व्या :** गातृकोकिलेति । **यत्पदं** यस्य कृष्णस्य पादः **जातु** सकृदपि **ऋगाद्यैः** वेदैः **असिद्धं** साकल्येनाज्ञातम् । ''यतो वाचो निवर्तन्ते''[2] इति श्रुतेः । एतत्कृष्णपदं

---

१ पृथुं सुवृत्तं मसृणं वितस्तिमात्रोन्नतं कौ विनिखन्य शङ्कुम् ।
आक्रम्य पद्भ्यामितिरेतरं तु हस्तैर्भ्रमोऽयं खलु **रासगोष्ठी** ॥
- इति नीलकण्ठकृतहरिवंशव्याख्यायामुद्धृतं कोशवचनम् ।

२ तैत्तिरीयोपनिषत् २/४

गातॄणां गायकानां कोकिलानां **रवेण** ध्वनिना **श्रुतेः** श्रवणस्य **पूर्तिः** पूरणं यस्मिन् **स्फीताः** व्याप्ताः **भृङ्गनिनदाः** भ्रमरध्वनयः तैः **श्रुतेः ज्ञानप्रदानस्य** पूर्तिः सम्पूर्तिः यस्मिन् इह रासोत्सवे सिद्धमृगाद्यैरपि प्रसिद्धमृगप्रभृतिभिरपि ध्यातं चिन्तितम्। रासोत्सवे कृष्णः सकलदृग्विषयोऽभूदित्यर्थः ॥ १३ ॥

**हस्तिनीशतरमाकृतिपूरः कृष्णमूर्तिसुरपादपसारः ।**
**धिक्चकार स पयोब्धिमुदारः सुद्युतिस्मितपयोऽमृतधारः ॥ १४ ॥**

**व्या :** हस्तिनीशतेति । [1]हस्तिनीनां हस्तिनीजातीनां गोपीनां शतमेव रमाकृतयः लक्ष्म्याकाराः तासां **पूरो** यस्मिन् स तथोक्तः । **कृष्णमूर्तय** एव **सुरपादपसाराः** पारिजातवृक्षश्रेष्ठाः यस्मिन् स तथोक्तः । अत एव **उदारः** उत्कृष्टः **सुद्युतयः** शोभनकान्तयश्च **स्मितानि** च हसितानि च तान्येव **पयांसि** क्षीराणि **अमृतधाराश्च** यस्मिन् सः रासविलासः **पयोब्धिम्** एकैकरमाकल्पद्रुमलसितं क्षीरसमुद्रं **धिक्चकार** तिरस्कृतवान् ॥ १४ ॥

**रासोत्सवस्य हि रसं भुवि वर्णयेत् कः श्रीशोडुराजनिजसौभगरञ्जितस्य ।**
**यद्भृङ्गहंसशुककोकिलकेकिमुख्या द्रष्टुं प्रहृष्टमनसः परितः समीयुः ॥१५**

**व्या : रासोत्सवस्येति** । **श्रीश** एव कृष्ण एव **उडुराजः** चन्द्रः तस्य **निजं** सहजं **सौभगं** सौन्दर्याद्यैश्वर्यं तेन **रञ्जितस्य** अलङ्कृतस्य **रासोत्सवस्य रसं** सौभाग्यं **भुवि कः वर्णयेत्** । **यत्** अस्मात् कारणात् **भृङ्गाः** भ्रमराः **हंसाः** राजहंसाः **शुकाः** कीराः **कोकिलाः** पिकाः **केकिनः** मयूराः **मुख्याः** येषां ते विलासानभिज्ञतिर्यग्योन्युत्पन्ना इत्यर्थः । **प्रहृष्टमनसः** सन्तः इमं रासं **द्रष्टुं परितः समीयुः** प्राप्ताः ॥ १५ ॥

---

१ स्थूलाधरा स्थूलनितम्बभागा स्थूलाङ्गुली स्थूलकुचा सुशीला ।
कामोत्सुका गाढरतिप्रिया च नितम्बखर्वा खलु हस्तिनी स्यात्॥ - रतिमञ्जरी

**यत्ताण्डवं पक्षिमृगाङ्घ्रिपाद्रीनुद्भूतहर्षाम्बुदृशो ह्यकार्षीत् ।**
**उन्नम्ररोम्णः स मदन्तरङ्गे नर्नर्तु मामीदृशमेव कुर्वन् ॥१६॥**

**व्या :** रासोत्सववर्णनेन कृष्णे जातप्रेमातिशयः कविः स्वाभीष्टं प्रार्थयते । **यत्ताण्डवमिति** । यस्य कृष्णस्य ताण्डवं नाट्यम् । **पक्षिणः मृगाः अङ्घ्रिपाः** वृक्षाः अद्रयश्च तान् **उद्भूतम्** उत्पन्नं **हर्षांबु दृशोः** नयनयोः येषां तान् । **उन्नम्राणि** उन्मुखानि **रोमाणि** येषां तान् । अकार्षीद्धि अकरोद्धि । हीत्यनेन 'हृष्यत्त्वचोऽश्रु मुमुचुस्तरवः सदर्भाः'[1] इति पुराणप्रसिद्धिं सूचयति । स कृष्णः **मामपि ईदृशमे**वानन्दाश्रुपूर्णं नयनं पुलकिताङ्गं च **कुर्वन्** मदन्तरङ्गे मच्चित्ते **नर्नर्तु** नर्तनं करोतु । चित्तद्रवायोग्यपर्वतादीनामपि चित्तद्रवदानात् मम मानुषजातेः चित्तद्रवो न दुष्कर इति भावः ॥ १६ ॥

**बर्ही तर्हि ननर्त यं प्रति नगाः पुष्पं समर्प्यार्चयन्**
**स्वैरं मञ्जुरवा जगुर्मधुकराः प्रैक्षन्त साक्षान्मृगाः ।**
**उत्क्षिप्तोच्चफणाः फणीश्वरगणाः कम्पेन यं पर्यगुः**
**सोऽयं श्रीरमणो मया रचितया प्रीणातु देवोऽर्चया ॥ १७ ॥**

**व्या :** वर्हीति । यं कृष्णं **प्रति तर्हि** तदा कृष्णस्य ताण्डवसमये **बर्ही** मयूरः **ननर्त** । **नगाः** वृक्षाः **पुष्पं समर्प्य** यं **अर्चयन्** आनर्चुः । **मञ्जुरवाः** मनोहरध्वनयो **मधुकराः** भ्रमराः **स्वैरं** स्वेच्छानुसारेण **जगुः** गानं चक्रुः । **मृगाः** हरिणाः यं **साक्षात् प्रैक्षन्त** । **उत्क्षिप्ताः** ऊर्ध्वं निक्षिप्ताः **उच्चाः फणाः** येषां ते **फणीश्वरगणाः** सर्पश्रेष्ठसमूहाः **कम्पेन** कृष्णगानास्वादनजन्यशिरः**कम्पेन** यं **पर्यगुः** प्रदक्षिणीचक्रुः । **सोऽयं** बर्हिनर्तनवृक्षार्चनमृगवीक्षणसर्पप्रदक्षिणाद्येकैकोपचारेणप्रीतः **श्रीरमणः** कृष्णः **मया रचितया अर्चया** रासक्रीडावर्णनलक्षणपूजया **प्रीणातु** प्रीतो भवतु ॥ १७ ॥

---

[1] भागवते (१०/१९/१०)

**रासोत्सवस्मरणलालसमानसानां नासह्यबन्धमिह मोचयतीत्यपूर्वम् ।**
**यत्केशपक्षकुचकञ्चुकरम्यनीवीबन्धं स विश्लथयते व्रजवल्लवीनाम् ।१८।**

**व्या :** शृङ्गारेण शान्तरसं समर्थयमान आह । **रासोत्सव** इति । इह लोके **रासोत्सवः** कृष्णकृतरासक्रीडा तस्य **स्मरणे लालसम्** उत्कण्ठं **मानसं** येषां तेषाम् **असह्यबन्धं मोचयतीति नापूर्वं** नाश्चर्यम् **यत्** यस्मात् सः रासः **व्रजवल्लवीनां** गोपीनां केशपक्षस्य केशपाशस्य । 'हस्तः पक्षः पाशः **केशेषु** बहुत्ववाचकाः शब्दाः' इति हलः । **कुचकञ्चुकस्य रम्यनीव्याश्च बन्धं** ग्रन्थिं **विश्लथयते** शिथिलीकरोति । एकैकाङ्गनानिष्ठबन्धत्रयमोचकस्य रासस्य स्मरतामेकबन्धमोक्षणं किमाश्चर्यामिति भावः ।। १८ ।।

**यस्मिन्नुद्यति नागकेकिनकुलाः फेरुण्डसिंहद्विपा**
**गोशार्दूलमृगाः किरातविहगा वैरं विसृज्य स्फुटम् ।**
**मित्रामित्रकलत्रपुत्रविरसास्तस्थुः समं षड्रिपूं-**
**स्तद्वृन्दावनरासमण्डलमहः स्वान्तस्थितान् कृन्ततु ।। १९ ।।**

**व्या : यस्मिन्निति । यस्मिन्** रासोत्सवे **उद्यति** उदयति सति **नागकेकिनकुलाः** सर्पमयूरनकुलाः परस्परसहजवैरमत्सरोपेताः न चात्र येषां विरोधः शाश्वतिक इति द्वन्द्वैकवद्भावः किं न स्यादिति वाच्यम् । नागैर्युक्ताः केकिन इति मध्यमपदलोपिसमाससम्भवात् । एवमुत्तरत्रापि । **फेरुण्डसिंहद्विपाः** फेरुण्डो गजविरोधी पक्षिविशेषः । सिंहो मृगेन्द्रः द्विपाः गजाः **गोशार्दूलमृगाः** गोव्याघ्रहरिणाः **किरातविहगाः** व्याधपक्षिणः **स्फुटं** स्पष्टं **वैरं** विरोधं मत्सरं चेत्यपि द्रष्टव्यम् । **विसृज्य मित्रेषु अमित्रेषु** वैरिषु **कलत्रेषु** भार्यासु **पुत्रेषु विरसाः** स्नेहरहिताः सन्तः । अनेन काममलोभमोहमदानां परिहारः प्रदर्शितो भवति । **समं** सार्धं **तस्थुः । तद्वृन्दावनरासमण्डलमहः** रासमण्डलश्रीः **स्वान्तस्थितान्** मम चित्तस्थान् षड्रिपून् कामक्रोधादिशत्रून् **कृन्ततु** छिन्द्यात् ।। १९ ।।

**अंसालम्बितपाणिपद्मललनासंसत्कपोलस्थली-**
**संसक्तोज्ज्वलगण्डमण्डलरुचं हंसासनाद्यैः स्तुतम् ।**
**वंशस्थापितमङ्गलाङ्गुलिदलं स्रंसद्भिभूषावलिं**
**तं सेवे हरिनीलनीलममलं संसारसारं हरिम्[१] ॥ २० ॥**

**व्या :** रासससमये स्थितमूर्तिं वर्णयन् अभ्यर्थयते । अंसेति । **अंसे** कृष्णांसे **आलम्बितानि पाणिपद्मानि** हस्तकमलानि यासां ताः **ललनाः** स्त्रियः तासां **संसदः** समूहस्य **कपोलस्थलीषु** गण्डस्थलेषु **संसक्तं** सम्यक् सम्बद्धम् **उज्ज्वलं** यद्गण्डमण्डलं तस्य **रुक्** कान्तिर्यस्य स तथोक्तः तं **हंसासनाद्यैः** ब्रह्माद्यैः **स्तुतम्** । **वंशे** वेणौ **स्थापितानि मङ्गलाङ्गुलिदलानि** येन स तथोक्तस्तम् । **स्रंसन्ती** विलासपारवश्येन विगलन्ती **भूषावलिः** हाराद्याभारणपङ्क्तिः यस्य तं **हरिनीलनीलम्** इन्द्रनीलवत् श्यामम् **अमलं** निर्दोषं **संसारसारं** संसारे सारभूतं **हरिं** रासाध्यक्षं **सेवे** भजे ॥ २० ॥

**हाराधारमनोहरोरसि लसन्नारीकराम्भोरुहं**
**ताराधीशमुखं विहारसरसोदारस्फुरद्वीक्षणम् ।**
**स्मेरं चारुपरार्घ्यभूषणधरं कारुण्यवारांनिधिं**
**कारागारमिदं विहाय भज तं धाराधरश्यामलम् ॥ २१ ॥**

**व्या :** हारेति । **हाराः** कण्ठमालाः तेषामाधारे **मनोहरे उरसि** अधिकरणे **लसत्** नारीणां **कराम्भोरुहं** यस्य तम् । अन्योन्यांसालम्बितपाणिपद्मयोर्गोपी-कृष्णयोः अन्योन्योरःस्थलमन्योन्यपाणिपद्मयोराधार इति भावः । **ताराधीशमुखं** चन्द्रमुखं **विहारेण सरसं** रसयुक्तम् **उदारमुत्कृष्टं स्फुरद्वीक्षणं** शोभमानावलोकनं यस्य तं **स्मेरं** स्मिताननं **चारूणि** मनोहराणि **परार्घ्याणि** श्रेष्ठानि **भूषणानि**

---

१ असारे खलु सोसारे सारात् सारतरो हरिः । इति कृष्णामृतमहार्णवे ।

धरतीति स तथोक्तस्तं **कारुण्यवारांनिधिं** कृपासमुद्रं **धाराधरवन्मेघवच्छ्यामलं** तं कृष्णम् **इदं** शरीरलक्षणं **कारागारम्**। 'कारा स्याद्बन्धनालयः' इत्यनुशासनात्। बन्धनगृहं **विहाय** उपेक्ष्य **भज** सेवस्व ॥२१॥

**विस्तीर्णामरशाखिरत्नभवने छत्रायिताहीश्वरे**
**सत्सिंहासनशोभिमूलविभवे विभ्राजमानं विभुम्।**
**भृत्यैर्ब्रह्मभवादिभिः परिवृतं सद्बन्दिभिः संस्तुतं**
**चित्तोपास्व[1] विलोलगोपललनानेत्रान्तसच्चामरम् ॥ २२ ॥**

**व्या :** इदानीं कृष्णं महाराजत्वेन वर्णयति। **विस्तीर्णेति**। **विस्तीर्णः** विशालः **अमरशाखी** नवरत्नभरितसुरतरुः स एव **रत्नभवनं** रत्नखचितमन्दिरं तस्मिन्। कथंभूते **छत्रायितः** छत्रवदाचरितः **अहीश्वरः** शेषो यस्मिन्। पुनः कथम्भूते। **सत्सिंहासनवत्** रत्नालङ्कृतसिंहासनवत् **शोभी मूलविभवो** यस्य तस्मिन्। नवरत्नमयपारिजातमूलस्यापि रत्नकुट्टिमावश्यम्भावादिति भावः। वैडूर्यादि(नव)-रत्नखचितं कल्पद्रुममूलमिति प्रसिद्धिः। तत्र **विभ्राजमानं** देदीप्यमानं **विभुं** प्रभुं **भृत्यैः ब्रह्मरुद्रादिभिः परिवृतम्**। सन्तो नारदाद्या एव बन्दिनः तैः **संस्तुतं विलोला** लज्जावशात् सकृत् प्रव्रज्य निवर्तिताः **गोपललनानेत्रान्ता** एव सच्चामराणि यस्य तं कृष्णं हे चित्त उपास्व सेवस्व ॥ २२ ॥

**हे चेतःक्षितिपाल भक्तिरमणीयुक्तोऽक्षिमीनाश्रये**
**नाभ्यावर्तवति श्रुतिह्रदयुते केशौघशैवालिनि।**
**सुभ्रूसद्बलिपङ्क्तिमन्दहसितोत्तुङ्गोर्मिफेनाविले**
**हस्ताङ्घ्र्यब्जिनि विट्ठलाङ्गसरसीतोये रमस्वानिशम् ॥ २३ ॥**

---

१ हे चित्त चिन्तयस्वेह वासुदेवमहर्निशम्।
नूनं यश्चिन्तितः पुंसां हन्ति संसारबन्धनम् ॥ - इति कृष्णामृतमहार्णवे (५२)

**व्या :** हे चेत इति । हे **चेतःक्षितिपाल** चित्ताख्यभूपाल जलक्रीडौचित्यप्रदर्शनाय क्षितिपालत्वेन निरूपणम् । ''इन्द्रियाणां मनश्चास्मि''[१] इति स्मृतेश्च । **भक्तिरमणीयुक्तः** त्वं कामिनीरहिततया जलक्रीडायाः सन्यासिमज्जनवदप्रयोजकत्वात् भक्तिरहितध्यानस्यापि कंसादिध्यानवदप्रयोजनकत्वादिदं विशेषणम् । **अक्षीणि** लोचनान्येव **मीनाः** मत्स्याः । ''विश्वतः पाणिपादं तद्विश्वतोक्षिशिरोमुखम्''[२] इति स्मृतेः । तेषामाश्रये । नाभिरेवावर्तः भ्रमः तद्वति **श्रुतिः** श्रोत्रमेव **ह्रदः** अगाधस्थलं तेन युक्ते । **केशौघ** एव केशसमूह एव **शैवालं** जलनीली सोऽस्यास्तीति तथोक्तः तस्मिन् । **सुभ्रूः** शोभनभ्रूः **सद्वलिपङ्क्तिः** समीचीना वलिराजिः त्रिवलिरित्यर्थः । ऊर्मिस्थानीये इमे च **मन्दहसितं** च क्रमेणोत्तुङ्गोर्मिफेनश्च **ताभ्याम् आविले** युक्ते **हस्ताश्च** अङ्घ्रयश्च त एवाब्जानि सरोजानि अस्य सन्तीति तथोक्तः । विट्ठलाङ्गमेव **सरसीतोयं** सरोवरजलं श्यामत्वान्निर्मलत्वाच्च तत्रानिशं **रमस्व** [३]विहरस्व । एतादृशं विठ्ठलं सदा ध्यायस्वेत्यर्थः ॥ २३ ॥

**हे हस्ताम्बुज विट्ठलाङ्घ्रितरणिं मा मुञ्च दृक्कैरव**
**श्रीमन्तं मुखचन्द्रमस्थिरमनश्चोरालकाख्यं तमः ।**
**जिह्वादर्दुर तत्कथासुजलधिं वक्षःकवाटं सदा**
**हृद्गेह श्रुतिपञ्जर प्रतिदिनं हृद्यं शुकस्योदितम् ॥ २४ ॥**

**व्या :** हे हस्ताम्बुजेति । हे **हस्ताम्बुज** करारविन्द विट्ठलस्य कृष्णस्य **अङ्घ्रितरणिं** पादाख्यबालसूर्यं **मा मुञ्च** सूर्यं विहाय कमलस्य सौरभ्यायोगात् ।

---

१ गीता १०/२२

२ सर्वतः पाणिपादं तत् सर्वतोऽभिशिरोसुखम् - इति गीतायाम् १३/१४.

३ हरिक्षीराम्बुधेः स्वैरं भवघर्मरिपोर्मनः ।
विहराहरहश्चित्रचारित्रचतुरोर्मिषु ॥ - (तीर्थप्रबन्धे १/१) इतिवत् ।

हस्तस्य हरिपादार्चां विना सार्थक्यायोगात् । हस्तस्य कमलोपमत्वात् । हरिपादस्य बालसूर्योपमत्वाच्चेत्थमुक्तिः । एवमुत्तरत्रापि हेतुहेतुमद्भावो द्रष्टव्यः। **दृक्कैरव** नेत्रनीलोत्पल **श्रीमन्तं मुखचन्द्रं** विठ्ठलस्येति शेषः । **मा मुञ्चेति** प्रत्येकं सम्बन्धः । **अस्थिर** एकत्रस्थितिरहित हे **मनश्चोर अलकाख्यं तमः मा मुञ्च** । हे **जिह्वादर्दुर** जिह्वाख्यमण्डूक । निरर्थकशब्दसमेतत्वादियमुक्तिः । **तत्कथासुजलधिं** कृष्णकथामृतसमुद्रं मा मुञ्च । हे **हृद्गेह** हृदयाख्यब्रह्ममन्दिर **वक्षःकवाटं** मा मुञ्च । कवाटरहितगेहस्यास्पृश्यप्रवेशादपावित्र्यप्राप्तेः । हरिसन्निधानरहितहृदयस्य कल्यादिप्रवेशनेन अशुद्धत्वप्राप्तेः । 'तस्येदमेव शिरः'[१] इत्यादिश्रुत्या अन्नमयकोशहृदये हरिहृदयस्यापि स्थितत्वात् स्वासां तादृशध्यानकौशलदर्शनाय चेयमक्तिः । हे **श्रुतिपञ्जर** श्रोत्रपञ्जर **प्रतिदिनं हृद्यं** मनोहरं **शुकस्य** शुकाचार्यस्य कीरस्येति ध्वनिः । **उदितं** वचनं भागवतमित्यर्थः । मा मुञ्च ॥ २४ ॥

**भ्रान्त स्वान्त विनिन्दितैः क्रिमिशतैर्विष्ठातिपुष्टैर्वृतं**
**मूत्रामत्रममेयपूयमबलाकायं विगेयं त्यज ।**
**नित्यं निर्मलविग्रहं निजवशं नीलोत्पलश्यामलं**
**प्रेष्ठं संस्मर विठ्ठलं व्रजवधूतृष्णासमुज्जृम्भकम् ॥ २५ ॥**

**व्या :** भ्रान्तेति । **भ्रान्त** भ्रान्तियुक्त । हे **स्वान्त** चित्त **विनिन्दितैः** जुगुप्सितैः **विष्टया** उदरस्थामेध्येन अतिपुष्टैः **क्रिमिशतैः** जन्तुशतैः वृतम् आवृतं **मूत्रस्यामत्रं** पात्रं **अमेयम्** असङ्ख्येयं **पूयं** यस्य तम् अत एव **विगेयं** निन्द्यं **अबलाकायं** स्त्रीशरीरं **त्यज** । तत्रासक्तिं न कुर्वित्यर्थः । कस्तर्हि ममाधार इत्यत आह । नित्यमिति । **नित्यं** सार्वकालीनं **निर्मलविग्रहं** निर्दोषचिदानन्दाद्यात्मकशरीरम् ।

---

१ तैत्तिरियोपनिषत्

अनेन पूर्वोक्तसकलदोषविरहः सूचितः । निजवशं भक्ताधीनं नीलोत्पलवत् श्यामलं प्रेष्ठं परमप्रेमास्पदं व्रजवधूतृष्णासमुज्जृम्भकं विठ्ठलं कृष्णं संस्मर ॥ २५ ॥

**हृद्येतः क्व गतोऽसि नाथ मृगयां कर्तुं कथं सा प्रभो-**
**रद्यैवाङ्कुरितान्तरे परिलसत्कुम्भीन्द्रकुम्भत्विषि ।**
**लुब्धान् केसरिणस्तव स्तनतटे स्पर्धायुतांश्च द्विपान्**
**मुग्धे वेद्धुमितीरयन् मुररिपुर्बुद्धिं स दद्यान्मम ॥ २६ ॥**

**व्या :** इदानीं प्राकृतापराधं सूचयन्तीषु गोपीषु तत्परिहारचातुर्यं वर्णयति। [1]हृद्येति। हे हृद्य **नाथ** कृष्ण इतः अस्मन्निकटात् **क्व** कुत्र **गतोऽसि** । हे **मुग्धे मृगयां कर्तुं** गतोऽस्मि । सा मृगया **प्रभोः** समर्थस्य तवान्तरे चित्ते अद्यैवास्मदागमनकाल एव कथम**ङ्कुरिता** उत्पन्ना । अद्यैवेति वदन्त्या अस्मद्वञ्चनार्थमेवं वदसीति हृदयम् । तदेव कारणीकृत्य कृष्णः प्रतिवक्ति ।

---

१ अङ्गुल्या कः कवाटं प्रहरति कुटिले माधवः किं वसन्तो
नो चक्री किं कुलालो नहि धरणिधरः किं द्विजिह्वः फणीन्द्रः ।
नाहं घोराहिमर्दी खगपतिरसि किं नो हरिः किं कपीन्द्र-
स्त्वित्येवं गोपकन्याप्रतिवचनजडः पातु मां पद्मनाभः ॥
कृष्ण त्वं क्व गतोऽसि चाद्य मृगयासक्तो वनान्तं गतो
गन्धोऽन्यो वनपुष्पजः श्रमजलं घर्मक्षतं कण्टकैः ।
अस्त्वेवं मृगया तु केनचिदहो दष्टोऽधरो दृश्यते
शङ्कापूरणमत्र कारणमिदं कुर्यां प्रमाणानि ते ॥
अम्भस्ते शयनीयमेतदुदधेर्लीलोपधानं फणी
त्वत्तेजःपरमाणुरेष दहनो भृत्याः समस्ताः सुराः ।
कुक्षिन्यस्तसमस्तभारजगतः किं स्यात् तुलारोपणे
व्यर्थं वाच्यमिदं स्त्रियोपहसितः स्मेरो हरिः पातु नः ॥

-इति श्रीवादिराजपूज्यचरणकृत-उक्तिप्रत्युक्तिस्तोत्रम् ।

परिलसतः शोभमानस्य **कुम्भीन्द्रकुम्भस्य** गजेन्द्रमूर्धाग्रस्य त्विडिव त्विट् कान्तिर्यस्य तस्मिंस्तव **स्तनतटे लुब्धान्** स्वसाध्यबुद्ध्या लालसान् **केसरिणः** सिंहान् **स्पर्धायुतान्** प्रतिगजबुद्ध्या मत्सरोपेतान् **द्विपांश्च** गजांश्च **वेद्धुं** शरेण हन्तुं **इतीरयन्** कथयन् **स मुररिपुः** कृष्णः **मम बुद्धिं दद्यात्** ॥ २६ ॥

**साजात्येन वराहसिंहनिवहं साम्येन ते चक्षुषोः**
**सारङ्गान् विधुगर्वशङ्क्यपि शशान् नाम्ना शिखण्डिव्रजम् ।**
**त्वत्पुष्पाञ्चितकेशहस्ततुलया सन्त्यज्य सख्यागमं**
**कृत्वा त्वद्दुरिते मृगाक्षि मृगयामित्यालपन् पात्वसौ ॥ २७ ॥**

**व्या :** तर्ह्यमोघव्यापारस्य तव मृगयालब्धं वस्तु किमित्यत आह । **साजात्येनेति** । हे सखि **वराहाणां सिंहानां निवहं** समूहं **साजात्येन** मत्समानजातितया स्वस्य वराहनरसिंहाख्यरूपद्वयसद्भावात् सजातिहननं निषिद्धमिति सन्त्यज्य परित्यज्य **सारङ्गान्** कुरङ्गान् **ते** तव **चक्षुषोः साम्येन** सादृश्येन प्रियासदृशवस्तुनः प्रेमास्पदत्वात् सन्त्यज्य **विधो**श्चन्द्रस्य **गर्व**शङ्की अहङ्कारशङ्की **शशानपि** सन्त्यज्य एकं काकासुरं लक्षीकृत्य शरप्रयोगेऽपि सकलकाकानां [१]तत्फलभोगवत् एकं शशं लक्षीकृत्य शरे प्रयुक्ते चन्द्रकलङ्कापादकशशस्यापि विनाशमाशङ्क्येति भावः । **शिखण्डिव्रजं** मयूरसमूहं **नाम्ना** शिखण्डिनाम्ना । नहि वीरेण शिखण्डी हन्तुं योग्य इति भावः । **त्वत्पुष्पाञ्चितकेशहस्ततुलया** तव पुष्पालङ्कृतकेश-समूहसादृश्येन रतिविगलितबन्धपुष्पालङ्कृतप्रियाकेशपाशस्य बर्हाणां साम्यादिति भावः । **सन्त्यज्य** हे **मृगाक्षि त्वद्दुरिते** तव मत्सङ्गप्रतिबन्धकीभूतानिष्टे **मृगयां कृत्वा** । अनेनामोघव्यापारत्वं समाहितं भवति । आगमं अत्रागतोऽस्मीत्यनेन प्रकारेण **आलपन्** वदन् **असौ** कृष्णः **पातु** रक्षतु ॥ २७ ॥

---

१ स वायसानामसुरोऽखिलानां वरादुमेशस्य बभूव साक्षिगः ।
निपातितोऽसौ सह वायसाक्षिभिस्तृणेन रामस्य बभूव भस्मसात् ॥
- म.भा.ता.नि.(५/१३)

**कस्मान्नाथ विहाय नस्त्वमगमः कर्तुं भवन्मार्गणं**
**वृक्षाभ्यन्तरवर्तिचन्द्रमहसो युष्मान् शुकौघाक्षरात् ।**
**युष्मन्मञ्जुगिरः पिकौघनिनदान्मुग्धा भवत्सुस्वरा-**
**नज्ञात्वा पृथगित्युदीर्य शमयन् सौख्यं स दद्यान्मम ॥२८॥**

**व्या :** एकां प्रत्युक्त्वा इदानीं सर्वाः प्रत्याह । **कस्मादिति** । हे **नाथ** कृष्ण **नः** अस्मान् विहाय त्यक्त्वा **कस्मात्** कारणादगमः अन्यत्रागच्छः । इति सर्वासां वचनं प्रत्याह । हे **मुग्धाः वृक्षाभ्यन्तरवर्तिचन्द्रमहसः** सकाशात् युष्मान् पृथक् पार्थक्येनाज्ञात्वा । पत्रान्तरपतितचन्द्रकिरणानां मनुष्यपरिमाणेन तत्र तत्र परिच्छिन्नत्वेन गोपीवत् प्रतीतेः धम्मिल्लस्य च समीपस्थपत्रच्छायोपमितत्वेन पृथगज्ञानमिति भावः । अत एव वृक्षाभ्यन्तरवर्तीत्युक्तम् । **शुकौघाक्षरात्** कीरसमूहोक्तवचनात् **युष्मन्मञ्जुगिरः** भवन्मनोहरवचनानि पृथग अज्ञात्वा **पिकौघनिनदात् भवत्सुस्वरान्पृथगज्ञात्वा भवन्मार्गणं कर्तुमगममित्युदीर्य** शमयन् दुःखरहिताः कुर्वन् **स** कृष्णः **मम सौख्यं** दद्यात् ॥ २८ ॥

**दन्तक्षतस्फुरितगण्डरुचः कराब्ज-**
**सम्बद्धमध्यमधुराः कुचकुम्भपार्श्वे ।**
**सञ्जातमञ्जुलनखव्रणरञ्जितास्ताः**
**सान्द्रापराधफलमापुरिवेन्दुमुख्यः॥२९॥**

**व्या :** दन्तक्षतेति । दन्तक्षतेन **स्फुरितस्य** शोभितस्य **गण्डस्य** कपोलस्य **रुक्** कान्तिर्यासां ताः **कराब्जेन** कृष्णकराब्जेन **सम्यक्** बद्धमध्यास्तेन **मधुराः कुचकुम्भयोः पार्श्वे सञ्जातानि मञ्जुलानि नखव्रणानि तैरञ्जिताः इन्दुमुख्यः** स्त्रियः **सान्द्रस्य** दृढस्यापराधस्याहङ्काररूपस्य **फलम् आपुरिव** । अपराधिनमपि दंशनबन्धननखताडनादिना शिक्षन्ति तद्वदिति भावः ॥ २९ ॥

**परभृतमधुपाद्यैः सेवितो गन्धलुब्धैः**
**करपदधरहासापाङ्गतुङ्गेषुसङ्गः ।**
**सुललितवनमालाकार्मुकांसो विरेजे**
**स्मर इव वररूपी दृप्तयोषित्सहायः ॥ ३० ॥**

**व्या :** परभृतेति । **गन्धलुब्धैः परभृतः** कोकिलः **मधुपो** भृङ्गः तावेवाद्यौ येषां तैः शुकादिभिः **सेवितः** परिसेवितः **करश्च पच्च अधरश्च हासश्चापाङ्गश्च** त एव **तुङ्गा इषवः** अशोकारविन्दचूतमल्लिकानीलोत्पलाख्याः तेषां **सङ्गो** यस्य सः कृष्णस्य कराद्यवयवाः तथा चित्ताकर्षकरा इत्यत इषव इवेत्युक्तम् । **सुललितवनमालैव कार्मुकं** पौष्पं धनुः **अंसे** यस्य सः **दृप्ताः योषितः** स्त्रिय एव सहायो यस्य सः कृष्णः **वररूपी स्मर इव** काम इव **विरेजे** ॥ ३० ॥

**नालीकागारमारत्रिपुरहरमुखैर्गीयमानाऽम्बरस्थै-**
**र्मालालङ्कारकान्त्या विघटितहृदयग्रन्थिरिन्दीवराभा ।**
**कालिन्दीतीरसंस्था करधृतमुरली कामिनीकेलिलोला**
**लीलापाङ्गावलोका लसतु मम हृदि प्रेयसी देवता सा ॥३१॥**

**व्या :** नालीकेति । **नालीकं** पद्मं तदेवा**गारं** गृहं यस्य चतुर्मुखस्य स तथोक्तः । 'नालीकं पद्मबाणयोः' इत्यमरः । **मारः** कामः **त्रिपुरहरः** पुरत्रयजेता शिवः ते **मुखं** येषां तैर**म्बरस्थै**र्गगनस्थैर्देवै**र्गीयमाना** । **मालाया:** वनमालायाः **अलङ्कारस्य** कुण्डलादेः **कान्त्या विघटितः** विमोचितः **हृदयग्रन्थिः** कञ्चुकग्रन्थिः । मनोरमपुरुषदर्शने कञ्चुकग्रन्थिर्विभिद्यत इति प्रसिद्धिः । अविद्याग्रन्थिरिति ध्वनिः। **इन्दीवरस्याभेवाभा** यस्याः सा **कालिन्दीतीरसंस्था** । अनेन रासक्रीडास्थलात् यमुनातीरं प्रत्यागत इति सूचितम् । **करेण धृता मुरली** वेणुर्यया सा **कामिनीनां केलिः** क्रीडा तस्यां **लोला** सतृष्णा । **लीलापाङ्गावलोका प्रेयसी** परमप्रिया **सा देवता** कृष्णाख्या **मम हृदि** चित्ते **लसतु** ॥ ३१ ॥

**लीलासङ्गीतमञ्जुस्तनितकृतरुचिः पुष्टिहेतुः स्रवन्त्याः**
**सालोक्याद्यम्बुवर्षी निजतनुमहसाऽऽच्छादितार्कोडुराजः ।**
**बालानेत्रोत्सवश्रीर्जयति सुरवरस्तोमहृव्द्योमधामा**
**[1]नीलाम्भोदोपमोऽसौ वरवसनतटित्सान्द्रमाल्येन्द्रचापः॥३२॥**

**व्या :** लीलेति । लीलया विलासेन कृतं **सङ्गीतं** गानं तदेव **मञ्जु** मनोहरं **स्तनितं** मेघनिर्घोषस्तेन **कृता रुचिः** कान्तिर्यस्य सः **स्रवन्त्याः** निम्नगायाः **पुष्टिहेतुः**। **स्रवन्ती** निम्नगापगेत्यमरः । कृष्णपादस्पर्शार्थं स्रोतोनिवृत्त्या यमुनायाः अभिवृद्धिर्जातेति हि भागवती प्रसिद्धिः । **सालोक्यसामीप्यादि-** कमेवाम्बु तापापनोदित्वाज्जलं वर्षतीत्यम्बुवर्षी तथोक्तः । **निजतनुमहसा** स्वशरीरकान्त्या **आच्छादितौ** तिरस्कृतौ **अर्कोडुराजौ** सूर्यचन्द्रौ येन ततोऽ-प्यधिककान्तिरित्यर्थः। **बालानां** गोपीनां **नेत्राणाम्** **उत्सव** एव **श्रीर्यस्य** सः । **सुरवराणां स्तोमस्य** समूहस्य **हृव्द्योम** हृदयाकाशमेव **धाम** गृहं यस्य सः । **वरं वसनं** पीताम्बरमेव **तटित्** यस्य सः । **सान्द्र**नानापुष्पैः निबिडं **माल्यमेवेन्द्रचापं** यस्य सः । अत एव **नीलाम्भोदोपमः असौ** कृष्णः जयति । अनेन कृष्णे तीरं प्रत्यागते यमुनायाः हर्षोद्रेकेणाभिवृद्धिर्जातेति सूचितम् ॥३२॥

**यमुनाजघननिवासं कमनीयं ब्रह्म कामिनीकलितम् ।**
**शमयत्वघं मदीयं विमृशद्योगीशचेतसो दूरम् ॥ ३३ ॥**

**व्या :** यमुनेति । **यमुनायाः जघने** तटे **निवसतीति** तथोक्तः तम् । **कमनीयं** मनोहरम् । **कामिनीभिः** स्त्रीभिः **कलितं** ज्ञातम् । **विमृशतां** विचारयतां

---

१ काव्योद्गीतकथः शरौघकरकावर्षैः स कृष्णाम्बुदो ... (१४/१२)
भवघर्मभवार्तिघ्नः स मठः सेव्यतां सता ।
कृष्णद्वैपायनघनो यत्रागाद्वायुवर्त्मना ॥ - तीर्थप्रबन्धे (१/२७)
शमयन् भवसन्तापं रमयन् साधुचातकान् ।
कृष्णमेघः कृपादृष्टिवृष्ट्या पुष्णातु मामपि ॥ - श्रीव्यासराजकृततात्पर्यचन्द्रिकायाम्

योगीशानां चेतसः चित्तस्य [१]दूरं ब्रह्म कृष्णाख्यं परम्ब्रह्म मदीयमघं शमयतु। आर्यावृत्तम्॥ ३३॥

**श्रान्तालिभिः परिवृतोऽम्भसि गाहमानः**
**कान्ताकरेणुसहितः कनकोज्ज्वलाङ्गः।**
**प्रान्तस्थिताब्जचयचुम्बिकरो मुकुन्द-**
**दन्ती निकृन्ततु ममान्तरमोहमोचाः॥ ३४॥**

**व्या : श्रान्तेति। श्रान्तैः** गन्धलोभेन दूरमनुगमनात् परिश्रान्तैः **अलिभिः परिवृतः।** दानलुब्धैरलिभिः परिवृत इत्यन्यत्र। **अम्भसि गाहमानः** अवगाहमानः। **कान्ताः** मनोहराः गोप्यः ता एव **करेणवः** करिण्यः ताभिः **सहितः। कनकोज्ज्वलाङ्गः** स्वर्णालङ्कृतावयवः। **प्रान्ते** समीपे **स्थितानामब्जानां चयं चुम्बतीति** तथोक्तः। **करो** हस्ते यस्य सः। अन्यत्र शुण्डा यस्येति। **मुकुन्ददन्ती** कृष्णाख्यगजः **ममान्तरे** मम हृदये विद्यमानाः **मोहमोचाः** मोहाख्यकदलीः। रम्भा कदली मोचेति हलः। **निकृन्ततु** छिनत्तु। कृती छेदन इति धातुः॥ ३४॥

**अभिगतिजलदानप्रेमसंश्लेषवेगात्**
**प्रकटितकुचभागा दृश्यमानोरुदेशाः।**
**कचविगलितमाल्याः सङ्गतैरङ्गरागैः**
**सरितमपि सरागां चक्रुरासां किमन्ये॥ ३५॥**

**व्या :** जलक्रीडां वर्णयति। **अभिगतीति। अभिगतिः** आभिमुख्येन गमनं **जलदानं** जलप्रक्षेपः **प्रेमसंश्लोषः** प्रेमालिङ्गनं तेषां **वेगात्** भरात् **प्रकटितः कुचयोर्भागः** यासां ताः। **दृश्यमानः ऊरुदेशो** यासां ताः। **कचात्** कबरीभरात् **विगलितानि माल्यानि** यासां ताः गोप्यः **सङ्गतैः** जलसंयुक्तैः क्षालितैरित्यर्थः। **अङ्गरागैः** कुङ्कुमाद्यनुलेपनैः **सरितमपि** यमुनानदीमपि। अपिपदेन रसानभिज्ञत्वमभिप्रैति। स्त्रीलिङ्गपदप्रयोगेन स्त्रीत्वं च। तथा च रसानभिज्ञां

१ 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह'। इति तैत्तिरीयोपनिषत् (२/९)

स्वसमानजातीयां स्त्रियमपीत्यर्थः । सरागां रक्तिम्ना सहिताम् । सकामामिति ध्वनिः । चक्रुः । आसाम् अन्ये पुरुषाः किं न किमपीत्यर्थः ॥ ३५ ॥

**सत्कैरवास्यविभवोत्पललोलनेत्रा**
**व्यक्तस्तनाभमधुपाङ्कितपद्मकोशा ।**
**आवर्तनाभिरुचिरा यमुनोर्मिहस्ता**
**गोपीव लक्ष्यजघनाऽस्ति सुफेनहासा ॥ ३६ ॥**

**व्या :** सत्कैरवेति । सद्विकसितं कैरवं रक्तोत्पलमेवास्यं तस्य **विभवः** सम्पत् यस्याः सा तथोक्ता । उत्पलमेव नीलोत्पलमेव **लोलं** चञ्चलं **नेत्रं** यस्याः सा । व्यक्तस्य प्रकटीभूतस्य स्तनस्याभेवाभा यस्य सः **मधुपेन अङ्कितश्चिह्नितः** पद्मकोशो यस्याः सा । **आवर्त** एव भ्रम एव **नाभिस्तेन रुचिरा** मनोहरा ऊर्मिस्तरङ्ग एव **हस्तो** यस्याः सा । **लक्ष्यजघना** दृश्यतीरा । दृश्यनितम्बाऽन्यत्र । **सुफेन** एव **हासो** यस्याः सा । **यमुना गोपीवास्ति** ॥ ३६ ॥

**गाढालिङ्गितवल्लभामधिजलं निःशब्दभूषावली-**
**मब्जास्यामविमृश्य काऽप्युपगता सीत्कारनादश्रुतेः ।**
**क्रुद्धा भ्रूदृढचापलग्ननयनप्रान्तेषुपातात् पुरा**
**कृष्णेनापररूपिणा शशिमुखी साम्ना समालिङ्गिता ॥ ३७ ॥**

**व्या :** गाढेति । **अधिजलं** जलमध्ये आकण्ठोदक इत्यर्थः । अनेन मुखातिरिक्तावयवादर्शने हेतुरुक्तो भवति । **गाढं** दृढमालिङ्गितो **वल्लभः** प्रियः कृष्णः यया ताम् । अत एव **निःशब्दभूषावलीं अब्जास्यां** अब्जमुखीम् । अनेन जलस्थिताब्जभ्रान्त्या मुखस्याप्यज्ञानं सूचितम् । एतादृशीं गोपीम**विमृश्या**ज्ञात्वा **उपगता** तयाऽऽलिङ्गितकृष्णस्य समीपं विलासं कर्तुं प्राप्ता **काऽप्यन्या** गोपी तदा **सीत्कारनादश्रुतेः** । तया क्रियमाणकृष्णाधरचुम्बनशब्दश्रवणात् सपत्नीवशं कृष्णं ज्ञात्वा **क्रुद्धा शशिमुखी भ्रूदृढचापे लग्नः नयनप्रान्त** एव कटाक्ष एवेषुः

शरः तस्य पातात् पूर्वं कुपितायाः निबद्धभ्रुकुट्याऽवलोकनात् पूर्वमित्यर्थः । अपररूपिणा रूपान्तरवता कृष्णेन साम्ना सामोक्त्या समालिङ्गिता ॥ ३७ ॥

**करधृतदृतितोयैः स्नापयित्वा मुकुन्दं**
**कुचतटगतगन्धालिप्तमालिङ्ग्य कृत्वा ।**
**शिरसि निहितमाल्यैरर्च्यमानर्चुरेनं**
**गतिमिव यतियोग्यां साधयन्त्योऽबलास्ताः ॥ ३८ ॥**

**व्या :** करधृतेति । करधृतानां दृतीनां सेचनचर्मपात्राणां तोयैरुदकैः मुकुन्दं स्नापयित्वा आलिङ्ग्य कुचतटे गतः सम्बद्धः गन्धः तेन लिप्तं कृत्वा यतियोग्यां सन्यासियोग्यां गतिं मुक्तिमित्यर्थः । साधयन्त्य इव ताः अवलाः गोप्यः शिरसि निहितमाल्यैः पुष्पैरर्च्यमेनं कृष्णम् आनर्चुः अर्चयामासुः । मुमुक्षवोऽपि स्नापनगन्धमाल्याद्यैरर्चयन्ति ॥ ३८ ॥

**सिक्तोऽपि रम्यललनाकरपद्मपत्रैर्भृत्यामरावलिसमर्पितपुष्पपुञ्जे ।**
**विस्तीर्णरेणुनिकरं दधदात्मनोऽङ्के हस्तीश्वरप्रकृतिमार्जयदेष देवः ॥**

**व्या :** सिक्त इति । रम्यललनानां करा एव पद्मपत्राणि तैः सिक्तोऽपि स्नापितोऽपि भृत्यानाममराणामावल्या समर्पितपुष्पाणां पुञ्जे विस्तीर्णानां रेणूनां पुष्परजसां निकरं समूहम् आत्मनोऽङ्के दधत् देवः कृष्णः उन्मज्जनानन्तरं समये समये सुरवृष्टपुष्परजसा दिग्धाङ्ग इत्यर्थः । हस्तीश्वरस्य गजराजस्य प्रकृतिं स्वभावमार्जयत् अर्जितवान् । प्राप्तवानित्यर्थः । पूर्वं गजत्वेन कृतवर्णनं गुणोचितमभूदित्यर्थः । गजोऽपि स्नानानन्तरं पुनः पांसुदिग्धो भवतीति गजस्वभावः ।

''क्वचिन्निवर्तते भद्रात् क्व चाचरति तत् पुनः ।
प्रायश्चित्तमतोऽपार्थं मन्ये कुञ्जरशौचवत् ॥''[१] इत्यादौ प्रसिद्धिः ॥३९॥

---

१ भागवते ६/१/१०

**द्विरेफशावाङ्कितशोभिवक्त्रं कृतक्षतं सुस्वरराजहंसैः ।**
**मनोरमं सारसकोशमेका घनस्तनस्पर्धि चकर्त बाला ॥४०॥**

**व्या :** इदानीं पुष्पापचयं वर्णयति । द्विरेफेति । **द्विरेफस्य** भ्रमरस्य **शावेन** शिशुना **अङ्कितं शोभि वक्त्रं** यस्य तत् । **सुस्वरराजहंसैः** शोभनः स्वरो येषां तैः राजहंसैः । मधुरवचनकृष्णमूर्तिभिरिति ध्वनिः । **कृतक्षतं सारसकोशं** कमलकोशमेका बाला घनस्तनस्पर्धि दृष्ट्वा चकर्त अलुनात् ॥ ४० ॥

**माद्यद्द्विरेफैः कृतगीतजातं पद्मासनेष्टं पवनेन जुष्टम् ।**
**पद्मं सुगन्धि न्यलुनात् सपत्नीसद्माभिशङ्क्येव मुकुन्दयोग्यम् ॥४१॥**

**व्या :** माद्यदिति । **माद्यद्द्विरेफैः** मत्तद्विरेफैः **कृतं गीतजातं** गीतसमूहो यस्मिन् । श्रीमतां गेहं तादृशं हि । अब्जासनस्य ब्रह्मणः **इष्टं पवनेन** वायुना **जुष्टं** सेवितं लक्ष्मीगृहमिति पुत्रयोरेतयोरिष्टं **सुगन्धि** शोभनगन्धयुक्तं **पद्मं मुकुन्दयोग्यं** कृष्णयोग्यं **सपत्न्याः** लक्ष्म्याः **सद्म** गृहम् । लक्ष्म्याः पद्मालयत्वात् **अभिशङ्क्येव न्यलुनात्** ॥ ४१ ॥

**श्रीपतेरधरसीत्कृतिकाले गोपिकेक्षयति मामितरेति ।**
**कोपतप्तहृदयेव सरागं कापि कोकनदमेत्य जहार ॥ ४२ ॥**

**व्या :** श्रीपतेरिति । **श्रीपतेः** कृष्णस्य **अधरसीत्कृतिकाले** अधरचुम्बनकाले **इतरा गोपिका मामीक्षयति** पश्यतीति **कोपतप्तहृदयेव कापि** गोपी **एत्य** गत्वा **सरागं** रागसहितम् । कामवशादनुरागसहितमिति ध्वनिः । **कोकनदं** रक्तोत्पलं **जहार** अपहृतवती । **स्वागतावृत्तम्** । 'स्वागतेति रनभाद्गुरुयुग्मम्'[१] ॥ ४२ ॥

**दृप्तभृङ्गसदपाङ्गविलोलं सत्सरोजमलुनात् किल काचित् ।**
**सीत्करिष्यति हरिः स मदीयं वक्त्रमेतदिति भीतियुतेव ॥४३॥**

---

१ इति वृत्तरत्नाकरे (३/४०)

**व्या :** दृप्तभृङ्गेति । दृप्तभृङ्ग एव सदपाङ्गः तेन विलोलं चञ्चलं सत्सरोजं काचिन्नारी स हरिः कृष्णः एतत् पद्मं मदीयं वक्त्रमिति सीत्करिष्यति चुम्बिष्यतीति भीतियुतेव अलुनात् चकर्त ।। ४३ ।।

**आकण्ठमम्भसि गतस्य हरेर्मनोज्ञमास्यं समीपगसखीजनजातलज्जा ।**
**नीलोत्पलं विलसदेतदधीरभृङ्गमाताम्रकेसरमिति प्रवदन्त्यजिघ्रत् ।।४४।।**

**व्या :** आकण्ठमिति । आकण्ठम् अम्भसि गतस्य हरेः कृष्णस्य मनोज्ञम् आस्यं समीपगात् सखीजनाज्ज्ञातलज्जा काचित् अधीरौ चञ्चलौ भृङ्गौ यस्य कटाक्षरूपकमेतत् । आताम्रकेसरम् ईषद्रक्तकिञ्जल्कयुक्तं विम्बोष्ठरूपकमेतत्। अनेनान्याचुम्बितत्वं लज्जाकारणं सूच्यते । एतत् दृश्यमानं नीलोत्पलमिति प्रवदन्ती सती अजिघ्रत् आघ्रातवती । अन्याचुम्बितमपि कृष्णाधरं त्यक्तुमसमर्था नीलोत्पलबुद्ध्येवाघ्रातवती न तु सापराधस्य कृष्णस्य मुखमिति स्वमानं रक्षितवतीति भावः । अन्यत् स्पष्टम् ।। ४४ ।।

**आर्यायाहि गृहं त्वया विरहितं सन्त्यज्य सा सत्वरा**
**द्वार्यास्ते न पुनर्विविक्षति तनुं त्वद्योगहीनामिव ।**
**चित्तं त्वच्चरणे निधाय विवशा चित्रार्पितेव प्रभो**
**नो चेत् तत् तनुशाखिनेश भवनं स्यादेव तत् काननम् ।।४५।।**

**व्या :** इदानीं व्रजस्थानां गोपीनां दूतीप्रेषणादिना कृष्णं स्वगृहमानीय तेन सह विलासप्रकारं दर्शयति । आर्येति । हे आर्य श्रेष्ठ कृष्ण आयाहि आगच्छ । त्वया रहितं गृहं सन्त्यज्य सत्वरा त्वरया सहिता सा तव नायिका त्वच्चरणे चित्तं निधाय विवशा सती चित्रार्पितेव चित्रलिखितेव द्वारि गृहद्वारि त्वदागमनदर्शनोत्सुका आस्ते तिष्ठति । त्वद्योगहीनां तवालिङ्गनादिसम्बन्धरहितां तनुमिव पुनस्तद्गृहं न विविक्षति न प्रवेष्टुमिच्छति । तनुमिवेति दृष्टान्तेन कृष्णस्यानागमने तस्या

मरणमेव हि निरणायि । हे ईश प्रभो कृष्ण नो चेत् तस्याः नायिकायाः तनुरेव शाखी वृक्षः निश्चेष्टत्वात् तेन तद्भवनं तस्याः गृहं काननमेव स्यात् । अनेन दूत्या स्वस्या अप्यप्रवेशः सूचितः ॥४५॥

**निर्यान्ती प्रविशन्त्यदो गृहमसौ प्रत्याक्षिपन्ती मम**
**प्रेमालापमपि श्वसन्त्युरुशुचा हस्ते निवेश्याननम् ।**
**पश्यन्ती तव वर्त्म साश्रुनयना मां याचमाना मुहु-**
**र्मोहं क्वापि वहन्त्यसौ न सदयं कस्येश कुर्यान्मनः ॥ ४६ ॥**

**व्या :** निर्यान्तीति । हे ईश कृष्ण अदो गृहं प्रविशन्ती निर्यान्ती । च तदा मम प्रेमालापमपि त्वदागमनविषयकप्रियवचनमपि प्रत्याक्षिपन्ती निराकुर्वन्ती क्वापि कर्हिंचित् आननं हस्ते पाणौ निवेश्य उरुशुचा अतीव दुःखेन श्वसन्ती तव वर्त्म मार्गं पश्यन्ती साश्रुनयना सती मुहुः मां याचमाना क्वापि कदाचित् मोहं भ्रान्त्यवस्थां वहन्ती असौ तव नायिका कस्य पश्यतः प्राणितः मनः सदयं दयासहितं दयार्द्रमित्यर्थः । न कुर्यात् कुर्यादेवेत्यर्थः ॥ ४६ ॥

**सायं हीन न हीयं सा मारतात तता रमा ।**
**क्षीणाऽदेववदेणाक्षी चारुराज जरारुचा ॥ ४७ ॥**

**व्या :** सायं हीति । मारस्य कामस्य तात पितः अत एव चारुराज मनोहरश्रेष्ठ इन स्वामिन् कृष्ण इदानीं सायं हि सायंकालो हि रतिकालो हीत्यर्थः । इयं गोपी सा प्रसिद्धा तता व्याप्ता रमा नहि । येन तवानागमनेऽपि इहैव त्वत्सङ्गेन सन्तुष्टा स्यात् । एणाक्षी हरिणलोचना गोपी जरया प्राप्ता अरुक् अकान्तिः तया जरैव रुक् रोगः तयेति वा अत एवादेववत् मनुष्यवत् यथा मानुषः जरया प्रशिथिलो भवति तद्वदित्यर्थः । क्षीणा शिथिलाङ्गी जाता । गतागतयमकमिदम् ॥४७॥

**इत्थं निगद्य निगमाकलितं नयन्ति दूत्यो वितानमणिशोभिगृहं निशासु।**
**नृत्तन्मयूरशुककोकिलमत्तभृङ्गतत्याद्दतोपवनवासितमङ्गनायाः ॥ ४८ ॥**

**व्या :** इत्थमिति। दूत्यः इत्थमनेन प्रकारेण **निगद्योक्त्वा नृत्यन्तो मयूराः शुकाः कोकिलाः मत्तभृङ्गाश्च** तेषां ततिः समूहः तया आद्दतम् उपवनं गृहारामः तेन **वासितं** सुरभीकृतम् **अङ्गनायाः** स्वसख्याः गोप्याः **वितानैः** उल्लोचैः **मणिभिः शोभिगृहम्**। **निगमाकलितं** वेदेनाप्यज्ञेयं कृष्णं **निशासु नयन्ति** ॥ ४८ ॥

**नेत्रानन्दजलेन मञ्जुकलशप्रख्यस्तनस्थायिना**
**पाद्यार्घ्ये हिमवारिणेव मधुभिः स्नानं प्रसूनसृतैः।**
**आश्लिष्याङ्गकलापरम्यतिलकश्रीखण्डलेपांश्च सा**
**लोलेक्षोत्पलमाल्यमोष्ठजसुधां प्रादात् प्रियेऽभ्यागते ॥४९॥**

**व्या : नेत्रेति। सा** गोपी **प्रिये** कृष्णे **अभ्यागते** सति **मञ्जुकलशप्रख्यौ** मनोहरपूर्णकुम्भसमानौ **स्तनौ** तत्र **स्थायिना स्थितेन** स्तनयोर्निरन्तरत्वात् स्तनाधः अपतितेनेत्यर्थः। **नेत्रानन्दजलेन** नयनानन्दवारिणा **हिमवारिणेव पाद्यार्घ्ये** पादे दीयमानं जलं पाद्यं हस्ते दीयमानं जलमर्घ्यं तदुभयमित्यर्थः। अनेन कृष्णस्य गमनकाल एव गोपी तत्पादावभिवन्द्य प्रेम्णा स्वस्तनयोः कृष्णकरौ स्थापितवती तेन च करेण तस्याः स्तनस्पर्शः कृत इति द्योत्यते। स्त्रीपुंसुयोः प्राथमिकौ हीमौ विलासौ पूजायामपि हीमौ प्राथमिकावुपचारौ **प्रसूनस्रुतैः** पुष्पेभ्यः स्रवद्भिः मधुभिर्मकरन्दैः **स्नानम्**। अनेन कृष्णमौलौ पुष्पैरलङ्कृतिः कण्ठे पुष्पमालासमर्पणं पुष्पवृष्टिश्च द्योत्यते। **आश्लिष्य** कृष्णमालिङ्ग्य **अङ्गकलापः** स्वाङ्गस्थालङ्कारः नीलमेघश्यामस्य तस्य तटित्प्रभः स्वाङ्गमेवालङ्कारो वा **रम्यतिलकः** कस्तूरीतिलकः **श्रीखण्डलेपः** स्ववक्षःस्थलचर्चितचन्दनलेपः तान्। अनेन कृष्णमलङ्कृत्य तच्छेषेण स्वालङ्करणमपि द्योत्यते। **लोला** चञ्चला ईक्षा अवलोकनमेवोत्पलमाल्यं नीलोत्पलमाल्यम् असितापाङ्गत्वात्।

अनेन पादमारभ्य कण्ठपर्यन्तं तस्याः कृष्णावयवसौन्दर्यावलोकनं द्योत्यते । **ओष्ठजसुधाम्** अधरामृतञ्च **प्रादात्** कृष्णायादिशत् । अनेन श्रुङ्गारविलासाः नैवेद्यान्तोपचाराश्च दर्शिता भवन्ति ॥ ४९ ॥

**कान्ताननद्युतिनिवृत्तकटाक्षगण्ड-**
**बिम्बोष्ठरम्यरुचिभिर्मिलिता स्मितश्रीः ।**
**इन्दीवराम्बुरुहकोकनदैः सुगन्धि**
**सान्द्रं तयाऽनुकुरुते मधु पीयमानम् ॥ ५० ॥**

**व्या**ः कान्तेति । **कान्त**स्य कृष्णस्य **आननद्युतिभिः** श्रीमुखकान्तिभिः **निवृत्ताभिः** चुम्बनकाले तदभिभूततया परावृत्ताभिः **कटाक्ष**श्च नीलोत्पलदलस्थानीयः **गण्डः** कमलदलस्थानीयः कपोलः **बिम्बोष्ठः** कोकनदस्थानीयः अधरः तेषां **रम्याभिः** रुचिभिः कान्तिभिर्मिलिता मिश्रिता **स्मितश्रीः** मदिरस्थानीया गोपीमुखस्य मन्दहासकान्तिः **इन्दीवरं** नीलोत्पलम् **अम्बुरुहञ्च** **कोकनदं** रक्तोत्पलञ्च **तैः** **सुगन्धि** **तया** गोप्या **पीयमानं** **सान्द्रं** **मधु** मद्यं **अनुकुरुते** अनुकरोति । तत्साम्यं भजतीत्यर्थः । अनेन काव्ये वर्णनीयं [१]मधुपानं वस्तुतोऽभावादौत्प्रेक्षिकं वर्णितं भवति ॥ ५० ॥

**विष्वग्व्यापिमणिप्रभाभिधपयःसिन्धौ स्फुरन्मण्टप-**
**प्रख्ये वेश्मनि भोगिकल्पकशिपौ साकं व्रजस्त्रीजनैः ।**
**भित्तिश्रीपतिमौलिरत्नमहसोत्सर्पिस्वरत्नश्रिया**
**पुष्टोन्नम्रफणत्विषां मुषि लसंस्तुष्टोऽस्त्वसौ विठ्ठलः ॥५१॥**

**व्या** : विष्वगिति । **विष्वक्** समन्ताद्व्यापिनी **मणीनां** मुक्तामणीनां **प्रभा** भाः सैव **अभिधा** आख्या यस्य स चासौ **पयःसिन्धुः** क्षीरसमुद्रः तस्मिन् । गृहबहि-

१ नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः ।
उद्यानसलिलक्रीडामधुपानरसोत्सवैः ॥ - काव्यादर्शे (१/१६)

भित्तिखचितमौक्तिककान्तिः गृहं परितो व्यापिनी क्षीरसमुद्रवत् तिष्ठतीति भावः। **स्फुरतः** क्षीरसमुद्रमध्ये लसतः **मण्टपस्य** रत्नमयमण्टपस्य **प्रख्ये** समाने। **वेश्मनि।** रत्नमयभित्तेः **श्रीपतिमौलेः** अन्तःशयितकृष्णमुकुटस्य च **रत्नानां महसा** कान्त्या **उत्सर्पिणी** ऊर्ध्वं प्रसरन्ती **स्वरत्नश्रीः** कशिपुखचितरत्नकान्तिः। **भित्तिमुकुटकान्ती** उभयतो घनीभूते निर्भेत्तुमसमर्था ऊर्ध्वमेव लब्धावसरतया प्रसृतेत्यर्थः तया। **पुष्टोन्नम्रफणानां त्विषः** कान्तयः तासां **मुपि** अपहारिणि भोगिकल्पकशिपौ शेषसमानशय्यायाम्। 'अस्त्री कशिपु शय्यायाम्' इति रत्नमाला। **व्रजस्त्रीजनैः** साकं लसन् असौ विठ्ठलस्तुष्टोऽस्तु सन्तुष्टो भूयात्॥ ५१॥

**गोपी काचन धीरतां हृदि बलादालम्ब्य रत्युत्सुके**
**कोपेनेव निमील्य नेत्रयुगलं तल्पे शयाना सकृत्।**
**कान्तं निद्रितमाकलय्य शनकैरालिङ्ग्य बिम्बाधरं**
**सीत्कुर्वन्त्यथ वीक्षिताऽपि विवशा मानं न सस्मार सा॥५२॥**

**व्या :** गोपीति। काचन **गोपी।** रत्युत्सुके **हृदि बलात्** धीरतां धैर्यम् **आलम्ब्य कोपेनेव नेत्रयुगलम्** अन्तःस्नेहयुक्तत्वादेवेत्युक्तम्। **निमील्य तल्पे शयाना** सती **सकृ**देकवारं किञ्चित्कालमित्यर्थः। **कान्तं** कृष्णं **निद्रितम् आकलय्य** मत्वा **शनकैः** मन्दम् **आलिङ्ग्य विम्बाधरं सीत्कुर्वन्ती** चुम्बती **अथा**नन्तरं **वीक्षिताऽपि** कृष्णेन दृष्टाऽपि **विवशा** तत्सुखपरवशा **सा मानं** कोपं **न सस्मार** न स्मृतवती। चुम्बनं नैव त्यक्तवतीत्यर्थः॥ ५२॥

**गन्तुं कुत्र समुद्यतोऽसि तरुणि त्वद्धाम तत्पद्धतिः**
**किं तत्रास्ति मुकुन्द मानिनि तव स्वच्छोर्जिताभीशुना।**
**क्रान्तं द्वारमलक्षयन् कृशमिदं गात्रं च तस्यान्तरे**
**गन्तास्मीत्यभिधाय तन्मृदुकरं गृह्णन् स गृह्णातु माम्॥५३॥**

**व्या :** गन्तुमिति । हे **मुकुन्द** कृष्ण **कुत्र गन्तुमुद्यतोऽसि** इति स्वात्मानं वञ्चयित्वाऽन्यत्र गच्छन्तं कृष्णं प्रति एकस्याः गोप्याः वचनम् । हे **तरुणि कान्ते त्वद्धाम** तव गेहं गन्तुमुद्यतोऽस्मीति स्वकृतवञ्चनमाच्छादयतः कृष्णस्य वचनम् । तस्य मद्गृहस्य **पद्धतिः** मार्गः तत्र मद्गृहमतिक्रम्य ततोऽपि दूरेऽस्ति किमित्यपराधं स्थिरीकुर्वन्त्या वचनम् । हे **मानिनि** तव स्वच्छोर्जिताभीशुना निर्मलोत्कृष्टकान्त्या क्रान्तमाक्रान्तम् । **द्वारं** त्वद्गृहद्वारम् **अलक्षयन्** अपश्यन् तस्याभीशोः पुञ्जीभूतस्य अन्तरे मध्ये **कृशम्** इदं तव **गात्रं** शरीरञ्चालक्षयन् अहं गन्तास्मि न त्वन्यामुद्दिश्येत्यर्थः । इत्यभिधाय **तन्मृदुकरं गृह्णन्** कृष्णः मां गृह्णातु अङ्गीकरोतु ॥ ५३ ॥

**यद्यायासि रिरंसयेश महितं मद्धाम तर्ह्यध्वनि**
**स्निग्धां मामवलोक्य भीतपदवीं सद्योऽलभिष्टाः कुतः ।**
**उद्वीक्ष्य स्तनजृम्भिकुम्भयुगलं कुम्भीश्वराशङ्कया**
**पद्माक्षीति निगद्य सुस्मितमुखीं चुम्बन् स तां जृम्भते ॥५४॥**

**व्या :** यदीति । हे **ईश** कृष्ण **यदि रिरंसया** रन्तुमिच्छया । रमतेः सन्नन्तादाप्रत्ययः । महितमलङ्कृतं **मद्धाम** मम गृहं **आयासि** आगच्छसि **तर्हि अध्वनि** मार्गे स्नेहभरितामतिक्रम्य गच्छतः तव स्थापनार्थं पृष्टतः समागतां **मामवलोक्य** सद्यः तत्क्षणं भीतपदवीं भयग्रस्तस्य मार्गं **कुतः** कस्मात् **अलभिष्टाः** । भीतः कस्मादभूरित्यर्थः । इति पुनर्नायिकावचनम् । हे **पद्माक्षि** कञ्जनयने । तव स्तनावेव जृम्भिणौ कुम्भौ करिमस्तकोर्ध्वभागौ तयोर्युगलमुद्वीक्ष्य **कुम्भीश्वराशङ्कया** गजश्रेष्ठ एव पृष्ठतः समागतः इत्याशङ्क्य भीतपदवीं गतोऽस्मीति **निगद्य** उक्त्वा **सुस्मितमुखीम्** अपराधपरिहारव्याजेन स्वलावण्यस्यैव वर्णनात् स्मेराननां **तां** नायिकां **चुम्बन्** अतः परमपि कथञ्चित् स्वापराधमुद्धाटयिष्यतीति भिया वाग्बन्धनार्थं मुखमेव **चुम्बन् सः** कृष्णः **जृम्भते** प्रकाशते ॥ ५४ ॥

**अन्याचुम्बनजातचिह्नमधुना बिम्बाधरे दृश्यते**
**तन्मां रञ्जयसीश किं प्रियगिरा धन्याऽबला सैव हि ।**
**मन्यूद्रिक्तहृदा मुहुः सखि भवच्छून्यां सभां पश्यत-**
**स्तन्मेऽभूद्व्रणवर्णिनीति शमयन् मन्मानसे स्यादसौ ॥ ५५ ॥**

**व्या :** अन्येति । हे ईश कृष्ण अन्यया अपरया कृतम् आचुम्बनं तेन जातं चिह्नं दन्तक्षतरूपम् अधुना इदानीं तव बिम्बाधरे दृश्यते । तत् तस्मात् मां प्रियगिरा प्रियोक्त्या किं रञ्जयसि सांत्वयसि । सैवाबला धन्या कृतार्था हि । यया त्वमाचुम्बितः । वाग्बन्धनाय चुम्बनं कर्तुम् उपनीते मुखे अधरव्रणदर्शनात् तवापराधपरिहारोपाय एव अपायो जात इति पुनः प्रत्युवाचेति भावः । हे सखि मन्यूद्रिक्तहृदा कोपोद्रिक्तहृदयेन । दष्टोष्ठतयेति भावः । भवच्छून्यां त्वद्रहितां सभां मुहुः मार्गे मार्गे पश्यतः मे तदधरव्रणम् अभूत् । कोपेन द्रष्टारो हि दष्टोष्ठा भवन्तीति भावः । इति तस्याः कोपं शमयन् असौ कृष्णः मन्मानसे मम मनसि स्यात् तिष्ठतु ॥ ५५ ॥

**वृन्दारण्यनिकुञ्जमन्दिरगतं मन्दानिलैर्वीजितं**
**चन्द्रामन्दकरेण सेवितपदं कन्दर्पतातं निशि ।**
**मन्दारादिलसत्प्रसूननिचयैर्वृन्दारकप्रेषितैः**
**सन्दृश्य प्रियवर्त्म गोपललनावृन्दं शनैः पद्यते ॥ ५६ ॥**

**व्या :** वृन्दारण्येति । गोपललनावृन्दम् वृन्दारकप्रेषितैः सुरवृष्टैः मन्दारादिलसत्प्रसूननिकरैः । प्रियस्य कृष्णस्य वर्त्म सन्दृश्य दृष्ट्वा स्त्रीरमणार्थं गच्छतोऽपि कृष्णस्य देवाः पदे पदे पुष्पाणि वर्षन्तीति भावः । वृन्दारण्यस्य वृन्दावनस्य निकुञ्जः लतापिहितस्थलम् । तदेव मन्दिरं तस्मिन् गतं मन्दानिलैर्वीजितं चन्द्रस्यामन्दकरेण लतागृहं प्रविष्टेन चन्द्रकिरणेन सेवितपदं कन्दर्पतातं कृष्णं निशि शनैः पद्यते प्राप्नोति ॥ ५६ ॥

**नृत्यत्केकिनि चित्रपुष्पतिलकारत्नस्फुरत्तोरणैः**
**विष्वक्शोभिनि पल्लवाख्यविलसत्तल्पे प्रदीपत्विषि ।**
**विस्तीर्णौषधिभिः प्रसूनविलसत्पत्रैर्वितानप्रभे**
**मत्तालिव्रजगायके हरिरभात् कुञ्जे निजां रञ्जयन् ।। ५७ ।।**

**व्या :** नृत्यदिति । मेघश्यामं कृष्णं दृष्ट्वा **नृत्यन्तः केकिनो** मयूराः यस्मिन् । **चित्राणि पुष्पाणि** यासां ताः **तिलका** एव **रत्नस्फुरत्तोरणाः** रत्नबद्धतोरणाः तैः **विष्वक्** परितः **शोभिनि । पल्लवाख्यं** किसलयाभिधं **विलसत्तल्पं** शय्या यस्मिन् । **विस्तीर्णौषधिभिः** विस्तृतज्योतिर्लताभिः **प्रदीपानां त्विट्** यस्मिन् । **प्रसूनविलसत्पत्रैः वितानप्रभा** यस्मिन् । **मत्तालिव्रज** एव **गायको** यस्मिन् तस्मिन् **कुञ्जे निजां** गोपीं **रञ्जयन्** सुखयन् **हरिः** कृष्णः **अभात्** अशोभत । महाराजं कृष्णं लतागृहेऽपि राजवैभवं नामुञ्चदिति भावः ।। ५७ ।।

**स्नातः सौन्दर्यनद्यां परिहृतवसनो गोपिकालेपनश्री-**
**र्वक्षोजाब्जासनस्थः कृतवनवसतिर्हारमालाकराग्रः ।**
**बिभ्रत् केशौघकाशानधरजनिपयोमात्रवृत्तिर्विनिद्रः**
**प्रेष्ठः श्रीविठ्ठलोऽसौ जयति मुनिगणं जारवार्ता कुतोऽस्य ।।५८।।**

**व्या :** स्नात इति । **सौन्दर्यनद्यां** लावण्यसिन्धौ **स्नातः** लावण्यभरित इत्यर्थः । मुनिरपि नद्यां स्नातो भवति । **परिहृतं** रतिकाले त्यक्तं **वसनं** येन सः । मुनिरपि दिगम्बरो भवति । **गोपिकानामालेपनस्य अनुलेपनस्य श्रीः** कान्तिः यस्य । गाढालिङ्गने तदनुलेपनेन लिप्ताङ्ग इत्यर्थः । मुनिरपि गोपीचन्दनधारी भवति। **वक्षोज** एव कुच **एवाब्जासनं** पद्मासनं तत्र तिष्ठतीति तथोक्तः । मुनिः पद्मासन इति स्फुटम् । **कृता वने** वृन्दावने **वसतिर्येन** । मुनिरपि वनवासी । **हारमाला** मौक्तिककण्ठमाला **कराग्रे** यस्य प्रेयस्याः दातुं करधृतहारमाल इत्यर्थः ।

मुनिरपि जपमालाधारी । **केशौघकाशान्** केशपाशदर्भान् विभ्रत् गृह्णन्। **अधरजनिपयोमात्रवृत्तिः** अधरजन्यामृतमात्रेण जीवनं यस्य स तथोक्तः । मुनिरप्यपूभक्षत्वात् पयोमात्रवृत्तिर्भवति । **विनिद्रः प्रेष्ठः** असौ **श्रीविठ्ठलः** कृष्णः **मुनिगणं** जयति । अस्यैतादृशस्य मुनिमार्गजुष्टस्य कृष्णस्य [१]जारवार्ता कुतः न कुतोऽपीत्यर्थः । मुनिगणं जयतीत्यनेन स्त्रीभिः सह शयनेऽपि ऊर्ध्वरेतस्कः कृष्ण इति द्योत्यते । इदं मुनेरपि न घटत इति मुनिगणं जयतीत्युक्तम् ।।५८।।

**चुम्बन्त्यः सरसाधरं पुलकितैरङ्गैर्गलद्भूषणै-**
**स्तं गाढं परिरभ्य सुस्मितमुखं सौन्दर्यसिन्धुं मुदा ।**
**तुङ्गात्मीयमनोरमस्तनतटे सन्दर्शिताङ्कं नखै-**
**र्वृन्दारण्यमदो ननन्दुरबला मन्दानिलैर्मञ्जुलम् ।। ५९ ।।**

**व्या :** चुम्बन्त्य इति । **सौन्दर्यसिन्धुं सुस्मितमुखं तुङ्गात्मीयमनोरमस्तनतटे नखैः सन्दर्शिताङ्कं** कृष्णं **पुलकितैः गलन्ति** स्खलन्ति भूषणाति येषां तैः **अङ्गैः** स्वाङ्गैः **गाढं** दृढं **परिरभ्या**लिङ्ग्य कृष्णस्य **सरसाधरं चुम्बन्त्यः** ताः **अबलाः** गोप्यः **मन्दानिलैः मञ्जुलं** मनोहरम् । **अदः** तद्वृन्दारण्यं वृन्दावनं दृष्ट्वा **ननन्दुः** हृषिता बभूवुः ।। ५९ ।।

**कान्ताकदम्बकुचकुञ्जरकुम्भसङ्गि-**
**सन्तापहारिनखमण्डलमण्डितोऽलम् ।**
**गण्डानुषक्तविलसन्मुखचन्द्रचुम्बी**
**कुञ्जेषु सञ्चरति कृष्णविचित्रसिंहः ।।६०।।**

---

१ नासूयन् नृप कृष्णाय मोहितास्तस्य मायया ।
मन्यमानाः स्वपार्श्वस्थान् स्वान् स्वान् दारान् व्रजौकसः ।।
- भागवते (१०/३३/३९)

**व्या :** कान्तेति। कान्ताकदम्बस्य **कुचावेव कुञ्जरकुम्भौ** गजकुम्भौ तत्र **सङ्गि** च तत् **सन्तापहारि** च तन्नखमण्डलं तेनालमत्यर्थं **मण्डितो** अलङ्कृतो **गण्डानुषक्तः** स्वकपोलसंसक्तः। **विलसन्मुखचन्द्रः** बल्लवीमुखचन्द्रस्तं **चुम्बतीति** तथोक्तः। **कृष्णविचित्रसिंहः** कृष्णाख्याद्भुतसिंहः। कुञ्जरकुम्भसङ्गिनखतया सिंहसाम्यम्। तस्य नखस्य सन्तापहारित्वादद्भुतत्वम्। चन्द्रसिंहराश्योः सम्बन्धोऽस्तीति सिंहसाम्यम्। सिंहश्चन्द्रमाश्रयतीत्यपूर्वमिति भावः। **कुञ्जेषु सञ्चरति**। इदमुभयत्र समम्॥ ६०॥

**कृष्णाङ्घ्र्यम्बुजलक्ष्मलक्ष्यमखिलं यत्र स्थलं साचलं**
**सस्त्रीका मुनयश्च पक्षिहरिणीहर्यक्षवृक्षादयः।**
**यत्पाथः सुरसिन्धुसिन्धुमहितं यस्मिन् व्रजस्त्रीवशं**
**श्रुत्यन्तान्तरितं महः परमदो वृन्दावनं स्यान्मुदे॥ ६१॥**

**व्या :** कृष्णाङ्घ्रीति। **यत्र** यस्मिन् वृन्दावने **साचलं** गोवर्धनाचलसहितम्। **अखिलं स्थलं** भूप्रदेशः। कृष्णस्याङ्घ्री चरणावेवाम्बुजे तत्र यानि लक्ष्माणि ध्वजादिचिह्नानि **तैर्लक्ष्यं** दृश्यं मनोहरमित्यर्थः। यत्र यस्मिन् वृन्दावने। **सस्त्रीकाः** स्त्रीसहिताः **पक्षिणः हरिण्यः हर्यक्षाः** सिंहाः **वृक्षाश्च** तेऽप्यादयो येषां लतादीनां ते तथोक्ताः। **मुनय** एव किल। वृन्दावने विद्यमानानां स्त्र्यादीनां मुन्यवतारत्वादिति भावः। **यत्पाथः** यत्र वृन्दावने **पाथः** उदकं **सुरसिन्धुः** देवनदी **सिन्धुः** समुद्रः ताभ्यां **महितं** सत्कृतम्। सदा कृष्णपानादिनेति भावः। यस्मिन् वृन्दावने **श्रुत्यन्तान्तरितं** वेदान्तविदूरं **महः** कृष्णाख्यं तेजः। **व्रजस्त्रीवशं** व्रजाङ्गनाधीनं सत् तिष्ठति। **अदः** तत् **परम्** उत्तमं **वृन्दावनं मुदे** अस्मत्सन्तोषाय स्यात्॥ ६१॥

**यत्कुञ्जा मुरवैरिसङ्गतवधूविक्रीडनैर्वासिता**
**यत्सञ्जातसुरद्रुमौघमहसा विद्योतिताशामुखम्[1]।**

---

१ यत्कुञ्जा मुरवैरिसङ्गतवधूविक्रीडनैर्वासिता

**यच्चन्द्रेशसुरेशमुख्यविबुधैः संसेव्यमानं सदा**
**तद्वृन्दावनमाविरस्तु सततं चित्ते प्रमत्ते मम ॥ ६२ ॥**

**व्या :** यदिति। यस्य वृन्दावनस्य कुञ्जाः लतामण्टपाः मुरवैरिणा कृष्णेन सङ्गतानां वधूनां स्त्रीणां विक्रीडनैः सुरतक्रीडाभिः वासिताः तयोर्दिव्याङ्गसह-जगन्धेन तद्धृतचन्दनकुंकुमकस्तूर्यादिगन्धेन च परिमलीकृताः । यत् वृन्दावनं सञ्जातानां समुद्भूतानां सुरद्रुमाणां कल्पवृक्षाणामोघस्य समूहस्य महसा कान्त्या विद्योतितानि प्रकाशितानि आशानां दिशां मुखानि यस्य तत् तथोक्तम् । यद्वृन्दावनं चन्द्रः ईशः शिवः सुरेशः देवेन्द्रश्च त एव मुख्या येषां तैर्विबुधैः सुरैः सदा स्तूयमानम्। तद्वृन्दावनं प्रमत्ते मम चित्ते सततं सन्ततं आविरस्तु आविर्भवतु ॥ ६२ ॥

**कस्त्वं कश्चन निर्जरोऽहमिह ते स्वर्गः क्व तत् त्वद्गृहं**
**पीयूषं क्व तवाधरेऽस्ति सुभगे कास्ते तवानिद्रता ।**

---

यत्सञ्जातसुरद्रुमौघमहसा विद्योतिताशामुखम् ।
यत्पाथः सुरसिन्धुसिन्धुमहितं यत्राखिलैर्लक्षितं
श्रुत्यन्तान्तरितं महः परमहो वृन्दावनं पावनम् ॥ - इति तीर्थप्रबन्धे (२/३४)

वृन्दावनं वर्णयति यदिति। यत्कुञ्जाः यस्मिन् कुञ्जाः लतागृहाः। निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे' इत्यमरः। मुरवैरिसङ्गतवधूविक्रीसनैः मुरवैरिणा श्रीकृष्णेन सङ्गताः या बध्वः गोप्यस्तासां विक्रीडनैश्चरितैः वासिताः परिमलीकृताः । यत्सञ्जातसुर-द्रुमौघमहसा यस्मिन् सञ्जाताः सुरद्रुमाः देवतरवः मन्दारपारिजातादयः तेषामोघाः समूहाः तेषां महसा रत्नमयफलपुष्पादिकान्त्या । 'कान्त्युत्सवौ तु महसि' इत्यमरः। वियोतिताशामुखं विद्योतितानि प्रकाशितानि आशामुखानि दिङ्मुखानि यस्य तत् तथोक्तम् यत्पाथः यस्मिन् वृन्दावने पातुं योग्यं पाथः जलम् । सुरसिन्धुसिन्धुमहितं सुरसिन्धुः सुरनदी, सिन्धुस्समुद्रस्ताभ्यां महितं पूज्यमधिकपावित्र्योपेतमित्यर्थः यत्र वृन्दावने। श्रुत्यन्तान्तरितं श्रुत्यन्तस्योपनिषदः अन्तरितं दूरिभूतम्। परम् उत्कृष्टं महः कृष्णाख्यं तेजः। तेजोरूपत्वान्मह इत्युक्तम्। अखिलैः स्त्रीबालपशुपक्ष्यादिभिः लक्षितं दृष्टम्। उपनिषदविषयस्य स्त्रीबालपशुपक्षिचक्षुर्विषयत्वम्। अहो आश्चर्यम्। अतः तत् वृन्दावनं पावनं पवित्रम्। -इति तीर्थप्रबन्ध-गुरुभावप्रकाशिकायाम्

**त्वत्प्रेम्णां सखि चिन्तयाऽनिमिषता कुत्र प्रिये पश्यत-**
**स्त्वद्रूपं त्विति बल्लवीं प्रियगिरा चक्री स चक्रे निजाम् ॥ ६३ ॥**

**व्या :** कस्त्वमिति। त्वं क इति कृष्णं प्रति कस्याश्चिद्गोप्याः नर्मवचनं। हे सुभगे अहं **कश्चन निर्जरो** देवः इति कृष्णस्य प्रत्युक्तिः। देवश्चेदिह ते तव **स्वर्गः क्वेति** गोपीवचनम्। तत् स्वर्गः **त्वद्गृहं** तव धामेति कृष्णवचनम्। **पीयूषममृतं** क्वास्तीति पुनस्तस्या वचनम्। **तवाधरे** पीयूषमस्तीति कृष्णप्रत्युक्तिः। **तवानिद्रता** अस्वप्नता **क्वास्ते** कुत्रास्तीति पुनस्तस्या वचनम्। हे **सखि त्वत्प्रेम्णां** त्वत्कृतस्नेहानां **चिन्तया** स्मरणेन ममानिद्रतेति कृष्णोक्तिः। **अनिमिषता कुत्रेति** पुनः तस्या उक्तिः। हे **प्रिये त्वद्रूपं** तव सौन्दर्यं **पश्यतो** मम अनिमिषता। सौन्दर्यातिशयात् त्वद्दर्शनोत्सुकं चक्षुर्निमेषमपि न सहत इति भावः। इति **प्रियगिरा** प्रियोक्त्या प्रत्युत्तरव्याजेन तस्या एव स्तवनात् **सः चक्री** चक्रधरः कृष्णः **बल्लवीं** गोपीं **निजां** स्वकीयां स्वानुरक्तचित्तां **चक्रे** कृतवान्॥ ६३॥

**प्रीतेर्लाभमवेक्ष्य चित्तमपि या तस्मै ददावङ्कगां**
**तां कृत्वा रतिसङ्गरस्थहृदयामालिङ्ग्य रम्यैर्भुजैः।**
**तस्या दृष्टिपथं गतं मुखमलं चित्ताय संरोचयन्**
**कस्तूरीतिलकेन भूषयति यः स स्यान्मुदे विट्ठलः ॥ ६४ ॥**

**व्या :** प्रीतेरिति। **या** नारी **प्रीतेः** सुखस्य **लाभमवेक्ष्य चित्तमपि**। अपिपदे नान्तरत्वेनादेयतां सूचयति। **तस्मै** कृष्णाय **ददौ**। अदेयमपि **चित्तं** लाभातिशयाददिशत्। चित्तदानञ्च सदा तत्स्मरणम्। अतिशयितमनोहरस्य कृष्णस्य स्मरणमात्रेण बहुसुखं लब्ध्वा सदा तं सस्मारेति भावः। अनेन बहुद्रव्य-लाभमवेक्ष्यान्तरस्यापि वस्तुनो दानाद्वैश्यधर्मोऽपि ध्वन्यते। कृष्णस्ताम् **अङ्कगाम्** उत्सङ्गगां कृत्वा स्वाङ्कमारोप्येत्यर्थः। ''ऊरू तदस्य यद्वैश्यः''[१] इति स्वाङ्कस्य वैश्य-

१ ऋग्वेदे (पुरुषसूक्ते)

स्थानत्वाद्वैश्यधर्मवर्ती तामङ्कमारोप्येति ध्वनिः । **रतिसङ्गरस्थहृदयां** सुरतयुद्धे दत्तचित्तां **रम्यैर्भुजैरालिङ्ग्य** द्वौ भुजौ नालमिति चतुर्भुजैः समालिङ्ग्येति भावः। युद्धकामनया क्षत्रियधर्मवतीम् । ''बाहू राजन्यः कृतः''[१] इति क्षत्रियोचितबाहुभिराश्लिष्येति ध्वनिः । **दृष्टिपथं** स्वदृष्टिमार्गं गतं प्राप्तं **तस्या मुखं पूर्वं** विरहोच्छ्वासादिना औष्ण्यतया तिलकाभावेन च सूर्यसदृशं मुखं ''चक्षोः सूर्यो अजायत''[२] इति सूर्यस्थाने चक्षुषि निक्षिप्येति ध्वनिः। इति तत्कृपया वीततिलकतया केवलं चक्षुषैव दृष्टं न तु मनसो हर्षकरमभूदिति यथाश्रुतस्य भावः। अत एव **चित्ताय संरोचयन्** सम्यक् प्रीतिं जनयन् यः कृष्णः **कस्तूरीतिलकेन भूषयति** अलङ्करोति। अलङ्कारतुल्यतिलककरणे प्रियप्रेमातिशयदर्शनेन विरहनिमित्तौष्ण्यशान्त्या च मुखस्य चन्द्रसाम्यात् ''चन्द्रमा मनसो जातः''[३] इति चन्द्रस्थाने मनसि घटयित्वेति ध्वनिः। **स विट्ठलः** नो **मुदे** सन्तोषाय **स्यात्**॥ ६४॥

**रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि**
**प्रेम्णा चिन्तयतां विचित्रविमलश्लाघ्यार्थसन्दायिनि ।**
**सञ्जाते भुवि रुग्मिणीशविजये सद्वादिराजोदिते**
**सञ्जातः सुरमण्डलीषु नवमः सर्गो मुदां सत्कृतः ।। ६५ ।।**

**।। इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थश्रीचरणविरचिते श्रीरुग्मिणीशविजये महाकाव्ये नवमः सर्गः ।।**

**व्या : रोम्णामिति**। एतत्पद्यं व्याख्यातमपि व्यवहितत्वात् पुनरपि व्याक्रियते। **रोम्णां हर्षणं** रोमोद्गमं करोतीति तथोक्तस्तस्मिन् । **श्रवणतः** श्रवणमात्रात् **पापानां** दुरितानामोघं समूहं विध्वंसयतीति तथोक्तस्तस्मिन् । **प्रेम्णा** भक्त्या

---

१ पुरुषसूक्ते

२ पुरुषसूक्ते

३ पुरुषसूक्ते

**चिन्तयतां** स्मरतां **विचित्रा** आश्चर्यभूताः **विमलाः** निर्मलाः **श्लाघ्याः** स्तुत्याः **अर्था** धर्मादिचतुर्विधपुरुषार्थास्तान् सम्यक् ददातीति तथोक्तस्तस्मिन्। **सन्तो** वादिराजः वादिश्रेष्ठाः शुकादयस्तैरुदिते अभिवर्णिते **रुग्मिणीशस्य** कृष्णस्य **विजये** पराक्रमे **भूवि** भुमौ **सञ्जाते** सति उज्जृम्भिते सति सुरमण्डलीषु सत्कृतः मुदां सन्तोषाणां नवमः सर्गः सृष्टिः सञ्जातः अभवत्। पौनःपुन्येन सन्तोषपरम्परा जातेत्यर्थः । काव्यपक्षे शब्दार्थचमत्कारदर्शनेन रोम्णां हर्षणकारिणि। रोमाञ्चजनके। प्रेम्णा आदरेण चिन्तयतां चिन्तनिकां कुर्वताम्। विचित्रः अनेकप्रकारः । विमलः जुगुप्साशीलादिदोषरहितः । श्लाघ्यो वर्णनीयोऽर्थ अभिधेयः तं सम्यक् ददातीति तथोक्तः। तत्प्रकाशक इत्यर्थः। तस्मिन्। **सन्** कामादिदोषशून्यः। सत्पुरुषवत् विष्णुभक्तत्वादुत्तम इति वा। स चासौ **वादिराजश्च** वादिराजाख्यो यतिस्तेनोदिते कृते भुवि **सञ्जाते** सम्भूते। रुग्मिणीशविजये रुग्मिणीशविजयाख्यकाव्ये अधिकरणे **सुरमण्डलीषु सत्कृतः नवमः मुदां** सन्तोषाणां **सर्गः** परिच्छेदः। सर्गशब्दस्यावृत्त्या योजना। सञ्जातः समभवत्। नवमः सर्गो जात इत्यर्थः ॥ ६५ ॥

**॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थश्रीचरण-विरचितस्य श्रीरुग्मिणीशविजयमहाकाव्यस्य व्याख्यायां श्रीनारायण-भट्टविरचितायां श्रीगुरुभावप्रकाशिकायां नवमः सर्गः ॥**

*****

# दशमः सर्गः

**इत्थं स रात्रौ विविधान् विलासान्**
**कृत्वा निशान्ते विससर्ज गोपीः ।**
**प्रीत्यै विधोरन्वयजः स्वलीलां**
**मित्रं न सन्दर्शयति स्म नूनम् ॥१॥**

**व्या :** आक्रान्तगोपिकाचक्रमक्रूरस्तुतविक्रमम् ॥
वक्रालकोल्लसद्वक्त्रं शक्रनीलच्छविं नुमः ॥ १ ॥

इत्थमिति । स कृष्णः । इत्थमनेन प्रकारेण । रात्रौ विविधान् विलासान्। कृत्वा । निशान्ते प्रभाते । गोपीः । विससर्ज तत्याज । प्रीत्यै सन्तोषाय। विधोरन्वयजः वंशोत्पन्नः । चन्द्रप्रीत्यर्थं सोमवंशोत्पन्न इत्यर्थः । कृष्णः। स्वलीलां स्वेन कृतरासक्रीडालीलाम् । मित्रं सूर्यम् । न सन्दर्शयति स्म न समदर्शयत् । नूनं निश्चयः । रात्रौ विलासकरणात् दिनेशेन न दृष्टमिति वस्तुस्थितिः । तत्र । हेतूत्प्रेक्षा ॥ १ ॥

**दुर्गावने व्रतधरं निशि नन्दगोपं**
**सर्पोऽग्रसीत् किल बुभुक्षितचित्तवृत्तिः ।**
**कृष्णं विसृज्य सकलेश्वरमन्यदैव-**
**प्रत्यर्हणाभिरतमित्यहमूहयामि ॥ २ ॥**

**व्या :** दुर्गावन इति । दुर्गावने अम्बिकावने । व्रतधरम् उपवासव्रतधरम्। नन्दगोपम् । निशि । बुभुक्षिता सञ्जातभोजनेच्छा चित्तवृत्तिर्यस्य सः सर्पः । अग्रसीत् किल जग्रास किल । किलेत्यस्वरसे । सकलेश्वरं कृष्णं विसृज्य । अन्यदैवप्रत्यर्हणे देवतान्तरपूजायाम् । अभिरतं नन्दम् । अग्रसीदित्यहमूहयामि। सर्वोत्तमं कृष्णं विहायान्यदेवताभक्तिकरणदोषेणैव सर्पोऽग्रसीदित्यहमूहयामि ॥२॥

**कृष्णः स्वदर्शनसुदर्शनमेनमात्म**
**[1]विद्याधरान्वयममूमुचदब्जनेत्रः ।**
**तत्पादपूततनुरुत्तमपूरुषाङ्घ्रि-**
**प्रीत्यैव तस्य पदमेव जगाम सोऽपि ॥३॥**

**व्या :** सुदर्शन इति तस्य नाम्नाऽन्वर्थतां सम्पादयन्नाह – **कृष्ण** इति । **अब्जनेत्रः कृष्णः** । **स्वस्य** कृष्णस्य **दर्शनेन सुदर्शनं** सुष्ठु दर्शनम् अवलोकनम् यस्य तम्। अनेन प्रसिद्धसुदर्शननाम्नः कृष्णसम्बन्धेनान्वर्थता सम्पादिता । **आत्मनः** स्वस्य **विद्यां** धरन्तीति **आत्मविद्याधराः** । तेषाम् **अन्वयो** वंशो यस्य सः । तत्रोत्पन्न इत्यर्थः । अनेन **विद्याधर** इति तत्कुलनाम्नोऽपि पूर्ववदन्वर्थता सम्पादिता । एवं सर्परूपं गन्धर्वम् । **अमूमुचत्** मोचयामास । मुचेर्ण्यन्ताल्लुङि-णिश्रीतिन्वङ् । **तत्पादपूततनुः सोऽपि उत्तमपूरुषस्य** कृष्णस्य । **अङ्घ्रिप्रीत्यैव** स्वोद्धारकपादप्रेम्णैव[2] । **तस्य** विष्णोः । **पदमेव** आकाशमेव । **जगाम** । गगनविष्णुपदयोरपि विष्णुपदवाच्यत्वादिति भावः ॥ ३ ॥

---

१ अहं विद्याधरः कश्चित् सुदर्शन इति श्रुतः ।
श्रिया स्वरूपसम्पत्त्या विमानेनाचरं दिशः ॥ - भागवते (१०/३२/१२)
पूर्वं यदा ह्यजगरो निजगार नन्दं सर्वे न शेकुरथ तत्प्रविमोक्षणाय ।
मत्पादसंस्पर्शतः स तदाऽतिदिव्यो विद्याधरस्तदुदितं निखिलं स्मरन्तु ॥
पूर्वं स रूपमदतः प्रजहास विप्रान् नित्यं तपःकृशतराङ्गिरसो विरूपान् ।
तैः प्रापितः सपदि सोऽजगरत्वमेव मत्तो निजां तनुमवाप्य जगाद नन्दम् ॥
नायं नरो हरिरयं परमः परेभ्यो विश्वेश्वरः सकलकारण आत्मतन्त्रः ।
विज्ञाय चैनमुरुसंसृतितो विमुक्ता यान्त्यस्य पादयुगलं मुनयो विरागाः ॥
- म.भा.ता.नि. (१४/१०७-१०९)

२ माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः ।
स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथा ॥ - म.भा.ता.नि. (१/८५)

**असह्यनक्तञ्चरनाशकत्वं प्रकाशयन् स्वात्मनि विद्यमानम् ।**
**स शङ्खचूडं दितिजं निगूढं ममर्द शार्दूलमिव क्षपायाम् ॥ ४ ॥**

**व्या :** असह्येति । सः कृष्णः । **स्वात्मनि विद्यमानम्** । **असह्याः नक्तञ्चराः** राक्षसाः । तेषां **नाशकत्वं प्रकाशयन्** सन् । **निगूढं** निलीनतया आगतम् । [1]**शङ्खचूडं दितिजं** शङ्खचूडाख्यं राक्षसम् । **शार्दूलमिव** व्याघ्रमिव । **क्षपायां** रात्रौ । **ममर्द** जघान । नक्तं रात्रौ चरन्तीति व्युत्पत्तेः । अस्य रात्रावेव चरतो हननात् रात्रिचरनाशकत्वं प्रकाशितमेवेति भावः ॥ ४ ॥

**शिरोमणिं तस्य वधादवाप्तं बलाय दत्वा बुभुजे स्वयं सः ।**
**यशोमणिं चन्द्रचयातिचारुं मनोज्ञकान्तामणिभिः समेतम् ॥५॥**

**व्या :** शिरोमणिमिति । स कृष्णः । **तस्य** शङ्खचूडस्य । **वधात् अवाप्तं** प्राप्तं [2]**शिरोमणिं** शिरोरत्नम् । **बलाय** बलरामाय **दत्वा** । **स्वयं मनोज्ञकान्तामणिभिः** मनोहरस्त्रीरत्नैः **समेतं चन्द्रचयातिचारुं** चन्द्रसमूहादप्यतिमनोहरम् । **यशोमणिं** कीर्तिरत्नं **बुभुजे** पालितवान् ॥ ५ ॥

**धूलीपालिभिरम्बरं मलिनयन् विष्णोः पदं तोयदान्**
**लाङ्गूलेन विदारयन् समरुचस्तज्जन्ममूलं त्विति ।**

---

१ सम्पूर्णचन्द्रकरराजितसद्रजन्यां वृन्दावने कुमुदकुन्दसुगन्धवाते ।
श्रुत्वा मुकुन्दमुखनिःसृतगीतसारं गोपाङ्गना मुमुहुरत्र ससार यक्षः ॥
रुद्रप्रसादकृतरक्ष उतास्य सख्युर्भृत्यो बली खरतरोऽपि च शङ्खचूडः ।
ताः कालयन् भगवतस्तलताडनेन मृत्युं जगाम मणिमस्य जहार कृष्णः ॥
- म.भा.ता.नि.( १३/७६,७७)

देवेभ्यो मरणाद्भीता राक्षसा वित्तपाज्ञया ।
तदीयां नलिनीं ते हि रक्षन्त्यस्याश्रयो हरः ॥ - म.भा.ता.नि.(२२/३००)

२ शङ्खचूडं निहत्यैवं मणिमादाय भासुरम् ।
अग्रजायाददात् प्रीत्या पश्यन्तीनां च योषिताम् ॥ - भागवते (१०/३२/३२)

**देवेन्द्रं ककुदद्रिणा खुरपुटैः पृथ्वीं च स क्लेशय-**
**न्नभ्यायात् स्वविषाणलक्ष्यमजितं कुर्वन्नरिष्टासुरः ॥ ६ ॥**

**व्या :** धूलीति । [1]**धूलीपालिभिः** खुरपुटोत्थधूलीसमूहैः । **अम्बरं** गगनम् । विष्णोःपदमिति कृत्वा **मलिनयन्** । [2]निघण्ट्वादिषु विष्णुपदशब्दश्रवणात् कृष्णपदभ्रान्त्या तस्मिन् द्वेषेण मलिनयन्नित्युत्प्रेक्षा । **तोयदान्** मेघान् । **समरुचः** कृष्णसमानकान्तीन् । **लाङ्गूलेन** बालेन । **विदारयन्** । **ककुदद्रिणा** ककुदाख्यपर्वतेन । **देवेन्द्रं खुरपुटैः पृथ्वीं च** । **तज्जन्ममूलं** कृष्णावतारनिमित्तमिति **क्लेशयन्** क्लेशेन सहितं कूर्वन् । **अजितं** कृष्णम् । **स्वविषाणलक्ष्यं** स्वशृङ्गलक्ष्यं **कुर्वन् सः** [3]**अरिष्टासुरः अभ्यायात्** । अयं विष्णुवैष्णवद्वेषीत्येवमुत्प्रेक्षितुः कवेर्हृदयम् ॥ ६ ॥

**अग्रे निधाय स्वविषाणयुग्ममुग्रोऽच्युतं प्रत्यगमत् सहायम् ।**
**दोष्णा तदुत्पाटयतो मुरारेः कुर्वन् शिरोभारजिहीर्षयेव ॥७॥**

**व्या :** अग्र इति । **उग्रः** क्रूरः अरिष्टासुरः । **स्वविषाणयुग्मम्** स्वस्य ये विषाणे तयोर्युग्मं तत् । **अग्रे** अग्रं पुरोभागः तस्मिन् **निधाय** । तच्छृङ्गयुग्मम् । **दोष्णा** हस्तेन । **उत्पाटयतः** ऊन्मूलयतः । **मुरारेः** कृष्णस्य । **शिरोभारजिहीर्षया**

---

१ अग्रन्यस्तविषाणाग्रः स्तब्धासृग्लोचनोऽच्युतम् ।
कट्याक्षिप्याद्रवत् तूर्णमिन्द्रमुक्तोऽशनिर्यथा ॥ - भागवते (१०/३४/११)

२ वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी ॥ - इत्यमरः ।

३ नाम्नाऽप्यरिष्ट उरुगायविलोमचेष्टो गोष्ठं जगाम वृषभाकृतिरप्यवध्यः ।
शम्भोर्वरादनुगतश्च सदैव कंसं गा भीषयन्तममुमाह्वयदाशु कृष्णः ॥
सोऽप्याससाद हरिमुग्रविषाणकोटिमग्रे निधाय जगृहेऽस्य विषाणमीशः ।
भूमौ निपात्य च वृषासुरमुग्रवीर्यं यज्ञे यथा पशुममारयदग्र्यशक्तिः ॥
- म.भा.ता.नि.(१३/७८,७९)

स्वमस्तकभारपरिहारेच्छया। सहायं कुर्वन्निव। अच्युतं प्रत्यगमत्। पूर्वमजितेति प्रयोगेणेदानीमच्युतेति प्रयोगेण कृष्णस्य न पराभव इति सूचितम्॥ ७॥

**यदुपतिमृदुहस्तेनोद्धृतं शृङ्गयुग्मं**
**व्यसुमसुरमकार्षीत् तत्क्षणेनेति युक्तम्।**
**अपि शिरसि धृतो यत्स्वीय एवान्तकाले**
**करवशमुपयातः शत्रुतामेति शत्रोः॥ ८॥**

**व्या :** यदुपतीति। **यदुपतिमृदुहस्तेन** कृष्णकोमलकरेण। **उद्धृतं** [१]**शृङ्गयुग्मम्।** **असुरम्** अरिष्टासुरम्। **व्यसुं** विगतप्राणम्। **अकार्षीत्** अकरोत्। तदीयशृङ्गेणैव तं जघानेति पुराणप्रसिद्धिः। **इतीदं युक्तम्** उचितम्। **यत्** यस्मात् कारणात्। **शिरसि धृतः स्वीयोऽप्यन्तकाले** विनाशकाले प्राप्ते सति। **शत्रोः करवशं** शत्रुदत्तद्रव्यवशम् **उपयातः शत्रुतामेति**। 'बलिहस्तांशवः कराः' इति हस्तस्यापि करत्वात् **श्लिष्टगर्भार्थान्तरन्यासः**॥ ८॥

**यदीयनाम[२] स्मरतां मुनीनामरिष्टमात्यन्तिकनाशमेति।**
**तदेकनाथं व्रजमेत्य जैत्रमरिष्टपुष्टिर्नहि दृष्टपूर्वा॥ ९॥**

---

१ गृहीत्वा शृङ्गयोस्तं या अष्टादशपदानि सः।
प्रत्यपोवाह भगवान् गजः प्रतिगजं यथा॥
तमापतन्तं स निगृह्य शृङ्गयोः पदा समाक्रम्य निपात्य भूतले।
निष्पीडयामास यथाऽऽर्द्रमम्बरं कृत्त्वा विषाणेन जघान सोऽपतत्॥
असृग् वमन् मूत्रशकृत् समुत्सृजन् क्षिपंश्च पादाननिर्मीलितेक्षणः।
जगाम कृच्छ्रं निर्ऋतेरथ क्षयं पुष्पैः किरन्तो हरिमीडिरे सुराः॥
- भागवते (१०/३४/१२,१४,१५)

२ नाम्नोऽस्ति यावती शक्तिः पापनिर्हरणे हरेः।
तावत् कर्तुं न शक्नोति पातकं पातकी जनः॥ - कृष्णामृतमहार्णवे (१२)

**व्या :** यदीयेति । यस्य कृष्णस्य सम्बन्धि **यदीयं नाम** नामधेयम् । **स्मरतां मुनीनामरिष्टम्**[1] **आत्यन्तिकनाशमेति** । साकल्येन नाशं प्राप्नोति । स एव एको नाथो मुख्यः स्वामी यस्य **तदेकनाथम्** । अत एव **जैत्रं** जयशीलम् । **व्रजमेत्य अरिष्टस्य पुष्टिरभिवृद्धिः** । **दृष्टपूर्वा न हि** । पूर्वमदृष्टा हि । अस्यासुरस्य अशुभस्य चारिष्टशब्दवाच्यत्वादियमुक्तिः ॥ ९ ॥

**कृष्णस्य प्रथमानवीर्यतरणिं दृष्ट्वा सपत्नाङ्गनाः**
**चिन्ताक्रान्तमनोरथाः स्वनयनद्वाराश्रुधारा दधुः ।**
**भाविस्वीयपयोधरद्वयमहाशुष्कत्वसम्प्राप्तये**
**हृद्गोदग्रपयोवियोगकरणोद्युक्ता इवार्ता भृशम् ॥ १० ॥**

**व्या :**कृष्णस्येति । **भृशमार्ताः सपत्नाङ्गनाः** शत्रुभूतचाणूरकंसादीनामङ्गनाः । **कृष्णस्य प्रथमानः** जृम्भमाणः **वीर्यतरणिः** प्रतापसूर्यः तं **दृष्ट्वा** । चिन्ताक्रान्तः चिन्ताविष्टो मनोरथो यासाम् ताः तथा । **चिन्ताक्रान्तमनोरथाः** सत्यः । **स्वनयनद्वारा अश्रुधारा** जलं **दधुः** ससृजुः । अनिमिषदृष्ट्या सूर्यदर्शने चक्षुषि अस्रोदयस्य लोकसिद्धत्वात् तरणिमित्युक्तम् । तदा कथंभूताः । **भावि** भविष्यत यत् । **स्वीयपयोधरद्वयस्य** स्वकीयकुचयुग्मस्य । यत् **महाशुष्कत्वं** केवलशुष्कत्वं तस्य **सम्प्राप्तये** लब्ध्यै **हृद्गानि** हृदयस्थितानि यानि **उदग्राणि पयांसि** तेषां **वियोगो** विश्लेषः अपसरणमित्यर्थः तस्य **करणे** कृतौ **उद्युक्ता इव** विद्यमानाः । कुचस्थौल्यहेतुपयसोऽपरित्यागे तच्छुष्कत्वायोगात् । 'पयः पानीयदुग्धयोः' इत्यभिधानात् जलस्यापि पयःशब्दवाच्यत्वात् तदपसारयन्त्य इव तिष्ठन्तीति भावः । आमरणं चिन्तया शरीरकार्श्यं प्रापुरिति हृदयम् ॥ १० ॥

**मुकुन्दमाजौ प्रति यास्यतो मे न जीविताशा ननु विद्यते श्वः ।**
**इतीव निश्चित्य जगाम केशी जवेन नन्दव्रजमश्वरूपी ॥११॥**

---

१ अरिष्टमशुभे तक्रे सूतिकागार आसवे । शुभे मरणचिह्ने च ॥ - इत्यमरः

**व्या :** मुकुन्दमिति । [1]आजौ युद्धे । **मुकुन्दं प्रति यास्यतो मे** मम । **श्वः** जीविताशा जीवने प्रत्याशा । **न विद्यते ननु** । नन्विति निश्चये । **इति निश्चित्येव केशी दैत्यः** [2]अश्वरूपी सन् । श्वो न विद्यत इत्यश्व[3] इति व्युत्पत्तेरिति भावः । **जवेन** शीघ्रेण । **नन्दव्रजं जगाम** ।। ११ ।।

**स विस्तृतास्यः किल विश्वमूर्तिं ग्रसिष्णुरभ्यागमदग्र्यकीर्तिम् ।**
**अदो यदोर्वंशमणिः स्वपाणिं निवेशयन्नीप्सितमेव मेने ।।१२।।**

**व्या :** स इति । **अग्र्यकीर्तिम्** उत्तमयशसम् । **विश्वं** जगत् **मूर्तौ** तनौ यस्य तं कृष्णम् । अनेन स्थूलमूर्तितया ग्रासायोग्यत्वं सूचितम् । **ग्रसिष्णुः** ग्रसितुमिच्छुः । **स** केशी **विस्तृतास्यः** व्यात्तमुखः सन् । **अभ्यागमत्** । **यदोः** यदुनृपतेः **वंशे मणिरिव मणिः** । तद्वंश्येषु श्रेष्ठ इत्यर्थः । कृष्णः **स्वपाणिं निवेशयन्** तन्मुखे प्रवेशयन् । **अदः** विस्तृतास्यतया अभ्यागमनम् । **ईप्सितम्** इष्टम् **एव मेने** ।।१२।।

**स केशिदैत्यस्य मुखे मुरारिर्निवेशयामास करं स्वकीयम् ।**
**तदीयहार्दाम्बरमध्यसंस्थमसुं बहिष्कर्तुमिवेहमानः ।। १३ ।।**

---

१ स लब्धसञ्ज्ञः पुनरुत्थितो मुखं व्यादाय केशी तरसाऽऽपतद् हरिम् ।
सोऽप्यस्य वक्त्रे भुजमुत्तरं स्मयन् प्रवेशयामास यथोरगं बिले ।।
दन्ता निपेतुर्भगवद्भुजस्पृशस्ते केशिनस्तप्तमयस्पृशो यथा ।
बाहुश्च तद्देहगतो महात्मनो यथाऽऽमयः संववृधे उपेक्षितः ।।
समेधमानेन स कृष्णबाहुना निरुद्धवायुश्चरणांश्च विक्षिपन् ।
प्रस्विन्नगात्रः परिवृत्तलोचनः पपात लण्डं विसृजन् क्षितौ व्यसुः ।।
- भागवते (१०/३५/६-८)

२ योऽप्यसौ हयविक्रान्तो हयग्रीव इति स्मृतः ।
केशिनामा हयो जातः स तस्यैव जघन्यजः ।। - हरिवंशपर्वणि(५४/७०)
केशिनामाऽसुरः पूर्वं हयग्रीवो महासुरः । - अंशावतारे (श्लो.२१)

३ श्वोऽप्येकप्रकारेण न तिष्ठतीत्यश्वत्थः । - गीताभाष्ये. १५/१ इतिवत् ।

**व्या :** स इति । **स मुरारिः** कृष्णः । **तदीयहार्दाम्बरमध्यसंस्थं** तस्य केशिनः हृदि विद्यमानमम्बरम् आकाशम् । तस्य मध्ये स्थितम् । **असुं** प्राणम् । **बहिष्कर्तुम् ईहमान इव** चेष्टमान इव । **केशिदैत्यस्य मुखे स्वकीयं करं**[1] **निवेशयामास** प्रवेशयामास । हस्तप्रवेशमात्रेण तस्य मरणं भविष्यतीति भावः ॥ १३ ॥

**तद्धैर्यं जरयन् बलं च शमयन्नङ्गं मुहुः कम्पय-**
**न्नक्षेभ्योऽपटुतां दिशन् दृढतरान् दन्तान् बलात् पाटयन् ।**
**तच्छ्वासं स्खलयन् जरेव बहुशस्तद्यौवनं दूरयन्**
**हस्तोऽसौ ववृधेऽन्तरन्तकपुरातिथ्यं द्विषः सूचयन् ॥१४॥**

**व्या :** तद्धैर्यमिति । **असौ हस्तः** कृष्णकरः । **जरेव** तस्य केशिनो धैर्यं **जरयन्** नाशयन् । **बलं** शरीरबलं **च** । **शमयन्** मन्दीकुर्वन् । **अङ्गं** शरीरं **मुहुः कम्पयन्** । **अक्षेभ्य**श्चक्षुरादीन्द्रियेभ्यः **अपटुतां** असामर्थ्यं **दिशन्** । **दृढतरान् दन्तान् बलात् पाटयन्** । **तस्य** केशिनः **श्वासं** निःश्वासं **स्खलयन्** । जरापक्षे कासादिना श्वासस्खलनं बोध्यम् । **तस्य यौवनं दूरयन्** दूरीकुर्वन् **द्विषः** शत्रोः केशिनः **अन्तकपुरस्य** यमपुरस्या**तिथ्यम्** । अतिथिभावं मरणमित्यर्थः । **सूचयन्**। **अन्तः** वदनान्तः **बहुशः ववृधे** अभिवृद्धिं गतवान् ॥ १४ ॥

**स कृष्णदोर्दण्डवराभिवृद्ध्या खलाग्रगण्यो विससर्ज कायम् ।**
**करोदयान् वीक्ष्य परस्य जातानसूनसूयाभिरतास्त्यजन्ति ॥१५॥**

**व्या :** स इति । **खलाग्रगण्यः स** केशी । **कृष्ण**स्य **दोर्दण्डवर**स्या**भिवृद्ध्या**। **कायं** शरीरम् । **विससर्ज** । मृत इत्यर्थः । तथाहि । **परस्या**न्यस्य **जातान्**

---

१ केशी च कंसविहितस्तुरगस्वरूपो गिर्यात्मजावरमवाप्य सदा विमृत्युः ।
पापः स केशवमवाप मुखेऽस्य बाहुं प्रावेशयत् स भगवान् ववृधेऽस्य देहे ॥
तत्खादनाय कुमतिः स कृतप्रयासः शीर्णास्यदन्तदशनच्छदरुद्धवायुः ।
दीर्णः पपात च मृतो हरिरप्यशेषैर्ब्रह्मेशशक्रदिनकृत्प्रमुखैः स्तुतोऽभूत् ॥
- म.भा.ता.नि.(१३/८०,८१)

करोदयान् । परितः प्राप्तद्रव्याभिवृद्धीः वीक्ष्य । प्रकृते तु परस्य परमात्मनः कृष्णस्य करोदयो हस्ताभिवृद्धिः । असूयाभिरताः मात्सर्यनिरताः पुरुषाः । असून् प्राणानपि त्यजन्ति ।। १५ ।।

**अथो विपक्षं कुशलेन निन्दन् सुरर्षिरभ्येत्य [1]शशंस कंसम् ।**
**पिता न सोऽयं तव भोजराजस्त्वमङ्ग मायामयजारजातः ।।१६।।**

---

१ शृणुध्वमेतद् वचनं मयोदितं निशम्य सर्वे हृदि धारयन्तु तत् ।
येनाहमेतेष्वसुहृत्त्वमादितश्चरामि बन्धुष्वपि तस्य कारणम् ।।
माता मम महाभागा कदाचित् कमलेक्षणा ।
विचचार गृहोद्याने मन्दमारुतवीजिते ।।
प्रोत्फुल्लाशोकबकुलपूगपुन्नागशोभिते ।
भ्रमद्भ्रमरसङ्घाते कूजत्कोकिलसङ्कुले ।।
नृत्यच्छिखण्डिनिवहे मर्कटाटोपसुन्दरे ।
वसन्तसमये रम्ये सालमण्डलमण्डिते ।।
चरन्ती तत्र मे माता चिन्तयामास सुव्रता ।
भर्तारं कामसन्तप्ता ऋतुस्नाता स्वलङ्कृता ।।
तत्रैव कश्चिद् गन्धर्वो द्रुमिलो नाम नामतः ।
चरन्नन्तर्हितः काले दृष्ट्वा तामेकचारिणीम् ।।
विज्ञाय चिन्तितं तस्याः सर्वसत्त्वाशयार्थवित् ।
उग्रसेनवपुर्बिभ्रत् सस्मितालापवीक्षितम् ।।
तामाससाद कामार्तः कामयानां पतिव्रताम् ।
अजानमाना साऽभ्येत्य रेमे समं वने ।। . . .
जराविनाशाद्यखिलाधिभागिनां नृणां सुराणां महदन्तरं प्रिये ।। . . .
निस्स्रेतोर्भिन्नवृत्तस्य पापस्योन्मार्गवर्तिनः ।
क्रूरस्ते तनयो भूयात् साहसी निर्दयोऽघृणः ।।
नानुग्राह्यो देवतानां द्विजानां च तपस्विनाम् ।
इत्थं वदन्त्यां तस्यां स क्रुद्धायां शापशङ्कितः ।।
तावकानां भवेच्छत्रुरित्युक्त्वाऽन्तरधीयत ।
गते तस्मिन् महोद्यानान्माता मम तपस्विनी ।।
- भागवते (१०/३४/३०,३१-३७,४०,४५,४९,५०)

**व्या : अथो** इति । **अथो** केशिवधानन्तरम् । **सुरर्षिः** नारदः । 'नारदाद्याः सुरर्षयः' इत्यमरः । **कुशलेन** वाक्कौशलेन । **विपक्षं** शत्रुपक्षं **निन्दयन्** दूषयन्। उपलक्षणं चैतत् । स्वपक्षं स्तुवन्निति द्रष्टव्यम् । **कंसमभ्येत्य** । हे **अङ्ग** कंस । **सोऽयं भोजराजः** उग्रसेनः । **तव पिता** जनको **न** भवति । **त्वं मायामयात्** उग्रसेनवेषधरात् कपटिनो [1]**जारादुपपतेर्जातोऽसि** । अनेन स्वैरिणीपुत्रः परजात इति गालीद्वयम् उक्तम् भवति ।। १६ ।।

**तवानुगा ये भुवि [2]दानवास्ते त्वमग्रगण्योऽसुरसञ्चयेषु ।**
**सुरेश्वरोऽसौ वसुदेवसूनुः सुराश्च तत्पक्षगताः समस्ताः ।।१७।।**

**व्या : तवेति** । हे **अङ्ग** कंस । **भुवि ये तवानुगा** भृत्याः **ते दानवाः** । **त्वमसुरसञ्चयेषु** राक्षससमूहेषु । **अग्रगण्यः** श्रेष्ठः । अनेन त्वदीयाः सर्वे राक्षसाः त्वमपि राक्षस इति गाली चोक्ता । **असौ वसुदेवसूनुः** कृष्णः **सुरेश्वरः** देवश्रेष्ठः । **तत्पक्षगाः** कृष्णपक्षपातिनः **समस्ताश्च** [3]**सुराः** देवाः । अनेन कृष्णो न मनुष्यमात्रं किन्तु देवोत्तमः । तदीया अपि न मनुष्यमात्रा अपि तु देवा इति स्तुतिरुक्ता ।। १७ ।।

---

१ न चायमुग्रसेनः स पिता तव महाबलः ।
द्रुमिळो नाम तेजस्वी सौभस्य पतिरूर्जितः ।।....
- हरिवंशे (विष्णु. २८/५४-११२)

स औग्रसेने जनितोऽसुरेण क्षेत्रे हि तद्रूपधरेण मायया ।
गन्धर्वजेन द्रुमिळेन नाम्ना कंसो जितो येन वराच्छचीपतिः ।।
- म.भा.ता.नि(११/१९९)

२ ज्ञातयो बन्धुसुहृदो ये च कंसमनुव्रताः ।
**असुराः सर्वे** एवैते लोकोपद्रवकारिणः ।। - भागवते (१०/२/१०)

३ नन्दाद्या ये व्रजे गोपा याश्चामीषां च योषितः ।
वृष्णयो वसुदेवाद्या देवक्याद्या यदुस्त्रियः ।
**सर्वे वै देवताप्राया** उभयोरपि भारत ।। - भागवते (१०/२/८)

**धृतः स गर्भे वसुदेवपत्न्या ततः प्रसूतस्तव मन्दिरेऽस्मिन् ।**
**त्वदीयभीत्याऽऽनकदुन्दुभिस्तं निनाय [१]मित्रालयमालयात् ते ॥१८॥**

**व्या :** धृत इति । **स** कृष्णः । **वसुदेवपत्न्या** देवक्या । **ततो** वसुदेवादेव **गर्भे** धृतः । अनेन परजातत्वस्वैरिणीसुतत्वलक्षणदूषणद्वयं न स्वपक्ष इति सूचितम्। **अस्मिन्** तव **मन्दिरे प्रसूतः** । कथं तर्हि नन्दसूनुरिति ख्यातिरित्यत आह – **त्वदीयभीत्या आनकदुन्दुभिः** वसुदेवः । **तं** कृष्णम् । **ते** तवालयात् गृहात्। **मित्रस्य** नन्दगोपस्य। **आलयं निनाय** नीतवान् । अनेन नन्दपोषितत्वान्नन्दसूनुरिति ख्यातिः । नतु त्वद्धृत्परजातत्वादिति सूचितम् । इति **शशंसेति** श्लोकत्रयस्यैक **एवान्वयः** । कथा तु भागवतादौ[२] स्पष्टैव ॥१८॥

**इतीरिते शौरिवधोद्यतं तं निषिद्ध्य बुद्ध्या स तु देवयोगी ।**
**न वारयामास तदीयबन्धं मतं मुकुन्दस्य तदा विजानन् ॥१९॥**

**व्या :** इतीति । इत्यनेन प्रकारेण **ईरिते** सति नारदेनोक्ते सति । **शौरिवधोद्यतं** वसुदेवहननोद्युक्तं **तं** कंसम् । **स तु देवयोगी** देवर्षिर्नारदः । **बुद्ध्या** उपायेनेत्यर्थः। **निषिद्ध्य** निवार्य । **तदीयबन्धं** वसुदेवस्य शृङ्खलाबन्धम् । **तदा** तस्मिन् समये **मुकुन्दस्य** कृष्णस्य **मतम्** । [३]सापराधत्वं सम्पाद्य हनिष्यतोऽभिमतं **विजानन्** । **न वारयामास** ॥ १९ ॥

---

१ यशोदायाः सुतां कन्यां देवक्याः कृष्णमेव च ।
रामं च रोहिणीपुत्रं वसुदेवेन बिभ्यता ॥
न्यस्तौ स्वमित्रे नन्दे वै याभ्यां ते पुरुषा हताः । - भागवते (१०/३४/१८)

२ भागवते (१०/९६/१६-१८)

३ विनाऽपराधाद्धि न ततो गरीयसो न मातुलो वध्यतामेति विष्णोः ।
लोकस्य धर्माननुवर्ततोऽतः पित्रोर्विरोधार्थमुवाच वायुः ॥
- इति म.भा.ता.नि(१२/४)

**ऋषिस्तमेवं रचितापराधं विधाय कृष्णान्तिकमाजगाम ।**
**यथापराधं खलदण्डकर्तुः पुरः पुरारिप्रतिमस्तमूचे ॥ २० ॥**

**व्या :** ऋषिरिति । ऋषिर्नारदः । तं कंसम् । एवं वसुदेवस्य शृङ्खलाबन्धनेन । रचितापराधं कृतापराधं विधाय कृत्वा । कृष्णस्यान्तिकं समीपम् । आजगाम । पुरारिः शिवः प्रतिमा उपमा यस्य स नारदः । यथापराधम् अपराधमनतिक्रम्य अपराधानुसारेणेत्यर्थः । खलानां दुष्टानां दण्डकर्तुः शिक्षाकर्तुः कृष्णस्य । पुरः अग्रे । तं कंसं कृतापराधम् । ऊचे ॥ २० ॥

**तथाऽपि पूर्णस्य न कृत्यमस्तीत्यसौ भविष्यत् सकलं बभाषे ।**
**ऋतं विधातुं वचनं मदीयमपीह कार्याणि करिष्यतीति ॥२१॥**

**व्या :** तथापीति । तथापि अपराधे सूचितेऽपि पूर्णस्य अवाप्तसकलकामस्य कृष्णस्य । कृत्यं कर्तव्यं नास्तीति असौ नारदः । मदीयं वचनं ऋतं सत्यं विधातुमपि कर्तुं वा । इह लोके । कार्याणि कर्तव्यानि करिष्यतीति हेतोः भविष्यदागामि सकलं मधुरागमनकंसवधादिकं बभाषे । अतः परं न कृतश्चेत् भक्तस्यास्य वचनं मिथ्या भविष्यतीति सर्वं करिष्यतीति भावः । 'सत्यं विधातुं निजभृत्यभाषितम्'[1] इति स्मृतेः ॥ २१ ॥

**इतीरयित्वाऽब्जजनेः सुते गते व्यदृश्यतारिप्रहितः श्वफल्कजः ।**
**मृगाधिपग्रस्तविमुक्तवीक्षितस्ववर्गहृष्यन्मृगशावविभ्रमः ॥२२॥**

**व्या :** इतीति । इत्यनेन प्रकारेण ईरयित्वा उक्त्वा । अब्जजनेः कमलोद्भवस्य ब्रह्मणः सुते नारदे गते सति । अरिणा कंसेन प्रहितः प्रेषितः । मृगाधिपेन सिंहेन ग्रस्तः कवलीकृतश्चासौ विमुक्तश्च यदृच्छया विगलितश्चासौ वीक्षितः दृष्टः स्ववर्गो येन । अत एव हृष्यन्मृगशावः हरिणपोतः तस्य विभ्रम इव

---

१ भागवते ७/८/१८

विभ्रमो यस्य सः मृगाधिपग्रस्तविमुक्तवीक्षितस्ववर्गहृष्यन्मृगशावविभ्रमः। श्वफल्कजः अक्रूरः। व्यदृश्यत अलक्ष्यत। दृशेः कर्मणि लङ्॥ २२॥

**व्रजे स गोदोहनकर्मणि स्थितं निजं प्रभुं नीरदनीलविग्रहम्।**
**ददर्श सन्दर्शयितुं समुद्यतं स्वभक्तसर्वेप्सितदोहदक्षताम्॥२३॥**

**व्या :** व्रज इति। सोऽक्रूरः। व्रजे। गोदोहनकर्मणि स्थितं दोग्धारमित्यर्थः। नीरदवत् जलदवत् नीलं विग्रहः शरीरं यस्य तम्। स्वभक्तानां सर्वेप्सितदोहे सकलेष्टदाने दक्षतां सन्दर्शयितुं समुद्यतं निजं स्वकीयं प्रभुं समर्थं कृष्णं ददर्श॥२३॥

**ननाम नारायणमादिपूरुषं ननर्त नव्योत्सवजातसम्भ्रमः।**
**ननाद नानादुरितौघमर्दयन्ननन्द नन्दस्य तपःफलोदयम्॥२४॥**

**व्या :** ननामेति। स अक्रूरः आदिपूरुषं पुराणपुरुषं नारायणं कृष्णं ननाम नमस्कृतवान्। नव्योत्सवात् नवीनकृष्णदर्शनलक्षणोत्सवात् जातः सम्भ्रमो यस्य स तथोक्तः सन्। ननर्त नृत्यं कृतवान्। नानादुरितौघम् अनेकपापराशिम्। अर्दयन् नाशयन् ननाद जगर्ज। नन्दस्य तपःफलोदयं ननन्द तुतोष॥२४॥

**तमालिलिङ्गे दृढमच्युतः प्रियं सशङ्कमेणाङ्कशुचिस्मिताननः।**
**अनादिसिद्धं भवरूपबन्धनं तदाश्रितं विश्लथयन्निवाञ्जसा।२५।**

**व्या :** तमिति। एणाङ्कवत् चन्द्रवत् शुचि शुभ्रं स्मितमाननं यस्य स तथोक्तः। अच्युतः कृष्णः सशङ्कं शङ्कया सहितं प्रियं तम् अक्रूरम्। तदाश्रितम् अक्रूराश्रितम्। अनादिसिद्धम् अनादिकालमारभ्यागतं भवरूपबन्धनम्। अञ्जसा सम्यक्। विश्लथयन्निव शिथिलीकुर्वन्निव। दृढं यथा भवति तथा। आलिलिङ्गे आलिङ्गनं कृतवान्। पूर्वकृतरज्ज्वादिबन्धनस्य ततोऽपि दृढतरबन्धनान्तरे सति विश्लथनं भवतीति लोकसिद्धम्॥ २५॥

**हीनं महीनं मथितुं निनीषुमक्रूरमक्रूरजनप्रियः स्वम् ।**
**गीर्वाणगीर्बाणगणातिदूरो रक्षोभरक्षोभकृदित्यवोचत् ॥२६॥**

**व्या :** हीनमिति । अक्रूरजनस्य शान्तजनस्य प्रियः । गीर्वाणानां देवानां गिर एव वाच एव **बाणाः** अतिवेगित्वात् तेषां **गणः** तस्यातिदूरः । रक्षांस्येव भरो भूभारः तस्य क्षोभं नाशं करोतीति **रक्षोभरक्षोभकृत्** कृष्णः । **हीनं** नीचं **महीनं** मह्याः इनं पतिं कसं । **मथितुं** हन्तुं **स्वमा**त्मानं **निनीषुं** मधुरां नेतुमिच्छुम् अक्रू-रम् । इति वक्ष्यमाणप्रकारेण । **अवोचत्** ॥ २६ ॥

**क्षेमः किं तव नः पिता च कुशली स्वाध्यायतीर्थाप्लुति-**
**स्वर्ग्याराधनमुख्यशोभनकृतिर्विघ्नोज्झिता वर्तते ।**
**किं संसारविमुक्तये प्रयतसे कंसस्य का वा स्पृहा**
**स त्वं वेत्स्यखिलं यदद्य हि मया कार्यं च तज्ज्ञापय ॥२७॥**

**व्या :** क्षेम इति । हे अक्रूर तव **क्षेमः** कुशलं किम् । 'कुशलं क्षेममस्त्रियाम्' इत्यमरः । **नः** अस्माकं **पिता** वसुदेवः **कुशली** किम् । तव **स्वाध्यायो** वेदपाठः **तीर्थाप्लुतिः** तीर्थस्नानं **स्वर्गिणां** देवानाम् **आराधनं** पूजा एतानि **मुख्यानि** यस्याः सा **शोभनकृतिः** पुण्यकर्म । **विघ्नोज्झिता वर्तते** किम् । **संसारविमुक्तये** मोक्षाय **प्रयतसे** किम् । **कंसस्य का वा स्पृहा** इच्छा । **स त्वम्** अखिलं **वेत्सि** सर्वं जानासि । **अद्य मया यद्धि कार्यं तच्च ज्ञापय** इत्यवोचदित्यन्वयः ॥२७॥

**क्षेमस्तावदनन्त हृत्सरसिजे यावद्भवान् वर्तते**
**स्वीयक्लेशवनानले त्वयि सति क्लेशः क्व पित्रोस्तव ।**
**किन्तु त्वत्पितृतापवादजनितं तच्छृङ्खलाबन्धनं**
**चिन्तासन्ततिहेतुरेव न तयोः सन्तापकारि प्रभो ॥ २८ ॥**

**व्या :** क्षेम इति । हे **अनन्त** देशकालाद्यन्तशून्य कृष्ण । [१]**क्षेमः** कुशलं **तावत्** तत्पर्यन्तं **भवान् हृत्सरसिजे** मद्धृत्कमले **यावद्वर्तते** । 'ब्रह्मणा त्यक्तदेहस्तु मृत इत्युच्यते नर'[२] इति वचनात् । **स्वीयानां** स्वाश्रितानां **क्लेशवनस्य** दुःखकाननस्य **अनले** अग्नौ । **त्वयि सति तव पित्रोः क्लेशः क्व** । **किन्तु त्वत्पितृतापवादजनितं तच्छृङ्खलाबन्धनं तयोः** कंसकृतशृङ्खलाबन्धनम् । अपवादेति वदता लोकापवाद एव । न वस्तुस्थित्या पितृत्वमिति सूचितम् । शृङ्खलाबन्धस्य तज्जनितत्वोक्त्या कंसद्वेषोऽपि सूचितः । भगवत्पितृत्ववार्ताऽपि क्लेशकरीति सूचितम् । **चिन्तासन्ततिहेतुरेव** निरन्तरस्मरणकारणमेव । हे **प्रभो तयोः** तव पित्रोः । **सन्तापकारि** [३]**न** भवतीति दूतोचितं बाह्यम् । हृदयं तु – **नतयोः** नम्रयोस्तयोः सन्तापकारीति कंसकृतापराधसूचनम् ।। २८ ।।

**तीर्थं सेवितमेव यत्पदरजो जुष्टं सुराः सत्कृता**
**येनालिङ्गितवानहं तव वपुश्चीर्णा च पुण्यक्रिया ।**
**यल्लब्धं तव दर्शनं परिचितो वेदश्च यत् ते श्रुतं**
**कल्याणं वचनं भवोऽपि न भवत्सामीप्यभाजो मम ।।२९।।**

**व्या :** तीर्थमिति । **यद्**यस्मात् कारणात् ते **पदरजः जुष्टं** सेवितं तत् तस्मात् **तीर्थं सेवितमेव** । त्वत्पादधूल्यां सकलतीर्थसन्निधेरिति भावः । **अहं येन** कारणेन । **तव वपुः** शरीरमालिङ्गितवानस्मि । तेन **सुराः** देवाः **सत्कृताः**

---

१ लाभस्तेषां यशस्तेषां कुतस्तेषां पराभवः ।
येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ।। - महाभारते
न वासुदेवभक्तानामशुभं विद्यते क्वचित् ।
जन्ममृत्युजराव्याधिभयं नैवोपजायते ।। - विष्णुसहस्रनामस्तोत्रे

२ विष्णुतत्त्वविनिर्णयाद्युद्धृतभारतवचनम् ।

३ विपदः सन्तु नः शश्वत् तत्र तत्र जगद्गुरो ।
भवतो दर्शनं यत् स्यादपुनर्भवदर्शनम् ।। - भागवते (१/८/२८)

सर्वदेवाश्रितत्वदङ्गालिङ्गने सति देवतालिङ्गनस्यापि कृतत्वादिति भावः । **यद्यस्मात् तव दर्शनं लब्धं तत् तस्मात् पुण्यक्रिया चीर्णा** कृता । 'कर्मणा ज्ञानमातनोति' इति श्रुतेः । पुण्याभावे तव दर्शनाभावादिति भावः । **यद्यस्मात् ते कल्याणं शुभं वचनं श्रुतम्** । तत् तस्मात् **वेदश्च परिचितः** अभ्यस्तः । त्वद्वचनस्य सकलवेदोपबृंहितत्वादिति भावः । **भवत्सामीप्यभाजः** भवत्समीपस्थितस्येत्यर्थः । **मम भवः संसारोऽपि न** । एतत् – **किं संसारविमुक्तये** प्रयतसे इत्यस्य संसार एव नास्ति किमर्थं प्रयत्न इत्युत्तरम् । सामीप्यादीनां मोक्षरूपत्वादिति भावः ॥ २९ ॥

**किं विष्णो बहुनोदितेन विदितं विश्वं भवद्दर्शना-**
**च्छत्रुर्मित्रमभूद्भवोऽपि यदहं कंसेन सम्प्रेषितः ।**
**अद्राक्षं तव सुन्दरं वपुरयं सर्वज्ञचूडामणे**
**प्रश्नस्ते नृविडम्बनाय मम च प्रत्युक्तिरीशेदृशी ॥ ३० ॥**

**व्या : किमिति** । हे **विष्णो** कृष्ण । **बहुना उदितेन** उक्तेन **किम्** । **भवद्दर्शनाद्विश्वं** जगद्विदितं विदितप्रायम् । विश्ववेदनफलस्य त्वद्दर्शनादेव सिद्धेः । 'येनाश्रुतं श्रुतं भवति' इति[1] श्रुतेरिति भावः । **अखिलं वेत्सीत्यस्योत्तरमेतत्** । **शत्रुरपि भवः** संसारो मम **मित्रमभूत्** । त्वद्दर्शनस्पर्शनलाभात् इदं संसारविमुक्तये प्रयतसे किमित्यस्य अधुना संसारोऽपि सारतया प्रतीयते, किं तद्विमुक्त्या इत्युत्तरान्तरम् । तत्कुत इत्यत आह – **यद्यस्मात्** कारणात् **कंसेन** शत्रुभूतेन **सम्प्रेषितोऽहं** तव **सुन्दरं वपुः अद्राक्षम्** अपश्यम् । शत्रोरपि कंसस्य हितकारित्वात् शत्रुरूपो भवोऽप्येवमेवेति भावः । हे **सर्वज्ञचूडामणे अयं ते** तव **प्रश्नः नृविडम्बनाय** मनुष्यानुकरणाय । न त्वज्ञानादिति भावः । हे **ईश मम प्रत्युक्तिश्चेदृशी** विडम्बनार्थेत्यर्थः । न तु तवाज्ञानमाशङ्क्येति भावः ॥ ३० ॥

---

१ छान्दोग्योपनिषत् ६/१/३

**कंसः सम्प्रति कार्मुकोत्सवकथाव्याजेन ते विप्रियं**
**कर्तुं वाञ्छति तेन मातुलमहं सार्थं विधातुं भवान् ।**
**गत्वा तत्र विभुर्धुनोतु सबलं शत्रुं पुनः प्रस्फुर-**
**द्भ्रूचापोत्सवमारचय्य भजतामाधिं समाधिप्रियः ॥ ३१ ॥**

**व्या :** कंस इति । सम्प्रति इदानीं कंसः कार्मुकोत्सवस्य कथाव्याजेन । ते विप्रियं विशेषेण प्रियमिति दूतोचितं च वचनम् । विप्रियमनिष्टमिति हृदयम्। कर्तुं वाञ्छति। इदं कंसस्य का वा स्पृहेत्यस्योत्तरम् । तेन कारणेन भवान् मातुलमहं मातुलेन क्रियमाणोत्सवं सार्थं सप्रयोजनम् । धनुरुत्सवस्य यत्फलं हि शत्रुवधः तत्सहितमित्यर्थः । विधातुं कर्तुं तत्र मधुरायां गत्वा सबलं सेनासहितं शत्रुं मातुलस्य शत्रुमित्यापाततः, शत्रुभूतं कंसमेवेति हार्दम्। अत एव शत्रुमिति सामान्यपदप्रयोगः। तवेति हार्दम् । धुनोतु संहरतु । पुनस्तद्वधानन्तरम् । समाधिप्रियः भवान् स्फुरद्भ्रूचापोत्सवं भ्रूविक्षेपधनुरुत्सवम्। [१]सभ्रूभङ्गावलोकनमित्यर्थः । आरचय्य कृत्वा । भजतां सेवमानानाम् । तत्रत्यस्त्रीपुरुषाणाम् । आधिं मनःपीडां धुनोतु। एतत् यदद्य मया कार्यं तज्ज्ञापयेत्यस्य दुष्टवधः शिष्टपरिपालनं चेति कार्यद्वयं कार्यमित्युत्तरम् ॥३१॥

**मधुरा मधुराकेशमहसा महसाधिका ।**
**सहसा सह साऽऽप्या स्वैर्भवता भवतारक ॥ ३२ ॥**

**व्या :** मधुरेति । हे भवतारक संसारोत्तारक कृष्ण । भवता मधुनः पुष्परसस्य राकेशस्य पूर्णिमाचन्द्रस्य महसा कान्त्या । 'पूर्णे राका निशाकरे' इत्यमरः । महस्य चित्तोल्लासस्य । साधिका सा मधुरा पुरी । स्वैः स्वकीयैः सह सार्धम् । सहसा शीघ्रम् । आप्या प्राप्या । मधुरां प्रत्यागच्छेत्यर्थः[२] ॥ ३२ ॥

---

१ ध्यायेदजस्रमीशस्य पद्मजादिप्रतीक्षितम् ।
भ्रूभङ्गं पारमेष्ठ्यादिपददायि विमुक्तिदम् ॥ - द्वादशस्तोत्रे (१/११)

२ पृष्टो भगवता सर्वं वर्णयामास माधवः ।

**स ततः सततध्यानशुद्धवृद्धजनाश्रिताम् ।**
**मधुरां मधुरां कर्तुं गमनायोपचक्रमे ।। ३३ ।।**

**व्या :** स इति । स कृष्णः । ततः अक्रूरवचनश्रवणानन्तरम् । सततध्यानेन निरन्तरकृष्णध्यानेन । शुद्धाः पवित्राः वृद्धजनाः तैराश्रितां मधुरां पुरीं मधुरां स्वप्रवेशेन मनोहरां कर्तुं गमनाय यात्रायै उपचक्रमे उद्युक्तवान् ।। ३३ ।।

**हरिं मधुपुरीं यान्तं विलोक्य व्रजयोषितः ।**
**विलेपुर्विविधालापैर्विनिवर्तयितुं धिया ।। ३४ ।।**

**व्या :** हरिमिति । हरिं कृष्णं मधुपुरीं यान्तं गच्छन्तं विलोक्य निरीक्ष्य । व्रजयोपितः निवर्तयितुं धिया विविधालापैर्नानाविधप्रलापैः । विलेपुः परिदेवनं चक्रुः ।।३४।।

**रम्याधरोष्ठसुधया रचितात्मवृत्ती-**
**र्न त्यक्तुमर्हसि नवाम्बुदनीलमूर्ते ।**
**त्वत्सङ्गभङ्गकरणोद्यतपापमङ्ग**
**शक्नोति हि क्षपयितुं तव लोचनान्तः ।।३५।।**

**व्या :** रम्येति । नवाम्बुदनीलमूर्ते कृष्ण । तव रम्याधरोष्ठसुधया रचिता आत्मवृत्तिः स्वजीवनं याभिस्ता अस्मान् त्यक्तुं नार्हसि । भवतीनां दुरदृष्टप्रतिवन्धकवशात् गच्छामीत्यत आहुः । हे अङ्ग प्रिय । त्वत्सङ्गस्य तवाङ्गसङ्गस्य । भङ्गकरणे विच्छेदकरणे । उद्यतम् उद्युक्तं पापं दुरदृष्टम् । तव लोचनान्तः अपाङ्गः । क्षपयितुं शक्नोति हि । त्वत्कृपाकटाक्षवीक्षितेषु पापावस्थितिर्न घटत इत्यर्थः । कंसवधाख्यकार्यार्थं गच्छामीत्यतो वाऽऽहुः । हे

---

वैरानुवन्धं यदुषु वसुदेववधोद्यमम् ।। - भागवते (१०/३७/४)

अङ्ग वत्स । त्वत्सङ्गभङ्गकरणोद्यतं पापं पापिष्ठं कंसम् । तव [1]लोचनान्त एव क्षपयितुं हन्तुं शक्नोति हि । कुपितत्वत्कटाक्षवीक्षणेन ब्रह्माण्डमपि भस्मीभवति। किमु कंस इति भावः । हिशब्दः 'भ्रूभङ्गमात्रेण हि सन्दिधिक्षोः'[2] इति प्रसिद्धिं सूचयति ॥३५॥

**यियासुं त्वां समालोक्य नः प्राणोऽपि[3] यियासति ।**
**युवयोरविनाभावमक्षैरीक्षामहेऽधुना ॥ ३६ ॥**

**व्या : यियासुमिति** । हे कृष्ण मधुरां प्रति **यियासुं** यातुमिच्छन्तं **त्वां समालोक्य** दृष्ट्वा । **नो** अस्माकं **प्राणः** प्राणवायुः । **यियासति** देहात् गन्तुमिच्छति । यातेः सन् । **युवयोरविनाभावं** 'देहेऽपि यत्र पवनस्तत्र हरिर्यतोऽसौ'[4] इत्याद्यागमश्रुतं साहचर्यनियमम् **अधुनाऽक्षैरिन्द्रियैः** । **ईक्षामहे** प्रत्यक्षत एव पश्यामः ॥ ३६ ॥

**किमु दुरितमकारि येन कंसप्रकटितकार्मुकसम्भ्रमे शराणाम् ।**
**विधिरकृत पदं विवेकहीनो मृदुलकलेवरमस्मदीयमादौ ॥३७॥**

**व्या : किम्विति** । अस्माभिः **किमु** कीदृशम् । **दुरितं** पापम् । **अकारि** कृतम्। **येन विवेकहीनो विधिः** दैवं **अस्मदीयम्** । **मृदुलकलेवरं** कोमलशरीरम् ।

---

१ निखिलाघौघविनाशक परसौख्यप्रददृष्टे ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ - द्वादशस्तोत्रे (१०/१८)
स क्रोधदीप्तनयनान्तहतः परस्य शोषं क्षणादुपगतो दनुजादिसत्त्वैः ।
सिन्धुः शिरस्यर्हणं परिगृह्य रूपी पादारविन्दमुपगम्य बभाष एतत् ॥
- म.भा.ता.नि.(८/१०)

२ भागवते (९/६/४१)

३ ...तत्रैव वायुरिति वेदवचः प्रसिद्धम् ॥ - म.भा.ता.नि. (४/४६)
'कस्मिन्वहमुत्क्रान्तुत्क्रमिष्यामि कस्मिन्वहन्त्विति स्थिते स्थास्यामि'
- (षट्प्रश्न. उ. ६/२) च

४ महाभारततात्पर्यनिर्णयवचनम् - ५/४६

कंसेन **प्रकटितकार्मुकसम्भ्रमे शराणां पदं** लक्ष्यम् । 'वेध्यं लक्ष्यं शरव्यं च निमित्तं च पदं विदुः' इति हलायुधः । **आदौ** प्रथमम् । **अकृत** कृतवान् । कंसकृतकार्मुकोत्सवार्थं कृष्णगमनेन अस्माकं शरविद्धवत् क्लेशो जायत इति भावः । **पुष्पिताग्रावृत्तम्** । 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा'[१] ॥३७॥

**अहो विधे त्वद्वचसाऽतितृप्ता यदूद्वहालिङ्गनलुब्धचित्ताः ।**
**तदीक्षणेनापि कथं विहीना दयातिदूराद्य करोषि दीनाः ॥३८॥**

**व्या : अहो इति । दयातिदूर** कृपाविधुर । हे **विधे** । **त्वद्वचसा** आज्ञारूपेण वाक्येन । **अतितृप्ताः** अतिहृष्टाः । कुतः **यदूद्वहस्य** कृष्णस्यालिङ्गने **लुब्धं** लोभयुक्तं **चित्तं** यासां ताः । **दीनाः** कृपणाः नः । **अद्य**ाधुना । **तदीक्षणेनापि** कृष्णदर्शनेनापि **विहीनाः** रहिताः । **कथं करोषि** । एतादृशं वचनं न कार्यमिति भावः । अक्रूरे चतुर्मुखावेशोऽस्तीति[२] प्रसिद्धेः । एतत्कृतं तत्कृतमित्ययमाक्रोशः ॥ ३८ ॥

**अयमपि च विरुद्धनामधेयो नयति विलापमुपेक्ष्य कामिनीनाम् ।**
**प्रियसरसविलासमग्र्यवेषं कमलदृशं कमनीयचारुहासम् ॥३९॥**

**व्या : अयमिति**[३] । **विरुद्धनामधेयः** परमप्रियकृष्णवियोगकरणेन **विरुद्धम्** अर्थाननुकूलं **नामधेयम्** [४]अक्रूर इति नाम यस्य सः । **अयमपि च** कंसदूतः ।

---

१ इति छन्दोमञ्जर्याम् ।

२ संसेवनाय स हरेरभवत् पुरैव नाम्ना किशोर इति यः सुरमायकोऽभूत् ।
स्वायम्भुवस्य च मनोः परमांशयुक्त आवशेयुक् कमलजस्य बभूव विद्वान् ॥
- म.भा.ता.नि. (१३/८५)

३ मैतद्विधस्याकरुणस्य नाम भूदक्रूर इत्येतदतीवदारुणः ।
योऽसावनाश्वास्य सुदुःखितं जनं प्रियात् प्रियं नेष्यति पारमध्वनः ॥
- भागवते (१०/३७/२२)

४ अक्रूरः सौम्य उच्यते । - गीताभाष्ये (१७/१६)

कामिनीनां विलापं उपेक्ष्य । प्रियाः सरसाः विलासाः यस्य तम् । अग्र्यवेषं श्रेष्ठाकारं कमलदृशं अरविन्दनेत्रं कमनीयचारुहासं कृष्णं नयति ॥ ३९ ॥

**भृत्योऽयं किमु सन्तनोतु स परं प्रत्यर्थिभूतः सतां**
**कंसस्तद्धनुरुत्सवोऽस्तु निहतो भग्नं च भूयाद्धनुः ।**
**योऽस्मत्प्राणसमं वियोजयति हा स्मेराननं श्रीपतिं**
**तं प्राणेन वियोजयत्वतिमदं देवोऽस्मदीयो विभुः ॥ ४० ॥**

**व्या :** भृत्य इति । भृत्यः अयम् अक्रूरः । **किमु सन्तनोतु** किं करोतु । वैष्णवस्यास्य बह्वभिशापकरणे इच्छाभावादियमुक्तिः । **परन्तु सः कंसः सतां प्रत्यर्थिभूतः** शत्रुभूतः । **तद्धनुरुत्सवो निहतोऽस्तु । धनुरपि भग्नं च भूयात् । यः** कंसः **अस्मत्प्राणसमं स्मेराननं** स्मितमुखम् । **श्रीपतिं वियोजयति । हा** कष्टम् । **अतिमदम्** अत्यन्ताहङ्कारिणं **तं** कंसम् । **विभुः** समर्थः । **अस्मदीयो देवः । प्राणेन वियोजयतु** वियोगं प्रापयतु । अनेन शापव्याजेन भाव्यर्थनिरूपणम् । गच्छतः कृष्णस्याशीर्वचनं वा कृतं भवति ॥ ४० ॥

**जिगमिषसि मुरारे राजधानीं यदीतः**
**श्रुतिततिजित याहि श्रीः शुभा तत्र तेऽस्तु ।**
**सुखद तदुपसर्गं सौम्य सन्धेहि शीघ्रं**
**घटय घटक नो चेन्नस्तवैवोपसर्गम् ॥ ४१ ॥**

**व्या :** जिगमिषसीति । हे **मुरारे । इतः** गोष्ठात् । **यदि राजधानीं** मधुरापुरीं **जिगमिषसि** गन्तुमिच्छसि । तर्हि **श्रुतिततिः** वेदसमूहो **जितो** येन तस्य सम्बुद्धिः । वेदान्तवेदिनामप्यगोचरेत्यर्थः । अनेनास्मदादीनां कथं वश्य इति सूचितम् । **याहि** गच्छ । यातेर्लोट् । **तत्र** मधुरायाम् । **शुभा श्रीः** सम्पत् । **ते** तव । **अस्तु ।** बलात्कारेण गच्छन्तं प्रति तत्र राज्यं कुर्विति तदाक्रोशोऽयम् । हे **सौम्य । सुखं** ददातीति **सुखदः** । तस्य पूर्वोक्तयाहीति पदस्य यः **उपसर्गः** तं **शीघ्रं सन्धेहि ।**

याहीति पदे सुखदोपसर्गस्य सन्धिं कुर्वित्यर्थः। प्रेत्याद्युपसर्गाणां गमनोपोद्बलकत्वेन अस्माकमसुखदत्वात् पुनरागमनार्थकं सन्धेहीत्यर्थः। शीघ्रमायाहीत्युक्तं भवति। गच्छति कान्ते शीघ्रमायाहीति वक्तुं मानवशात् असमर्थानां निगूढोक्तिरियम्। हे **घटक** अघटितघटक कृष्ण । **नो चेत्** सुखदमुपसर्गं न सन्दधासि चेत् । **नो**ऽस्माकम्। तवैव उप समीपे **सर्गं** सृष्टिं **घटय** सम्पादय। अनेनानागमने मरणं सूच्यते। तं वा उपसर्गं इमं वा उपसर्गं देहीति वाग्वैखरी च दर्शिता। अनेन स्वासां वैय्याकरणमर्यादाभिज्ञत्वं दर्शितम् ॥४१॥

**प्रियं निनीषोर्ननु यस्य धाता पिपर्ति काङ्क्षां निजसौख्यदाता।**
**स एष गर्भीकृतपद्मजन्मा जिघृक्षति श्रीशपदाम्बुजन्म ॥४२॥**

**व्या :** प्रियमिति । **प्रियं** कृष्णम् । **निनीषोः** नेतुमिच्छोः । **यस्य** अक्रूरस्य **काङ्क्षाम्** आकाङ्क्षाम् । **निजसौख्यदाता धाता** ब्रह्मा **पिपर्ति** पुष्णाति । 'पॄ पालनपूरणयोः' इति धातुः । अत एव **गर्भीकृतः** अन्तरावेशितः **पद्मजन्मा** कमलोद्भवो येन सः । ब्रह्मणा आविष्टो अक्रूर इति तत्त्वस्य अक्रूरकृतकार्यानुकूलत्वरूपकारणावान्तरकथनेन विभावयन्ति । अत एव **विभावनालङ्कारः** । **स एषः** अक्रूरः । **श्रीशस्य** कृष्णस्य **पदाम्बुजन्म** पादारविन्दम् । **जिघृक्षति** ग्रहीतुमिच्छति । कमलाश्रयणेनापि ब्रह्मावेशं दृढयन्ति ॥ ४२ ॥

**इति विरहजभीत्या वेपमानाः कृशाङ्गी-**
**र्गलितवलयहाराश्चित्रलेख्यानुसाराः ।**
**मुरभिदमृतकल्पैः प्रीणयन् प्रेमवाक्यैः**
**सकरुणमसकृत् ता वीक्षमाणः प्रतस्थे ॥ ४३ ॥**

**व्या :** इतीति । **इती**त्थम् । **विरहजभीत्या वेपमानाः** कम्पमानाः । अत एव **कृशाङ्गीः** । **गलितवलयहाराः** । चित्रलेख्यामनुसरन्तीति **चित्रलेख्यानुसाराः** ।

निर्व्यापारा इत्यर्थः । **ताः** गोपीः **अमृतकल्पैः प्रेमवाक्यैः** प्रियवचनैः **प्रीणयन्** हर्षयन् । **सकरुणं** यथा तथा **असकृत्** पुनः पुनः **वीक्षमाणः मुरभित्** कृष्णः । **प्रतस्थे** ॥४३॥

**पादस्पर्शकरग्रहप्रियतमाङ्गाश्लेषकेशग्रह-**
**प्रेक्षाधःकरणोपरिस्थितिमिथोमुष्ट्यादिजुष्टे रते ।**
**गोपीनां कुचकुम्भमर्दनकृता मल्लेन्द्रविद्यार्जिता**
**येनेभार्दनवैखरी[1] च स कथं तास्त्यक्तुमीष्टे प्रभुः ॥४४॥**

**व्या : पादस्पर्शेति । पादस्पर्शः करग्रहः** अन्योन्यहस्तग्रहणम् । **प्रियतमस्य अङ्गस्य** मध्याद्यवयवस्या**श्लेषः । केशग्रहः** कचग्रहणम् । **प्रेक्षा** परस्परवीक्षणम्। **अधःकरणम् उपरिस्थितिः** बन्धविशेषः । **मिथोमुष्टिः** परस्परमुष्टामुष्टी एतदादिभिर्विलासैर्**जुष्टे रते** सुरते । **गोपीनां कुचा**ख्य**कुम्भ**स्य कुञ्जरमूर्धाग्रस्य **मर्दनं** करोतीति स तथोक्तः । तेन । 'कुम्भः कुञ्जरमूर्धाग्रे कौम्भकर्णे घटेऽपि च' इति रत्नमाला । **येन** कृष्णेन । **मल्लेन्द्रविद्या** मल्लनियुद्धविद्या । **आर्जिता** अभ्यस्ता। पादस्पर्शादिमिथोमुष्टिपर्यन्तविभ्रमाणां सुरतमल्लनियुद्धयोः साम्यादिति भावः । **इभार्दनवैखरी च** गजमर्दनप्रौढिश्चार्जितेति पूर्वेण सम्बन्धः । अनेन स्त्रीभिः समं विलासीभूय स्थितेनापि कृष्णेन मधुरायां मल्लेन्द्रादिमर्दनात् तस्य रेतःपाताभावः सहजविद्याकौशल्यं च द्योत्यते । **स प्रभुः** श्रीकृष्णः । **ताः** विद्याद्वये गुरुस्थानीयाः गोपीः । **कथं त्यक्तुमीष्टे** समर्थो भवति । स्वकृतविलासपात्रीभूतत्वात् कृष्णस्य पौनःपुन्येन गोपीषु दयेति भावः ॥ ४४ ॥

**स बल्लवीनां प्रणयाख्यदाम्ना निबद्ध्यमानोऽपि रिपून् जिघांसुः ।**
**जगाम शौरिर्न विजेतुकामो निवार्यमाणोऽपि निवर्तते स्म ॥४५॥**

---

१ उद्वीक्ष्य स्तनजृम्भिकुम्भयुगलं कुम्भीश्वराशङ्कया ... - रु.वि. (९/५४)

**व्या : स** इति । **स शौरिः** कृष्णः । **बल्लवीनां** गोपीनाम् । **प्रणयाख्यदाम्ना निबद्ध्यमानोऽपि रिपून्** कंसादीन् **जिघांसुः** हन्तुमिच्छुः सन् । **जगाम** । तथाहि। **विजेतुकामो** जयार्थी भटः । **निवार्यमाणोऽपि न निवर्तते** रज्ज्वादिना निबद्धा अपि जयार्थिनो भटाः बलाद्गच्छन्तीति लोकसिद्धम् । अतिप्रेमास्पदीभूता अपि गोपीः कार्यान्तरगौरवात् त्यक्त्वा गत इत्यभिप्रायः ।। ४५ ।।

**रथेन दूरे रमणं व्रजन्तं व्रजस्त्रियस्तं परितोऽनुजग्मुः ।**
**दृगश्वभाजा दृढभक्तिदाम्ना [1]मनोरथेनामलबुद्धियन्त्रा ।।४६।।**

**व्या : रथेनेति । रथेन दूरे व्रजन्तं तं रमणं** कृष्णम् । **परितः व्रजस्त्रियः दृगश्वभाजा** नेत्राख्याश्वभाजा । **दृढा भक्तिरेव दाम** रथरश्मिर्यस्य स तथोक्तः तेन । रथाश्वयोः सङ्घटको हि रथरश्मिः निकटदर्शने अरुचि स्यात् । अतस्तत्परिहाराय स्नेहः पाशत्वेन निरूपितः । **अमलबुद्धियन्त्रा** निर्मलबुद्धिसूतेन । 'यन्ता हस्तिपसूतयोः' इति रत्नमाला । [2]**मनोरथेनानुजग्मुः** । यावद्दृष्टिपातं चक्षुषा पश्यन्त्यः ततो मनसा ध्यायन्त्यः स्नेहकातराः स्थिता इति भावः ।। ४६ ।।

**नयन्नसौ नन्दकिशोरमीशं श्वफल्कसूनुर्यमुनाम्बुमध्ये ।**
**ददर्श सेवाफलरूपमन्यैरदृश्यमस्यैव विचित्ररूपम् ।। ४७ ।।**

**व्या : नयन्निति । ईशं नन्दकिशोरं** नन्दबालकं कृष्णं **नयन् असौ श्वफल्कसूनुः** अक्रूरः । श्वफल्क इत्यक्रूरपिता । **यमुनाम्बुमध्ये सेवाफलरूपं** सारथ्यकरण-लक्षणसेवाफलात्मकम् **अन्यैरदृश्यम्** । **अस्यैव** कृष्णस्यैव **विचित्ररूपम्** अलौकिकरूपम् । [3]**ददर्श** ।। ४७ ।।

---

१ यावदालक्ष्यते केतुर्यावद् रेणू रथस्य च ।
अनुप्रस्थापितात्मानो लेख्यानीवोपतस्थिरे ।। - भागवते (१०/३७/३२)

२ विज्ञानसारथिर्यस्तु मनः प्रग्रहवान् नरः ।
सोऽध्वनः पारमाप्नोति तद् विष्णोः परमं पदम् ।। - कठोपनिषदि

३ निमज्ज्य तस्मिन् सलिले जपन् ब्रह्म सनातनम् ।

**पुण्यक्षेत्रनिवासिनां सुविमलज्ञानानुरक्तात्मनां**
**पारम्पर्यसमागतं प्रभुमपि श्रीकृष्णपक्षाप्रियम् ।**
**दूरेणोत्सृजतां सुशान्तमनसां तीर्थाटनं कुर्वतां**
**वेद्यं हृद्यमपश्यदम्बुनि हरे रूपं श्वफल्कात्मजः ॥४८॥**

**व्या :** पुण्यक्षेत्रेति । पुण्यक्षेत्रे निवासो येषां तेषाम् । सुविमलज्ञाने अत्यन्तविमलज्ञाने । अनुरक्तात्मनां स्निग्धमनसाम् । पारम्पर्यसमागतं वृद्धपरम्परया समागतमपि प्रभुं राजानं कृष्णपक्षाप्रियं कृष्णसहायाप्रियम् । दूरेणोत्सृजतां सुशान्तमनसां तीर्थाटनं कुर्वतां पुरुषाणां वेद्यं ज्ञेयं हृद्यं मनोहरं हरेः कृष्णस्य रूपम् । श्वफल्कात्मजः अम्बुनि यमुनाजले । अपश्यत् । नन्वेतादृशानां वेद्यम् अक्रूरेण कथं दृष्टमित्यतोऽक्रूरस्यापि मधुराक्षेत्रवासित्वात् कृष्णोत्तमताभिज्ञत्वात् कंसाख्यप्रभुपरित्यागात् स्वयमक्रूरत्वात् यमुनातीर्थं प्रत्यागमनाच्चोक्तगुणवत्त्वादिति भावः ॥ ४८ ॥

**भक्तो नाम स एव यः करगते कृष्णेऽपि वेदोदितं**
**तत्कर्माचरदेतदेव दुरितप्रध्वंसि कर्म क्षितौ ।**
**तीर्थं चापि तदेव जात्वपि तयोः संसेवया श्राव्ययाऽ-**
**दृश्यं रूपमदर्शयन्मुररिपुर्दास्यैकवश्यः प्रभुः ॥ ४९ ॥**

---

तावेव ददृशेऽक्रूरो रामकृष्णौ समन्वितौ ॥
तौ रथस्थौ कथमिह सुतावानकदुन्दुभेः ।
तर्हि स्वित् स्यन्दने न स्त इत्युन्मज्ज्य व्यचष्ट सः ॥
तत्रापि च यथापूर्वमासीनौ पुनरेव सः ।
न्यमज्जद् दर्शनं यन्मे मृषा किं सलिले तयोः ॥
भूयस्तत्रापि सोऽद्राक्षीत् स्तूयमानमहीश्वरम् । - भागवते (१०/३७/३७-४०)
नित्यं हि शेषमभिपश्यति सिद्धमन्त्रो दानेश्वरः स तु तदा ददृशे हरिं च ।
- म.भा.ता.नि. (१३/९३)

**व्या :** भक्त इति । **भक्तो नाम स एव** । अक्रूर एव । **योऽक्रूरः** । **कृष्णे** परब्रह्मणि **करगते** हस्तगते सत्य**पि** । **वेदोदितम्** 'अहरहः सन्ध्यामुपासीत' इति वेदोक्तं माध्याह्निकसन्ध्यावन्दनरूपम् । **तत्कर्म** कृष्णपूजात्मकं कर्म । **आचरत्** । तत्कर्मेत्यनेन [1]नित्यनैमित्तिककर्मणां [2]विष्णुपूजात्मकत्वमभिप्रैति ।

'अतीतानागतज्ञानी त्रैलोक्योद्धरणक्षमः ।
एतादृशोऽपि नाचारं श्रौतं स्मार्तं परित्यजेत् ॥' [3]

इति वचनात् । **क्षितौ** भूम्यां **दुरितप्रध्वंसि** अघमर्षणं **कर्म एतदेव** अक्रूर-कृतमेव । **क्षितौ तीर्थं चापि तदेव** यमुनाजलमध्यस्थब्रह्महृदाख्यमेव । **जात्वपि** सकृदपि । **श्राव्यया** श्रवणार्हया । **तयोः** कर्मतीर्थयोः । **संसेवया दास्यैकवश्यः** केवलकैङ्कर्येण वशीकर्तुं योग्यः । कृष्णरथरश्मिग्रहणेनैवाक्रूरस्य महाफलसिद्धेः **दास्यैकवश्य** इत्युक्तम् । **मुररिपुः प्रभुः** कृष्णः **अदृश्यं** योगिभिरदर्शनीयं **रूपमदर्शयत्** ॥ ४९ ॥

**स सहस्रसहस्रांशुमरीचिव्याप्तदिक्तटम् ।**
**कमलाकरपद्मार्थ्यचरणारुणभास्करम् ॥ ५० ॥**

**व्या : स** इति । **स** अक्रूरः । सहस्राणि अंशवो येषां ते **सहस्रांशवः** सूर्याः । **सहस्रं** सहस्रांशवः तेषां **मरीचय** इव मरीचयः स्वाङ्गकान्तयः ताभि**र्व्याप्तं दिक्तटं** येन तम् । **कमलायाः कराख्यं पद्मं** तेना**र्थ्यः** प्रार्थनीयः **चरण** एवा**रुणभास्करो** यस्य तम् । कृष्णमैक्षतेत्युत्तरेणान्वयः[4] ॥ ५० ॥

---

१ 'ज्ञानी च कर्माणि सदोदितानि कुर्यादकामः सततं भवेत ।'
-गीताभाष्य-कृष्णामृतमहार्णव-
ब्रह्मसूत्रभाष्याद्युद्धृतकमठश्रुतिवचनम् ।

२ 'शुभेनानन्दवृद्धिः स्यात् ह्रासश्चैवाशुभेन हि ।
ज्ञानिनोऽपि यतस्तेन कर्तव्यं शुभमेव तैः' ॥ - अनुव्याख्याने (४/१/२०५)

३ हरिवंशवचनम्-कृष्णामृतमहार्णवे (श्लो.२५५) तथा ब्रह्मसूत्रभाष्ये(३/४/३०) उद्धृतम्।

४ सिद्धैर्भुजङ्गपतिभिरसुरैर्नतकन्धरैः ॥

सहस्रशिरसं देवं सहस्रफणमौलिनम् ।
नीलाम्बरं विसश्वेतं शृङ्गैः श्वेतमिव स्थितम् ॥
तस्योत्सङ्गे घनश्यामं पीतकौशेयवाससम् ।
पुरुषं चतुर्भुजं शान्तं पद्मपत्रारुणेक्षणम् ॥
चारुप्रसन्नवदनं चारुहासनिरीक्षणम् ।
सुभ्रून्नसं चारुकर्णं सुकपोलारुणाधरम् ॥
प्रलम्बपीवरभुजं तुङ्गांसोरःस्थलश्रियम् ।
कम्बुकण्ठं निम्ननाभिं वलिमत्पल्लवोदरम्॥
बृहत्कटितटश्रोणिकरभोरुद्वयान्वितम् ।
चारुजानुयुगं चारुजङ्घायुगलसंयुतम् ॥
तुङ्गगुल्फारुणनखव्रातदीधितिभिर्वृतम् ।
नवाङ्गुल्यङ्गुष्ठदलैर्विलसत्पादपङ्कजम् ॥
महार्हमणिविभ्राजत्किरीटकटकाङ्गदैः ।
कटिसूत्रब्रह्मसूत्रहारनूपुरकुण्डलैः ॥
भ्राजमानं पद्मकरं शङ्खचक्रगदाधरम् ।
श्रीवत्सवक्षसं भ्राजत्कौस्तुभं वनमालिनम् ॥
सुनन्दनन्दप्रमुखैः पार्षदैः सनकादिभिः ।
सुरेशैर्ब्रह्मरुद्राद्यैर्नवभिश्च द्विजोत्तमैः ॥
प्रह्लादनारदवसुमुखैर्भागवतोत्तमैः ।
स्तूयमानं पृथङ्मार्गैर्वचोभिरमलात्मभिः ॥
श्रिया पुष्ट्या गिरा कान्त्या कीर्त्या तुष्ट्येळयाऽजया ।
विद्ययाऽविद्यया शक्त्या मायया च निषेवितम् ॥
विलोक्य सुभृशं प्रीतो भक्त्या परमया युतः ।
हृष्यत्तनूरुहो भावपरिक्लिन्नात्मलोचनः ॥
गिरा गद्गदयाऽस्तौषीत् सत्त्वमालम्ब्य सात्वतः ।
प्रणम्य मूर्ध्नाऽवहितः कृताञ्जलिपुटः शनैः ॥ -भाग.(१०/३७/४१-५३)
यथाऽद्रिप्रभवा नद्यः पर्जन्यापूरिता विभो ।
विशन्ति सर्वतः सिन्धुं तद्वत् त्वां गतयोऽन्ततः ॥
अग्निर्मुखं तेऽवनिरङ्घ्रिरीक्षणं सूर्यो नभो नाभिरथो दिशः श्रुतिः ।
द्यौः कं सुरेन्द्रास्तव बाहवोऽर्णवाः कुक्षिर्मरुत् प्राणबलं प्रकल्पितम् ॥

**वज्राङ्कुशपताकाब्जलक्ष्यपादतलोज्ज्वलम् ।**
**भिन्नप्रवालविलसदङ्गुलीदलमण्डितम् ॥ ५१ ॥**

**व्या :** वज्रेति । [1]वज्राङ्कुशपताकाब्जरेखाभिः लक्ष्यं दर्शनीयं पादतलं तेनोज्ज्वलम् । भिन्नप्रवालवत् छिन्नविद्रुमखण्डवत् विलसन्त्यः अङ्गुल्यः दलानीव तैर्मण्डितमलङ्कृतम् ॥ ५१ ॥

**पुष्कलेन्दुसमश्रीमन्निष्कलङ्कनखावलिम् ।**
**उत्तुङ्गरत्नखचितनूत्ननूपुरशोभितम् ॥ ५२ ॥**

**व्या :** पुष्कलेति । पुष्कलेन्दुना पूर्णचन्द्रेण समाः श्रीमन्तो निष्कलङ्काः निर्दोषा नखास्तेषामावलिर्यस्य तम् । उत्तुङ्गरत्नखचिते नूत्ननूपुरे नवीनमञ्जीरे ताभ्यां शोभितम् ॥ ५२ ॥

**लक्ष्मीकराब्जसंसक्तवृत्तजङ्घं [2]वृषाकपिम् ।**
**रत्नदर्पणसङ्काशशस्तजानुद्वयं [3]विभुम् ॥ ५३ ॥**

---

रोमाणि वृक्षौषधयः शिरोरुहा मेघाः परस्यास्थिनखानि तेऽद्रयः ।
निमेषणं रात्र्यहनी प्रजापतिर्मेढ्रं तु वृष्टिस्तव वीर्यमिष्यते ॥
त्वय्यव्ययात्मन् पुरुषे प्रकल्पिता लोकाः सपाला बहुजीवसङ्कुलाः ।
यथा जले सञ्जिहते जलौकसोऽप्युदुम्बरे वा मशका मनोमये ॥
- भागवते (१०/३८/११,१४-१६)

आपस्तेऽङ्घ्र्यवनेजन्यस्त्रींलोकान् शुचयोऽपुनन् ।
शिरसाऽधत्त याः शर्वः स्वर्याताः सगरात्मजाः ॥ - भागवते (१०/३९/१५)

१ सञ्चिन्तयेद्भगवतश्चरणारविन्दं वज्राङ्कुशध्वजसरोरुहलाञ्छनाढ्यम् । - भागवते

२ वृषाकपिरमेयात्मा - इति विष्णुसहस्रनामसु
कपिर्वराहः श्रेष्ठश्च धर्मश्च वृष उच्यते ।
तस्माद्वृषाकपिं प्राह कश्यपो मां प्रजापतिः ॥ - भारते (शान्ति. ३४२/८९)

३ विश्वभुग्विभुः (श्लो. २६), हुतभुग्विभुः (श्लो. ९४) - इति विष्णुसहस्रनामसु
विविधमासीदिति विभुः । तथाहि वारुणशाखायाम्- 'विभु प्रभु प्रथमं मेहनावत

**व्या :** लक्ष्मीति । लक्ष्म्याः कराब्जेन संसक्ते सम्बद्धे वृत्ते वर्तुले जङ्घे यस्य तम् । रत्नदर्पणस्य सकाशं सदृशं शस्तं प्रशस्तं जानुद्वयं यस्य तम् । विभुं वृषाकपिं कृष्णम् ॥ ५३ ॥

**मृदुवर्तुलसम्भास्वद्रम्भास्तम्भोरुमव्ययम् ।**
**करिपोतलसत्कुम्भसमरम्यकटिद्वयम् ॥ ५४ ॥**

**व्या :** मृद्विति । मृदु कोमलं वर्तुलं सम्भास्वत् रम्भास्तम्भवत् कदलीस्तम्भवत् ऊरू यस्य तम् । अव्ययं नाशरहितम् । करिपोतलसत्कुम्भस्य बालगजलसन्मूर्धाग्रस्य समं रम्यकटिद्वयं यस्य तम् ॥ ५४ ॥

**उद्यदर्कशतोद्रिक्तहृद्यकौशेयवाससम् ।**
**विचित्ररत्नसंशोभिहैमकाञ्चीगुणद्युतिम् ॥ ५५ ॥**

**व्या :** उद्यदिति । उद्यदर्कशतात् बालसूर्यशतात् उद्रिक्तमतिशयितं हृद्यं कौशेयवासः पट्टवस्त्रं यस्य तम् । विचित्ररत्नैः नानारत्नैः । संशोभी हैमः सौवर्णः काञ्चीगुणः काञ्चीदाम तस्य द्युतिर्यस्य तम् ॥ ५५ ॥

**अनेकभुवनाधारतनूदरवलित्रयम् ।**
**विरिञ्चिभृङ्गशोभाब्जस्फुरन्नाभिसरोवरम् ॥ ५६ ॥**

**व्या :** अनेकेति । अनेकेषां भुवनानां लोकानामाधारं तनूदरं कृशोदरं तस्मिन् वलित्रयं यस्य तम् । विरिञ्चिभृङ्गेण विरिञ्चाख्यभ्रमरेण शोभा यस्य तत् अब्जं कमलं तेन स्फुरत् लसत् नाभ्याख्यसरोवरं यस्य तम् ॥५६॥

**वलिपल्लवसत्कान्त्या ज्वलितोदरबन्धनम् ।**
**कृशमध्यविशालोरःस्थलचर्चितचन्दनम् ॥ ५७ ॥**

**व्या :** वलीति । वलिपल्लवस्य त्रिवल्याख्यकिसलयस्य । सत्कान्त्या समीचीनतेजसा । ज्वलितं प्रकाशितम् उदरबन्धनम् उदरस्थाभरणविशेषो

---

इति । स ह्येव प्राभवद्विविधोऽभवत्' इति । - गीताभाष्ये (१०/१२)

यस्य तम् । कृशमध्यं तनुमध्यम् । विशालोरःस्थले विस्तृतोरःस्थले चर्चितम् अनुलिप्तं चन्दनं यस्य तम् ॥ ५७ ॥

**लक्ष्मीधराश्लिष्टपुष्टपार्श्वयुग्मं परात् परम् ।**
**अङ्कस्थितरमावक्षःकुङ्कुमाङ्कोपलक्षितम् ॥ ५८ ॥**

**व्या :** लक्ष्मीति । लक्ष्मीधराभ्यां श्रीभूभ्याम् [1]आश्लिष्टमालिङ्गितं पुष्टं पार्श्वयुग्मं यस्य तम् । अङ्कस्थितरमाया उत्सङ्गस्थरमाया वक्षःस्थितकुङ्कुमस्य । अङ्केन चिह्नेन उपलक्षितं व्यावर्तितम् । परात्परम् उत्तमादुत्तमं कृष्णम् ॥ ५८ ॥

**श्रीवत्सवक्षसं श्रीमद्वनमालाविभूषितम् ।**
**स्फुरदिन्दुसमामन्दवरकौस्तुभमण्डनम् ॥ ५९ ॥**

**व्या :** श्रीवत्सेति । श्रीर्वसत्यस्मिन्निति श्रीवत्सं भृगोः पादतललाञ्छनं वक्षसि यस्य तम् । श्रीमद्वनमालया विभूषितम् । स्फुरदिन्दुसमः उद्यदिन्दुसमः अमन्दः श्रेष्ठः वरकौस्तुभ एव मण्डनं भूषणं यस्य तम् ॥ ५९ ॥

**विलसद्रत्नकटककङ्कणैरङ्गुलीयकैः ।**
**शङ्खचक्रगदापद्मैश्चाङ्कितश्रीकराम्बुजम् ॥ ६० ॥**

**व्या :** विलसदिति । विलसद्रत्नकटकानि अङ्गदानि कङ्कणानि करभूषणानि तैः अङ्गुलीयकैः मुद्रिकाभिश्च । शङ्खचक्रगदापद्मैश्चाङ्कितानि श्रीमन्ति कराम्बुजानि यस्य तम् ॥ ६० ॥

**त्रिरेखकम्बुसङ्काशस्फुरन्निष्कशिरोधरम् ।**
**अगण्यलावण्यपूर्णप्रसन्नमुखसारसम् ॥ ६१ ॥**

**व्या :** त्रिरेखेति । त्रिस्रो रेखा यस्य स चासौ कम्बुः शङ्खः तस्य सङ्काशः सदृशः स्फुरन्निष्कण्टकाभरणविशेषो यस्य सः शिरोधरो ग्रीवा यस्य तम् । अगण्यलावण्यम् अपरिमितसौन्दर्यं तेन पूर्णं प्रसन्नं मुखसारसं मुखकमलं यस्य तम् ॥६१॥

---

१ 'लक्ष्मीधराभ्यामाश्लिष्टः । - इति तन्त्रसारसङ्ग्रहे (१/१९)

**अतिरक्तमृदुस्निग्धपक्वबिम्बनिभाधरम् ।**
**कुन्दकुड्मलसंशोभिदन्तपङ्क्तिं दयानिधिम् ॥ ६२ ॥**

**व्या :** अतिरिक्तेति । अतिरिक्तं च तत् मृदु च तत् स्निग्धं मनोहरं च तत् पक्वबिम्बं च तस्य निभः सदृशः अधरो यस्य तम् । कुन्दकुण्ड्मलवत् संशोभिनो दन्ताः तेषां पङ्क्तिर्यस्य तम् । दयानिधिं दयाश्रयम् ॥ ६२ ॥

**चन्द्रिकासौभगस्पर्धिमन्दहासं मनोहरम् ।**
**हरिनीलज्वलद्वप्रविलसद्गण्डमण्डलम् ॥ ६३ ॥**

**व्या :** चन्द्रिकेति । चन्द्रिकायाः कौमुद्याः सौभगं सम्पदं स्पर्धत इति तथोक्तः स चासौ मन्दहासो यस्य तम् । मनोरमम् । हरिनीलमयः ज्वलन् वप्रो भित्तिः तद्वद्विलसद्गण्डमण्डलं कपोलचक्रं यस्य तम् ॥ ६३ ॥

**तरुणादित्यसङ्काशवरकुण्डलमण्डितम् ।**
**लसन्नासाप्रभामुष्टनवचम्पकसम्पदम् ॥ ६४ ॥**

**व्या :** तरुणेति । तरुणादित्यस्य बालसूर्यस्य सङ्काशाभ्यां सदृशाभ्यां वरकुण्डलाभ्यां मण्डितम् । लसन्नासा स्फुरन्नासिका तस्याः प्रभया मुष्टा अपहृता नवचम्पकस्य सम्पत् येन तम् ॥ ६४ ॥

**चलन्मधुकरासक्तजलजोपमलोचनम् ।**
**इन्द्रनीलोत्पलमयशार्ङ्गसौन्दर्यजिद्भ्रुवम् ॥ ६५ ॥**

**व्या :** चलदिति । चलद्भ्यां मधुकराभ्याम् आसक्ते सम्बद्धे जलजे अरविन्दे उपमा ययोस्ते लोचने यस्य तम् । इन्द्रनीलोत्पलमयं च तत् [1]शार्ङ्गं शृङ्गनिर्मितधनुश्च तस्य सौन्दर्यं जयतीति तथोक्ता भ्रूर्यस्य तम् ॥६५॥

---

१ 'शार्ङ्गं च विद्या' - म.भा.ता.नि. (३/७४)
श्यामं त्रिवक्रं विधिमुख्यदेवसाम्राज्यविश्राणनहेतुलीलम् ।
कामाग्र्यचापाकृति कामतातभ्रूमण्डलं खण्डयतादघं नः ॥ - रु.वि. (१८/५७)

**श्रीभूमुखाम्बुजासक्तलोलापाङ्गमधुव्रतम् ।**
**हृद्योर्ध्वपुण्ड्रमध्यस्थसद्रत्नतिलकोज्ज्वलम् ॥ ६६ ॥**

**व्या :** श्रीभूमुखाम्बुजेति । श्रीभूमुखाम्बुजयोः आसक्तौ लोलापाङ्गावेव मधुव्रतौ भृङ्गौ यस्य तम् । हृद्योर्ध्वपुण्ड्रस्य मनोहरोर्ध्वपुण्ड्रस्य मध्ये तिष्ठतीति स तथोक्तः । सद्रत्नमयतिलकः तेनोज्ज्वलस्तम् ॥ ६६ ॥

**अलकासक्तविलसन्मुकुटाद्भुतभास्करम् ।**
**अनर्घ्यहारकेयूरनूपुराद्यैर्विराजितम् ॥ ६७ ॥**

**व्या :** अलकेति । अलकेष्वासक्तं विलसन्मुकुटमेव अद्भुतः भास्करो यस्य तम्। अनर्घ्यैः हारकेयूरनूपुराद्यैः आभरणैर्विराजितम् ॥ ६७ ॥

**कन्दर्पकोटिलावण्यमन्दिराकारमच्युतम्[1] ।**
**सुवर्णमण्टपान्तःस्थं कमलामलविष्टरम् ॥ ६८ ॥**

**व्या :** कन्दर्पकोटिनां लावण्यं तस्य मन्दिरम् आश्रयः तादृशः आकारो यस्य सः तम् । सुवर्णमयो मण्टपः तस्य अन्तम् मध्यम् तस्मिन् तिष्ठतीति तथोक्तम्। यत् कमलम् । तदेव अमलविष्टरो निर्मलासनं यस्य सः तम् । च्युतो न भवतीत्यच्च्युतः। तं नाशरहितमित्यर्थः । श्रीकृष्णमैक्षत ॥६८॥

**[2]विश्वस्थेमलयोत्पत्तिमुक्त्यादेर्मुख्यकारणम् ।**
**अच्छशेषफणारत्नच्छत्रशोभितमैक्षत ॥ ६९ ॥**

---

१ 'सर्वादिरच्युतः' (श्लो. ११), 'अच्युतः प्रथितः प्राणः'(श्लो. ३५)
-इति विष्णुसहस्रनामसु।

यस्मान्न च्युतपूर्वोऽहमच्युतस्तेन कर्मणा । - महाभारत (शान्ति. ३४२/७१)

२ जगज्जन्मस्थेमप्रलयरचनाशीलवपुषे । - इति न्यायसुधायाम् ।

**व्या :** विश्वेति । विश्वस्य प्रपञ्चस्य **स्थेमा**[१] स्थितिः लयः संहारः उत्पत्तिर्मुक्तिर्मोक्षः त एवादिर्यस्य नियमादेः **मुख्यकारणम्** । **अच्छाः** शुभ्राः **शेषस्य फणा** एव **रत्नच्छत्राणि** रत्नातपत्राणि तैः **शोभितं** कृष्णम् । ऐक्षत अपश्यत ॥ ६९ ॥

**विधिमुख्यैः सुरगणैर्मुदितैर्मुनिपुङ्गवैः ।**
**गीयमानं दयादृष्टिक्षालिताश्रितकल्मषम् ॥ ७० ॥**

**व्या :** विधिमुख्यैरिति । **विधिमुख्यै**र्ब्रह्मादिभिः **सुरगणैः मुदितैः** सन्तुष्टै**र्मुनिपुङ्गवैः** मुनिश्रेष्ठैर्नारदादिभिः । **गीयमानं** स्तूयमानं दयायुक्तदृष्ट्या **क्षालितम् आश्रितानां** स्वसेविनां **कल्मषं** पापं येन तम् । ऐक्षतेति पूर्वेण सम्बन्धः ॥ ७० ॥

**दृष्ट्वा तमम्भोरुहपत्रनेत्रं तुष्टाव तुष्टाखिलचित्तवृत्तिः ।**
**पश्चात् सिषेवे रथसंस्थितं तं मुक्तोऽपि नैवोज्झति कृष्णसेवाम् ॥७१॥**

**व्या :** दृष्ट्वेति । **अम्भोरुहपत्रनेत्रं तं** कृष्णं **दृष्ट्वा** । जले अपरोक्षीकृत्य **तुष्टा** सन्तुष्टा **अखिला** सर्वा **चित्तवृत्ति**र्यस्य स तथोक्तः । अक्रूर**स्तुष्टाव** अस्तौत्[२] ।

१ स्थेमा स्थैर्यं रक्षेत्यर्थः । उक्तं हि श्रुतप्रकाशेऽपि । 'अखिलभुवनजन्मस्थेमभङ्गादि लील' इति भाष्यव्याख्यानावसरे स्थेमा स्थितिरिति । स्थिरशब्दादिमनिच्प्रत्यये 'प्रियस्थिरे'त्यादिसूत्रेण स्थिरशब्दस्य स्थादेशे 'आद्गुण' इति गुणे च स्थेमेति रूपम् । यद्यपि वामनवृत्यादौ मुग्धप्रौढस्थिरशब्दानाम् पृथ्वादिष्वपाठात्पृथ्वादिभ्य इमनिज्वेत्युक्तेमनिजप्राप्तेरिमनिजन्तप्रयोगोऽसाधुरित्युक्तम् । तथापि नैषधद्वादशसर्गस्थस्य 'यत्कस्यामपि भानुमान्न ककुभि स्थेमानमालम्बत' इत्यस्य व्याख्याने 'वर्णदृढादिभ्यः ष्यञ्चे'ति सूत्रे चकारेणेमनिजः समुच्चितत्वात् स्थिरशब्दस्य दृढादिषु पाठादिमनिजित्युक्तत्वात् साधुरेवायं ध्येयः । यद्वा तिष्ठतेरौणादिकेमनिचि गुणे रूपं स्थेमेति । स्थितिरित्यर्थः । - इति परिमलम् ।

२ अत्रत्य श्रीकृष्णरूपवर्णनं महाभारततात्पर्यनिर्णयस्थश्रीरामरूपवर्णनपरश्लोकानां विवरणरूपमिव भाति -

पश्चात् स्तुत्यनन्तरम् । रथसंस्थितम् तं कृष्णं सिषेवे । तथाहि । मुक्तोऽपि जीवन्मुक्तोऽपि कृष्णसेवां[१] नोज्झत्येव ॥ ७१ ॥

---

स तैः समावृतो विभुर्ययौ दिशं तदोत्तराम् ।
अनन्तसूर्यदीधितिर्दुरन्तसद्गुणार्णवः ॥
सहस्रसूर्यमण्डलज्वलत्किरीटमूर्धजः ।
सुनीलकुन्तलावृतामितेन्दुकान्तिसन्मुखः ॥
सुरक्तपद्मलोचनः सुविद्युदाभकुण्डलः ।
सुहासविद्रुमाधरः समस्तवेदवाग्रसः ॥
दिवाकरौघकौस्तुभप्रभासकोरुकन्धरः ।
सुपीवरोन्नतोरुसञ्जगन्द्धरांसयुग्मकः ॥
सुवृत्तदीर्घपीवरोल्लसद्भुजद्वयाङ्कितः ।
जगद्विमथ्य सम्भृतः शरोऽस्य दक्षिणे करे ॥
स्वयं स तेन निर्मितो हतौ मधुश्च कैटभः ।
शरेण येन विष्णुना ददौ च लक्ष्मणानुजे ॥
स शत्रुसूदनोऽवधीन्मधोः सुतं रसाह्वयम् ।
शरेण तेन चाकरोत् पुरीं च माधुराभिधाम् ॥
समस्तसारसम्भवं शरं दधार तं करे ।
स वामबाहुना धनुर्दधार शार्ङ्गसञ्ज्ञितम् ॥
उदारवाहुभूषणः शुभाङ्गदः सकङ्कणः ।
महाङ्गुलीयभूषितः सुरक्तसत्कराम्बुजः ॥
अनर्घ्यरत्नमालया वनाख्यया च मालया ।
विलासिविस्तृतोरसा बभार च श्रियं प्रभुः ॥
स भूतिवत्सभूषणस्तनूदरे वलित्रयी ।
उदारमध्यभूषणोल्लसत्तटित्प्रभाम्बरः ॥
करीन्द्रसत्करोरुयुक्सुवृत्तजानुमण्डलः ।
क्रमाल्पवृत्तजङ्घकः सुरक्तपादपल्लवः ॥
लसद्धरिन्मणिद्युती रराज राघवोऽधिकम् ।
असङ्ख्यसत्सुखार्णवः समस्तशक्तिसत्तनुः ॥ - म.भा.ता.नि. (९/७५-८७)

१ कृष्णो यज्ञैरिज्यते सोमपूतैः कृष्णो वीरैरिज्यते विक्रमद्भिः ।
कृष्णो वन्यैरिज्यते सम्मृशानैः कृष्णो मुक्तैरिज्यते वीतमोहैः ॥ - म.भा.ता.नि.(२/६२)

**यमुना[१] सा विजयते यमिनां परमप्रिया ।**
**प्रदर्शयति या कृष्णं सुधियः स्नानमात्रतः ॥ ७२ ॥**

**व्या :** यमुनेति । यमिनां सन्यासिनाम् । परमप्रिया सा यमुना विजयते। या स्नानमात्रतः स्नानमात्रेण । सुधियः शोभनज्ञानिनः पुरुषान् । कृष्णं प्रदर्शयति ॥७२॥

**मधुरामुपगम्याथ कृतस्थानः पुराद्बहिः ।**
**पुरतस्त्वं पुरं याहीत्यवदद्गान्दिनीसुतम् ॥ ७३ ॥**

**व्या :** मधुरामिति । अथानन्तरम् । मधुरां पुरीम् । उपगम्य प्राप्य । पुराद्बहिः **कृतस्थानः** कृतवसतिः कृष्णः । **गान्दिनीसुतम्** अक्रूरम् । गान्दिनीत्यक्रूर-माता[२] । त्वं पुरतः पूर्वं पुरं मधुरापुरं याहि गच्छ । इत्यवदत् ॥ ७३ ॥

**प्रियसङ्गमविच्छेदभयनिर्विण्णधीरसौ ।**
**गृहपुत्रकलत्रेच्छारहितो वक्ति माधवम् ॥ ७४ ॥**

**व्या :** प्रियेति । प्रियस्य कृष्णस्य **सङ्गमविच्छेदः** सम्बन्धाशः तस्माद्भयं तेन **निर्विण्णा** विषयवैराग्यं प्राप्ता धीर्यस्य सः । अत एव **गृहपुत्रकलत्रेषु इच्छारहितः** कामरहितः । **असौ** अक्रूरः । **माधवं वक्ति** ॥ ७४ ॥

---

१ यमुनावर्णनं तु प्रागेव (७/३५) कृतम् । अयं श्लोकः तीर्थप्रबन्धेऽपि दृश्यते -
कालिन्दि त्वमघान्वितानपि सतः कृत्वा पवित्रात्मनो
गन्तुं नैव कदाऽपि मुञ्चसि तव भ्रातुर्निकेतं प्रति ।
किन्तु क्षीरपयोधिवासनिरतान् प्रीत्या करोष्याश्रितान्
स्निग्धे भर्तरि कामिनीजनरुचिः तत्पक्ष एव ह्यलम् ॥ - (२/१२)

२ श्वफल्कः काशिराजस्य सुतां भार्यामविन्दत ।
गान्दिनीं नाम सा गां तु ददौ विप्रेषु नित्यशः ॥ - इति हरिवंशे (१/३४/७)

**संसारासारसिन्धोर्जनिमरणजराद्यूर्मिभिर्बाधितानां[1]**
**दारागारादिभाराः किमिह सुखकराः प्रेमपाशैर्निबद्धाः ।**
**कृष्ण त्वत्पादपोतं[2] प्रदिश तदनिशं सत्पताकं सकेतुं**
**रम्यं कर्मन्दिगम्यं भवजलधिभवत्स्वेदविच्छेदहेतुम् ॥७५॥**

व्या: संसारेति। [3]**संसारासारसिन्धोः** संसाराख्यासारसमुद्रस्य। जनिरुत्पत्तिर्मरणं जरा च आदयो येषां ते। त एवोर्मयः। **तैर्बाधितानां** पीडितानां नः। **प्रेमपाशैः निबद्धाः दारागारादिभाराः** स्त्रीगृहादिभाराः। **इह** जगति। **सुखकराः किम्**। नेत्यर्थः। प्रागेव समुद्रपतितस्य पुनर्भारप्रक्षेपे सुतरां निमज्जनप्रसङ्गादिति भावः। तत् तस्मात् समुद्रजलपतितस्य महानावं विनोद्धाराभावात्। हे **कृष्ण सत्पताकं सकेतुं** सद्ध्वजं **रम्यं** रमणीयं **कर्मन्दिगम्यं** सन्यासिभिरपि प्राप्यम्। 'भिक्षुः परिव्राट् कर्मन्दी' इत्यमरः। **भवजलधौ** संसारसमुद्रे **भवन्तो** जायमानाः **स्वेदाः**

---

१ शोकमोहौ जन्ममृत्यू क्षुत्पिपासे षडूर्मयः। -इति स्मृतिः

२ भगवत्पादपोतोऽसौ नान्यपोतसमो भवेत्।
सन्निधायापि शिष्येषु तमेव प्राप्नुयुर्यतः ॥ इति वामने
भगवत्पादनौका या नेयं नौकोपमा भवेत्।
तया तीर्त्वा तु तामेव प्राप्य तिष्ठन्ति यत्र तत् ॥ -इति ब्राह्मे।
-इति भागवततात्पर्ये (१०/३/३२)

३ संसारेऽक्षयसागरे प्रकृतितोऽगाधे सदा दुस्तरे
सर्वावद्यजलग्रहैरनुपमैः कामादिभङ्गाकुले।
नानाविभ्रमदुर्भ्रमेऽमितभयस्तोमादिफेनोत्कटे
दुःखोत्कृष्टविषे समुद्धर गुरो मा मग्नरूपं सदा ॥
- इति श्रीमदप्पणाचार्यकृतश्रीराघवेन्द्रस्तोत्रे
नानाविकर्मजनिताशुभसागरान्तःसम्भ्राम्यतः प्रतिहतस्य षडूर्मिजालैः।
पुत्रादिनक्रनिगृहीतशरीरकस्य वासिष्ठकृष्ण मम देहि करावलम्बम् ॥
- इति श्रीयदुपत्याचार्यकृतश्रीवासिष्ठकृष्णकरावलम्बनस्तोत्रे (श्लो. ३६)

तेषां विच्छेदो विनाशः तस्य हेतुं कारणम् । त्वत्पादपोतं तव पादाख्यनावं अनिशं प्रदिश देहि ॥७५॥

**प्रायो व्रजस्त्रीजनदत्तशापो मामस्पृशद्येन भवान् वियुङ्क्ते ।**
**लावण्यवारांनिधिपूर्णमूर्तिः श्रेयो विना पुण्यमुपार्जयेत् कः ॥७६॥**

**व्या :** प्राय इति । हे कृष्ण **व्रजस्त्रीजनदत्तशापः प्रायः मामस्पृशत् । येन** कारणेन **लावण्यवारांनिधिना** सौन्दर्यसमुद्रेण **पूर्णा** परिपूर्णा **मूर्तिः** शरीरं यस्य सः सर्वाङ्गसुन्दर इत्यर्थः । **भवान् वियुङ्क्ते** वियुनक्ति । पूर्वं मया तासां त्वद्वियोगकरणपापात् इदानीं ममापि त्वद्वियोगो जायत इति भावः । तथाहि । **कः** पुरुषः **पुण्यं विना श्रेयः** भाग्यम् **उपार्जयेत्** ॥ ७६ ॥

**पुण्यश्रेण्यतिदूरमप्यनुदिनं मूकं सतां दूषणे-**
**ष्वन्धं मीनदृगीक्षणेषु बधिरं त्वद्भिन्नगोष्ठीषु माम् ।**
**पङ्गुं पापकरप्रयाणकरणेऽपाणिं च तत्कर्मसु**
**क्लीबं ग्राम्यरतौ मुकुन्द कुरु मां मूढं तदीयस्मृतौ ॥ ७७ ॥**

**व्या :** पुण्येति । हे **मुकुन्द** हे कृष्ण । **पुण्या**नां **श्रेण्याः** समूहस्या**तिदूरम्** । पुण्यहीनमपीत्यर्थः । **मां सतां** सज्जनानां **दूषणेषु** विषयेषु **मूकं कुरु** । यथा मूको न वदत्येव तथा वागिन्द्रियवताऽपि मया सतां दोषः कदापि न वाच्य इति भावः। एवमुत्तरत्रापि द्रष्टव्यम् । **मीनदृगीक्षणेषु** सरागं मीनाक्षीणां स्त्रीणां दर्शनेषु **अन्धं कुरु**। **त्वद्भिन्नगोष्ठीषु** त्वदन्यकथासु **बधिरं** श्रवणेन्द्रियरहितं **कुरु**। **पापकरप्रयाणकरणे** पापजनकपरदारादिगृहयात्रायां **पङ्गुं** पादरहितं **कुरु**। पूर्ववदेव भावः। **तत्कर्मसु** पापकरकर्मसु **अपाणिं** हस्तरहितं **कुरु**। **ग्राम्यरतौ** निषिद्धरतौ **क्लीबं** नपुंसकं **कुरु**। **तदीयस्मृतौ** तेषां पूर्वोक्तानां निषिद्धविषयाणां सम्बन्धिनी स्मृतिस्तस्यां **मूढं** पूर्वोत्तरविचारानभिज्ञं **कुरु**। महापुण्यफलानामप्येतेषां मूक-

त्वान्धत्वबधिरत्वादीनाम् आपाततः पापफलत्वदृष्ट्या पुण्याभावेऽपि दिशेति व्याजोक्तिः ॥ ७७ ॥

**कामस्तेऽङ्घ्रियुगार्चनेऽमलधियां लोभः सुपुण्यार्जने**
**मात्सर्यं चरितानुकीर्तनसुधापानान्मदः शत्रुषु ।**
**क्रोधो भक्तजनेषु राग उदयाच्छ्रीविठ्ठलान्यत्र नो**
**यच्छत्रुर्नहि शत्रुरुच्चनिलयस्यान्यस्य शत्रुर्भवेत् ॥ ७८ ॥**

**व्या :** इदानीं कामादिदोषाणामपि सयुक्तिकं गुणत्वं वर्णयन्नाह – **काम** इति । हे श्रीविठ्ठल । ते तव । **अङ्घ्रियुगार्चने** पादयुगलपूजने । मम **काम** इच्छा । **उदयात्** उदयतु । यथा कामी पुरुषः वनितादिविषयेष्वासक्तो भवति तथाऽहमपि हर्यर्चन एवासक्तो भूयासमिति कामपदप्रयोक्तुर्भावः । **ते अमलधियां** निर्मलसर्वोत्तमत्वबुद्धौ **लोभः** पुनःपुनर्गुरुमुखादार्जयामीत्याशातिशयः रक्षोत्साहः परित्यागासहिष्णुता च । **उदयादिति** सर्वत्र सम्बन्धः । यथा लोभी यत्नेन धनमार्जयति नानोपायैः रक्षति । कदाऽपि न विसृजति च । तथा विष्णोः सर्वोत्तमत्वबुद्धिं गुरुमुखादार्जयामि श्रुतिस्मृतियुक्तिभिः सर्वदा हृदि स्थिरीकरोमि । मरणेऽपि न परित्यजामीति भावः । **सुपुण्यार्जने** हरिपूजात्वेन क्रियमाणशोभनपुण्यार्जने । **मात्सर्यं** पुण्यार्जकपुरुषान्तरादप्यधिको भवामीति स्पर्धा । यथा मत्सरग्रस्तः धनवन्तमन्यं दृष्ट्वा ततोऽप्यधिकधनं मयाऽऽर्जनीयमिति प्रयत्नं कुर्यात् । तथा महापुण्ये विषये ममापि प्रयत्नः स्यादिति भावः । तव **चरिता**नाम**नुकीर्तन**मेव **सुधा** तस्याः पानात् निरन्तरचरितसङ्कीर्तनसम्भ्रमादिति यावत् । **मदः** तदतिरिक्तसकलविषयेषु विस्मरणम् । यथा मदान्धः नर्तनादितत्कार्यव्यतिरिक्तेषु कार्येष्वनुद्योगी स्यात् । तथा ममापि हरिकथाकथनसम्भ्रमसमये कार्यान्तरस्यानुद्योगः स्यादिति भावः । तव **शत्रुषु** विरोधिषु **क्रोधः** संहारेच्छा । यथा क्रुद्धः स्वशत्रुं सदा संहर्तुमिच्छेत् तथा ममापि तव विरोधिमतं तदवलम्बिनो दुर्जनांश्च युक्तिभिः

शक्तिभिश्च सदा पराभावयामीति सन्नाहः स्यादिति भावः । तव **भक्तजनेषु रागः** स्नेहः। यथा स्वबन्धुषु स्नेहो भवेत् ततोऽप्यतिशयितस्नेहः वैष्णवेषु मम स्यादिति भावः। **अन्यत्र** उक्तषट्कस्थलादन्यत्र कामो नोदयादित्याद्याकारेण सम्बन्धः। ननु शत्रुत्वेन शास्त्रसिद्धकामादिषु कथमेकैकाशाङ्गीकार इत्यत उक्तम् – **यदिति**। यद्यस्माल्लोके **उच्चः** सर्वाधिको राजादिः **निलय** आधारो यस्य तस्य राजातिस्निग्धपुरुषस्येर्थः। **शत्रुः** शत्रुरपि **शत्रुः** शात्रवं कुर्वन्नहि। **अन्यस्य** राजाधाररहितस्य **शत्रुः** शातनादिकर्म कुर्वन् भवेद्धि । तस्मादुक्तं षड्विषयेषु कामादिषट्कमुदयादिति पूर्ववत् सम्बन्धः । महाराजाङ्गीकारवतः पुरुषस्य शत्रवोऽपि राजभीत्या पादाक्रान्ता भवन्ति । यथेष्टधनदानादिना उपकुर्वन्ति च । तदनङ्गीकारदशायां मारयन्त्येव नोपकुर्वन्ति । तथा हर्यर्चने हरिसर्वोत्तमत्वबुद्धौ हरिविषयकपुण्यार्जने हरिकथाकथने हरिद्वेषिषु द्वेषे हरिभक्ते च स्नेहे च हर्याख्यमहाराजसद्भावादुक्तकामादयः सर्वे ममानुकूला एव सन्तः मोक्षादिपुरुषार्थानपि दद्युः । इतोऽन्यत्र कामादिकरणे हर्याख्यमहाराजानुग्रहाभावात् मामन्धेतमसि पातयित्वा हन्युरेव । अत उक्तैकैकदोषेष्वेव तदङ्गीकारो न सर्वत्रेति भावः ॥७८॥

**रुद्र त्वं हि[1] मनोभिमान्यसि ततस्त्वच्छत्रुमित्रं मनो**
**मा कुर्वच्युतचिन्तनार्चनरतं कुर्वीश हे भास्कर[2] ।**
**चक्षुर्मान्यसि तच्च विठ्ठलवपुःसन्दर्शनैकाध्वरं**
**कृत्वा मा कुरु कैरवाक्ष्यनुचरं यत् ताः सपत्नाश्रयाः ॥७९॥**

**व्या :** मनश्चक्षुरभिमानिदेवयोः रुद्रसूर्ययोरेव उपकारं घटयन् स्वापेक्षितफलादौ तावदापादयति – **रुद्रेति** । हे **रुद्र** यतस्त्वं **मनोभिमान्यसि हि** । हीत्यनेन

---

१ मनोभिमानिनो रुद्रवीन्द्रशेषास्त्रयोऽपि तु ॥ - इति काठकोपनिषद्भाष्ये ।

२ 'चक्षुःसूर्यश्चक्षयति' - इति गीतातात्पर्यनिर्णयोद्धृतप्रमाणवचनम् (१३/२७)

श्रौतस्मार्तप्रसिद्धिं सूचयति । **ततः मनः** त्वदभिमन्यमानं **मनः** । तव **शत्रोः** कामस्य **मित्रं** कामानुचरमिति यावत् । **मा कुरु** । स्वाभिमन्यमानभटस्य स्ववैरिवशे दानं तव नोचितमिति भावः । **हे ईश** । **अच्युतस्य** तव पितामहस्य नारायणस्य **चिन्तनार्चनयोः रतं कुरु** । स्वभटेन स्वपितामहकैङ्कर्यकरणस्य श्लाघ्यत्वादिति भावः । **हे भास्कर त्वं चक्षुषः मानी** अभिमानी **असि**। **तच्च** चक्षुश्च **विट्ठलस्य वपुषः** केवलसन्दर्शन **एव अध्वरो** व्यापारो यस्य तत् **कृत्वा** विट्ठलाख्यनारायणस्य त्वन्मण्डलमध्यगतत्वेन तत्सेवाकरणस्य न्याय्यत्वादिति भावः । **कैरवाक्षीणां** नारीणा**मनुचरं मा कुरु** । **यत्** यस्मात् **ताः** कैरवाक्ष्यः **सपत्नानां** तव वैरिभूतकुमुदानां **आश्रयाः** उपमानोपमानयोरेकत्वा-भिप्रायेणोक्तिरियम् । तव वैरिभूतकुमुदं स्वचक्षुषि निक्षिप्य रक्षन्तीत्यर्थस्य कैरवाक्षिपदेन ध्वनितत्वात् साक्षाद्वैरिवत् वैर्याधारभूतस्यापि वैरपात्रत्वादिति भावः । तदिति पूर्वेणान्वयः ॥ ७९ ॥

**स्वामिन् विट्ठल सज्जनश्वशुरतः प्राप्तां दिगन्ताम्बरा-**
**मुत्क्रान्तावपि योगिनीं मननसज्ज्ञानादिभिर्भूषिताम् ।**
**मोक्षापत्यवतीं विरक्तिरमणीं संश्लिष्यतोऽहर्निशं**
**कालो गच्छतु नान्यथा कुरु तदा कामो यदालम्बते ॥८०॥**

**व्या :** सन्यासिनां नारीसुखं ताम्बूलचर्वणसुखं च नास्तीति केनचिद्विनोदे कृते स्वयोग्यनारीताम्बूलसम्पादनायोक्तमुत्तरं पद्यद्वयम् । विरक्त्यादेः सर्वापेक्षि-तत्वाच्छ्लोकद्वयोक्ताभ्यर्थनमक्रूरस्यापि युक्तमेवेति ज्ञेयम् । **स्वामिन्निति** । हे **स्वामिन् विट्ठल** । **सज्जनाख्यश्वशुरात् प्राप्ताम्** । कन्यां जनयितारो हि श्वशुरा इत्युच्यन्ते । सज्जनसमागमेन च विरक्तिरुत्पद्यते । ते च सन्तः अतः सत्कुलप्रसूता स्वविरक्तिरमणीति भावः । **दिगन्तो** दिशामन्त एवाम्बरं वस्त्रं यस्याः सा ताम् ।

नारीणामभिमानरक्षकं हि वस्त्रं दिगन्तसञ्चाराभावे विरक्तेरपि हास्यत्वाद्दिगन्तस्याम्बरत्वमिति भावः । आशेषसमये दिगम्बरत्वस्यैव न्याय्यत्वाच्चेदमुक्तम् । **उत्क्रान्तौ** मरणेऽपि **योगिनी** सम्बन्धवर्ती मरणसमयेऽपि विरक्तिभक्त्यादिगुणानां सहैवागमनादिति भावः । इदं च लौकिकनारीतोऽप्यतिशयकथनायोक्तम् । **मननं** युक्तिभिरनुचिन्तनम् । **सत्** निर्दुष्टं **ज्ञानं** ते **आदी** येषां पूजानमस्कारादीनां तैर्वि**भूषिताम्** । शुष्कविरक्तेरप्रयोजकत्वाज्ज्ञानादिकं भूषणमिति भावः । **मोक्ष** एवापत्यं पुमपत्यं यस्याः सा तथोक्ता । **मोक्षस्य** पुल्लिङ्गशब्दवाच्यत्वाद्विरक्तिसाध्यत्वाच्च । "अप्रजां दशमे वर्षे स्त्रीप्रजां द्वादशे त्यजेत्"[१] इति वचनेन वन्ध्यायाः स्त्रीप्रजायाश्चासङ्ग्राह्यत्वाच्चेदमुक्तमिति भावः । **विरक्तिरमणी** विरक्त्याख्यनारीम् । 'तदामिषं परित्यज्य स सुखं समविन्दत'[२] इति वचनेन विरक्तेः सुखहेतुत्वात् स्त्रीलिङ्गान्तशब्दवाच्यत्वाच्च रमणीत्वमिति भावः। वस्त्रान्नपानाद्यर्थनेन दुःखदात्रीभ्यो लौकिकनारीभ्यः अतिशयसूचनाय रमणीपदम् । **अहर्निशं संश्लिष्यतः** आलिङ्गयतः मम इदं चानिषिद्धतिथिषु रात्रावेवालिङ्गनयोग्याभ्यः लौकिकनारीभ्यः महातिशयसूचनार्थः । **कालो गच्छतु** । विरक्तिः कदापि मां न मुञ्चत्विति भावः । **अन्यथा** विरक्तिरमणीमनालिङ्ग्य स्थितिं **न कुरु** । **यत्** यस्मात् **तदा** विरक्तिरमणीविश्लेषदशायां **कामः** मनःस्वास्थ्यादिकामः । अन्यत्र तु मनःक्लेशहेतुर्मन्मथ एव **कामः आलम्बते** आश्रयति । तदिति पूर्वेणान्वयः । स्वतोऽपि महतां पुत्रीस्वातन्त्र्यं देशाधिपतिनैव निवारणीयमित्यतः **स्वामिन्निति** विशेषणम् ॥ ८० ॥

**यस्मिन् विठ्ठलनामवर्णयुगलं सत्पर्णचूर्णे परो**
**वर्णः पूगफलं गुणौघगणना कर्पूरखण्डं महत् ।**

---

१ बौधायनस्मृतिः (२/२/६५)

२ भागवते ११/९/२

**भिक्षुश्लाघ्यमनङ्गवैरि तदिदं संसर्पिरागापहं**
**जक्षत्संसृतिरोगमेष्यति कथं [1]ताम्बूलमाकस्मिकम् ॥ ८१ ॥**

**व्या :** यस्मिन्निति । यस्मिन् विठ्ठलाख्यताम्बूले विठ्ठलनाम्नः **वर्णयुगलं** विकारः ठकारश्चेति वर्णद्वयं **सती** निर्दोषे **पर्णं** नागवल्ली पत्रं **चूर्णं** चेति द्वयम् । ताम्बूलेऽपि पर्णानां बहुलतया विशिष्टत्वाद्विवर्णः पर्णम् । ठकारस्य शून्यार्थकत्वात् चूर्णत्वमित्यर्थः । **परः** वर्णद्वयोपरि विद्यमानः लकाराख्यो **वर्णः पूगफलम्** । नामैकदेशो नामकग्रहणमिति न्यायात् क्रमुकफलम् । **गुणौघानां** विठ्ठलगुणसमूहानां **गणना** कीर्तिरूपत्वेन शुभ्रत्वात् **महत्** उत्तमं **कर्पूरखण्डम्** । प्रभूणां ताम्बूले कर्पूरखण्डस्यापेक्षितत्वात् । शुष्कनामोच्चारणस्य बहुफलदायकत्वाभावाच्च गुणध्यानं कर्पूरखण्डमित्यर्थः । **भिक्षुभिः श्लाघ्यम् अनङ्गस्य** कामस्य **वैरी संसर्पी** विषयेषु क्षणे क्षणे सम्बध्नन् यः **रागः** अभिलाषः रक्तिमेति ध्वनिः । **तमपहन्तीति** तथोक्तम् । भिक्षूणामयोग्यत्वात्[2] कामोद्दीपनात् अधररक्तिमोत्तेजकत्वाच्च लौकिकताम्बूलादतिशयसूचनाय विशेषणत्रयम् । विषयरागापहारित्वेऽपि हरिविषयकरागोत्तेजकत्वात् न सर्वथा ताम्बूलसाम्याभावः । किन्त्वलौकिकताम्बूलमेवेति ज्ञेयम् । अत एवा**कस्मिकम्** अद्भुतम् । द्रव्यदानादिकं विना अकस्मादेव प्राप्तं च इदमपि लौकिकताम्बू-लादतिशयसूचनार्थम् । **तदिदं** विठ्ठलनामाख्यताम्बूलम् । **जक्षत्** भक्षत् 'जक्ष भक्षहसनयोः' इति धातुः । स्वरसनाग्रे निक्षिप्य पुनः पुनरावर्तयन्नित्यर्थः ।

---

१ वातघ्नं कृमिनाशनं कफहरं दुर्गन्धनिर्नाशनम् ।
वक्त्रस्याभरणं विशुद्धिकरणं कामाग्निसन्दीपनं
ताम्बूलस्य सखे त्रयोदशगुणाः स्वर्गेऽपि ते दुर्लभाः ॥ - इत्यभिधाने

२ गन्धमाल्याद्यलङ्कारं ताम्बूलं शुक्लवाससी ।
दिवास्वापं च यानं च निश्यन्नं वर्जयेद्यतिः ॥ - इति पैठीनसीश्रुतिः

संसृतिरोगं संसाराख्यरोगं **कथमेष्यति** । न कथञ्चिदपीत्यर्थः । मुखेनावर्तनं रोगापहननं चोभयोरपि ताम्बूलयोः समम् । आकस्मिकत्वात् सकलरोगमूली-भूतसंसाराख्यरोगमेवापहन्तीति भावः ॥८१॥

**स्वान्तं तदेव यत् तेऽङ्घ्रिकमले चञ्चरीकति[१] ।**
**स्वान्तकारीतरन्मन्ये भ्रमद्भुजगसन्निभम् ॥ ८२ ॥**

**व्या : स्वान्तमिति** । हे कृष्ण यत् चित्तं यस्य मनः । **ते अङ्घ्रिकमले चञ्चरीकति** भृङ्गवदाचरति । **तदेव स्वान्तं** [२]चित्तम् । **इतरत्** दुर्विषयेष्वासक्तम् । अत एव **भ्रमद्भुजगसन्निभं** भक्षणाशया इतस्ततश्चलत्सर्पसदृशं चित्तं **स्वान्तकारि** स्वस्यान्तं नाशं करोतीति तथोक्तम् । **मन्ये** निरूपये । नाखण्डवृत्या तस्य स्वान्तपदवाच्यता अपि तु स्वस्यान्तो यस्मादिति स्वान्तपदवाच्यं तदिति भावः ॥ ८२ ॥

**इति ब्रुवन्तमक्रूरमाश्वास्य मधुरोक्तिभिः ।**
**विससर्ज प्रभोराज्ञां विधित्सुः सोऽप्यगाद्गृहान्[३] ॥ ८३ ॥**

**व्या : इतीति** । **इति ब्रुवन्तमक्रूरं मधुरोक्तिभिः आश्वास्य विससर्ज** । **सोऽपि** अक्रूरोऽपि **प्रभोः** कृष्णस्य **आज्ञां विधित्सुः** कर्तुमिच्छुः सन् । **गृहान्** स्वगृहमगात् । 'गृहाः पुंसि च भूम्नेव' इत्यमरः । कृष्णाज्ञाभङ्गभियैव **अगात्** । नतु स्वगृहस्नेहादिति भावः ॥ ८३ ॥

---

१ अनुव्याख्याननलिने चञ्चरीकति मे मनः । -न्यायसुधा

२ किं तेन मनसा कार्यं यन्न तिष्ठति केशवे ।
मनो मुक्तिफलावाप्तौ कारणं सुप्रयोजितम् ॥ - कृष्णामृतमहार्णवे

३ एवमुक्तो भगवता सोऽक्रूरो विमना इव ।
पुरीं प्रविश्य कंसाय कर्मावेद्य गृहं ययौ ॥ - भागवते (१०/३९/१८)

रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि
प्रेम्णा चिन्तयतां विचित्रविमलश्लाघ्यार्थसन्दायिनि ।
सञ्जाते भुवि रुग्मिणीशविजये सद्वादिराजोदिते
सञ्जातः सुरमण्डलीषु दशमः सर्गो मुदां सत्कृतः ॥ ८४ ॥

॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थश्रीचरणविरचिते
श्रीरुग्मिणीशविजये महाकाव्ये दशमः सर्गः ॥

व्या : रोम्णामिति । व्याख्यातमेतत् ॥ ८४ ॥

॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थश्रीचरण-
विरचितस्य श्रीरुग्मिणीशविजयमहाकाव्यस्य व्याख्यायां श्रीनारायण-
भट्टविरचितायां श्रीगुरुभावप्रकाशिकायां दशमः सर्गः ॥

*****

# एकादशः सर्गः

**प्रविश्य व्रजतस्तस्य हृदयाख्यपुरीं हरिः।**
**इनोदये निर्विविशे मधुरां मधुरापुरीम्॥ १॥**

**व्या :** ऋज्वीं चकार यः प्रेम्णा कुब्जामब्जालयाप्रियः॥
मधुरां कंसविधुरां तं वन्दे यदुनन्दनम्॥ १॥

**प्रविश्येति।** **हरिः** श्रीकृष्णः **व्रजतः** गृहं प्रति गच्छतः। तस्याक्रूरस्य। **हृदयाख्यपुरीं प्रविश्य**[१]। श्रीकृष्णं हृदि स्मरन्नेवाक्रूरो गत इति भावः। **इनोदये** सूर्योदये। **मधुरां** मनोहराम्। **मधुरापुरीं निर्विविशे** प्रविष्टवान्। निर्विविशे आत्मनेपदम्॥ १॥

**द्वारि द्वारि स्वभक्ताहृतविविधबलिर्वायुनोद्यानवापी-**
**प्रोत्फुल्लाम्भोजकुन्दप्रकरसुरभिणा सेव्यमानोऽधिवर्त्म।**
**सिक्तां सन्मार्गनाडीमविशदुरुगुणः पुष्पपीयूषवृष्ट्या**
**पापव्रातं दिधक्षुः प्रथितनिजपुरो ब्रह्मनाडीमिवेशः॥ २॥**

**व्या : द्वारि द्वारीति।** प्रतिद्वारं **स्वभक्तैः** नागरिकनारीनरादिभिः[२]। **आहृताः** उपहृताः **विविधबलयः** ताम्बूलनारिकेलादिपूजोपहाराः यस्य स तथोक्तः। अन्यत्र चक्षुरादिद्वारेषु सूर्यादिदेवैरुपहृततत्तदिन्द्रियजन्यसुखरूपबलिः। **उद्याने** उपवने या **वाप्यः** तासु **प्रोत्फुल्लाम्भोजानि कुन्दप्रकराः** कुन्दसमूहास्तैः

---

१ ततोऽपराह्णे भगवान् कृष्णः सङ्कर्षणान्वितः।
मधुरां प्राविशद्गोपैर्दिदृक्षुः परिवारितः॥ - भागवते(१०/३९/१९)

२ काचिद् विपर्यक्कृतवस्त्रभूषणा विस्मृत्य चैकं युगलेष्वथापरः।
कृतैकवस्त्रश्रवणैकनूपुरा नाङ्क्त्वा द्वितीयं त्वपराश्च लोचनम्॥
अश्नन्त्य एकास्तदपास्य सोत्सवा अभ्यज्यमाना अकृतोपमज्जनाः।
स्वपन्त्य उत्थाय निशम्य निःस्वनं निपाययन्त्योऽर्भमपोह्य मातरः॥
- भागवते (१०/३९/२५-२६)

सुरभिः तेन वायुना मन्दमारुतेन **अधिवर्त्म** प्रतिमार्गं **सेव्यमानः उरुगुणः ईशः** श्रीकृष्णः । अन्यत्र **वायुना** प्राणापानादिरूपेण प्राणायामादिवायुना वा सेव्यमानः **पुष्पपीयूषवृष्ट्या** पुष्परसामृतवृष्ट्या **सिक्ताम्** । अन्यत्र मूर्ध्नि स्थितवरुणमण्डलात् निःसृतामृतवृष्ट्या सिक्तां प्लावितां **सन्मार्गनाडीं** राजमार्गप्रनाडीं **प्रथितनिजपुरः** "हृदयं ब्रह्मपुरम्" इति श्रुतिसिद्धस्वभक्त-शरीराख्या या पूः पुरी तस्याः [1]**ब्रह्मनाडीमिव** हृन्मध्यस्थसुषुम्नानाडीमिव **पापव्रातं** चाणूरकंसादिपापसमूहम् । अन्यत्र वामकुक्षिस्थपापपुरुषावयवभूतब्रह्महत्यादिपापसमूहं **दिधक्षुः** दग्धुमिच्छुः सन्नविशत् प्रविवेश ॥ २ ॥

**रजकं रजसा ग्रस्तं दर्शयन्निव सोऽध्वनि ।**
**वसनं पीतवसनः समयाचत सर्ववित् ॥ ३ ॥**

**व्या :** रजकमिति । **रजकं रजसा** [2]रजोगुणेन **ग्रस्तम्** आक्रान्तं **दर्शयन्निव सर्ववित्** सर्वज्ञः **पीतवसनः** पीताम्बरः श्रीकृष्णः **अध्वनि** मार्गे **वसनं** [3]**समयाचत** । स्वयाच्ञाभङ्गकरणे राजसोऽयमिति प्रदर्शनायैव याच्ञा न तु वस्त्राभावादिति भावः । अत एव पीतवसन इत्युक्तम् ॥

---

१ प्राणापानाविडायां च पिङ्गलायां च वर्ततः ।
व्यानः सन्धिषु सर्वत्र उदानो ब्रह्मनाडिगः ।
सर्वत्रैव समानस्तु समं चरति सर्वगः ॥ इति भारते ॥ - भा.ता. (२/२/२१)

२ रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ - गीता (१४/७)
सत्त्वात् सञ्जायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ - गीता (१४/१७)

३ देह्यावयोः समुचितान्यङ्ग वासांसि चार्हतोः ।
भविष्यति परं श्रेयो दातुस्ते नात्र संशयः ॥ - भागवते (१०/३९/३२)

**ततस्तस्य दुरालापं निशम्य सुदुरात्मनः ।**
**शिरो जहार किं कायं करोत्वकृतकिल्बिषम् ॥ ४ ॥**

**व्या :** तत इति ॥ ततः अनन्तरम् । **सुदुरात्मनः** अतिदुष्टस्वरूपस्य **तस्य दुरालापं** दुष्टवचनं **निशम्य शिरो जहार** चकर्त । दुरालापे हेतुभूतवदनाश्रयत्वात्। **अकृतकिल्बिषम्** अकृतापराधं **कायं** शरीरं **किं करोतु** । अपराधानुसारेण शिक्षायाः कार्यत्वादिति भावः । अकृतकिल्विपमित्यनेन दुर्वचनमात्रं निमित्तमित्युक्तम्। न तु श्रीकृष्णं प्रति हन्तुं हस्तोद्योगः कृत इति सूचितम् ॥४॥

**पथि पथि नव सौधान्तस्थमुग्धाङ्गनाभिः**
**कुसुमनिकरलाजैः कीर्यमाणोऽपि कृष्णः ।**
**अविदितगुणकर्मोपेत्य वव्रे त्रिवक्रां**
**चतुरपुरुषकाङ्क्षा वक्रयोषित्सु नूनम् ॥ ५ ॥**

**व्या : पथीति** । **पथि पथि** मार्गे मार्गे प्रतिमार्गमित्यर्थः । **नवसौधानां** नूतनराजसदनानाम् अन्तस्तिष्ठन्तीति तथोक्ताः । ताश्च ता **मुग्धाङ्गनाश्च** मनोहरनार्यः **ताभिः** [१]**कुसुमनिकरैः** पुष्पसमूहैः **लाजैश्चाकीर्यमाणो** **अवकीर्यमाणोऽपि अविदितगुणकर्मा** साकल्येनाज्ञातगुणकर्मा **श्रीकृष्णः त्रिवक्रां** त्रिषु जानुमध्यकटिषु वक्राम् । त्रिषु कालेष्वपि **वक्रामिति** ध्वनिः । कुब्जामुपेत्य **वव्रे** अङ्गीकृतवान् । अविदितेत्यादिना मन्ददृष्ट्या कामुकवत्प्रतीयमानोऽपि श्रीकृष्णः पिङ्गलातनौ[२] तत्कृततपःफलप्रदानायैव

---

१ प्रासादशिखरारूढाः प्रीत्युत्फुल्लमुखाम्बुजाः ।
अभ्यवर्षन् सौमनस्यैः प्रमदा बलकेशवौ ॥
दध्यक्षतैः सोदपात्रैः स्रग्गन्धैरभ्युपायनैः ।
तावानर्चुः प्रमुदितास्तत्र तत्र द्विजातयः ॥ -भागवते (१०/३९/२९,३०)

२ भगवद्धार्यतायोग्याः काश्चिदप्सरसः स्त्रियः ।

कुब्जामङ्गीकृतवानिति सूच्यते । अर्थान्तरं न्यस्यति । तथाहि **चतुरपुरुषस्य** प्रौढपुरुषस्य **काङ्क्षा** इच्छा **वक्रयोषित्सु** कुटिलाङ्गनासु प्रणयकोपादिना नाङ्गीकरोमीति मनःकौटिल्यवतीषु **नूनं** निश्चयः । प्रौढपुरुषाणां वक्राङ्गनावशीकरणचातुर्यस्य सत्वादिति भावः ।। ५ ।।

**मुष्टिप्रमाणतनुमध्यवर्ती स्वकर्ण-**
**विश्रान्तनिर्मलगुणां रुचिरां त्रिवक्राम् ।**
**विष्वक्प्रयुक्तनयनान्तशरां निरीक्ष्य**
**कोदण्डमुद्धवकथाविषयं स मेने ।।६।।**

**व्या : मुष्टिप्रमाणेति** । स कृष्णः **मुष्टिप्रमाणतनुमध्यवर्ती** मुष्टिना दधत्सूक्ष्ममध्याम् । एकत्र कृशोदरीत्वादपरत्र धनुषो मध्यस्य मुष्टिग्राह्यत्वात् । **स्वकर्णविश्रान्तगुणां** स्वकर्णविश्रान्ताः कर्णप्राप्ताः गुणाः यस्याः सा । अन्यत्र योक्तुः कर्णविश्रान्तः गुणः मौर्वी यस्याः । **रुचिरां** मनोहरां **त्रिवक्रां** त्रिष्वङ्गेषु वक्रां शार्ङ्गस्य त्रिषु सन्धिषु वक्रत्वात् । कृष्णमेव द्रष्टुं लज्जावशात् **विष्वक्** समन्तात् **प्रयुक्तनयनान्त** अपाङ्ग एव शरो यस्याः ताम् । सैरन्ध्रीं **निरीक्ष्य** स कृष्णः **उद्धवस्य** धनुरुत्सवस्य **कथाविषयम्** । 'मह उद्धव उत्सवः' इत्यमरः । अन्यत्र उद्धवस्य यादवस्य दूततया प्रेषणात् उद्धवकथाविषयत्वम् । **कोदण्डं** धनुः । **मेने** निरूपितवान् ।। ६ ।।

**मधुरवचनमात्रेणाङ्गरागं ददौ या**
**पुलकितरुचिराङ्गी चञ्चलापाङ्गभृङ्गी ।**

---

रमावेशात् कदाचित् स्युस्तास्वेका पिङ्गलाऽभवत् ।।
तदन्यासां महान् दोषो भगवद्भार्यतास्मृतौ ।। इति स्वाभाव्ये ।
- भागवततात्पर्ये (११/८/३४)

**अनुचितमभिधानं त्याजयन् वासुदेवः**
**खलकुलवनदावस्तांततानर्जुगात्रीम् ॥ ७ ॥**

**व्या :** मधुरवचनेति । मधुरवचनमात्रेण पुलकितरुचिराङ्गी चञ्चलापाङ्ग एव भृङ्गाः यस्याः सा सती अङ्गरागं विलेपनं ददौ । तस्येति शेषः । खलकुलवनदावः दुर्जनकुलदहनः । वासुदेवः श्रीकृष्णः । अनुचितमभिधानं त्रिवक्रेति नाम । प्रियोक्तिश्रवणमात्रेण अङ्गरागार्पणात् एकत्राप्यवक्रायाः त्रिवक्रत्वमनुचितमिति भावः । त्याजयन् हापयन् तां त्रिवक्रां ऋजुगात्रीम् अवक्राङ्गीं ततान ॥ ७ ॥

**प्रपदनिहितपादाम्भोजफुल्लप्रसूनो**
**वदनमुपगतेन व्यङ्गुलोत्तानदोष्णा ।**
**ऋजुतनुमतनोत् तामुन्नमय्य त्रिवक्रां**
**चुबुकगतकराणामश्चतां क्वास्ति वक्रा ॥ ८ ॥**

**व्या :** प्रपदेति । प्रपदे पादाग्रे । 'पादाग्रं प्रपदं पादम्' इत्यमरः । निहितं निक्षिप्तं पदाम्भोजाख्यं फुल्लं विकसितं प्रसूनं पुष्पं येन सः । तद्वक्रोन्नमनसमये पदयोः स्थिरीकरणाय तत्पादाग्रे न्यस्तस्वपाद इत्यर्थः । कुपिताया कोपपरिहाराय पादे पुष्पसमर्पणाख्यध्वनिसम्पादनात् पादयोरम्भोजत्वेन वर्णनम् । श्रीकृष्णः वदनं मुखमुपगतेन प्राप्तेन व्यङ्गुलोत्तानदोष्णा । द्वे अङ्गुली समाहृते इति व्यङ्गुलम् । 'तद्धितार्थोत्तरपदसमाहारेच'[१] इति द्विगुः । 'तत्पुरुषस्याङ्गुलेः सङ्ख्याव्ययादेः'[२] इति टच् । 'यस्येति च'[३] इति इकारलोपः । व्यङ्गुलमेवोत्तानं ऊर्ध्वमुखं यस्य स

१ पा.सू. २/१/५१
२ पा.सू. ५/४/८६
३ पा.सू. ६/४/१४८

चासौ दोश्च तेन । तां त्रिवक्राम् उन्नमय्यार्जवं प्रापयित्वा ऋजुतनुं ऋज्वङ्गीं अतनोत् । यथा विलासी प्रणयकोपे वक्रायाः पादे पुष्पं समर्प्य वदनं सङ्गृह्य स्तुत्वा अनुकूलयति तथेति ध्वनिः । अत एवार्थान्तरं न्यस्यति । चुबुकेति । तथाहि । चुबुकगतकराणाम् अश्वतां पुष्पादिना मानयतां वक्रा विमुखा क्वास्ति । न कापीत्यर्थः ॥ ८ ॥

**वक्रामपि च तां तन्वीमृज्वीं कृष्णकरोऽकरोत् ।**
**अनुकूलयितुं बालां कर एव हि कारणम् ॥ ९ ॥**

**व्या : वक्रामपीति । श्रीकृष्णकरः** कृष्णहस्तः । श्रीकृष्णदत्तपुष्पहारादिप्रदानरूपो बलिरिति ध्वनिः । 'बलिहस्तांशवः कराः' इत्यमरः । **वक्रामपि च** अननुकूलामिति ध्वनिः । **तां तन्वीं** नारीं **ऋज्वीमकरोत्** । तथाहि **बालां** कुपितां कोपेन वक्रचित्तां प्रियामनुकूलयितुम् अभिमुखीकर्तुं **कर एव** द्रव्यदानमेव **कारणं हि** । 'बलिहस्तांशवः कराः' इति करशब्दस्य श्लिष्टत्वात् शेषमूलोऽर्थान्तरन्यासः ॥ ९ ॥

**गन्धार्पणाद्रुचिरवेषकृतेर्मनोज्ञ-**
**कुन्दप्रसूनरचितामलमाल्यदानात् ।**
**कुब्जादयस्तमलभन्त महाप्रसादं**
**किं [1]नाम सर्वविधिभिर्विभुमर्चयन्तः ॥१०॥**

---

१ या दोहनेऽवहनने मथनोपजल्पप्रेङ्खेङ्खनार्भरुदितोक्षणमज्जनादौ ।
गायन्ति चैनमनुरक्तधियोऽश्रुकण्ठ्यः पुण्या व्रजस्त्रिय उरुक्रमचित्तयामाः ॥
-भागवते (१०/४२/१५)

ग्राह्यापहेयरहितैकचिदात्मसान्द्रस्वानन्दपूर्णवपुरप्ययशोषहीनः ।
लोकान् विडम्ब्य नरवत् समलक्तकाद्यैर्वप्त्रा विभूषित इवाभवदप्रमेयः ॥
माला अवाप्य च सुदामत आत्मतन्त्रस्तावक्षयोऽनुजगृहे निजपार्षदौ हि ।

**व्या : गन्धेति** । **कुब्जादयः** कुब्जा आदिर्ययोर्नापितमालाकारयोस्ते-तथोक्ताः । तस्मै **गन्धार्पणात्** गन्धाख्योपचारसमर्पणात् । **रुचिरो मनोज्ञो** वेषो नखकृन्तनालक्तकलापादिरलङ्कारः तस्य कृतेः करणात् **मनोज्ञकुन्दप्रसून-रचितस्यामलमाल्यस्य दानात्** एकैकोपचारसमर्पणादिति भावः । तं मोक्षप्रदत्वेन प्रसिद्धं महाप्रसादम् उत्तमानुग्रहम् **अलभन्त** । **विभुं** श्रीकृष्णं **सर्वविधिभिः** समस्तविहितोपचारैः [1]षोडशोपचारैरित्यर्थः । **अर्चयन्तः** पूजयन्तः । **महाप्रसादम्** अलभन्तेति किं वाच्यमित्यर्थः ॥ १० ॥

**राजाध्वना समधिगम्य धनुर्निवासं**
**कोदण्डखण्डनमथो चकमे रमेशः ।**
**युक्तं हि तत्सकलदैवतमुख्यदेवः**
**कृष्णः कथं जडतमस्य बलिं सहेत ॥११॥**

**व्या : राजेति** । अथ **रमेशः** श्रीकृष्णः । **राजाध्वना** राजमार्गेण । **धनुर्निवासं** चापपूजागृहम् । **समधिगम्य कोदण्डस्य** धनुषः । **खण्डनं चकमे** ऐच्छत् । तत्

---

पूर्वं विकुण्ठसदनाद्धरिसेवनाय प्राप्तौ भुवं मृजनपुष्पकरौ पुराऽपि ॥
सर्वेष्टपुष्टिमिह तत्र सरूपतां च कृष्णस्तयोर्वरमदादथ राजमार्गे ।
गच्छन् ददर्श वनितां नरदेवयोग्यमादाय गन्धमधिकं कुटिलां व्रजन्तीम् ॥
तेनार्थिता सपदि गन्धमदात् त्रिवक्रा तेनाग्रजेन सहितो भगवान् लिलिम्पे ।
तां चाश्वृजुत्वमनयत् स तयाऽर्थितोऽलमायामि कालत इति प्रहसन्नमुञ्चत् ॥
- म.भा.ता.नि.(१३/९९-१०२)

१ अर्घ्य - पाद्य - आचमनीय - मधुपर्क - पुनराचमनीय- स्नान - वस्त्र - भूषण - यज्ञोपवीत - आसन - गन्ध - पुष्प - धूप - दीप - नैवेद्य - नमस्काराः षोडशोप-चाराः । - मध्वविजयभावप्रकाशिकायाम् (१४/३६).
मुखवासश्च ताम्बूलं दर्पणं छत्रचामरे ।
पादुके चेति विज्ञेया उपचाराः परे बुधैः ॥ -इति षडनूपचाराः ।
- मध्वविजयभावप्रकाशिकायाम (१४/३६)

कोदण्डखण्डनं **युक्तं हि** उचितं हि। **सकलदेवतानां मुख्यदेवः** । सकलजगन्मुख्य इत्यर्थः । **श्रीकृष्णः जडतमस्य** धनुषः । मूर्खतमस्येति ध्वनिः । **बलिं** पूजां **कथं सहेत** । शिवभक्तेन कंसेन धनुषि शिवस्यैव पूजनात् कृष्णं विना देवतान्तरपूजन मनिष्टहेतुरित्येको भावः । उत्तमस्याग्रे अधमपूजनमधमस्यैव विनाशहेतुरित्यपरो भावः ॥ ११ ॥

**सद्वंशजातोऽपि गुणान्वितोऽपि**
**शिक्षानुरूपोऽपि स तेन चापः ।**
**भग्नः शनैर्वक्रहृदो हि पुंसः**
**को वा गुणः कोविदमानयोग्यः ॥१२॥**

**व्या : सद्वंशेति** । **सद्वंशे** कीटाद्युपघातवर्जिते वंशे वेणौ **जातोऽपि** । सत्कुलप्रसूत इति ध्वनिः । **गुणेन** मौर्व्याऽन्वितोऽपि **युक्तोऽपि** । विनयादिगुणोपेत इति ध्वनिः । **शिक्षाया** आकर्षणादिरूपायाः **अनुरूपोऽपि** अनुकूलोऽपि । गुर्वाज्ञानुवर्तीति ध्वनिः । **स चापः तेन** कृष्णेन **शनैर्भग्नः** द्वैधीभावं प्रापितः । तथाहि । लोके **वक्रहृदः** कुटिलचित्तस्य **पुंसः** अधिज्यधनुषो वक्रमध्यत्वात् तदर्थान्तरन्यास-स्योत्थानमिति हृदयम् । **कोविदमानयोग्यः** पण्डितसत्कारार्हो **गुणः** कोऽपि न कोपीत्यर्थः । कुटिलचित्तस्य जात्यादिगुणो न शाघनीय इति भावः ॥१२॥

**करेणोद्धृत्य प्राग्व्यतनुत गुणावेदनमसौ**
**प्रभुः पादाघातं तदनु विरचय्याश्वनमयत् ।**
**अथो लीलाबालः खलमिव धनुर्भग्नमकरो-**
**द्बलान्नम्रीभूते किमिह करुणा शुष्कहृदये ॥ १३ ॥**

**व्या :** करेणेति । असौ **लीलाबालः** श्रीकृष्णः **प्राक्** प्रथमं **खलमिव** दुर्जनमिव तद्धनुः **करेण** हस्तेन अन्यत्र हारकटकादिना उद्धृत्योर्ध्वमादाय अन्यत्र सत्कृत्य

**गुणावेदनं** मौर्वीसम्बन्धं अन्यत्र विनयादिगुणावेदनं **व्यतनुत** अकरोत्। **तदनु** तदनन्तरम् एतावताऽप्यननुकूलं **प्रभुः** समर्थः श्रीकृष्णः **पादाघातं** पादेन **विरचय्य**। जानुविन्यासं कृत्वेति ध्वनिः। **आशु अनमयत्** नम्रमकरोत्। अथो नम्रीकरणानन्तरं **भग्नं** भिन्नमकरोत्। नम्रस्य भग्नकरणमनुचितमित्यतो अर्थान्तरं न्यस्यति। **इह लोके बलात्**। बलात्कारेण **नम्रीभूते शुष्कहृदये स्वस्मिन्** स्नेहविधुरचित्ते। **धनुः**पक्षे शुष्कमध्ये आर्द्रवंशेन धनुःकरणायोगादिति भावः। **करुणा** दया **किं**। नेत्यर्थः। **शिखरिणीवृत्तम्**। 'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी'[१] इत्युक्तेः॥ १३॥

**भग्नश्चापः स्वभर्तुः प्रतिभयनिनदैर्धैर्यचौर्यं ततान**
**व्यग्रस्वान्तान् स्वपालान् दृढतरशकलद्वन्द्वघातैर्जघान।**
**भङ्गेनैवोग्रमल्लप्रकरहृदि भयं भल्लकल्पं चखान**
**द्वैधीभावं विपक्षे विरचयति बत स्वीय एव स्वशत्रुः॥१४॥**

**व्या :** भग्न इति। **भग्नः चापः प्रतिभयनिनदैः** भयङ्करचटचटध्वानैः। भयङ्करं प्रतिभयमित्यमरः। **स्वभर्तुः** कंसस्य **धैर्यचौर्यं ततान**। भज्यमानचाप-ध्वनिश्रवणेन कंसश्चकित आसीदिति [२]पुराणप्रसिद्धेः। समर्थोऽसौ शत्रुः नास्माभिरिह स्थेय-मित्यादिविप्रियवचनैरिति ध्वनिः। **व्यग्रस्वान्तान्** उद्विग्नचित्तान् **स्वपालान्** स्वरक्षकान् **दृढतरशकलद्वन्द्वघातैः** दृढतरस्वखण्डद्वयकृतप्रहारैः **जघान**। एवं न वक्तव्यमिति स्वप्रतिषेद्धॄन् स्वहस्तप्रहारेणेति ध्वनिः। **भङ्गेनैव** स्वभङ्गेनैव **उग्रमल्लप्रकरस्य** क्रूरमल्लसमूहस्य **हृदि** चित्ते **भल्लकल्पं** शरसमं **भयं चखान** अन्तर्निदधे। अहमेतादृशोऽपि भग्नः किं यूयमिति स्वराजकीयभटानां भीषणेनेति

---

१ वृत्तरत्नाकरे (३/९०)

२ धनुषो भज्यमानस्य शब्दः खं रोदसी दिशः।
पूरयामास यं श्रुत्वा कंसस्त्रासमुपागमत्॥ - भागवते (१०/४०/१७)

ध्वनिः । तथाहि । विपक्षे शत्रौ द्वैधीभावम् अन्तर्भेदं विरचयति सति । धनुःपक्षे खण्डनाख्यद्वैधीभावो द्रष्टव्यः । **स्वीय एव स्वकीय एव स्वस्य शत्रुर्भवति हि** बत खेदे । अद्यापि हि नयज्ञैः नृपैर्वित्तदानादिना दुर्गस्थानाम् अन्तर्भेदे कारिते सति त एव दुर्गद्वारमुपदिशन्तः तत्र तत्र दृश्यन्ते इति अर्थान्तरन्यासः । स चोक्तध्वनिना उज्जीवितः ।। १४ ।।

**इति विविधचरित्रं श्रीपतेस्तद्विचित्रं**
**कथयितुमिव भानुः सिद्धविद्याधराणाम् ।**
**अगमदमलमेरोर्भागमन्यं मुकुन्दोऽ-**
**प्यगणितविभवः स्वं ज्ञातिजुष्टं निवासम् ।। १५ ।।**

**व्या :** इतीति । **भानुः** सूर्यः **श्रीपतेः** श्रीकृष्णस्य **विचित्रम**द्भुतं **तत्** कुब्जोन्नमनादि**विविधचरित्रं सिद्धविद्याधराणां** मेरोरपरभागस्थितानां **कथयितुमिव** निर्मल**मेरोः अन्यं भागं** पार्श्वम**गमत्** । तदा सूर्यः अस्तङ्गत इत्यर्थः । **अगणितविभवः मुकुन्दोऽपि** श्रीकृष्णोऽपि **ज्ञातिजुष्टं** नन्दादिभिर्व्याप्तं **स्वं** स्वकीयं **निवास**मगमत् ।। १५ ।।

**तमः समन्तात् काष्ठासु पुपूर स गतो रविः ।**
**बहिर्गतो मुकुन्दोऽपि भयाख्यं तत् स्वशत्रुषु ।। १६ ।।**

**व्या :** तम इति । अस्तङ्गतः **रविः काष्ठासु** दिक्षु **समन्तात्** तमः **पुपूर** पूरयामास । पुराद्**बहिर्गतः मुकुन्दोऽपि भयाख्यं तत्** तमः पूर्वोत्तरापरिस्फूर्तिहेतुत्वात् । **स्वशत्रुषु पुपूर** । धनुर्भङ्गदर्शनेन तस्यां रात्रौ शत्रुषु भयमुत्पन्नमिति भावः । दीपकमलङ्कारः ।। १६ ।।

**औदार्यधैर्यशौर्याणि गर्हयन् स भयोच्चयः ।**
**मनो ममर्द कंसस्य मधुसूदनदूतवत् ।। १७ ।।**

**व्या :** शत्रावुत्पन्नभयं श्रीकृष्णदूततया वर्णयति । दूतवर्णनस्य काव्याङ्गत्वात् । **औदार्येति** । **औदार्य**मुदारत्वं **धैर्यं** धीरत्वं **शौर्यं** शूरत्वं तानि शत्रुनिष्ठानि **गर्हयन्** तिरस्कुर्वन् स्वनायकगुणकीर्तनं शत्रुगुणतिरस्कारश्च दूतधर्मः । **सः भयोच्चयः** भयसमूहः **मधुसूदनदूतवत्** श्रीकृष्णदूतवत् **कंसस्य मनः ममर्द** । भीतानां तेषां धैर्यादिहानिर्जातेति भावः ॥ १७ ॥

**कस्त्वं सोऽहमरे त्वदन्तकतटादभ्यागतो वै भटः**
**पृथ्व्यां क्वास्ति ममान्तकः स भुवनेष्वन्तर्बहिर्वर्तते ।**
**नामाप्यस्य न देवकीसुत इति ख्यातः स तन्नन्दनो**
**ध्वस्तो ह्यङ्ग मृतिर्न तस्य निहतास्तेन त्वदीयाः परम् ॥१८॥**

**व्या : कस्त्वमिति** । मम धैर्याद्यपहर्ता त्वं क इति कंसवचनम् । **अरे** कंस **सोऽहम्** । **त्वदन्तकस्य** श्रीकृष्णस्य **तटात्** समीपादभ्यागतः **भटो वै** दूतः खलु । श्रीकृष्णनिमित्तेन भयोत्पत्तेरियमुक्तिः । इति भयाख्यदूतवचनम् । त्वदन्तकेति भयाख्यदूतवचनमसहमानः कंसो वक्ति । **पृथिव्यां ममान्तकः** नाशकः क्व कुत्रास्ति न कुत्रापीत्यर्थः । **सः** त्वदन्तकः **भुवनेषु अन्तर्बहिश्च वर्तते** । श्रीकृष्णस्य व्याप्तत्वादिति भावः । इति भयदूतवचनम् । अन्तकस्य **नामापि** न श्रूयत इति कंसवाक् । **सः देवकीसुत** इति **ख्यात** इति भयदूतवचनम् । "अस्यास्त्वामष्टमो गर्भो हन्ता यां [1]वहसेऽबुध"[2] इत्यशरीरवाक् । **हे अङ्ग** तस्याः देवक्याः **नन्दनः** जात्येकवचनमिदम् । **ध्वस्तः** शिलापृष्टे चूर्णितो हि । **तस्य** त्वदन्तकस्य न **मृतिर्न** मृत्युः **नित्यत्वात्** । परं केवलम् अन्यासहायेन **तेन** श्रीकृष्णेन **त्वदीया**स्त्वत्सम्बन्धिन्यः पूतनादयः निहताः देवकीनन्दनस्य श्रीकृष्णस्य हतत्वे त्वत्प्रेषितपूतनादीनां कुतो नाश इति भावः । भयजननानन्तरं

---

१ नयसेऽबुध – इति प्र. पाठः ।

२ भागवते १०/१/३४

भीतस्य भयावस्थायां यद्वचनं तत्सर्वं दूतवचनत्वेन वर्णितम् । धैर्यावस्थायां यद्वचनं तत्कंसवचनत्वेन वर्णितम् । एवमुत्तरत्रापि ज्ञातव्यम् ॥

**मल्लाः शैलसमा बलं च जगति प्रख्यातमस्त्येव मे**
**हस्ती हस्तिसहस्रसम्मितबलस्तत् क्वास्ति मृत्युर्मम ।**
**राजन् मृत्युरिवाहमेव भवतां चित्ते समुज्जृम्भितो**
**दृष्टं वस्तु भयङ्करं विरचये शङ्कासहस्रार्पकः ॥ १९ ॥**

**व्या :** **मल्ला** इति । **शैलसमाः** पर्वतसन्निभाः **मल्लाः** सन्ति । **जगति** लोके **प्रख्यातं** प्रसिद्धं **बलं** चास्त्येव । **हस्तिसहस्रस्य** गजसहस्रस्य **सम्मितं** समानं **बलं** सत्त्वं यस्य सः । **हस्ती** कुवलयापीडाख्यो गजश्च । **तत्** तस्मान्मम **मृत्युः क्व** कुत्रास्ति । न कुत्रापीत्यर्थः । इति पुनः कंसवचनम् । हे **राजन्** कंस **भवतां चित्ते समुज्जृम्भितः** उत्पन्नः **अहमेव शङ्कासहस्रार्पकः** शत्रुवच्छत्रुरिति शङ्कासहस्रजनकः सन् **मृत्युरिव दृष्टं** भवद्दृष्टिपथं प्राप्तं **वस्तु भयङ्करं विरचये**। अतिभीतानां स्तम्भादावपि शत्रुभ्रान्त्या पतनस्खलनादिदर्शनादियमुक्तिः । मृतादप्यधिकां दुर्दशां भीतः प्राप्नोतीति भावः ॥ १९ ॥

**यस्मिन्नुत्सृजति स्वभक्तनिकरैः साकं हृदोको नृणां**
**प्रागन्धा बधिरा विवेकरहिता मूकायिताश्च क्षणात् ।**
**अन्ते प्रेतपुरीं प्रयान्ति जगतामीशस्य तस्याग्रतः**
**किं मल्लैः किमु हस्तिनाऽतिबलिना किं वा त्वया किं भटैः ।२०।**

**व्या :** स्वपराक्रमेण शत्रुं धिक्कृत्य स्वस्वामिसामर्थ्येनापि निराकुर्वन् भयाख्यदूतो वक्ति । **यस्मिन्निति** । **स्वभक्तनिकरैः** चक्षुराद्यभिमानिसूर्यादिदेवैः **साकं नृणां हृदोकः** हृदयाख्यमन्दिरम् । 'धिष्ण्यमोको निवसनम्' इत्यमरः । भवच्छरीरमपि अस्मत्स्वामिगृहत्वेन न भवदधीनं किमन्यदिति व्यङ्ग्यम् । ''हृदयं ब्रह्मपुरम्'' इति श्रुतेः । **उत्सृजति** सति **प्राक्** प्रथमं **क्षणात् अन्धाः बधिराः** श्रोत्रेन्द्रियविधुराः । **विवेकरहिताः** ज्ञानशून्याः । **मूकायिताश्च** वाग्व्यापारशून्याश्च सन्तः । अनेन

इन्द्रियाभिमानिदेवतानिर्गमनफलमित्युक्तम् भवति। **अन्ते** अवसानं यस्मिन् क्षणे तस्मिन्। **प्रेतपुरीं प्रयान्ति** म्रियन्त इत्यर्थः। अनेन कृष्णनिर्गमनफलमुक्तं भवति। ''ब्रह्मणा त्यक्तदेहस्तु मृत इत्युच्यते नरः''[१] इति श्रुतेः। ''शुभजीवप्रकाशेन कदाचिच्छुभबुद्धयः''[२] इति वचनात् भीतस्य कंसस्य एतादृशो विचारो नासम्भावितः। **जगतामीशस्य** कृष्णस्याग्रतः पुरतः **मल्लैः किं** प्रयोजनम्। हस्तिना गजेन **किम्। अतिबलेन त्वया किम्। भटैः किम्।** जीवतां भवतां खलु सर्वं युद्धायोपकरोति। तन्निर्गमनमात्रेण जीवनहानौ किमेतैरिति भावः॥ २०॥

**किं भ्रान्तोऽसि विरुद्धभाषणमिदं मा ब्रूहि भो दुर्मते**
**भ्रान्तिस्ते विपरीतवागपि मनो यत् ते मया निर्जितम्।**
**मत्खड्गाभिहतिं किमिच्छसि शनैर्हस्ताद्गलंश्चञ्चलात्**
**स त्वामेव हनिष्यतीश्वरभटं मां हन्तुमीशोऽस्ति कः॥२१॥**

**व्या :** किमिति। दुष्टा मतिर्यस्य सः तत्सम्बुद्धिः हे **दुर्मते** भयदूत **भ्रान्तोऽसि किम्। इदं विरुद्धभाषणं** विरुद्धवचनं **मा ब्रूहि** मा वदेति भयं धिक्कुर्वतः कंसस्य वचनम्। हे कंस **यत्** यस्मात् **ते मनः मया निर्जितम्।** तत् तस्माद्भ्रान्तिर्विपरीतवागपि ते तवैव। भीतानां सभाकम्पादिना भ्रमविपरीतवचनदर्शनादिति भावः। इति भयदूतवचनम्। **मत्खड्गाभिहतिम् इच्छसि किमिति** पुनः कंसवचनम्। **चञ्चलात्** भीत्या कम्पमानात् तव हस्तात् **शनैर्गलन्** मुष्टेः शैथिल्यात् **स** खड्गः **त्वामेव हनिष्यति। ईश्वरभटं मां हन्तुं ईशः** समर्थः **कोऽस्ति**। न कोऽपि समर्थः। इत्यर्थः। अन्यस्माद्भयं कथञ्चित् परिहर्तुं शक्यम्। ''ब्रह्मणोऽपि भयं मत्तः द्विपरार्धपरायुषः''[३] इति वचनात्। कृष्णादागतभयं न केनापि परिहर्तुं शक्यमिति भावः॥ २१॥

---

१ विष्णुतत्त्वनिर्णयोद्धृतमहाभारतवचनम्।

२ भागवततात्पर्योद्धृतगरुडपुराणवचनम्। १०/५/१८

३ भागवते (११/१०/३०)

**क्लीबः किं कुरुषे त्वमङ्ग भवतः क्लीबोपमां दित्सया**
**तद्भावं शिरसा दधामि बहुना किं जल्पितेनाधुना ।**
**नित्यं मन्नियतः स वाति पवनः पाकं विधत्तेऽनलः**
**सूर्योऽसौ समुदेति तं हरिमृते सर्वं जगन्मद्वशम् ॥ २२ ॥**

**व्या :** क्लीब इति हे **अङ्ग** भयदूत । **क्लीबः** असमर्थः **त्वं किं कुरुषे** । भयशब्दस्य नपुंसकत्वादियमुक्तिः । इति कंसवचनम् । हे कंस **भवतस्तव क्लीबोपमां दित्सया** क्लीबसाम्यदानेच्छया **तद्भावं** क्लीबभावं **शिरसा दधामि** । काष्ठभारवाहकवत् तदर्थमेव ध्रियत इत्यर्थः । भीतानां नपुंसकप्रायत्वादिति भावः । **अधुना बहुना जल्पितेन** बहुभाषितेन **किम्** । एकेनैव वचनेन मत्सामर्थ्यं दर्शयामीति भावः । **मन्नियतः** सन् **सः पवनो** वायुर्वाति चलति । मन्नियतोऽनलोऽग्निः **पाकं विधत्ते** । मन्नियतोऽसौ **सूर्यः समुदेति** । ''भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः''[1] इति श्रुतेः । **तं हरिं** ऋते विना **सर्वं जगत्** मुक्तामुक्तात्मकं विश्वं **मद्वशं** मदधीनम् । [2]हरिरेक एवाकुतोभयः, अन्ये यथायोग्यं सभया इति भावः ॥ २२ ॥

**सत्त्वं निष्फलमातनोमि मलिनं खिन्नं मुखं वेपथु-**
**ग्रस्तं गात्रमधीरमक्षियुगलं चित्तं च चिन्ताकुलम् ।**
**दैन्यं वाचि विरक्ततां च विभवे त्यागं च भोगावले-**
**र्लज्जामानयशश्च्युतिं विरचये चित्तेऽहमुज्जृम्भितः ॥२३॥**

**व्या : सत्त्वमिति** । हे कंस **चित्ते उज्जृम्भितः अहं सत्त्वं** सामर्थ्यं **निष्फलं** निरर्थकम् **आतनोमि** । सेनादिबलोपेतस्यापि भीतेः पलायनदर्शनादिति भावः । **मुखं मलिनम्** । **खिन्नं** खेदयुक्तम् । **गात्रं** शरीरम् । **वेपथुना** कम्पेन

---

१ तैत्तिरीय. २/८

२ 'तदेजति तन्नेजति' - इति ईशावास्योपनिषदि

**ग्रस्तम्** अक्षियुगलम् **अधीरम्** इतस्ततो दर्शनेन चञ्चलं **चित्तं** च किमद्य करोमीति चिन्तया आकुलं **वाचि** वचने **दैन्यं** दासस्तवेत्यादि । **विभवे** ऐश्वर्ये **विरक्ततताम्। भोगावलेः** भोगसमूहस्य **त्यागं च** भीतानां वनिताराज्यादिकं विहाय पलायनदर्शनादिति भावः । **लज्जायाः मानस्य** गर्वस्य **यशसः** च्युतिं हानिं **विरचये** । भीतानामेतद्भवतीति भावः । इदं भयदूतवचनम् ।। २३ ।।

**रे रे मन्द बहिः प्रयाहि यदि भो भोजेश कृष्णाश्रितो**
**भूयास्तर्हि तथा करोम्यपरथा त्वां नोभयत्रोत्सृजे ।**
**धैर्यस्थैर्ययुताच्युतप्रिय मनो मह्यं न वै रोचते**
**क्षेमायाभ्युदयाय च प्रतिदिनं तद्वैरिचेतो मम ।। २४ ।।**

**व्या :** रे रे मन्देति । **रे रे** भो भो । **मन्द** मूढ दूत **बहिः प्रयाहि** । मच्चित्तान्निर्गच्छ । स्थैर्यमर्थमानस्य कंसस्य वचनम् । **भो भोजेश कृष्णं** श्रितः **आश्रितो भूयाः** । **तर्हि तथा करोमि** बहिर्गच्छामीत्यर्थः । श्रीकृष्णस्याभयप्रदत्वात् इति भावः । **अपरथा** कृष्णाश्रयाभावे । उभयत्र संसारे तमसि च । **त्वां नोत्सृजे** । ''भयेन भयात्मकताम्'' इति वचनात् तत्कुत इत्यत आह । **धैर्यस्थैर्ययुतस्य अच्युतस्य प्रियाणां** विष्णुभक्तानां **मनः मह्यं न रोचते वै** । ''अभिभूयमाना व्यसनैर्यथाऽधोक्षजचेतसः''[१] इति वचनात् । तस्य श्रीकृष्णस्य द्वेषिचेतः **प्रतिदिनं मम** क्षेमाय स्थितरक्षायै अभ्युदयाय अभिवृद्धये च भवति । विष्णुद्वेषिणां **प्रतिदिनं** भयाधिक्यमिति भावः ।। २४ ।।

**शम्भुं सम्भज पद्मयोनिमथवा चन्द्रेन्द्रवीन्द्रादिकान्**
**स्वर्गं गच्छ तमो व्रज प्रविश वा पातालमत्रैव वा ।**
**रक्षां भित्तिसहस्रवारिधिमहाशैलज्वलत्पावकैः**
**कृत्वा तिष्ठ तथापि कृष्णविमतं त्यक्ष्यामि न त्वामहम् ।।२५।।**

---

१ भागवते (१०/१८/१३)

**व्या :** शम्भुमिति । हे कंस स त्वं **शम्भुं रुद्रं सम्भज** । तथापि **कृष्णस्य विमतं** विरोधिनं **त्वामहं न त्यक्ष्यामी**त्येवं सर्वत्रान्वयः । रुद्राश्रितस्यापि बाणस्य भयदर्शनादिति भावः । **अथवा पद्मयोनिं** ब्रह्माणम् । ब्रह्माश्रितस्यापि हिरण्यकशिपोः भयदर्शनादिति भावः । **चन्द्रः इन्द्रः वीन्द्रः** गरुडश्चादयो येषां ते तान् चन्द्रादीनामपि राह्वादिभ्यो भयदर्शनादिति भावः । **पातालं प्रविश ।** पातालं प्रविष्टस्यापि हिरण्याक्षस्य भयदर्शनादिति भावः । **अत्रैव** भूमौ वा **भित्तीनां** प्राकाराणां **सहस्रम्** । **वारिधिः** समुद्रः **महाशैलः** कुलपर्वतः **ज्वलत्पावकश्च** तैः परितो **रक्षां कृत्वा तिष्ठ** । एतादृशस्य नरकासुरस्य मृतिदर्शनादिति भावः । **तथापि** त्वां न त्यक्ष्यामीति सम्बन्धः । विष्णुद्वेषिणो यत्र कुत्रापि गमने भयं न मुञ्चतीति भावः ।। २५ ।।

**युद्धार्थं न कदापि गच्छति गतोऽप्योजस्विनां पृष्ठत-**
**स्तिष्ठत्यन्यमवेक्ष्य शस्त्रनिकरं पृथ्व्यां क्षणेनोज्झति ।**
**शत्रुं स्तौति तृणाङ्गुलीदलमदन् कम्पी पतन् धावति**
**स्तब्धेत्थं बहुलोकनिन्दितदशां सम्प्रापयिष्याम्यहम् ।।२६।।**

**व्या :** युद्धार्थमिति । हे **स्तब्ध** कंस यस्य चित्तेऽहमुज्जृम्भितः सः **युद्धार्थं** युद्धं कर्तुं **कदापि न गच्छति** । **गतोऽपि ओजस्विनां** शूराणां **पृष्ठतः** पश्चाद्भागे **तिष्ठति** । भीतः युद्धं कर्तुं पुरो न गच्छतीति भावः । कथञ्चित् पुरतो गच्छन् **अन्यं** शत्रुम् **अवेक्ष्य शस्त्रनिकरम्** आयुधसमूहं **क्षणेन पृथ्व्यां** भूम्याम् **उज्झति** मुञ्चति । सायुधत्वेनावस्थाने शत्रुर्मारयतीति भीत्येति भावः । **तृणानि चाङ्गुलीदलानि च** तृणाङ्गुलीदलम् । एकवद्भावः । **अदन्** भक्षन् **शत्रुं स्तौति** । कथञ्चिच्छत्रुणा मुक्तः **कम्पी** कम्पवान् **पतन् धावति** पलायनं करोति । पृष्ठतः पलायमानोऽपि न सुखं लभत इति भावः । इत्थमनेन प्रकारेण । **बहुलोकनिन्दितदशां** लोकगर्हितावस्थाम् अहं **प्रापयिष्यामीति** भयदूतवचनम् ।। २६ ।।

**गाथा तिष्ठतु भूप सम्प्रति भवान् निद्राति किं निद्रितः**
**स्वप्नं शोभनमेव पश्यति रिपुं किं नानिशं शङ्कते ।**
**धैर्यं किं हृदि सन्दधात्यनुचरान् धीरान् किमुद्वीक्ष्य ते**
**स्वैरं मद्वशमानसस्य भवतः सौख्यं क्व सौख्यार्थिनः ॥२७॥**

**व्या : गाथेति** । हे भूप कंस **गाथा** लोककथा **तिष्ठतु** त्वय्येव । सर्वं मत्कृतविकारं विचारयेत्याह । **सम्प्रतीति** । **भवान् सम्प्रति** इदानीं मदुज्जृम्भणकाल इत्यर्थः । **निद्राति किं** निद्रां गच्छति किम् । कथञ्चन **निद्रितः शोभनमेव** शुभसूचकमेव **स्वप्नं पश्यति** किम् । किं करिष्यामीति चिन्तया सुप्तस्य तादृशः स्वप्नो जायत इति भावः । स्वप्नमित्युपलक्षणम् । ''अदर्शनं स्वशिरसः प्रतिरूपेषु सत्स्वपि''[१] इत्यादिभागवतोक्तजाग्रद्दृष्टसमस्तानिष्टदर्श-नमपि ग्राह्यम् । **रिपुमनिशं न शङ्कते किम्**। **हृदि धैर्यं सन्दधाति किम्** । **अनुचरान्** त्वद्भृत्यान् **धीरान्** धैर्यवतः **उद्वीक्ष्यते किम्** । **स्वैरम्** अनायासेन **मद्वशमानसस्य** मदधीनचित्तस्य भयग्रस्तस्येत्यर्थः। **सौख्यार्थिनो भवतः सौख्यं** सुखं **क्व** । ''गोप्यः कामात् भयात् कंसः''[२] इति वचनात् । कंसस्यैव भयातिशयादेवमुक्तमिति ज्ञातव्यम् ॥२७॥

**इत्थं साध्वससन्दिग्धबुद्धिर्निद्रां न सोऽध्यगात् ।**
**लब्धनिद्रोऽपि दुःस्वप्नैः स्पर्धोन्नद्धो व्यबोध्यत[३] ॥ २८ ॥**

---

१ भागवते (१०/४२/२८)

२ भागवते (७/१/३०)

३ कंसस्तु धनुषो भङ्गं रक्षिणां स्वबलस्य च ।
वधं निशम्य गोविन्दरामविक्रीडितं परम् ॥
दीर्घप्रजागरो भीतो दुर्निमित्तानि दुर्मतिः ।
बहून्यचष्टोभयथा मृत्योर्दौत्यकराणि च ॥
अदर्शनं स्वशिरसः प्रतिरूपेषु सत्स्वपि ।

**व्या :** भयदूतवचनं समापयति । **इत्थमिति** । इत्थमनेन प्रकारेण साध्वसेन भयेन । 'भीतिर्भीः साध्वसं भयम्' इत्यमरः । **सन्दिग्धा** कोटिद्वयावलम्बिनी बुद्धिर्यस्य **सः** कंसः **निद्रां नाध्यगात्** न प्राप्तवान् । **लब्धनिद्रोऽपि दुःस्वप्नैर्मरणसूचकैः स्वप्नैः** स्पर्धया **उन्नद्धः** उद्रिक्तः सन् **व्यबोध्यत** प्रबोधं प्रापितवान् ॥२८॥

**ततस्तमिस्रं परिहर्तुमर्कः समाससादाभ्रगराजमार्गम् ।**
**असत्तमिस्रं स्वकरैर्जिहीर्षुर्हरिश्च गोपैः सह राजमार्गम् ॥२९॥**

**व्या :** तत इति । ततोऽनन्तरं **अर्कः** सूर्यः **तमिस्रं** तिमिरं **परिहर्तुं** अभ्रगराजमार्गम् आकाशगतचन्द्रमार्गं **समाससाद** । ''सोमो राजा''[1] इति श्रुतिः । चन्द्रास्तमये तन्मार्गे सूर्यः समागत इत्यर्थः । **स्वकरैः** स्वहस्तैः असत्तमिस्रं दुर्जनाख्यान्धकारं **जिहीर्षुः गोपैः सह राजमार्गं** मधुरापुरीं समाससाद ॥२९॥

**गच्छन् विलोक्य गजरम्यगतिः स रङ्ग-**
**द्वारि स्थितेभमथ हस्तिपमित्यवोचत् ।**
**मार्गं प्रदेहि करिणा सह दूरमेहि**
**नो चेत् प्रयास्यसि विदूरकृतान्तलोकम् ॥ ३० ॥**

**व्या :** गच्छन्निति । गजवत् रम्या गतिर्गमनं यस्य स तथोक्तः । **गच्छन्** कृष्णः **रङ्गद्वारि** मल्लयुद्धकरणद्वारे **स्थितेभं** स्थितगजं **विलोक्य अथ** विलोकनानन्तरं

---

असत्यपि द्वितीये च द्वैरूप्यं ज्योतिषां तथा ॥
छिद्रप्रतीतिश्छायायां प्राणघोषानुपश्रुतिः ।
स्वर्णप्रतीतिर्वृक्षेषु स्वपदानामदर्शनम् ॥
स्वप्ने प्रेतपरिष्वङ्गः खरयानं बिसादनम् ।
यायान्नळदमाल्येकस्तैलाभ्यक्तो दिगम्बरः ॥
अन्यानि चेत्थम्भूतानि स्वप्नजागरितानि च ।
पश्यन् मरणसन्त्रस्तो निद्रां लेभे न चिन्तया ॥ - भागवते (१०/४०/२४-२९)

१ कौषीतकीब्राह्मणोपनिषत् ४/३

इति वक्ष्यमाणप्रकारेण **हस्तिपं** यन्तारम् **अवोचत्** उक्तवान् । हे हस्तिप **मार्गम्** अन्तःप्रवेष्टुं पन्थानं **प्रदेहि** । **करिणा** सह गजेन साकं **दूरमेहि** गच्छ । नो चेत् मार्गं विहाय अल्पदूरं न गच्छसि **चेत्** तर्हि विशेषेण **दूरः कृतान्तस्य** यमस्य **लोकस्तं प्रयास्यसि** । गमिष्यसि । नो चेद्धनिष्यामीति भावः ॥ ३० ॥

**भो तिष्ठ तिष्ठ वनवासिजनैकमान्य**
**प्रौढिर्बलं कुशलमस्ति न तादृशं ते ।**
**यादृग्विदग्धपुरवासिजनेषु शत्रु -**
**सन्दर्भकेसरिसमेषु जितश्रमेषु ॥ ३१ ॥**

**व्या :** अल्पदूरागमने बहुदूरगमनं स्यादिति कृष्णस्य वाक्प्रौढिमसहमानः अम्बष्टः अधिक्षिपन्नाह । **भो तिष्ठेति** । **भो वनवासिजनैकमान्य** केवलवनवासिजनैकमान्य वने सञ्चरतः गोपालस्य तव प्रौढिर्नास्तीति भावः । श्रीकृष्ण **तिष्ठ तिष्ठ** । आक्रोशेन द्विरुक्तिः । **ते** तव तादृशी **प्रौढिः** वाग्वैखरी **तादृशं बलं** सत्त्वन्तादृशं **कुशलं** **कर्मकौशल्यं** च **नास्ति** । **शत्रुसन्दर्भस्य** शत्रुसमूहस्य **केसरिसमेषु** सिंहसदृशेषु **जितश्रमेषु** सदाऽभ्यासेन जितालस्येषु **विदग्धेषु** प्रौढेषु **पुरवासिजनेषु यादृ**क्प्रौढ्यादिकं तादृशमिति पूर्वेणान्वयः ॥ ३१ ॥

**प्रौढिं विचारयत मन्दमतेः स्वहस्ति-**
**विध्वंसनोद्यतकरस्य वने निवासः ।**
**किं दूषणं विमतकेसरिसम्मितानां**
**किं भूषणं प्रतिदिनं नगरे निवासः ॥ ३२ ॥**

**व्या :** एवमधिक्षिप्तः कृष्णः 'अन्यत्रास्य **प्रौढिः** किंवक्तव्या । मदधिक्षेपार्थमुक्तेः अस्मिन्नेव वचने तत्प्रौढिं पश्यत' इत्याह । **प्रौढिमिति** । हे जनाः **मन्दमतेः** **अस्य** अम्बष्ठस्य प्रौढिं **विचारयत** पश्यत । **स्वस्य हस्तिनो** गजस्य **विध्वंसने** हनने **उद्यतकरस्य** स्वरिपुगजरिपुत्वेन सिंहसमस्य मम **वने निवासः** अवस्थानं

दूषणं किम् । सिंहस्य वने स्थितिरेवोचितेति भूषणमित्यर्थः । **विमतेषु** शत्रुषु **केसरिसम्मितानां** सिंहसदृशानां स्वेषाम् । **प्रतिदिनं** अनुदिनम् । **नगरे निवासः** अवस्थानं **भूषणं किम्** । नगरे निवासे सति स्वेषां ग्रामसिंहत्वापत्तेर्दूषणमेवेति भावः ॥ ३२ ॥

**प्रौढिस्तथाऽस्तु बलकौशलमस्मदीयं**
**पश्येत्युदीर्य तरसा करिणं निहत्य ।**
**तस्याङ्घ्रिमध्यमधिगम्य विभुर्विलिल्ये**
**हस्ती व्यकम्पत तदा जगृहे न शौरिम् ॥ ३३ ॥**

**व्या :** प्रौढिरिति । **विभुः** समर्थः श्रीकृष्णः अस्मदीयप्रौढिस्तथाऽस्तु तथा तिष्ठतु । **अस्मदीयं बलं** च **कौशलं** च बलकौशलम् । एकवद्भावः । **पश्येति उदीर्य** उक्त्वा **तरसा** बलेन **करिणं** गजं **निहत्य तस्य** करिणः **अङ्घ्रीणां मध्ये अधिगम्य** प्राप्य **विलिल्ये** निलीनोऽभवत् । **तदा** कृष्णकरताडने सति **हस्ती व्यकम्पत** । अनेन बलं प्रदर्शितम् । **शौरिं** कृष्णं न **जगृहे न** गृहीतवान् । अनेन कौशलं प्रदर्शितं भवति ॥ ३३ ॥

**पुच्छे प्रगृह्य पुरुसत्त्वममुं पुनश्च**
**कृष्णश्चकर्ष बहुदूरमपारशक्तिः ।**
**धावन् विभुर्निजविपातविशङ्किनोऽस्य**
**भूलग्नदन्तयुगलं शिथिलीचकार ॥३४॥**

**व्या :** प्रकारान्तरेण बलकौशलं प्रदर्शयति । पुच्छ इति । **अपारा** अपरिमिता **शक्तिः** सामर्थ्यं यस्य स तथोक्तः । **श्रीकृष्णः पुरुसत्त्वममुं** गजं **पुच्छे प्रगृह्य बहुदूरं चकर्ष** । अनेनापि बलं प्रदर्शितम् । **धावन्** गजाग्रे धावनं कुर्वन् **विभुः** कृष्णः निजस्य **विपातम्** अल्पपातेऽपि विशेषेण पातं शङ्कत इति स तथोक्तः ।

तस्यास्य गजस्य लाघवेन किञ्चित् पतित्वा तत्क्षण एवोत्थितस्य स्वस्य विपातमाशङ्कमानस्येत्यर्थः । **भूलग्रदन्तयुगलं** श्रीकृष्णताडनार्थं स्वसत्त्वेन भुवि निक्षिप्तदन्तयुगलं **शिथिलीचकार** । दन्तमूलयोः शैथिल्यं सम्पादयामास । अनेन कौशलं प्रदर्शितम् ॥ ३४ ॥

**कृष्णं विशङ्क्य पतितं भुवि संहतात्म-**
**दन्तानुषक्तबहुधूलिरिभो विरेजे ।**
**सिद्धात्मबुद्ध्युचितसिद्धिरिवाम्बरस्थ-**
**सिद्धेश्वरस्तुतिगिरा पथि वर्ण्यमानः ॥ ३५ ॥**

**व्या : कृष्णमिति** । **कृष्णं भुवि पतितं**[१] **विशङ्क्य संहते** कृष्णसत्त्वताडनार्थं भुवि क्षिप्ते **आत्मदन्ते अनुषक्ता** सम्बद्धा **बहुधूलिर्यस्य** स तथोक्तः । **इभः** गजः **सिद्धा** जाता **आत्मनो** गजस्य या **बुद्धिः** अस्खलितस्य श्रीकृष्णस्य स्खलनविषयिणी। ताडनायोग्यस्य ताडनकरणविषयिणी दुर्बुद्धिः तस्याः **उचिता सिद्धिः** फलं यस्य स **इव** । तादृशमिथ्याज्ञानिनो वदने धूलिपातस्य फलत्वादिति भावः । **अम्बरस्थसिद्धेश्वराणां स्तुतिगिरा** श्रीकृष्णविषयगिरा **पथि** मार्गे **वर्ण्यमानः** श्रीकृष्णविषयकमिथ्याज्ञानेनैव गजमुखे धूलिपातो जात इत्यभिवर्ण्यमानः इभो गजः **विरेजे** ॥ ३५ ॥

---

१ मज्जन्तं पृथुलहरीनिगूढमूर्तिं सम्पूर्णप्रमतिमसज्जनो जहास ।
यो लोकत्रयविजयी गुरुः प्रसिद्धः सोऽयं ही पतति लघूर्मिलीलयेति ॥
नीचानामवचवचांस्यजीगणन्नो दभ्राणां क्षुभितकराण्यदभ्रसङ्घ्यः ।
क्रोष्टूनां श्वकलकलप्रदं विरावं पञ्चास्यो न हि गणयेदुदारवीर्यः ॥
जन्मस्थित्यवसितिदायिनं कटाक्षं लोकानामघटयदम्बुधौ बृहद्धीः ।
आक्रान्तोऽधिकगुरुणा स तेन तावन्मुञ्चन् सञ्चलनमभूत् तटाकदेश्यः ॥
- (मध्वविजये - १६/२१-२३) इतिवत् ।

**इत्थं प्रदर्श्य बलकौशलमम्बुजाक्षः**
**पद्भ्यां प्रपीड्य तरसा करिणं ममर्द ।**
**उत्खाततद्धवलदन्तकरः क्षणेन**
**तत्स्वामिनं [1]तदनुगांश्च स लीलयैव ॥ ३६ ॥**

**व्या :** इत्थमिति । अम्बुजाक्षः श्रीकृष्णः इत्थमुक्तप्रकारेण **बलकौशलं प्रदर्श्य** प्रदर्शयित्वा **करिणं** कुवलयापीडं **पद्भ्यां** पादाभ्यां **तरसा प्रपीड्य ममर्द** मर्दयामास । पादघातेन हिंसितवानित्यर्थः । **उत्खातः** उन्मूलितः **तस्य** इभस्य **धवलदन्तः** करे यस्य **स** तथोक्तः कृष्णः **लीलयैव क्षणेन तत्स्वामिनं** हस्तिपं **तदनुगान्** तत्परिचारकांश्च **ममर्द** करस्थदन्तेनैव हिंसितवानित्यर्थः ॥ ३६ ॥

**पादप्रहारविवशः किल वारणोऽसौ-**
**कुर्वन् पपात भुवि नाम गुणानुकूलम् ।**
**तस्याङ्घ्रिसङ्गिसहजाङ्कुशरम्यरेखा -**
**शङ्कीव कम्पितमहीधरभूप्रदेशः ॥ ३७ ॥**

**व्या :** पादेति । **तस्य** कृष्णस्य **अङ्घ्रौ सङ्गतानां सहजाङ्कुशरम्यरेखानां** स्वाभाविकाङ्कुशमनोहररम्यरेखानां **शङ्कत** इति तथोक्तः । **अङ्कुशरेखातो** भीत इवेत्यर्थः । **पादप्रहारेण** कृष्णचरणताडनेन **विवशः** । **असौ वारणो** गजः **कम्पिताः**

---

१ आयन् जगद्गुरुतमो बलिनं गजेन्द्रं रुद्रप्रसादपरिरक्षितमाश्वपश्यत् ।
दुष्टोरुरङ्गमुखसंस्थितमीक्ष्य चैभ्यं पापापयाहि नचिरादिति वाचमूचे ॥
क्षिप्तः स ईश्वरतमेन गिरीशलब्धाद्दृप्तो वराज्जगति सर्वजनैरवध्यः ।
नागं त्ववध्यमभियापयते ततोऽग्रे पापो दुरन्तमहिमं प्रति वासुदेवम् ॥
नागं ससादिनमवध्यमसौ निहत्य स्कन्धे विषाणमवसज्य सहाग्रजेन ।
नागेन्द्रसान्द्रमदबिन्दुभिरञ्चिताङ्गः पूर्णात्मशक्तिरमलः प्रविवेश रङ्गम् ॥
- म.भा.ता.नि. (१३/११२-११५)

स्वपादेन चालिताः **महीधराः** पर्वताः । **भूप्रदेशः** भूभागो येन स तथोक्तः । अत एव स्वनाम कुवलयापीड इति अभिधाम् अनुकूलगुणम् । कोः पृथिव्याः वलयं मण्डलम् आ सम्यक्पीडयतीति लब्धगुणानुकूलं कुर्वन् भुवि पपात ॥ ३७ ॥

**अंसस्थदन्तपरिशोभितरक्तबिन्दु-**
**संसक्तनिर्मलतनुर्हरिराबभासे ।**
**रक्षोविदारणविलासधृतान्त्रमाला-**
**वक्षःस्थलाद्भुतनृसिंह इव द्विपारिः ॥३८॥**

**व्या : अंसस्थेति । अंसस्थस्य** स्वकन्धरस्थस्य **दन्तस्य** उत्खातमूलप्रदेशस्य **परि** समन्तात् **शोभितं रक्तं** तस्य **विन्दुभिः संसक्ता** सम्बद्धा **निर्मला तनुः** यस्य स तथोक्तः। **द्विपारिः** गजरिपुः कृष्णः **रक्षसः** हिरण्यकशिपोः **विदारण**ाख्य**विलासेन धृता**ऽऽ**न्त्रमाला** येन तद्**वक्षःस्थलं** यस्य स तथोक्तः । **अद्भुतनृसिंह इव**ाबभासे ॥ ३८ ॥

**लोकद्वयसुखव्यूहप्रत्यूहौ द्विषतामिव ।**
**एकैकदन्तावश्रान्तौ [1]रङ्गं [2]विविशतुर्विभू[3] ॥ ३९ ॥**

---

१ मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरो मूर्तिमान्
गोपानां स्वजनोऽसतां क्षितिभृतां शास्ता स्वपित्रोः शिशुः ।
मृत्युर्भोजपतेर्विधातृविहितस्तत्त्वं परं योगिनां
वृष्णीनां च गतिः सदैव शुशुभे रङ्गेऽच्युतः साग्रजः ॥- भागवते (१०/४१/१७)

२ अथ कृष्णश्च रामश्च कृतशौचौ परन्तपौ ।
मल्लदुन्दुभिनिर्घोषं श्रुत्वा द्रष्टुमुपेयतुः ॥ - भागवते (१०/४०/१)

३ निरीक्ष्य तावुत्तमपुरुषौ जना अवस्थिता नागरराष्ट्रका नृप ।
प्रहर्षवेगोत्कलितेक्षणाननाः पपुर्नतृप्ता नयनैस्तदाननम् ॥
पिबन्त इव चक्षुर्भ्यां लिहन्त इव जिह्वया ।

**व्या :** लोकद्वयेति। द्विषतां द्वेषिणां **लोकद्वये** इह परत्र भोक्तव्यस्य सुखसमूहस्य प्रत्यूहः विघ्नो याभ्यां ताविव विघ्नेश्वराविवेत्यर्थः । विघ्नोऽन्तरायः **प्रत्यूह** इत्यमरः। एकैको दन्तो ययोस्तौ। उद्धृतगजदन्तमध्ये **एकस्य दन्तस्य** बलभद्रेण धारणात् अपरस्य कृष्णेन धारणात्। अश्रान्तौ **विभू** समर्थौ बलरामश्रीकृष्णौ रङ्गं मल्लयुद्धस्थलं **विविशतुः** प्रविष्टवन्तौ । ''अप्येकदन्तहेरम्बलम्बोदरगजाननाः''[१] इति [२]विनायकस्याप्येकदन्तत्वात् तथाभूताविव । द्वौ विनायकाविव स्थिताविति भावः ॥ ३९ ॥

**ततः प्रववृते युद्धं मल्लाभ्यां रामकृष्णयोः ।**
**गजाभ्यामिव मत्ताभ्यां ख्यातयोः सिंहयोस्तयोः ॥ ४० ॥**

**व्या :** तत इति । ततो रङ्गप्रवेशानन्तरं **श्रीकृष्णरामयोः मल्लाभ्यां** चाणूरमुष्टिकाभ्यां सह **ख्यातयोः सिंहयोस्तयोः मत्ताभ्यां गजाभ्यामिव युद्धं** प्रववृते प्रवृत्तम् ॥ ४० ॥

**स्वभक्तिरिव संसारं कृष्णश्चाणूरमभ्यगात् ।**
**तज्ज्ञानमिव पापौघं मुष्टिकं रोहिणीसुतः ॥ ४१ ॥**

**व्या :** स्वभक्तिरिति। **श्रीकृष्णः स्वभक्तिः संसारमिव चाणूरमभ्यगात्**। युद्धं कर्तुमभिमुखेनागमत्। **रोहिण्याः सुतो** बलरामो **तज्ज्ञानं** श्रीकृष्णमाहात्म्यज्ञानं

---

जिघ्रन्त इव नासाभ्यां श्लिष्यन्त इव बाहुभिः ॥ - भागवते (१०/४१/२०,२१)

१ अमरकोषः

२ दुष्टानां विघ्नकर्ता सुचरितसुजनस्तोमविघ्नापहर्ता
तस्माद्विघ्नाधिपोऽहं मत इति सुधियां स्पष्टमाज्ञापनाय ।
पौलस्त्येच्छान्तरायः सुरमुनिकराभीष्टसम्प्राप्त्युपायः
श्रेयो विघ्नाधिराजः प्रदिशतु सततं भूरि गौरीतनूजः ॥ - तीर्थप्रबन्धे (१/८३)

पापौघमिव मुष्टिकमभ्यगात् । "मयि भक्तिर्हि लोकानाममृतत्वाय कल्पते"[१] । "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा"[२] इत्याद्युक्तमाहात्म्यम् । एतादृशस्य कृष्णस्य नेमौ प्रतिभटाविति च ख्यापयितुमेवं दृष्टान्तोक्तिः ॥४१॥

**अपि विविधतदीयाभ्यासकौशल्यमासीत्**
**फणिपतियदुपत्योरग्रतोऽव्यग्रमत्योः ।**
**गतफलमतियत्नाभ्यस्तविद्याऽनवस्था**
**फलति सहजतेजोबुद्धिभाजां किमग्रे[३] ॥ ४२ ॥**

**व्या :** अपीति । विविधं तदीयं चाणूरमुष्टिकसम्बन्धि **अभ्यासकौशल्यमपि** अव्यग्रा अनुद्विग्ना मतिर्ययोः सर्वज्ञयोरित्यर्थः । **फणिपति**र्बलरामः श्री**यदुपतिः** श्रीकृष्णः तयो**रग्रतः** पुरतः **गतफलं** निष्फल**मासीत्** । तथाहि । **अनवस्था अतिप्रयत्नेनाभ्यस्तविद्या** । **सहजतेजोबुद्धिभाजां** स्वाभाविकसामर्थ्यज्ञाने भजन्त इति तथोक्तः । तेषा**मग्रे फलति किम्** । अभ्यस्तविद्यायाः विस्मरणसम्भवात् परिमितत्वाच्च । स्वाभाविकविद्यायाः अपरिमितत्वाद्विस्मरणासम्भवाच्चेति भावः ॥ ४२ ॥

**अङ्गालिङ्गनतत्परस्य चरणस्पर्शोद्यतस्याप्यलं**
**नम्रस्य स्वमुपेयुषोऽपि परितश्चाणूरनाम्नो वशे ।**
**कृष्णोऽभून्न च मुष्टिकस्य समरे सङ्कर्षणः सत्कृतिं**
**दुष्टैराचरितां किमत्र मतिमान् मृत्युप्रदां विश्वसेत्[४] ४३**

---

१ भागवते (१०/८२/४५)

२ गीता (४/३७)

३ आह शिक्षामप्यनूनां यत्नं दुर्योधनेऽधिकम् ।
न हि भीमोऽतिप्रयत्नं कुर्यादिति गुणो ह्ययम् ॥ - म.भा.ता.नि.(२८/६६)

४ न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् -भारते (५/३८/९)

**व्या : अङ्गेति । श्रीकृष्णः** समरे युद्धे । **अङ्गालिङ्गने** शरीराश्लेषे । **तत्परस्यासक्तस्य** । मल्लाः अभ्यासेनाङ्गमाश्लिष्य पातयन्ति । आलिङ्गनं सत्कारश्च । अत एव सत्कृतिमिति अर्थान्तरं न्यस्यति । **चरणस्पर्शे** पादग्रहणे उद्यतस्योद्युक्तस्य । मल्ला अपि पादं गृहीत्वा पातयन्ति । पादस्पर्शस्तु नमस्काररूपसत्कारश्च । अलमत्यर्थं **नम्रस्य** अवनतस्य । मल्लास्तु स्वाङ्गं पराग्राह्यं कर्तुम् अवनताश्चरन्ति । 'नम्रीभावोऽपि सत्कारः' इत्यमरः । **स्वं** स्वात्मानं परितः **उपेयुषोऽपि** । मल्लाः प्रतिमल्लग्रहणावसरसाधनाय मण्डलाकारेण चरन्ति । **परितः** सञ्चरणं प्रदक्षिणरूपसत्कारश्च भवति । **चाणूरनाम्नो** मल्लस्य **वशो** नाभूत् । सङ्कर्षणश्च मुष्टिकवशो **नाभूत्** । **दुष्टैर्वञ्चनया** पराघातकै**राचरिताम्** । अत एव **मृत्युप्रदां** सत्कृतिम् आलिङ्गनभोजनसत्कारम् **अत्र** लोके **मतिमान्** बुद्धिमान् [1]**विश्वसेन्** **किम्** । न विश्वसेदित्यर्थः ॥ ४३ ॥

**अशनिसमकठोरमल्लघातो मृदुनि हरेरफलः कलेवरेऽभूत् ।**
**मृदुसरसकवेः पुरः किमीड्या कठिनपदप्रियकाव्यकारशीला ॥४४॥**

**व्या : अशनिसमेति । अशनिसमः** वज्रप्रहारसमः । **कठोरस्य मल्लस्य घातः** हस्तघातः **मृदुनि** मार्दवोपेते । **हरेः** श्रीकृष्णस्य **कलेवरे** काये । **अफलः** निष्फलोऽभूत् । तथाहि । **मृदुसरसकवेः** मृदोरकठिणपदप्रयोक्तुः सरसकवेः शृङ्गारादिनवरसोपेतकाव्यकर्तुः **पुरः** पुरतः **कठिणपदप्रियकाव्यकारशीला ईड्या किं** स्तुत्या किम् । अत एव ''नीरसतरुरिह विलसति पुरतः'' इति मृदुकाव्यकाराग्रे ''शुष्को वृक्षस्तिष्ठत्यग्रे'' इति कठोरकवितां सन्तो न मानयन्ति । निदर्शनालङ्कारः ॥ ४४ ॥

---

१ विद्वेषमूलस्मरणेन तुष्टिरित्यप्यवद्यं न जहाति पक्षः । हिंसार्थमालिङ्ग्यतस्तरक्षोः किं चेष्टया तुष्यति कामधेनुः ॥ - (२/४५) इत्युक्तस्य विवरणरूपमिदम् ।

**तल्लभ्यां जयकामिनीमिव लषन् पादौ गृहीत्वा रिपो-**
**स्तत्कालार्हमिव भ्रमं प्रतिदिशन् तं भ्रामयित्वा मुहुः ।**
**तन्मूर्धानमताडयत् क्षितितले दुष्टेभपञ्चानन-**
**स्तस्याभ्याससमेधितां कठिनतां पश्यन्निवाङ्गे द्विषः ॥४५॥**

**व्या :** तल्लभ्यामिति । दुष्टेभपञ्चाननः दुर्जनगजसिंहः प्रभुः श्रीकृष्णः **तल्लभ्यां** तस्मात् चाणूरात् प्राप्याम् । **जय एव कामिनी** स्त्री तां **लषन्निव** अभिलषन्निव । रिपोः चाणूरस्य **पादौ गृहीत्वा** दातुः पादग्रहणादिपूर्वकं कन्याया ग्राह्यत्वादिति भावः । कन्यार्थिनो हि पादग्रहणादिना स्नेहं सङ्घट्टयन्ति । तत्कालार्हम् असुरवधकालार्हम् कन्यानयनकालार्हं च । **भ्रमं** परितोभ्रमणं विपरीतज्ञानं च । मरणकाले दैत्याः विपरीतमतयो भवन्तीति प्रसिद्धिः । कन्यापक्षे दातुः चित्तवैकल्यश्च **प्रतिदिशन्निव तं** रिपुं **मुहुः भ्रामयित्वा** । अभ्यासेन मल्लयुद्धाभ्यासेन । **समेधिताम्** अभिवर्धिताम् । तस्य **द्विषः** चाणूरस्याङ्गे **कठिणतां** काठिण्यं **पश्यन्निव क्षितितले** तस्य **मूर्धानमताडयत्** । इत्युपहासोक्तिः ॥४५॥

**बालमल्लकरचूर्णितभास्वन्नारिकेलतुलनां स जगाम ।**
**अन्यलोकगमनोद्यतभीतोत्तंसकंसपरिपन्थिसुशान्त्यै ॥ ४६ ॥**

**व्या :** बालेति । सः पृथिव्यां चूर्णितो मल्लस्य मूर्धा **अन्यलोकगमनाय उद्यतस्य भीतोत्तंसस्य** भीतश्रेष्ठस्य महाभीतस्येत्यर्थः । **कंसस्य परिपन्थिसुशान्त्यै** विघ्नपरिहाराय **बालमल्लस्य** कृष्णस्य **करेण चूर्णितं भास्वन्नारिकेलफलं** तस्य **तुलनां साम्यं जगाम** । यथा राज्ञो यात्रादौ विघ्नपरिहाराय तदाश्रिता मल्ला नारिकेलफलानि चूर्णयन्ति तथेत्यर्थः । एतन्मरणानन्तरं कंसः शीघ्रं मरिष्यतीति भावः ॥ ४६ ॥

**पदोः प्रगृह्य प्रसभं निपात्य सञ्चूर्णयन् मल्लवरं धरण्याम् ।**
**सहोदरोन्मूलनकर्मयोग्यप्रतिक्रियां प्रौढपतिः प्रचक्रे ॥ ४७ ॥**

**व्या :** पदोरिति । **मल्लवरं** मल्लश्रेष्ठम् । **पदोः** पादयोः **प्रगृह्य** । **धरिण्यां प्रसभं** बलात् **निपात्य सञ्चूर्णयन्** । **प्रौढपतिः** श्रीकृष्णः **सहोदराणां** देवकीशिशूनाम् **उन्मूलनकर्म** कंसकृतचूर्णितकर्म तस्य **योग्याम्** उचितां **प्रतिक्रियां** प्रत्यपकारं **चक्रे** । ये साधून् निरपराधान् वृथा बाधन्ते तेषां हरिरेव बाधको भवतीति भावः ॥४७॥

**बलस्य तलघातेन नष्टं मुष्टिकमीक्षितुम् ।**
**ह्रियेव चूर्णितं रेजे चाणूरस्य शिरः पुरा ॥ ४८ ॥**

बलस्येति । **बलस्य** बलरामस्य **तलघातेन** हस्ततलताडनेन **नष्टं** मृतं **मुष्टिकम्** ईक्षितुं द्रष्टुं **ह्रियेव** लज्जयेव स्वसमानबलस्य मल्लस्य सलीलं तलघातमात्रेण वधं द्रष्टुं लज्जयेवेत्यर्थः । **पुरा** पूर्वं **चूर्णितं चाणूरस्य शिरः** रेजे ॥ ४८ ॥

**न मन्मुष्टिप्रहारस्य लक्ष्योऽयमिति लक्षयन् ।**
**रामस्तं [1]तलघातेन जघानापार्थनामकम् ॥ ४९ ॥**

**व्या :** नेति । **रामो** बलभद्रः **मन्मुष्टिप्रहारस्य** मम **मुष्टिप्रहारस्य** अयं मुष्टिकः **लक्ष्यो न** भवति । अतिप्रबलमुष्टेर्दुर्बलोऽयं न विषय इत्यर्थः । **इति लक्षयन् अपार्थनामकं** निरर्थनामकं मुष्टितलेन करतलेन **जघान** । मुष्टिः के शिरसि

---

१ तथैव मुष्टिकः पूर्वं स्वमुष्ट्याऽभिहतेन वै ।
बलभद्रेण बलिना तलेनाभिहतो भृशम् ॥
प्रवेपितः स रुधिरमुद्वमन् मुखतोऽर्दितः ।
व्यसुः पपातोर्व्युपस्थे वाताहत इवाङ्घ्रिपः ॥ - भागवते (१०/४२/२३-२४)

यस्येति व्युत्पत्या तन्नाम सार्थकं मा भूदित्यतो न मुष्टिना जघानेत्यर्थस्तलेन जघानेत्यनेन सूचितः ॥ ४९ ॥

**कृष्णं मन्नगराद्बहिष्कुरुत तत्पक्षैः समं मद्भटा**
**नन्दं मारयताशु मर्दयत तं हीनोग्रसेनं भुवि ।**
**कंसेनेत्थमुदीरितेऽखिलखलश्रेणीवनोग्रानल-**
**स्तस्याज्ञाधरवज्जगाम सुजनस्तोमान्तकस्यान्तिकम् ॥ ५० ॥**

**व्या : कृष्णमिति । हे मद्भटाः श्रीकृष्णं मन्नगरात्** मदीयमधुरापुरात् **तत्पक्षैः** श्रीकुष्णपक्षीयैः गोपैः । **समं** सह । **बहिः कुरुत** । आशु **नन्दं** नन्दगोपं **मारयत** । तम् । हीनश्चासावुग्रसेनश्च **तं भुवि मर्दयत । कंसेनेत्थमुदीरिते** सति । **अखिलखलश्रे**ण्येव **वनं** तस्यो**ग्रानलः** तीक्ष्णदहनः श्रीकृष्णस्तस्य कंसस्य **आज्ञाधरवत्** उक्तकारीव । मरणे मधुरां त्यक्त्वा गच्छतः कंसस्य सा मधुरा मन्नगरशब्देन नाभिप्रेता । अपि तु स्वनाशेन सह विनाशवत्स्वशरीरमेव मन्नगरपदेनाभिप्रेतम् । अस्माच्च नगरात् स्वीयैस्तत्त्वाभिमानिदेवैः सह कृष्णस्य बहिर्निःसरणं तन्मरणमेव यतः अतस्तत्कृते कंससमीपं गच्छन् कृष्णस्तदाज्ञाधर इव भवति। एवं नन्दं मारयतेत्यत्र कंसभटानां प्रथममेव मृतत्वात् भटा इति स्वभटान् प्रति आदेशासम्भवात् भटानामानन्दं भटानन्दमित्येवार्थो लभ्यते । तन्मारकत्वादपि। श्रीकृष्णः **आज्ञाधर** इव । **हीनोग्रसेनं** मर्दयतेत्यत्रापि कंसोग्रसेनयोरपि विनाशे अराजकत्वापत्तेः हीनश्चासावुग्रसेनश्चेति नार्थः । किन्तु हीनदैत्यरूपतया उग्रा सेना पूतनादिरूपा यस्येति व्युत्पत्त्या कंस एव लभ्यते । तन्मर्दनार्थं श्रीकृष्णः आज्ञाधर इव **सुजनस्तोमान्तकस्य** सज्जनसमूहहिंसकस्यान्तिकं समीपं जगाम । इममेव भावं कृष्णो बहिराजगामेत्युत्तरपद्ये स्फुटीकरिष्यति ॥ ५० ॥

**तदा मदान्धाः परिवव्रुरेनं चमूभिरन्ये चतुरङ्गिणीभिः ।**
**यथा पतङ्गा ज्वलनं ज्वलन्तं तमःसमूहस्तरणिं यथा वा ॥५१॥**

**व्या :** तदेति । तदा कृष्णगमनसमये **मदेन** गर्वेणान्धाः पूर्वोत्तरानभिज्ञाः अन्ये उर्वरिताः केचित् कंसभटाः चत्वारि हस्त्यश्वरथपदात्याख्यानि अङ्गानि आसु सन्तीति **चतुरङ्गिण्यः** ताभिश्च**मूभिः** सेनाभिरेनं कृष्णं **परिवव्रुः** परितोऽभिजग्मुः । तत्कथमिव । **पतङ्गा इव** शलभा इव **ज्वलन्तं ज्वलनं** अग्निं **यथा । तमःसमूहस्तरणिं यथा** [1]तथेत्यर्थः । अनेन कंससेनाया एव पराभवो न तु श्रीकृष्णस्येति सूचितम् ।। ५१ ।।

**रणे पदाभ्यां चरतो मुरारे रथं ससूतं स सहस्रनेत्रः ।**
**समादिशत् स्वाभ्युदयप्रदस्य परस्य सेवां भुवि कर्तुकामः ।।५२।।**

**व्या :** रण इति । **सहस्रनेत्रः** इन्द्रः **रणे** युद्धे **पदाभ्यां चरतः** सञ्चरतः **स्वाभ्युदयप्रदस्य मुरारेः** श्रीकृष्णस्य **भुवि सेवां कर्तुकामः सन् ससूतं** सारथिसहितं **रथं** [2]**समादिशत्**[3] ।। ५२ ।।

**अथो रथाग्र्योऽवततार तारावृतः शशीवातिविचित्ररत्नः ।**
**मुकुन्दसन्दर्शनधूतपापं मुनिं खलान्नेतुमिवोर्ध्वलोकम् ।।५३।।**

**व्या :** अथो इति । **अतिविचित्राणि रत्नानि** यस्य स तथोक्तः । **तारावृतः** नक्षत्रावृतः **शशी** चन्द्र इव स्थितः **रथाग्र्यः** रथश्रेष्ठः **मुकुन्दस्य** कृष्णस्य **सन्दर्शनेन धूतपापं** निर्धूतदुरितं कंसाविष्टभृगुमुनिम् । ''कंसाविष्टो भृगुः

---

१ भानुं यथा तम उपेत्य सुयोगकामम् । - म.भा.ता.नि.(५/२५)

२ जानन्नपीश्वरमनन्तबलं महेन्द्रः कृष्णं रथं निजमयापयदायुधाढ्यम् ।
शुश्रूषणाय परमस्य यथा समुद्रमर्घ्येण पूरयति पूर्णजलं जनोऽयम् ।।
- म.भा.ता.नि.(१३/१२५)

३ सम्मानयन् राघवमादिपूरुषं निर्यातयामास रथं पुरन्दरः ।
सहायुधं मातलिसङ्गृहीतं समारुरोहाशु स लक्ष्मणाग्रजः ।।
- म.भा.ता.नि.(८/२०७)

स्वयम्''[१] इति वचनात् । खलात् दुष्टकंसात् ऊर्ध्वलोकं नेतुमिवावततार आजगाम ।। ५३ ।।

**सहस्रनेत्रोऽनिमिषप्रभुः सः शतक्रतुर्वज्रधरो हि लोके ।**
**सुपावनीं यः शतधारधुर्यां हरेः सपर्यां क्षणशः करोति ।।५४।।**

**व्या :** सहस्रनेत्र इति । **स** इन्द्रः **सहस्रनेत्रः अनिमिषाणां** निमेषरहितानां **प्रभुः** शतं क्रतवो यस्य स **शतक्रतुः** । **वज्रधरश्च लोके** भवति । **यः सुपावनीं** अतिशयेन पवित्राम् । अनेन शतक्रतुत्वमुपपादितम् । शतधारस्य वज्रस्य धुरं वहतीति **शतधारधुर्याम्** । सेवकानां वज्रपुञ्जभूतामित्यर्थः । अनेन वज्रधरत्वमुपपादितम् । **हरेः** श्रीकृष्णस्य **सपर्यां** पूजाम् । **क्षणशः** क्षणे क्षणे सहस्रसङ्ख्याकदैत्यानां वधकाल इत्यर्थः । अनेन सहस्रकार्याणां युगपत्प्रतीक्षणात् सहस्रनेत्रत्वमनिमिष प्रभुत्वं चोपपादितम् ।। ५४ ।।

**रथं समारुह्य सपत्नसेनां जघान हस्त्यश्वपदातिपीनाम् ।**
**परिस्थितात्मीयमनोरथस्थो दुरिष्टसेनामपि देवदेवः ।। ५५ ।।**

**व्या :** रथमिति । देवदेवः श्रीकृष्णः । **रथम्** इन्द्रदत्तरथम् । **समारुह्य** हस्त्यश्वरथपदातिभिः पीनां पूर्णां **सपत्नसेनां**[२] **जघान** । किं च **परितः स्थितानाम् आत्मीयानां** स्वभक्तानां **मनोरथस्थः** सन् **दुरिष्टसेनां** तत्पापसेनामपि जघानेत्यर्थः । तदा श्रीकृष्णद्रष्टॄणां सज्जनानां समस्तपापक्षयो जात इति भावः ।।५५।।

**शरैः करोर्वङ्घ्रिशिरोधरादींश्चकर्त शस्त्रास्त्रविदां रिपूणाम् ।**
**स्वयं मुदोन्मीलितलोचनान्तशरैस्तदाऽताड्यत कामिनीनाम् ।।५६।।**

---

१ भागवततात्पर्योद्धृतप्रमाणवचनम् (७/१/३१)

२ अक्षोहिणीगणितमस्य बलं च विंशदासीदसह्यमुरुवीर्यमनन्यवध्यम् ।
शम्भोर्वरादपि । - म.भा.ता.नि. (१३/१०९)

**व्या :** शरैरिति । सः कृष्णः शस्त्रं अमन्त्रितायुधम् अस्त्रं मन्त्रितम् । तद्विदां रिपूणां करोर्वङ्घ्रिशिरोधरादीन् । शिरोधरः कण्ठः । शरैश्चकर्त चिच्छेद । तदा स्वयं श्रीकृष्णः कामिनीनां मुदा सन्तोषेण उन्मीलिताः विकसिताः लोचनान्ताः कटाक्षाः तैः अताड्यत । कामिनीभिः सस्नेहमीक्षित इति भावः ॥ ५६ ॥

**चिरं पुरा वैष्णवसेवनेन मुकुन्दसामीप्यफलं प्रपन्नः ।**
**स मातलिस्तस्य विचित्रवीर्यमभून्निरीक्ष्योभयथाऽपि सूतः ॥५७॥**

**व्या :** चिरमिति । पुरा चिरं बहुकालं वैष्णवस्येन्द्रस्य सेवनेन मुकुन्दस्य श्रीकृष्णस्य सामीप्यं समीपगमनलक्षणं फलं प्रपन्नः प्राप्तः सः मातलिरिन्द्रस्य [1]सूतः तस्य कृष्णस्य विचित्रवीर्यं युद्धे हस्तलाघवाद्भुतपराक्रमं निरीक्ष्य उभयथाऽपि रथे नेतृतया श्रीकृष्णगुणस्तोतृतया च सूतः अभूत् । 'सूतौ सारथिबन्दिनौ' इति भास्करः ॥ ५७ ॥

**धात्रीं प्राक् परिपोषणाय पतगं वातं विलासाय तान्**
**वत्सानोवृषधेनुकादिदितिजांस्तद्धारवोढानिव ।**
**अश्वेभौ रजकं च मातुलकृते सम्प्रेष्य मल्लांश्च त-**
**त्सेनां प्रेषयति स्म गाढतमसे [2]सम्प्रेषयिष्यन् क्रमात् ॥५८॥**

---

१ सूतस्तु सारथौ तक्ष्णि क्षत्रियात् ब्राह्मणीसुते ।
बन्दिपारदयोः पुंसि प्रसूते प्रेरिते त्रिषु ॥ -इति मेदिनीकोशे

२ द्वेषात् स सर्वजगदेकगुरोः स्वकीयैः पूर्वं प्रमापितजनैः सहितः समस्तैः ।
धात्र्यादिभिः प्रतिययौ कुमतिस्तमोऽन्धमन्येऽपि चैवमुपयान्ति हरावभक्ताः ॥
- म.भा.ता.नि. (११/१३२)

प्राग्बालग्रहरूपिणीं स शकटे सङ्कल्प्य रज्जुग्रहां
तद्वाहान् खरकेशिवत्सवृषभान् निःशेषदैत्यासुवत् ।
संयोज्यानिलरूपदैत्यमधुना तच्चिह्नमत्यद्भुतं
कृष्णः प्रेषयतीव हस्तगबको गाढं तमः प्रापयन् ॥ -(रु.वि – ४/३४) इति ह्युक्तम् ।

**व्या :** धात्रीमिति । **गाढतमसे** गाढं यत्तमह तस्मै अन्धतमसे इत्यर्थः । तं कंसं **क्रमात्** क्रमेण **सम्प्रेषयिष्यन्** श्रीकृष्णः **प्राक् परिपोषणाय धात्रीं** पूतनां **विलासाय** च **पतगं** बकं **वातं** तृणावर्तं च । राजानः पक्षिभिः मन्दमारुतेन च क्रीडन्ते । तान् हतान् । **वत्सो** वत्सासुरः **अनः** शकटासुरः **वृषः** वृषभासुरः **धेनुको** रासभासुरश्च ते **आदयो** येषां ते **दितिजाः** दैत्याः तान् । **तस्य** कंसस्य **भारवोढानिव** भारवाहकानिव **मातुलकृते** कंसस्य कृते आरोहणवस्त्रक्षालनाङ्गम र्दनार्थम् । **अश्वेभौ** केशिकुवलयापीडौ रजक**मल्लांश्च सम्प्रेष्य तत्सेनां** कंससेनां **सम्प्रेषयति स्म** । श्रीकृष्णनिहताः कंससम्बन्धिनः सर्वेऽप्यन्धन्तमः प्राप्ता इति भावः ॥ ५८ ॥

**विस्तीर्णैर्वरहारचामरसितच्छत्रादिवित्तैः सिता**
**नीला स्रस्तकचासिनीलमणिभिः सा रङ्गभूमिर्मृधे ।**
**रक्ता रक्तचयेन हैमकवचाकल्पैश्च पीताऽऽत्मनो**
**नामासृक्सरिदोघमग्नकुणपा चक्रेऽनुकूलं तदा ॥ ५९ ॥**

**व्या :** विस्तीर्णैरिति । **सा रङ्गभूमिः** युद्धरङ्गभूमिः । **मृधे** युद्धे **विस्तीर्णैः** पृथिव्यां विकीर्णैः **वराः** श्रेष्ठाः **हाराः चामराणि सितच्छत्राणि** श्वेतातपत्राणि तान्यादीनि येषां तानि तैर्वित्तैः द्रव्यैः सिता क्वचित् । **स्रस्तः** मुक्तग्रन्थिः **कचः** केशभारः **असिः** खड्गः **नीलमणयः** इन्द्रनीलमणिरत्नानि तैर्नीला क्वचित् । **रक्तचयेना**सृक्समूहेन क्वचिद्रक्ता । **हैमकवचाकल्पैः** सुवर्णवर्माभरणैः क्वचित्पीता सती **आत्मनः** स्वस्य **नाम** रङ्गभूमिरिति नाम **अनुकूलं चक्रे**। हरिद्रादिनानावर्णवस्तुभिः रञ्जिता भूमिः रङ्गभूमिरित्युच्यते । ननु कुणपादीनाममङ्गलादीनां सत्वात् कथं रङ्गभूमित्वमित्यत आह । **असृक्सरितां** रक्तनदीनां **ओघे** प्रवाहे **मग्नाः कुणपाः** यस्यां सा तथोक्ता । बहुरक्तप्रवाहे भारवशात् कुणपानां मग्नत्वेन अदर्शनादिति भावः ॥ ५९ ॥

**कोपाटोपवशेन रक्तनयनं तं खड्गचर्मोल्लस-**
**त्पाणिं पापमिवोत्पतन्तममतं मूर्ध्नि प्रगृह्य प्रभुः ।**
**पृथ्वीमेत्य निपात्य विस्तृतकचं त्रस्तं चकर्षाच्युतः**
**प्रेमप्राविलसाधुसङ्घनयनैः सानन्दमालोकितः ॥ ६० ॥**

**व्या** : कोपेति । **प्रभुः अच्युतः** चतुर्विधनाशरहितः श्रीकृष्णः **कोपस्य** क्रोधस्याटोपः सम्भ्रमः **तद्वशेन रक्ते नयने** यस्य **तम्** । **खड्गचर्म**भ्याम् **उल्लसन्तौ पाणी** यस्य तम् **उत्पतन्तं** कंसं **पापमिव** पापपुरुषमिव । ''रक्तश्मश्रुविलोचनम्'', ''खड्गचर्मधरं कृष्णम्'' इति वचनात् । [1]पापपुरुषस्याप्येतादृशत्वात् **मूर्ध्नि प्रगृह्य पृथिवीमेत्य** कंसं **निपात्य विस्तृतकचं** विस्तीर्णकेशं **त्रस्तं** भीतम् **अमतं** शत्रुं कंसं **प्रेम्णा** स्नेहेन **प्राविलानि** आर्द्राणि **साधुसङ्घनयनानि तैः** । **सानन्दं** यथा तथा **आलोकितः** सन् **चकर्ष** इतस्ततश्चाकर्षणं कृतवान् ॥ ६० ॥

**कृष्णोऽथो बहिराजगाम नगरात् कंसस्य देहाभिधा-**
**च्चक्षुःश्रोत्रमुखाक्षिपालनपरैः स्वीयैः समेतः सुरैः ।**
**नष्टानिष्टजनान् निरीक्ष्य विमतं दृष्ट्वाऽतिपुष्टं भटा-**
**नन्दोऽपि क्षयमेयिवान् स च खलो हीनोग्रसेनो हतः[2] ॥६१॥**

---

१ ब्रह्महत्याशिरस्कं च स्वर्णस्तेयभुजद्वयम् ।
सुरापानहृदा मुक्तं गुरुतल्प कदिद्वयम् ॥
तत्संयोगमपद्वन्द्वमङ्गप्रत्यङ्गपातकम् ।
उपपातकरोमाणं **रक्तश्मश्रुविलोचनम्** ॥
**खड्गचर्मधरं** कृष्णं कुक्षौ वामे विचिन्तयेत् ॥ - इति वायुपुराणे (माघमाहात्म्ये) ।

२ निःशेषतो विनिहते स्वबले स कंसश्चर्मासिपाणिरभियातुमियेष कृष्णम् ।
तावत् तमेव भगवन्तमभिप्रयान्तमुत्तुङ्गमञ्चशिरसि प्रददर्श वीरम् ॥
तं श्येनवेगमभितः प्रतिसञ्चरन्तं निश्छिद्रमाशु जगृहे भगवान् प्रसह्य ।
केशेषु चैनमभिमृश्य करेण वामेनोद्धृत्य दक्षिणकरेण जघान केऽस्य ॥

**व्या** : **कृष्ण** इति । **अथो**ऽनन्तरम् । **चक्षुःश्रोत्रमुखाक्षिपालनपरैः** चक्षुःश्रोत्रादीन्द्रियपालनपरैः **स्वीयैः** स्वभक्तैः **सुरैः** तत्त्वाभिमानिदेवैः । **समेतः** श्रीकृष्णः। **कंसस्य देह** इति **अभिधा** नाम यस्य तस्मात् **नगरात् बहिराजगाम**। **इष्टान्** जनान् **नष्टान्** मृतान् **निरीक्ष्य विमतं** शत्रुं श्रीकृष्णम् **अतिपुष्टं दृष्ट्वा भटानां** कंसभृत्यानामा**नन्दो**ऽपि **क्षयमेयिवान्** प्राप्तवान् । **हीना उग्रसेना** यस्य **स खलः** कंसश्च **हतः** । भावस्तु प्रागेव विवृतः ।। ६१ ।।

**कंसोऽन्तर्वृतगर्वपर्वतवरः पोतस्य घाताहतो**
**वक्त्रं दर्शयितुं सुलज्जित इव प्रापोग्रमन्धन्तमः**[1] **।**

---

सञ्चालितेन मुकुटेन विकुण्डलेन कर्णद्वयेन विगताभरणोरसा च ।
स्रस्ताम्बरेण जघनेन सुशोच्यरूपः कंसो बभूव नरसिंहकराग्रसंस्थः ।।
उत्कृष्य तं सुरपतिः परमोच्चमञ्चादन्यैरजेयमतिवीर्यबलोपपन्नम् ।
अब्जोद्भवेशवरगुप्तमनन्तशक्तिर्भूमौ निपात्य स ददौ पदयोः प्रहारम् ।।
- म.भा.ता.नि.(१३/१२७- १३०)

१ शिलाभूततमोरूपं हिमानीव शिलात्मिका ।।
न चेद्द्वारं कुतश्चक्रे चक्रेण यदुपुङ्गवः ।
अनादिकालतः प्राप्ताः कल्याद्यास्तत्र दानवाः ।।
असङ्ख्याताः किलाश्नन्ति यातनास्तीव्रवेदनाः ।
लयेऽपि मुक्तिवदिदं विष्वक्तिष्ठत्यनश्वरम् ।।
तद्वा जीवा एव तदा विशन्ति जठरं हरेः ।
तत्रापि दुःखरूपत्वादक्षिकुक्षिशिरोव्यथाः ।।
आधिव्याधींश्च बहवो भुङ्क्ते स्वशरीरगान् ।
हर्याज्ञया सृष्टिकाले पतत्यन्यत्र किलाखिलाः ।।
अग्निशस्त्रशिलाक्षेपरूक्षपक्षिकृता व्यथाः ।
विण्मूत्रपूयकलिलतमःकूपेष्वनेकधा ।।
नानाविधा यातनाश्च पुनर्भोक्तुं हि पूर्ववत् ।
यद्यप्यन्धे तमस्यस्मिन् पतिताः पापिनो जनाः ।।

**अन्यः श्रीरमणस्य धाम सुमहस्तोमं जगाम द्विषा**
**युक्तं मां हरिरग्रहीत् करुणयेत्याश्राव्यभव्योत्सवः ॥ ६२ ॥**

**व्या :** [1]कंस इति । **अन्तर्वृतः** अन्तराच्छादितः **गर्वाख्यः** पर्वतश्रेष्ठो येन स तथोक्तः । नागायुतबलोऽहमित्यहङ्कारवानित्यर्थः । कंसः **पोतस्य** शिशोः श्रीकृष्णस्य **घातेन** हस्तघातेनाहतः सन् **वक्त्रं दर्शयितुं सुलज्जित इव उग्रं** क्रूरम् **अन्धन्तमः** परस्परदर्शनशून्यं तमः **प्राप** ययौ । **द्विषा** द्वेषिणा कंसेन [2]**युक्तं मां हरिः करुणया अग्रहीत्** गृहीतवानिति । **आश्राव्यः** सर्वजनश्रवणयोग्यः **भव्यः** शोभनः **उत्सवो** यस्य सः [3]**अन्यः** कंसाविष्टो भृगुः । **सुमहसां** शोभनकान्तीनाम् ।

---

नित्यदुःखात्मका मिथ्याज्ञानमात्रस्वरूपिणः ।
अच्छेद्याभेद्यदेहत्वात् तथाऽप्यस्त्रादिपातनैः ॥
वज्रकल्पजलूकादिरदनैः पावकोष्मणा ।
शिलापातैः पूयमूत्रमलदुर्गन्धतोऽपि च ॥
रुदतां क्रूरशब्दैश्च तिक्तात्युष्णरसादिना ।
वक्त्रनेत्रश्रोत्रनासागात्रेषु च पुनः पुनः ॥
व्यक्तीभवन्ति नित्यानि दुःखान्येव क्षणे क्षणे ।
मुक्तानां मौक्तविषयैर्व्यक्तानेकप्रमोदवत् ॥
तत्पञ्चकष्टमित्याहुर्यत्पञ्चेन्द्रियदुःखदम् ।
रुदतां क्रूरशब्दैश्च क्रूरशस्त्रादिदर्शनैः ॥
क्रूरगन्धैः क्रूररसैः क्रूरास्त्रस्पर्शनैरपि ।
- इति श्रीवादिराजश्रीमच्चरणकृतभूगोळवर्णने-अन्धन्तमोवर्णनम् (८१-९३)

१ स नित्यदोद्विग्नधिया तमीश्वरं पिबन्नदन् वा विचरन् स्वपन् श्वसन् ।
ददर्श चक्रायुधमग्रतो यतस्तदेव रूपं दुरवापमाप ॥ - भागवते (१०/४२/३९)

२ विद्वेषिजीवकृतसङ्गमपि स्वभक्तं कृष्णो व्यमोचयदहो करुणाम्बुराशिः ।
किन्नाम तद्रहितभक्तजनानिति स्म कैमुत्यमूहयत सत्यवतीसुतोक्त्या ॥
- इति ह्युक्तम् (२/५८)

३ देहे तु योऽभवदमुष्य रमेशबन्धुर्वायुः स कृष्णतनुमाश्रयदन्यपापम् ।

''कान्त्युत्सवौ तु महसी'' इत्यमरः । **स्तोमः** समूहो यस्मिन् तत् । **श्रीरमणस्य** लक्ष्मीपतेः । **धाम जगाम** । यथा महोत्सवे वीथ्यां स्वात्मानमाघोषयन्ति तथेति भावः ॥ ६२ ॥

**सञ्चूर्णिताङ्गान् कतिचित् स हत्वा**
**छिन्नाङ्गसन्धींश्च तथा न कंसम् ।**
**जघान कायं परिरभ्य दोर्भ्यां**
**पत्न्या[१] रुदन्त्या इव दर्शयिष्यन् ॥६३॥**

**व्या : सञ्चूर्णेति** । **स** कृष्णः **कतिचित्** चाणूरादीन् **सञ्चूर्णिताङ्गान्** सम्यक् चूर्णितशरीरान् कतिचिच्च कांश्चिच्छिन्नाङ्गसन्धीन् शकलीकृतहस्तपा-दाद्यवयवान् **हत्वा दोर्भ्यां** बाहुभ्यां **परिरभ्य** आलिङ्गनं कृत्वा **रुदन्त्याः** कंसपत्न्याः । **कायं** कंसदेहं **दर्शयिष्यन्निव** । **कंसं तथा** चाणूरादिवत् **न जघान**। मञ्चात् अधः पतनवेगेनैव कंसं [२]गतासुं चकारेति भावः ॥ ६३ ॥

---

दैत्यं चकर्ष हरिरत्र शरीरसंस्थं पश्यत्सु कञ्जमुखेषु सुरेष्वनन्तः ॥
-म.भा.ता.नि.(१३/१३१)

१ तेषां स्त्रियो महाराज सुहृन्मरणदुःखिताः ।
तत्राभीयुर्विनिघ्नन्त्यः स्वशीर्षाण्यश्रुलोचनाः ॥
शयानान् वीरशय्यायां पतीनालिङ्ग्य शोचतीः ।
विलेपुः सुस्वरं नार्यो विसृजन्त्यो मुहुः शुचः ॥ - भागवते (१०/४२/४३,४४)
रोदिष्यन्ति स्त्रियो ह्येवं येषां क्रुद्धाऽसि भामिनि ।
बीभत्सुशरसम्भिन्नान् शोणितौघपरिप्लुतान् ।
निहतान् वल्लभान् वीक्ष्य शयानान् वसुधातले ॥ इतिवत् ज्ञेयम्
(भारते-वन. १२/१२८)

२ कंसवधतात्पर्यमुक्तं महाभारततात्पर्यनिर्णये –
द्वेषात् स सर्वजगदेकगुरोः स्वकीयैः पूर्वं प्रमापितजनैः सहितः समस्तैः ।

**यमिवृन्दमनश्चन्द्रः श्रमं परिहरन्निव[१] ।**
**यमुनाकूलमगमद्विमलीकर्तुमञ्जसा ॥ ६४ ॥**

**व्या : यमिवृन्देति ।** यमिनां मुनीनां यद्वृन्दं तस्य यन्मनस्तस्य **चन्द्र** इव चन्द्र-स्तन्मनस्तापशान्तिकृदित्यर्थः । श्रीकृष्णस्य श्रमाभावे हेतुरिदं विशेषणम् । श्रीकृष्णः लोकदृष्ट्या **श्रमं परिहरन्निवाञ्जसा** [२]**विमलीकर्तुं** स्वपादस्पर्शादिना तीर्थमेव निर्मलीकर्तुं **यमुनाकूलमगमत्** प्राप ॥ ६४ ॥

---

धात्र्यादिभिः प्रतिययौ कुमतिस्तमोऽन्धमन्येऽपि चैवमुपयान्ति हरावभक्ताः ॥
नित्यातिदुःखमनिवृत्ति सुखव्यपेतमन्धन्तमो नियतमेति हरावभक्तः ।
भक्तोऽपि कञ्जजगिरीशमुखेषु सर्वधर्मार्णवोऽपि निखिलागमनिर्णयेन ॥
यो वेत्ति निश्चितमतिर्हरिमब्जजेशपूर्वाखिलस्य जगतः सकलेऽपि काले ।
सृष्टिस्थितिप्रलयमोक्षदमात्मतन्त्रं लक्ष्म्या अपीशमतिभक्तियुतः स मुच्येत् ॥
तस्मादनन्तगुणपूर्णममुं रमेशं निश्चित्य दोषरहितं परयैव भक्त्या ।
विज्ञाय दैवतगणांश्च यथाक्रमेण भक्ता हरेरिति सदैव भजेत धीरः ॥
निहत्य कंसमोजसा विधातृशम्भुपूर्वकैः ।
स्तुतः प्रसूनवर्षिभिर्मुमोद केशवोऽधिकम् ॥
सदैव मोदरूपिणो मुदोक्तिरस्य लौकिकी ।
यथोदयो रवेर्भवेत् सदोदितस्य लोकतः ॥
अनन्तचित्सुखार्णवः सदोदितैकरूपकः ।
समस्तदोषवर्जितो हरिर्गुणात्मकः सदा ॥ - इति (१३/१३२-१३८)

१ संसारसंसरणखेदविभेदकारि कंसारिसंश्रिततटीगतचारुवारि ।
विश्रान्तितीर्थममलं हरिलोकवासविश्रान्तिदं दिशतु नः सकलेप्सितानि ॥
मखकोटिसहस्राणां मुखं म्लानयतो मुहुः ।
अघश्रान्तिकरस्यास्य कथं विश्रान्तितीर्थता ॥ - इति तीर्थप्रबन्धे । (२/३२,३३)

२ बुद्धिशुद्धिकरगोनिकराढ्यं तीर्थजातमुभयं च धरण्याम् ।
आत्ममज्जनत एव निकामं पर्यशोधयदमन्दमनीषः ॥ - म.वि. (६/३५)

**रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि**
**प्रेम्णा चिन्तयतां विचित्रविमलश्लाघ्यार्थसन्दायिनि ।**
**सञ्जाते भुवि रुग्मिणीशविजये सद्वादिराजोदिते**
**सञ्जातः सुरमण्डलीषु महितः सर्गोऽयमेकादशः ॥६५॥**

**॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थश्रीचरणविरचिते श्रीरुग्मिणीशविजये महाकाव्ये एकादशः सर्गः ॥**

**व्या :** रोम्णामिति । उक्तोऽर्थः ॥ ६५ ॥

**॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थश्रीचरण-विरचितस्य श्रीरुग्मिणीशविजयमहाकाव्यस्य व्याख्यायां श्रीनारायण-भट्टविरचितायां श्रीगुरुभावप्रकाशिकायां एकादशः सर्गः ॥**

*****

# द्वादशः सर्गः

**ततः सदस्युग्रसेनमाहूय मधुरापतिः ।**
**यदूनामधिपं चक्रे मुदा प्रणतवत्सलः ॥ १ ॥**

**व्या :** हत्वा पूतनिकां विधूय शकटं जित्वाऽर्जुनौ दानवान्
सप्तारुज्य विनाश्य कालियविषं निष्पीड्य शिष्टेतरम् ।
भित्वा केशिनमुन्मदं विषतरुं चोद्धृत्य गोवर्धनं
यः कंसं सगजेन्द्रमल्लमवधीत् तस्मै नमो विष्णवे ॥
यो विद्याधिपतिर्विद्यामगाद्विश्वगुरुर्गुरोः ।
सम्पूर्णैश्वर्यसम्पन्नं तं शौरिं समुपास्महे ॥

**तत इति** ॥ ततः अनन्तरम् । **प्रणतेषु वत्सलः** स्निग्धः **मधुरापतिः** श्रीकृष्णः मुदा प्रीत्या सदसि उग्रसेनमाहूय यदूनामधिपं चक्रे ॥ १ ॥

**राज्यं मे तव शास्त्रमेव नियमाः सेना तितिक्षाऽङ्गना**
**नित्यं भक्तिविरक्तिदैन्यशमनज्ञानादिलाभो धनम् ।**
**मच्छ्रोत्रान्तिकसङ्गते तव यशोधारे स्फुरच्चामरे**
**छत्रं मूर्ध्नि कृतं भवातपहरं हस्तारविन्दं तव ॥ २ ॥**

**व्या :** श्रीकृष्णदत्तं साम्राज्यम् अरोचयमानः उग्रसेनः श्रीकृष्णं प्रणम्याह । **राज्यमिति** । श्रीकृष्ण **मे** मम **राज्यं तव शास्त्रमेव** त्वन्महिमाप्रतिपादकवेदान्तशास्त्रमेव । यथा राज्याधिपतिः जगत्पूज्यः एवं वेदान्ताभ्यासी सर्वजनपूज्य[१] इति भावः । **सेना** चमूः । **नियमाः** वैष्णवव्रतानि । 'नियमो व्रतमस्त्री' इत्यमरः । यथा सेनया राज्यसिद्धिः तथा नियमेन शुद्धान्तःकरणस्य

---

१ वित्तं बन्धुर्वयः कर्म विद्या चैव तु पञ्चमी ।
एतानि मान्यस्थानानि गरीयोत्तरोत्तरम् ॥
- इति गीताभाष्योद्धृत (६/९) मानववचनम् ।

शास्त्रसम्पत्तिरिति भावः । **अङ्गना तितिक्षा** द्वन्द्वसहिष्णुता । यथा नार्यामभिरतस्य सुखं तथा सहनशीलस्य सर्वदा सुखमेवेति भावः । धनं द्रविणं **नित्यं** सर्वदा **भक्तिश्च विरक्तिश्च दैन्यशमनं** दीनताशामकं यत् **ज्ञानं** तच्च तानि आदयो येषां ते तथोक्तः । तेषां सद्गुणानां **लाभः** । प्राप्तिरेव । यथा धनवतां न दारिद्र्यादिक्लेशः तथा विरक्त्यादिमतां न कुतश्चित् क्लेश इति भावः । **स्फुरती चामरे** मम श्रोत्रयोरन्तिके समीपे **सङ्गते** सम्बद्धे **तव यशोधारे** गुणगणनात्मककीर्तिधारे । कीर्तेः शुभ्रत्वाच्चामरत्वेन निरूपणम् । यथा चामरं राज्यचिह्नम् एवं वेदविचारचिह्नं गुरुमुखात् श्रीकृष्णस्य माहात्म्यश्रवणमेव । न तु नैर्गुण्यश्रवणमिति भावः । पार्श्वद्वये कर्णान्तिके दोधूयमानचामरयोः साम्योपपादनाय श्रोत्रान्तिके सङ्गत इत्युक्तम् । **छत्रं** मम **मूर्ध्नि** शिरसि **कृतं** निहितं **भवातपहरं** संसारतापनिवर्तकम् । **तव हस्तारविन्दमेव** । स्पष्टोऽत्र भावः ॥ २ ॥

**त्वत्क्षेत्रं मम दुर्गमार्यकरुणा वर्म त्वदङ्घ्रिध्वजा-**
**सक्तः सौम्यमनोरथो मम रथश्छन्दांस्यमन्दा हयाः ।**
**प्राणः सारथिरायुधं त्वदभिधा जेयः कलिस्तद्भटाः**
**षट् तेषां नगरी च संसृतिरथो लभ्या विमुक्तिः पुरी ॥३॥**

**व्या : त्वदिति । मम दुर्गं त्वत्क्षेत्रमेव** । यथा दुर्गाश्रितस्य न शत्रुकृतविघ्नः । तथा विष्णुक्षेत्रमाश्रित्य सद्विद्यामभ्यसतः मे न विघ्नमिति भावः । **वर्म** कवचम् । **आर्याणां** गुरूणाम् । यथा कवचं न शत्रुशरैस्ताड्यते तथा गुरुकृपावान्न कामाद्युपद्रवैरभिभूयत इति भावः । हे **सौम्य मनोरथः त्वदंघ्रौ** तव पादयोः यः ध्वजरेखारूपः तस्मिन्नासक्तः ध्यातृध्येयभावेन सम्बद्धः **मम रथः** रथोऽपि ध्वजवानित्यतोऽङ्घ्रिध्वजासक्त इत्युक्तम् । यथा **रथवान्** सर्वत्राकुण्ठितगतिः तथा हरिचरणस्मरणवानपीति भावः । **अमन्दाः** शीघ्रगामिनो **हयाः** अश्वा **छन्दांसि** चत्वारो वेदाः । यथा हयाः रथं सन्मार्गे प्रवर्तयन्ति । तथा ज्ञातार्थाः

वेदाः मनोरथमिति भावः । **सारथिः** सूतो **प्राणः** मुख्यप्राणः यथा सारथिः हयधुरंधरः तथा प्राणोऽपि भाष्यादिना वेदोपोद्बलक इति भावः । **आयुधं त्वदभिधा** त्वदानन्दमयादीनि पुण्यनामानि । अभिधेत्यनेन आनन्दमयादिनाम्नां न लक्षणया ब्रह्मणि प्रवृत्तिरिति सूचितम् । आयुधेन यथा शत्रुर्हन्यते तथा निरन्त रगुणस्मरणरूपतैलधारायितैरेतैर्नामभिः **संसृतेः** परिक्षय इति भावः । जेतुं योग्यो जेयः जेतव्यः मम शत्रुः कलिरेकः **तद्भटाः** **कलिभटाः** **षट्** कामादयः **तेषां** कलिकामादीनां **नगरी** संसृतिः संसारः । संसार एव कामादीनां स्वोल्लासप्रवृत्तेः तेषां नगरीत्युक्तम् । अथोऽनन्तरं **विमुक्तिः पुरी** मोक्षाख्या पुरी जेया **लभ्या** । पूर्वोक्तसेनादिबलेन प्राप्या ॥ ३ ॥

**यथा त्वं सततं पूर्णः साम्राज्यं नेच्छसि प्रभो ।**
**तथा त्वत्सेवया पूर्णा वयमप्यब्जलोचन ॥ ४ ॥**

**व्या :** यथेति । हे **अब्जलोचन प्रभो** कृष्ण **यथा त्वं सततं** सम्पूर्णः स्वभावत एव **पूर्णः** । **साम्राज्यं नेच्छसि** । **तथा त्वत्सेवया पूर्णा** वयमपि नेच्छामः ॥४॥

**ये त्वां शास्त्रविचारविस्तृतधियः श्रेयस्करं श्रीकरं**
**सेवन्ते पुलकाङ्किताङ्गमुदितप्रेमाश्रुधाराधराः ।**
**तेषां [१]नैहिकसम्पदस्ति विदुषामित्यज्ञगीतां कथां**
**नाथोन्मूलयितुं करोमि गदितं न स्यान्मदो मे यदि ॥ ५ ॥**

**व्या :** य इति । **शास्त्रविचारे विस्तृता** धीर्येषान्ते तथोक्ताः । उदितानि **प्रेमाश्रूणि** आनन्दबाष्पजलानि तेषां **धारां** धरन्तीति तथोक्ताः । **ये** पुरुषाः **पुलकाङ्किताङ्गं** यथा भवति तथा । **श्रेयस्करं** मोक्षप्रदम् । **श्रीकरम्** ऐहिकसम्पत्प्रदं **त्वां सेवन्ते** । हे **नाथ**

---

१ यावानर्थ उदपाने सर्वतः सम्प्लुतोदके ।
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ - गीता (२/४६)

श्रीकृष्ण तेषां विदुषां ऐहिकसम्पन्नास्तीति अङ्गगीतां मिथ्यावादिभिराघोषितां **कथां** गाथाम् **उन्मूलयितुम्**। **गदितं** राज्यं कुर्विति वचनम्। **करोमि**। **मे** मम **मदः** धनमदः **यदि न स्यात्** तर्हीति पूर्वेणान्वयः ॥५॥

**उग्रसेनं यदुपतिं चक्रे चक्रधरः किल।**
**यदुमात्राधिपत्येन तस्य विश्वेश्वरस्य किम्॥ ६ ॥**

**व्या :** उग्रसेनमिति। **चक्रधरः** श्रीकृष्णः। **उग्रसेनं यदुपतिं** यादवानां पतिं **चक्रे किल**। स्वयमेव राज्यं कुतो न बुभुज इत्यत आह। **विश्वेश्वरस्य** सकलभुवनाधीश्वरस्य **यदुमात्राधिपत्येन किम्** किं फलम्। न किमपीत्यर्थः। नहि सार्वभौमः एकग्रामाधिपत्यं वाञ्छतीति भावः॥ ६ ॥

**स कृष्णः कंसविध्वंसी तत्पित्रे तन्महीं ददौ।**
**परार्थैकफलः[1] साक्षात्पुराणपुरुषो ह्यसौ॥ ७ ॥**

**व्या :** प्रकारान्तरेणोग्रसेनस्य राज्यदानं सङ्घटयते। **स** इति। **कंसविध्वंसी स कृष्णः**। **तन्महीं** कंसराज्यं **तत्पित्रे** कंसपित्रे उग्रसेनाय। **ददौ** दत्तवान्। तत्पित्र इत्यनेन सति पितरि तमवज्ञाय स्वयमेव राज्यपरिपालनरूपं कंसवधकारणं च सूचितम्। तथाहि। **असौ** कृष्णः। **परार्थैकं** केवलपरप्रयोजनमेव **फलम्**। स्वकृतस्य सृष्ट्यादेः यस्यः स तथोक्तः। **साक्षात् पुराणपुरुषो हि**। आदिपुरुषो हि। महाप्रयत्नसाध्यजगत्सृष्ट्यादिकमपि यस्य परार्थं तस्येदं न स्वार्थमिति किं वाच्यमिति भावः॥ ७ ॥

---

१ 'नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि' -गीता(३/२२)
मा फलेषु कदाचान - गीता (२/४७)
'अस्मदिष्टैककार्याय पूर्णाय हरये नमः' - द्वादशस्तोत्रे(२/९)
ईश्वरप्रवृत्तेः सर्वत्र स्वप्रयोजनहीनत्वात् -विष्णुतत्त्वनिर्णयटीका

**त्वदुक्तिकारिणः सर्वे वयमित्यब्रवीद्धरिः ।**
**भक्तमात्रोक्तकर्तुस्तत् किमपूर्वं कृपाम्बुधेः ॥ ८ ॥**

**व्या :** त्वदुक्तीति । हरिः श्रीकृष्णः वयं **सर्वे** बलरामादयः । तवाज्ञाधरा इति यदब्रवीत् । तत् भक्तमात्रोक्तकर्तुः सकलभक्तोक्तकारिणः । कृपाम्बुधेः श्रीकृष्णस्यापूर्वं किं नूतनं किम् । वात्सल्येन प्रवृत्तेस्तदपि नेहान्याय्यमिति भावः ॥८॥

**सेनामध्यगता राजन् वयमित्याह माधवः ।**
**विश्वमध्यगतस्यास्य सेनान्तः किं नु दूषणम् ॥ ९ ॥**

**व्या : सेनेति । माधवः** लक्ष्मीपतिः । मधुकुलोत्पन्नत्वत इति वा । कृष्णः । हे **राजन्** उग्रसेन । वयं तव सेनामध्यगताः वयं तव योधा इतिभावेनोग्रसेनं प्रत्याह । **विश्वमध्यगतस्य** अणुरेणुतृणकाष्ठादीनामपि **मध्यगतस्य सेना**भ्यन्तरेऽवस्थित्या **किं दूषणम्** । तत्तदाकारेण सकलजगदन्तःप्रविष्टस्य नायमपि दोष इति भावः ॥ ९ ॥

**[1]वक्रं सर्वमवक्रयत्वनुदिनं कुब्जातनूज्जृम्भको**
**मल्लानां लयकृद्धुनोतु स रिपून् कंसस्य हिंसाकरः ।**
**बन्धून् बन्धकशान् वियोजयतु मे रम्यां धुरं माधुरः**
**सन्दध्याद्धरिरन्तरङ्गविभवं रङ्गस्थलीरञ्जकः ॥ १० ॥**

**व्या :** कविरुक्तकथा अनुवदन् स्वाभीष्टं प्रार्थयते । **वक्र**मिति । **कुब्जातन्वाः** सैरन्ध्रीशरीरस्य **उज्जृम्भकः** उन्नमनकर्ता । कुब्जीभावेन वक्रशरीरस्याव-

---

१ धर्माद्योऽजनि धर्म एव स रतिं दद्यात् स्वयोगश्रियं
योगाभ्यासरतः स्मरादिविजयं कन्दर्पदर्पापहः ।
उत्तुङ्गाद्रिगतः सदोच्चपदवीं योषित्कदम्बेषु नः
पुत्रीवन्मतिमुर्वशीजनयिता नारायणः सद्गुणान् ॥ - इति तीर्थप्रबन्धे (२/४२)

क्रतासम्पादक इत्यर्थः । अत एव **वक्रं** दुर्विषयानुरक्ततया सद्विषयेषु कुटिलम्। **सर्वं** चक्षुरादीन्द्रियजातम् । **अवक्रयतु** सद्विषयेषु अजिह्मं करोतु । **मल्लानां** लयकृत् विनाशकारी **स** कृष्णः **रिपून्** अस्मत्प्रतिपक्षिणः धुनोतु संहरतु । कंसस्य मातुलतया बन्धुभूतस्य स्वपितृबन्धनकरस्य **हिंसाकरः** । **बन्धकरान्** ममताख्यपाशसम्पादकतया बन्धनहेतून् **बन्धून्** सुहृदो **वियोजयतु** विघटयतु । **माधुरः** शब्दतोऽर्थतश्च मधुरायाः पुर्याः पाता । श्रीकृष्णः **मे** मह्यं मधुराम्। **धुरं** व्याख्यानादिव्यापारभारं **सन्दद्यात्** ददातु । **रङ्गस्थलीरञ्जकः** मल्लरङ्गस्थलीरञ्जकः **हरिः** कृष्णः **अन्तरङ्गविभवं** अन्तःकरणस्य नैर्मल्यादिविभवं सन्दद्यात् । शब्दसाम्यात् हेतुरलङ्कारो द्रष्टव्यः ॥ १० ॥

**मधुरा मधुरा येन समभूत् समभूज्झिता ।**
**स्मरत स्मरतातं तं महतामहतार्थदम् ॥ ११ ॥**

**व्या :** मधुरेति । **मधुरा** मनोहरा । **मधुरा** [१]मधुरापुरी । **येन** कृष्णेन **समभूज्झिता** समया सदृशाया भुवा उज्झिता रहिता । असदृशीत्यर्थः । **समभूत्** । **महतां** ज्ञानिनां **अहतः** अविनष्टः **अर्थः** पुरुषार्थः । असदृशो मोक्ष इत्यर्थः । तं ददातीति तथोक्तः । **तं स्मरतातम्** मन्मथजनकं कृष्णं **स्मरत** चिन्तयत ॥११॥

**कृष्णोदारविहारखण्डितमलं यस्यां जलं मङ्गलं**
**तत्पादाम्बुजलक्ष्मलक्ष्यविभवा धन्यस्थली यत्स्थली ।**
**यद्गेहानि कृतस्पृहाणि रमया नित्यं स्वभर्तुः स्थितेः**
**दद्यात् सा मधुरा पुरी शुभकरी श्रेयांसि भूयांसि नः[२] ॥१२॥**

---

१ अयोध्या मथुरा माया काशी काञ्ची अवन्तिका ।
पुरी द्वारवती चैव सप्तैता मोक्षदायिकाः ॥ - पुराणवचनम् ।

२ सेना यत्र विरक्तवैष्णवजना नामायुधं श्रीपतेः
कामाद्यैः सहितः कलिः किल रिपुर्यत्रान्वहं हन्यते ।

**व्या :** कृष्णेति। यस्यां पुर्यां **जलम्** उदकं **श्रीकृष्णस्य उदारः** उत्कृष्टो **विहारः** क्रीडा तेन **खण्डितं मलं** यस्य तत् तथोक्तम्। **मङ्गलं** परमपावनमास्ते। यस्याः स्थली स्थलम्। द्वावप्यन्यलिङ्गौ स्थलं स्थलीत्यमरः। तस्य श्रीकृष्णस्य **पादाम्बुजे यल्लक्ष्म** वज्रांकुशादिचिह्नम्। लाञ्छनं तेन **लक्ष्यः** दर्शनीयः **विभवः** सम्पत् देवैरपि श्लाघनीयत्वरूपा यस्याः **सा** तथा सती। **धन्यस्थली** पुण्यकरस्थली। जाता। यस्यां गेहानि मन्दिराणि। **नित्यं स्वभर्तुः** श्रीकृष्णस्य **स्थितेः रमया** लक्ष्म्या कृता स्पृहा येषु तानि **कृतस्पृहाणि**। स्वनिवासार्थं वाञ्छितानि जातानि सा शुभकरी **मधुरा पुरी**। नो अस्माकम्। भूयांसि बहूनि **श्रेयांसि** सुखानि दद्यात्॥ १२॥

**जगत्पित्राऽथ पितरौ मृदुभाषणपूर्वकम्।**
**नतौ न तौ पुत्रबुद्धिं चक्रतुश्चक्रिणीश्वरे॥ १३॥**

**व्या :** जगदिति। अथ कंसवधानन्तरम्। जगत्पित्रा कृष्णेन। **मृदुभाषणपूर्वकं** यथा भवति तथा। **नतौ** नमस्कृतौ **तौ पितरौ** देवकीवसुदेवौ। **ईश्वरे** जगत्स्वामिनि **चक्रिणि**। श्रीकृष्णे **पुत्रबुद्धिं** पुत्रोऽयमिति बुद्धिं **न चक्रतुः**। अवतारसमये चतुर्भुजमूलमूर्तेरेव दृष्टत्वेन तत्संस्कारस्य जागरूकत्वात् नतावपि परदेवताबुद्ध्या आलिङ्गनादिकं न चक्रतुरिति भावः॥ १३॥

**विमुच्य निगडादीशः स्मितवक्त्रः प्रियं वदन्।**
**कृतस्नेहोऽथ निगडं [1]मायामयमयोजयत्॥ १४॥**

---

प्राकारादि च यत्र तीर्थनिचयः कर्मापि वर्मामलं
**दद्यात् सा मधुरा पुरी शुभकरी श्रेयांसि भूयांसि नः॥** - तीर्थप्रबन्धे (२/३१)
कृष्णाश्रयो वसति यत्र जनोऽपि तत्र वृद्धिर्भवेत् **किमु रमाधिपतेर्निवासे।**
वृन्दावनं यदधिवासत आस सन्ध्यङ् माहेन्द्रसद्मसदृशं किमु तत्र पुर्याम्॥
- म.भा.ता.नि. (१४/७)

१ दैवी ह्येषा गुणमयी मम माया दुरत्यया॥ - इति गीता (७/१४)

**व्या : विमुच्येति । ईशः** कृष्णः । पितरौ देवकीवसुदेवौ **निगडात्** शृङ्खलात् **विमुच्य स्मितं वक्त्रं** यस्य सः । 'हासो जनोन्मादकरी च माया'[1] इति वचनात्। मायोपोद्बलकमन्दहसितयुङ्मुखः । **प्रियं** अम्ब तातेति प्रियवचनं तद्वदन् सन् । **कृतस्नेहः** कृतः स्नेहो येन स तथा सन् । अथास्मिन्नेव क्षणे **मायामयं** पुत्रोऽहमिति व्यामोहात्मकम् । **निगडं** शृङ्खलम् **अयोजयत्** योजयामास । युजिर्योग इति लुङ् ।। १४ ।।

**अथ धर्मपथाध्यक्षो जगदे जगदेकराट् ।**
**वार्तयाऽहं भवत्पुत्रो यश्चकार न वां हितम् ।। १५ ।।**

**व्या : अथेति अथ** अनन्तरम् । **धर्मस्य पथः** धर्मपथः । पित्रादिषु प्रियं वक्तव्यमिति धर्ममार्गस्याध्यक्षः स्वामी । **जगदेकराट्** श्रीकृष्णः **जगदे** [2]जगाद। किमिति । **योऽहं वां** वृद्धयोर्युवयोर्हितं पोषणादिकं न **चकार** नाकरवम् । सोऽहं **वार्तया** केवलं वार्तामात्रेण । भवतोः पुत्रः [3]**भवत्पुत्रः** । पुत्रेण कर्तव्यं किमपि नो कृतमिति आपाततः लोकाः पुत्र इति वदन्ति वस्तुतो नाहं भवत्पुत्र इति हृदयम् ।।१५।।

---

१ भागवते (२/१/३१)

२ सर्वार्थसम्भवो देहो जनितः पोषितो यतः ।
न तयोर्याति निर्वेशं पित्रोर्मर्त्यः शतायुषा ।। - भागवते (१०/४३/५)
यतस्तयोरात्मजः कल्प आत्मना च धनेन च ।
वृत्तिं न दद्यात् तं प्रेत्य स्वमांसं खादयन्ति हि ।।
मातरं पितरं वृद्धं भार्यां साध्वीं सुतं शिशुम् ।
गुरुं विप्रं प्रपन्नं च कल्पोऽबिभ्रच्छ्वसन् मृतः ।।
स पिता सा च जननी यौ पुष्णीतां स्वपुत्रवत् ।
शिशून् बन्धुभिरुत्सृष्टानकल्पैः पोषरक्षणे ।। -भागवते (१०/४३/६,७,२२)

३ यः प्रीणयेत् सुचरितैः पितरं स पुत्रः । - इति मार्कण्डेयपुराणे

**सर्वं तात कृतं त्वया यदुदितं प्रीत्याऽस्मदीयान्वये**
**तेनेदं तिलकीबभूव हि कुलं कीर्तिश्च मे विस्तृता ।**
**येनानेकखलान् निहत्य बलिनं कंसं च वंशद्रुहं**
**बन्धग्रन्थिरयं व्ययोजि दयया किं किं कृतं न त्वया ॥१६॥**

**व्या :** एवमुक्तो वसुदेवः प्रतिवक्ति । **सर्वमिति** । हे तात पुत्र श्रीकृष्ण । **त्वया सर्वं** पुत्रेण कर्तव्यं समस्तं **कृतम्** । यत् यस्मात् कारणात् । त्वया अस्मदीयान्वये अस्मत्कुले **उदितम्** उत्पन्नम् । तेन कारणेन **इदं कुलं तिलकीबभूव** । यादवः श्रीकृष्ण इति कुलस्य श्रीकृष्णनाम्ना सह सर्वैः सम्पठ्यमानात् सर्वलोकविभूषणं **बभूव हि** । **मे कीर्तिश्च विस्तृता बभूव** । वासुदेव इति सादरं सर्वैरभ्यस्यमानत्वादिति भावः । **येन** त्वया **अनेकखलान्** पूतनादीन् । **वंशद्रुहम् बलिनं** बलिष्ठं **कंसं च निहत्य दयया अयं बन्धग्रन्थिः** शृङ्खलाबन्धग्रन्थिः । **व्ययोजि** विमोचितः । स्वावतारप्रयोजनतया कृतमपि पूतनादिहननम् आत्मविमोचनार्थं कृतमित्यनुसन्दधता वसुदेवेन सज्जनस्वभावो दर्शितः । **त्वया** एतावत्कृतत्वात् **किं किं न कृतम्** सर्वमपि कृतमित्यर्थः ॥१६॥

**अम्बा तं परिरभ्य फुल्लकरसन्माल्येन तस्यार्चनं**
**नेत्रानन्दजलेन सिञ्चनमुरोजोद्यत्पयोधारया ।**
**नैवेद्यं च निवेद्य वीक्षणलसन्नीराजनं शोभनं**
**भाविस्वीयविमुक्तिकल्पलतिकाबीजं निजं निर्ममे ॥१७॥**

**व्या :** अम्बेति । **अम्बा** माता देवकी । श्रीकृष्णं **परिरभ्य** आलिंग्य । **फुल्लौ** पुलकितौ **करावेव सन्माल्यं** समीचीनपुष्पमाला तेन । तस्य कृष्णार्चनं पूजनम् । **नेत्रानन्दजलेन सिञ्चनं** स्नानम् । **उरोजाभ्यां** स्तनाभ्याम् **उद्यतः** स्रवतः **पयसः** क्षीरस्य **धारया नैवेद्यं** । **शोभनं** मनोहरं **वीक्षणम्** अवलोकनमेव **लसत्** प्रकाशमानं **नीराजनं च निवेद्य** श्रीकृष्णं दोर्भ्याम् आलिङ्ग्य सानन्दं मुखं पश्यती क्षीरं पाययामासेति भावः । इदमेव पूजात्वेन वर्णयता कविना

साक्षात्परब्रह्मणि मातृभावेनापि कृतमेतन्महाफलसाधनमिति सूचितम् । एतदेव स्पष्टयति । भावीति । **भाविनी स्वीयमुक्तिकल्पलतिका** स्वीयमोक्षाख्यक-ल्पलता तस्याः **बीजं कारणं निजं** स्वसम्बन्धि **निर्ममे** चक्रे ॥ १७ ॥

**व्रजे गृहस्थोचितरम्यलीलाः प्रचक्रतुर्यौ सममङ्गनाभिः ।**
**अथोपनीतौ विधिनोपनीतौ सुतौ वितेने किल शूरसूनुः ॥१८॥**

**व्या : व्रज** इति । यौ रामकृष्णौ **व्रजे** गोकुले **अङ्गनाभिः** गोपीभिः **समं** सार्धं गृहस्थानां **गृहस्था**श्रमिणाम् **उचिताः** योग्याः **लीलाः** रतिपुत्रोत्पत्यादिलीलाः विलासान् **प्रचक्रतुः** । **अथा**नन्तरं **शूरसूनुः** वसुदेवः **विधिना** भागधेयेन उपनीतौ स्वसमीपं प्रापितौ **सुतौ उपनीतौ** उपनयनाख्यसंस्कारवन्तौ । **वितेने किल** चकार किल । किलेत्यस्वारस्ये । [१]नटनमात्रमेतदिति सूचनार्थम् ॥ १८ ॥

**मुनय उपययुर्महेक्षणोत्सुका धृतनियमाः किल सर्वतः समेताः ।**
**जनिमिव परिहर्तुमुत्तरत्र ह्युपनयनादिनिदानमाप्तकामाः ॥१९॥**

**व्या : मनुय** इति । महस्य कृष्णोत्सवस्य **ईक्षणे** दर्शने **उत्सुकाः** । **धृतनियमाः** धृतव्रताः । **आप्तकामाः** पूर्णकामाः । **मुनयः** ऋषयः **उत्तरत्र** एतज्जन्मोत्तरकाले। **उपनयनादिनिदानं** स्वेषामुपनयनादिसंस्कारमूलकारणम् । **जनिम्** उत्पत्तिम्। **परिहर्तुमिव समेताः** मिलिताः सन्तः । **सर्वतः** उपययुर्हि **किल**। श्रीकृष्णोपनयनदर्शने सत्यपुनर्भव एव भवतीति भावः । धृतनियमा इत्यनेन महाव्रतधरैरपि विष्णूत्सवदर्शनादिवैष्णवधर्माः अनुष्ठेया इति सूचितम् ॥ १९ ॥

---

१ न चाश्रमद्वयमेव देवानाम्।'देवा एव ब्रह्मचारिणो देवा एव गृहस्था देवा एव वनस्था यथा ह्येते मुनय एवं सर्ववर्णाः सर्वाश्रमाः सर्वं ह्येते कर्म कुर्वन्ति' इति कौण्ठरव्यश्रुतौ यतित्वदृष्टान्तेनान्येषामप्युपदेशात् ॥ - इति ब्रह्मसूत्रभाष्ये(३/४/४८)

न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।
इति मां योऽभिजानाति कर्मभिर्न स बद्ध्यते ॥ -गीता(४/१४)

**वाद्यानि नेदुर्मुनयश्च मन्त्रानुच्चारयन्तः सह बन्दिवृन्दैः ।**
**वृन्दारकाणां स्तुतयश्च रम्यगन्धर्वगीतैः सह नाकिलोके ॥२०॥**

**व्या :** वाद्यानीति । वाद्यानि भेरीमृदङ्गादीनि मन्त्रान् वेदानुच्चारयन्तः मुनयश्च बन्दिवृन्दैः पाठकसमूहैः सह नेदुः । देवलोके वृन्दारकाणां स्तुतयश्च रम्यगन्धर्वगीतैः मनोहरगन्धर्वगानैः सह नेदुः[1] ॥ २० ॥

**नार्यः समस्ता नयनोत्सवं तं रक्ताक्षतै रागयुता मुकुन्दम् ।**
**अवाकिरंस्तत्परिरम्भणोत्का कुब्जा दुरन्तां ध्रुवमाप चिन्ताम् ॥२१॥**

**व्या :** नार्य इति । रागयुताः अनुरागयुक्ताः समस्ता नार्यः नयनोत्सवं नेत्रानन्दकरमित्यर्थः । तं मुकुन्दं श्रीकृष्णं रक्ताक्षतैरवाकिरन् । तस्य श्रीकृष्णस्य परिरंभणे आलिङ्गने उत्का उत्सुका कुब्जा दुरन्ताम् अपारां चिन्तां ब्रह्मचारिणा सह मम कथं रमणं स्यादिति चिन्तामाप । ध्रुवं निश्चयः । उपरिकरिष्यमाणकुब्ज ारत्याऽपि इदं नटनमेवेति भावः ॥ २१ ॥

**अम्बायाः पितुरश्चतामपि सतां सत्प्रेमदामोपमं**
**सम्बद्धं विशदं गले त्रिगुणितं यज्ञोपवीतं तयोः ।**

---

१ विविधवेदतया विजिहीर्षवो वदनरङ्गपदेऽस्य चिराय याः ।
सुरवरप्रमदा अपि सप्रिया अभिननन्दुरहो वियतो महम्॥
विहितसाधनसाधितसत्क्रियो ज्वलनमुज्ज्वलधीर्ज्वलयन्नयम् ।
उपनिनाय सुतं सुकुमारकं कुशलिनं कुशलीकृतशीर्षकम् ॥
परिचराग्निगुरू चरितव्रतः सुचरणः पठ साधु सदागमान् ।
इति गुरोस्त्रिजगद्गुरुशिक्षणे स्फुटमहासि सुरैः कृतसाक्षिभिः ॥
जितकुमारगुणं सुकुमारकं निजकुमारमवेक्ष्य निरन्तरम् ।
समुचिताचरणे चतुरं स्वतः क्षितिसुरो मुदमायत शिक्षयन्॥
सपटखण्डमकिञ्चनवत् क्वचित् स्वविभवानुचितं चरणादिकम् ।
भुवनभर्तुरहो स्वनिगूहनं सुरसभासु कुतूहलमातनोत् ॥- मध्वविजये (३/३३-३७)

**रेजे तद्विलसद्गुणैर्बहुगुणैरन्तर्गरिष्ठं त्रयं**
**स्तोतृस्तव्यतया तदाश्रययुतं स्वच्छं श्रुतीनामिव ॥ २२ ॥**

**व्या :** अम्बाया इति । **अम्बायाः** देवक्याः । **पितुर्वसुदवेस्य अश्वतां सताम्** । **अपिः** समुच्चये । **सत्प्रेमदामानि** निर्दुष्टस्नेहपाशानि तान्येवोपमा यस्य तत्तथोक्तम् । अम्बादित्रिवर्गकृतप्रेम्णामपि त्र्यात्मकत्वात् श्रीकृष्णरामविषयकत्वेन तत्सम्बन्धित्वाच्चोपवीतसाम्यमिति भावः । **तयोः** श्रीकृष्णरामयोः **गले** कण्ठे **सम्बद्धं** सल्लग्नं **विशदं** **स्वच्छं** **त्रिगुणितं** त्रिभिरावर्तितं तन्तुत्रयात्मकत्वादित्यर्थः । **यज्ञोपवीतं** **रेजे** । कथमिव । तस्य श्रीकृष्णस्य बहुगुणैर्बहवो **गुणाः** येषां ते तथा तैः । प्रत्येकमसङ्ख्यातैः **विलसद्गुणैः** ज्ञानानन्दादिभिरुपवीतस्य एकैकगुणस्यापि प्रत्येकं त्रिगुणात्मकत्वाद्बहुगुणत्वम् । **अन्तर्गरिष्ठं** दृढम् । नैर्गुण्यसाधककुतर्कैरनपोह्यमित्यर्थः । **स्तोतृस्तव्यतया** तावेवाश्रयौ ताभ्यां **युतम्** । स्तोतृतया शेषात्मकबलरामाश्रितम् । स्तुतिविषयतया श्रीकृष्णाश्रितम् । एवमुभयाश्रितमित्यर्थः । **स्वच्छम**पौरुषेयत्वेन कर्तृदोषनिमित्तदोषरहितम् । **श्रुतीनां** **त्रयमिव** रेजे इति सम्बन्धः । सकलवेदपारङ्गतस्य बलस्य सकलवेदप्रतिपाद्यस्य श्रीकृष्णस्येदानीं कृतोपवीतधारणं नटनमेवेति भावः ॥ २२ ॥

**लोकं विडम्बयितुमेवमिहोपनीतः**
**सत्यां करिष्यति हरिर्मदपत्यवाञ्छाम्[1] ।**

---

१ पुत्रा अग्नेः पूर्वमासंश्च तेऽथ स्त्रीत्वप्राप्त्यै चक्रुरुग्रं तपश्च ।
भार्यात्वार्थे वासुदेवस्य योषित्तनुं तासामिच्छतीनां समीरः ॥
अदाद्वरं तपसाऽऽराधितः स स्त्रीभूतास्ते बदरीं सम्प्रजग्मुः ।
नारायणं तत्र शिश्रूषमाणाः प्राप्यासरस्त्वं राजकुलेषु जाताः ॥
काश्चित् स्वर्गे ता निशाम्यैव कृष्णं वव्रुः पतिं सर्वगुणाभिरामम् ॥
- इति म.भा.ता.नि. (२०/११२-११४)

**इत्थं प्रहृष्टहृदिवाग्निरसौ विशङ्को**
**जज्वाल यज्ववरमन्त्रहुतैर्हविर्भिः ॥ २३ ॥**

**व्या : लोकमिति** । इह भूमौ **लोकं** जनं विडंबयितुमनुकर्तुमेव **उपनीतः** श्रीकृष्णः मम अपत्यानां अर्चिर्नाम्नां कुमाराणां श्रीकृष्णाख्यपतिकांक्षया कन्यात्वं तपसा गतानाम् । अग्निकुमाराः खलु श्रीकृष्णपत्नीनां षोडशसहस्राणीति पौराणिकीप्रसिद्धिः[१] । तेषां **वांछा** मनोरथः तां **सत्यां** यथावत्सिद्धार्थविषयिणीं **करिष्यति** । लोकविडम्बनायोद्वाहमपि करिष्यन् **मदपत्य**कृततपःफलदानाय ता एव परिनेष्यति । **इत्थ**मनेन भावेनैव । **प्रहृष्टहृदिव** तुष्टचित्त इव । **विशंकः** विघ्नशङ्कारहितः । **असौ** उपनयनमण्टपस्थोऽग्निः । **यज्वनां** याज्ञिकानां **वराः** श्रेष्ठाः। 'यज्ज्वा तु विधिनेष्टवान्' इत्यमरः । तेषां **मन्त्रहुतैः हविर्भिः** साधनैः **जज्ज्वाल** ज्वलितवान् ॥ २३ ॥

**आचार्यः सकलविदे पुराणपुंसे गायत्रीमनुमदिशन्ममेत्थमूहः ।**
**तद्व्याजात् तव गुणचिन्तकाय मह्यं सद्बुद्धिं दिश दययेत्यसौ ययाचे ॥**

**व्या : आचार्य इति** । **आचार्यः** गर्गः । **सकलविदे** सर्वज्ञाय । **पुराणपुंसे** आदिपुरुषाय । श्रीकृष्णस्यानुपदेश्यत्वे हेतुगर्भमिदं विशेषणद्वयम् । श्रीकृष्णाय **गायत्रीमनुं** गायत्रीमन्त्रम् । **अदिशत्** उपदिदेश । अत्रोत्प्रेक्षते । **तद्व्याजात्** उपदेशव्याजात् । असौ गर्गः । **तव गुणचिन्तकाय** वरेण्यत्वादिगुणध्यानरताय । अनेन धीमहीत्यन्तस्य पादद्वयस्यार्थसूचनं कृतम् । **मह्य**मिति । आत्मनि बहुवचनप्रयोगेऽप्येकत्वापरिहारात् 'धीमहि' इत्युत्तमपुरुषप्रयोगस्य फलितकथनम्। **दयया सद्बुद्धिं दिश** देहि । अनेन यः ज्ञानरूपी परमात्मा नोऽस्माकं धियः सद्बुद्धीः प्रचोदयात् प्रेरयेत् । इति 'धियो यो नः' इत्यादितृतीयपादस्यार्थः

---

१ **अग्निपुत्रा महात्मानस्तपसा स्त्रीत्वमापिरे ।**
भर्तारं च जगद्योतिं वासुदेवमजं विभुम् ॥
- इति भागवततात्पर्योद्धृतमहाकौर्मवचनम् ॥ १/१०/३१

सूचितः। 'प्रचोदयात्' इत्यस्य लोडन्तस्य प्रार्थनार्थत्वात् इति ययाचे। इत्थं मम ऊहः तर्कः ॥ २४ ॥

**इतः परं श्रौतपथस्थितोऽयं न याति गोपालकबाललीलाम्।**
**इतीव शौरिः सह दक्षिणाभिर्ददौ मुदा गाः सुभगा मुनिभ्यः ॥२५॥**

**व्या :** इतः परमिति। **श्रौतपथस्थितः** गुरुकुलवासादिश्रुत्युक्तमार्गनिष्ठः। **अयं** श्रीकृष्णः **इतः परं** इतःप्रभृति। **गोपालकबालानां** गोरक्षकबालकानां **लीलां न याति**। **इतीव** इति मत्येव। रक्षकरहितगोभिः किमस्माकमिति बुद्ध्येवेत्यर्थः। **शौरि**र्वसुदेवः **दक्षिणाभिः सह सुभगाः** मनोहराः **गाः मुदा** हर्षेण **मुनिभ्यो ददौ**। श्रीकृष्णावतारसमये[1] सङ्कल्पितगोप्रदानं कृतवानित्यर्थः॥ २५ ॥

**यज्ञोपवीतोज्ज्वलकण्ठदेशः कृष्णाजिनश्रीर्मुनिसङ्घमान्यः।**
**प्राणप्रणेता धृततर्कमुद्रो ध्यायन् मनुं व्यास इवान्वशिक्षत् ॥२६॥**

**व्या :** यज्ञोपवीतेति। यज्ञोपवीतेनोज्ज्वलः **कण्ठदेशो** यस्य स तथोक्तः। **कृष्णाजिन**धारीत्यर्थः। **मुनिसङ्घैः** ऋषिसङ्घैः **मान्यः प्राणप्रणेता** प्राणायामकर्ता। अन्यत्र प्राणापररूपस्य श्रीमध्वाचार्यस्य प्रणेता व्याख्याता। अन्यत् व्यासपक्षे स्फुटम्। **धृता तर्कमुद्रा** ज्ञानमुद्रा येन सः श्रीकृष्णः। **ध्यायन्** ध्यानं कुर्वन्। **व्यास इव** श्रीवेदव्यास **इव**। **मनुं** गायत्रीमन्त्रम्। **अन्वशिक्षत्** अभ्यस्तवान्[2]। जजापेत्यर्थः॥ २६ ॥

---

१ कृष्णावतारोत्सवसम्भ्रमोऽस्पृशत्
मुदा द्विजेभ्योऽयुतमाप्लुतो गवाम्। - भा. १०/३/११

२ विज्ञानरोचिःपरिपूरितान्तर्बाह्याण्डकोशं हरितोपलाभम्।
तर्काभयेतं विधिशर्वपूर्वगीर्वाणविज्ञानदमानतोऽस्मि॥ - तन्त्रसारसङ्ग्रहे (४/४५)
द्वीपे भगिन्यास्तु यमस्य विश्वकृत् प्रकाशते ज्ञानमरीचिमण्डलः।
प्रभासयन्नण्डबहिस्तथाऽन्तः सहस्रलक्षामितभानुदीधितिः॥
अगण्यदिव्योरुगुणार्णवः प्रभुः समस्तविद्याधिपतिर्जगद्गुरुः।

**दिने दिनेऽग्नौ समिधो जुहाव तथा श्रुतीनां जननीं जजाप।**
**स्वकुक्षिपूर्तौ न रतिर्हि कस्य निजानुभावस्मरणोत्सवे च ॥२७॥**

**व्या :** दिने दिन इति। श्रीकृष्णः **दिने दिने** प्रतिदिनम्। **अग्नौ समिधः जुहाव।** अग्निकार्यं कृतवानित्यर्थः। **तथा दिने दिने श्रुतीनां** वेदानां **जननीं** मातरं गायत्रीम्। 'वेदमाता तु गायत्री' इति वचनात्। **जजाप।** तथाहि। **स्वकुक्षिपूर्तौ** स्वस्य यः कुक्षिः उदरं तस्य पूर्तिः पूरणं तस्यां स्वोदरपूरणे **रतिः** इच्छा। **कस्य** नहि नास्ति हि। सर्वस्याप्यस्तीत्यर्थः। अग्नौ क्रियमाणहोमस्य भोक्ता श्रीकृष्णः स्वयमेवेति भावः। **निजानुभावस्मरणोत्सवे** स्वमाहात्म्यध्यानोत्सवे। स्तुतावित्यर्थः। **रतिः कस्य न** स्यात्। अनेन गायत्री श्रीकृष्णमाहात्म्यप्रतिपादिकेति ज्ञायते ॥ २७ ॥

**तं ब्रह्मचर्यव्रतधुर्यमार्याः सन्दृश्य हृष्टाः परमब्धिपुत्री।**
**वक्षःस्थलस्था त्रपयाऽऽकुलासीदभ्यर्थ्यमानौ च दिनेशवह्नी ॥२८॥**

**व्या :** तमिति। **आर्याः** श्रेष्ठाः उपनयनदर्शनार्थमागता विप्रर्ष्यादयः कर्तारो वसुदेवादयश्च **तं** श्रीकृष्णं **ब्रह्मचर्यव्रतधुर्यं** ब्रह्मचर्यव्रतस्य धुरन्धरं **सन्दृश्य हृष्टाः** सन्तुष्टाः। **परं** केवलं **वक्षःस्थलस्था अब्धिपुत्री** समुद्रपुत्री लक्ष्मीः **त्रपया** लज्जया **आकुला** व्याकुला **आसीत्।** ब्रह्मचर्यव्रतनिष्ठपुरुषवक्षसि तरुणीनां

---

अनन्तशक्तिर्जगदीश्वरेश्वरः समस्तदोषातिविदूरविग्रहः ॥
शुभमरतकवर्णो रक्तपादाब्जनेत्राधरकरनखरसनाग्रश्चक्रशङ्खाब्जरेखः।
रविकरवरगौरं चर्म चैणं वसानस्तटिदमलजटासन्दीप्तचूडं दधानः ॥
विस्तीर्णवक्षाः कमलायताक्षो बृहद्भुजः कम्बुसमानकण्ठः।
समस्तवेदान् मुखतः समुद्गिरन्ननन्तचन्द्राधिककान्तिसन्मुखः ॥
प्रवोधमुद्राभयदोर्द्वयान्वितो यज्ञोपवीताजिनमेखलोल्लसन्।
दशा महाज्ञानभुजङ्गदष्टमुज्जीवयानो जगदत्यरोचत ॥
- म.भा.ता.नि.(१०/५१-५५)

स्थितिर्लज्जाकरीति भावः । किञ्चाभ्यर्थ्यमानो "हृद्रोगं मम सूर्य हरिमाणं च नाशय"[१] इत्यादिमन्त्रेण । "आयुष्यं तेज आरोग्यं देहि मे हव्यवाहन" इत्यादि मन्त्रेण च । श्रीकृष्णेन प्रार्थ्यमानो **दिनेशः** सूर्यः **वह्निर्हव्यवाहनस्तौ** च त्रपया आकुलावास्ताम् । दासानुदासयोस्तयोः स्वामिना श्रीकृष्णेन क्रियमाणं प्रार्थनं कथं न लज्जाकरीति भावः ॥ २८ ॥

**गुरोर्गृहं सर्वविदग्रगण्यावुपेयतुस्तौ [२]समिधः समर्प्य ।**
**भवान् भवारण्यमिदं चिदग्नावतः परं निर्दहतादितीव ॥ २९ ॥**

**व्या : गुरोरिति । सर्वविदग्रगण्यौ** सर्वज्ञश्रेष्ठौ तौ श्रीकृष्णरामौ । अस्मद्गुरुर्भवान् । **इदं भवारण्यं** संसारवनम् । **अतः** अस्मदागमनानन्तरम् । **चिदग्नौ** ज्ञानाग्नौ **निर्दहतात्** निर्दहतु । **इतीव** केवलवह्नेः दाहकत्वासंभवात् समिद्भिरेताभिर्दाहं कुर्वितीव । **समिधः समर्प्य** गुरुनिकटे निक्षिप्य **गुरोः** सान्दीपिनो **गृहं** उपेयतुः प्रापतुः । '**इतीव समिधः समर्प्य**' इत्यनेन समित्समर्पणादिना गुरुत्वेन वर्णनं नावयोर्ज्ञानाय किन्तु तवैव ज्ञानाभिवृद्ध्य इति सूचितम् । विद्याभ्यासव्याजेन तस्य गुरोर्मोक्षमेव दातुं गताविति भावः ॥ २९ ॥

**अथो चतुःषष्टिदिनैः स[३] तावत् कलाः प्रजग्राह बलश्च धीमान् ।**
**गुरोस्ततोऽप्यल्पदिनैर्यदासां सकृत् समुच्चारणमप्यशक्यम् ॥३०॥**

**व्या : अथो इति** । **यत्** यस्मात् कारणात् । **ततोऽपि** चतुःषष्टिदिनेभ्योऽपि **अल्पदिनैः** चतुःपञ्चदिवसैः **आसां** वेदादिचतुःषष्टिकलानां **सकृदेकवारं**

---

१ सूर्यमन्त्रः ।

२ धर्मो हि सर्वाविदुषामपि दैवतानां प्राप्ते नरेषु जनने नरवत् प्रवृत्तिः ।
ज्ञानादिगूहनमुताध्ययनादिरत्र तज्ज्ञापनार्थमवसद्भगवान् गुरौ च ॥
- इति महाभारततात्पर्यनिर्णये (१४/४)

३ सन्ततं चिन्तयेत् कण्ठं भास्वत्कौस्तुभभासकम् ।
वैकुण्ठस्याखिला वेदा उद्गीर्यन्तेऽनिशं यतः ॥ - इति द्वादशस्तोत्रे ।

समुच्चारणमपि गुरोरशक्यम् । अथो तस्मात् कारणात् स कृष्णः [१]चतुःषष्टिदिनैः तावत् कलाः प्रजग्राह गृहीतवान् । धीमान् बलश्च बलरामश्च प्रजग्राह । गुर्वशक्त्यैव तावन्ति दिनानि लग्नानि । न शिष्ययोरशक्त्येति भावः ॥ ३० ॥

**गुरुं ततोऽपृच्छदुपायनं दिशन् सुतं ययाचे विमलीकृतान्वयः ।**
**मुहुर्मुरारेः सदयावलोकनैस्तमप्यवद्यात् परिपालयन्निव ॥३१॥**

**व्या : गुरुमिति ।** **ततो** विद्याभ्यासानन्तरम् । **उपायनं** [२]गुरुदक्षिणां **दिशन्** श्रीकृष्णः **गुरुमपृच्छत्** किं देयमिति विचारितवान् । **मुरारेः** श्रीकृष्णस्य **मुहुः सदयावलोकनैः विमलीकृतः** पवित्रीकृतः **अन्वयः** वंशः यस्य स तथाभूतः गुरुः **तमपि** । पुरा मृतं बालकमपि । मुरारेः सदयावलोकनैः **अवद्याद्दोषात् परिपालयन्निव सुतं ययाचे** । आनीय दिशेति प्रार्थितवान् ॥ ३१ ॥

**सुतं विजानन्नपि मृत्युनीतं स शङ्खदैत्यं विनिहन्तुकामः ।**
**समुद्रमासाद्य निहत्य रक्षो लसद्यशःसम्मितमाप शङ्खम् ॥३२॥**

---

१ सर्वं तदमरश्रेष्ठौ सर्वविद्याप्रवर्तकौ ।
सकृन्निगदमात्रेण तौ सञ्जगृहतुर्नृप ॥
अहोरात्रैश्चतुःषष्ट्या संयातौ तावतीः कलाः ।
गुरुदक्षिणयाऽऽचार्यं छन्दयामासतुर्नृप ॥-भाग.(१०/४३/३५-३६)
एकं च तत्त्वतो ज्ञातुं विना सर्वज्ञतां नरः ।
न समर्थो महेन्द्रोऽपि तस्मात् सर्वत्र जिज्ञसेत् ॥ इति स्कान्दे । - गीताभाष्ये (४/९)

२ आचार्याय प्रियं धनमाहृत्य ... - इति तैत्तिरीयोपनिषत् ।
प्रियवयस्यशिरोगुरुवेदनामशमयत् सहजामपि दुःसहाम् ।
स विपिने विजने मुखवायुना श्रवणगोचरितेन कदाचन ॥ - म.वि.(३/५३)
साक्षादथोपनिषदो विभुरैतरेय्याः पाठच्छलेन विजनेऽर्थरसान् ब्रुवाणः ।
अध्यापकाय विततार विमोक्षबीजं गोविन्दभक्तिमुचितां गुरुदक्षिणां सः ॥
- मध्वविजये (३/५५)

**व्या :** सुतमिति । स कृष्णः सुतं गुरुसुतम् । **मृत्युनीतं** मृत्युना संहृतं **विजानन्नपि** शङ्खदैत्यं पञ्चजनं **विनिहन्तुकामः समुद्रमासाद्य रक्षः** शङ्खदैत्यं **निहत्य लसद्यशःसम्मितं** शोभनकीर्तिसदृशं **शङ्खं** पाञ्चजन्यम् **आप** ॥ ३२ ॥

**स पञ्चजनदेहस्थान् प्राणान् निष्कास्य पञ्च च ।**
**अपञ्चजनमातेने साकं तेन पयोनिधिम् ॥ ३३ ॥**

**व्या :** स इति । सः श्रीकृष्णः **पञ्चजनस्य** पञ्चजनाख्यासुरस्य **देहस्थान्** पञ्चसङ्ख्याकांश्च **प्राणान्** प्राणापानव्यानोदानसमानाख्यान् । **निष्कास्य** तद्देहतो बहिर्निष्कास्य । तेन दैत्येन **साकं पयोनिधिं** समुद्रम् **अपञ्चजनमातेने** चकार । न विद्यते पञ्चजनः पञ्चजनाख्यो दैत्यः यस्मिन्निति । न विद्यते पञ्च जनाः पञ्चसङ्ख्याका जनाः[१] प्राणादयो यस्मिन्निति व्युत्पत्त्या उभयोरपञ्चजनत्वं द्रष्टव्यम् ॥ ३३ ॥

**यमालयं[२] प्राप्य स कम्बुमुद्धृतं विभुः [३]प्रदध्मौ रिपुदर्पहारिणम् ।**
**गुरोः सुतं देहि न चेदियं दशा भवेत् तवापीति निदर्शयन्निव ॥३४॥**

---

१ 'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः' इति श्रुतिः ।
'प्राणादयो वाक्यशेषात्' - इति ब्रह्मसूत्रम् १/४/१३
'पञ्च पञ्चजनानाह ।' इति ब्रह्मसूत्रभाष्यम् ।

२ ततः संयमनीं नाम यमस्य दयितां पुरीम् ।
गत्वा जनार्दनः शङ्खं प्रदध्मौ सहलायुधः ॥
शङ्खनिर्ह्रादमाकर्ण्य प्रजासंयमनो यमः ।
तयोः सपर्यां महतीं चक्रे भक्त्युपबृंहितः ॥ - भागवते (१०/४३/४३-४४)

३ स पाञ्चजन्योऽच्युतवक्त्रवायुना भृशं सुपूर्णोदरनिःसृतध्वनिः ।
जगद्विरिञ्चेशसुरेन्द्रपूर्वकं प्रकम्पयामास युगात्यये यथा ॥
- भारते (द्रोण. ७३/५२), म.भा.ता.नि. (२६/९२)

**व्या :** यमालयमिति । प्रभुः स कृष्णः यमालयं यमगृहं गत्वा उद्धूतं रिपुदर्पहारिणम् । कम्बुं पाञ्चजन्यम् । मे गुरोः सान्दीपिनः सुतं देहि । न चेत् न ददासि चेत् । तवापीयं दशा वैरिणं हत्वा तदङ्गादस्थ्युद्धरणरूपाऽवस्था भवेत् । मदाज्ञां न करोषि चेत् त्वामपि हनिष्यामीत्यर्थः । इति [1]यमाय निदर्शयन्निव । स्वकरस्थशङ्खाख्यदृष्टान्तेन बोधयन्निव । प्रदध्मौ नादयामास ॥ ३४ ॥

**अमुष्य लक्ष्मीशगुरोः सुतस्य ध्रुवं विमुक्तिः करसङ्गताऽभूत् ।**
**त्वदागमात् प्रागपि तं जिहासुं विभुस्त्वमाज्ञापयसीश किं माम् ॥३५॥**

**व्या :** अमुष्येति । ईश श्रीकृष्ण । लक्ष्मीशस्य तव गुरोः सुतस्य अमुष्य बालस्य विमुक्तिः मोक्षः करसङ्गता करस्थाऽभूत् ध्रुवम् । अत एव त्वदागमात् प्रागपि पूर्वमपि तं तव गुरुपुत्रं जिहासुं हातुमिच्छुम् । विमानमारोप्य मोक्षं प्रति प्रस्थापयितुकाममित्यर्थः । मां विभुस्त्वं किमर्थमाज्ञापयसि[2] ॥३५॥

**इतीव तत्त्यागविशङ्कमानसो यमः समभ्यर्च्य सुतं समादिशत् ।**
**अलभ्यतद्दर्शनजातसम्भ्रमः प्रहृष्टरोमा प्रणमन् मुहुर्मुहुः ॥३६॥**

**व्या :** इतीवेति । इतीव इति मत्येव । गुरुपुत्रस्य त्यागे प्रत्यर्पणे विशङ्कमानसः निःशङ्कचित्तः । अलभ्यं तद्दर्शनं श्रीकृष्णदर्शनं तेन जातः संभ्रमो यस्य स तथोक्तः । प्रहृष्टरोमा मुहुर्मुहुः पुनः पुनः प्रणमन् यमः समभ्यर्च्य कृष्णमिति शेषः । सुतं गुरुसुतं समादिशत् ददौ[3] ॥ ३६ ॥

---

१ यमः संयमतामहम् । - गीता (१०/२९)

२ तत् क्षम्यतां स भगवान् पुरुषः पुराणो नारायणः स्वपुरुषैर्यदसत्कृतं नः ।
स्वानामहो नविदुषां रचिताञ्जलीनां क्षान्तिर्वरीयसि नमः पुरुषाय भूम्ने ॥
- भागवते (६/३/३१)

३ तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि न चिरात् पार्थ मय्यावेशितचेतसाम् ॥ - गीता (१२/७)

**सुतं समानीय ततोऽन्तकान्तिकात्**

**प्रदाय शौरिर्गुरवे स्वकां पुरीम् ।**

**उपेत्य पित्रोरपि दक्षिणामिव**

**प्रदर्शयामास निजं स्वविग्रहम् ॥३७॥**

**व्या :** सुतमिति । शौरिः श्रीकृष्णः । ततः अन्तकान्तिकात् । यमसमीपात् सुतं गुरुसुतं समानीय गुरवे प्रदाय दत्वा स्वकां मधुरामुपेत्य पित्रोरपि देवकीवसुदेवयोरपि दक्षिणामिव निजं स्वविग्रहं दर्शयामास । यथा मृतपुत्रदर्शनेन गुरोः प्रीतिरेवमेतावत्कालमदृष्टस्वविग्रहदर्शनेन पित्रोरपि प्रीतिरभूदिति भावः ॥ ३७ ॥

**राजधानी जयति सा भोजवृष्ण्यन्धकाश्रिता[1] ।**

**राजराजपदत्राता राजा यत्र रमापतिः ॥ ३८ ॥**

**व्या :** राजधानीति । भोजाः वृष्णयः अन्धकाः यादवविशेषाः तैराश्रिता सा राजधानी । राजानो धीयन्तेऽस्यामिति राजधानी । मधुरा जयति उत्कृष्टतया वर्तते । ननु नगरीमात्रस्य राजाश्रयत्वेन राजधानीत्वात् कथमुत्कर्षोऽस्या इत्यत आह । राजराजस्य कुबेरस्य पदं स्थानम् । तस्य त्राता रक्षकः । राजराजस्यापि राजेत्यर्थः । रमापतिः श्रीकृष्णः यत्र यस्यां पुर्यां राजा अतः सा जयतीति सम्बन्धः ॥ ३८ ॥

**उग्रसेनो विजयते स्वर्गिभिर्गीतवैभवः ।**

**अग्रेसरा यद्ध्वजिन्यामुग्रा रामादयो द्विषाम् ॥ ३९ ॥**

---

१ राजधानी जयति सा गजगह्वरसञ्ज्ञिता ।
यत्र भान्ति गजा माध्वराद्धान्तधरणीधराः ॥ - तीर्थप्रबन्धे (३/१७) इतिवत्

**व्या : उग्रसेन** इति । **यद्ध्वजिन्यां** यस्योग्रसेनस्य ध्वजिन्यां वाहिन्याम् । 'ध्वजिनी वाहिनी चमूः' इत्यमरः । **द्विषां** शत्रूणाम् **उग्रा** भयङ्कराः **रामादयो** बलरामादयो **अग्रेसराः** पुरःसराः । **स्वर्गिभिर्देवैर्गीतवैभवः** । एवं चोग्रा सेना यस्येति व्युत्पत्त्या अन्वर्थनामा स **उग्रसेनो** विजयते ॥ ३९ ॥

**हृदयज्ञा राजनीतेः सभायां [1]शार्ङ्गधन्वनः ।**
**मन्त्रिणो मन्त्रतन्त्रज्ञा मन्त्रयन्तीत्थमन्वहम् ॥ ४० ॥**

इदानीं काव्याङ्गत्वेन वर्णनीयं **मन्त्रिमन्त्र**प्रकारं वर्णयति । **हृदयज्ञा** इति । **राजनीतेः** नीतिशास्त्रस्य हृदयज्ञाः रहस्यज्ञाः । मन्त्रः षाड्गुण्यचिन्तनम् । तन्त्रं सामाद्युपायः । तच्च जानन्तीति तथोक्ताः **मन्त्रिणः** प्रधानपुरुषाः । **शार्ङ्गधन्वनः** श्रीकृष्णस्य **सभायाम्** इत्थं वक्ष्यमाणप्रकारेण । अन्वहं प्रतिदिनम् । **मन्त्रयन्ति** आलोचयन्ति ॥ ४० ॥

**रणे यदाज्ञाशरशङ्किचित्ता भटाः परावृत्त्य न लक्षयन्ति ।**
**जयाङ्गनां वा दिविजाङ्गनां वा स्पृशन्ति राजा विजयी स एव ॥४१॥**

**व्या : रण** इति । **यस्य राज्ञः** । आज्ञैव शरस्तं शङ्कत इति तथोक्तं **चित्तं** येषां ते तथोक्ताः । युद्धात् परावृत्य गमने शिरश्छेदं करिष्यतीति भीता इत्यर्थः । **भटाः** भृत्याः **परावृत्त्य न लक्षयन्ति** पृष्ठतो न पश्यन्ति । **जयाङ्गनां वा** जय एवाङ्गना तां वा **दिविजाङ्गनां वा** देवलोकस्त्रियं वा **स्पृशन्ति** । करेण गृह्णन्ति । शत्रुं विजयन्ते वा । ''हतो वा प्राप्स्यसि स्वर्गम्''[2] इति वचनात् । युद्धाभिमुख्येन मरणद्वारा स्वर्गं गच्छन्ति वेति भावः । **स एव राजा विजयी** विजयशीलवान् । राज्ञः प्रभुशक्तिरावश्यकीति भावः ॥ ४१ ॥

---

१ 'शार्ङ्गधन्वा गदाधरः' - इति विष्णुसहस्रनामसु

२ गीता २/३७

**चारेण यो वेत्ति रिपोर्विचारं सदा रणोपस्करणं युनक्ति ।**
**अगम्यभूमिः परिखादिनाऽन्यैः स एव राजा विजयी न चान्यः ॥४२॥**

**व्या :** चारेणेति । यः **चारेण** गूढभृत्येन[1] **रिपोर्विचारं** मन्त्रं **वेत्ति** । यः **सदा रणोपस्करणम्** युद्धसाधनं अश्वरथादिकं **युनक्ति** योजयति । सम्पादयतीत्यर्थः । यो राजा **अन्यैः** शत्रुभिः **परिखादिनाऽगम्या** अप्राप्या **भूमिः** स्वस्थानं यस्य स तथोक्तः । **स एव** तादृश एव **राजा विजयी** अन्यो विजयी **न** चेत्यर्थः । विजिगीषुणा परवृत्तान्तज्ञेन स्वशक्त्युपचयवताऽपि भाव्यमिति भावः ॥ ४२ ॥

**स्वसंसदि प्रौढजनेषु मन्त्रिवरेषु नीत्यागमतत्त्ववित्सु ।**
**विचार्य कुर्याद्द्विषतामुपायैर्मिथो विभेदं सुखभाक् स भूपः ॥४३॥**

**व्या :** मन्त्रोपायौ राज्ञामवश्यापेक्षितावित्याहुः । स्वसंसदीति । यः **स्वसंसदि** स्वसभायाम् । **प्रौढजनेषु** पुरातनवृत्तान्तज्ञेषु **मन्त्रिवरेषु** अमात्यश्रेष्ठेषु **नीत्यागमस्य** नीतिशास्त्रस्य **तत्त्ववित्सु विचार्य** कार्याकार्यं मन्त्रयित्वा **उपायैः** धनदानाद्युपायैः । **द्विषतां मिथो विभेदं** परस्परबुद्धिवैषम्यं **कुर्यात्** स **भूपः सुखभाक्** ॥ ४३ ॥

**उत्साहसङ्गता[2] नीतिः सूते नरवरोचितौ ।**
**कीर्तिप्रतापौ राजेन्द्र तत्रालस्यं प्रतीपकृत् ॥ ४४ ॥**

**व्या :** नीत्युत्साहौ राज्ञाऽवश्यापेक्षितावित्येतच्छब्दकौशल्येनैव प्रदर्शयति। **उत्साहेति** । हे **राजेन्द्र** उग्रसेन । **उत्साहेन** यात्रादौ उद्योगेन **सङ्गता** सम्बद्धा **नीतिः** मन्त्रशक्तिः । **नरवरोचितौ** राजयोग्यौ **कीर्तिप्रतापौ सूते** । ऋतुकाले

---

१ 'चारैः पश्यन्ति राजानः' - इति भारते(५/३४/३५)

२ प्रकाशतपनाह्लादनशक्तयस्तिस्रः आह्लादनं वृष्ट्या उत्साहमन्त्रप्रभुत्वशक्तयश्च ।
- इति मध्वविजयभावप्रकाशिकायाम् (१४/१४)

पुरुषसङ्गतस्त्रीवत् उत्साहसङ्गतैव नीतिः फलतीति भावः । उत्साहशब्दस्य पुल्लिङ्गत्वात् नीतिशब्दस्य स्त्रीलिङ्गत्वाच्च तयोः स्त्रीपुरुषसाम्यम् । एवं कीर्तिशब्दस्य स्त्रीलिङ्गत्वात् प्रतापशब्दस्य पुल्लिङ्गत्वात् तयोः कुमारीकुमारसाम्यम् । प्रायः स्त्रीणां स्त्र्यपत्यापेक्षित्वात् पुंसः पुमपत्यापेक्षित्वाच्च नीत्या कीर्तिः उत्साहात् प्रताप इति विवेको द्रष्टव्यः । तत्र नीत्याम् आलस्यम् अलसता अनुत्साह इत्यर्थः । **प्रतीपकृत्** विपरीतकारी क्लीबसङ्गता नारीव आलस्ययुक्ता नीतिर्न फलति । वाचा इदं कर्तव्यं न कर्तव्यमिति नीतिपाठं करोति । तादृशं प्रयत्नं न कुरुते चेत् कार्यसिद्धिर्न भवतीति भावः । **आलस्यशब्दस्य** नपुंसकत्वात् क्लीबत्वं द्रष्टव्यम् ।। ४४ ।।

**सामाद्युपायावसरज्ञानशून्यस्य शूरता ।**
**आम्नायार्थापरिस्फूर्तेः सामर्थ्यमिव वादिनः ।। ४५ ।।**

**व्या : सामाद्युपायेति** । सामादिचतुरुपायानां **अवसरः** प्रयोगकालः तस्य **ज्ञानं** तेन **शून्यः** तस्य राज्ञः **शूरता** शौर्यम् । **आम्नायानां** ऋगादिचतुर्वेदानाम् **अर्थस्य अपरिस्फूर्तेः** । अस्मिन् विषये ऋग्वाक्यं प्रयोक्तव्यं अस्मिन् यजुर्वेदादिवाक्यमिति स्फूर्तिरहितस्य **वादिनः सामर्थ्यमिव** । यथायं वादी [१]अप्राप्तकालत्वादिना निगृह्यते तथाऽयमपि राजा शत्रुभिः निगृह्यत इति भावः ।। ४५ ।।

**यः सन्धिमुख्यामलनीतिकालमज्ञान्यविज्ञाय रणं विधत्ते ।**
**षण्निग्रहाणां समयानभिज्ञवादीव संसत्सु स यात्यकीर्तिम् ।। ४६ ।।**

**व्या : य इति** । **अज्ञानी** अविवेकी यो राजा । **सन्धिः**[२] सन्धानं **मुख्यो** यस्याः विग्रहयानासनद्वैधीभावसंश्रयणलक्षणषड्गुणात्मिकायाः सा सन्धिमुख्या । सा

१ 'क्रमविपर्यासो अप्राप्तकालम् । यथा कृतकत्वादनित्यः शब्द इत्यादि' ।-इति प्रमाणपद्धतौ ।

२ सन्धिं च विग्रहं चैव यानमासनमेव च ।
द्वैधीभावं संश्रयं च षड्गुणान् कवयो विदुः ।।
- इति म.वि.भावप्रकाशिकायाम् (१४/१४)

चासावमलनीतिश्च तस्याः **कालं** सन्ध्यादिषड्गुणप्रयोगकालम् । 'सन्धिर्नो विग्रहो यानमासनं द्वैधमाश्रयः । षड्गुणाः' इत्यमरः । **अविज्ञाय** । अन्यकालेऽन्यं प्रयुज्य **रणं** युद्धं **विधत्ते** । **सः संसत्सु** विद्वत्सभासु । **षट्** च ते **निग्रहाः** संवादानुक्तविरोधासङ्गतिन्यूनाधिक्ये चेति निग्रहस्थानानि[1] । तेषां समयः उद्भावनावसरः तस्यानभिज्ञो यो वादी स इव संसत्सु **अकीर्तिम्** अपकार्तिं याति । एकस्मिन् निग्रहस्थाने प्राप्ते तदनुद्भाव्य निग्रहान्तरं समुद्भावयन् निरनुयोज्यानुयोगेन[2] स वादी यथा प्रतिवादिना निगृह्यते । एवं स्वासामर्थ्यदशायां प्राप्तं सन्धिमकृत्वा यः विग्रहादिकं कुरुते सोऽपि शत्रुणा निगृह्यत इति भावः ॥४६॥

**नानाप्रकारैर्दशदिक्षु शत्रून् यो नैव जेतुं यतते क्षितीशः ।**
**बतावशीभूतदशेन्द्रियौघो व्रतीव नासौ सुखभाक् कदापि ॥४७॥**

---

१ विरोधश्च तथाऽऽधिक्यं न्यूनताऽसङ्गतिस्तथा ।
निग्रहा एत एव स्युः संवादानुक्तिसंयुताः ॥
- इति विष्णुतत्त्वविनिर्णयोद्धृतब्रह्मतर्कवचनम् ।

२ तत्र योग्यताभावो **विरोधः** । आकाङ्क्षाविरहोऽसङ्गतिः । अवश्यवक्तव्यस्यैकदेशमात्रवचनं **न्यूनम्** । सन्निध्यभावविशेषः । आकाङ्क्षितस्यैवान्येन कृतकार्यस्य वचनम् **आधिक्यम्** ।... विप्रतिपन्नप्रमेयाङ्गीकारः **संवादः** । परबोधनार्थस्यावश्यंवक्तव्यस्यावचनम् **अनुक्तिः** । - प्रमाणपद्धतौ

'अतन्निग्रहप्राप्तौ तन्निग्रहोद्भावनं **निरनुयोज्यानुयोगः** । स चतुर्बिधः छलम्, जातिः । हान्याद्यामास, अप्राप्तकाले ग्रहणं चेति' । - इति प्रमाणपद्धतौ ।
विरोधासङ्गतिन्यूनतूष्णीम्भावादिकैर्जितः ॥ - कथालक्षणे(१८)
विरोधश्च तथाऽधिक्यं न्यूनताऽसङ्गतिस्तथा ।
उपपत्तिदोषा विज्ञेया विरोधश्च स्वतोऽन्यतः ॥
जनकस्यात्ययो जातिः स्वस्य वाऽन्यस्य वा भवेत् ।
जनकं प्रमाणमुदिष्टं स्वस्यार्थस्य प्रकाशनात् ।
निग्रहा एत एव स्युः संवादानुक्तिसंयुताः ॥ - विष्णुतत्त्वविनिर्णये

**व्या : नानेति** । यः **क्षितीशः नानाप्रकारैः** सामादिचतुरुपायैः । **दशदिक्षु स्थितान् शत्रून् जेतुं नैव यतते । असौ** राजा **अवशीभूतः** अजितः **दशेन्द्रियाणां** घ्राणरसनचक्षुस्त्वक्श्रोत्रवाक्पाणिपादपायूपस्थानां ओघः समूहो येन सः । **व्रतीव** सन्न्यासीव । **कदापि सुखभाक् न** भवति **बत** । यथा रसनादिज्ञानेन्द्रियाणां उपस्थादिकर्मेन्द्रियाणां च जयाभावे अभक्ष्यभक्षणागम्यागमनादिदुष्कर्मप्राप्त्या इह अपयशसा परत्र नरकप्राप्त्या च यथा व्रती **दुःखभागी** तथेति भावः ॥४७॥

**यत्सैन्यकुन्ताः स्वसपत्नचिन्तां शार्दूलदन्ता इव साधयन्ति ।**
**स्वराष्ट्रसन्तोषमपि स्वतन्तौ तदीयदंष्ट्रा इव सोऽवनीशः ॥४८॥**

**व्या : यदिति** । **यस्य** राज्ञः **सैन्यकुन्ताः** सेनास्थभटानां कुन्ताख्यायुधानि । **शार्दूलस्य** व्याघ्रस्य **दन्ता इव** । **स्वसपत्नानां** स्वशत्रूणां **चिन्तां** मनोव्यथां **साधयन्ति** । एतादृशवीरभटोपेतो राजा किमस्मान्करिष्यतीति व्याकुलान् कुर्वन्तीत्यर्थः । **स्वतन्तौ** स्वसन्ताने । **तदीयाः** शार्दूलसम्बन्धिन्यो **दंष्ट्रा इव स्वराष्ट्रस्य सन्तोषमपि** साधयन्ति । यथा क्रूरा अपि शार्दूलदंष्ट्राः स्वशिशुविषये सुखकराः । ''व्याघ्री हरेद्यथा पुत्रं दंष्ट्राभ्यां न च पीडयेत्''[1] इति वचनात् । एवमस्माकं राजभटकरस्थकुन्तेषु सत्सु न शत्रुभ्यो भयमस्तीति विवृतगृहद्वाराः सन्तः राष्ट्रेषु सुखनिद्रां कुर्वन्तीति भावः । स एव तादृश **एवावनीशः** राजा नान्यः प्रजाक्षोभकृद्भृत्योपेत इत्यर्थः ॥ ४८ ॥

**राजन् मुक्तोऽपि ते बाणो निहन्ति दिशि दिश्यरीन् ।**
**गुणसङ्गस्यार्जवस्य[2] वंशस्य हि फलं च तत् ॥ ४९ ॥**

---

१ पाणिनीयशिक्षायाम् ।
यथा व्याघ्री हरेत् पोतं दंष्ट्राभ्यां न तु पीडायेत् ।
भीता पतनभेदाभ्यां तद्वद्वर्णान् प्रयोजयेत् ॥
- इति सुमध्वविजयभावप्रकाशिकायाम् ।(१२/३१)

२ आर्जवम् । - मनोवाक्कायकर्मणामवैपरीत्यम् । - इति गीताभाष्यवचनम् (१३/८)

**व्या : राजन्निति** । हे **राजन्** उग्रसेन । **ते** तव **बाणः** शरः । त्वया **मुक्तोऽपि दिशि दिशि** । ते तव **अरीन् निहंति** नाशयति । मया परित्यक्तस्य मत्कार्यकारित्वं कथमुक्तमित्यत आह । **गुणीति** । **गुणो** मौर्वी सोऽस्यास्तीति गुणी चापः तेन **सङ्गः** सम्बन्धस्तस्य । पुरुषपक्षे गुणिपुरुषसहवासलक्षणसंसर्गस्येत्यर्थः । **आर्जवस्य** अवक्रगतेः । पुरुषपक्षे अवक्रचेतस इत्यर्थः। **वंशस्य** वंशस्वरूपस्य। शरस्य वंशविशेषजातत्वादिति भावः । पुरुषपक्षे कुलीनस्येत्यर्थः । तत् परित्यक्तेऽपि स्वामिकार्यकरत्वं **फलं हि** । सज्जनसंसर्गशुद्धमनस्कत्वकुलीनत्वादिगुणयुक्तः पुरुषः स्वस्वामिना परित्यक्तोऽपि स्वामिकार्यं साधयतीत्यत्र शरो दृष्टान्त इत्यतो तादृशपुरुषाः राज्ञा सम्पादनीया इति भावः ॥ ४९ ॥

**पान्थान् समन्ताद्दिवसे दिनेशप्रख्यो रजन्यां रजनीशकल्पः ।**
**यस्तस्करेभ्योऽवति दुष्कराज्ञः स एव कीर्त्यैति दिशामुपान्तम् ॥५०॥**

**व्या : पान्थानिति** । **दुष्करा** कर्तुमशक्या । **आज्ञा** शासनम् । यस्य सः । दुष्कराज्ञः । उग्रशासनो यो राजा **दिवसे**ऽह्नि **दिनेशप्रख्यः** सूर्यसमः सन् सर्वतः **पान्थान्** पथिकान् तस्करेभ्यः चोरेभ्योऽवति रक्षति । यथा रात्रौ सञ्चरतां **चोराणाम्** उदितः सूर्यः निवर्तकः तथा **तस्करभयं** परिहृत्य रक्षतीत्यर्थः । **रजन्यां** रात्रौ **रजनीशकल्पः** चन्द्रसदृशः सन् तस्करेभ्योऽवति । यथा तमसि सञ्चरन्तः चोराः चन्द्रोदये सति बिभ्यन्ति । तथा चण्डशासनात् राज्ञः रात्रावपि चोरा बिभ्यन्तीति भावः । **स एव** राजा [१]सूर्याचन्द्रमसौ स्वप्रभयेव **कीर्त्या** एव स्वयशसा **दिशामुपान्तं** समीपं **एति** गच्छति । एवं रक्षिताः पान्थाः दिशि दिशि तं कीर्तयन्तीति भावः ॥ ५० ॥

---

१ विधौ प्रशान्तेऽभ्युदिते जनोऽयमभुङ्क्त भोगान् पुनरुष्णभानौ ।
करोति धर्मांश्चकितस्तथा तद्बिभेति सर्वः परुषान्न शान्तात् ॥ - रु.वि.(२/२२)

**न्यायं सङ्गृह्य नृपतिरन्यायं यस्तु सन्त्यजेत् ।**
**पदे पदे तमन्यायः सन्नम्याभ्यर्थयिष्यते ॥ ५१ ॥**

**व्या :** न्यायमिति । यः **नृपतिः न्यायं** व्यवहारपदेषु न्यायं **सङ्गृह्य अन्यायं** संत्यजेत् । अन्यायः अन्येभ्यः परिपालितन्यायेभ्यः पौरजनपदेभ्यः आयः द्रव्यप्राप्तिः राज्ञा त्यक्तः स एव न्याय इति ध्वनिः । तं नृपतिं पदेपदे **सन्नम्य** नत्वा **अभ्यर्थयिष्यते** मां गृहाणेति प्रार्थयिष्यते । कृतोपकाराः ते प्रार्थनपूर्वकं द्रव्यं दिशतीति भावः । यथा राज्ञा परित्यक्तः पुरुषः मां परिपालयेति नत्वा प्रार्थयते एवं परित्यक्तः स अन्यायः तमभ्यर्थयते इत्यापातचमत्कारः ॥ ५१ ॥

**दिने दिनेशप्रख्यो यो रात्रौ रात्रीशसन्निभः ।**
**कापथेभ्यः प्रजा रुन्धे स राजा स विशामिनः ॥ ५२ ॥**

**व्या :** दिन इति । दिनेऽह्नि **दिनेशप्रख्यः** सूर्यसदृशः । **रात्रौ रात्रीशसन्निभः** । चन्द्रसमः । यो **राजा प्रजाः कापथेभ्यः** कुत्सितमार्गेभ्यः अगम्यागमनादिश्रुतिनिषिद्धमार्गेभ्यः । 'व्यध्वो दुरध्वो विपथः कदध्वा कापथः समाः' इत्यमरः। **रुन्धे** निरुणद्धि । यथा सूर्याचन्द्रमसौ प्रकाशेन दुर्मार्गप्रतिबन्धकौ तथा दण्डनीत्या यो राजा दुर्मार्गं रुणद्धीत्यर्थः । **सः विशां** प्रजानां राजा **इन**श्च स्वामी च । चन्द्रसूर्यसाम्यात् चन्द्रसूर्यवाचकौ राजेनशब्दौ अस्याप्युचितावविति भावः ॥५२॥

**प्रायेण धनवानेव जायते क्लेशवानपि ।**
**फलवानेव हि तरुः कण्टकैरुपरुद्ध्यते ॥ ५३ ॥**

**व्या : प्रायेणेति । प्रायेण** प्रायशः **धनवानेव** द्रव्यवानेव **प्रेशवानपि** रक्षणपोषणप्रयासवानपि **जायते । फलवानेव हि तरु**र्वृक्षः **कण्टकै**रावृतिरूपतया फलरक्षार्थं वृक्षस्य परितो निक्षिप्तै**रुपरुद्ध्यते** ॥ ५३ ॥

**काले काले धनं नूनमर्थिभ्यो वितरेद्धि यः ।**
**मुच्यते सर्वदुःखेभ्यः कण्टकेभ्य इव द्रुमः ॥ ५४ ॥**

**व्या :** काले काल इति । यः काले कालेऽर्थिभ्यः धनं वितरेद्धि दद्याद्धि। स राजा दुःखेभ्यो नूनं निश्चयेन मुच्यते । कथमिव कण्टकेभ्यो परितो निक्षिप्तेभ्यः द्रुम इव उपात्तफलो वृक्ष इव । राज्ञा दानशूरेण भवितव्यम् । अन्यथा पूर्वपद्योक्तानर्थप्रसङ्ग इत्यर्थः ॥ ५४ ॥

**वित्तैः कीर्तिं शरैः शौर्यं प्रत्यहं यः समार्जयेत् ।**
**स एव धनवान् सम्राडन्यं मन्ये ह्यकिञ्चनम् ॥ ५५ ॥**

**व्या :** वित्तैरिति यः वित्तैः न्यायार्जितधनैः । कीर्तिं दानदेवतासन्तर्पणादिना यशः। शरैर्बाणैः शौर्यम् । शत्रुसंहरणादिना प्रतापम् । समार्जयेत् सम्पादयेत्। स एव सम्राट् सार्वभौमो नृपः धनवान् । अन्यम् अशूरम् अदत्तधनं नृपं अकिञ्चनं दरिद्रं मन्ये । कीर्तिप्रतापावेव राज्ञो धनम् । न वणिजामिव धनं धनमिति भावः ॥ ५५ ॥

**अर्थिभ्योऽर्थमनादिश्य यस्तन्निक्षिपति क्षितौ ।**
**मृत्स्नां स्वयोग्यामादाय वित्तं भूम्यै प्रदत्तवान् ॥ ५६ ॥**

**व्या :** अर्थिभ्य इति । यः अर्थिभ्यः अर्थं धनमनादिश्यादत्वा तं अर्थं क्षितौ निक्षिपति भूमौ गर्तं कृत्वा स्थापयति । सः गर्तकरणसमय एव । स्वयोग्यां मृत्स्नां मृत्तिकामादाय गृहीत्वा । गर्तकर्ता पुमान् स्वाभिमुख्येन गर्तात् मृदम् उत्क्षिपतीति लोकसिद्धम् । वित्तं भूम्यै वसुन्धरायै दत्तवान् । एतादृशलुब्धमुखे धूलीपातो भवतीति भावः ॥ ५६ ॥

**सर्वेशे भुवि यस्य भक्तिरमला नैवैतदाज्ञात्मके**
**धर्मे वा न रतिस्तदाश्रितजने सन्मानलेशोऽपि वा ।**

**दुष्टप्रीतिरतस्य निष्ठुरगिरो दुर्मन्त्रदत्तश्रुतेः**
**साम्राज्यं निजवंशपांसनकृतेः कंसस्य संसारवत् ॥५७॥**

**व्या :** ऐहिकसाम्राज्योचितां नीतिमुक्त्वा ऐहिकपारत्रिकसाम्राज्योचितां नीतिं वर्णयति । **सर्वेश** इति । **यस्य** राज्ञः **भुवि सर्वेशे** श्रीकृष्णे । **अमला** निर्मला **भक्तिर्नैव** नास्त्येव । एतस्य श्रीकृष्णस्य [1]**आज्ञात्मके धर्मे न रतिः** । तदाश्रितजने सज्जने **सन्मानलेशोऽपि वा** नास्ति । **दुष्टप्रीतिरतस्य** दुर्जनस्नेहरतस्य । **निष्ठुरगिरः** परुषवाक्यस्य । **दुर्मन्त्रे** पिशुनोक्तदुरालोचने । **दत्तश्रुतेः** दत्तकर्णस्य । राज्ञः **साम्राज्यम्** । **निजवंशपांसनकृतेः** निजकुलमलिनकारिव्यापारस्य । **कंसस्य संसारवत्** कंससाम्राज्यवत् कुलनाशकृदित्यर्थः । ते दुर्गुणाः कंसे स्पष्टा एव एवं वर्तमानोभूयः कंसतुल्य इति भावः ॥ ५७ ॥

**विष्णुभक्तिरतं भूपं नैव त्यक्ष्यति तत्प्रिया ।**
**तद्द्वेषिणि न सा स्थातुमुत्सहेत पतिव्रता[2] ॥ ५८ ॥**

**व्या : विष्णुभक्तिरतमिति । विष्णुभक्तिरतं भूपं** भूपतिम् । **तस्य** विष्णोः **प्रिया** अङ्गना लक्ष्मीः **नैव त्यक्ष्यति** । नोज्झत्येव । **तद्द्वेषिणि** तस्मिन् विष्णौ द्वेषोऽस्यास्तीति तद्द्वेषी तस्मिन् । पतिव्रता **सा** लक्ष्मीः **स्थातुं नोत्सहते** । **पतिव्रता** नारी स्वभर्तृद्वेषिनिकटे **न** तिष्ठतीति लोकसिद्धमिति भावः । अनेन

---

१ 'श्रुतिस्मृती हरेराज्ञे' इत्युक्तत्वात् ।

२ क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ -इति गीता । (१२/५)
क्लेशोऽधिकतरस्तेषां पृथक् श्रियमुपासताम् । -इति गीताभाष्ये । (१२/५)
धर्मनित्ये महाबुद्धौ ब्रह्मण्ये सत्यवादिनि ।
प्रश्रिते दानशीले च सदैव निवसाम्यहम् ॥ -इति मोक्षधर्मेषु । (२२८/२६)
विष्णुना सहिता ध्याता सा हि तुष्टिं परां व्रजेत् ॥
- इति गीतातात्पर्योद्धृतपरमश्रुतिवचनम् ॥ (१२/३)

''सर्वेशे भुवि यस्य भक्तिरमला'' इति पूर्वपद्योक्तविष्णुभक्तेरावश्यकत्वमुपपादितम् ।। ५८ ।।

**धर्मद्वितीयं नृपतिं धर्मोऽन्यो नैव पीडयेत् ।**[1]
**अन्यथाऽप्रतिमल्लोऽसौ सान्वयं संहरिष्यति ।। ५९ ।।**

**व्या :** धर्मेति । **धर्मद्वितीयं** वैष्णवधर्मसहायं **नृपतिमन्यो धर्मः** यमः **न पीडयेदेव** । महामल्ले स्वसमीपवर्तिनि सति यथा न मल्लान्तराद्भयम् । तथा सकलपापपरिहारकवैष्णवधर्मोपेतस्य न यमाख्यधर्मात् भयमिति भावः । अन्यथा वैष्णवधर्मसहायाभावेऽ**प्रतिमल्लः** स्वभीषकवैष्णवधर्माख्यप्रतिभटरहितः **असौ** यमः **सान्वयं** सकुलं नृपतिं **संहरिष्यति** । अनेन प्राक्तनपद्योक्तधर्मरतेरावश्यकत्वमुपपादितम् ।। ५९ ।।

**विष्णोरर्भकसङ्काशान् वैष्णवान् यस्तु निन्दति ।**
**तत्रापि न स्थिरा श्रीः स्यात् पुत्रद्वेषिणि मातृवत्**[2] **।। ६० ।।**

**व्या :** विष्णोरिति । यस्तु राजा **विष्णोरर्भकसंकाशान्** शिशुसमान् **वैष्णवान् निन्दति** । तत्र तस्मिन्नपि राज्ञि । विष्णुद्वेषिणीव सा **श्रीः** लक्ष्मीः **पुत्रद्वेपिणि मातृवत् स्थिरा न** स्यात् । विष्ण्वर्भकसमानानां तेषां विष्णुपत्न्या लक्ष्म्या अपि पुत्रसमत्वादिति भावः । अनेन पूर्वोक्तवैष्णवसम्मानः समर्थितो भवति ।।६०।।

**दुष्टप्रीतिरतं भूपं दोषोऽपि स्पृशति क्रमात् ।**
**दोषिणं गुणलुब्धा**[3]**श्रीर्नाश्रयेदिति मे मतिः ।। ६१ ।।**

---

१ धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः ।। -इति भारते (वन/३१३/१२८)

२ हरिरेव जगत्पितृमातृगतिः - द्वादशस्तोत्रे
माता च कमला देवी पिता देवो जनार्दनः ।
बान्धवा विष्णुभक्ताश्च स्वदेशो भुवनत्रयम् ।।

३ विलोकयन्ती निरवद्यमात्मनः पदं ध्रुवं चाव्यभिचारिसद्गुणम् ।

**व्या :** दुष्टेति। दुष्टेषु **प्रीतिरतं** स्नेहरतं **भूपं क्रमात् दोषोऽपि स्पृशति**। 'संसर्गजा दोषगुणा' इति वचनात् स्पर्शं करिष्यति। सोऽपि क्रमेण **दोषी** भविष्यतीति भावः। **गुणलुब्धा** विनयादिगुणलुब्धा। **श्रीर्महालक्ष्मीर्दोषिणं नाश्रयेदिति मे मतिः**। अनेन प्रागुक्तदुर्जनसंसर्गदोषस्य हेयत्वमुपपादितम्॥ ६१॥

**कठोरगिरमुत्सृज्य [1]वृणोत्यपरमिन्दिरा।**
**घनं पुरोग्रस्तनिताद्विहायेव तटिद्दिशः॥ ६२॥**

**व्या :** कठोरेति। **इन्दिरा** लक्ष्मीः **कठोरगिरं** निष्ठुरभाषिणम्। नृपमुत्सृज्य। **अपरं** मृदुवचनं **वृणोति**। तत्कथमित्यत आह। **तटिदिति**। तटित् विद्युत्। कठोरमेघस्तनितात्। पुरा पूर्वमेव। **घनं** मेघं **विहाय**। **दिश इव** दिगन्तानिव। भाविनिर्घोषसूचकतया तत्पूर्वं विद्युत्स्फुरणं भवतीति प्रसिद्धिः। तस्याश्च कान्तिरूपतया श्रीसाम्यम्। अनेन पूर्वोक्तनिष्ठुरवचनस्य हेयत्वमुपपादितम्॥६२॥

---

गन्धर्वयक्षासुरसिद्धचारणत्रैविष्टपेयादिषु नान्वविन्दत॥
नूनं तपो यस्य न मन्युनिर्जयो ज्ञानं क्वचित् तच्च न सङ्गवर्जितम्।
कश्चिन्महांस्तस्य न कामनिर्जयः स ईश्वरः किं परतो व्यपाश्रयः॥
धर्मः क्वचित् तस्य न भूतसौहृदं त्यागः क्वचित् तच्च न मुक्तिकारणम्।
वीर्यं न पुंसोऽस्त्यजवेगनिष्कृतं न हि द्वितीयो गुणसङ्गवर्जितः॥
क्वचिच्चिरायुर्न हि शीलमङ्गलं क्वचित् तदप्यस्ति न वेद्यमायुषः।
यत्रोभयं कुत्र च सोऽप्यमङ्गलः सुमङ्गलः कश्चन काङ्क्षते हि माम्॥
एवं विमृश्याव्यभिचारिसद्गुणं परं निजैकाश्रयिसद्गुणाश्रयम्।
वव्रे वरं सर्वगुणैरपेक्षितं रमा मुकुन्दं निरपेक्षमीप्सितम्॥
- भागवते (८/८/१८-२२)

१ अभ्यावहति कल्याणं विविधं वाक् सुभाषिता।
सैव दुर्भाषिता राजन्ननर्थायोपपद्यते॥ - भारते (५/३४/३८)
लाक्ष्मीवथसति जिह्वाग्रे जिह्वाग्रे मित्रबान्धवाः।
जिह्वाग्रे बन्धनं प्राप्तं जिह्वाग्रे मरणं ध्रुवम्॥ - सुभाषितम्

**सन्मन्त्रशीर्णो दुर्मन्त्रः प्रयोक्तारं क्षिणोति हि ।**[1]
**यथा नृसिंहसूर्याग्रे भैरवः कैरवद्युतिः ॥ ६३ ॥**

**व्या : सन्मन्त्रेति । सन्मन्त्रशीर्णः** समीचीनालोचनेन क्षीणशक्तिः । **दुर्मन्त्रः** दुरालोचनम् । **प्रयोक्तारं** पिशुनमेव **क्षिणोति** नाशयति । आपातरमणीयं दुरालोचनं शृण्वन्नपि राजा ततः अनर्थप्राप्त्या दुर्मन्त्रप्रयोक्तारं पिशुनमेव दंड्यतीति भावः । तत्र निदर्शनमाह । यथेति । **नृसिंह**मन्त्राख्य**सूर्य**स्या**ग्रे कैरवद्युतिः** कुमुदसदृशः । सूर्याग्रे कुमुदमिव प्रक्षीणशक्तिरित्यर्थः । **भैरवः** भैरवमन्त्रः **यथा** स्वप्रयोक्तारमेव नाशयति तथेत्यर्थः । महामन्त्रज्ञेषु प्रयुक्ता कृत्या परावृत्त्य प्रयोक्तृघातिनीति काशिराजपुत्रसुदक्षिणादौ प्रसिद्धम् । अनेन पूर्वोक्तदुर्मन्त्रश्रवणस्यानर्थहेतुत्वमुक्तं भवति ॥ ६३ ॥

**प्रजा यं न प्रशंसन्ति न स्तुतश्चार्थिभिश्च यः ।**
**विषयासक्तकुमतेर्न सुखं तस्य भूपते: ॥ ६४ ॥**

**व्या : प्रजा** इति । **यं** राजानम् । **प्रजाः न प्रशंसन्ति न** स्तुवन्ति **अर्थिभिश्च यः न स्तुतः** । विषयेष्वासक्ता **कुमतिः** दुर्बुद्धिः यस्य स तथा । **तस्य** नृपतेः **सुखं न** भवति ॥ ६४ ॥

**प्रजानां पीडनं कृत्वा यो लुब्धो धनमार्जयेत् ।**
**विक्रीय स्वसुतानेव स वै सञ्चिनुते वसु ॥ ६५ ॥**

**व्या : प्रजानामिति । यो लुब्धो** राजा । **प्रजानां पीडनं कृत्वा धनमार्जयेत्। सः** राजा । **स्वसुतानेव विक्रीय वसु** द्रव्यम् । **सञ्चिनुते वै** आर्जयेत वै । स्वपोष्यप्रजानाम् अर्थतः शब्दतश्च । 'प्रजा स्यात् सन्ततौ जने' इत्यभिधानात् स्वसुतोपमात्वमिति भावः ॥ ६५ ॥

---

१ को नाम सत्सु विषमः प्रभवेत् सुखाय । - इति म.भा.ता.नि. १९/४५.

**प्रजापरम्परामेति प्रजारञ्जनकृन्नृपः ।**
**पीडिता सा सनाम्नीं तां नोत्पादयति तत्कुले ।। ६६ ।।**

**व्या :** प्रजेति । प्रजानां **रञ्जनम्** । धर्मतः परिपालनेन सन्तोषः । तस्य **कृत्** कर्ता **नृपः** । **प्रजापरम्परां** सन्ततिपरम्पराम् । पुत्रपौत्रादिवृद्धिमित्यर्थः । **एति** प्राप्नोति । **पीडिता सा** प्रजा । समानं नाम प्रजेति नाम यस्याः सा **सनाम्नी** । तां प्रजां सन्ततिमित्यर्थः । **तत्कुलं** तस्य प्रजानां पीडनकर्तुः । नृपस्य कुलं गोत्रम्। तस्मिन्नोत्पादयति। यथा निष्कासितो याचकः स्वनिष्कासप्रकारदर्शनेन याचकान्तरं निवर्तयति । तथा पीडिता प्रजा प्रजान्तरमपि निवर्तयतीति भावः[1] ।।६६।।

**अपूजितोऽतिथिः स्वीयमतिथित्वमपार्थकम् ।**
**समर्पयति तत्तिथ्यामपूज्यत्वमिवार्पयन् ।। ६७ ।।**

**व्या :** अपूजित इति । **अपूजितः अतिथिः** । अपगतः अर्थः वाच्यार्थः यस्य तदपार्थकम् । **स्वीयमतिथित्वम्** । न विद्यते तिथिर्यस्य सोऽतिथिस्तस्य भावस्तत्त्वम् । तत् । अतिथिपुरुषे विद्यमानतिथिराहित्यलक्षणातिथित्व-मित्यर्थः । **तत्तिथ्याम्** । तस्य येन पुंसा अतिथिर्न पूजितस्तस्य । तिथ्यामिति जात्येकवचनम्। प्रतिपदादितिथिष्वित्यर्थः। **अपूज्यत्वम्**। तत्तिथ्युचितपितृदेव-पूजारहितत्वम्। अर्पयन्निव। अतिथित्वाश्रयास्तिथयो न पूज्या भवन्त्विति मन्वान इव। **अर्पयति** सङ्गमयति। न तिथयोऽतिथयः व्यर्थतिथय इत्यपूजितातिथेर्मर्त्यस्य तिथीनामतिथित्वं दद्यादिति भावः ।। ६७ ।।

**विषयेषूपभुक्तेषु तृतीयोंऽशोऽस्य जीर्यति ।**
**शिष्टं तु विषसारूप्यात् कष्टाय परिकल्प्यते ।। ६८ ।।**

---

१ सपुत्रमित्रबान्धवो विनाशमाशु यास्यसि (म.भा.ता.नि. ७/३९) इति हनूमदुक्तिरत्र मानम् ।

**व्या :** **विषयेष्विति** । **विषयेषु** स्रक्चन्दनादिषु । **उपभुक्तेषु** सत्सु । **अस्य** उपभुक्तस्य विषयस्य । **तृतीयोऽशः** तृतीयभागः अस्य विषयभोक्तुः पुरुषस्य **जीर्यते** जीर्णं भवति । महत्सेवादिजनितपुण्येन न नरकसाधनं भवतीति भावः । **शिष्टं तु** अवशिष्टं भागद्वयम् । **विषस्य** यत्सारूप्यं दुर्जनत्वरूपं विषसाम्यम् । तस्मात् विषयेत्यत्र तृतीयांशे यकारे जीर्णे गते सति । अवशिष्टवर्णद्वयस्य विषवाचकत्वाद्विषसारूप्यमिति [१]भावः । **कष्टाय** । नरकरूपानर्थाय । **परिकल्प्यते** ॥ ६८ ॥

**इत्याद्यमात्यवर्गोक्तनीत्या पृथ्वीं स पालयन् ।**
**भक्तिं मुकुन्दे बिभ्राणस्तत्याज विषयस्पृहाम् ॥ ६९ ॥**

**व्या :** मन्त्रवर्णनं सभापयति । **इतीति** । इति आदिर्यस्याः सा **इत्यादिका** । उक्तप्रकारेत्यर्थः । या **अमात्यवर्गोक्तनीतिः** अमात्यानां वर्गः समूहः तेनोक्ता नीतिः । तया । **पृथ्वीं पालयन् मुकुन्दे** श्रीकृष्णे । **भक्तिं बिभ्राणः** । **स** उग्रसेनः । **विषयस्पृहां तत्याज** त्यक्तवान् ॥ ६९ ॥

**रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि**
**प्रेम्णा चिन्तयतां विचित्रविमलश्लाघ्यार्थसन्दायिनि ।**
**सञ्जाते भुवि रुग्मिणीशविजये सद्वादिराजोदिते**
**सञ्जातः सुरमण्डलीषु महितः सर्गो मुदां द्वादशः ॥ ७० ॥**

**॥ इति श्रीवादिराजतीर्थप्रणीतरुग्मिणीशविजये द्वादशः सर्गः ॥**

**व्या :** **रोम्णामिति** । अस्यार्थः प्रागुक्तः ॥ ७० ॥

**॥ इति रुग्मिणीशविजयटीकायां गुरुभावप्रकाशिकायां द्वादशः सर्गः ॥**

*****

---

१ विषस्य विषयाणां च दूरमत्यन्तमन्तरम् ।
उपभुक्तं विषं हन्ति विषयाः स्मरणादपि ॥　　- सुभाषितम्

# त्रयोदशः सर्गः

**निजागमाशाधृतजीवनानां व्रजाङ्गनानां हृदि खेदशङ्की ।**
**इमां स्थितिं स्वस्य निशम्य रम्यां स्वसूनुताशापगमाच्च पित्रोः ॥१॥**

**व्रजं व्रजेत्यादिशदुद्धवं स्वं व्रजेश्वरोऽथात्मवियोगवह्नेः ।**
**प्रतप्तमुज्जीवयितुं स्ववर्गं सुखार्थसन्देशसुधाप्रवाहैः ॥ २ ॥**

**व्या :** यद्दूतोद्धवनिर्धूततापा गोप्यो मुदं दधुः ।
तस्मै नमश्चिदानन्दसिन्धवे दीनबन्धवे ॥ १ ॥

निजेति । अथ अनन्तरम् । व्रजेश्वरः कृष्णः । स्वस्य रम्यामिमां स्थितिम् । ब्रह्मचर्यावस्थाम् । निशम्य निजागमाशया । धृतजीवानां व्रजाङ्गनानाम् । स्वसूनुताशायाः वसुदेवोपनीते कृष्णे स्वपुत्रोऽय-मित्याशायाः । अपगमात् । पित्रोर्यशोदानन्दयोश्च । हृदि खेदशङ्की सन् । आत्मवियोगवह्नेः स्वविरहाग्नेः सकाशात् । सन्तप्तं स्ववर्गं नन्दादिबन्धुवर्गम् । सुखमेवार्थः प्रयोजनं येषां ते सुखार्थाः ते च ते सन्देशाश्च त एव सुधाप्रवाहाः तैः उज्जीवयितुं स्वं स्वकीयमुद्धवं व्रजं प्रति गच्छेत्यादिशत् आज्ञापयामासेति शोकद्वयस्यैकान्वयः ॥ १ ॥ २ ॥

**स च प्रियायोगसमुत्थसाध्वसं तदीयसन्देशवरैर्विदूरयन् ।**
**प्रपन्नवात्सल्यमदो मधुद्विषः स्मरन् श्रमं वर्त्मनि विस्मरन् ययौ ॥३॥**

**व्या :** स चेति । प्रियस्य कृष्णस्य अयोगः विरहः तेन समुत्थं साध्वसं स्वीयभयम् । तदीयसन्देशवरैः । आकाशवद्व्याप्तेन मया सह विरहो न घटत इति तस्य श्रीकृष्णस्य विद्यमानसन्देशवरैर्विदूरयन् मधुद्विषः श्रीकृष्णस्य अदः तत् प्रपन्नवात्सल्यं विस्मरन् स उद्धवः ययौ गोकुलसमीपं गतवान् ॥ ३ ॥

**निशामुखे गोनिकुरम्बमीशितुर्व्रजं विशन् सोऽथ ददर्श मण्डितम् ।**
**परिस्फुरद्वेणुविनोदवेदितस्वभर्तृलीलारसगोपबालकैः ॥ ४ ॥**

**व्या :** निशामुख इति । अथ स उद्धवः **निशामुखे** प्रदोषे **ईशितुः** कृष्णस्य **व्रजं** गोकुलं **विशन्** प्रविशन् । **परिस्फुरद्वेणुना** विलसद्वेणुना । क्रियमाणसङ्गीत-**विनोदेन** । **वेदितः** ज्ञापितः । **स्वभर्तृलीलारसः** स्वस्वामिश्रीकृष्णकृतबाल-लीलारसो यैस्तैः **गोपबालकैर्मण्डितम्** अलङ्कृतम् । **गोनिकुरम्बं** गोसमूहं ददर्श ॥ ४ ॥

**उत्क्षिप्तपुच्छमुदिताल्परवाभिरामं**
**वत्सं स्म धावनविलासविकम्पिताङ्गम् ।**
**वीक्ष्यानुधावनपराध्वनि गौःस्ववर्ग-**
**मन्वेतु कृष्ण इति वक्ति तदोद्धवाय ॥ ५ ॥**

**व्या :** उत्क्षिप्तेति । **तदा** गोकुलप्रवेशकाले । **अध्वनि** मार्गे । **उत्क्षिप्तपुच्छम्**उन्नतलाङ्गूलम् **उदिताल्परवेण** उत्पन्नाल्परवेण**अभिरामं** मनोहरम् । **धावनविलासेन** इतस्ततः परिधावनलीलया । **विकम्पितान्यङ्गानि** चरणादीनि यस्य स तथोक्तस्तम् । **वत्सं वीक्ष्य अनुधावनपरा** अनुधावनं कुर्वती **गौः श्रीकृष्णः स्ववर्गम्** स्वपोष्यबन्धुजनवर्गम् । **अन्वेतु** अहमिवानुगच्छतु । इत्युद्धवाय **वक्ति** नूनम् ॥ ५ ॥

**गोधूलिधूसरमनोज्ञशरीरकान्तीन्**
**गोपान् निरीक्ष्य करसङ्गतवेणुशृङ्गान् ।**
**कृष्णस्य शैशवविलासमनुस्मरन् स**
**मोदाम्बुपूर्णनयनः पुलकाङ्कितोऽभूत् ॥ ६ ॥**

**व्या :** गोधूलीति । गवां धूल्या खुरोत्थरजसा । **धूसराणि मनोज्ञशरीराणि** तेषां कान्तिर्येषां ते तान् । **करसङ्गतवेणुश्रृङ्गान्** करस्थवेणुशृंगाख्यवाद्यान् । **गोपान् निरीक्ष्य श्रीकृष्णस्य शैशवविलासमनुस्मरन् सः** उद्धवः । **मोदाम्बुना** आनन्दवारिणा **पूर्णनयनः पुलकै**रङ्कितश्चा**भूत्** ॥ ६ ॥

**ताः कृष्णभुक्तवरभूषणवस्त्रमाल्यं[1] भृत्यं निरीक्ष्य निजनाथधियेव गावः ।**
**उन्नम्रकन्धरमुदीरितकर्णयुग्मं पश्यन्त्य उद्धवमनोऽभ्युदयं वितेनुः ॥ ७ ॥**

**व्या :** ता इति । श्रीकृष्णेन भुक्तानि वरभूषणानि वस्त्राणि माल्यानि यस्य स तथोक्तस्तम् । भृत्यं श्रीकृष्णभृत्यम् । उद्धवं निरीक्ष्य निजनाथधिया स्वस्वामी श्रीकृष्णोऽयमिति बुद्ध्येवोन्नम्रो ऊर्ध्वंकृतः कन्धरो कण्ठो यथा भवति तथोन्नम्रकन्धरम् । उदीरितकर्णयुग्मम् ऊर्ध्वं प्रेरितकर्णद्वयं यथा भवति तथा पश्यन्त्यः ताः गावः उद्धवमनोऽभ्युदयं वितेनुः ॥ ७ ॥

**दिदेश यं प्रीतमनाः स्ववर्गे निजं व्रजं प्रत्यरविन्दनेत्रः ।**
**विवेश सोऽप्युद्धवमेव दूरान्निवेशयन् द्रष्टृविलोचनेषु ॥ ८ ॥**

**व्या :** दिदेशेति । स्ववर्गे भक्तवर्गे प्रीतमनाः अरविन्दनेत्रः श्रीकृष्णः यमुद्धवं निजमात्मीयं व्रजं प्रति दिदेश । सोऽपि श्रीकृष्णेनाज्ञप्त उद्धवोऽपि दूरात् दष्टृविलोचनेषु उद्धवमेव उत्सवमेव । निवेशयन् प्रवेशयन् । विवेश व्रजं प्रविष्ठवान् । उद्धवद्रष्टृणां नेत्रोत्सवो जात इति भावः ॥ ८ ॥

**गृहे गृहे कृष्णकथामृताततं तदर्चनायाहृतधूपवासितम् ।**
**स्रगम्बरालङ्कृतिचन्दनादिभिर्विभूषितस्त्रीपुरुषं तदर्पितैः ॥९॥**

**व्या :** गृहे गृह इति । स उद्धवः गृहे गृहे प्रतिगृहम् । श्रीकृष्णस्य कथामृतेनाततं व्याप्तम् । तदर्चनाय कृष्णपूजार्थमाहृतेनानीतेन धूपेन वासितं सुरभीकृतम् ।

---

१ त्वयोपभुक्तस्रग्गन्धवासोऽलङ्कारचर्चिताः ।
उच्छिष्टभोजिनो दासास्तव मायां जयेमहि ॥ - भागवते (११/६/४६)
हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः ।
पादोदकं च निर्माल्यं मस्तके यस्य सोऽच्युतः ॥ -कृष्णामृतमहार्णवे (४३)

तदर्पितैः श्रीकृष्णसमर्पितैः स्रगम्बरालङ्कृतिचन्दनादिभिरलङ्कृतिराभरणम् । विभूषितस्त्रीपुरुषं गोकुलमापेत्यन्त्यकुलकमेतत्[1] ॥ ९ ॥

**शुकैर्हरेर्नाम गृणद्भिरावृतं पिकैश्च तद्वेणुरवानुवादिभिः ।**
**मुकुन्दपादाम्बुजशोभिनीरजस्थिरद्विरेफैर्हरिकिङ्करप्रभैः ॥१०॥**

**व्या :** शुकैरिति । हरेः श्रीकृष्णस्य नाम गृणद्भिरुच्चारयद्भिः शुकैः कीरैस्तस्य श्रीकृष्णस्य वेणुरवानुवादिभिर्वेणुरववत् ध्वनद्भिः पिकैः कोकिलैः मुकुन्दपादांबुजवत् श्रीकृष्णचरणकमलवत् शोभिनी! नीरजे कमले स्थिरा द्विरेफाः भ्रमराः तैः विष्णुपादाम्बुजसाम्यादेव स्थिराः । न तु मकरन्दातिशयेनेति भावः । अत एव हरिकिङ्करप्रभैरेतैः शुकादिभिरावृतं गोकुलमापेत्यन्वयः ॥१०॥

**सदा मुकुन्दागमनाभिशङ्कया सुपूर्णकुम्भैः शुभतोरणध्वजैः ।**
**अलङ्कृतद्वारचयं फलोच्चयैर्विचित्ररङ्गावलिभिश्च रञ्जितम् ॥११॥**

**व्या :** सदेति । सदा मुकुन्दस्यागमनाभिशङ्कया सुपूर्णकुम्भैः पूर्णकलशैः शुभतोरणैः मङ्गलकिसलयबद्धमालाभिः ध्वजैः पताकाभिः फलोच्चयैः फलसमूहैरलङ्कृतो द्वारचयो द्वारसमूहो यस्मिन् । विचित्ररङ्गावलिभिश्च नानावर्णरङ्गसमूहैश्च रञ्जितं गोकुलमापेत्यन्वयः ॥ ११ ॥

**मुकुन्दवीक्षाफलकाम्यया ऽन्वहं त्रिकालचीर्णद्विजदेवतार्चनैः ।**
**तदीयलीलामृतपूर्णसत्कथाधृतासुभिः सङ्कुलमाप गोकुलम् ॥१२॥**

**व्या :** मुकुन्देति । स उद्धवः अन्वहं प्रतिदिनं मुकुन्दस्य कृष्णस्य वीक्षैव दर्शनमेव पलं तस्य काम्यया इच्छया त्रिकालेपु चीर्णं कृतं द्विजदेवतार्चनं यैस्तैः । तदीयेन लीलामृतेन पूर्णसत्कथा तया धृता असवो यैस्तैर्जनैः सङ्कुलं गोकुलमाप ॥१२॥

---

१ श्लोकाः (९-१२)

**ततो विवेश नन्दस्य सदनं सहसोद्धवः ।**
**अन्येषामपि चेतस्सु न्ययुङ्क्त परमुद्धवम् ।। १३ ।।**

**व्या :** तत इति । ततः गोकुलप्रवेशानन्तरम् । स उद्धवः नन्दस्य नन्दगोपस्य सदनं गृहं सहसा शीघ्रं विवेश । ततः अन्येषाम् अन्येषां गोपानां अपि । चेतस्सु चित्तेषु परमुद्धवं न्ययुङ्क्त नियोजितवान् । पूर्वं दूराद्दर्शनेन दृष्ट्युत्सवो जातः । इदानीं अस्मद्गृहं आयास्यतीति सर्वेषां चित्ताह्लादो जात इत्यर्थः ।। १३ ।।

**तमर्चयामास स नन्दगोपः स्वनन्दनाङ्घ्र्यम्बुजलुब्धभृङ्गम् ।**
**तथाहि लक्ष्मीशपदैकभक्तास्तदन्यदर्चन्ति तदीयबुद्ध्या[1] ।।१४।।**

**व्या :** तमिति । सः नन्दगोपः स्वनन्दनस्य कृष्णस्य अङ्घ्र्यम्बुजलुब्धभृङ्गं तमुद्धवमर्चयामास । तथाहि । लक्ष्मीशपदैकभक्ताः श्रीकृष्णैकान्तभक्ताः तदन्यत् कृष्णाद्भिन्नं जगत् तदीयबुद्ध्या तद्भृत्यबुद्ध्या अर्चन्ति अर्चयन्ति हि । नतु तत्त्वेन स्वातंत्र्येण वा पूजयन्तीति भावः ।। १४ ।।

**कृपां हरेरात्मनि वर्ण्यमानां निशम्य नन्दः सह जाययाऽभूत् ।**
**प्रहृष्टरोमा प्रतिरुद्धकण्ठः प्रहर्षवार्यङ्कितलोलनेत्रः ।। १५ ।।**

**व्या :** कृपामिति । नन्दः हरेः कृष्णस्य आत्मनि नन्दे वर्ण्यमानां कृपां निशम्य उद्धवात् श्रुत्वा जायया सह प्रहृष्टरोमा । प्रतिरुद्धकण्ठः गद्गदीभूतकण्ठः । प्रहर्षवारिणा आनन्दजलेन अङ्किते लोचने नेत्रे यस्य स तथोक्तो बभूव ।।

**विजृम्भिते यस्य मुखे सतीयमपश्यदात्मानमिदं जगच्च ।**
**वियोगवार्तामममुनोत्सृजध्वं परं परम्ब्रह्मधिया भजध्वम् ।।१६।।**

---

१ रमाब्रह्मादयस्तस्य परिवारतयैव तु । - इति सदाचारस्मृतौ ।
परिवारतया ध्येया अपि हेयाः प्रधानतः ।। - इति अनुव्याख्याने ।
य एतत् परतन्त्रं तु सर्वमेव हरेः सदा ।
वशमित्येव जानाति संसारान्मुच्यते हि सः ।। - इति तत्त्वविवेके ।

**व्या :** विजृम्भित इति । विजृम्भिते यस्य श्रीकृष्णस्य **मुखे** वदने इयं सती तव पत्नी यशोदा **आत्मानं** स्वम् **इदं जगच्चापश्यत्**[१] । अमुना एतादृशेन कृष्णेन सह **वियोगवार्तां** विरहवार्ता**मुत्सृजध्वं** त्यजध्वम् । **परं** केवलं **परम्ब्रह्मधिया भजध्वम्** ॥ १६ ॥

**स नन्दमानन्दनिधिं विधाय जगाम गोपीजनमन्दिराणि ।**
**सुदुष्करोग्रव्रतकर्शिताङ्गमुनीन्द्रवृन्दाश्रमसम्मितानि ॥ १७ ॥**

**व्या :** स इति । **स** उद्धवः **नन्दं** नन्दगोपम् । **आनन्दनिधिं** सुखाश्रयम् । **विधाय**। **दुष्कराणि उग्राणि व्रतानि** तैः **कर्शिताङ्गाः मुनीन्द्रा**स्तेषां **वृन्द**स्य समूहस्य **आश्रमसम्मितानि गोपीजनमन्दिराणि जगाम** ॥ १७ ॥

**काचिन्मुकुन्देन सहैवशय्यां प्राप्तुं बताधःशयनव्रतस्था ।**
**तज्जुष्टताम्बूलफलाय धन्या तत्याज ताम्बूलरुचिं किलान्या ॥१८॥**

---

१ स प्राकृतं शिशुमात्मानमुच्चैर्विजानन्त्या मातुरादर्शनाय ।
विजृम्भमाणोऽखिलमात्मसंस्थं प्रदर्शयामास कदाचिदीशः ॥
साण्डं महाभूतमनोभिमानमहत्प्रकृत्यावृतमब्जजादिभिः ।
सुरैः शिवेतैर्नरदैत्यसङ्घैर्युतं ददर्शास्य तनौ यशोदा ॥
- इति महाभारततात्पर्यनिर्णये (१२/११४, ११५)

एकदाऽर्भकमादाय साङ्कमारोप्य भामिनी ।
प्रस्नुतं पाययामास स्तनं स्नेहपरिप्लुता ॥
पीतप्रायस्य जननी सा तस्य रुचिरस्मितम् ।
मुखं लालयती राजन् जृम्भतो ददृशे इदम् ॥
खं रोदसी ज्योतिरनीकमाशाः भूतानि यानि स्थिरजङ्गमानि ॥
सा वीक्ष्य विश्वं सहसा राजन् सञ्जातवेपथुः ।
सम्मील्य मृगशावाक्षी नेत्रे आसीत् सुविस्मिता ॥
- इति भागवते (१०/८/३६-३७)

**व्या :** काचिदिति । काचिद्गोपी मुकुन्देन सहैव शय्यां प्राप्तुं अधःशयनव्रतस्थाऽभूत्। बत खेदे । धन्या अन्या गोपी तज्जुष्टताम्बूलफलाय कृष्णचर्चितताम्बूललक्षणफलसिद्धये ताम्बूले रुचिं प्रीतिं तत्याज किल । श्रीकृष्णवियोगजविषयद्वेषावस्थया कृतस्यापि अधःशयनस्य तांबूलपरित्यागस्य च मुनिव्रतसाधारण्यात् मुनीन्द्रवृन्दाश्रमसम्मितानीति प्रागुक्तम् । एवमुत्तरत्रापि द्रष्टव्यम् ॥१८॥

**तद्भुक्तशेषोदनलुब्धचित्ता नित्यं किलैकानशनव्रतस्था ।**
**स्वप्नेऽपि तत्सङ्गमिवाप्तुकामा स्वस्थापि शेते किल काऽपि दीना ॥**

**व्या :** तद्भुक्तेति । तद्भुक्तशेषोदने श्रीकृष्णभोजनोच्छिष्टान्ने लुब्धचित्ता एका गोपी नित्यमनशनव्रतस्था उपवासव्रतस्था किल । दीना कापि गोपी स्वप्ने तत्सङ्गमाप्तुकामेव स्वस्थाऽपि तन्द्रीरहिताऽपि शेते किल । गृहकार्यं त्यक्त्वा सर्वदा शयनं विरहिणीनां स्वभावः ॥ १९ ॥

**कान्तं हरिं तत्प्रभवं कुमारं तज्जुष्टगेहं गृहमूहमाना ।**
**पत्युर्न पूजां न च पुत्ररक्षां कृत्यं न गृह्यं वितनोति तन्वी ॥२०॥**

**व्या :** कान्तमिति । कान्तं [1]स्वपतिं हरिं हरिमेव ऊहमाना । तत्प्रभवं तस्माज्जातं कुमारं पुत्रम् । तज्जुष्टगेहं श्रीकृष्णोषितगृहमेव गृहं स्वगृहं ऊहमाना तर्कयन्ती काचित् तन्वी पत्युः स्वभर्तुः पूजां परिचर्यां [2]पुत्ररक्षां गृह्यं गृहसंबन्धिकृत्यं संमार्जनादिकार्यं च न वितनोति ॥ २० ॥

**रतावसाने मुरजित्करेण निबद्धुमेकोज्झितकेशबन्धा ।**
**तदैव तत्संहितभूषणेच्छा न भूषणं काऽपि बिभर्ति बाला ॥२१॥**

---

१ 'हरिरस्मिन् स्थित इति स्त्रीणां भर्तरि भावना' - इति भागवततात्पर्ये (७/१२/३०)

२ 'पतिसुतान्वयभ्रातृबान्धवानतिविलङ्घ्य ते ह्यच्युतागताः' (गोपीगीतायाम्) इतिवत् ।

**व्या :** रतेति। रतावसाने रत्यन्ते। मुरजितः कृष्णस्य करेण निबद्धुं कबरीबन्धं कर्तुं एका नारी उज्झितः केशबन्धो यस्याः सा आस्ते। तदैव रतावसान एव तेन श्रीकृष्णेन संहितानि आसञ्जितानि भूषणानि इच्छतीति सा तथोक्ता। काऽपि बाला भूषणं न विभर्ति ॥ २१ ॥

**प्रदक्षिणीकृत्य दिने दिनेऽन्याः स्वधामवृन्दावनमर्थयन्ते।**
**विकस्वरक्ष्मारुहपुञ्जमञ्जुमुकुन्दवृन्दावनरासलीलाम् ॥ २२ ॥**

**व्या :** प्रदक्षिणीकृत्येति। अन्याः गोप्यो दिने दिने स्वधामवृन्दावनं स्वगृहस्थिततुलसीवृन्दावनं प्रदक्षिणीकृत्य विकस्वराः विकासमानाः क्ष्मारुहाः वृक्षास्तेषां पुञ्जेन मञ्जु मनोज्ञे मुकुन्दवृन्दावने रासलीलां रासक्रीडां अर्थयन्ते प्रार्थयन्ते। तस्यापि मुकुन्दवृन्दावनत्वात्। रासलीलायाश्च प्रदक्षिणाकारत्वात् साम्येन फलत्वोक्तिः ॥ २२ ॥

**निजैर्जनन्या जनकेन साकं न भाषते किञ्चन काऽपि गोपी।**
**प्रियेण सार्धं बत रम्यगोष्ठीमकुर्वता किं वचसेति दीना ॥२३॥**

**व्या :** निजैरिति। काऽपि गोपी प्रियेण श्रीकृष्णेन सार्धं रम्यां गोष्ठीमकुर्वता वचसा किं किं फलमिति दीना कृपणा सती निजैर्बन्धुभिर्जनन्या मात्रा च जनकेन च साकं किञ्चन न भाषते ॥ २३ ॥

**मन्दानिलं चन्दनरम्यगन्धिमिन्दीवराक्षी सहते न काचित्।**
**विश्लेषवह्नेर्दहतो निजाङ्गं वृद्धिं विदध्यादिति चिन्तयेव ॥२४॥**

**व्या :** मन्दानिलमिति। काचिदिन्दीवराक्षी गोपी निजाङ्गं दहतो विश्लेपवह्नेर्विरहाग्नेर्वृद्धिं विदध्यादिति चिन्तयेव चन्दनरम्यगन्धिम्। अनेन चन्दनस्य शैत्यात् सुरभित्वाच्च शैत्यसौरभ्याख्यगुणद्वयमुक्तम्। मन्दानिलं मन्दमारुतम्। स्पष्टोऽत्र माल्याख्यगुणः। न सहते ॥ २४ ॥

**आलापमाल्याः प्रियमप्यपार्थमालोच्य बाला नहि शुश्रुवेऽन्या ।**
**सेयं मुकुन्दागमनं वदन्ती जातेदृशीत्युत्थिततीव्रतापा ।। २५ ।।**

**व्या :** आलापमाल्या इति । अन्या बाला एतावत्कालं मुकुन्दागमनं त्वद्गृहं प्रति श्रीकृष्ण आयातीति वदन्ती सेयं सखी ईदृशी तदतिरिक्तलोकगोष्ठीकथका जातेति । उत्थिततीव्रतापा सती आल्याः सख्याः प्रियमपि आलापम् अपार्थमालोच्य नहि शुश्रुवे न श्रुतवती हि ।। २५ ।।

**कर्पूरकुङ्कुमलसन्मृगनाभिशोभि-**
**नेच्छत्यहो मलयजामलचूर्णमन्या ।**
**कृष्णाङ्गसङ्गि तदलं परिरभ्य दोर्भ्यां**
**धर्तुं धियेव वरवैष्णववर्गयोग्यम् ।। २६ ।।**

**व्या :** कर्पूरेति । अन्या कृष्णाङ्गसङ्गि कृष्णोपभुक्तम् अत एव वरवैष्णववर्गयोग्यं तत् मलयजामलचूर्णम् अलम् अत्यर्थं दोर्भ्यां हस्ताभ्यां श्रीकृष्णं परिरभ्य आलिङ्ग्य धर्तुं स्वाङ्गे धारणं कर्तुं धियेव कर्पूरकुङ्कुमलसन्मृगनाभिभिः शोभितं मलयजामलचूर्णं श्रीगन्धचूर्णं नेच्छति ।। २६ ।।

**कीरेन्दुकोकिलमधुव्रतमान्यगन्ध-**
**पुष्पाणि काऽपि न हृदो विषयीकरोति ।**
**कृष्णोक्तिसन्मुखमृदुस्वरकुन्तलाङ्ग**
**सौरभ्यसङ्गततदीयसमस्तवृत्तिः ।।२७।।**

**व्या :** कीरेति । श्रीकृष्णस्योक्तिः वचनम् । सन्मुखं मृदुस्वरः कुन्तलाः अङ्गसौरभ्यं तेषु सङ्गता तदीया तत्संबन्धिनी समस्तवृत्तिर्यस्याः सा काऽपि गोपी कीरः शुकः इन्दुः कोकिलः मधुव्रतो भ्रमरस्तैर्मान्यो गन्धो येषां तानि

पुष्पाणि हृदो मनसो न विषयीकरोति नारोचयदित्यर्थः । वियुक्तभर्तृप्रियोक्त्या हि स्मारकतया विरहक्लेशोद्बोधकत्वान्न सहत इति भावः । विषयद्वेषं श्रीकृष्णसंबन्धिफलोत्सुकतया चक्रुरित्युक्त्या सर्वत्रोत्प्रेक्षा द्रष्टव्या ॥ २७ ॥

**कृष्णाङ्घ्रिभृङ्गं तं वीक्ष्य लज्जाक्लेशवशङ्गताः ।**
**श्लिष्टोक्त्योचुस्तथा [1]भृङ्गं लक्षीकृत्यान्यमग्रतः ॥ २८ ॥**

---

१ **भ्रमरगीता -**

काचिन्मधुकरं दृष्ट्वा ध्यायन्ती कृष्णसङ्गमम् ।
प्रियप्रस्थापितं दूतं कल्पयित्वेदमब्रवीत् ॥
गोप्युवाच –
मधुप कितव बन्धो मा स्पृशास्मान् सपत्न्याः कुचविलुलितमालाकुङ्कुमश्मश्रुभिस्त्वम् ।
वहतु मधुपतिस्तन्मानिनीनां प्रसादं यदुसदसि विडम्ब्यं यस्य दूतस्त्वमीदृक् ॥
सकृदधरसुधां स्वां मोहिनीं पाययित्वा सुमनस इव सद्यः कस्त्यजेन्मां भवादृक् ।
परिचरति कथं तत्पादपद्मं तु पद्मा ह्यपि बत हृतचेता उत्तमश्लोकजल्पैः ॥
किमिह बहुषडङ्घ्रे गायसि त्वं यदूनामधिपतिमगृहाणामग्रतो नः पुराणम् ।
विजयसखसखीनां गायतां तत्प्रसङ्गः क्षपित कुचरुजस्ते कल्पयन्तीष्टमिष्टाः ॥
दिवि भुवि च रसायां काः स्त्रियस्तद्दुरापाः कपटरुचिरहासभ्रूविजृम्भस्य याः स्युः ।
चरणरज उपास्ते यस्य भूतिर्वयं का अपि च कृपणपक्षे ह्युत्तमश्लोकशब्दः ॥
विसृज शिरसि पादं वेद्म्यहं चाटुकारैरलमनुनयसारैर्याहि दौत्ये मुकुन्दम् ।
स्वकृत इह विसृष्टापत्यपत्याप्तलोका व्यसृजदकृतचेताः किं नु सन्धेयमस्मिन् ॥
मृगयुरिव कपीन्द्रं विव्यधे यः किरातः स्त्रियमकृत विरूपां स्त्रीजितः कामयानाम् ।
बलिमपि बिलवासं वेदविद्वर्गवन्द्यस्तदलमसितसख्यैर्दुस्त्यजस्तत्कथार्थः ॥
यदनुचरितलीलाकर्णपीयूषविप्रुट् सकृददनविधूतद्वन्द्वधर्माविनष्टाः ।
सपदि गृहकुटुम्बं दीनमुत्सृज्य दीना बहव इह विहङ्गा भैक्ष्यचर्यां चरन्ति ॥
वयमृतमिह जिह्मं व्याहृतं श्रद्दधानाः कुलिकरुतमिवाज्ञाः कृष्णवध्वो हरिण्यः ।
ददृशिम सकृदेतत्तन्नखस्पर्शतीव्रस्तनरुजपरमार्तिं भण्यतामस्य वार्ता ॥
प्रियसख पुनरागाः प्रेयसा प्रेषितस्त्वं वरय किमनुरुन्धे माननीयोऽसि मेऽङ्ग ।
नयसि कथमिहास्मान् दुस्त्यजं बन्धुपार्श्वं सततमुरसि सौम्य श्रीवधूः साकमास्ते ॥

**व्या : कृष्णाङ्घ्रिभृङ्गमिति** । ताः गोप्यः **कृष्णाङ्घ्रिभृङ्गं तम्** उद्धवं **वीक्ष्य लज्जाक्लेशवशङ्गताः** सत्यः साक्षाद्वचने लज्जा निष्ठुरोक्तौ क्लेशः कारणमिति द्रष्टव्यम् । उद्धवं तथाऽग्रतः **स्थितमन्यं तं** भृङ्गं च लक्षीकृत्य **श्लिष्टोक्त्या** द्व्यर्थकवचनेनोचुः ॥ २८ ॥

**मधुप चरसि कस्मादस्मदग्रे त्वमग्र्य-**
**द्विरदवरदमूर्धारोहयोग्योऽसि नूनम् ।**
**विषमविरहवह्नौ निर्दहत्यस्मदङ्गं**
**किमिह पतितुमिच्छस्यङ्ग दूरे प्रयाहि ॥ २९ ॥**

**व्या : मधुपेति** । हे **मधुप** मधुकुलोत्पन्नत्वात् मधूनि पातीति मधुपस्तस्य सम्बुद्धिः उद्धव । **अस्मदग्रे** अस्मत्पुरतः **कस्मात्** किमर्थं **चरसि** सञ्चरसि । प्रयोजनाभावान्नास्मदग्रे चरेत्यर्थः । **अग्र्यद्विरदस्य** श्रेष्ठगजस्य वरदः सन्तोषदो यो **मूर्धा** तदारोहयोग्योऽसि **नूनम्** । तव स्वामी श्रीकृष्णो महाप्रभुर्जातः इदानीं त्वं गजमारुह्य सञ्चारं कुर्वित्यर्थः । **अस्माकं स्त्रीणामङ्गं निर्दहति** दाहं कुर्वति इह **विषमविरहवह्नौ** दुःसहविरहाग्नौ **पतितुमिच्छसि किम्** । हे **अङ्ग दूरे प्रयाहि** दूरं गच्छ । अस्मन्निकटे अवस्थित्या त्वमपि श्रीकृष्णविरहदुःखं नानुभवेति भावः । भृङ्गपक्षे तु हे मधुप मधु मकरन्दं पिबतीति तथोक्तस्तस्य सम्बुद्धिः । अस्मदग्रे कस्माच्चरसि । विषयद्वेषेण स्रगादिपरित्यागादस्मन्निकटे मकरन्दाभावादिति भावः । त्वं द्विरदस्य गजस्य वरदो मदगन्धाख्यवरदो मूर्धा तदारोहणयोग्योऽसि तत्र सञ्चरितुं योग्योऽसि नूनम् । अङ्गनाङ्गं निर्दहति इह विषमविरहवह्नौ पतितुमिच्छसि किम् । हे अङ्ग दूरे प्रयाहि । विरहाग्नेरुत्कटत्वे-

---

अपि बत मधुपुर्यामार्यपुत्रोऽधुनाऽऽस्ते स्मरति स पितृगेहं सौम्य बन्धूंश्च गोपान्।
क्वचिदपि स कथं नः किङ्करीणां गृहीतो भुजमगरुसुगन्धं मूर्ध्न्यधास्यत् कदानु ॥
- भागवते (१०/४५/१२-२१)

नास्मत्समीपे सञ्चरतस्तवापि दाहो भवेदिति मोहावस्थोपोद्बलितेति भावः ॥ २९ ॥

**सदसि सुमनसां त्वं प्रौढिमादर्शयालं**
**विधुरविविध योषित्तापमापादयेः किम् ।**
**ग्रहगतिरियमार्या यत्पुरस्तादयं नो**
**वसति वसतिपुत्रामित्रवार्तोज्झितानाम् ॥ ३० ॥**

**व्या : सदसीति** । **विधुश्चन्द्रो रविः** सूर्यः **तयोर्विधा** प्रकारो यस्य स तथोक्तः। उद्धवस्य बृहस्पत्यवतारत्वेन आदित्यादिग्रहनवके पठितत्वादित्यर्थः । तस्य संबुद्धिर्हेविधुरविविध उद्धव । **त्वं सुमनसां** देवानां **सदसि** सभायां **प्रौढिम् अलम्** अत्यर्थम् **आदर्शय** । उद्धवस्य सुरगुरुत्वादिति भावः । योषितामस्माकं तापं पुनः श्रीकृष्णप्रसङ्गकथनेन श्रीकृष्णस्मारकतया **तापं किं** किमर्थ**मापादयेः** सम्पादयसि । हे आर्याः उत्तमनार्यः । अयमुद्धवः वसत्यस्मिन्निति वसतिः **गृहम्** । पुत्राश्च अमित्राश्च तेषाम् । **वार्तोज्झितानां** वार्तारहितानां नोऽस्माकं **पुरस्तात्** पुरतः **वसतीति** यद्गच्छेत्युक्तेऽपि वसतीति यत् इयं **ग्रहगतिः** । अस्माकं ग्रहचारः । दुरदृष्टमित्याक्रोशः । ग्रहस्य नवग्रहमध्ये पठितस्य बृहस्पतेर्या गतिरेकवर्षपर्यन्ता एकराशौ स्थितेरस्य स्वभावत्वात् गच्छेत्युक्तेऽपि न गच्छतीति हृदयम् । इयमिति स्त्रीलिङ्गनिर्देशः ''शैत्यं हि यत् सा प्रकृतिर्जलस्य'' इतिवत् विशेष्यप्राधान्यविवक्षया । भ्रमरपक्षे तु हे मधुप त्वं सुमनसां कुसुमानां सदसि प्रौढिं झङ्कारादिकम् आदर्शय दर्शयस्व । विधुराणां विरहिणीनाम् अत एव विविधानाम् । अन्नत्यागतांबूलत्यागादिनानाविधावस्थापन्नानां योषितां स्त्रीणां तापं किमर्थमापादयेः । भ्रमरस्योद्दीपनविभावनत्वादिति भावः । **वसति पुत्रमित्रवार्तोज्झितानां** नोऽस्माकं पुरस्ताद्वसतीति यत् निवारितोऽपि न गच्छतीति यदित्यर्थः । इयं ग्रहगतिर्दुर्ग्रहस्थितिरित्याक्रोशः ॥ ३० ॥

**वरुणदिशि गतोऽपि स्वैरमुद्याति सोऽयम्**
**बत दिशि बलभेत्तुः कामदः कामिनीनाम् ।**
**गुरुरिव सखि कर्णोपान्तमभ्येत्य गीतं**
**हरिपदकृतवृत्तिः श्रावयत्येष धीरः ॥ ३१ ॥**

**व्या :** वरुणदिशीति । हे सखि कामिनीनाम् अस्माकं कामदः श्रीकृष्णविषयककामोद्बोधकोऽयं बृहस्पतिरूप उद्धवः **वरुणदिशि गतोऽपि** पश्चिमदिशि गतोऽपि पश्चिमे अस्तंगतोऽपीत्यर्थः । **बलभेत्तुरिन्द्रस्य** । 'बलारातिः शचीपतिः' इत्यमरः । **दिशि** पूर्वस्यां दिशीत्यर्थः । **स्वैरं** स्वेच्छया **उद्याति** उदेति । **बत** खेदे । **गुरुरिव** देवजातीनां अस्माकं गुरुर्बृहस्पतिरिव । **हरिपदकृतवृत्तिर्हरिपदे** कृष्णपदे कृता अन्तःकरणवृत्तिर्येन स तथोक्तः । श्रीकृष्णभक्त इत्यर्थः । **धीर एष** उद्धवः । **कर्णोपान्तं** कर्णसमीपम् **अभ्येत्य गीतं** श्रीकृष्णसन्देशरूपं गानं **श्रावयति** । भ्रमरपक्षे तु **कामिनीनां कामदः** कामोद्दीपकः सोऽयं भ्रमरः । वरुणदिशि गतोऽपि बलभेत्तुर्दिशि उद्याति पश्चिमदिशि गतोऽपि चञ्चरीकत्वात् पुनरायाति । बतेत्याक्रोशः इतस्ततः सम्भ्रमणं भ्रमरस्य स्वभावः । हे सखि हरिपदकृतवृत्तिः आकाशकृतवर्तनः । धीरो भयरहितः । एषो भ्रमरः । गुरुरिवोपदेष्टेव । कर्णोपान्ते झङ्कारं करोतीति भावः ॥ ३१ ॥

**गगनचर किमस्मत्सन्निधौ तेऽस्ति कृत्यं**
**हरिपदमुपयाया दूरमस्मद्व्रजस्य ।**
**समरुचिमलकाल्या वक्रया नन्दसूनोः**
**कथय कथमिह त्वां सम्भजामस्त्यजामः ॥ ३२ ॥**

**व्या :** **गगनेति** । गगने नक्षत्रमार्गे चरतीति **गगनचरः** । बृहस्पतिरूप उद्धव अस्मत्सन्निधावस्मिन्निकटे ते तव **कृत्यं** कार्यं **किमस्ति** । श्रीकृष्णकृपाविधुराणाम्

अस्माकं **सन्निधौ** तव किमपि प्रयोजनं न भवतीत्यर्थः । **अस्मद्व्रजस्य दूरं** दूरे मधुरायां स्थितं **हरिपदं** श्रीकृष्णपदम् **उपयायाः** प्रयाहि । शब्दतत्त्वाभिमानितया[1] दक्षिणपादाङ्गुष्ठस्थितस्त्वं तत्रैव याहीति भावः । **वक्रया** कुटिलया **अलकाल्या नन्दसूनोः** कृष्णस्य **समरुचिं** समानकान्तिमिहास्यामवस्थायां **कथं** सम्भजामः कथं वा त्यजामः । **कथय** वद । त्वन्निष्ठकान्त्या श्रीकृष्णसादृश्यदर्शनलोभेन त्यागायोगात् । श्रीकृष्णभिन्नतया अन्तत आलिङ्गनादिफलाभावेन भजनायोगादिति भावः । भृङ्गपक्षे गगनचर आकाशचर भृङ्ग अस्मत्सन्निधौ विरहिणीनां निकटे तव कृत्यमस्मच्चित्ताह्लादादिकं कार्यमस्ति किम् । अस्मद्व्रजस्य दूरं हरिपदमाकाशमुपयायाः । नन्दसूनोः वक्रया अलकाल्या समरुचिं समानकान्तिं तद्वन्नीलं वर्तुलं चेत्यर्थः । इह वियोगावस्थायां कथं **सम्भजामः** कथं वा **त्यजामः** । अस्मत्प्रियकृष्णस्य कुटिलालकौपम्यान्न त्यक्तुं शक्ताः मन्मथोद्दीपकत्वान्नाङ्गीकर्तुं च शक्ता इत्यर्थः ॥ ३२ ॥

**वनभवनगतानां दर्शयित्वा स्वरूपं**
**कतिपयदिनमध्ये माधवोऽसौ त्वदीयः ।**
**न दिशति पुनरीक्षां हन्त तस्यानुवर्ती**
**त्वमपि चपल तादृक् किं तदस्मासु मैत्र्या ॥ ३३ ॥**

**व्या : वनेति** । हे उद्धव **असौ** त्वदीयस्त्वत्स्वामी **माधवः** श्रीकृष्णो **वनभवनगतानां** वनस्थितगृहेषु गोष्ठेषु स्थितानामस्माकं **कतिपयदिनमध्ये**ऽल्पदिवसाभ्यन्तरे **स्वस्य रूपं दर्शयित्वा पुनः** इदानीम् **ईक्षां** दर्शनम् । **न दिशति** न प्रयच्छति । **हन्त** खेदे । हे चपल नक्षत्रमार्गे सदा सञ्चरणशील उद्धव **तस्य** श्रीकृष्णस्य **अनुवर्ती** अनुचरस्त्वमपि **तादृक्** तत्सदृशः कदाचिद्व्योम्नि दृश्यमानोऽपि अस्तङ्गतो न दृश्यत इति भावः । **तत्** तस्मात् कारणादस्मासु

---

१ शब्दनामा बृहस्पतिरुदाहृतः । - इति तन्त्रसारसङ्ग्रहे । (३)

**मैत्र्या किम्**। अस्थिरस्यास्मन्मैत्र्या प्रयोजनं नास्तीत्यर्थः। भृङ्गपक्षे तु हे मधुप असौ **त्वदीयो** माधवो वसन्तः। 'विष्णौ वसन्ते वैशाखे माधवे' इति रत्नमाला। **वनभवनगतानां** वने सञ्चरतां **कतिपयदिनमध्ये** चैत्रवैशाखाख्यमासद्वयमध्ये **स्वरूपं** स्वाविर्भावं **दर्शयित्वा** चित्रकुसुमसम्पत्तिमलयमारुतादिना दर्शयित्वा **पुनः** ऋत्वन्तरे **ईक्षां न दिशति**। हे चपल चञ्चल तस्य अस्थिरस्य **वसन्तस्यानुवर्ती** वसन्ततर्विवोल्लासवानित्यर्थः। **त्वमपि** तादृगस्थिरः वर्षाकालादौ सौल्लासभृङ्गसञ्चाराभावादिति भावः। **तत्** तस्मात् **अस्मासु मैत्र्या किम्**। वसन्तसखस्मरोन्मथितचित्तासु मैत्री विरुद्धेति भावः॥ ३३॥

**अयि सखि चरतोऽस्य स्वैरमस्मत् पुरस्ता-**
**न्मरुदपि सहकारी साधयत्यग्र्यशक्तिम्।**
**अभिमुखमनुपार्श्वं विष्वगूर्ध्वं तथाध-**
**श्चरणचतुरशीलः शिक्षयेदेष वीरान्॥ ३४॥**

**व्या : अयीति। अयि सखि। अस्मत्पुरस्तादस्मदग्रे स्वैरं चरत अस्योद्धवस्य मरुत्** [1]मुख्यप्राणोऽपि **सहकारी** एनमाविश्य श्रीकृष्णपरिचर्यादिकमनेन कुर्वन् सन् **अग्र्यशक्तिम्** अभ्यधिकशक्तिं **साधयति** सम्पादयति। मुख्यप्राणावेशमहिम्ना अन्येभ्य आधिक्येन श्रीकृष्णसख्यादिकमुद्धवस्याभूदिति भावः। **एषः** वीरपुरुषाकारवानुद्धवः। **अभिमुखम्** आभिमुख्येन **अनुपार्श्वं** पार्श्वद्वये **विष्वक्** मण्डलाकारतया **ऊर्ध्वं** लङ्घनेन। **अधः** केनचित् उत्क्षिप्तरथात् पूर्वमेवाधस्ताच्चरणे सञ्चरणे **चतुरं** कुशलं **शीलं** यस्य स तथोक्तः। सः **वीरान्** अर्जुनादीन् **शिक्षयेत्**। द्रोणाचार्यादिरूपेणार्जुनादीनां क्षत्रियकुमाराणां विचित्रशस्त्राभ्यासशिक्षकोऽ-

---

१ बृहस्पतिः पूर्वमभूद्धरेः पदं संसेवितुं पवनावेशयुक्तः।
स उद्धवो नाम यदुप्रवीराज्जातो विद्वानुपगवनामधेयात्॥
- म.भा.ता.नि.(१२/१००)

प्येष एवेति भावः । भृङ्गपक्षे तु । **अयि सखि अस्मत्पुरस्तात् स्वैरं चरतोऽस्य भृङ्गस्य मरुदपि** मन्दवायुरप्यग्र्यशक्तिम् अतिशयेनास्मन्मोहकशक्तिं साधयति । अभिमुखमित्यादिना चञ्चरीकस्याभिमुखपार्श्वं विष्वगूर्ध्वमधश्च सञ्चरणस्वभावेन वीराभ्यासशिक्षकगुरुत्वमुत्प्रेक्षितमिति द्रष्टव्यम् ।। ३४ ।।

**सुरपतिरपि नूनं गानमेतन्निशम्य**
**प्रियनिनद महिष्या मानयिष्यत्यवश्यम् ।**
**सममम‌ल विलोक्य त्वद्वशः शिष्यवत् स्यात्**
**किमिह फलमिदानीं गायतोऽप्यस्मदग्रे ।। ३५ ।।**

**व्या :** सुरपतिरिति । हे **प्रियनिनद** प्रियंवद । **अमल** उद्धव सुरपतिरिन्द्रोऽपि ते तवैतद्गानं **निशम्य महिष्याः** शच्याः **समं** समानं त्वाम् । ''रतिमनुगुरवो दक्षशच्यौ च पान्तु''[1] इति वचनात् । **विलोक्य अवश्यं मानयिष्यति** । **शिष्यवत् त्वद्वशः स्यात्** । शिष्यवदेव न तु शिष्यः । बृहस्पतेरपि इन्द्रस्याधिकत्वादिति तात्पर्यद्योतनाय शिष्यवदित्युक्तम् । इदानीमस्मदग्रे गायतोऽपि तव किं **फलम्** । इन्द्रमानितस्य अस्मत्तः किं फलं भवतीति भावः । अथवा वयमपि यदाऽप्सरसो भूत्वा स्वर्गस्थितास्तदा तव सन्मानः कृतः । धवस्येन्द्रस्यास्मदनुकूलत्वात् श्रीकृष्णस्य भर्तृतया स्नेहस्यासंपादितत्वेन विरहभयाभावाच्च । इदीनीं तु भर्तृतया संपादितश्रीकृष्णविरहेण दुःखितेभ्यो गोपीभ्यस्तव किमपि प्रयोजनं न भवतीति भावः । भृङ्गपक्षे । हे प्रियनिनद अमल भृङ्ग । **सुरपतिरप्येतद्गानं** झङ्कारलक्षणगीतं **निशम्य महिष्या** । अस्मिन् पक्षे महिष्येति पदच्छेदः । शच्या समं सार्धं विलासदशायामपीत्यर्थः । त्वां विलोक्य मानयिष्यति आलम्बनभूतयोरिन्द्रशच्योः भृङ्गस्य तव उद्दीपनविभावत्वादिति भावः । शिष्यवत् । त्वद्वशः स्यात् । यथा त्वं भृङ्ग्या सह चरसि तथा शच्या समं विहरिष्यतीति भावः । अस्मदग्रे गायतोऽपि

१ तारतम्यस्तोत्रे ।

तव किं फलम् । विषयद्वेषेण कर्णकबर्योः पुष्पालङ्काराद्यभावात् मकरन्दपानमपि न लभ्यत इति भावः ॥३५॥

**असि मधुकर विद्मो माधवे पक्षपाती**
**कुजरविजयिचापे तस्य जीवायितोऽसि ।**
**विरचय विवशं तं नः समीपे वसन्तं**
**विविधरसविलासश्रेणिविश्राणनज्ञम् ॥ ३६ ॥**

**व्या : असीति** । हे **मधुकर** सुखकर । 'कामानलं मधुलवैः' इति वचनेन मधुशब्दस्य[1] सुखे प्रयोगात् । मधुकुलवृद्धिं करोतीति वा । उद्धव त्वं **माधवे** श्रीकृष्णे । **पक्षपाती** अभिमानविशेषवानित्यर्थः । असीति विद्मः जानीमः । कुत इत्यत आह । **कुजरेति** । **कुजरविजयिचापे तस्य** कौ भूमौ जातः कुजः स चासौ रविश्च । भूमावुत्पन्नः सूर्यरूपी कर्ण इत्यर्थः । तं जयतीति **कुजरविजयी** स चासौ चापश्च गाण्डीवमित्यर्थः तेन इतः सहितः तस्य गांडीवधन्वनोऽर्जुनस्येत्यर्थः।जीवायितःप्राणसमानोऽसि।द्रोणरूपेणसकलविद्याप्रदानेनातिप्रियोऽसीत्यर्थः । श्रीकृष्णसख्यर्जुनप्रियत्वात् त्वं श्रीकृष्णपक्षपातीति भावः । **विवशं** वेः पक्षिणो गरुडस्य वशं अधीनमित्यर्थः 'विः पक्षिपरमात्मनोः' इत्यमरः। भक्ताधीनमिति वाऽर्थः । **विविधरसविलासश्रेणिविश्राणनज्ञं** विविधाः नानाप्रकाराः रसाः शृङ्गारादयो येषु ते विलासाः तेषां श्रेणिः तस्य विश्राणनं वितरणं जानातीति स तथोक्तः । **तं** श्रीकृष्णम् । **नः समीपे वसन्तं** निवसन्तं **विरचय** कुरु । भृङ्गपक्षे तु हे मधुकर । माधवे वसन्ततौ पक्षपाती पक्षाभ्यां पातोऽस्यास्तीति स तथोक्तः । असि वसन्ततविव बहुसञ्चारवानसीति **विद्मः**। वसन्तस्य कुसुमाकरत्वादिति भावः । कुत्सिता जरा यैस्ते कुजराः । जरां

---

१ मधु नाम सुखं विन्द्यान्माधुर्यं सुखहेतुता ।
सुखे रतिर्वा सम्प्रोक्ता शब्दतत्वविलक्षणैः ॥
- इति शब्दनिर्णये (भागवततात्पर्ये ११/७/४५

कुत्सयन्तः युवान इत्यर्थः । तान् विजयत इति तथोक्तः । चापः कन्दर्पधनुः पुष्पमित्यर्थः । तस्मिन् मौर्वी । 'ज्या सिञ्जिनी गुणा जीवा' इत्यभिधानात्। जीववत् मौर्वीवत् आचरतीति जीवायितः । मौर्वीवदाचारमाणो वा ''धनुः पौष्पं मौर्वी मधुकरमयी'' इत्युक्तेः । **विविधरसविलासश्रेणिविश्राणनज्ञम्** । विविधरसानां नानापुष्परसानां तथा विलासानां मिथुनीभूतस्त्रीपुरुषपशुपक्ष्यादि-चित्तसमुन्नतीनाम्। शेषं पूर्ववत्। विवशं शुकादिपक्षिवशम्। तेषामनुकूलमित्यर्थः। तं वसन्तं ऋतुं नः समीपे विरचय । तं कृष्णं नः समीपे वसन्तं कुर्विति प्रागुद्धवं प्रति प्रार्थितत्वात्। स उद्धवः तं कृष्णं आनेष्यतीत्याशया वसन्तकालाभ्यर्थनमिति भावः ॥ ३६ ॥

**वितन्यमानस्वप्रेष्ठवियोगार्तीरथोद्धवः ।**
**प्रियोक्तिभिः प्रीणयित्वा प्रययौ कृष्णसन्निधिम् ॥ ३७ ॥**

**व्या : वितन्यमान** इति । अथ अनन्तरमुद्धवः वितन्यमानाः विस्तार्यमाणाः। **स्वप्रेष्ठस्य** स्वप्रियतमस्य श्रीकृष्णस्य **वियोगार्तयः** वियोगजनितक्लेशाः यासां ताः गोपीः **प्रियोक्तिभिः प्रीणयित्वा** श्रीकृष्णसन्निधिं **प्रययौ** ॥ ३७ ॥

**कंसे बलैः सह मृते सति याऽवशिष्टा**
**वंशं स्वमातुरपि तादृशमस्तिनाम्नी ।**
**कृत्वोचितं विदधतीव निजाभिधानं**
**पित्रे न्यवेदयदथाच्युतकृत्यमार्ता ॥ ३८ ॥**

**व्या : कंस** इति । अथ **कंसे बलैः** सेनाभिः **सह मृते सति अवशिष्टा** अत एव [१]**अस्तिनाम्नी** या कंसपत्नी आर्ता सा **स्वमातुर्वं**शमपि **तादृशं** बलैः सह मृतं कृत्वा

---

१ अस्तिप्रास्तीति कंसस्य महिष्यौ भरतर्षभ ।
हते भर्तरि दुःखार्ते ईयतुः स्वपितुर्गृहान् ॥

निजाभिधानं अस्तीति स्वनाम उचितं **विदधतीव** स्वभर्तुकुलस्थेषु स्वमातृकुलस्थेषु सर्वेषु मृतेषु सत्सु स्वयमेव भूमौ अस्तीति व्युत्पत्या स्वकीयमस्तिनाम सार्थकं कुर्वन्तीव । **स्वपित्रे** जरासन्धाय **अच्युतस्य** चतुर्विधनाशरहितस्य श्रीकृष्णस्य कृत्यं स्वभर्तुवधरूपं कार्यं **न्यवेदयत्** । अच्युतस्येत्यनेन जरासन्धागमनेऽपि श्रीकृष्णस्य न च्युतिरिति सूचितम् ।।३८।।

**स मागधः साधितसैन्यसिन्धुर्मदान्धबुद्धिर्मधुरां जगाम ।**
**अनेकदेशाश्रितभूमिभारहरस्य सारथ्यकृदच्युतस्य ।। ३९ ।।**

**व्या : स इति । साधितसैन्यसिन्धुः** सम्पादितसेनासमुद्रो **मदान्धबुद्धिः सः मागधो** जरासन्धः । **अनेकदेशाश्रितदुर्जनाख्यभूमिभारहरस्य** श्रीकृष्णस्य **सारथ्यकृत्** । नानादेशस्थितान् दुर्जनान् पुञ्जीकृत्य युद्धव्याजेन श्रीकृष्णसमीपं प्रति आनीय दानेन सहायकृदिव **मधुरां** प्रति जगाम । जरासन्धानीतानां सर्वेषां सैन्यानां मधुरायां संहारो भविष्यतीति भावः ।। ३९ ।।

**गजै रथौघैर्गगनं स्पृशद्भिर्भटैर्हयैर्भासुरभूषणौघैः ।**
**जगाम जामातृपथेन तस्मै चमूममुं प्रेषयितुं धियेव ।।४०।।**

**व्या : गजैरिति** । स जरासन्धः **अमुं चमूं जामातृपथेन** दुहितृभर्तृमार्गेण **तस्मै** जामात्रे कंसाय **प्रेषयितुं धियेव** । **गगनं स्पृशद्भिः गजैः रथौघैः भासुरभूषणानां ओघो** येषां तैः **भटैः हयैश्च** सह मधुरां प्रति**जगाम** मृतः कंसो यत्रांधेतमसि गतः तत्रेयं सेनाऽपि गमिष्यतीति भावः ।। ४० ।।

---

पित्रे मगधराजाय जरासन्धाय दुःखिते ।
वेदयाश्चक्रतुः सर्वमात्मवैरूप्यकारणम् ।। - भागवते (१०/४९/१,२)
रक्षत्यजे त्रिजगतां परिरक्षकेऽस्मिन् सर्वान् यदून् मगधराजसुते स्वभर्तुः ।
कृष्णान्मृतिं पितुरवाप्य समीपमस्तिप्रास्ती शशंसतुरतीव च दुःखितेऽस्मै ।।
- म.भा.ता.नि.(१४/९)

**कुन्तैः[1] कुठारैः कुद्दालैर्बभञ्जुर्भगवत्पुरीम् ।**
**आद्यामुपनिषद्विद्यां कुतर्कैरिव वादिनः ॥ ४१ ॥**

**व्या :** कुन्तैरिति । ते जरासुतभटाः कुन्तैस्तौमरैः **कुठारैः** परश्वधैः **कुद्दालैः** भूखननार्थं कृतदारुप्रान्तस्थूलायोदण्डविशेषैर्भगवतः श्रीकृष्णस्य **पुरीं** मधुरां **बभञ्जुः** । कथमिव । **वादिनो** दुर्वादिनः **कुतर्कैः** कुत्सिततर्कैः **आद्याम**नादिभूतां **उपनिषद्विद्यामिव** ॥ ४१ ॥

**उपवनमुपवेदप्रायमुन्मूलयन्तः**
**सुकृतसममुदारं द्वारमाराद्बभञ्जुः ।**
**प्रतिभयवरशक्त्याद्यूर्जिताधारयुक्ताः**
**खलमतहृतचित्ता दूष्यदुर्मन्त्रदृप्ताः ॥४२॥**

**व्या :** अतःपरं मधुरापुरीमुपनिषद्विद्यासाम्येन निरूप्य श्रीकृष्णसेनां जरासन्धसेनां च तत्त्ववादिमायावादिसाम्येन वर्णयन् तद्युद्धं च तयोर्वादसमतया समर्थयते – **उपवनमित्यादिना** । **प्रतिभयानि** भयङ्कराणि **वरशक्त्यादी**न्यायुधान्येवोर्जिताधारः उत्तमाश्रयः तेन । **युक्ताः** । अन्यत्र प्रतिभयो भयङ्करो वरो याभ्यस्ताः शक्त्यादयो दुर्देवताः । आदिपदेन [2]भैरवीकुक्कुटादयो गृह्यन्ते । ता एवोर्जिताधारस्तेन युक्ताः शक्त्यादिपूजया सम्पादितकुबुद्धय इत्यर्थः । **खलस्य**

---

१ कुन्तैः कुठारैः कुद्दालैर्दण्डभारैश्च भूरिभिः ।
**कर्षणस्थैश्च पाशाणैर्बभञ्ज परितः पुरम् ॥** - भागवते (१०/५१/२४)

२ यद्यद्वैतं कर्कशैर्गौणतर्कै रुद्धं साध्यं नैव भात्यस्तु तावत् ।
षट्कर्मज्ञैर्दिव्यमन्त्रौषधाढ्यैरेतैर्गुप्तान् नो न जेता हि कश्चित् ॥
- (म.वि.-१२/२०) इतिवज्ज्ञेयम् ।
'पालनवशीकरणस्तम्भनविद्वेषणोच्चाटनमारणानि **षट्कर्माणि**'
- इति म.वि.भावप्रकाशिकायाम्

[1]जरासन्धस्य **मतेनानुमत्या हृतचित्ताः** । अन्यत्र खलस्य सङ्करस्य मतेन दुःसिद्धान्तेन हृतमपहृतं चित्तं येषां ते तथोक्ताः । **दूष्यदुर्मन्त्रः** दुरालोचनं तेन **दृप्ताः** । अन्यत्रोच्छिष्ठगणपत्यादिदुर्देवतामन्त्रजपेन दृप्ताः जरासन्धभटाः **उपवेद**-प्रायमायुर्वेदधनुर्वेदगान्धर्ववेदशस्त्रशास्त्राख्योपवेदसममुपवनं आरामं **उन्मूलयन्तः** सन्तः । मधुराया उपनिषत्साम्यस्योक्तत्वात् समीपस्थोपवनानामुपवेदप्राय-त्वादिति भावः । **सुकृतसमं** पुण्येन समम् । **उदार**मुत्कृष्टं **द्वारं** गोपुरम् । 'कर्मणा ज्ञानमातनाति' इति श्रुतेः सुकृतस्य ज्ञानहेतूपनिषत्सु प्रवेशहेतुत्वाद्द्वारत्वम् । आरात् समीपे बभंजुः ॥ ४२ ॥

**बाध्यां तां सह निश्चलार्थनिकरैः क्रुद्धाः खला निर्गुणा-**
**गारामन्तरहो विधातुममता यत्नं वितेनुः किल ।**
**कृष्णेनापि समुज्झितां समयिनो युक्त्याऽऽत्मपक्षेऽञ्जसा**
**कृत्वैक्यं समयोजयन् गतभया दुर्भाष्यपुञ्जैरपि ॥ ४३ ॥**

**व्या : बाध्यामिति । समयिनः** एवं कुर्म इति सङ्केतवन्तः अन्यत्र दुःसिद्धान्तिनः । गतभयाः भयरहिताः । **क्रुद्धाः खलाः अमताः** वैरिणः । युक्त्या सामदानाद्युपायेन । आत्मपक्षे स्वसैन्ये अञ्जसा सम्यगैक्यं ऐकमत्यं कृत्वा संपाद्य । कृत्वेत्यनेन स्वकटके विद्यमानानां बलादानीतानां सज्जीवानां दण्डभीत्यैवैकमत्यमिति ध्वनयति । अन्यत्र **युक्त्या** । विमता **आत्मानः** परमात्मनस्तत्त्वतो न भिद्यन्ते आत्मत्वात् परमात्मवदित्यादियुक्त्या । **आत्मपक्षे** जीवपरमात्मरूपचेतनपक्षे । **अञ्जसैक्यमद्वैतं** कृत्वा । अत्रापि कृत्वेत्यनेन अविद्यमानमेवैक्यं कल्पितवन्त इति ध्वनिः । तां पुरीं मधुरां निश्चलार्थनिकरैः सम्यक्संबद्धतया **निश्चलैः** । अचलैः

---

१ स विप्रचित्तिश्च जरासुतोऽभूद्वराद्विधातुर्गिरिशस्य चैव ।
सर्वैरजेयो बलमुत्तमं तज्ज्ञात्वैव कंसस्य मुदा सुते ददौ ॥
- म.भा.ता.नि.(११/२०१)

**अर्थनिकरैः** कलशध्वजपटतोरणाद्यर्थसमूहैः **सह बाध्यां** विनाश्यां वितेनुः किल । बहिःस्थित्वैव अर्धचन्द्राकारशरैः क्षेपणीयादिभिश्च प्राकारादिकं पातितवन्त इत्यर्थः । अन्यत्र निश्चलार्थनिकरैः प्रमाणान्तराबाध्यप्रतिपाद्य-समूहैः । पञ्चभेदसहितसत्यभूतपृथिव्यादिप्रपञ्चैः सह तामुपनिषद्विद्यां बाध्यां अर्थतः शब्दतोऽपि मिथ्याभूतामित्यर्थः । **वितेनुः किल** । अन्तः अभ्यन्तरे **निर्गुणानि** भित्त्यादिषु खचितपद्मरागादिरत्नपातनेन शोभारूपगुणरहितान्या-गाराणि गृहाणि यस्यां सा ताम् । अन्यत्र निर्गुणस्य निर्गुणब्रह्मण **आगारं** यस्यां ताम् । अन्तर्निर्गुणप्रतिपादिकामित्यर्थः । **विधातुं यत्नं वितेनुः किल** । अहो निर्गुणस्य प्रवृत्तिनिमित्तधर्मसापेक्षनिर्गुणशब्दप्रतिपाद्यत्वमसम्भावितमित्यत अहो इत्युक्तम् । **कृष्णेन समुज्झितां** रहितामपि विधातुं यत्नं वितेनुः । अन्यत्र शबलब्रह्मरूपे कृष्णे तात्पर्यरहितां विधातुं यत्नं वितेनुरिति पूर्वेण संबन्धः । दुर्भाष्यपुञ्जैरपि पुरीं भिन्धि छिन्धि दहेत्यादिदुर्वाक्यसङ्घैरपि । **समयोजयन्** योजितवन्तः । अन्यत्र द्वात्रिंशद्दुर्भाष्यपुञ्जैः समयोजयन् द्वात्रिंशदुपनिषदा-मापातरमणीयपूर्वोत्तरविरुद्धार्थकद्वात्रिंशद्दुर्भाष्याण्यपिं चक्रुरित्यर्थः । यद्वा एकविंशतिकुभाष्यैः समयोजयन्नित्यर्थः ॥ ४३ ॥

**कृष्णोऽपि स्वचमूं सुवर्णखचितां कृत्वा चतुर्धा प्रभु-**
**स्तत्राग्र्यांश्चतुरो विधाय नगरीरक्षार्थमीशोऽदिशत् ।**
**भास्वत्सूत्रचमूमिवोपनिषदां रक्षार्थमत्यूर्जिता-**
**मध्यायैः सहितां चतुर्भिरमलैस्तन्मानपादोज्ज्वलैः ॥४४॥**

**व्या :** कृष्णोऽपीति । **प्रभुः** समर्थः ईशः । स्वामी **कृष्णोऽपि सुवर्णखचितां** सुवर्णालङ्कृतां **स्वचमूं** स्वसेनां **चतुर्धा कृत्वा** चतुर्दिक्षु चतुर्व्यूहीकृत्य तत्रैकैकसमूहे **अग्र्यान्** सेनानायकान् **चतुरो विधाय नगरीरक्षार्थमादिशत्** आज्ञापयामास । तत्कथमिव । **तन्मानपादोज्ज्वलैः** तेषां अध्यायानां मानं

सङ्ख्या परिमितिर्येषां ते तन्मानाः ये पादाः तैरुज्वलाः शोभमानास्तैः । प्रत्येकं पादचतुष्टयोपेतैरित्यर्थः । **अमलैर्निर्दुष्टैः चतुर्भिरध्यायैः** सहितामत्यूर्जि-तामत्यन्तोत्कृष्टां शोभनवर्णात्मकत्वेन सुवर्णखचित त्वमत्राप्यनुसन्धेयम् । **भास्वत्सूत्रचमूं** लसद्ब्रह्मसूत्रात्मकसेनाम् । **उपनिषदां रक्षार्थं** श्रीकृष्णो वेद-व्यास इव अदिशदिति संबन्धः । श्रीकृष्णः स्वसेनां चतुर्व्यूहीकृत्य तत्रैकैकत्र चतुरग्रेसरान् कृत्वा प्रेषितवानिति भागवते स्पष्टम्[१] । कृष्णसेनायाश्चतुर्दिक्षु चतुर्धा विभागवत्सूत्रसेनाया अपि चतुरध्यायात्मना विभागः । एकैकस्मिन् व्यूहे चतुःचतुःसंख्याकसेनानायकवत् एकैकस्मिन्नध्याये चतुश्चतुःपादात्मना अपरो विभागः। मधुरापुरीरक्षार्थं यदुसेना उपनिषत्पुरीरक्षार्थं सूत्रसेना सुवर्णालङ्कार-खचितत्वमेकत्र शोभनवर्णाख्यालङ्कारखचितत्वमन्यत्रेति विवेको द्रष्टव्यः । अत एव श्लिष्टगर्भितेयमुपमा ॥ ४४ ॥

**पक्षीन्द्रायतनः परस्य वसतिर्वृष्णिप्रमोदोऽभ्यगा-**
**द्विख्याताश्वचतुष्टयः किल [२]रथो विभ्राजमानध्वजः ।**

---

१ निर्गत्य सदनात् कृष्णो वृष्णीनाहूय सर्वशः ।
आज्ञापयामास तूर्णं चतुर्द्वारस्य पालने ॥
वसुदेवं च निशठं कृतवर्माणमुद्धवम् ।
कृष्णो निर्यातयामास पूर्वद्धारेण भारत ॥
उग्रसेनं सुदामानं पृथुं विपृथुमेव च ।
हरिर्निर्यातयामास द्वारेणानुत्तरेण वै ॥
सात्यकिं च गदं चैव प्रसेनं गान्दिनीसुतम् ।
हरिः प्रतीचीद्वारेण प्रेषयामास दर्मदान् ॥
गोविन्दस्तु महातेजाः स्वयं दारुकसारथिः ।
आत्ताभीष्टप्रहरणः सङ्कर्षणसहायवान् ॥
उत्तरेण विनिर्गम्य द्वारेण जगदीश्वरः ॥ - भागवते (१०/४९/३२-३७)

२ एवं ध्यायति गोविन्दे आकाशात् सूर्यवर्चसौ ।

**मध्वस्येव मनोरथो निगमसम्बद्धः खगेन्द्रावृतो**
**विष्णोर्धाम तदङ्किकेतुनिलयः सूत्रौघपुष्टिप्रदः ॥ ४५ ॥**

**व्या :** पक्षीन्द्रेति । **पक्षीन्द्रस्य** गरुडस्यायतनं ध्वजाग्रस्थानं यस्मिन् स तथोक्तः। **परस्य** श्रीकृष्णस्य **वसतिः** निवासः **वृष्णीनां** यादवानां **प्रमोदो** यस्मात् स तथोक्तः । **विख्यातमश्वचतुष्टयं** यस्य सः । **विभ्राजमानध्वजः रथः अभ्यगात्** किल । वैकुण्ठलोकादागतः **किल** । किलेत्यैतिह्ये[1] । कथमिव **निगमैः**

---

रथावुपस्थितौ सद्यः ससूतौ सपरिच्छदौ ॥ -भाग..(१०/५०/११)
एतस्मिन्नेव काले तु गगनात् सूर्यवर्चसौ ।
रथावुपस्थितौ सद्यः ससूतौ सपरिच्छदौ ॥
आयुधानि च दिव्यानि पुराणानि यदृच्छया ।
चक्रं सुदर्शनं घोरं सहस्रारं मनोरमम् ॥
गदा कौमोदकी गुर्वी नाम्ना कौमोदकी शुभा ।
त्रिनतं कार्मुकश्रेष्ठं शार्ङ्गसञ्ज्ञं गुणान्वितम् ॥
तीक्ष्णधारः शितमुखः खड्गो नन्दकसञ्ज्ञितः ।
लघू शरचितौ रम्यौ तूणी चाक्षयसायकौ ॥
तुरगाः शैब्यसुग्रीवमेघपुष्टबलाहकाः ।
हलं च बलभद्रस्य मुसलं च दृढं गुरु ॥
इत्येतान्यायुधान्याजौ गगनादागतानि सः ।
दृष्ट्वा राजन् हृषीकेशः सङ्कर्षणमथाब्रवीत् ॥ - भागवते (१०/४९/२२-२७)
तस्येच्छयैव पृथिवीमवतेरुराशु तस्यायुधानि सबलस्य सुभास्वराणि ।
शार्ङ्गासिचक्रदरतूणगदाः स्वकीया जग्राह दारुकगृहीतरथे स्थितः सः ॥
आरुह्य भूमयरथं प्रतियुक्तमश्वैर्वेदात्मकैर्धनुरधिज्यमथ प्रगृह्य ।
शार्ङ्गं शरांश्च निशितान् मगधाधिराजमुग्रं नृपेन्द्रसहितं प्रययौ जवेन ॥
रामः प्रगृह्य मुसलं स हलं च यानमास्थाय सायकशरासनतूणयुक्तः ।
सैन्यं जरासुतसुरक्षितमभ्यधावद्धर्षान्नदन्नुरुबलोऽरिबलैरधृष्यः ॥
- म.भा.ता.नि. (१४/२१-२३)

१ एवं ध्यायति गोविन्दे आकाशात् सूर्यवर्चसौ ।

ऋगादिचतुर्वेदैः **संबद्धः** चतुर्वेदविचारसमर्थ इत्यर्थः । **खगेन्द्रावृतः** गरुडेन मनोभिमानिना आवृतः । यदा मनः पञ्चरात्रादिसच्छास्त्रविचारायाभिनिविष्टं तदा गरुडोऽभिमानीति पुराणादिप्रसिद्धिः । **विष्णोर्धाम** मन्दिरं सन्निधियोग्यमित्यर्थः । तस्य **श्रीकृष्णस्याङ्घ्रौ** पादतले **केतोः** रेखारूपध्वजस्य **निलय** आश्रमः सदा तद्ध्यानरत इत्यर्थः । **सूत्रौघपुष्टिदः** ब्रह्मसूत्रसमूहस्यार्थपुष्टिदः **मध्वस्य** श्रीमध्वाचार्यस्य **मनोरथ इव** भाष्यकरणोद्युक्तमनोरथ इवेत्यर्थः । इयमपि समग्रोपमा ।। ४५ ।।

**कौमोदकी वादनिविष्टमध्ववाचः समा प्रादुरभूद्धरण्याम् ।**
**कम्बुर्गुरोर्मञ्जुनिनादकण्ठकान्तिः समस्तागमगानकर्तुः ।।४६।।**

**कौमोदकीति** । तदा युद्धसमये **वादनिविष्टः** वादार्थमुपविष्टः । **मध्वः** श्रीमध्वाचार्यस्तस्य **वाचः समा** वादे श्रीमध्वाचार्यस्य एकैकं वचनं गदाप्रहारसदृशमिति भावः । [1]कौमोदकी गदा **धरिण्यां प्रादुरभूत्** । [2]**समस्तागमगानकर्तुर्गुरोः**राचार्यस्य **मञ्जुनिनादो** यः **कण्ठ**स्तस्य **कान्ति**र्यस्य सः ।

---

रथावुपस्थितौ सद्यः ससूतौ सपरिच्छदौ ।। - इति भागवते (१०/५०/११)

१ यस्य **गदा** पवमानः - यमकभारते
**गदा** तु वायुः बलसंविदात्मा - म.भा.ता.नि. (३/७३)

२ इत्थं स गायञ्छतकोटिविस्तरं **रामायणं भारतपञ्चरात्रम्** ।
**वेदांश्च सर्वान् सहितब्रह्मसूत्रान्** व्याचक्षाणो नित्यसुखोद्धरोऽभूत् ।।
- म.भा.ता.नि. (९/१२१)

**गन्धर्वविद्यानिपुणस्य** नित्यं गन्धर्ववर्यैरनुगीतकीर्तेः ।
कलाश्च शेषा हृदये गुरोर्नः करोल्लसत्कन्दुकवद्विभान्ति ।। - इति तत्त्वप्रदीपे
अयमेव गोविषयतोऽपि सदसि जनतार्थितो जवात् ।
पुष्पमुत फलमहो विदधे जनसुस्तिदानुप**मगानसम्पदा** ।। - मध्वविजये (१०/५३)
**दिव्यगेयविदग्धोऽसौ** सर्वज्ञ इति याचितः ।
विद्वद्भिरत्र कृतवान् गानशास्त्रं सुदुर्लभम् ।। - इति म.वि.भावप्रकाशिकायाम्

**कम्बुः** पाञ्चजन्यशङ्खः । 'शङ्खः स्यात्कुम्बुरस्त्रियाम्' इत्यमरः । **प्रादुरभूत्** प्रादुर्बभूव ॥४६॥

**व्यक्ताभेद्यसहस्रवक्त्ररुचिरं नित्यं मुरारेः प्रियं**
**[१]मुक्तिद्वारमहीशमुख्यविबुधैर्गीतं तमिस्रापहम् ।**
**दैत्यध्वंसि सुदर्शनं दिनकरोद्रिक्तं दिगन्तातत्तं**
**पृथ्व्यां मध्वसुदर्शनप्रतिकृतिः प्रादृश्यत प्रोज्ज्वलम् ॥ ४७ ॥**

**व्या : व्यक्तेति । व्यक्तान्यभेद्यानि सहस्रवक्त्राणि** वक्त्रस्थानीयान्यपराणि तैः **रुचिरं** मनोहरम् । शास्त्रपक्षे बह्वावृत्त्या योजनादेकैकं वाक्यं सहस्रमुखमित्यर्थः । **मुरारेः** श्रीकृष्णस्य **नित्यं प्रियम्** । **मुक्तिद्वारम्** । 'लोकस्य द्वारमर्चिष्मत्यविन्नम्' इति श्रुतेः । अनन्तासनगमनसमये अन्धे तमसि द्वारकरणान्मुक्तिद्वारं सुदर्शनम् । अन्यत्राभ्यासेनावर्तनान्मुक्तिद्वारम् । [२]**अहीशमुख्यविबुधैर्गीतं** स्तुतम् । इदमुभयत्रापि समम् । **तमिस्रापहं** तमोनिवारणम् । अन्यत्राज्ञाननिवारणम् । **दैत्यध्वंसि** शिशुपालादिदैत्यानां शिरःश्छेतृ । अन्यत्र दैत्यानां [३]दुर्मतप्रवर्तकानां ध्वंसि । **दिनकरादुद्रिक्तं** श्रेष्ठमत एव **प्रोज्ज्वलं** प्रकाशमानम् । **दिगन्ताततं** सकलदिग्व्याप्तम् । **मध्वस्य** श्रीमध्वाचार्यस्य **सुदर्शनं** [४]सत्सिद्धान्तस्तदेव

---

१ सुदर्शन महाज्वाल कोटिसूर्यसमप्रभ ।
अज्ञानान्धस्य मे नित्यं विष्णोर्मार्गं प्रदर्शय ॥ इति चक्रस्तुतिः। -वराहपुराणे ।

२ प्रचुरान्तरप्रवचनं फणिराडुपशुश्रुवान् ससनकादिमुनिः ।
गगनेऽल्पदृष्टवपुरत्र जनैस्त्वरितं निलीनरुचिराप पदम् ॥ -म.वि.(११/१)

३ अपि त्रिलोक्या बहिरुल्लसन्ती तमो हरन्ती मुहुरान्तरं च ।
दिश्याद्दृशं नो विशदां जयन्ती मध्वस्य कीर्तिर्दिननाथदीप्तिम् ॥ - म.वि.(१/३)
एकविंशतिकुभाष्यदूषकं ब्रह्मसूत्रगणभाष्यमद्भुतम् ।
अप्यदूष्यमतनोदनन्तधीर्भूतभाविभवदात्मभिः क्वचित् ॥ - म.वि. (९/१२)

४ महानन्दतीर्थस्य ये भाष्यभावं मनोवाग्भिरावर्तयन्ते स्वशक्त्या ।

प्रतिकृतिरुपमा यस्य स तथोक्तं ईदृशं सुदर्शनं चक्रं पृथिव्यां प्रादृश्यत । श्लिष्टोपमयोः सङ्करः ॥ ४७ ॥

**कृष्णश्रैष्ठ्यसमर्थनेऽतिचतुरैस्तद्भिन्नलोके भिदां**
**नित्यं साधयितुं क्षमैर्मतिमताऽप्यच्छेद्यहृद्यात्मभिः ।**
**विख्यातैः शरसञ्चयैः सुरुचिरं प्राप्तं निषङ्गद्वयं**
**भास्वन्मानसहस्रभाष्यसदनुव्याख्यानकल्पं तदा ॥ ४८ ॥**

**व्या : कृष्णेति । श्रीकृष्णस्य श्रैष्ठ्यं** बलकौशल्याधिक्यं तस्य **समर्थने** । प्रमाणपक्षे तु विष्णुसर्वोत्तमत्व**समर्थनेऽतिचतुरैः**स्त**द्भिन्नलोके** तद्वैरिजने । अन्यत्र तद्व्यतिरिक्तजने **भिदां** विदारणम् । अन्यत्रान्योन्यभावं **साधयितुं नित्यं क्षमैः** समर्थैः **मतिमताऽपि** बुद्धिमताऽ**प्यच्छेद्यहृद्यात्मभिः** अच्छेद्यमनोहर-स्वरूपै**र्विख्यातैः** । प्रमाणपक्षेऽपि सममेतत् । **शरसञ्चयैः सुरुचिरम्** । **भास्वंति मानसहस्राणि** ययोस्ते **भाष्यसदनुव्याख्याने** तयोः **कल्पं** सदृशम् । **निषङ्गद्वयं** तूणीरद्वयम् । **तदा** तस्मिन् काले **प्राप्तम्** ॥ ४८ ॥

**सद्वंशजातं सुगुणं मुकुन्दहस्ताम्बुजाधारमभेद्यमन्यैः ।**
**शार्ङ्गं सतां वृन्दमिवाविरासीन्मानोपमानेषुभिरन्यजिष्णु ॥४९॥**

**व्या : सद्वंशेति । सद्वंशजातं** समीचीनवेणुप्रभवम् । यद्यपि **शार्ङ्गं** शृङ्गजन्यं तथाऽपि धनुर्जातित्वात् समीचीनवंशवत् वर्तुलाकारेण निर्मितत्वाच्छृंगाच्छरो जायत इति वचनात् कार्यकारणयोरभेदाद्वा सद्वंशजातमित्युक्तम् । अन्यत्र समीचीनकुलोत्पन्नम् । **सुगुणं** शोभनज्यम् । अन्यत्र वैराग्यादिगुणोपेतम् । **मुकुन्दहस्ताम्बुज**मेव **आधारो** यस्य तत् एतदुभयत्र समानम् । **अन्यैः** शत्रुभिरभेद्यम् । इदमप्युभयत्र समानम् । **मानोपमानेषुभिः** प्रमाणसदृशशरैः ।

---

सुराद्या नरान्ता मुकुन्दप्रसादादिमं मोक्षमेते भजन्ते सदेति ॥ -म.वि.(११/७९)

अन्यजिष्णु विपक्षजयशीलम् । समानमेतदुभयत्र । [१]शाङ्र्गधनुः **सतां** सज्जनानां **वृन्दमिवाविरासीत्** ।। ४९ ।।

**द्विड्वर्गदैन्यकरनन्दकसञ्ज्ञितासिं भक्तौघनन्दकमसावुररीचकार ।**
**सद्वादिनां समयमुद्धतशत्रुवर्गविध्वंसनं स्वजनहर्षकरं युधीव ।।५०।।**

**व्या :** द्विड्वर्गेति । असौ कृष्णः **भक्तौघनन्दकं** भक्तसमूहस्य हर्षकरम् । द्विषां वर्गस्य **दैन्यकरश्चासौ** [२]**नन्दकसंज्ञितासिश्च तमुररीचकार** अङ्गीकृतवान् । कथमिव । युधि वादयुद्धे **उद्धतशत्रुवर्गविध्वंसनं स्वजनहर्षकरम्** । **सद्वादिनां** श्रीमदाचार्यपक्षीयवादिनां **समयमिव** प्रतिज्ञामिव ।। ५० ।।

**श्रुत्यन्तविश्रान्तशरौघयुक्तिशूरा हरेः पक्षधरा विधाय ।**
**सिद्धान्तमत्यूर्जितपूर्वपक्षं जघ्नुः क्रमेणोत्तरपक्षमन्ते ।। ५१ ।।**

**व्या : श्रुत्यन्त** इति । **श्रुतेः** कर्णस्यान्ते समीपे **विश्रान्तानाम्** अवस्थितानां **शरौघानां युक्तिर्योजना तया शूराः हरेः** श्रीकृष्णस्य **पक्षधराः** सहायिनो भटाः । **अत्यूर्जितः** अतिवृद्धः **पूर्वपक्षः** पूर्वद्वारि स्थितशत्रुपक्षः तम् । **सिद्धान्तम्** । सिद्धः सम्पन्नः अन्तो नाशो यस्य स तथोक्तः तं विधाय अन्ते अवसाने । उत्तरद्वारि स्थितशत्रुपक्षं **क्रमेण जघ्नुः** । अन्यत्र । श्रुत्यन्तेषु वेदान्तेषु विश्रान्ताः शरौघवत् क्रूराः युक्तयस्ताभिः साधनभूताभिः शूराः हरेः पक्षधराः वैष्णवाः । **अत्यूर्जितपूर्वपक्षम्** अतिप्रबलमायिभिः स्वग्रन्थे पूर्वपक्षीकृतम् । भेदवद्विश्वं सत्यमित्यादिप्रमेयमेव **सिद्धान्तं विधाय** । भेदादिप्रमेयमेव स्वसिद्धान्तं विधाय द्वासुपर्णेत्यादितल्लिखितवाक्यान्येव प्रबलीकृत्य **अन्ते** अन्ततः **क्रमेणोत्तरपक्षं**

---

१ शाङ्र्गं च विद्या - म.भा.ता.नि. (३/७४)

२ रमैव खड्गः - म.भा.ता.नि. (३/७४)

मायिभिः सिद्धान्तिताद्वैतादिपक्षमेव जघ्नुः। तत्र प्रमाणीकृत ''नेहनाना''[१] इत्या - दिवाक्यानां पूर्वोत्तरविरोधं प्रदर्श्य निराकृतवन्तः ॥ ५१ ॥

**आप्यायिताः किल मुरान्तकमुख्यवात-**
**सञ्जातशङ्खमधुरश्रुतिरम्यशब्दैः ।**
**शत्रून् निहत्य समरे परितः पुरीं तां**
**चक्रुर्मुकुन्दगुणवर्णनशोभमानाम् ॥ ५२ ॥**

**व्या :** आप्यायिता इति। **मुरान्तकस्य** श्रीकृष्णस्य **मुख्यः** मुखाज्जातो वायुस्तेन **सञ्जातै**र्वायुना पूर्यमाणे सति जातैरित्यर्थः । **शङ्खस्य मधुरै**र्मनोहरैः **श्रुतिरम्यैः** श्रुतिसुखैः **शब्दै**र्ध्वनिभिः श्रीकृष्णध्मातपाञ्चजन्यध्वनिभिरित्यर्थः । आप्यायिताः परिहृतश्रमाः भटाः **समरे** युद्धे **शत्रून् निहत्य परितः** समन्तात् **पुरीं** मधुराम् । मुकुन्दस्य गुणवर्णनेन शौर्यादिगुणकीर्तनेन शोभमानां चक्रुः । जरासन्धपराजये सति सर्वे पौराः श्रीकृष्णं तुष्टुवुरित्यर्थः । अन्यत्र । मुरान्तकस्य सम्बन्धी मुख्यवातो मुख्यप्राणस्तस्मात् सञ्जातस्तदवताररूपः श्रीमदाचार्यस्तस्य शङ्खवत् शङ्खनादवन्मधुरैः श्रुतिरम्यैर्वेदवचनेन रम्यैः श्लाघ्यैः शब्दैः व्याख्यानादिषु प्रयुज्यमानवाक्यैराप्यायिताः युक्तिपुष्टिं प्रापितास्तच्छिष्याः समरे वादयुद्धे शत्रून् मायिनो निहत्य निर्जित्य **तां** पुरीमुपनिषदं परितः सर्वत्र **मुकुन्दगुणवर्णनेन शोभमानां चक्रुः** । सकलामुपनिषदं श्रीकृष्णगुणप्रतिपादिकां[२] चक्रुरित्यर्थः ॥५२॥

**कृष्णाङ्गसङ्गत्युज्ज्वलशार्ङ्गजन्मा**
**सत्पक्षपातेन गृहीतवेगः ।**

---

१ कठोपनिषत् (४/११) बृहदारण्यकोपनिषत् (४/४/१९)

२ स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् । (गीता १/१९) इतिवत् ।
स पाञ्चजन्योऽच्युतवक्त्रवायुना भृशं सुपूर्णोदरनिःसृतध्वनिः ।
जगद्धिरिञ्चेशसुरेन्द्रपूर्वकं प्रकम्पयामास युगात्यये यथा ॥-म.भा.ता.नि.(२६/९२)

**एकोऽपि नानावदनैः समन्ता-**
**द्युद्ध्यन्नसौ मध्व इवास्ति बाणः[१] ॥५३॥**

**व्या : कृष्णेति ।** कृष्णाङ्गसङ्गत्युज्ज्वलशार्ङ्गात् जन्म बहिर्निर्गमनं यस्य स तथोक्तः। मध्वविषये तु **कृष्णाङ्गसङ्गत्युज्ज्वलशार्ङ्गजन्मा** श्रीकृष्णालिङ्गितशार्ङ्गाभिमानिदुर्गात्मकलक्ष्मीप्रभवः मुख्यप्राणात्मकमध्वस्य [२]लक्ष्मीपुत्रत्वादिति भावः। **सत्पक्षपातेन** समीचीनगरुतः पातेन चलनेन गृहीतः स्वीकृतो वेगः शीघ्रगमनं यस्य स तथोक्तः । अन्यत्र । सत्सु पक्षपातेन **गृहीतो वेगः** शास्त्रकरणत्वरा येन सः । **एकोऽपि नानावदनैरनेकमुखैः समन्ताद्युद्ध्यन्** शत्रुवधं कुर्वन् । अन्यत्र एकोऽपि नानावदनैश्चतुर्मुखत्वादनेकवदनैः समन्ताद्दिक्चतुष्टयमध्ये युद्ध्यन् वादं कुर्वन् **असौ बाणः मध्व इवास्ति ।** ''पञ्चात्मको मारुत एव बाणः''[३] इति वचनात् आचार्यस्य बाणसाम्यम् ।। ५३ ।।

---

१ कर्णान्तमानीय गुणग्रहीत्रा रामेण मुक्तो रणकोविदेन ।
स्फुरन्नसौ वैरिभयङ्करोऽभूत् सत्पक्षपाती प्रदरो यथाऽग्र्यः ।।
-इति सुमध्वविजये । (१/१४)

२ दशप्रमतिं जनयन्त योषणः । - इति बळित्थासूक्तम् ।
श्रीभूदुर्गाख्याः वेदाभिमानिन्यो योषितः दोहसे – 'दुह प्रपूरणे' इति धातोः सर्वज्ञानपूरणया वृषभस्य देवश्रेष्ठस्य अस्य वायोः तृतीयावताररूपं 'दशेति सर्वमुद्दिष्टं सर्वं पूर्णमिहोच्यते । प्रज्ञा प्रमतिरुद्दिष्टा पूर्णप्रज्ञस्ततः स्मृतः' इति स्मृतेः 'दशदशस्तच्छतम्' इत्यादिश्रुतेश्च दश पूर्णाः मतयो भगवद्विषयत्वात् प्रकृष्टा मतयो यस्य तं पूर्णप्रज्ञमिति यावत् । जनयन्त 'बहुलं च्छन्दस्यमाङ्योगेऽपि' इति वचनात् अजनयन्त । श्रीभूदुर्गाख्या वेदाभिमानिन्यो देव्यः स्वाभिमन्यमानवेदानामन्यैरन्यथा व्याख्यातत्त्वाद्यथावद्व्याख्यानाय मध्यगेहाख्यविप्रपत्न्या उदरे स्थित्वाऽजनयन्तेति भावः। -इतिश्रीवादिराजतीर्थश्रीचरणाः स्वकृत श्रीमन्महाभारततात्पर्यभावप्रकाशिकायाम्। (२/१५३)

३ महाभारततात्पर्यनिर्णये (३/७६)

**अयःस्थिराप्त्याऽरिभटैरसह्यः सुवर्णशोभी शुभवंशजन्मा।**
**दिगष्टकव्याप्ततनुः समन्ताज्जिगाय मायाविनिकायमाजौ ॥५४॥**

**व्या :** अयःस्थिरेति। **अयःस्थिराप्त्या** अयसः बाणाग्रवर्तिकृष्णायसस्य स्थिरा दृढा आप्तिः संबन्धस्तया **अरिभटैर**रेर्जरासन्धस्य **भटैर्योधैरसह्यः** सोढुमशक्यः बाणस्य निशितायोमुखत्वादिति भावः। अन्यत्र। अये शुभप्रदे देवे हरौ। 'अयः शुभावहो विधिः' इत्यमरः। स्थिरा दृढा आप्तिर्विश्वासो भक्तिरिति यावत्। तया अरिभटैः सङ्करादिभिरसह्यः। **सुवर्णशोभी** सुवर्णनिर्मितमुखेन शोभत इति तथोक्तः। आचार्यपक्षे तु शोभनवर्णैरक्षरैः। स्तुतौ वर्णन्तु वाक्षर इत्यमरः। शोभी **शुभवंशजन्मा** शुभः व्रणवक्रत्वादिदोषशून्यो वंशो वेणुस्तस्माज्जन्म यस्य स तथोक्तः। अन्यत्र। शुभकुलोत्पन्नः। दिशामष्टकं दिक्षु व्याप्ता संबद्धा तनुर्यस्य स तथोक्तः। श्रीकृष्णमुक्तः शरः एकोऽपि बह्वीभूय वैरिभटान् हन्तीत्यर्थः। अन्यत्र **दिगष्टकव्याप्ता तनु**र्मूर्तिर्यस्य स तथोक्तः। एवंविधः पूर्वोक्तो बाणः **आजौ** युद्धे **समन्तात्** सर्वत्र **मायाविनां** राक्षसानां जरासन्धभटानां **निकायं** पुञ्जं **जिगाय**। आचार्योऽपि वाग्युद्धे सर्वत्र मायाविनां मायावादिनां निकायं जितवान्॥५४॥

**नत्युद्यतानां नयवाक्यभाजां न्यस्तायुधानां निकुरम्बमाजौ।**
**हित्वोद्धतानेव जयन् स पूर्णमत्याह्वयार्हाचरणं बिभर्ति ॥५५॥**

**व्या :** चरित्रेण बाणस्य साम्यमुक्त्वा नाम्नाऽप्याचार्यसाम्यं प्रतिपादयन्नाह – **नत्युद्यतानामिति**। **स** बाणः **आजौ** युद्धे **नत्युद्यतानां** श्रीकृष्णबाणं दृष्ट्वा अयमस्मान् हनिष्यतीति भिया नत्यां नमस्कारे उद्यतानां सन्नद्धानाम्। उपलक्षणमेतत्। तृणाङ्गुलीभक्षणादिकमपि द्रष्टव्यम्। **नयवाक्यभाजां** वयं न हन्तव्या इति दैन्यवचसाम्। **न्यस्तायुधानां** न्यस्तशस्त्राणां **निकुरम्बं** समूहं

**हित्वा** त्यक्त्वा [१]**उद्धतानेव** गर्वेण युद्धायाभिमुखं गतानेवाजयन् । अनेन **शरणं** रणे याता एतादृशा न हन्तव्या इति युद्धधर्मोऽपि प्रदर्शितः । **पूर्णमत्याह्वयस्य** [२]पूर्णप्रज्ञाभिधानस्यार्हमुचितमाचरणम् अनुष्ठानं **विभर्ति** । बाणस्य पूर्णमत्यभावे अनेकशत्रुसमूहे नत्युद्यतादीन् विहायोद्धतानां जयः कथं स्यादिति भावः । आचार्यपक्षे पूर्णप्रज्ञाख्या सुप्रसिद्धा[३] ॥ ५५ ॥

**हृन्मध्यालयतः स निर्गततनुः पृथ्वीभुजामच्युत-**
**प्रेक्षावाप्तमहोदयः पवनवद्विख्यातवेगः क्षितौ ।**
**सच्छास्त्रोदितकृष्णविक्रमचयं विख्यापयन् स्वर्गिणां**
**सुप्रीतिं जनयन् मुरान्तकचमूं पुष्णन्नजैषीद्द्विषः ॥ ५६ ॥**

**व्या :** प्रकारान्तरेण कतिपयपद्यैर्बाणस्याचार्यसाम्यं प्रतिपादयन्नाह – हृन्मध्येत्यादिना। **पृथ्वीभुजां** शत्रुमहीभुजाम्। **हृन्मध्यालयतः** हृन्मध्याख्यगेहात् **निर्गता** बहिर्निर्गता **तनुः** स्वरूपं यस्य **स** तथोक्तः । श्रीकृष्णहस्तलाघवात् पृथिवीभुजां हृदयमध्यं भित्वा पृष्ठतो बहिर्निर्गत इत्यर्थः । आचार्योऽपि मध्यालयतः मध्यगेहाख्यब्राह्मणाज्जातः । **अच्युता** या **प्रेक्षा** । लक्ष्यशराग्रयोः समतयाऽभिवीक्षा तया **अवाप्तः** प्राप्तः **महोदयः** अमोघत्वरूपः अभ्युदयः यस्य स तथोक्तः । अन्यत्र । [४]अच्युतप्रेक्षाख्ययतीश्वरात् अवाप्तः महोदयः

---

१ वीरदृष्टिकृतसिंहविभ्रमः शान्तदृष्टिकृतशान्तसम्मदः ।
तत्र तत्र पथि पथ्यविभ्रमः पर्वतादवततार सर्वधीः ॥ - मध्वविजये (९/५)

२ निशातमादत्त सुखतीर्थमार्गणम् - मध्वविजये (५/९)

३ दशेति सर्वमुद्दिष्टं सर्वं पूर्णामिहोच्यते ।
प्रज्ञा प्रमतिरुद्दिष्टा **पूर्णप्रज्ञस्ततः** स्मृतः - इति तैत्तिरीयोपनिषद्भाष्योद्धृतप्रमाणवचनम्।
गुणानुरूपोन्नति **पूर्णबोध** इत्यमुष्य नाम द्विजवृन्दवन्दितः ।
उदाहरन्भूरियशा हि केवलं न मन्त्रवर्णः स च मन्त्रवर्णकः ॥-मध्वविजये (४/३३)

४ यतिर्यतात्मा भुवि कश्चनाभवद्विभूषणो भूरिविरक्तिभूषणः ।

सन्यासलक्षणाभ्युदयो यस्य स तथा । **पवनवत्** वायुवत् विख्यातः **वेगो** यस्य । आचार्योऽपि वायुरूपत्वाद्बदरिकाश्रमगमने पवनवेगवान् । **क्षितौ** भूमौ **सच्छास्त्रेषु** भारतादिषु **उदितानां श्रीकृष्ण**पराक्रमाणां चयं समूहं विख्यापयन् विशेषेण प्रकथयन् । शत्रुसमूहेषु बाणस्यातिक्रूरतरसञ्चारेण श्रीकृष्णस्य पराक्रमः प्रकटीकृतो भवतीत्यर्थः । अन्यत्र । सच्छास्त्रेषु ऋगादिवेदेषु उदितानां ''विष्णोर्नु कं वीर्याणि प्रवोचम्''[1] इत्यादिनोक्तानां श्रीकृष्णस्य विष्णोः विक्रमाणाम् । चयं **विख्यापयन्** स्वव्याख्यानेन प्रकटयन् । **स्वर्गिणां** देवानां **सुप्रीतिं** हर्षं **जनयन्** । एतदुभयत्र समानम् । **मुरान्तकस्य** श्रीकृष्णस्य **चमूं** सेनां शत्रुशरसंघातपरिहारेण **पुष्णन्** पोषयन् स बाणः । अन्यत्र । वैष्णवान् पुष्णन् **द्विषो** वैरिणः **अजैपीत्** । अन्यत्र **द्विषो** मायावादिनोऽजैषीत् ॥ ५६ ॥

**शस्त्रैरस्त्रगणैः शरैररिधृतैर्वेधं विभेदं छिदां**
**कृष्णे स्वागमकौशलैः परिहरन् स्वानन्दमात्राकृतिम् ।**
**निर्बाधां प्रतिपादयन्नवयवान् नित्यांश्च विज्ञापयन्**
**युध्यग्राह्यमतीन्द्रियं व्यतनुतागण्यप्रतापं प्रभुम् ॥ ५७ ॥**

**व्या :** शस्त्रैरिति । स बाणोऽरिधृतैः शत्रुधृतैः **शस्त्रैः** खड्गादिभिः । **अस्त्रगणैर्**मंत्रसमूहैः । **शरैरि**षुभिः । **श्रीकृष्णे वेधं** घातम् । **बिभेदं** विदारणम् । **छिदां** द्वैधीभावम् । **स्वागमकौशलैः** स्वस्यागमः इतस्ततः सञ्चरणं तस्य कौशलैश्चमत्कारैः **परिहरन्** । श्रीकृष्णस्य विच्छेदनाय बहुशः प्रयत्ने कृतेऽपि

न नाममात्राच्छुचिमर्थतोऽपि यं जनोऽच्युतप्रेक्षमुदाहरत् स्फुटम् ॥
पुरैष कृष्णाकरसिद्धशुद्धिमद्वरान्नभुक्त्या किल पाण्डवालये ।
विशोधितात्मा मधुकृत्प्रवृत्तिमांश्चचार कांश्चित् परिवत्सारान् मुदा ॥
- इत्यादि मध्वविजये (४/६,७)

१ ऋग्वेदे (२/२४/१)

श्रीकृष्णशरकौशलैर्वैरिशराणामेव खण्डितत्वादिति भावः । आचार्यपक्षे स्वागमकौशलैः । स्वागमः स्वेनोदाहृतागमः ''विद्धवन्मुग्धवच्चैव केशवो वेदनार्तवत् । प्रदर्शयति मोहाय नैव विष्णुस्तथा भवेत्''[१], ''अच्छेद्योऽयमदाह्योऽयम्''[२] इत्यादिशास्त्रं तस्य कौशलैः निरवकाशत्वादिकौशलैः । श्रीकृष्णे वेधभेदादिकं **परिहरन् स्वानन्दमात्राकृतिं** सुष्ठु आनन्दः स्वानन्दः तन्मात्राकृतिं दुःखासम्भिन्नानन्दमूर्तिमित्यर्थः । **निर्बाधां** बाधरहितां शत्रुभिः स्वशरैः श्रीकृष्णस्यानन्दच्छेदनाय बहुशः प्रयत्ने कृतेऽपि कृष्णशरेण शत्रुशराणामेव छेदनादिति भावः । आचार्यपक्षे 'केवलो ह्यानन्दमयः' इति श्रुतेः केवलानन्दमयविग्रहम् अप्राकृतशरीरमित्यर्थः । निर्बाधां प्रमाणाबाधितां **प्रतिपादयन् अवयवान्** करचरणादींश्च नित्यानविनाश्यान् **विज्ञापयन्** विख्यापयन् श्रीकृष्णशरः शत्रुमुक्तशरान् श्रीकृष्णस्य रोमच्छेदनमपि कर्तुं न मुञ्चतीति भावः । अन्यत्रावयवान् नित्यान् । ''सहस्राक्षः सहस्रपात्''[३], ''उतामृतत्वस्येशानः''[४] इत्यादिवेदवचनैर्विज्ञापयन् । **अगण्यप्रतापम्** असङ्ख्येयपराक्रमं **प्रभुं** श्रीकृष्णं युधि **युद्धे** । **अग्राह्यं** गृहीतुमशक्यम् **अतीन्द्रियम्** इन्द्रियागोचरं द्रष्टुमशक्यमित्यर्थः । **व्यतनुत** चकार । अन्यत्र, अग्राह्यं साकल्येन ज्ञातुमशक्यम् अतीन्द्रियम् इन्द्रियागोचरम् । ''नेन्द्रियाणि नानुमानम्''[५] इति श्रुतेः व्यतनुतेति । अत्रापि स्वागमकौशलैरित्यनुसन्धेयम् ।। ५७ ।।

**हृष्टां स कृष्णस्य चमूं वितन्वन् दुष्टान् विनष्टान् विशिखो विधाय ।**
**तुष्टः सुरैर्व्योमचरैर्मुरारेः स्पष्टीचकारोत्तमतां जितारेः ।। ५८ ।।**

---

१ इति म.भा.ता.नि. (११/९६)

२ गीता (२/२४)

३ पुरुषसूक्ते ।

४ पुरुषसूक्ते ।

५ इति तत्त्वनिर्णयोद्धृतपिप्पलादश्रुतिः ।

**व्या : हृष्टामिति । स** विशिखो बाणः । 'पृषत्कबाणविशिखाः' इत्यमरः । अन्यत्र परमहंसत्वात् विगत**शिखः** । आचार्यः श्रीकृष्णस्य **चमूं** सेनां हृष्टां शत्रुपराजयेन संतुष्टां **वितन्वन्** कुर्वन् । अन्यत्र श्रीकृष्णस्य विष्णोश्चमूं वैष्णवसमूहमित्यर्थः । **हृष्टां** वितन्वन् **दुष्टान्** शत्रून् **विनष्टान्विधाय व्योमचरैर्युद्धं** द्रष्टुमागतैर्गगनचरैः **सुरैर्देवैः तुष्टः** सन्तुष्टः सन् **जितारेः मुरारेः** श्रीकृष्णस्योत्तमतां सर्वोत्तमत्वं **स्पष्टीचकार** । जरासन्धाहृतसेनामध्ये देवगन्धर्वावतारात्मकभूपानां विद्यमानत्वात्तेषां सर्वेषां जयेन श्रीकृष्णस्य सर्वोत्तमत्वं स्पष्टीभवतीति भावः ॥ ५८ ॥

**पौराणिकं वाक्यमिवोग्रसेनमग्रे जरासूनुरसौ जहास ।**
**जीवेशयोर्भेदमिवात्मयुक्त्या भेदं स चासाधयदस्य चापे ॥ ५९ ॥**

**व्या : पौराणिकमिति । असौ जरासूनुः अग्रे** पुरतः स्थितमुग्रसेनम् । मायावादी तत्त्ववादिना उपन्यस्तम् । 'सुपर्णावितौ सहितौ सखायौ यदृच्छया कृतनीडौ च वृक्षे । एकस्तयोः खादति पिप्पलान्नमन्यो निरन्नोऽपि बलेन भूयान् ॥'[1], 'इति मत्वाऽच्युतं मूढः स्वपदा तमताडयत्'[2] इति पुराणे भवं पौराणिकं वाक्यमिव । **जहास** । ''त्वं जीर्णबस्तसदृशः''[3] इत्यादिपरिहासवचनैरुपहासं कृतवान् । **स** [4]**चोग्रसेनः** तत्त्ववादी मुचुकुन्दे जीवे परमात्मबुद्धिं कृतवतः कालयवनस्य मूढ इति मिथ्याज्ञानित्वकथनरूपनिंदार्थवादरूपयुक्त्या सुपर्णावितावित्यादेर्निरवकाशत्वकथनरूपा**त्मयुक्त्या** च **जीवेशयोर्भेदमिवास्य** जरासन्धस्य । **चापे**

---

१ भागवते (११/११/६)

२ भागवते (१०/५४/१०)

३ म.भा.ता.नि. (१४/२६)

४ तं वै चुकोपयिषुरग्रत उग्रसेनं कृष्णो निधाय समगात् स्वयमस्य पश्चात् ।
दृष्ट्वाऽग्रतो मगधराट् स्थितमुग्रसेनं कोपाच्चलत्तनुरिदं वचनं बभाषे ॥
-म.भा.ता.नि.(१४/२५)

भेदं द्वैधीभावमसाधयत् । जरासन्धस्य चापमच्छिनदित्यर्थः। अनेन युद्धवर्णनं भेदवादश्च समर्थितो भवति ॥ ५९ ॥

**गुणोज्झितं श्रीरमणं विधातुं शरोऽरिवर्गं यतमानमाशु ।**
**गुणैर्विहीनं विरचय्य कृष्णमनन्तसच्चिन्त्यगुणं वितेने ॥६०॥**

**व्या : गुणोज्झितमिति** । सः कृष्णमुक्तशरः । **श्रीरमणं** श्रीकृष्णम् । **गुणोज्झितं** गुणेन मौर्व्या 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः । उज्झितं रहितं **विधातुं** श्रीकृष्णधनुषो मौर्वीं छेत्तुमित्यर्थः । **यतमानम्** नाराचप्रयोगादिना प्रयतमानम**रिवर्गं** शत्रुसमूहम् **आशु** शीघ्रम् । **गुणै**र्मौर्वीभि**र्विहीनं विरचय्य** कृत्वा शरप्रयोगात् पूर्वमेव शत्रूणां मौर्विच्छेदं कृत्वेत्यर्थः । **श्रीकृष्णम् अनन्तः** नाशरहितः **सच्चिन्त्यः** सज्जनचिन्त्यः **गुणो** मौर्वी यस्य तम् । तेने कृतवान् । अन्यत्र । स आचार्यः श्रीरमणं लक्ष्मीपतिं **गुणोज्झितम्** आनन्दादिगुणरहितं विधातुम् । स्वमनीषोत्प्रेक्षितदुस्तर्कैर्निर्गुणं प्रतिपादयितुं यतमानमरिवर्गं मायावादिसमूहं गुणैर्ब्रह्ममीमांसाभ्यासादिसद्गुणैर्विहीनं विरचय्य । श्रीकृष्णम-नन्ता अपरिमिता सच्चिन्त्याः सज्जनध्येयाः गुणाः ज्ञानानन्दादयो यस्य तम् । **वितेने** साधितवान् । अनेन युद्धरीतिः सगुणवादश्च समर्थितो भवति ॥ ६० ॥

**अन्धानामपि कृष्णसद्गुणमणिं सन्दर्शयित्वा जग-**
**द्वन्द्यां कीर्तिवधूं परानलसमां सन्धाय लोकत्रये ।**
**सान्द्रे रक्तजले च रत्नदृषदां वृन्दं स सम्प्लावयन्**
**छन्दोऽन्वर्थमलं समर्थ्य सुधियां सन्देहमाश्वच्छिनत् ॥६१॥**

**व्या :** इदानीं प्रकृतयुद्धभूमिवर्णनव्याजेन वेदस्य प्रामाण्यं समर्थयमान आह – **अन्धानामिति** । स कृष्णशरः **अन्धानामपि** मूर्खाणामपि **श्रीकृष्णसद्गुणमणिं** श्रीकृष्णस्य सद्गुणा एव शौर्यधैर्यपराक्रमादिसद्गुणा एव मणिः रत्नं तं **दर्शयित्वा**

गुणानां प्रकाशरूपत्वान्मणिसाम्यम् । आविपालगोपालमुखैरपि युद्धे श्रीकृष्ण-शौर्यादेर्दर्शनादन्धानां मणिदर्शनं वर्णितमिति ज्ञातव्यम् । अनेन ''अन्धो मणिमविन्दत्''[१] इत्यादिवेदवाक्यस्यानुपपन्नार्थतयाऽप्रामाण्यशङ्का निरस्ता । **जगद्वन्द्यां** विश्वस्तुत्यां **कीर्तिवधूं** श्रीकृष्णकीर्तियोषितम् । **लोकत्रये** भुवनत्रये । **परानलसमां** परेषां शत्रूणामनलसमामग्निसमाम् । जगद्व्याप्तां श्रीकृष्णकीर्तिं सञ्चिन्त्य शत्रवोऽदह्यन्तेति भावः । **सन्धाय** स्थापयित्वा । अनेन ''योषितमग्निं ध्यायीत'' इतिवाक्यस्यानुपपन्नार्थतताऽप्रामाण्यशङ्का निरस्ता भवति । **सान्द्रे रक्तजले च रत्नदृषदां** रत्नरूपग्राव्णां **वृन्दं** समूहं **सम्प्लावयन्** युद्धभूमिस्थ-निबिडरक्ताख्यजले छिन्नाङ्गभूषणानां प्लावनादिति भावः । अनेन ''ग्रावाणः प्लवन्ते'' इति वाक्यस्यानुपपन्नार्थतयाऽप्रामाण्यशङ्का निरस्ता । **छन्दः** ''अन्धो मणिमविन्दत्'' इत्यादिवेदम् । **अलमन्वर्थम्** उपपन्नार्थं **समर्थ्य सुधियां** शोभनज्ञानवतां **सन्देहं** वेदप्रामाण्यविषयकं सन्देहमाशु शीघ्रेणाच्छिनत् आचार्योऽपि बौद्धैरनुपपन्नार्थतया वेदस्याप्रामाण्ये शङ्किते देवताविषत्वादिना उपपन्नार्थतां समर्थ्य सज्जनानां वेदप्रामाण्यसन्देहमच्छिनदिति ॥ ६१ ॥

**शस्त्रास्त्रप्रकरेषु शार्ङ्गधरतो [२]भेदं द्विपाश्वद्विप-**
**द्वर्गेष्वात्तशरासनान्मुरभिदो निर्भिन्नगात्रेषु च ।**
**मृत्योर्लोकमितेषु तं स्वजनतः कायान्मिथः खण्डिते**
**हस्तादौ युधि साधयन् स विदधे व्यक्तं भिदां पञ्चकम् ॥६२॥**

---

१ तैत्तिरीयारण्यके (१/११/५)

२ जीवेशयोर्भिदा चैव जीवभेदः परस्परम् ।
जडेशयोर्भिदा चैव जडजीवभिदा तथा ।
जडानां च मिथो भेदः सत्योऽयं भेदपञ्चकः ॥
-इति विष्णुतत्त्वविनिर्णयोदाहृतपरमश्रुतिः ।

**व्याः** युद्धवर्णनव्याजेन भेदपञ्चकं समर्थयमान आह । **शस्त्रास्त्रप्रकरेष्विति**। भेदपञ्चकं तु ।

'जीवेशयोर्भिदा चैव जीवभेदः परस्परम् ।
जडेशयोर्भिदा चैव जडजीवभिदा तथा ।
जडानां च मिथो भेदः सत्योऽयं भेदपञ्चकः ॥'[१]

इति वाक्यादवगन्तव्य इति । स शरः युधि **शस्त्रास्त्रप्रकरेषु** शत्रूणां शस्त्रास्त्रसमूहेषु । शार्ङ्गधनुर्धराच्छ्रीकृष्णाद्भेदं विदारणं साधयन् । आचार्यपक्षे तु भेदमन्योन्याभावम्। अनेन जडेश्वरभेदः प्रदर्शितः । **द्विपाश्वद्विपद्वर्गेषु** द्विपाः गजाः अश्वा हयाः द्विपदः पदातयस्तेषां समूहेषु । **आत्तशरासनात्** गृहीतकार्मुकान्मुरभिदः श्रीकृष्णात् **भेदं** करचरणादिविदारणं साधयन्। अनेन वध्यघातकयोर्भेदावश्यंभावाज्जीवेश्वरभेदः प्रदर्शितः। आत्तशरासनान्मुरभिदः। **निर्भिन्नगात्रेषु** त्याजितशरीरेषु द्विपाश्वादिषु **च** भेदं देहवियोगलक्षणं भेदं साधयन्। अनेन नष्टदेहेभ्यो वीरस्वर्गस्थानां नष्टजीवानां भेदः प्रदर्शितः । **मृत्योर्यमस्य लोकं इतरेषु** प्राप्तेषु द्विपाश्वादिषु **स्वजनतः** स्वबान्धवात् **तं** भेदं वियोगलक्षणं साधयन् । अनेन जीवन्तं स्वजनं परित्यज्य मृत्युलोकं गतानां जीवानां परस्परभेदः प्रदर्शितः । **कायात्** खण्डिते **मिथः खण्डिते हस्तादौ** च तं भेदं द्वैधीभावं **साधयन्** । अनेन शरीरादवयवानां खण्डनात् मिथः अवयवानां खण्डनाच्च द्वेधा अन्योन्याभावरूपजडभेदः प्रदर्शितः । **भिदां पञ्चकं** शरो मध्वश्च। **व्यक्तं** स्पष्टं **विदधे** कृतवान् । **युधि** कृष्णः स्वशरेण शत्रूणां शस्त्रादिकं चिच्छेद द्विपाश्वादिकं हतवान् । गात्राणि शिरांसि हस्तपादादींश्चाच्छिनदित्यर्थः ॥६२॥

---

१ तत्त्वनिर्णयोदाहृत परमश्रुतिः ।

**अरिप्रयुक्तैर्युधि तैः शरौघैर्हरिप्रियास्तद्ध्वजिनीं निजघ्नुः ।**
**स्वपक्षमास्थाप्य परोक्तवाक्यैर्विपक्षपक्षानिव मध्वशिष्याः ॥६३॥**

**व्या :** अरिप्रयुक्तैरिति । **हरिप्रियाः** श्रीकृष्णभटाः **युधि अरिप्रयुक्तैः** शत्रुमुक्तैर्निशितैः **शरौघैः**रुपलक्षणं चैतत् । शक्तिगदातोमराद्यायुधैश्च । **तद्ध्वजिनीं** तस्य जरासन्धस्य ध्वजिनीं सेनामेव । 'ध्वजिनी वाहिनी सेना' इत्यमरः । **निजघ्नुः**। कथमिव । **मध्वशिष्याः** [1]श्रीमदाचार्यशिष्याः। **परोक्तवाक्यैः**र्मायावाद्युक्त "नेह नानास्ति"[2] इत्यादिवाक्यैः । **स्वपक्षं** जगत्सत्यत्वाद्यात्मपक्षम् **आस्थाप्य** संस्थाप्येह ब्रह्मणि नानाभूतं जगन्नास्ति चेत् स्वकारणे अस्तीत्यायास्यति, नतु जगतो मिथ्यात्वमित्युक्त्वा परोक्तवचनैरेव **विपक्षपक्षानिव** मायावादिपक्षानिव । प्रौढास्तत्त्ववादिनः परोक्तवाक्यैरेव परान् दूषयन्तीति भावः ॥ ६३ ॥

**प्राणायोगपलायनप्रपतनाघातार्तिवित्तव्यय-**
**स्वेदास्रोदयवक्त्रनैल्यभयदुष्कीर्त्यादिविश्वं युधि ।**
**सत्यं शत्रुचयेषु चक्रुरखिलं यद्ब्रह्मसाक्षात्कृते-**
**र्लब्धं तद्विपरीतमात्मसु ततः सिद्धं मुरारेर्भटाः ॥ ६४ ॥**

**व्या :** युद्धे शत्रूणामवस्थावर्णनव्याजेन विश्वस्य सत्यत्वं प्रतिपादयितुमाह – **प्राणायोगेति** । **मुरारेः** । श्रीकृष्णस्य **भटाः युधि ब्रह्मसाक्षात्कृतेर्ब्रह्मणः**

---

१ मध्वप्रशिष्या बहवः शिष्या एषां मुहुस्तथा ।
अलञ्चक्रुरलं पृथ्वीं सर्वे सद्गुणभूषणाः ॥
सदा सकलसच्छास्त्रव्याख्यासौख्यामृताब्धिगाः ।
सर्वे दुर्वादिदुर्वादकाण्डखण्डनमण्डनाः ॥ - सुमध्वविजये (१५/१३२,१३३)

२ कठोपनिषदि ।

श्रीकृष्णस्य साक्षात्कृतेर्दर्शनाल्लब्धं प्राप्तं यत्तत् प्राणानाम् अयोगो वियोगः। **पलायनं प्रपतनम्** । **आघातः** ताडनम् । आर्तिः दुःखम् । **वित्तव्ययो** हारकेयूरादिद्रव्यनाशः । **स्वेद अस्रोदयः** अस्रस्याश्रुणः उदय उत्पत्तिर्वक्रनैल्यं **भयं दुष्कीर्तिश्चेत्याद्यखिलं विश्वम्** । **शत्रुचयेषु सत्यं** यथार्थं **चक्रुः** । आत्मसु स्वात्मसु ततः **ब्रह्मसाक्षात्कृतेः** श्रीकृष्णमुखावलोकनात् सिद्धम् । **तद्विपरीतं** तेषां प्राणायोगादीनां विपरीतम् अप्राणायोगापलायनाप्रपतनादिकं सत्यं चक्रुः। नेदं व्यावहारिकं ब्रह्मज्ञानाबाध्यत्वादन्यथा ब्रह्मणोऽपि व्यावहारिकत्व-प्रसङ्ग इति भावः । एवं च कृष्णभटाः स्वसैन्ये नानाप्रकारेण जयम् । परसैन्ये नानाप्रकारेण पराजयं च साधितवन्तः । तं च जयं सस्नेहं श्रीकृष्णमूर्तिदर्शनेन सिद्धत्वात् स्वसैन्ये स्थिरीचक्रुः । परसैन्ये पराजयं च विस्नेहं श्रीकृष्णमूर्तिदर्शनेन सिद्धतवात् स्थिरीचक्रुः । मध्वशिष्यास्तु । परब्रह्मरूपश्रीकृष्णसाक्षात्कारवता सर्वज्ञमुनिना साधितत्वाद्भावाभावरूपप्रपञ्चस्य पारमार्थिकसत्यतां साधितवन्तः। न च कृष्णोऽपि न ब्रह्मेति वाच्यम् । बृहबृहिवृद्धाविति धात्वर्थभूतवृद्धिरूप-गुणवति शैशवदशायां प्रपञ्चोदरे पार्थसारथ्यकरणदशायामपि ''नान्तं न मध्यं न पुनस्तवादिम्''[१] इत्युक्तकृष्ण एव सम्भवात् । ''अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणाः'' इति श्रुतेः । धातुव्याख्यानरूपस्मृतेश्चैका-र्थ्याय बहुगुणवृद्धत्वरूपपरब्रह्मशब्दार्थभूतब्रह्मत्वस्यापि ''मय्यनन्तगुणे''[२] ''गुणकर्माभिधानानि सन्ति मेऽङ्ग सहस्रशः''[३] इत्यादिवाक्यार्थरूपकृष्ण एव सम्भवादित्युक्तं भवति॥ ६४ ॥

**रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि**
**प्रेम्णा चिन्तयतां विचित्रविमलश्लाघ्यार्थसन्दायिनि ।**

१ गीता ११/१६

२ भागवते (६/४/४८)

३ भागवते (१०/५१/३७)

सञ्जाते भुवि रुग्मिणीशविजये सद्वादिराजोदिते
सञ्जातोऽयमभूत् त्रयोदशमितः सर्गो मुदां स्वर्गिषु ।। ६५ ।।

।। इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थश्रीचरणविरचिते
श्रीरुग्मिणीशविजये महाकाव्ये त्रयोदशः सर्गः ।।१३।।

व्या : रोम्णामिति । व्याख्यातं पुरस्तात् ।। ६५ ।।

।। इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थश्रीचरण-
विरचितस्य श्रीरुग्मिणीशविजयमहाकाव्यस्य व्याख्यायां श्रीनारायण-
भट्टविरचितायां श्रीगुरुभावप्रकाशिकायां त्रयोदशः सर्गः ।।

*****

# चतुर्दशः सर्गः

**छत्रं ध्वजं चामरचर्मवर्महस्त्यश्वपत्त्यादिसमस्तवित्तम् ।**
**कृत्वा सखण्डं युधि कृष्णभृत्याश्चक्रुर्ह्यखण्डार्थमविद्यमानम् ॥१॥**

**व्या :** नमोऽस्तु वादिराजाय गुरवे दीनबन्धवे ॥
यो मां वराकं कृपया मृत्युग्रस्तममूमुचत् ॥ १ ॥
जरासन्धमहासेनावरुणालयवाडवः ॥
मुरारिः करुणाराशिः परमः प्रीयतां मम ॥ २ ॥
निर्माय द्वारकां कालयवनं मुचुकुन्दतः ॥
भस्मीचकार यो भैष्मीप्राणनाथः स मे गतिः ॥ ३ ॥

**छत्रमिति । श्रीकृष्णभृत्याः युधि** शत्रूणां **छत्रम्** आतपत्रम् । **ध्वजं** केतनम् । 'केतनं ध्वजमस्त्रियाम्' इत्यमरः । **चामराणि । चर्माणि** । चर्मशब्देन परायुधाघातपरिहाराय वर्तुलाकारेण चर्मकृतावरणविशेष उच्यते । 'आवरणं चर्म चोच्यते' इत्यमरः । **वर्माणि** तनुत्राणि । 'तनुत्रं वर्म दंशनम्' इत्यमरः । **हस्तिनो** गजाः **अश्वाः पत्तयः** पदातयः । आदिशब्देन रथास्त्रादयो गृह्यन्ते । एवमादिसमस्तवित्तं सकलं वस्तु **सखण्डं** खण्डसहितं **कृत्वा** [१]छित्वेत्यर्थः । **अखण्डार्थम्** अच्छिन्नपदार्थम् **अविद्यमानं चक्रुर्हि** । तत्त्ववादिनः ब्रह्मणः सत्यत्वसर्वज्ञत्वादिगुणवैशिष्ट्यरूपसखण्डत्वसंपादनेन मायावाद्यभिमताखण्डत्वमविद्यमानं चक्रुरिति भावः ॥ १ ॥

**सङ्ग्रामकौशल्यचिदुज्झितानां भङ्क्त्वं समालिङ्ग्य सुमूर्छितानाम् ।**
**सिद्धामविद्यां विदधुर्विपक्षे विज्ञाप्यभावाकृतिमेव युद्धे ॥ २ ॥**

---

१ छिन्नायुधध्वजपताकरथाश्वसूतवर्माण उग्रशरताडितभिन्नगात्राः ।
स्रस्ताम्बराभरणमूर्धजमाल्यहीना रक्तं वमन्त उरु दुद्रुवुराशु भीताः ॥
-म.भा.ता.नि.(१४/३३)

**व्या :** युद्धवर्णनेन भावरूपाविद्यानिरसनं ध्वनयन्नाह । **सङ्ग्रामेति** । कृष्णभृत्याः **युद्धे विपक्षे** शत्रुपक्षे **सङ्ग्रामकौशल्यं** युद्धकौशल्यं तस्य **चित्** ज्ञानं **तयोज्झितानां** तत्कौशल्यज्ञानं किञ्चिदपि नासीदिति तत्ज्ञानाभाव एव रिपुषु प्राप्नोति । ईषज्ज्ञानानुकूलं ह्यज्ञानं भावरूपाज्ञानमिति मायावादिनो वदन्ति । जरासन्धसैन्येषु स्वज्ञानस्य प्रतियोगिभूतवैरिज्ञानस्य च सर्वथाऽभावात् ज्ञानाभावमेवाज्ञानमिति भावः । **भङ्गं** पराभवं दृढशस्त्रघातमित्यर्थः । **समालिङ्ग्य** प्राप्य **सुमूर्च्छितानां** सम्यग्मूर्च्छितानाम् । दृढमूर्छावशात् स्वपरज्ञानं किमपि नासीदिति तदभाव एव प्राप्नोतीति भावः । शत्रूणां **सिद्धां** जातामविद्यां अज्ञानं **विज्ञस्यभावाकृतिमेव** । उक्तप्रकारेण ज्ञानाभावाकृतिमेव **विदधुः** चक्रुः । तत्त्ववादिनस्तु इतरासाध्ययुद्धचमत्कारवति श्रीकृष्णे सर्वथाऽज्ञानस्याभावान्न भावरूपाज्ञानस्यावसरः । इतरेषु योग्येषु जीवेषु मायाजवनिकच्छन्नत्वेन कुड्यावृतघटस्येवेदानीं भगवदपरोक्षज्ञानादेरभावः मायापगमेऽपि सामस्त्येन ज्ञानाभाव एवेति अयोग्येषु सर्वथा भगवन्माहात्म्यज्ञानाभाव एवेति भावरूपाज्ञानानवसर इति साधितवन्तः ॥ २ ॥

**पलायनं ये विदधुर्नृपांस्तान् विधाय सत्कोटिषु कृष्णभृत्याः ।**
**अन्यानसत्कोटिषु सन्निवेश्य शून्यं प्रचक्रुः सदसद्भिभिन्नम् ॥३॥**

**व्या :** युद्धवर्णनव्याजेनानिर्वचनीयत्वपक्षं प्रतिपक्षयति । **पलायनमिति** । ये नृपाः पलायनं युद्धाङ्गणादन्यत्र **पलायनं विदधुः** । **श्रीकृष्णभृत्याः** तान् **नृपान् सत्कोटिषु** सतां विद्यमानानां जीवतामित्यर्थः । **कोटिषु** पक्षेषु **निधाय ये** पलायितास्तैरेव जीवितमिति भावः । अन्यान् पलायनमकृत्वा युद्धाभिमुख्येन स्थितानसत्कोटिषु असतामविद्यमानानां **कोटिषु सन्निवेश्य** । सच्चासच्च **सदसती** ताभ्यां **विभिन्नं** विलक्षणं **शून्यमविद्यमानं प्रचक्रुः** । जरासन्धकटके प्रायशः सर्वे मृताः । उर्वरिताः पलायिता इत्यर्थः । अन्यत्र ब्रह्मवत् सत्वं गतान् सत्कोटिषु

निक्षिप्य । अन्यान् शुक्तिरजतशशशृङ्गादीनसत्कोटिषु सन्निवेश्य सदसद्विलक्षणं मायावाद्यभिमतम् अनिर्वचनीयं [1]शून्यं चक्रुः ॥ ३ ॥

**ते ब्रह्मणः शार्ङ्गधराद्विभिन्नानाहूय हेयानपि गर्विणस्तान् ।**
**स्वेभ्योऽपि भिन्नान् विरचय्य युद्धे धानुष्कचूडामणयो निजघ्नुः ॥४॥**

**व्या :** जीवभेदे जीवपरमात्मभेदे च तात्पर्यप्रदर्शनाय पुनरपि तावाह । त इति । **धानुष्कचूडामणयः** धन्विश्रेष्ठाः । 'धन्वी धनुष्मान् धानुष्कः' इत्यमरः । ते श्रीकृष्णभटाः **ब्रह्मणः शार्ङ्गधरात्** **श्रीकृष्णाद्विभिन्नान्** । अत एव **हेयानपि** त्याज्यानपि । **गर्विणो**ऽहङ्कारिणः **तान्** शत्रून् **युद्धे आहूय स्वेभ्योऽपि भिन्नान्** छिन्नान् स्वहस्तमुक्तशरच्छिन्नानित्यर्थः । **विरचय्य निजघ्नुः** । अन्यत्र ब्रह्मणो विभिन्नान् प्रतिपाद्यजीवेभ्योऽपि भिन्नान् प्रत्यपीपदन्नित्यर्थः ॥ ४ ॥

**सुरर्षिसिद्धस्तुतिभिः समन्तात् समुत्थिताभिः समदूषयंस्ते ।**
**अनन्ययोग्याभिरवाच्यभावं मुकुन्दमुख्यार्थपराभिरस्य ॥ ५ ॥**

**व्या :** अवाच्यत्वखण्डनं हृदि निधायाह । **सुरर्षिसिद्धेति** । ते कृष्णभटाः **अन्येषु** श्रीकृष्णव्यतिरिक्तेषु **योग्या** न भवंतीत्यनन्ययोग्याः ताभिरत एव **मुकुन्द** एव **मुख्यार्थो** वाच्य इत्यर्थः । तत्पराभिः **समंतात्** श्रीकृष्णस्यासाधारणजये सति सर्वदिक्षु **समुत्थिताभिः** । सुराः ऋषयः सिद्धाश्च तेषां स्तुतिभिः ''सर्वोत्तम सर्वज्ञचूडामणे भग्नजरासन्ध'' इत्यादिश्रीकृष्णपुण्यनामस्तुतिभिः एतेषां नाम्नां श्रीकृष्णैकनिष्ठता स्फुटैव । अस्य श्रीकृष्णस्यावाच्यभावं अवाच्यत्वं लक्ष्यत्वमित्यर्थः । **समदूषयन्** सम्यग्दूषितवन्तः । गङ्गायां घोष इत्यादौ यथा प्रवाहादिरूपो वाच्योऽन्योऽर्थो भवेत् तथाऽत्र भग्नजरासन्धेत्यादिनाम्नामन्यत्रायोगात् । उक्तपुण्यनामभिः । कृष्णस्याप्यवाच्यत्वे शब्दस्य निरर्थकत्वापातेन शब्दतैव न स्यात् । अतो भगवानेव **वाच्य** इति **भावः** ॥ ५ ॥

---

१ तत्त्वोद्योते, अनुव्याख्याने च ।

**भस्मीभूतमिवारचय्य गिरिशो यं बाह्यदृष्ट्या पुन-**
**श्चित्तान्तस्थितमार्पयद्गिरिसुतागर्भे ह्यनेकाननम् ।**
**तं पञ्चावयवेषुमङ्गरुचिरं सृष्ट्वाऽग्र्यतर्कोपमं**
**छन्दोबाह्यकुतर्ककल्पमजयत् तेनैकलव्यं विभुः ॥ ६ ॥**

**व्या :** **भस्मीभूतमिति** । गिरौ कैलासे शेत इति **गिरिशः** । यं कामं **बाह्यदृष्ट्या** ललाटस्थलोचनेन **भस्मीभूतमिव पुनश्चित्त**जन्यत्वेन कामस्यावस्थानादिवेत्युक्तम् **आरचय्य** कृत्वा **अग्र्यतर्कं** विष्णुसर्वोत्तमत्वसाधकसमीचीनयुक्तिं बाह्यदृष्ट्या 'त्वं च रुद्र'[1] इत्यादिहर्याज्ञाशृङ्खलाबद्धत्वेन आपातत एव न तु मनःपूर्वकमित्यर्थः । भस्मीभूतमिव स्वकृतपाशुपताद्यागमैः खण्डितमिव निराकुर्वताऽपि शिवेन विष्णुसर्वोत्तमत्वसाधकयुक्तीनां स्वचित्तेऽनुसन्धीयमानत्वेन सर्वथा निराकरणे तात्पर्याभावादिवेत्युक्तम् । आरचय्य अत एव चित्तान्तःस्थितं चित्तजं **अनेकाननं** षण्मुखात्मकम् । **गिरिसुतागर्भे** पार्वतीगर्भे पुनरार्पयद्धि अर्पितवान् हि । कामस्य षण्मुखावतारत्वं ''यं स्कन्द इत्यवक्ष्यत्''[2] इति श्रुतिपुराणादौ प्रसिद्धम् । अन्यत्र **चित्तान्तःस्थितं** मनसाऽनुसन्धीयमानं**अनेकाननम्**आत्माश्रयान्योन्याश्रयचक्रकानवस्थाकेवलानिष्टापादनरूपेण **पञ्चमुखम्**। अनुमानपक्षे अन्वयव्यतिरेकादिरूपेण अनेकमुखम्। पुनर्गिरिसुतागर्भे पार्वतीहृदि अर्पयत् । रहसि पार्वतीं प्रत्युपदिष्टवानित्यर्थः।

---

१ 'त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय ।
अतथ्यानि वितथ्यानि दर्शयस्व महाभुज ।
प्रकाशं कुरु चात्मानमप्रकाशं च मां कुरु ॥'
- महाभारततात्पर्यनिर्णयोद्धृतवराहपुराणवचनम् । (१/४८, ४९)

२ सुदर्शनश्च भरतः प्रद्युम्नः **स्कन्द** एव च ।
सनत्कुमारः कामश्चेत्येक एव व्यवस्थितः ॥
- इति बृहदारण्यकभाष्योद्धृतपैङ्गिश्रुतिः (३/५)

गर्भ इति वदता । ''इदं भद्रे त्वया गोप्यं पाठ्यं स्वार्थैकसिद्धये''[१] इति वचनादन्तरेऽवधारय, न बहिः प्रकाशयेत्युपदेशोऽपि सूचितः । विभुः श्रीकृष्णः **पञ्चावयवाः** लताद्यवयवाः पुष्पाणीत्यर्थः । त एव इषवो बाणाः यस्य तम् । **अङ्गैः** करचरणादिभिः **रुचिरं** मनोहरम् । तर्कपक्षे तु [२]पञ्चावयवाः प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्येव इषवो यस्य तम् । प्रतिवादिनिराकरणपटुत्वद्योतनाय इषव इत्युक्तम् । अङ्गैः व्याप्तिः प्रतितर्काप्रतिहतिः विपर्ययापर्यवसानानिष्टाननुकूलत्वरूपतर्काङ्गैः रुचिरं मनोहरम् । अनुमानपक्षे तु व्याप्तिसमुचितदेशवृत्तित्वाख्याङ्गोपेतम्[३] । व्याप्त्यादीनामक्लिष्टत्वद्योतनाय रुचिरमित्युक्तम् । **अग्र्यतर्कोपमम्** उक्तप्रकारेण सत्तर्कसदृशम् । तं प्रद्युम्नरूपिणं कामं मनसा [४]**सृष्ट्वा** तेन प्रद्युम्नेन छन्दोबाह्यकुतर्ककल्पम् अवैदिकदुस्तर्कसदृशम् । **एकलव्यम्** [५]एकलव्या-

---

१ उमां प्रति महेश्वरवचनं पद्मपुराणान्तर्गत -वासुदेवसहस्रनामस्तोत्रे । (७१/३०६)

२ पक्षवचनं **प्रतिज्ञा** - यथा पर्वतोऽग्निमानिति । साधनत्वख्यापकविभक्त्यन्तं लिङ्गवचनं **हेतुः** । यथा धूमवत्वादिति । सम्यग्व्याप्तिप्रदर्शनपूर्वकं दृष्टान्ताभिधानम् **उदाहरणम्** ... । दृष्टान्ते प्रसिद्धाविनाभावस्य लिङ्गस्य पक्षे व्याप्तिख्यापकं वचनम् **उपनयः** ... । पुनः सहेतुकं पक्षवचनं **निगमनम्** । यथा तस्मात् पर्वतोऽग्निमानिति ।
- प्रमाणपद्धतौ ।

३ ततश्च अनुमानस्य द्वयं सामर्थ्यम् । व्याप्तिः समुचितदेशादौ सिद्धिश्चेति ।
- इति प्रमाणपद्धतौ ।

४ भीतेन तेन समरं भगवाननिच्छन् प्रद्युम्नमाश्वसृजदात्मसुतं मनोजम् ।
प्रद्युम्न एनमभियाय महास्त्रजालै रामस्तु मागधमथात्मरथं निनाय ॥
युद्ध्वा चिरं रणमुखे भगवत्सुतोऽसौ चक्रे निरायुधममुं स्थिरमेकलव्यम् ।
-म.भा.ता.नि.(१४/३९,४०)

कामस्य षण्मुखावतारत्वं 'यं स्कान्द इत्यवक्ष्यत्' इति वचनात् ज्ञेयम् ।

५ अंशेन यो भुवमगान्मणिमानिति स्म स क्रोधतन्त्रकगणेष्वधिपो निषादः ॥
-म.भा.ता.नि.(१४/४०)

ख्यासुरम् । तस्य निषादत्वादवैदिकत्वम् । असुरत्वादेव दुस्तर्कसदृशत्वं ज्ञेयम् । **अजयत्** जितवान् । श्रीकृष्णः युद्धे मनसा प्रद्युम्नं सृष्ट्वा तेनैकलव्यं घातयामास ।

'प्रद्युम्नोऽथ गदापाणिरेकलव्यं जघान ह ।
ततः क्रुद्धो महाबाहुः प्रद्युम्नो यादवेश्वरः ।
आजघ्ने मुष्टिना तं तु जरासन्धस्य पश्यतः ॥'

इति हरिवंशादौ स्पष्टम् ॥ ६ ॥

**रणे क्षणेनाङ्गजमुज्ज्वलाङ्गैः समं समुत्पाद्य [1]स सर्वशक्तिः ।**
**भवानुभावागततत्पितृत्वप्रथां श्रितात्मीयगतिर्द्यति स्म ॥७॥**

**व्या : रण** इति । **श्रितात्मीयगतिः** श्रिताः आश्रिताः आत्मीयाः स्वभक्ताः तेषां गतिः आश्रयः **सर्वशक्तिः** अपरिमितात्मशक्तिः सर्वविषयिणी यस्येति वा । सः श्रीकृष्णः **रणे** युद्धे **क्षणेन** । **अङ्गजं** प्रद्युम्नरूपिणं कामम् **उज्ज्वलाङ्गैः** प्रकाशमानावयवैः **समं** सह **समुत्पाद्य** सृष्ट्वा **भवस्य अनुभावं** सामर्थ्यं तेनागतम् । तस्य कामस्य **पितृत्वं** तस्य **प्रथां** कैलासयात्रादिना शिवप्रसादं सम्पाद्य प्रद्युम्नाख्यपुत्रं लेभ इति [2]प्रसिद्धिं **द्यति स्म** अखण्डयत् । दोऽवखण्डन इति धातुः ॥ ७ ॥

---

१ भीतेन तेन समरं भगवाननिच्छन्
प्रद्युम्नमाश्वसृजदात्मसुतं मनोजम् । -इति म.भा.ता.नि. (१४/३९)

२ त्वामाराध्य तथा शम्भो ग्रहीष्यामि वरं सदा ।
द्वापरादौ युगे भूत्वा कलया मानुषादिषु ॥
स्वागमैः कल्पितैस्त्वं च जनान् मद्विमुखान् कुरु ।
मां च गोपय येन स्यात् सृष्टिरेषोत्तराधरा ॥
इति वाक्यमृतं कर्तुमभिप्रायं विजज्ञुषी ।
प्रीत्यर्थं वासुदेवस्य रुग्मिणी वाक्यमब्रवीत् ॥
जातेऽपि पुत्रे पुत्रार्थं सा हि वेद मनोगतम् ।
पुत्रो मे बलवान् देवः स्यात् सर्वास्त्रविदुत्तमः ॥-म.भा.ता.नि.(२२/१५३-१५६)

**ईशापरोक्षसमकालमशेषविद्या-**
**बाध्यं प्रसाध्य सकलं तदिदं द्विषत्सु ।**
**श्रीशार्ङ्गपाणिचरणे निखिलं समर्प्य**
**स्वोपार्जितं समलभन्त महाप्रसादम् ॥८॥**

**व्या :** ईशेति । श्रीकृष्णभृत्याः ईशस्य श्रीकृष्णस्यापरोक्षस्य **समकालम्** अपरोक्षसमकालिकमित्यर्थः । श्रीकृष्णदर्शनोज्जृंभितसामर्थ्यकृतमिति यावत् । **सकलं** समस्तं **तदिदं** पूर्वोक्तशस्त्रघातपलायनादिकं **द्विषत्सु** शत्रुषु **अशेषविद्यावाध्यं** तदीयमायाविद्यादिना **अबाध्यम्** अपरिहार्यम् । ब्रह्मापरोक्षसमकालिकतया तदानीं बाध्यं नेति पारमार्थिकमिति ध्वनिः । **प्रसाध्य** स्वोपार्जितं युद्धे स्वोपार्जितम् । **निखिलम्** शत्रुसम्बन्धिछत्रादिकं **शार्ङ्गपाणिचरणे** श्रीकृष्णपादे **समर्प्य**द्वैत-पक्षनिराकरणोपार्जितं पुण्यमिति ध्वनिः । **महाप्रसादं** मोक्षलक्षणप्रसादं **समलभन्त** । प्राप्नुवन्तः ॥ ८ ॥

**सम्प्रेष्य शैवीं प्रथमं गदां यो जराभिधानां जननीं जघान ।**
**जात्युत्तरेणैव [१]पराजितोऽभूदात्मोदितव्याहतिहेतुनाऽसौ ॥९॥**

---

१ क्षुब्धोऽतिकोपवशतः स्वगदाममोघां दत्तां शिवेन जगृहे शिवभक्तवन्द्यः ।
शैवागमाखिलविदत्र च सुस्थिरोऽसौ चिक्षेप योजनशतं स तु तां परस्मै ॥
अर्वाक् पपात च गदा मधुराप्रदेशात् सा योजनेन यदिमं प्रजगाद पृष्टः ।
एकोत्तरामपि शताच्छतयोजनेति देवर्षिरत्र मधुरां भगवत्प्रियार्थे ॥
शक्तस्य चापि हि गदाप्रतिघातने तु शुश्रूषणं मदुचितं त्विति चिन्तयानः ।
विष्णोर्मुनिः स निजगाद ह योजनोनं मार्गं पुरो भगवतो मगधेशपृष्टः ॥
क्षिप्ता तु सा भगवतोऽथ गदा जराख्यां तत्सन्धिनीमसुभिराशु वियोज्य पापाम् ।
मर्त्याशनीं भगवतः पुनराज्ञयैव याता गिरीशसदनं मगधं विसृज्य ॥
राजा स्वमातृत उतो गदया च हीनः क्रोधात् समस्तनृपतीनभिसन्निपात्य ।
अक्षौहिणीत्र्यधिकविंशयुतोऽतिवेलं दर्पोद्धतः सपदि कृष्णपुरीं जगाम ॥
-म.भा.ता.नि. (१४/११-१५)

**व्या :** परपराजयकथनेन वादे निग्रहस्थानगमनमपि सूचयन्नाह । **सम्प्रेष्येति** । **यो** जरासन्धः **प्रथममादौ शैवीं** शिवदत्तां **गदां सम्प्रेष्य** श्रीकृष्णवधाय क्षिप्त्वा **जराभिधानां** जराख्यां स्वां **जननीं** स्वमातरं **जघान** हिंसितवान् । **असौ** जरासुतः **आत्मोदितव्याहतिहेतुना** आत्मना स्वेन उदितं यद्वचनं तस्य व्याहतिः व्याघातः तस्य हेतुना **जात्युत्तरेणैव पराजितोऽभूत्** । यथा वादे मायावादी जात्युत्तरेण पराजितो भवति । तथा पराजितोऽभूत् । स्वव्याघातादिकमुत्तरं जातिरिति हि जातिलक्षणम्[1] । अयमपि स्वगदया स्वमातरमेव हिंसितवानिति जातिरूपनिग्रहस्थानं प्रापैवेति भावः ॥ ९ ॥

**संवादं किल केऽपि बभ्रुरपरेऽनुक्तिं शरैस्ताडिता**
**निर्यान्तः कटकान्निरुन्धति निजे क्रुद्धा विरोधं परे ।**
**ध्वस्ताः केचिदसङ्गतिं निजजनैः सर्वे जयैर्न्यूनता-**
**माधिक्यं हतिभिः पराजितमभूदित्थं तदद्वैतिवत् ॥१०॥**

**व्या :** **संवादमिति** । **केऽपि** केचन **संवादं** ''केचिन्माधवमासाद्य विजयस्वेति चाब्रुवन्''[2] इति भागवतोक्तप्रकारेण समीचीनवचनं **बभ्रुः** दधुः **किल** । समीचीनवचनमुक्तवन्तः । बभ्रुरित्यनेन संवादवचनस्य दार्ढ्यं सूचितम् । युद्धे परान् प्रति मधुरवचनस्यापि पराभवरूपत्वादिति भावः । वादपक्षे तु परोक्तवचनार्थस्याङ्गीकाररूपसंवादलक्षणनिग्रहस्थानमिति भावः । 'विप्रतिपन्नप्रमेयाङ्गीकारः संवादः'[3] इति संवादाख्यनिग्रहस्थानस्य लक्षणत्वेन परोक्तवचनाङ्गीकारस्य

---

१ जातिर्न मेये मानापेक्षेत्यादिका । मेये मानोपेक्षाऽस्तीति तेनैव न्यायेन सिद्धत्वात् मानविरोधश्च । - इति प्रमाणलक्षणे ।
जनकस्यात्ययो जातिः स्वस्य वाऽन्यस्य वा भवेत् ।
स्वस्यार्थस्य प्रकाशनात् ॥ - इति तत्त्वनिर्णयोद्धृतब्रह्मतर्कवचनम् ।
सिद्धमपि दूषणासमर्थमुत्तरं जातिः । - इति प्रमाणपद्धतौ ।

२ भागवते (१०/५०/२५)

३ विप्रतिपन्नप्रमेयाङ्गीकारः संवादः । - इति प्रमाणपद्धतौ

संवादरूपत्वात् **अपरे** भटाः शरैस्ताडिताः सन्तः । उक्त्यभावोऽनुक्तिः[१] ताम् **अनुक्तिम्** । अवचनं बभ्रुः । शरनिर्भिन्नहृदयाः वक्तुमप्यसमर्था अभूवन्नित्यर्थः। अन्यत्र तूष्णींभावोऽनुक्तिरिति उक्तलक्षणकतूष्णींभावरूपानुक्त्याख्यनिग्रह-स्थानमित्यर्थः । **क्रुद्धाः परे कटकात्** सेनामुखात् **निर्यान्तो** निर्गच्छन्तो बहिः पलायनं कुर्वन्त इत्यर्थः । **निरुन्धति** न बहिर्निर्गच्छन्ति निरोधं कुर्वन्ति । **निजे** स्वकीये **विरोधं** कलहं बभ्रुः निरुन्धानमेव ताडयित्वा पलायनं चक्रुरिति भावः। अन्यत्र प्रतिज्ञादीनां व्याघातलक्षणं [२]विरोधाख्यनिग्रहस्थानमित्यर्थः। **ध्वस्ता** चूर्णीकृतसर्वाङ्गाः केचिद्भटाः **निजजनैः** स्वबन्धुजनैः **असङ्गतिम्** असंबन्धं बभ्रुः । चूर्णीकृतसर्वावयवत्वादस्थिमात्रमपि स्वबन्धुभिर्न लब्धमिति भावः। वादे तु [३]आकाङ्क्षाविरहोऽसङ्गतिः इत्युक्तलक्षणकाकाङ्क्षाविरहरूपासङ्गतिलक्षणं निग्रहस्थानमित्यर्थः । **सर्वे** शत्रवः । **जयैः न्यूनतां** राहित्यं बभ्रुः । एकस्यापि जयो नाभूदिति भावः । अन्यत्रोपादेयानां अन्यतमानुपादानलक्षणं [४]न्यूनं नाम निग्रहस्थानमित्यर्थः । सर्वे शत्रवः **हतिभिः** शस्त्रघातै**राधिक्यं** बभ्रुः । श्रीकृष्णभटानां हस्तलाघवादेकैकस्याङ्गे बहवो घाता जाता इति भावः । वादपक्षे अन्वितोपयुक्तिपुनरुक्तकृतकार्यप्रयोगलक्षणाधिक्यं[५] नामनिग्रहस्थानमित्यर्थः । **तत्** जरासन्धबलम् **अद्वैतिवत्** ऐक्यवादिवत् इत्थमुक्तप्रकारेण **पराजितमभूत्** । संवादानुक्ती विरोधासङ्गती न्यूनाधिक्ये चेति षडेव [६]निग्रहस्थानानीत्याचार्यपक्षमवलम्ब्येत्थमुक्तमिति ध्येयम् ॥ १० ॥

---

१ परबोधनार्थस्यावश्यं वक्तव्यस्यावचनम् **अनुक्तिः** । - इति प्रमाणपद्धतौ

२ योग्यताभावो **विरोधः** । - इति प्रमाणपद्धतौ

३ आकाङ्क्षाविरहोऽ**सङ्गतिः** । - इति प्रमाणपद्धतौ

४ अवश्यवक्तव्यस्य एकदेशमात्रवचनं **न्यूनम्** । सन्निध्यभावविशेषः ।- इति प्रमाणपद्धतौ

५ आकाङ्क्षितस्यैवान्येन कृतकार्यस्य वचनं **आधिक्यम्** । - इति प्रमाणपद्धतौ

६ विरोधासङ्गती न्यूनाधिके संवादानुक्ती इति षडेव **निग्रहस्थानानि** ।- इति प्रमाणपद्धतौ

**सञ्चूर्णिताङ्गाः समरे शरौघैः सञ्छिन्नपादोदरकण्ठहस्ताः ।**
**विरेजुरश्नन्त इवासृगब्धौ फलं निराकारमतस्य तावत् ॥११॥**

**व्या :** ब्रह्मणो निराकारत्वमतं हापयितुं ''तं यथा यथोपासते तदेव भवति'' इति श्रुतिमनुसृत्य निन्दारूपार्थवादमाह । **सञ्चूर्णितेति** । **समरे शरौघैः** शरसमूहैः । **सञ्चूर्णिताङ्गाः** सम्यक् चूर्णितावयवाः । **सञ्छिन्नपादोदरकंठहस्ताः** जरासन्धभटाः । एवं नरके पच्यमाना मायिनश्चासृगंबुधौ रक्तसमुद्रे **निराकारमतस्य फलम्** । ईश्वरस्याकारशून्यताभावनोचितं स्वहस्तपादशिरश्च्छेदादिरूपफलं तावदश्नन्त इव **विरेजुः** । उपरि तमसि इतोऽप्यधिकदुःखस्य भोक्तव्यत्वात् तावत् इत्युक्तम् ॥११ ॥

**स्वाङ्गाच्छादितशत्रुशौर्यतरणिः शार्ङ्गेन्द्रचापोज्ज्वलः**
**श्रीदेवीस्थिरविद्युदद्भुतरथश्रीमत्समीरेरितः ।**
**काव्योद्गीतकथः शरौघकरकावर्षैः स कृष्णाम्बुदो**
**राजन्याननपाणिपादकमलव्रातानलावीत् क्षणे ॥ १२ ॥**

**व्या : स्वाङ्गेति** । स्वकीयहस्त्यश्वादिचतुरङ्गबलैराच्छादितशत्रुशौर्याख्यतरणिर्येन स तथोक्तः । अन्यत्र स्वशरीरेणाच्छादितसूर्यः । शार्ङ्गाख्येन्द्रचापेनो**ज्ज्वलः** प्रकाशमानः नानारत्नखचितत्वेन **शार्ङ्गस्येन्द्रचापसाम्यम्** । **श्रीदेवी** रमैव **स्थिरा** निश्चला **विद्युद्यस्य** स तथोक्तः । **अद्भुतः** आशुगैरश्वैः क्षिप्रमितस्ततो नीयमानत्वेनाश्चर्यजनकः **रथः** स एव **श्रीमत्समीरः** वायुः तेन प्रेरितः मेघोऽपि वायुना नीतः तत्र तत्र वर्षति सति । वायुः नीरूपः अयं तु भास्वररूप इति द्योतनाय श्रीमानित्युक्तम् । अत एवात्यद्भुतत्वम् । काव्ये उद्गीता कथा यस्य स तथोक्तः । ऋतुवर्णनावसरे मेघोऽपि **काव्योद्गीतकथः** । सः कृष्णाम्बुदः श्रीकृष्णाख्यो मेघः । वर्षन्मेघोऽपि कृष्ण इति द्योतनाय [1]**कृष्णाम्बुदः** इत्युक्तम् ।

---

१ शमयन् भवसन्तापं रमयन् साधुचातकान् ।

**शरौघकरकावर्षैः** शरसमूहाख्यवर्षोपलवृष्टिभिः। 'वर्षोपलस्तु करका' इत्यमरः। **राजन्यानां** क्षत्रियाणाम् आननपाणिपादाख्यकमलव्रातान्। **क्षणे अलावीत्** च्छेदितवान्। दृढतरवर्षधाराभिः कमलच्छेदस्तु प्रसिद्ध एव ॥१२॥

**मुहुः समाकृष्य रणावनौ रिपून् कठोरमृत्पिण्डसमान् प्रचूर्णयन्[1]।**
**हलायुधः सन्मुसलो ह्यसाधयद्यशोऽङ्कुरान् शौर्यमनोज्ञबीजजान् ॥१३॥**

**व्या :** इदानीं बलरामस्य युद्धं कृषीवलसाम्येन वर्णयति। **मुहुरिति**। **सत्** समीचीनं **मुसलं** मुसलाख्यायुधं यस्य स तथा। पिण्डीभूतमृच्चूर्णनाय कृषीवलस्यापि मुसलधरत्वं प्रसिद्धमेव। **हलं** लाङ्गलम् **आयुधं** यस्य स तथोक्तः बलरामः। कृषीवलस्यापि भूकर्षणार्थं हलधारित्वं प्रसिद्धमेव। **रणावनौ** युद्धभूमौ **रिपून्** शत्रून् **समाकृष्य** गले लाङ्गलं निधायाकर्षणं कृत्वा। **कठोरमृत्पिण्डसमान्** कठिणमृत्पिण्डसदृशान् **प्रचूर्णयन्**। **मुसलेन** चूर्णीकूर्वन् सन्। शौर्यमेव **मनोज्ञं बीजं** तस्माज्जातान्। शौर्यवतः कीर्तिसंभवात् शौर्यस्य कीर्तिबीजत्वम्। **यशोऽङ्कुरान् साधयद्धि**। कृषीवलपक्षे तु बीजावापेनाङ्कुरसाधनं प्रसिद्धमेव ॥१३॥

**ततश्चैद्यः क्रुद्धः करधृतधनुर्मार्गणगणान्**
**विभौ वर्षन् विष्णोः प्रशिखविशिखैर्ग्लानिमगमत्।**

---

**कृष्णमेघः** कृपादृष्टिवृष्ट्या पुष्णातु मामपि ॥

- इति श्रीव्यासराजकृततात्पर्यचन्द्रिकायाम्

भवघर्मभवार्तिघ्नः स मठः सेव्यतां सता।
**कृष्णद्वैपायनघनो** यत्रागाद्वायुवर्त्मना ॥ - तीर्थप्रबन्धे (१/२७)

१ श्रीभीमसेनकरकञ्जगदाप्रहारैश्चूर्णीकृताश्वगजपत्तिमृदुग्रपिण्डम्।
उत्खातपार्थशरसस्यपदं कुरूणां क्षेत्रं दिशासु विततान सुकीर्तिधान्यम्॥
- (तीर्थप्रबन्धे - २/३८) इतिवज्ज्ञेयम्।

**तदा भूपाः कोपोज्ज्वलितवदनाः कार्मुककराः**
**परीयुः पापान्धाः परमपुरुषं पावकमिव ॥ १४ ॥**

**व्या :** तत इति । ततः क्रुद्धः करधृतधनुः चैद्यः शिशुपालः मार्गणगणान् बाणसमूहान् विभौ श्रीकृष्णे वर्षन् । विष्णोः श्रीकृष्णस्य प्रशिखाः प्रकृष्टाग्रभागाः बाणास्तैः ग्लानिं खेदम् अगमत् । तदा तस्मिन् समये कोपेनोज्ज्वलितवदनाः दीप्तमुखाः पापैरन्धीभूताः पापिन इत्यर्थः । भूपाः कार्मुककराः धनुष्पाणयः सन्तः परमपुरुषं पावकमिव परीयुः परितः कृष्णं ययुः ॥ १४ ॥

**कृष्णोऽपि वक्षसि मुखे द्विषतां ललाटे**
**लग्नैः शरैर्लसितलाञ्छनचित्रपत्रैः ।**
**स्वध्यानकीर्तनसदूर्ध्वललामशून्यान्**
**सार्थाभिधानकृतशोणितशोणगात्रान् ॥ १५ ॥**

**व्या :** कृष्णोऽपीति । द्विषतां वक्षसि हृदये मुखे आस्ये ललाटे लग्नैः सम्बद्धैः लसितं लाञ्छितं श्रीकृष्णनामाङ्कितत्वरूपं चिह्नं तच्च चित्राणि पत्राणि कङ्कगृध्रादिपत्राणि येषां तैः शरैः करणैः स्वध्यानं स्वस्य ध्यानं कीर्तनं सत्समीचीनम् । ऊर्ध्वललामं ऊर्ध्वपुण्ड्रः तै शून्यान् ललाटान्तावयवत्रय एव शरप्रहारे हेतुगर्भविशेषणम् उक्तम् । वैष्णवचिह्नरहितानाम् अवयवाः छेदार्हा इति भावः । शोणितेन रक्तेन शोणं रक्तं गात्रं येषां तान् राज्ञः सार्थाभिधान् अन्वर्थसंज्ञान् अकृत अकार्षीत् प्रत्यासन्नमरणत्वेन प्रजारञ्जनरूपार्थसम्भवाभावात् रक्तरञ्जितगात्रत्वेनैव राजानो बभूवुः ॥ १५ ॥

**माद्यन्तं शिशुपालमेत्य मधुजिच्छार्ङ्गच्युतैः सायकै-**
**श्चापच्छत्रकिरीटकेतुरहितं चक्रे शिशूनां प्रभुम् ।**
**रामश्चूर्णितवाजिसारथिरथं कृत्वा जरासंहित-**
**प्रायं मागधमागृहीतमपि तं वाचा मुमोच प्रभोः ॥१६॥**

**व्या : माद्यन्तमिति । मधुजित्** मधुनामकदैत्यजित् । श्रीकृष्णः । **माद्यन्तं** मत्तं **शिशुपालमेत्य** प्राप्य । **शार्ङ्गच्युतैः सायकैः** चापच्छत्रकिरीटकेतुरहितं कृत्वा **शिशूनां प्रभुम्** आढ्यं **चक्रे** । यथा स्तनन्धयः शिशुः किमपि कर्तुं न शक्नोति तथा निश्चेष्टं कृत्वा **शिशूनां** पालः **प्रभुराढ्य** इत्यर्थसम्भवेन शिशुपालं चक्र इत्युपहासः । **बलरामश्चूर्णितवाजिसारथिरथं** मागधम् । जरया जरसा संहितप्रायं जराग्रस्तप्रायमित्यर्थः । **कृत्वा** यथा जरठः न प्रयतते तथा प्रतियत्नशून्यं विधाय जराग्रस्तशरीरोपमया जरासन्धनामानं कृत्वेत्युपहासः । **तं मागधम् आगृहीतमपि प्रभोः** श्रीकृष्णस्य **वाचा** इदानीं मुञ्चेति वचनेन **मुमोच**॥ १६ ॥

**पुनश्च तावतीं सेनां सम्पाद्य स तु दुर्मतिः ।**
**मधुरां विधुरीकर्तुं परं पारमुपागमत् ॥ १७ ॥**

**व्या : पुनरिति । दुर्मतिः** दुष्टबुद्धिः **स** मागधस्तु **पुनश्च तावतीं** त्रयोविंशत्यक्षोहिणीसम्मितसेनां **सम्पाद्य मधुरां** पुरीं **विधुरीकर्तुं** विधुरवत् सम्पद्यते यथा स्यात् तथा । कर्तुं सौभाग्यरहितां कर्तुं **परम्** अन्यत् यत् **पारं** यमुनोत्तरकूल**मुपागमत्**[1] ॥१७॥

---

१ तैः प्रेरिता नृपतयः पितरश्च तेषां साकं बृहद्रथसुतेन हरेः सकाशम् ।
युद्धाय जग्मुरमुनाऽष्टदशेषु युद्धेष्वत्यन्तभग्नबलदर्पमदा निवृत्ताः ॥
- म.भा.ता.नि (१४/८३)

दश चाष्टौ च सङ्ग्रामानेवमत्यन्तन्दुर्मदः ।
यदुभिर्मागधो राजा चक्रे कृष्णपुरोगमैः ॥
सर्वेष्वेतेषु युद्धेषु यादवैः स पराजितः ।
अपक्रान्तो जरासन्धः स्वल्पसैन्यैर्बलाधिकः ॥
न तद्बलं यादवानां विजितं यदनेकशः ।
तत् तु सन्निधिमाहात्म्यं विष्णोरंशस्य चक्रिणः ॥
- विष्णुपुराणे (५/२२/११२-११४)

**अपि पुण्यनदीतीरमुपव्रज्य[1] स मागधः ।**
**अमूमुदद्गीयमानो विमुग्धप्रकृतिर्हि सा ॥ १८ ॥**

**व्या :** अपीति । **स मागधो** जरासन्धः पुनर्नदीतीरमुपव्रज्यापि **गीयमानः** बन्दिभिर्गीयमानः सन्नात्मानम् **अमूमुदत्** मोदयामास । **सा** पुण्यनदीतीरेऽपि स्नानविष्णुस्मरणादिपुण्यवृत्तिं विहाय स्वोदरभरणरूपा स्थितिः विमुग्धानां मिथ्याज्ञानिनां **प्रकृतिर्हि** ॥ १८ ॥

**कुहकस्य कुबुद्धिं तामभिवीक्ष्येव भास्करः ।**
**कुपितस्तद्विघातार्थं परदेशमपीपदत्[2] ॥ १९ ॥**

**व्या :** कुहकस्येति । **भास्करः** सूर्यः **कुहकस्य** कुत्सितजरासन्धस्य **तां कुबुद्धिं** मधुरां नाशयिष्यामीति दुर्बुद्धिमभिवीक्ष्य दृष्ट्वा कुपित **इव** तस्यैवोद्योगस्य **विघातार्थं** पुनश्चोदयपर्यन्तं **विघातार्थमित्यर्थः** । **परदेशं** मेरोरन्यप्रदेशम् **अपीपदत्** गतवान् । तदा सूर्यास्तमयो जात इत्यर्थः ॥ १९ ॥

**अथोषःसमये [3]शौरी रथमारुह्य निर्ययौ ।**
**सवितेव सह स्वीयैर्निशाचरबलान्तकः ॥ २० ॥**

**व्या :** अथेति । अथ अनन्तरं **निशाचरबलान्तकः** शौरिः कृष्णः **उषःसमये** उषःकाले **रथमारुह्य स्वीयैर्भटैः निशाचराणां** चोरोलूकादीनां **बलान्तकः सवितेव** सूर्य इव **निर्ययौ** युद्धार्थं निर्गतवान् ॥ २० ॥

---

१ तृतीये मासि भूयश्च राजा बार्हद्रथो बली ।
दिवानिशं तप्यमानः स्मरन् पूर्वपराभवम् ॥ - भागवते (१०/५०/१)

२ सदैव मोदरूपिणो मुदोक्तिरस्य लौकिकी ।
यथोदयो रवेर्भवेत् सदोदितस्य लोकतः ॥ - म.भा.ता.नि. (१३/१३७)
अत्रास्तसमयेऽपि देशान्तरे पृथग्दर्शनादिनाऽऽदित्यरश्मीनामुदयास्तमययोरविशेषात्।
- इति श्रीजयतीर्थश्रीचरणकृतषट्प्रश्नोपनिषद्भाष्यटीकायाम् ।

३ शौरिः शूरजनेश्वरः । - इति विष्णुसहस्रनामसु

**राजनीतिं प्रकटयन् राजीवनयनस्त्रिधा ।**
**अमेयविभवः स्वीयामयूयुजदनीकिनीम् ॥ २१ ॥**

**व्या :** राजनीतिमिति । अमेयविभवः अपरिमितसामर्थ्यः राजीवनयनः श्रीकृष्णः । राजनीतिं अल्पबलेन राज्ञोपायेन शत्रुर्जेतव्य इति राजनीतिं प्रकटयन् सन् नत्वशक्त्या । स्वीयां अनीकिनीं चमूं त्रिधा अग्रे पार्श्वद्वये च अयूयुजत् प्रेषितवानित्यर्थः ॥ २१ ॥

**सूर्येणोदयशैलमूर्ध्नि लसता शौर्योन्नतिं श्रीपते-**
**स्तत्पोष्योदयमम्बुजैर्मधुकरैस्तद्वन्दिनां सम्पदम् ।**
**ध्वस्तैः सन्तमसैश्च तामसदशां नीडे क्वणद्भिः खगै-**
**र्वेश्मान्तः परवैभवं प्रकटयन् स स्यान्मुहूर्तो मुदे ॥ २२ ॥**

**व्या :** "रात्रौ चोरप्रसङ्गेन वञ्चितोऽस्मि दुरात्मना"[१] इति भागवतस्थजरासन्धवचनस्याप्रामाण्यप्रदर्शनाय श्रीकृष्णप्रयाणमुहूर्तं वर्णयति । **सूर्येणेति** । **उदयशैलमूर्ध्नि लसता** प्रकाशमानेन सूर्येण **श्रीपतेः** श्रीकृष्णस्य **शौर्योन्नतिं** प्रतापोदयं प्रकटयन् सूर्यस्य देवपक्षीयत्वात् क्रूरत्वाच्च श्रीकृष्णशौर्यप्रतिनिधित्वम्। अम्बुजैर्विकसितकमलैः । **तत्पोष्योदयं** तेन श्रीकृष्णेन पोष्याः रक्ष्याः यादवाः तेषामुदयमभ्युदयं **प्रकटयन् मधुकरैः** कमलसमीपे कूजद्भिः भ्रमरैः **तद्वन्दिनां** तेषां यादवानां वन्दिनस्स्तुतिपाठकास्तेषां **सम्पदं** प्रकटयन् **ध्वस्तैः सन्तमसैः** अन्धकारैः । **तामसानां** जरासन्धभटानां **दशां** मरणरूपावस्थां प्रकटयन् उभयेषामपि तामसशब्दवाच्यत्वाद्बिम्बप्रतिबिम्बभावः । **नीडे** कुलाये **क्वणद्भिः खगैः** पक्षिभिः **वेश्मान्तः** स्वपटकुट्यन्तः **परवैभवं** शत्रुसन्नाहं **प्रकटयन् सः सुमुहूर्तः मुदे** सन्तोषाय **स्यात्** ॥ २२ ॥

---

१ भागवते

**त्रिषु स्थानेषु विस्तीर्णा मधुसूदनवाहिनी ।**
**त्रिपदी वेदमातेव रिपुसेनामहन् क्षणात् ॥ २३ ॥**

**व्या :** त्रिष्विति । **त्रिषु स्थानेषु** अग्रे पार्श्वद्वये **विस्तीर्णा मधुसूदनवाहिनी** श्रीकृष्णसेना **त्रिपदा** [१]**वेदमातेव** गायत्रीव गायत्र्यभिमन्त्रिता आप इत्यर्थः । 'आप ऊर्ध्वं क्षिपन्ति । ता एता आपो वज्रीभूत्वा तानि रक्षांसि मन्देहारुणीद्वीपे प्रक्षिपति' इति श्रुतेः[२] । **रिपुसेनां** शत्रुसेनां **क्षणादहन्** जघान । सवितेवेति प्राक् श्रीकृष्णस्य सूर्यसाम्यकथनात् श्रीकृष्णसेनायाः सूर्यसेनास्थानीयगायत्रीसाम्यकथनम् ॥ २३ ॥

**अमूमुचन् शरव्रातममतेषु हरेर्भटाः ।**
**खलेषु त्रिदशाधीशा ज्वलत्तापत्रयं यथा ॥ २४ ॥**

**व्या :** अमूमुचन्निति । **हरेर्भटाः अमतेषु** शत्रुषु **शरव्रातममूमुचन्** मोचयामासुः । तत्कथं । **त्रिदशाधीशाः** देवश्रेष्ठाः पापपुण्यफलदानाधिकारिणः । **खलेषु** दुर्जनेषु **ज्वलत्तापत्रयम्**[३] इव ॥ २४ ॥

**प्रमत्ता ध्वजिनी शत्रोर्यमुनातीरगाऽप्यभूत् ।**
**असतां पुण्यसरिदप्यनिष्टस्य हि कारणम् ॥ २५ ॥**

---

१ वेदमाता तु गायात्री; गायत्री त्रिपदा । इत्यादि

२ समाहितो जपेत् तस्मात् सावित्र्या चाभिमन्त्र्य च ।
मन्देहानां विनाशाय रक्षसां निक्षपेज्जलम् ॥ - इति भारते (आश्व. ९२)

३ **तापत्रयेण** आध्यात्मिकाधिदैविकाधिभौतिकतापत्रयेण तथा कायिकवाचिकमानसिकप्राप्ततापत्रयेण, पुत्रेषणवित्तेषणदारेषणजन्यतापत्रयेण वा, गर्भवासजन्ममरणादिजन्यतापत्रयेण वा, स्वर्गमर्त्यनरकवासजन्यतापत्रयेण वा, भगवद्विस्मरणदुष्टसंसर्गसत्सङ्गराहित्यजन्यतापत्रयेण वा । - इति कृष्णामृतमहार्णवटीकायां श्रीस्मृतिमुक्तावलीकृष्णाचार्यकृतायाम् ।

**व्या :** प्रमत्तेति । शत्रोः जरासन्धस्य ध्वजिनी सेना यमुनातीरगाऽपि प्रमत्ता युद्धविचाररहिता अभूत् । तथाहि । पुण्यसरिदपि असतां दुर्जनानाम् [1]अनिष्टस्य कारणं हि ॥२६॥

**शरैरपारैस्तत्सैन्यं चतुरङ्गं स पूरयन् ।**
**ममेषुवारिधेर्नालं तव सेनेति शंसति ॥ २६ ॥**

**व्या :** ''एकैकस्मिन् दश दश भटे चाश्वे शतं शतम्'', ''रथे रथे च साहस्रमयुतं च गजे गजे'' इति भागवतवचनोक्तस्य एकैकत्रानेकशरप्रयोगस्य भावं वर्णयति। शरैरिति । अपारैर्दशशतसहस्रादिरूपैर्बहुभिः शरैश्चतुरङ्गं चत्वार्यङ्गानि यस्य स तथोक्तम् । तत्सैन्यं जरासन्धसैन्यम् । पूरयन् सः कृष्णः ममेषुवारिधेः शरसमुद्रस्य तव सेना त्रयोविंशत्यक्षोहिणीपरिमिताऽपि [2]नालं न पर्याप्तेति शंसति ॥ २६ ॥

**शार्ङ्गं बिभ्रन्निषङ्गान्निशितशरचयानाददानो मुहुर्ज्या-**
**माकर्णान्तं विकर्षन् प्रबलरिपुवपुः पूरयन् मार्गणौघैः ।**
**अन्यातङ्कं स्वशङ्खं रणधुरि रणयन्नङ्घ्रिमूले नतानां**
**तन्वन् दोष्णाऽभयं च प्रथयति मुरजिद्विश्वतःपाणितां[3] स्वाम् ॥२७॥**

**व्या :** शार्ङ्गमिति । रणधुरि दोष्णा हस्तेन शार्ङ्गं बिभ्रन् पुनर्दोष्णा निषङ्गादिषुधेः निशितशरचयान् आददानः पुनः दोष्णा ज्यां सिञ्जिनीम् आकर्णान्तं मुहुर्विकर्षयन् पुनर्दोष्णा प्रबलरिपुवपुः मार्गणौघैः पूरयन् पुनर्दोष्णा अन्येषां

---

१ अन्यक्षेत्रे कृतं पापं पुण्यक्षेत्रे विनश्यति ।
पुण्यक्षेत्रे कृतं पापं वज्रलेपो भविष्यति ॥ - स्मृतिवचनम् ।

२ एकैकस्मिन् दश दश भटे चाश्वे शतं शतम् ॥
रथे रथे च साहस्रमयुतं च गजे गजे ।
अदृश्यन्त परानीके तदद्भुतमिवाभवत् ॥ - इति भागवते (१०/५१/३७, ३८)

३ 'विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्' – इति श्रुतिः

शत्रूणामातङ्कं भयं यस्मात्। 'आतङ्कं तु ज्वरे रोगे साध्वसे मूत्रजध्वनौ' इति रत्नमाला। तं **स्वशङ्खं रणयन्** नादयन् पुनर्दोष्णाङ्घ्रिमूले **नतानामभयं च तन्वन् मुरजित्** श्रीकृष्णः **स्वां** स्वकीयां **विश्वतः** पाणयो हस्ता यस्य तस्य भावः तां **प्रथयति** प्रकटयति ॥ २७ ॥

**ये सन्ध्यासमयेऽपि भास्वदुदये निद्रां[1] द्विषोऽचीकरं-**
**स्तेभ्योऽदीदिशदच्युतः शुभकृतेः साक्षी सुदीर्घां हि ताम्।**
**यैरीक्षा न कृता रवेः कुमतिभिस्तेषां दृशोऽमीलयत्**
**ये शुद्धाम्बुनि नो ममज्जुरहितांस्तांश्छोणितेऽमज्जयत् ॥२८॥**

**व्या : य इति। ये द्विषः भास्वतः** सूर्यस्य उदयो यस्मिन् तस्मिन् संध्यासमयेऽपि **निद्रामचीकरन्** अकुर्वन्। **शुभकृतेः** शुभकर्मणः **साक्षी अच्युतः** श्रीकृष्णः। **तेभ्यः** शत्रुभ्यो **सुदीर्घां तां** निद्रां। मरणमित्यर्थः। अदीदिशद्धि। मरणमित्यनुक्त्वा दीर्घनिद्रामिति वदता निद्रानां **निद्रैव** दत्तेत्यौचित्यं प्रदर्शितम्। एवमुत्तरत्रापि द्रष्टव्यम्। **यैः कुमतिभिः** दुर्मतिभिः। **रवेः** सूर्यस्येक्षा दर्शनं न **कृता तेषां दृशः** लोचनानि अमीलयत्। **ये शुद्धाम्बुनि नो ममज्जुः** न स्नातवन्तः। तानहितान् तच्छोणिते शत्रुरक्ते **अमज्जयत्** ॥२८॥

**पादाब्जे स्वमनीनमन् कतिपये मूर्धानमात्मेशितुः**
**शार्ङ्गान्मुक्तशरैर्विशीर्णतनवः केऽप्यात्मनोऽमीमरन्।**
**अन्ये केऽपि हरिं जरासुतमपि त्यक्त्वा ततो दुद्रुवु-**
**र्जीवानां त्रितयेन सञ्चितदशां सन्दर्शयन्तो युधि ॥ २९ ॥**

---

१ निद्रा चैव सुनिद्रा च द्विधा निद्रा प्रकीर्तिता।
तत्र निद्रा भवेन्नित्या सुनिद्रा मृतिकालगा ॥ - भा. ता. (११/२८/२)

**व्या : पादाब्ज** इति । युधि जीवानां **त्रितयेनोत्तम**मध्यमाधमरूपत्रयेण[1] **संचितदशामा**र्जितावस्थां **सन्दर्शयन्तो वैरिभटाः कतिपये** केचन **आत्मेशितुः** स्वस्वामिनः श्रीकृष्णस्य **पादाब्जे स्वमा**त्मीयं **मूर्धानं** शिरः **अनीनमन्** नमयामासुः । 'केचिन्माधवमासाद्य विजयस्वेति चाब्रुवन्'[2] इति वचनात् । केऽपि

---

१ त्रिविधा जीवसङ्घास्तु देवमानुषदानवाः ।
तत्र देवा मुक्तियोग्या मानुषेषूत्तमास्तथा ॥
मध्यमा मानुषा ये तु सृतियोग्याः सदैव हि ।
अधमा निरयायैव दानवास्तु तमोलयाः ॥
- इति म.भा.ता.निर्णयोद्धृत(१/८६-८७)भविष्यत्पर्ववचनम् ।

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
सात्त्विकी राजसी चैव तामसी चेति तां श्रुणु ॥ - गीता (१७/२)
ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥ - गीता (१४/१८)
ये पाण्डवानामभवन् सहाया देवाश्च देवानुचराः समस्ताः ।
अन्ये तु सर्वेऽप्यसुरा हि मध्यमा ये मानुषास्ते चलबुद्धिवृत्तयः ॥
लिङ्गं सुराणां हि परैव भक्तिर्विष्णौ तदन्येषु च तत्प्रतीपता ।
अतोऽत्र ये ये(ऽ)हरिभक्तितत्परास्ते ते(ऽ)सुरास्तद्धरिता विशेषतः ॥
-म.भा.ता.नि.(११/२३४, २३५)

२ केचिद्धताः समापेतुर्भयात् केचिच्च दुद्रुवुः ।
केचिदात्तप्रहरणास्त्वाभिसस्रुररीन् रणे ॥
केचिद्विभिन्नवर्माणश्छिन्नपादोरुबाहवः ।
रिपूनेवाभ्यवर्तन्त क्रोदोद्धृत्तारुणेक्षणाः ॥
केचिद् हयानपर्याणानारुह्य दृढविक्रमाः ।
मर्दयन्तो रिपून् युद्धे विमलं लेभिरे यशः ॥
राजानः सहसोद्बुध्य दृष्ट्वा सैनिकसङ्क्षयम् ।
विना रणोपस्करणं चक्रुः केचन सङ्गरम् ॥
केचिद्विसृज्य शिबिरं विविशुर्गहनं वनम् ।
**केचिन्माधवमासाद्य विजयस्वेति चाब्रुवन् ॥**
रथेनैकेन गोविन्दः प्रविश्य रिपुवाहिनीम् ।

केचन **शार्ङ्गात् मुक्तशरैः विशीर्णतनवः** चूर्णीकृतशरीराः संतः **आत्मनः स्वानमीमरन्** मारयामासुः । **अन्ये केऽपि हरिं** श्रीकृष्णं **जरासुतमपि त्यक्त्वा ततः** युद्धाङ्गणात् **दुद्रुवुः** पलायनं चक्रुः ।। २९ ।।

**यो मागधस्य साधर्म्यमापन्नानपि नावधीत्**[1] **।**
**स मागधवधं हीनं मेने वीरशिरोमणिः ।। ३० ।।**

**व्या : य इति । यो वीरशिरोमणिः** श्रीकृष्णः **मागधस्य** [2]स्तुतिपाठकस्य **साधर्म्यं** सादृश्यमप्यापन्नान् मागधवत् स्तुतिं कुर्वंत इत्यर्थः । **नावधीत्** न हिंसितवान्। यद्वा **मागधस्य** जरासंधस्य **साधर्म्यं** साम्यम् मागधेति संज्ञायाः जरासन्धे स्तुतिपाठकेऽपि प्रयोगात् । आपन्नान् स्तुतिपाठकान् नावधीत् न हिंसितवान्। **स** कृष्णः **मागधवधं** जरासन्धवधं मागधनामसाम्यात् **हीन**मयशस्करं **मेने** ।।३०।।

**स इत्थमाजौ** [3]**बहुवारमेनं विजित्य बार्हद्रथमुग्रसेनम् ।**
**पुरं हिरण्यामलरत्नचित्रमरिन्दमोऽचीकरदब्धिमध्ये ।। ३१ ।।**

---

जघान सुबहून् वीरान् सायुधान् सरणोद्यमान् ।। - भागवते (१०/५०/२१-२६)

१ भयं न कार्यमेव ते मया हतः स नेति ह ।
मया हि नीतिहेतुतः स्वयं न हन्यते रिपुः ।।
स शर्वसंश्रयाग्रणीर्मदाश्रयोत्तमेन तु ।
निहन्यते यदा तदा प्रकाशितं हि मे बलम् ।।
अतो न शङ्कितं मनः कुरुष्व भूप ते क्वचित् ।
प्रदर्शयामि तेऽनुजौ निहत्य मागधेश्वरम् ।। -म.भा.ता.नि.(२१/११७-११९)

२ वन्दी तु स्तुतिपाठकः - मागधो मधुकः । - वैजयन्ती

३ बहुवारं **अष्टादशवारम्** । तथा हि महाभारततात्पर्यनिर्णये ।। (१४/८३)
युद्धाय जग्मुरमुनाऽष्टदशेषु युद्धेष्वत्यन्तभग्नबलदर्पमदा निवृत्ताः ।। इति
**दश चाष्टौ** च सङ्ग्रामानेवमत्यन्तन्दुर्मदः ।
यदुभिर्मागधो राजा चक्रे कृष्णपुरोगमैः ।।
सर्वेष्वेतेषु युद्धेषु यादवैः स पराजितः ।
- इति च विष्णुपुराणे । (५/२२/११२,११३)

**व्या : स इति । अरिन्दमः** कृष्णः । **इत्थम्** उक्तप्रकारेण **आजौ** युद्धे **उग्रा** सेना यस्य तम् । एवं **बार्हद्रथं** [1]जरासन्धम् । [2]**बहुवारं** बहुशो **विजित्य हिरण्यैः** सुवर्णैः **अमलै रत्नैः चित्रम्**आश्चर्यं [3]**पुरं** पत्तनं **अब्धिमध्ये** समुद्रमध्ये **अचीकरत्**

---

१ मागधोऽपि न हन्तव्यो भूयः कर्ता बलोद्यमम् । - भागवते(१०/४९/८)
तेन सार्धमभूद् युद्धं सप्ताहं रामकृष्णयोः ।
तदा पराजितो युद्धे मागधो बहुसैनिकः ॥
स्तूयमानौ विविशतुः सानुगौ मधुरां पुरीम् ।
एवं सप्तदशकृत्वस्तावदक्षौहिणीबलः ॥
हतेषु तेष्वनीकेषु त्यक्तोऽयादरिभिर्नृप ।
अष्टादशमसङ्ग्रामे आगामिनि तदन्तरा ॥ - भागवते (१०/५३/२३,२५,२७)

२ युद्धाय जग्मुरमुनाऽष्टदशेषु युद्धे -
ष्वत्यन्तभग्नबलदर्पमदा निवृत्ताः ॥ - म.भा.ता.नि (१४/८३)

३ अन्तः समुद्रे नगरं कृष्णोऽद्भुतमचीकरत् ।
दृश्यते यत्र हि त्वाष्ट्रं विज्ञानं शिल्पनैपुणम् ॥
रथ्याचत्वरवीथीभिर्यथावास्तु विनिर्मितम् ।
सुरद्रुमलतोद्यानविचित्रोपवनान्वितम् ॥
हेमशृङ्गैर्दिवस्पृग्भिः स्फाटिकाट्टालगोपुरैः ।
राजतारपुटैः कोष्टैर्जुष्टं हेमस्वलङ्कृतैः ॥
रत्नकूटैर्गृहैर्हैमैर्महामरतकस्थलैः ।
वास्तोष्पतीनां च गृहैर्वलभीभिश्च निर्मितम् ॥
चातुर्वर्ण्यजनाकीर्णं यदूनां च गृहैर्लसत् ।
सुधर्मां पारिजातं च महेन्द्रः प्राहिणोद्धरेः ॥
यत्र चावस्थितो मर्त्यो मर्त्यधर्मैर्वियुज्यते ।
यत् प्रियं देवदेवस्य विष्णोः क्षीरोदवासिनः ॥
श्यामैककर्णान् वरुणो हयान् शुक्लान् मनोजवान् ।
ददौ सहस्रसङ्ख्याकान् देवदेवाय तोयराट् ॥
अष्टौ निधिपतिः कोशान् रत्नपूर्णानविक्षयान् ।
तथाऽन्ये लोकपालाश्च ददुः स्वाधिकृतं धनम् ॥
पद्मश्चैव महापद्मो मत्स्यकूर्मौ तथौदकः ।

कारयामास । अरिन्दम इत्यनेन राजनीतिमनुसृत्येदं कृतं न शत्रुभीत्येति द्योत्यते ॥ ३१ ॥

**निधाय तस्यां मधुरापुरस्थान् निजान् क्षणेनापरिमेयशक्तिः ।**
**विदुद्रुवेऽथो यवनं दिधक्षुः स्वभक्तहर्यक्षदरीमरिघ्नः ॥ ३२ ॥**

**व्या :** निधायेति । अपरिमेयशक्तिः अरिघ्नः शत्रुसंहारकः श्रीकृष्णः तस्यां पुरि द्वारकायां क्षणेन मधुरापुरस्थान् स्वबन्धून् निधायाथो अनन्तरं यवनं दिधक्षुः दग्धुमिच्छुः सन् स्वभक्तो मुचुकुन्दः स एव हर्यक्षः सिंहः तस्य दरीं गुहां प्रति विदुद्रुवे ॥ ३२ ॥

**पराङ्मुखोऽसौ परमः पलायन् खलाग्रतः कञ्जदलायताक्षः ।**
**दुरात्मनां वक्त्रनिरीक्षणं स्वैर्जनैर्न कार्यं त्विति शंसति स्म ॥३३॥**

**व्या :** पराङ्मुख इति । कञ्जदलायताक्षः पराङ्मुखः सन् यवनानभिमुखः सन् खलस्य यवनस्याग्रतः पलायन् असौ परमः श्रीकृष्णः स्वैः स्वकीयैर्नरैः दुरात्मनां [1]वक्त्रनिरीक्षणं न कार्यमिति शंसति स्म ॥ ३३ ॥

**अधिक्षिप्तोऽपि तेनाध्वन्यदत्तोत्तर ईश्वरः ।**
**असल्लापमसद्वर्गैः सतां संशिक्षयन्निव ॥ ३४ ॥**

**व्या :** अधिक्षिप्त इति । तेन यवनेन अध्वनि मार्गे अधिक्षिप्तोऽपि दुरुक्तिभिर्निराकृतोऽपि अदत्तमुत्तरं[2] येन स तथोक्तः । स ईश्वरः श्रीकृष्णः

---

नीलो मुकुन्दः शङ्खश्च निधयोऽष्टौ प्रकीर्तिताः ॥
यद् यद् भगवता दत्तमाधिपत्यं स्वसिद्धये ।
सर्वं प्रत्यर्पयामासुर्हरौ भूमिगते नृप ॥ - भागवते (१०/५३/३४-४२)

१ ऊर्ध्वपुण्ड्रविहीनस्य श्मशानसदृशं मुखम् ।
अवलोक्य मुखं तेषामादित्यमवलोकयेत् ॥ - कृष्णामृतमहार्णवे (२२३)

२ 'क्रोष्टूनां श्वकलकलप्रदं विरावं
पञ्चास्यो न हि गणयेदुदारवीर्यः' (म.वि. १६/२२) इतिवज्ज्ञेयम् ।

**सतां असद्वर्गैः** असज्जनसमूहैः सह **असल्लापम्** असम्भाषणम्। 'सल्लापो भाषणं मिथः' इत्यमरः । **स्फुटं शिक्षति स्म** ॥ ३४ ॥

**निद्रालोर्मुचुकुन्दभूवरमणेर्विद्योतमानां गुहा-**
**मध्यासीनमगम्यमल्पमतिभिः शुद्धं प्रबुद्धं स्वतः ।**
**हृव्द्योमस्थितमुग्धजीवनिकराद्दुर्धीरभिन्नं वद-**
**न्नद्वैतीव नृपात् स भेदरहितं बुद्ध्याऽन्वमंस्तासुरः ॥३५॥**

**व्या : निद्रालोरिति । सः असुरः** कालयवनः [१]**निद्रालोर्निद्रितस्य मुचुकुन्दभूवरमणेः** मुचकुन्दाख्यराजश्रेष्ठस्य **विद्योतमानां** शोभमानां **गुहाम्** रैवताचलगुहायां मुचुकुन्दो निद्रां कुर्वन्नासीदिति पौराणिकी कथा। **अध्यासीनं** **गुहायां स्थितमित्यर्थः** । 'अधिशीङ्स्थासां कर्म'[२] इत्याधारस्य कर्मत्वम् ।

---

१ पुरा देवासुरे युद्धे कृतकर्मा महाबलः ।
वरेण छन्दितो देवैर्निद्रामेव गृहीतवान् ॥
श्रान्तस्य तस्य वागेवं तदा प्रादुरभूत् किल ।
प्रसुप्तं बोधयेद्यो मां तद्दहेयमहं सुराः ॥
चक्षुषा क्रोधदीप्तेनेत्येवमाह पुनः पुनः ।
एवमस्त्विति तं शक्र उवाच त्रिदशैः सह ॥
स सुरैरभ्यनुज्ञातो मानुषं लोकमागतः ।
स पर्वतगुहां काञ्चित् प्रविश्य श्रमकर्शितः ॥
सुष्वाप कालमेतं वै यावत् कृष्णस्य दर्शनम् ।
तत्सर्वं वासुदेवस्य नारदेन निवेदितम् ॥
वरदानं च देवेभ्यस्तेजस्तस्य च भूपतेः ।
अनुगम्यमानः कृष्णस्तु तेन म्लेच्छेन शत्रुणा ॥
तां गुहां मुचुकुन्दस्य प्रविवेश विनीतवान् ।
शिरःस्थाने तु राजर्षेर्मुचुकुन्दस्य केशवः ॥
सन्दर्शनपथं त्यक्त्वा तस्थौ बुद्धिमतां वरः ॥' - इति हरिवंशे (२/४३-५०)

२ पा.सू. १/४/४६

अतः ''कर्मणि द्वितीया''[१] इति द्वितीया। अल्पमतिभिरगम्यं **स्वतः प्रबुद्धं** निद्रारहितम्। अनेनाभेदं मन्यमानस्य निद्रितत्वमनिद्रितत्वञ्चेति विरुद्धौ धर्मौ बाधकौ सूचितौ। शुद्धं परमात्मानं श्रीकृष्णं **नृपात्** मुचुकुन्दात् [२]भेदरहितं **बुद्ध्या अन्वमंस्त** अमन्यत। कथमिव। **हृद्व्योमस्थितमुग्धजीवनिकरात्**। शुद्धं अज्ञानरहितं ब्रह्माभिन्नं **वदन् दुर्धीः** दुष्टबुद्धिः **अद्वैतीव**॥ ३५॥

**ऐक्यं सिषाधयिषितं यदि तत्किमर्थं**
**रक्षोऽच्युतत्वमति राज्ञि शुको न सेहे।**
**अस्म्यच्युतोऽहमिति[३] दिक्षु[४] विघोषयन्तं**
**कस्मात् स पौण्ड्रकमगर्हयदर्हणीयः॥ ३६॥**

**व्या : ऐक्यमिति।** यद्यैक्यं शुकाचार्यस्य **सिषाधयिषितं** साधयितुमीप्सितम्। **तत्** तर्हि **शुकः** शुकाचार्यः **राज्ञि** मुचुकुन्दे अच्युतत्वस्य मतिर्यस्मिन्

---

१ पा.सू. २/३/२

२ मिथ्याज्ञानेन च तमः - अणुभाष्ये (३/१)

३ वासुदेवोऽवतीर्णोऽहमेक एव न चापरः।
भूतानामनुकम्पार्थं त्वं तु मिथ्याभिधां त्यज॥
यानि त्वमस्मच्चिह्नानि मौढ्याद्बिभर्ष्यभीतवत्।
त्यक्त्वैहि मां त्वं शरणं नो चेत् देहि ममावहम्॥- भागवते (१०/६९/१८,१९)

४ अहं ब्रह्मेति वेनस्तु ध्यायन्नापाधरं तमः।
तद्राद्धान्तो महीं व्याप्तो भेर्या ख्यापयतोऽनिशम्॥
असुरा राक्षसाश्चैव पिशाचास्तत्पथि स्थिताः॥
भूमौ तत्पृथुना सर्वं निरस्तं महितात्मना।
पुनः कलियुगे प्राप्त अष्टाविंशतिमे मनोः।
वैवस्वतस्य समये जाताः क्रोधवशा भुवि।
ख्यापयन्ति दुरात्मानो मणिमांस्तत्पुरःसरः॥
- इति भविष्यत्पुराणे-इति भागवततात्पर्ये (४/१३/२२)

तदच्युतत्वमति तत् मुचुकुन्दं दृष्ट्वा अयमेवाच्युत इति मन्यमानमित्यर्थः । **रक्षः** राक्षसं कालयवनं **किमर्थं** कुतो न सेहे न क्षमांबभूव । 'इति मत्वाऽच्युतं मूढः स्वपदा समताडयत्'[१] इति भागवते मुचुकुन्दे अच्युतत्वबुद्धिं कुर्वतो यवनस्य मूढ इति शुकेनाचार्येण धिक्कृतत्वादिति भावः । **अर्हणीयः** पूज्यः शुकः अहमच्युतोऽस्मि श्रीकृष्णोऽस्मीति दिक्षु विघोषयन्तं **पौण्ड्रकं** कस्मादगर्हयत्। 'स्तोभितो बालवाक्येन मेने स्वात्मानमच्युतम् । कथितं तदुपाकर्ण्य' इत्यादौ निन्दितवान् । प्रसङ्गादिदमुक्तम् ।। ३६ ।।

**प्रदाह्य नयनाग्निना यवनकाननं भूपते-**
**र्भवाख्यगहनं पुनः स्वपदपद्मवीक्षाग्निना ।**
**विनाश्य मुचुकुन्दहृत्सरसिजातभानुः शनै-**
**रियाय पुरमात्मनो जलधिमध्यरत्नायिताम् ।। ३७ ।।**

**व्या : प्रदाह्येति** । मुचुकुन्दहृत्सरसिजातस्य । सरसि जायत इत्यलुक् । हृत्कमलस्य **भानुः** मुचुकुन्दहृदयविकासकः श्रीकृष्णः **भूपतेः** मुचुकुन्दस्य **नयनाग्निना** नेत्रोद्भूतवह्निना **यवनकाननं** कालयवनाख्यवनं **प्रदाह्य पुनर्भूपतेः भवाख्यं गहनं** संसारवनं **स्वपदपद्मस्य वीक्षा** विशेषेणेक्षा अपरोक्षज्ञानमित्यर्थः। स एवाग्निः तेन **विनाश्य शनैः जलधिमध्ये रत्नायितामात्मनः पुरं** द्वारवतीम्। 'पूः स्त्री पुरीनगर्यौ वा पत्तनं पुटभेदनम्' इत्यमरः । इयाय ययौ । पृथ्वीवृत्तम् । 'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः'[२] इति तल्लक्षणात् ।। ३७ ।।

**निजैः सह द्वारवत्यां निवसत्यम्बुजेक्षणे ।**
**अजया प्रेषितं पत्रं द्विजः कश्चिदुपाहरत् ।। ३८ ।।**

---

१ भागवते १०/५४/१०

२ वृत्तरत्नाकरे (३/९१)

**व्या :** निजैरिति । अम्बुजेक्षणे श्रीकृष्णे निजैः बन्धुभिः सह द्वारवत्यां निवसति सति कश्चिद्द्विजो ब्राह्मणो अजया जनिशून्यया रुग्मिण्या प्रेषितं पत्रम् आलेख्यम् उपाहरत्[1] ॥ ३८ ॥

**धन्याऽबला सा विभवे भवेद्या वेद्याय भूम्ने पुरुषाय साम्ना ।**
**साम्नायशास्त्रोदितधर्मपात्रे पात्रेषु दत्तात्मपदाय दत्ता ॥३९॥**

**व्या :** धन्येति । या अबला कन्या विभवे समर्थाय भूम्ने पूर्णाय साम्ना सामवेदेन वेद्याय प्रतिपाद्याय [2]साम्नायं वेदसहितं यत् शास्त्रं ब्रह्ममीमांसाशास्त्रं तेनोदितः धर्मः तस्य पाता रक्षकः तस्मै । पात्रेषु योग्यजीवेषु दत्तमात्मपदं वैकुंठाद्यात्मस्थानं येन स तथा तस्मै । पुरुषाय पूर्णषड्गुणाय श्रीकृष्णाय दत्ता भवेत् । सा कन्या धन्या कृतार्था ॥ ३९ ॥

**कुर्वन्ति कामवशगा मयि चित्तमन्ये**
**कुर्वन्तिकागतयमानुचरान् रणे तान् ।**
**देह्यङ्गजाकृतिशतोर्जितरम्यरूप**
**देह्यङ्गजातनिलयाङ्घ्रिसरोजसेवाम् ॥ ४० ॥**

**व्या :** कुर्वन्तीति । अङ्गजस्य कामस्य । [3]आकृतिशतं तस्मादूर्जितम् उत्कृष्टं रम्यं रूपं यस्य तस्य संबुद्धिः । अनेन वरोचितसौन्दर्यातिशय[4] उक्तो भवति । देहिनां प्राणिनाम् अङ्गजातं शरीरसमूहः तदेव निलयो यस्य तस्य सम्बुद्धिः ।

---

१ एवं सम्पृष्टसम्प्रश्नो ब्राह्मणः परमेष्ठिना ।
विधाय लिखितं पत्रं पादयोः प्रणनाम् तम् ॥ - भागवते (१०/५७/३४)

२ आम्नायोऽनन्यथापाठात् । - इति तत्त्वनिर्णयोद्धृतमहावाराहवचनम् ।

३ 'साक्षान्मन्मथमन्मथः' इति गोपिगीता ।

४ 'कन्या वरयते रूपम्' इत्युक्तेः ।

नियामकतया सर्वसन्निहितेत्यर्थः । अनेन स्ववरणविधिना कुत्सितराजजयशक्तिः सूचिता भवति । हे श्रीकृष्ण **कामवशगाः** कामवशं प्राप्ताः कामुका इत्यर्थः । **अन्ये** राजानः मयि **चित्तं कुर्वन्तितान्** राज्ञः **रणे** युद्धे **अन्तिकं** समीपं **आगताः यमानुचराः** यमदूताः येषां ते तथा तान् कुरु मारयेत्यर्थः । **अङ्घ्रिसरोजसेवां मे देहि** ॥ ४० ॥

**भवतापहरापाङ्ग भवताऽपहृतैव धीः ।**
**चरणाङ्ककृताङ्कां मां चरणाङ्गणतो नय ॥ ४१ ॥**

**व्या :** भवेति । **भवतापहरः** संसारतापहरः **अपाङ्गो** यस्य तस्य संबुद्धिः हे कृष्ण **भवता** त्वंया **धीः** बुद्धिः **अपहृतैव** । नारदवचनश्रवणमारभ्य मम बुद्धिस्त्वय्येव लग्नेत्यर्थः । **चरणस्याङ्कैः** ध्वजादिभिः **कृतः अङ्कः** वक्षःस्थलस्थचन्दनादिषु चिह्नं यस्याः ताम् । **मां च** मामपि **रणाङ्गणतो** युद्धभूमेः **नय** । चरणाङ्ककृताङ्कामित्यनेन श्रीरूपाया मम प्रागेव लब्धत्वदङ्गसङ्गत्वात् अन्यायोग्यत्वं सूचयति ॥

**धिक्कृत्याहमुमेशहंसगमनौ स्वर्गेश्वराग्नी भव-**
**त्सूक्तासक्तहृदङ्ग लोकमखिलं देवौघमान्यान् मुनीन् ।**
**सच्छास्त्राध्वनि कोविदानपि बुधांस्त्वय्येव यत्सस्पृहा**
**विश्वाधीश्वरतां भवघ्न भवतस्तन्निश्चिनोमि प्रभो ॥ ४२ ॥**

**व्या :** धिक्कृत्येति । भवघ्न प्रभो हे **अङ्ग** प्रिय श्रीकृष्ण **भवतः सूक्तं** समीचीनवचनं 'रुग्मिणीं वरयामि' इति नारदं प्रत्युक्तवचनं तेनासक्तं त्वयि हृन्मनो यस्याः सा तथोक्ता । **अहम् उमेशहंसगमनौ** हरविरिञ्चौ **स्वर्गेश्वराग्नी** इन्द्राग्नी **अखिलं लोकं** जनं **देवौघमान्यान् मुनीन्** नारदादीन् । **सच्छास्त्राध्वनि** सच्छास्त्रमार्गे। **कोविदान् बुधानपि धिक्कृत्य** निराकृत्य **यद्**यस्मात् **त्वय्येव सस्पृहा** साकांक्षा **तस्मा**द्भवतः **विश्वाधीश्वरतां** सर्वोत्तमतां **निश्चिनोमि** । त्वां विना मम सर्वत्रा-रुचिन्तेषामसारत्वं तव सारत्वम् । मम साक्षिप्रमाणेन निश्चीयत इत्यापाततोऽयं

भावः। हृदयं तु भवत्सूक्तम् अंभ्रणीसूक्तं लक्ष्मीसूक्तस्याप्यन्ततो विष्णुमहिमाप्रतिपादकत्वात्[१] भवत्सूक्तेत्युक्तम्। तत्रासक्तं हृत् यस्याः सा अवान्तरप्रतिपाद्यतया तत्सन्निहितेत्यर्थः। अहम् उमेशहंसगमनौ ''अहं रुद्राय धनुरातनोमि। अहं सुवे पितरमस्य। यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणम्'' इति धिकृतयोर्मत्तोऽप्यवर त्वमेव। एतत् श्रुतिसिद्धमिति भावः। स्वर्गेश्वराग्नी ''बिभर्म्यहमिन्द्राग्नी'' इत्यत्र धिकृत्य तयोः पोष्यत्वेन स्वतोऽवरत्वमिति भावः। ''यो विपश्यति यः प्राणिति य ईं श्रुणोति,' 'मया सोऽन्नमत्ति' इति। तत्राखिललोकं **धिकृत्य** ''तं ऋषिं तं सुमेधाम्'' इत्यत्र देवौघमान्यान् मुनीन् सच्छास्त्राध्वनि कोविदान् बुधानपि धिकृत्य ''मम योनिरप्स्वंतः समुद्रे'' इत्यत्र **यत्** यस्मात् **त्वय्येव** स्पृहावती त्वामेव मत्तोऽत्युत्तमत्वेन प्रतिपादितवतीत्यर्थः। अतः सर्वाधिकलक्ष्मीपतित्वेन विश्वाधीश्वरतां सर्वोत्तमत्वं निश्चिनोमि। अपौरुषेयवेदमूलकत्वेन निर्णयामि। सर्वोत्तमत्वात्त्वमेव मत्स्पृहाविषयो मां न वरयसि चेदेतद्वेदप्रामाण्यं भज्येतेति भावः॥ ४२॥

**शम्भुः पुत्रसमः स मे पुररिपुः पौत्रः शशी सोदरः**
**सिन्धुर्मे जनकायितो मधुसखो मत्सूनुकल्पः प्रभो।**
**अम्बाऽहं सकलस्य चेति कमला कृष्णैकलग्नं मनो-**
**भृङ्गं दर्शयितुं कृतोग्रशपथा स्वं रूपमस्पष्टयत्॥ ४३॥**

**व्या :** शम्भुरिति कमला रुग्मिणी। **मनोभृङ्गं** स्वमनोभृङ्गम्। **कृष्णैकलग्नं** केवलकृष्णसम्बद्धम्। **दर्शयितुं प्रभो** कृष्ण। **शम्भुः** ब्रह्मा **मे पुत्रसमः**। **सः**

---

१ 'वेदैश्च सर्वैरहमेव वेद्यः' इति गी. १५/१६
देवता सर्वविद्यानां स्वयं नारायणः प्रभुः।
ऋते तत्र प्रसिद्धाश्च देवता श्रीस्तथाऽत्र च॥
ऋते प्रसिद्धा ब्रह्मैव ततस्तेन क्रमेण च।
पूर्वप्रसिद्धवर्जं तु शक्रान्ता देवता मताः॥ - इत्यदि ऋग्भाष्ये

**पुररिपुः** पुरत्रयसंहारी शिवः **मे पौत्रः** । **शशी** चन्द्रः मे **सोदरः** । भ्राता **सिन्धुर्मे जनकायितः** पितृवदाचरितः । **मधोर्वसन्तस्य सखा** कामः **मत्सूनुकल्पः** । मत्पुत्रसदृशः । **अहं सकलस्य** जगतः **अम्बा** मातेति । **कृतोग्रशपथा** कृतः उग्रः शपथः अनिवर्त्यप्रमाणरूपवचनं यया सा तथोक्ता सती यथा लोके काचन नारी अनभिमते पुरुषे स्वस्यानङ्गीकारं प्रदर्शयितुं त्वं मम पितेति शपथं करोति तथा विष्णोरन्यत्रारुचिं प्रदर्शयितुम् उक्तप्रकारेण कृतोग्रप्रमाणवचना तथासती। स्वं स्वकीयं रूपम् । केवलं श्रीरेवाहमिति स्वस्वरूपमस्पष्टयत् स्पष्टीचकार । चतुर्मुखमातृत्वं समुद्रसहोदरीत्वं लोकमातृत्वादिकं लक्ष्म्याः प्रसिद्धमेव । लक्ष्म्या अप्राकृतविग्रहत्वेन स्वभावतः उत्पत्त्यभावात् । सहजरेतसो विकाराभावाच्च पुत्रसमः जनकायित इत्याद्युक्तम् ।। ४३ ।।

**नित्यानन्दचिदाकृतिं यदुपते त्वामेव मन्ये पतिं**
**यत् तेऽस्त्यच्युतनाम विश्वविदितं वीराग्र्यगानन्यगम् ।**
**तच्चिन्मात्रसमीक्षया यदि तदा सर्वेऽपि किं नाच्युता**
**यद्येतच्चिरकालसंस्थितिकृतं पुत्रे तव स्यात् तदा ।। ४४ ।।**

**व्या : नित्येति** ।। **वीराग्र्यग** वीराग्रेसर हे **यदुपते** श्रीकृष्ण । आनन्दश्च चिच्च आनन्दचितौ । **नित्ये आनन्दचितावेव आकृतिर्यस्य** स तथोक्तः । तं **त्वामेव पतिं मन्ये** । नित्यपतिवरणे नित्यसुवासिनीत्वप्राप्तेरिति भावः । श्रीकृष्णस्या-कृतेर्नित्यत्वं कुत इत्यत आह । **यदिति** । यत् यस्मात् कारणात् **ते** तव **विश्वविदितं** लोकप्रसिद्धम् **अनन्यगं** अन्यत्राप्रयुज्यमानं **अच्युतनाम** [१]अच्युतेति सञ्ज्ञा अस्ति । तस्मान्नित्यानन्दचिदाकृतिमिति पूर्वेणान्वयः । नन्वन्येनापि

---

१ अनित्यत्वं देहहानिर्दुःखप्राप्तिरपूर्णता ।
नाशश्चतुर्विधः प्रोक्तस्तदभावो हरेः सदा ।।
- गीताभाष्योदाहृत(२/१७)महावाराहवचनम्

च्युतिराहित्यं लभ्यते। देहच्युतिराहित्यं कुत इत्यतः परिशेषादित्याह। तदिति। **तत्** च्युतिरहितत्वं निमित्तीकृत्य प्रवर्तमानमच्युतनाम **चिन्मात्रसमीक्षया** शरीराधिष्ठातृकेवलचितः स्वरूपचितः च्युतिराहित्यविवक्षया। **यदि देहस्य** नित्यत्वाभावेऽपि देहाधिष्ठातृचित एव नित्यत्वादियमुक्तिरिति शङ्कितुरभिप्रायः। उत्तरमाह । **तदेति** । तदा चित एव नित्यत्वादच्युतशब्दवाच्यत्वे **सर्वेऽपि** जीवा अच्युतशब्दवाच्याः **किं न भवेयुः** । जीवचितो नित्यत्वस्य सर्वप्राणिसाधारण्यादिति भावः । पक्षान्तरमाशङ्क्य प्रतिषेधति । **यद्येतदिति** । एतदच्युतनाम **चिरकालसंस्थितिकृतं** देहस्य बहुकालावस्थानेन कृतं **यदि तदा तव पुत्रे** द्विपरार्धायुषि **चतुर्मुखे**ऽच्युतनाम **स्यात्**। इतरेभ्यो देहबहुकालावस्थानस्य तत्र विद्यमानत्वादिति भावः । तस्मात् पक्षान्तरस्यानुपपन्नत्वाद्देहनित्यताप्रयुक्तं तवाच्युतनामेति फलितोऽर्थः ।। ४४ ।।

**शेषेऽङ्ग शेषे यदशेषमन्ते बिभ्रत्त्वमभ्रद्युतिरात्मगर्भे ।**
**आनन्दसान्द्राकृतिमच्युतं त्वां श्रीशं तदीशं वरयामि नान्यम् ।।४५।।**

**व्या :** सर्वेषां प्रलयेऽपि सदेहस्य तवावस्थानाद्देहस्य नित्यत्वमित्याशयेनाह – शेषेति । हे **अङ्ग** प्रिय श्रीकृष्ण **यत्** यतो यस्मादन्ते प्रलये **अशेषं** जगत् **आत्मगर्भे** स्वोदरे **बिभ्रत्** सूक्ष्मरूपेण **बिभ्रत्** अभ्रस्य मेघस्य **द्युतिरिव** द्युतिर्यस्य सः **त्वं शेषे** विमुक्तफणिपतौ अथवा शिष्यते प्रलयेऽप्यवशिष्यत इति व्युत्पत्त्या लक्ष्म्यात्मकवटपत्रे **शेषे** शयानोऽसि । **तत्** तस्मात् सर्वप्रलयेऽप्यविनष्टदेहत्वा-दानन्दसान्द्राकृतिं केवलानन्दविग्रहम् **अच्युतं** श्रीलक्ष्मीपतिं **त्वामीशं** पतिं **वरयामि** । अन्यं त्वद्व्यतिरिक्तं वरमुत्तमं न वरयामि ।। ४५ ।।

**दशावृतीदं किल पद्मजाण्डमनेकधा यस्य हि रोमकूपे ।**
**पराणुवत् तिष्ठति पञ्चभूतभवः कथं तस्य तवाङ्ग देहः ।।४६।।**

**व्या :** पाञ्चभौतिकत्वानुपपत्तेश्च त्वच्छरीरस्य अनादिनित्यत्वमेवेत्याह – **दशेति**। हे **अङ्ग** प्रिय **हि** यस्मात् [1]**दश आवृतयः** आदौ पञ्चमहाभूतानि तदुपरि अहङ्कारतत्त्वं महत्तत्वं गुणत्रयं चेति दशावरणानि यस्य तत् तथोक्तम्। इदं **पद्मजाण्डं** ब्रह्माण्डम् **अनेकधा** अनेकप्रकारेण **यस्य** तव **रोमकूपे परमाणुवत् तिष्ठति किल**। किलेत्यनेन ''अण्डकोशो बहिरयं पञ्चाशत्कोटिविस्तृतः। दशोत्तराधिकैर्यत्र प्रविष्टः **परमाणुवत्**। 'लक्ष्यन्तेऽन्तर्गताश्चान्ये कोटिशो ह्यण्डराशयः'[2] इति पुराणप्रसिद्धिं द्योतयति। **तस्य** तव **देहः पञ्चभूतभवः** पञ्चभूतोपादानकः **कथं भवेत्**। अहङ्कारादर्वाक् परिमितानि पञ्चभूतानि ततोऽप्यधिकपरिमाणावरणपञ्चकोपेतानेकब्रह्माण्डानामवकाशदत्वेनातिबहुपरिमाणस्य शरीरैकदेशरूपस्य रोमकूपस्य पूरणेऽप्यसामर्थ्याद्देहकरणे असमर्थानीति किमु वक्तव्यम्। अतः कारणान्नोत्पन्नो देह इति भावः ॥ ४६ ॥

**गोपीरगोपीः किल लोकनाथ स्वापच्छिदापादनविक्रमौघ।**
**एवं विभो वञ्चितदुर्दशां मां स्वीयां दयावारिनिधे विधेहि ॥४७॥**

**व्या : गोपीरिति**। हे **लोकनाथ** स्वानामापत् विपत् तस्याः छित् छेदनं तस्याः आपादनं येन स तथोक्तः। तादृशः **विक्रमौघः** पराक्रमसमूहो यस्य तस्य सम्बुद्धिः। **दयावारिनिधे** कृपासमुद्र त्वं **गोपीः** गोपाङ्गनाः **अगोपीः किल** अरक्षः **किल**। किलेत्यनेन अप्सरोरूपतया स्वैरिणीरपि गोपीरङ्गीकृतवानसीत्यस्वरसं सूचयति। **वञ्चिता दुर्दशा** दुष्टानां शिशुपालादीनाम् अवस्था यया सा ताम्। स्वस्याः पातिव्रत्यसूचनार्थमिदं विशेषणं **माम् एवं** गोपीवत् **स्वीयां विधेहि** ॥ ४७ ॥

---

१ साण्डं महाभूतमनोभिमानमहत्प्रकृत्या वृतमब्जजादिभिः।
सुरैः शिवैर्तैर्नरदैत्यसङ्घैर्युतं ददर्शास्य तनौ यशोदा ॥- म.भा.ता.नि. (१२/११४)

२ स्वयमेकं च बहुवत् प्रत्येकं रोपकूपगम्।
रमाब्रह्मादिकं देशकालवर्णाण्डपूर्वकम्। - इति सत्तत्वरत्नमालायाम्। (३२५)

**किं रुग्मिणा [1]भीष्मकेण किमन्यैर्नृपसञ्ज्ञितैः ।**
**अनादिसिद्धां मां जायां नयतस्ते प्रयोजनम् ।। ४८ ।।**

**व्या :** बन्धुभिरनङ्गीकृता त्वं कथं नेयेत्यत आह । किमिति । हे श्रीकृष्ण **अनादिसिद्धां मां जायां** स्वां लक्ष्मीमिति यावत् । **नयतस्ते प्रयोजनं रुग्मिणा भीष्मकेण नृपसञ्ज्ञितैरन्यैः किं** नृपसञ्ज्ञितैरित्यनेन [2]पुरुषादरूपाणां तेषां नृपालनरूपयोगायोगं सूचयति । रुक्म्यादीनामनंगीकारस्त्वप्रयोजक इति भावः ।।४८।।

**नयेश मामन्यजनैरभोग्यां त्वदङ्घ्रियुग्मार्चनकर्मयोग्याम् ।**
**इमामवस्थामवधूय नो चेद्भवामि भूम्नो हृदयस्य योग्या ।।४९।।**

**व्या :** नयेशेति । हे **ईश** श्रीकृष्ण **त्वदङ्घ्रियुग्मार्चनकर्मयोग्याम् अन्यजनैरभोग्यां मां नय** । **नो चेत्** न नयसि चेत् **इमामवस्थां** रुग्मिणीरूपावस्थाम् **अवधूय** तिरोधाय **भूम्नः** पूर्णस्य तव **हृदयस्य** मनसो **योग्या भवामि** । देहं त्यक्त्वा जन्मान्तरे तव चित्तस्य योग्या भवामीति लौकिकोऽर्थः । वस्तुतस्तु रुग्मिणीरूपां मां न वरयसि चेच्छ्रीरूपतया तव वक्षस्येव स्थास्यामीति हृदयम् ।। ४९ ।।

**दिशासुनाथेक्षणमाश्रिताया मुकुन्द सौन्दर्यसमुद्रसान्द्र ।**
**दिशासुनाथेक्षणमाश्रितायास्तदीयभाग्यस्य न चेच्चरन्ती ।।५०।।**

**व्या :** दिशेति । हे **सौन्दर्यसमुद्रसान्द्र** । **असुनाथ** प्राणनाथ **मुकुन्द** श्रीकृष्ण **आश्रिताया** मम**ईक्षणं** तव दर्शनं **दिश** प्रदिश । **न चेत्** प्रदर्शनं न दिशसि चेत्

---

१ यः पूर्वमास दितिजो नरहेल्वलाख्यो रुग्मीति नाम च बभूव स कुण्डिनेशः ।।
भागेत एव तनयस्य स एव वह्ने र्नाम्ना शुचेः स तु पिताऽस्य हि मित्रभागः ।
राह्वंशयुक्तदनुजौ क्रथकैशिकाख्यौ भागौ तथाऽग्निसुतयोः पवमानशुन्ध्वोः ।।
- म.भा.ता.नि.(१४/९०,९१)

२ भूमिर्दृप्तनृपव्याजदैत्यानीकशतायुतैः ।
आक्रान्ता भूरिभारेण ब्रह्माणं शरणं ययौ ।। - भागवते (१०/१/१७)

दिशासु दिक्षु चरन्ती अहं याः नार्यः त्वां क्षणमाश्रिताः तदीयभाग्यस्य तदीयभाग्यं नाथे याचे । तदीयभाग्यं मे भूयादिति याच इत्यर्थः । आशिषि नाथ इति । भाग्यस्य इति कर्मणि षष्ठी ॥ ५० ॥

**त्वदैक्यमन्तः स्मरतां जनानां भवत्यनिष्टं किल दैत्यजुष्टम् ।**
**त्वदेकपत्नीमभिकाङ्क्षतस्तदुपेक्षितुं नार्हसि तानिमांस्त्वम् ॥५१॥**

**व्या :** त्वदैक्यमिति । हे कृष्ण! अन्तः हृदये त्वदैक्यं त्वदद्वैतं स्मरतां जनानां दैत्यजुष्टं दैत्यैरनुभूयमानम् अनिष्टम् अन्धन्तमो भवति किल । तत् तस्मात् कारणात् त्वदेकपत्नीं मामभिकाङ्क्षतः परिगृहीतुमिच्छतः तान् शिशुपालादीन् उपेक्षितुं नार्हसि । ऐक्यस्मरणादपि साक्षात्पत्न्यपहारो गरीयानिति भावः ॥५१॥

**त्वमङ्ग लक्ष्मीरमणः स्वतन्त्रस्त्वदीयजाया कमलाऽहमस्मि ।**
**असज्जनानामभिमानहानिं मदर्थितायाश्छलतो विधत्स्व ॥५२॥**

**व्या :** त्वमिति । अङ्ग श्रीकृष्ण त्वं स्वतन्त्रः लक्ष्मीरमणः अहं त्वदीया जाया लक्ष्मीः अस्मि । तर्हि किमर्थमर्थितमित्यत आह । मदर्थितायाः मद्विषयकप्रार्थनायाः छलतो व्याजेन असज्जनानां शिशुपालादीनां अभिमानहानिं विधत्स्व कुरु ॥५२॥

**इति पत्रगतालापं समालोक्य स माधवः ।**
**रथमारुह्य तरसा प्रतस्थे यत्र सा प्रिया ॥ ५३ ॥**

**व्या :** इतीति । स माधवः श्रीकृष्णः इत्युक्तप्रकारेण [१]पत्रगतालापं समालोक्य

---

१ श्रुत्वा गुणान् भुवनसुन्दर सङ्गतांस्ते निर्विश्य कर्णविवरं हरतोऽङ्ग तापम् ।
रूपं परं भुवनमङ्गलमङ्गलं ते त्वय्यच्युताविशति चित्तमपत्रपं मे ॥
का त्वा मुकुन्द महती गुणशीलरूपविद्यावयोद्रविणधामभिरात्मतुल्यम् ।
व्रीडावती कुलवती न वृणित कन्या काले नृसिंह नरलोकमनोभिरामम् ॥
स त्वं मयाऽप्यभिवृतः पतिरिन्दिराया भक्तिप्रियः कृपणलोकशरण्य ईशः ।
मत्वैतदङ्ग तव पादसरोजदास्याः कामं कुरु प्रियतम प्रणताऽस्मि तेऽङ्घ्रिम् ॥

दृष्ट्वेत्यर्थः। तरसा शीघ्रेण रथमारुह्य यत्र सा प्रिया रुग्मिणी तिष्ठति तत्र प्रतस्थे प्रययौ ॥ ५३ ॥

**सन्देशं भीष्मकन्यायाः सन्दृश्य कमलेक्षणः।**
**तं देशं दययाऽगच्छन्मन्दस्मितमुखोऽच्युतः ॥ ५४ ॥**

**व्या :** सन्देशमिति। कमलेक्षणो श्रीकृष्णः भीष्मकन्यायाः भीष्मककन्यायाः सन्देशं पत्रं सन्दृश्य प्रेक्ष्य मन्दस्मितमुखः सन् दयया तं देशं विदर्भदेशम् अगच्छत् ॥५४॥

**भैष्मीकरग्रहणमेष करिष्यतीति वक्तव्यमस्ति किमिहाश्रितपक्षपाती।**
**यद्ब्राह्मणस्य सदयः करपल्लवेन प्रत्यग्रहीद्वचनमात्रहृतोऽपि [1]हस्तम् ॥५५॥**

---

तन्मे भवान् खलु वृतः पतिरङ्ग जायामात्माऽर्पितश्च भवतोऽत्र विभो विधेहि।
मा वीरभागमभिमर्शतु चैद्य आराद्गोमायुवन्मृगपतेर्बलिमम्बुजाक्ष ॥
पूर्तेष्टदत्तनियमव्रतदेवविप्रगुर्वर्चनादिभिरलं भगवान् परेशः।
आराधितो यदि गदाग्रज एत्य पाणिं गृह्णातु मे न दमघोषसुतादयोऽन्ये ॥
श्वोभाविनि त्वमजितोद्वहने विदर्भान् गुप्तान् समेत्य पृतनापतिभिः समेतैः।
निर्मथ्य चैद्यमगधेन्द्रबलं प्रसह्य मां राक्षसेन विधिनोद्वह वीर्यशुल्काम् ॥
अन्तःपुरान्तरचरानविहत्य बन्धूंस्त्वामुद्वहे कथमिति प्रवदाम्युपायम्।
पूर्वेद्युरस्ति महती कुलदेवियात्रा यस्यां बहिर्नववधूर्गिरिजामुपेयात् ॥
तत्रैत्य मां रथपदातिगजाश्वयुक्तः सम्मथ्य साल्वमगधान् सहचेदिभूपान्।
आदाय मां सहचरीभिरथो रमेशो गृह्णातु पाणिमुपनीय पुरीं स्वकीयाम् ॥
यस्याङ्घ्रिपङ्कजरजःस्तवनं महान्तो वाञ्छन्त्यौमापतिरिवात्मतमोपहत्यै।
यद्यम्बुजाक्ष न लभेय भवत्प्रसादं जह्यामसून् व्रतकृशा शतजन्मभिः स्याम् ॥
इति पत्रगतं विश्वं विमृश्य मधुसूधनः।
सन्देशं राजकन्यायास्तं ब्राह्मणमवैक्षत ॥ - भागवते (१०/५७/३६-४५)

१ तं भुक्तवन्तं विश्रान्तमुपगम्य सतां गतिः।
पाणिनाऽभिमृशन् पाणावव्यग्रस्तमपृच्छत ॥ - भागवते (१०/५७/२७)

**व्या :** **भैष्मीति।** आश्रितपक्षपाती **एषः** श्रीकृष्णः **भैष्म्याः** रुग्मिण्याः **करग्रहणं** पाणिग्रहणं करिष्यतीति **इह** अत्र **वक्तव्यं किमस्ति।** **यत्** यस्मात् **सदयः सन्** **वचनमात्रहृतोऽपि** रुग्मिण्याः सन्देशमात्रहृतोऽपि **ब्राह्मणस्य हस्तं करपल्लवेन** हस्तपल्लवेन **प्रत्यग्रहीत्** ॥ ५५ ॥

**उद्यन्मरीचिशतभासितसर्वदेशः**
**पद्मोदयाय स निशाचरघूकशोकम्।**
**पुष्णन् ललास दिनराडिव पूर्वसिन्धोः**
**सच्चक्रमानितगतिर्हि तदोपकण्ठे ॥ ५६ ॥**

**व्या :** **उद्यदिति।** **तदा** तस्मिन्नेव दिने **पद्मायाः** लक्ष्मीरूपायाः रुग्मिण्याः **उदयाय** अभ्युदयाय। अन्यत्र कमलविलासाय। **उद्यत्** प्रकाशमानं **मरीचिशतं** तेन **भासितः** प्रकाशितः **सर्वदेशो** येन। विवाहसमयत्वाद्बहुसौन्दर्यं प्रकाशयतीति भावः। अन्यत्र **उद्यत्किरणशतभासितसर्वदेशः।** **निशाचराः** राक्षसा एव **घूकाः** उलूकाः तेषां **शोकं** दुःखम्। अन्यत्र रात्रौ चरतां घूकानां शोकं **पुष्णन्** वर्धयन् सतां सज्जनानां चक्रेण समूहेन मानिता गतिरागमनं यस्य स तथोक्तः। अन्यत्र समीचीनचक्रवाकमानितगतिः सः श्रीकृष्णः **दिनराडिव** दिनेश इव **पूर्वसिन्धोः** प्राचीसमुद्रस्योप**कण्ठे** समीपे **ललास हि** ॥ ५६ ॥

**दुष्टौघपूर्णां नगरीं प्रवेष्टुं कृष्णो ह्यनिच्छन् बहिरेव वासम्।**
**चक्रे स्थली नागरिकैर्वृता सा तदीक्षणोत्कैरजयत् पुरीं ताम् ॥५७॥**

**व्या :** **दुष्टौघेति।** **कृष्णः** **दुष्टौघपूर्णां** दुर्जनसमूहपूर्णां **नगरीं प्रवेष्टुमनिच्छन्** सन् **बहिरेव वासं चक्रे।** नतु दुर्जनजरासन्धादिभयेनेति भावः। **तदीक्षणे** श्रीकृष्णसन्दर्शने **उत्कैः** उत्सुकैः **नागरिकैः** नगरस्थैः **वृता सा** श्रीकृष्णाधिष्ठिता **स्थली तां पुरीम्** **अजयत्।** नगरादप्यधिकं [1]कृष्णाधिष्ठितस्थली शुशुभ इत्यर्थः ॥५७॥

---

१ 'वनं तु सात्विको वासः' - इति भागवते (११/२५/२५)

**शौरिं तदोपायनपाणयस्तमालोक्य सौन्दर्यसमुद्रसान्द्रम् ।**
**वीरानपार्थानपरानुपेक्ष्य पौराः सदाराः किल ते प्रचक्रुः ॥५८॥**

**व्या :** शौरिमिति । सदाराः सस्त्रीकाः । पुरे भवाः पौराः तदा सौन्दर्यसमुद्रसान्द्रं शौरिं श्रीकृष्णम् । उपायनपाणयः सन्तः आलोक्य अपरान् शिशुपालादीन् वीरान् उपेक्ष्य । अपगतः अर्थः येभ्यस्ते अपार्थाः तान् व्यर्थान् प्रचक्रुः किल। श्रीकृष्णं प्रशंसद्भिः पौरैरेव श्रीकृष्णस्पर्धिनश्चैद्यादीनुपेक्ष्यैव धिक्कृत्य श्रीकृष्णकार्यं साधितमिति भावः ॥ ५८ ॥

**नायं स्मरः श्यामलकोमलाङ्गो नायं शशी वीतकलङ्कशङ्कः ।**
**नायं रविर्लोकदृगार्तिहारी सोऽयं पुराणः पुरुषोऽद्वितीयः ॥५९॥**

**व्या :** प्रशंसाप्रकारमाह नायमिति । श्यामलम् कोमलम् अङ्गं यस्य सः अयं पुरुषः **स्मरः** कामो न । तस्यानङ्गत्वादिति भावः । वीता कलङ्कशङ्का यस्य सः अयं चन्द्रो न भवति । तस्य कलङ्कित्वादिति भावः । लोकदृशाम् आर्तिहारी दुःखहरः अयं हरिः रविर्न । तस्योष्णकिरणतया तापनप्रेशकत्वादिति भावः । सोऽयमद्वितीयः असदृशः पुराणः पुरुष एव । व्यतिरेकालङ्कारः[१] ॥ ५९ ॥

**श्रीरेव सा भीष्मसुता मनोज्ञा श्रीवल्लभोऽयं सुभगाग्रगण्यः ।**
**एतौ समेतौ भवतामितीमे धातारमात्मेष्टदमर्थयन्ते[२] ॥६०॥**

---

'वृन्दावनं यदधिवासत आस सन्ध्यङ् माहेन्द्रसद्मसदृशं ...'
- इति म.भा.ता.नि. (१४/७)

१ अतिशान्तवपुर्निशाकरः स्वयमेकान्तखरो दिवाकरः ।
इति नास्य गुणार्णवाकृतेरुपमानं भुवनेषु लभ्यते ॥ - मध्वविजये (७/७)

२ कृष्णमागतमाकर्ण्य विदर्भपुरवासिनः ।
आगत्य नेत्राञ्जलिभिः पपुस्तन्मुखपङ्कजम् ॥
अस्यैव भार्या भवितुं रुग्मिण्यर्हति नापरा ।

**व्या ः श्रीरेवेति । मनोज्ञा** मनोहरा **सा रुग्मिणी श्रीरेव** साक्षाद्रमैव । अन्यस्यास्तादृशसौन्दर्यायोगात् । **सुभगेषु** शोभनैश्वर्यवत्सु । **अग्रगण्यः** श्रेष्ठः **अयं पुरुषः श्रीवल्लभ एव** साक्षाल्लक्ष्मीपतिरेव । अन्यस्य तादृशसौन्दर्यायोगात् । **इमे** श्रीकृष्णसन्दर्शनार्थं समागताः **पौरा आत्मेष्टदं** पातारं विधिं **एतौ** रुग्मिणीकृष्णौ **समेतौ** संयुक्तौ पतिपत्नीभावं **समेतौ भवताम् इति अर्थयन्ते** याचन्ते ॥६०॥

**गृह्णाति यर्ह्येणदृशीकरं नः पुण्येन सोऽयं पुरुषाग्रगण्यः ।**
**स्वर्णे तदा नीलमणिं समेतं मन्यामहे लोहमतोऽन्यथा चेत् ॥६१॥**

**व्या ः गृह्णातीति । पुरुषाग्रगण्यः सोऽयं** श्रीकृष्णः **नः पुण्येन एणदृशः** हरिणाक्ष्याः रुग्मिण्याः **करं यर्हि गृह्णाति । नीलमणिम्** इन्द्रनीलरत्नं **स्वर्णे** सुवर्णे खचितं **मन्यामहे । अतोऽन्यथा चेत्** श्रीकृष्णादन्यपुरुषो गृह्णाति चेत् **स्वर्णे समेतं लोहम्** अयःपिण्डं **मन्यामहे** ॥ ६१ ॥

**इत्थं गृणन्तः किल वृन्दशस्तं नत्वा मुकुन्दं नयनैः पपुस्ते ।**
**कृष्णोऽपि सर्वान् सदयावलोकैर्मुग्धस्मितोऽरञ्जयदञ्जसा तान् ॥६२॥**

**व्या ः** इत्थमिति । **इत्थम्** उक्तप्रकारेण **वृन्दशः** यूथशः **गृणन्तो** वदन्तः **ते** पौराः **तं मुकुन्दं** श्रीकृष्णं **नत्वा नयनैः पपुः** सादरं ददृशुरित्यर्थः । **मुग्धं** मनोहरं स्मितं यस्य सः **श्रीकृष्णोऽपि सर्वानेतान् सदयावलोकैरञ्जसा** सम्यगरञ्जयत् । नयनैरुपचारैः कृते नयनैरेवानुजग्राहेत्यौचित्यं प्रदर्शितम् ॥६२॥

---

असावाप्यनवद्यात्मा भैष्म्याः समुचितः पतिः ॥
किञ्चित् सुचरितं यन्नस्तेन तुष्टस्त्रिलोककृत् ।
अनुगृह्णातु गृह्णातु वैदर्भ्याः पाणिमच्युतः ॥
एवं प्रेमकलाबद्धा वदन्ति स्म पुरौकसः । - इति भागवते (१०/५८/३७-४०)

**चलत्पताकोज्ज्वलचामरौघां परिस्फुरच्छत्रसहस्रशोभाम् ।**
**विचित्रतूर्यध्वनिपूरिताशामथो वितेनुः कुलदेवयात्राम्[1] ॥६३॥**

**व्या :** चलदिति । पौराः अथो अनन्तरं पताकाश्च चामराणि च तेषाम् ओघाः समूहाः चलन्तः पताकोज्ज्वलचामरौघाः यस्यां ताम् । परिस्फुरन्ती छत्रसहस्रस्य शोभा यस्यां ताम् । विचित्राणि तूर्याणि वाद्यानि तेषां ध्वनिभिः पूरिताः आशाः दिशो यस्यां ताम् । कुलदेवयात्रां वितेनुः ॥ ६३ ॥

**स्वजनकगृहदेवं पौत्रमाराध्य भैष्मी**
**निजमथ गृहदेवं माधवं द्रष्टुकामा ।**
**अपि पुरमभियान्ती सा रथं नारुरोह**
**प्रियचरणसकाशं[2] तेवनेन[3] व्रजन्ती ॥ ६४ ॥**

**व्या :** स्वजनकेति । **भैष्मी** रुग्मिणी **स्वजनकस्य** भीष्मकस्य **गृहदेवं** कुलदैवतम् । **पौत्रं** स्वस्याः पुत्रपुत्रं चतुर्मुखपुत्रं पशुपतिम् **आराध्य** सम्पूज्य । **पौत्रम्** इत्यनेन तदाराधनमत्र वात्सल्यनिमित्तं न तु माहात्म्यनिमित्तमिति सूच्यते। **स्वजनकगृहदेवम्** इत्यनेन पारम्पर्यनिमित्तं चेति सूच्यते । **अथ निजगृहदेवं** स्वगृहपतिं **माधवं द्रष्टुकामा सा पुरमभियान्त्यपि प्रियचरणसकाशं तेवनेन** पादचारेण । 'तेवनं पादचारणम्' इति हलः । **व्रजन्ती** सती **रथं नारुरोह**। औपचारिकगृहदेवयात्रायां पादचारो विहितः किमु स्वाभाविकगृह-देवयात्रायामिति मत्वैव रथारोहणं न कृतवती । अन्यथा पुराभिगमने रथारोहस्योचितत्वादिति भावः ॥६४॥

---

१ पूर्वेद्युरस्ति महती कुलदेवियात्रा - इति भागवते (१०/५७/४२)

२ पद्भ्यां विनिर्ययौ द्रष्टुं भवान्याः पादपङ्कजम् ।
सा चानुध्यायती सम्यक् मुकुन्दचरणाम्बुजम् ॥ - भागवते (१०/५८/४१)

३ पदा चलन्तीं कलहंसगामिनीं ... -इति भागवते (१०/५८/५५)

**अलसविलसदक्षिस्तम्भितान्याक्षवृत्ति-**
**र्जलजकुलजगन्धस्पर्धिसौरभ्यसान्द्रा ।**
**वदनमदनशस्त्रागण्यलावण्यचित्रा**
**गजगतिरजतातं भीष्मपुत्र्यैक्षतैनम्[1] ।। ६५ ।।**

**व्या :** अलसेति । अलसं लज्जावशाल्लक्ष्यात् निवृत्तम् । विलसच्छब्देन वलितमुच्यते । विलसद्वलितं प्रेमवशात् पुनः प्रवृत्तम् । तच्च तत् अक्षि च अलसं तदभीष्टार्थात् व्रीडाद्यैर्यन्निवर्तितम् । 'वलितं तु प्रवृत्तं स्यात् पुनस्तत्रावलोकनम्' इत्युक्तत्वात् । तेन अक्ष्णा नयनेन **स्तम्भितां** अन्येषां राज्ञामक्षवृत्तिरिन्द्रिय-वृत्तिर्यया सा । नयनविलासदर्शनमात्रेण सर्वे मुमुहुरित्यर्थः । अनेन रुग्मिण्याः विलासातिशयः सूच्यते । जलजानां कमलानां कुलं समूहस्तत्र जातो गन्धस्तं स्पर्धत इति **जलजकुलजगन्धस्पर्धि** तच्च तत् **सौरभ्यं** च तेन **सान्द्रा** घना । अनेन रुग्मिण्याः पद्मिनीजातित्वं सूच्यते । **वदन**मेव मुखमेव **मदनशस्त्रं** यस्याः सा । तन्मुखेनैव कामः सर्वान् जयतीति भावः । अरविन्दस्य मदनशस्त्रत्वान्मुखस्य चारविन्दसाम्यादिदं रूपकम् । **अगण्येन लावण्येन चित्रा** विचित्रा । चित्रेत्यनेन तदवयवोचितसौन्दर्यं तत्र परिपूर्णमिति सूच्यते । गजगामिनी **भीष्मपुत्री** **अजतातं** चतुर्मुखतातं **एनं** श्रीकृष्णम् **ऐक्षत** अपश्यत् । अधुनाऽपि श्रीकृष्णो मां नेतुं नागमिष्यत् किमिति श्रीकृष्णं दृष्टवतीति भावः । **गजगति**रित्यनेन श्रीकृष्णागमनप्रत्याशया गतेरतिमान्द्यं द्योत्यते ।। ६५ ।।

**कृष्णेन नेया जननी ममेयमित्युत्सुकोऽसौ स्मर एव नूनम् ।**
**मूर्च्छावशानात्मशरैरकार्षीत् तद्दृष्टिजन्मा सकलान् नृपालान्[2] ।।६६।।**

---

१ एवं शनैः प्रचलती चलपद्मकोशैः प्राप्तिं तदा भगवतः प्रसमीक्षमाणा ।
उत्सार्य वामकरजैरलकातपाङ्गैः प्राप्तह्रियैक्षत नृपान् ददृशेऽच्युतं सा ।।
- इति भागवते (१०/५८/५७)

२ विलोक्य वीरा मुमुहुः समागता यशस्विनस्तत्कृतहृच्छयार्दिताः ।

**व्या :** कृष्णेनेति । मम जननि इयं कृष्णेनैव नेया । तदाऽहं कृष्णपुत्रो भवामीत्याशया उत्सुकः तस्याः रुग्मिण्याः दृष्टिर्दर्शनं ततो जन्म यस्यासौ **स्मर एव** । **तद्दृष्टिजन्मा** इत्यनेनेदानीमपि रुग्मिण्याः मातृत्वं सूच्यते । **आत्मशरैः सकलान् नृपालान् मूर्च्छावशानकार्षीत्** । **नूनं** निश्चयः । रुग्मिणीं दृष्ट्वा कामोद्रेकात् मूर्छिता इत्यत्रेयमुत्प्रेक्षा ॥ ६६ ॥

**तदनु मदनमन्दीभूतचित्तेषु भूपे-**
**ष्वविदितगतिरुद्यद्रोमराजिं प्रहर्षात् ।**
**विकसितनयनाब्जोद्भूतहर्षाम्बुधारां**
**निजरथमधिरोप्य स्वां प्रपेदे स्वतन्त्रः ॥ ६७ ॥**

**व्या :** तदिति । तदनु भूपेषु मदनमन्दीभूतचित्तेषु सत्सु मूर्च्छितेष्वित्यर्थः । अविदितगतिः अविदितगमनः स्वतन्त्रः श्रीकृष्णः प्रमोदात् उदुद्यद्रोमराजिम् उद्गता रोमराजिः रोमपुलको यस्याः सा तथोक्ता ताम् । विकसितनयना-ब्जोद्भूता हर्षाम्बुधारा यस्यास्ताम् । स्वां स्वकीयां भैष्मीं निजरथमधिरोप्य प्रपेदे गतवान् ॥ ६७ ॥

**पुनर्विवाहेन किमिन्दिराया इतीव लक्ष्मीरमणः स कृष्णः ।**
**अपाङ्गदूतीविनिवेदितात्ममनोनुरागामतनोत् सुयोगाम् ॥६८॥**

**व्या :** पुनरिति । लक्ष्मीरमणः स श्रीकृष्णः इन्दिरायाः भैष्म्याः पुनर्विवाहेन विधिसहितविवाहेन । किमितीव अपाङ्ग एव दूती तया विनिवेदितः आत्मम-

---

यां वीक्ष्य ते नृपतयस्तदुदारहासव्रीळावलोकहृतचेतस उज्झितास्त्राः ॥
पेतुः क्षितौ गजरथाश्वगता विमूढा यात्राच्छलेन हरयेऽर्पयतीं स्वशोभाम् ।
एवं शनैश्चलयती पदपद्मकोशैः प्राप्तिं तदा भगवतः प्रसमीक्षमाणा ॥
- भागवते (१०/५८/५५-५७)

नोनुरागो यया ताम् । कृतोद्वाहानामपि दूतिका सङ्घटनकर्त्रीति भावः । सुयोगां सुसङ्गताम् अतनोत् ।। ६८ ।।

**कृष्णास्येन्दुसमीपलग्नमुदितभ्राजत्कपोला प्रभो-**
**र्हस्ताम्भोजयुगेन वेष्टितलसन्मध्या भियेवाञ्जसा ।**
**भर्त्रंसद्वयसंहितायतभुजा मोदाम्बुधौ मग्नधीः**
**सा पाणिग्रहणादपीममधिकं मेने विवाहोत्सवम् ।। ६९ ।।**

**व्या :** कृष्णेति । भूमिस्थितां गृहीत्वा स्वरथमारोपयतः श्रीकृष्णस्यास्येन्दुः मुखेन्दुः तस्य समीपे लग्नः संबद्धः मुदितः भ्राजत्कपोलो यस्याः सा । अनेन आचुम्बनं ध्वन्यते । प्रभोः श्रीकृष्णस्य हस्तावेव अम्भोजे कमले तयोः युगेन युग्मेन वेष्टितमालिङ्गितं लसन्मध्यं यस्याः सा । पृथुश्रोण्याः उद्धारे हस्तद्वयावेष्टनस्योचितत्वादिति भावः । अनेनालिङ्गनं सूचितम् । भियेव पतनभीत्येवाञ्जसा सम्यग्भर्तुः श्रीकृष्णस्यांसद्वये संहितौ आयतौ भुजौ यस्याः सा। दृढं गृहीतभर्तृकण्ठेत्यर्थः । अनेन रुग्मिण्याः पुरुषालिङ्गनं सूच्यते । उक्तरीत्या कपोलयोः समागमात् परस्परालिङ्गनाच्च मोदाम्बुधौ मग्नधीः सा रुग्मिणी पाणिग्रहणादपि इमं विवाहोत्सवम् अधिकं मेने । पाणिग्रहणादित्यनेन लज्जया दृष्टपरस्परमुखयोः पाणिग्रहणमात्रम् । अत्र उक्तरीत्या आलिङ्गनादेर्जातत्वाद-धिकमित्युक्तम् ।। ६९ ।।

**रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि**
**प्रेम्णा चिन्तयतां विचित्रविमलश्लाघ्यार्थसन्दायिनि ।**
**सञ्जाते भुवि रुग्मिणीशविजये सद्वादिराजोदिते**
**सञ्जातोऽयमभूच्चतुर्दशमितः सर्गो मुदां स्वर्गिषु ।। ७० ।।**

**।। इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थश्रीचरणविरचिते श्रीरुग्मिणीशविजये महाकाव्ये चतुर्दशः सर्गः ।।१४।।**

**व्या :** रोम्णामिति । स्वर्गिषु देवेषु चतुर्दशमितः श्रीकृष्णजननपूतनादिहननकंसहननजरासन्धजयान्तमहोत्सवानां कयाचिद्विवक्षया परिगणनायां त्रयोदशसङ्ख्या । रुग्मिण्या हरणस्य चतुर्दशत्वमिति भावः । चतुर्दशमितः चतुर्दशसङ्ख्यापरिमितः मुदामयं सर्गोऽभूत् । काव्यपक्षे चतुर्दशसर्गोऽभूदित्यर्थः ॥७०॥

**॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थश्रीचरणविरचितस्य श्रीरुग्मिणीशविजयमहाकाव्यस्य व्याख्यायां श्रीनारायणभट्टविरचितायां श्रीगुरुभावप्रकाशिकायां चतुर्दशः सर्गः ॥**

*****

# पञ्चदशः सर्गः

**तरणिमिव तमस्तमन्वधावन् मदनवशाः किल मानिनो महीशाः ।**
**विषममृगदृशीवियोगरोगात् स्वतनुमिवोज्झितुमुद्यताः पुरस्तात् ॥१॥**

**व्या :** ओजस्तेजोबलं धीर्द्युतिरतिमहिमा श्रीर्यशो रूपमाज्ञा
वीर्यं चेत्येवमादीन् परमगुणगणान् ये स्मरन्तो लभन्ते ।
यद्भक्तानां यमाज्ञाऽप्यखिलजनमनःक्षोभिणी नैति पार्श्वं
चेतस्त्वं तस्य शश्वच्चरणकमलयोर्भृङ्गतां याहि विष्णोः ॥
विवाहीकृतविद्वेषनिवहो रुग्मिणीशितुः ।
विवाहो मम हर्षाय भवताद्भवतापहः ॥

तरणिमिति । **मदनवशाः** कामुकाः **मानिनो**ऽहंकारिणो **महीशाः** राजानः **विषमो**ऽसह्यो **मृगदृशी** रुग्मिणी तस्याः **वियोगः** विरहः स एव **रोगः** तस्मात् तस्याः **पुरस्तात् स्वतनुं** स्वशरीरम् । जात्येकवचनम् । **उज्झितुं** त्यक्तुं **उद्युक्ता इव** । यथा स्निग्धपुरुषः प्रेयसीवियोगे सति शरीरं त्यजति । तथेति युद्धे म्रियमाणानामयमपहासः। **तं** कृष्णमन्वधावन् । किं कमिव । [1]**तमस्तरणिमिव** ॥ १ ॥

**ये भैष्म्याः परिरम्भणं चकमिरे तेषां भुजांश्चिच्छिदु-**
**र्ये वा तन्मुखचन्द्रचुम्बनरुचिं तेषां शिरांसि द्विषाम् ।**
**ये तल्पे शयनं तया सह खला लोकाम्बया सङ्गरे**
**प्रेतैः सार्धमशीशयन् हरिभटास्तान् दुर्मदान् सायकैः ॥२॥**

**व्या :** युद्धे स्वभावतः कृतहस्तच्छेदादीनां यथापराधं विभजन्नुत्प्रेक्षते । य इति । **ये राजानो भैष्म्याः परिरम्भणम्** आलिङ्गनं **चकमिरे** ऐच्छन् । **हरिभटाः** श्रीकृष्णभटाः **सङ्गरे** युद्धे **तेषां भुजान् चिच्छिदुः** । परिरंभणस्य

१ 'भानुं यथा तम उपेत्य सुयोगकामम्' - म.भा.ता.नि. (५/२५)
तदा मदान्धाः परिववृरेनं चमूभिरन्ये चतुरङ्गिणीभिः ।
यथा पतङ्गा ज्वलनं ज्वलन्तं तमःसमूहस्तरणिं यथा वा ॥ - इतिवत् (११/५१)

हस्तापराधत्वादिति भावः । **ये वा राजानः** तस्याः **मुखचन्द्रचुम्बनरुचिं** चकमिरे **तेषां शिरांसि** चिच्छिदुः। चुम्बनस्य मुखापराधत्वादिति भावः । ये **खलाः लोकाम्बया** इन्दिरया । 'इन्दिरा लोकमाता मा' इत्यमरः । **तया** रुग्मिण्या सह **तल्पे** शय्यायां **शयनं** [१]चकमिरे । **दुर्मदान् तान् सायकैः** शरैः **प्रेतैः** कुणपैः **सार्धं अशीशयन्** शयनं कारयामासुः। उत्प्रेक्षालङ्कारः ॥ २ ॥

---

१ परदारदृशिः प्रोक्ता क्षुद्रपातकसञ्ज्ञिता ।
उपपातकं तद्गतिश्च वर्णबाह्येषु पातकम् ।
महापातकसञ्ज्ञं तु पित्रादेर्दारधर्षणम् ।
दारदृष्टिः स्वोत्तमानां मानुषाणां स्वभावतः ।
सुमहापातकं प्रोक्तं तद्गतिः सुमहत्तरः ।
ऋषिदारेषु मनसो गतिरेव ततोऽधिका ।
देवदाराभिकामानां सङ्गिसङ्गस्ततोऽधिकः ।
किमु विष्णोस्ततो योषित्सङ्गस्य व्यत्ययस्थितेः ।
न समं पातकं क्वापि न हि स्वस्त्र्यभिकामतः ।
अवज्ञाता माधवादेस्तस्मात् तं दूरतस्त्यजेत् ।
मानुषेषु तु दुःखित्वं क्षुद्रपापफलं स्मृतम् ।
पापात्तु वर्णबाह्यत्वं तिर्यग्योनिगतिस्तथा ।
सहस्रवर्षनरकं क्षुद्रपातकजं फलम् ।
उपपातकतश्चापि नरकं युगमात्रकम् ।
चतुर्युगावसानं तु पातकस्य फलं स्मृतम् ।
महापातकजन्यं च कल्पावधि समीरितम् ।
सुमहापातकाच्चापि यावद्ब्रह्मलयो भवेत् ।
तत्पराणां पातकानां फलमन्धन्तमः स्मृतम् ।
अधोऽधो दुःखबहुलं विष्णुदाराभिमर्शनात् ।
वधादपि हि दाराणां धर्षणं कोपकारणम् ।
तस्माद्देव्यः सदा वन्द्या अग्निवन्नाभिकामतः' इति धर्मतत्त्वे ॥
- भागवततात्पर्यनिर्णय (११/१४/३०)

धर्मो गुणोत्तमानां तु स्मृत्यैवान्धं तमो व्रजेत् ।
गुणसर्वस्वहानिः स्यादुत्तरोत्तरतोऽत्र च ।
अधोऽधोऽधिकदोषः स्यात् स्त्रीणामन्यत्र मध्यतः ॥ - म.भा.ता.नि.(२९/५४)

**साहाय्यं क्व चकार शम्भुदयिता तद्वैरिमातुः कथं**
**देव्याः श्रीपतिविप्रयोगमहरत् तद्विप्रयोगोऽपि वा ।**
**किन्तु श्रीपतिरेव तां स्वविरहायोग्यां समव्यापिनीं**
**निन्येऽश्लेषकथां खलैः सह मुहुः शिक्षन् स रक्षन् श्रुतिम् ॥३॥**

**व्या :** कटाक्षवीक्षणमात्रेण सर्वजगत्सर्जनसमर्थायाः श्रीरुग्मिण्याः पार्वतीप्रार्थनया विप्रदौत्येन च श्रीकृष्णसमागमो जात इत्यत्रास्वरसं कौशल्येन प्रदर्शयन्नाह । **साहाय्यमिति** । शम्भोः शिवस्य दयिता पार्वती । तस्य शिवस्य वैरी कामः तन्मातुः । रुग्मिण्याः **साहाय्यं** सहायत्वं **क्व चकार** । स्वभर्तुरनिष्टं भार्या साधयतीत्येतदयुक्तमिति भावः । **देव्याः** रुग्मिण्याः श्रीपतिवियोगं श्रीकृष्णवियोगं तस्य श्रीकृष्णस्य **विप्रस्य** च **योगः** समागमः **तद्विप्रयोगोऽपि वा** कथम् अहरत् । विप्रयोगे सति विप्रयोग एव स्यात् । न तु तन्नाश इति शब्दश्लेषमूलकोऽयमस्वरसः । **किन्तु अश्लेषकथां** रुग्मिणीकृष्णवियोगकथां **खलैः सह मुहुः शिक्षन्** । खलान् रुग्मिण्या वियोगवार्तां च संहरन्नित्यर्थः । **श्रुतिम्** रुग्मिणीकृष्णयोर्नित्यसमागमप्रतिपादिकां **रक्षन्** सः **श्रीपतिरेव** कृष्ण एव **समव्यापिनीं** ''यत्र कृष्णस्तत्र सा'' ''यत्र सा तत्र स''[१] इति समव्याप्तिमतीम्। अत एव स्वविरहायोग्याम् । तां रुग्मिणीं निन्ये ॥ ३ ॥

**रक्ताम्भोनिचये गजाद्रिनिकरैराबध्य सेतुं हतैः**
**सुग्रीवोद्धतसैन्यमात्रबलवान् श्रीपूर्वरामो[२] युधि ।**
**प्राचीनावनिजां निनाय स निजामव्यग्रवक्त्राम्बुजां**
**जित्वा प्राक्तनरावणं हतबलं तल्लग्नचित्तं खलम् ॥ ४ ॥**

---

१ समना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ - इति ब्रह्मसूत्रम् (४/२/७)
देशतः कालतश्च व्याप्त्या समो ना परमपुरुषो यस्याः सा समना । - इति तद्भाष्यम् ।
देशतः कालतश्चैव समा प्रकृतिरीश्वरे ॥ - इति ब्रह्मसूत्रभाष्ये (४/२/१०)

२ 'पूर्वभीमाज्ञया ते' (वायुस्तुतौ) इतिवत् ।

**व्या : रक्तेति** । 'तुरगाः शैब्यसुग्रीवमेघपुष्पबलाहकाः' इति वचनात् । सुग्रीवः शैब्य इति रथाश्वौ । सुग्रीवश्चोद्धतसैन्यश्च सुग्रीवोद्धतसैन्यौ केवलौ तौ तन्मात्रं तदेव बलं तदस्यास्तीति तथोक्तः द्वावेवाश्वौ रथाग्रबद्धौ पुरतः गमनायापेक्षितौ पार्ष्णिनिबद्धमेघपुष्पबलाहकाख्याश्वद्वयमप्यनपेक्षितं सैन्यं तु सुतरामिति असहायशूर इत्यभिप्रेतम् । अन्यत्र **सुग्रीवस्य** कपेः **उद्धतं सैन्यं** सेना तदेव बलमस्यास्तीति तथोक्तः । कपिकटकसहाय इत्यर्थः । **श्रीपूर्वरामः** श्रिया सहितः पूर्वरामः श्रीकृष्णः । **युधि** हतैः **गजाख्याद्रिनिकरैः** । रुग्मिणः गजपतित्वात् गजा एव बहवो हता इति भावः । **रक्तांभोनिचये** शोणितसमुद्रे सेतुमाबध्य आगतानां गजानां क्रमेणैव हिंसनात् तद्देहानां सेतुत्वमिति भावः । **तल्लग्नचित्तं** पूर्वसीतात्मिकायां रुग्मिण्यां लग्नचित्तं **हतवलं** निहतसैन्यं **प्राक्तनरावणम्** । **खलं** दुष्टम् । शिशुपालं **जित्वा निजां** स्वीयाम् । **अव्यग्रवक्त्राम्वुजां** प्रसन्नमुखीमित्यर्थः **प्राचीनावनिजां** भूमिजाम् । सीतारूपां रुग्मिणीं निन्ये **निनाय** ॥ ४ ॥

**अहयीदहयी कश्चिदनंसीदपरोऽच्युतम् ।**
**नाक्रमीदपरो विद्धो विक्रमार्कोदये हरेः ॥ ५ ॥**

**व्या : अहयीदिति** । **हरेः** श्रीकृष्णस्य **विक्रमार्कोदये** सति पराक्रमसूर्योदये सति । कश्चित् हयोऽस्यास्तीति **हयी** । स न भवतीत्यहयी सन् **अहयीत्** गतवान् । तुरगारूढः तुरगादवरुह्य पलायितवानित्यर्थः । हयगतावित्यस्माल्लुङि रूपम् । यान्तत्वाद्वृद्ध्यभावः । मध्यमजीवस्वभावोऽयम् । **अपरो** भटः **अच्युतं** श्रीकृष्णम् अनंसीत् । अनमत् । 'णम्प्रह्वत्वे शब्दे च' इत्यस्माल्लुङि रूपम् । उत्तमस्वभावोऽयम् । **अपरः** शरैः **विद्धः** सन् नाक्रमीत् पादविक्षेपमपि नाकरोत् । मूर्च्छया एकपदमपि विक्षेप्तुम् असमर्थोऽभूदित्यर्थः । क्रमु पादविक्षेप इत्यस्माल्लुङि रूपम् । अधमप्रकृतिरियम् ॥ ५ ॥

**हुत्वा शत्रुसमूहमुन्मुखशिखस्वीयप्रतापानले**
**कृत्वा रक्तरसार्द्रतामपि शरभ्राजद्दृतिश्रेणिभिः ।**
**स्वस्थप्रेषितपुष्पलाजनिकराकीर्णः क्षितीशार्पितै-**
**र्वित्तैस्तत्समयोचितैः सह निजां निन्ये निसर्गप्रियाम् ॥६॥**

**व्या :** विवाहप्रक्रियया युद्धं वर्णयति । हुत्वेति । श्रीकृष्णः । उन्मुखी शिखा यस्य स **उन्मुखशिखः** । प्रतिक्षणमेधमान इत्यर्थः । स चासौ **स्वीयप्रतापानिलश्च** तस्मिन् **शत्रुसमूहं** समितस्थानीयं वैरिनिचयं **हुत्वा** । **शरा** एव **भ्राजद्दृतयः** वसन्तोत्सवजलसेकोचितचर्मशृङ्गादिकृतपात्रविशेषाः । तासां **श्रेणिभिः** रक्तरसेनार्द्राः तेषां भावो **रक्तरसार्द्रता** ताम् । **कृत्वा** । यथा विवाहोत्सवे कुङ्कुमोदकसेकेन रक्तता भवति तथेत्यर्थः । **स्वस्थाः** स्वर्गस्थाः । 'स्वरव्ययं स्वर्गनाके' इत्यमरः । देवाः । तैः **प्रेषितपुष्पाण्येव लाजनिकरा**स्तैराकीर्णः सन् क्षितीशार्पितैः तत्समयोचितैः विवाहसमयोचितैः पलायितरिपुसेनालब्धगजादिवित्तैः **सह** **निसर्गप्रियां** स्वभावतः प्रीतिविषयां **निजां** भार्यां **निन्ये** नीतवान् ॥ ६ ॥

**कृष्णे स्वां दयितां नयत्युरुबले तद्बन्धुयोग्यां दशा-**
**मापन्ना इव भूभुजोऽन्तकपुरीमन्वागता वै गताः ।**
**अन्ये खिन्नमुखा दृगम्बु ससृजुः केचिच्च मूर्च्छां श्रिता-**
**श्चैद्याद्या मलिनानना गतगिरश्चिन्तां दुरन्तां ययुः ॥ ७ ॥**

**व्या :** कृष्णेति । **उरुबले श्रीकृष्णे स्वां दयितां** रुग्मिणीं **नयति** सति **भूभुजः** **तद्बन्धूनां** रुग्मिणीबन्धूनां **योग्याम्** उचितां **दशाम्** अवस्था**मापन्ना इव** प्राप्ता इव **अन्वागताः** रुग्मिणीमन्वागताः सन्तो**ऽन्तकपुरीं गता वै** ययुर्हि । यथा सुहृदोऽत्यन्तबन्धुवियोगे सति मरणं प्राप्नुवन्ति तथेत्यर्थः । **अन्ये खिन्नमुखाः** सन्तः **दृगम्बु** नेत्रजलं **ससृजुः** । पराभवजनितदुःखेनाश्रूण्यमुञ्चन् अश्रुपातोऽपि बन्धुवियोगोचितः । **केचिच्च मूर्च्छां** शस्त्रघातवशात् मूर्च्छां **श्रिताः** । **चैद्याद्याः**

**मलिनाननाः** कान्तिरहितमुखाः **गतगिरः** सन्तो **दुरन्तां चिन्तां ययुः** मूर्च्छावक्त्रमालिन्यव्यवहारासामर्थ्यादिकं बन्धुष्वपि साधारणम् ॥ ७ ॥

**न कृष्णो नापि तत्सेना जघान रिपुवाहिनीम् ।**
**जननीद्रोहकृच्चैद्यपक्षपातेन सा हता ॥ ८ ॥**

**व्या :** नेति । **श्रीकृष्णः रिपुवाहिनीं** रिपुसेनां **न जघान** । **श्रीकृष्णसेनाऽपि न जघान**। किन्तु **सा सेना जनन्याः** लोकमातुः रुग्मिण्याः **द्रोहं** पाणिग्रहणोद्योगरूपमपराधं करोतीति स तथोक्तः । स चासौ **चैद्यश्च** तत्पक्षपातेन **हता** मृता[१] ॥ ८ ॥

**रुग्मी स रुग्मीव यदा विरोधं चक्रे तदा चक्रधरश्च रौग्मम् ।**
**छित्वा धनुस्तस्य मुहुर्भविष्यदुद्योगमुत्थापयति स्म देवः ॥९॥**

**व्या : रुग्मीति** । रुग्मिणीभ्राता **रुग्मी यदा रुग्मीव** धनवानिव । यथा धनमदान्धो महता सह विरुद्ध्यति तथा **विरोधं** कृतवान् । **तदा चक्रधरः देवः** श्रीकृष्णः **रौग्मं** सुवर्णखचितं **तस्य** रुग्मिणो **धनुः मुहुः** वारं वारं **छित्वा तस्य भविष्यदुद्योगम्** अक्षय्यधनुःप्राप्त्यर्थं [२]शिवं प्रति तपःकरणरूपं **प्रयत्नमुत्थापयति**

---

१ तमोद्वारं योषितां सङ्गिसङ्गम् - भागवते (५/५/२)
नासतो विद्यतेऽभावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ - गीता (२/१६)
सतां कृत्वा तु सन्तोषं वरं देहीति नो वदेत् ।
सतां कृत्वा तु सन्तापं शापं देहीति नो वदेत् ॥ - श्रीसत्यधर्मतीर्थकृतसूक्तिः

२ तत्र रुग्मी न युयुधे सहदेवेन वीर्यवान् ।
जितः कृष्णेन पूर्वं तु शर्वादाप धनुर्वरम् ॥
तपसा तोषितात् कृष्णादन्यानेवामुनाऽखिलान् ।
विजेष्यसि यदा कृष्णविरोधस्ते तदा धनुः ।
मामेष्यतीति तेनोक्तो न व्यरुध्यत केशवे ॥ - म.भा.ता.नि.(२१/२१०,२११)

**स्म** । उत्पादयति स्म । **मुहुः धनुः**शतच्छेदे सति अक्षय्यधनुःप्राप्त्यर्थं तपःकरणे-नानुभूतबहुतरक्लेशम् एनं पश्चात् [१]मारयिष्यामीति बुद्ध्या धनुरेवाच्छिनदिति भावः ॥ ९ ॥

**अचीक्लृपन्मुण्डितमूर्धजं तं शचीपतिस्तुत्यकृतिर्मुरारिः ।**
**उपेक्ष्य यद्गेहमगाद्धि लक्ष्मीस्तदेतदस्यानुगुणं खलस्य ॥१०॥**

**व्या :** अचीक्लृपदिति । शचीपतिस्तुत्यकृतिः इन्द्रस्तुत्यकर्मा । **मुरारिः** श्रीकृष्णः । **तं** रुग्मिणं **मुण्डितमूर्धजं** मुण्डितकेशम् **अचीक्लृपत्** कृतवान् । स्वार्थे कर्तरि लिट् । **यद्गेहं** यस्य रुग्मिणो गृहमुपेक्ष्य **लक्ष्मीः** रुग्मिणीरूपा **अगाद्धि**। **अस्य खलस्य** रुग्मिणः तदेतत् शिरोवपनं **अनुगुणं** हि । गतश्रियो हि सन्न्यासादिना मुण्डितकेशा भवन्तीत्यर्थः ॥ १० ॥

**सहस्रसङ्ख्यावनिपालभङ्गसमुत्थभास्वज्जयकामिनीभिः ।**
**सहात्मदासीभिरनन्यकान्ता जगाम सा चञ्चललोचनान्ता ॥११॥**

**व्या :** सहस्रेति । **चञ्चललोचनान्ता** चञ्चलापाङ्गी । अनेन नवोढोचितलज्जा सूच्यते । **अनन्यकान्ता** श्रीकृष्णैकपत्नी **सा** रुग्मिणी **आत्मदासीभिः** स्वकिङ्करीभिः सह । **सहस्रसङ्ख्यावनिपाला**नां **भङ्गे**न **समुत्थि**ताः **भास्वज्जय-कामिन्यः** ताभिः । आत्मदासीभिरित्यनेन श्रीकटाक्षजयवताम् ईदृश्यः कामिन्यः स्वयमेवायास्यन्तीत्यर्थोऽवगम्यते । ''यदपाङ्गलेशमाश्रित्य विश्वविजयं विसृज-त्यचिन्त्या श्रीः''[२] इति वचनात् । **सह** सार्धं **जगाम** । यथा राजकुमारी दासीसहस्रेण सह गच्छति तथेति भावः ॥ ११ ॥

**तद्योधा जयकामिनीजनयुता गर्जन्ति धैर्योर्जिताः**
**युद्धाप्ता वडवा निरीक्ष्य तुरगा हेषां मुहुस्तन्वते ।**

---

१ बलरामेण इति शेषः ।

२ द्वादशस्तोत्रम् (७/२)

**हस्तीन्द्राः करिणीः समेत्य परितः कुर्वन्त्यहो बृंहितं**
**भक्ताभीष्टकरो हरिर्ननु पुरा स्वीयान् सजायान् व्यधात् ॥१२॥**

**व्या :** तद्योधेति। धैर्योर्जिताः तस्य कृष्णस्य योधाः भटाः जयकामिनीजनयुताः सन्तो गर्जन्ति । तुरगाः युद्धाप्ताः युद्धे प्राप्ताः वडवाः स्वस्त्रीरूपाः वाऽमीः निरीक्ष्य ह्वेषां तन्वते कुर्वन्ति। हस्तीन्द्राः करीन्द्राः युद्धाप्ताः करिणीः करिस्त्रियः करिण्यः ताः समेत्य परितो बृंहितं गर्जितं कुर्वन्ति । 'बृंहितं करिगर्जितम्' इत्यमरः । भक्ताभीष्टकरो हरिः श्रीकृष्णः पुरा स्वविवाहात् पूर्वमेव स्वीयान् स्वकीयान् भटादीन् सजायान् ननु नूनम्। व्यधात् अहो आश्चर्यम् ॥

**अलङ्कृतां निजपुरीं जलजायतलोचनः ।**
**हयहस्तिरथोपेतः प्रियया सहितोऽविशत् ॥ १३ ॥**

**व्या :** अलङ्कृतमिति । हयहस्तिरथोपेतः । प्रियया रुग्मिण्या सहितः । जलजायतलोचनः श्रीकृष्णः अलङ्कृतां निजपुरीम् अविशत् ॥ १३ ॥

**करं जिघृक्षुर्वैदर्भ्याः शरण्योऽथ यथाविधि ।**
**प्रियया बन्धुभिः सार्धं प्रययौ मूलमाधवम् ॥ १४ ॥**

**व्या :** करमिति। अथानन्तरं यथाविधि वैदर्भ्याः भैष्म्याः करं पाणिं जिघृक्षुः गृहीतुमिच्छुः शरण्यः शरणप्रदः श्रीकृष्णः प्रियया रुग्मिण्या बन्धुभिश्च सार्धं मूलमाधवाख्यं द्वारकोपवनं प्रति ययौ । मूलमाधवाख्यक्षेत्रे रुग्मिणीविवाहो जात इति द्वारवतीकल्पोक्तानुसारेणेदमुदितम् ॥ १४ ॥

**गच्छन्तमास्थापयतीव कृष्णं द्वारावती तत्कृतरम्यशोभा ।**
**कान्त्योल्लसन्त्योभयभागहेम्नां द्वार्यश्चलेनाभिमुखे मुरारेः ॥१५॥**

**व्या :** गच्छन्तमिति । तत्कृतरम्यशोभा श्रीकृष्णावस्थानकृतमनोहर-कान्तिः। द्वारवती मुरारेः अभिमुखे अग्र इत्यर्थः। उल्लसन्त्या द्वार्युभयभागहेम्नां

रत्नखचितद्वारोभयपार्श्वस्थितहेम्नां **कान्त्या अञ्चलेन** कान्त्याख्यस्वचित्रवसनाञ्चलेनेत्यर्थः । **गच्छन्तं श्रीकृष्णं स्थापयतीव** यथा प्रिया गच्छन्तं प्रियं चैलाञ्चलेन बध्वा गन्तुं न मुञ्चति तथेत्यर्थः ।। १५ ।।

**कृष्णे बलाद्व्रजति सा द्रवदिन्दुकान्तै-**
**स्तन्मन्दहासनवचन्द्रिकयाऽश्रुधाराम् ।**
**तत्सैन्यसम्भ्रमसमुत्थरजोभिरास्य-**
**मालिन्यमुद्गतवचा रभसा बभार ।। १६ ।।**

**व्या : कृष्ण इति ।** श्रीकृष्णे **बलाद् व्रजति** सति **सा** पुरी तस्य **मन्दहासनवचन्द्रिकया** मन्दस्मिताख्यनूतनज्योत्स्नया **द्रवद्भिः** जलधारां मुञ्चद्भिः **इन्दुकान्तैः** चन्द्रकान्तैः **अश्रुधारां** बभार । **उद्गतवचा रभसा** सर्वेषां निर्गमनात् उद्गतवचनव्यापारा सतीव **तत्सैन्यस्य सम्भ्रमेण** तस्य इतस्ततो धावनेन **समुत्थरजोभिः** उद्भूतधूलिभिः **आस्यमालिन्यम्** आस्यस्थानीयगोपुरप्राकारादौ मालिन्यं **बभार** । अनेन तत्काले [१]वियुक्तस्त्रीस्वभावो ध्वन्यते ।। १६ ।।

**भर्तुस्ततः प्रतिकृतिं स्फुरदात्मवप्रलग्नोच्चरत्ननिकरेषु निधाय दीना ।**
**तस्थाविवाथ फलिताच्युतभूषणेषु विश्लेषशङ्किहृदयाऽनुययाविवेशम् ।।**

**व्या : भर्तुरिति ।** ततः अनन्तरं सा द्वारवती **दीना** सती **स्फुरन्ती । आत्मवप्रलग्नान्युच्चरत्नानि** तेषां **निकरेषु भर्तुः** श्रीकृष्णस्य **प्रतिकृतिं** प्रतिबिम्बं **निधाय** तस्थाविव । तद्गमनेऽपि तत्प्रतिकृतिमालिङ्ग्य कथञ्चित्कालं नेष्यामीति स्थितेवेत्यर्थः । **अथाच्युतभूषणेषु** रत्नखचितभूषणेषु **फलिता** प्रतिफलिता सा पुरी **विश्लेषशङ्किहृदया** सती **ईशं** कान्तं श्रीकृष्णम् **अनुययाविव** रूपान्तरेणानुजगामेव ।। १७ ।।

---

१ अयोध्या नाम नगरी भाति साध्वी वधूरिव ।
वनं गतस्यापि तस्य पादुके याऽकरोत् पतिम् ।। (तीर्थप्रबन्धे - २/३५) इतिवत् ।

**चलत्पताकानिलनिर्मलीकृते रथौघचक्रावलिभिः समीकृते ।**
**सुरालिमुक्तामलपुष्पलाञ्छिते गजेन्द्रदानाम्बुकदम्बसिञ्चिते ॥१८॥**

**व्या :** कृष्णस्य प्रयाणप्रकारं वर्णयन् मार्गे पुञ्जीभूयस्थितसेनालङ्कारं वर्णयति – चलदिति । मन्मथकोटिरूपः कृष्णः **चलत्पताकानिलेन** शुष्कतृणपटखण्डापगमेन सम्मार्जनेनैव **निर्मलीकृते रथौघचक्रावलिभिः समीकृते सुरालिमुक्तामलपुष्पलाञ्छिते गजेन्द्राणां दानाम्बुकदम्बेन** मदजलसमूहेन सिञ्चितराजमार्गे मन्दं यथा भवति तथा ययावित्युत्तरश्लोकेनान्वयः ॥ १८ ॥

**वराश्ववारोच्चयसूचितैर्हयैरितस्ततो मण्डलधावनोद्यतैः ।**
**परिस्फुरद्भूषणचामरोज्ज्वलैर्विराजिते ह्रेषितभूषिताननैः ॥१९॥**

**व्या : वराश्वेति । वराश्ववाराः** उत्तमसादिनः तेषामुच्चयेन **सूचितैरितस्ततः मण्डलधावनोद्यतैः** मण्डलाकारेण धावने उद्युक्तैः । **परिस्फुरद्भूषणचामरोज्ज्वलैः ह्रेषितेन** शब्देन **भूषितानि** आननानि एषां तैः हयैः **विराजिते** राजमार्गे ययावित्यन्वयः ॥ १९ ॥

**पार्श्वद्वयस्थेभकदम्बरञ्जिकुम्भैः समेते कलशोपमानैः ।**
**अन्योन्यसक्तोन्मुखकुञ्चिताग्रहस्तैश्च नीलोत्पलतोरणाभैः ॥२०॥**

**व्या : पार्श्वद्वयेति । कलशोपमानैः** पूर्णकुम्भसदृशैः **पार्श्वद्वयस्थेभकदम्बानां** राजनिर्गमनावसरत्वात् पार्श्वद्वये व्यूहीकृत्य स्थितगजसमूहानां **रञ्जिकुम्भैः** धातुरञ्जितकुम्भैः समेते । **नीलोत्पलतोरणाभैः अन्योन्यसक्ताः** सम्बद्धाः **उन्मुखा** ऊर्ध्वमुखाः **कुञ्चिताग्राः** ईषदवनताग्राः शुण्डाः तैः **समेते**। राजोपचारार्थं यन्तार एव गजहस्तानां उन्मुखतां प्रापयन्तीति प्रसिद्धम् ॥ २० ॥

**विचित्ररत्नोज्ज्वलभूषणौघैः पदाम्बुजैः प्राहुणिकाङ्गनानाम् ।**
**रङ्गप्रभां मुष्णाति राजमार्गे मन्दं ययौ मन्मथकोटिरूपः ॥२१॥**

विचित्रेति । **विचित्ररत्नैः** पद्मरागइन्द्रनीलमौक्तिकवैडूर्यादिरत्नैः **उज्ज्वलाः** प्रकाशमानाः **भूषणौघाः** येषां तैः । **प्राहुणिकाङ्गनानां** विवाहार्थमागत-बन्धुवधूनां **पदाम्बुजैः रङ्गप्रभां** नीलपीतरक्तशुभ्रादिवर्णैः कृतरङ्गकान्तिं **मुष्णाति** अपहरति । **राजमार्गे मन्मथकोटिरूपः** कृष्णः **मन्दं ययौ** ।। २१ ।।

**मध्यस्थापितमाधवा स्मितलसत्फेना चलच्चामर-**
**व्रातोर्मिर्विततातपत्रकमठा हस्त्यश्वपत्त्यावृता ।**
**वीणावेणुनिनादगर्जितयुता वार्धेः समा सा चमू-**
**राच्छन्नानिमिषान्तरागतमहीपालौघसेनासरित् ।। २२ ।।**

**व्या : मध्येति । मध्ये स्थापितो माधवो** यया सा । समुद्रपक्षे समुद्रशायित्वात् श्रीकृष्णस्य वार्धिरपि मध्यस्थापितमाधवः । **स्मितमेव लसत्फेनो** यस्या सा चलन्ति चामरव्रातान्येव ऊर्मयो यस्याः सा **हस्त्यश्वपत्त्यावृता** हस्त्यश्वपत्तिभिरावृता । विततान्यातपत्राण्येव **कमठाः** कूर्माः यस्याः सा । 'यावन्तो दृश्यन्ते नरकरितुरगादयः स्थले जीवाः । तावन्तः सलिलेष्वपि नरकरिपूर्वास्तेऽपि विज्ञेयाः' इति वचनात् । समुद्रस्य हस्त्यश्वपत्त्याद्यावृतत्वं द्रष्टव्यम् । **वीणावेणुनिनाद** एव **गर्जितं** तेन **युता** । **आच्छन्नाः** मनुष्यरूपेणाच्छन्नाः अनिमिषा देवा यस्यां सा । समुद्रोऽप्याच्छन्नमीनः । 'सुरमत्स्यावनिमिषौ' इत्यमरः । अन्तरा मध्ये **आगता महीपालौघसेनैव सरित्** यस्याः सा । **वार्धेः** समुद्रस्य **समा चमूः** श्रीकृष्णसेना मन्दं ययौ ।। २२।।

**लक्ष्मीशवाहरथहस्तिभटौघवेगा-**
**ज्जातं व्रजत् त्रिदिवमात्तरयं रजस्तत् ।**
**कृष्णानुषङ्गिचिदचेतनसङ्गभाजो**
**वक्ति त्रिविष्टपगतिं गतमेधसोऽपि ।।२३।।**

**व्या :** लक्ष्मीशेति । **लक्ष्मीशस्य** श्रीकृष्णस्य **वाहरथहस्तिभटौघानां वेगात् जातं त्रिदिवं** स्वर्गं **व्रजत्** स्वर्गपर्यन्तमूर्ध्वं गच्छदित्यर्थः । **आत्तरयम्** आत्तवेगमित्यर्थः । **तत् रजः** । कृष्णानुषङ्गिणौ चिदचेतनौ सज्जनसालिग्रामौ तयोः **सङ्गं** सङ्गमं **भजन्** स तथोक्तः तस्य । **गतमेधसोऽपि** ज्ञानरहितस्यापि **त्रिविष्टपगतिं वक्ति** । हस्त्यश्वपदातीनां चेतनरूपत्वात् रथस्याचेतनत्वात् उभयोरपि श्रीकृष्णसेनाङ्गत्वेन तदनुषङ्गित्वादुत्पन्नरजसो जडत्वेन बुद्धिरहितत्वाच्चैवं निदर्शनम् ॥ २३ ॥

**विचित्ररत्नद्युतिरङ्गकान्त्या सुमौक्तिकौघाक्षतलाजराज्या ।**
**मन्दानिलाख्यव्यजनैः स्वतीरे सिन्धुः स्वजामातरमर्चतीव ॥२४॥**

**व्या :** विचित्रेति । **सिन्धुः** समुद्रः **स्वतीरे विचित्ररत्नद्युतिरेव रङ्गकान्तिः** तया **सुमौक्तिकौघा** एव **अक्षताश्च** लाजाश्च तेषां राजिः तया । **मन्दानिलाख्यव्यजनैरित्यनेन** प्रतिपदं मन्दानिलागमः सूच्यते । **जामातरं** स्वदुहितृभर्तारं श्रीकृष्णम् अञ्चतीव पूजयतीव ॥ २४ ॥

**तुङ्गैस्तरङ्गैर्धृतशङ्खचक्रैः कीर्णं पयः फेनसितं वितन्वन् ।**
**हस्तैर्मुरारेर्व्रजतोऽधिमार्गं वस्त्राणि विस्तारयतीव वार्धिः ॥२५॥**

**व्या :** तुङ्गैः इति । **तुङ्गैः धृताः शङ्खाः** शङ्खमच्छाः चक्राणि चक्राङ्काश्च यैस्ते तथोक्ताः तैः । द्वारवत्याः समीपे समुद्रात् शङ्खचक्राङ्कयोरुत्पत्तेरिदमुदितम्[१] । **शङ्खचक्र**धरैरिति वैष्णवधर्मो द्योत्यते । तरङ्गैः **फेनसितं** फेनेन शुभ्रं **पयो** जलं **कीर्णं** तीरे विस्तृतं **वितन्वन्** फेनजलं ऊर्मिभिः तीरे प्रसार्य पुनःपुनर्निवर्तयन्नित्यर्थः । **वार्धिः** समुद्रः **व्रजतो** गच्छतो **मुरारेः अधिमार्गं** मार्गे मार्गे **वस्त्राणि** [२]**हस्तैर्विस्तारयतीव** । यथा महाप्रभोर्गच्छतः उपचारार्थं अधिमार्गं वस्त्राणि विस्तारयन्ति तद्वदाचरतीति भावः ॥ २५ ॥

---

१ चक्रतीर्थस्य महिमा वर्णितुं केन शक्यते ।
यच्छिलामपि सङ्गेन विधत्ते विश्ववन्दिताम् ॥ - इति तीर्थप्रबन्धे । (१/९५)

२ मा मैनं भुवनगुरुं विनिन्दतेत्थं निर्भर्त्स्याभ्यपतदिवोत्तरङ्गहस्तः ।
सङ्क्षोभी घनघनघोषघोरवेषः संरम्भी खलदमनाय सिन्धुराजः ॥- म.वि (१६/१३)

**नीलाश्मद्युतिपत्रशोभिभिरधोव्यालम्बिपुष्पस्फुर-**
**न्मुक्तादामभिरुल्लसत्किसलयश्रेणीवितानोज्ज्वलैः ।**
**सिन्धुप्रेषितरत्नसंहिततलैर्वृक्षैः सुवर्णोन्नत-**
**स्तम्भाङ्गैर्मणिमण्डपानुकृतिभिर्युक्तं समानायतैः ॥२६॥**

**व्या :** नीलाश्मद्युतीति । नीलाश्मनामिन्द्रनीलरत्नानां द्युतिरिव द्युतिर्येषां तैः पत्रैः पर्णैः शोभन्त इति तैः अधोव्यालम्बीनि पुष्पाण्येव स्फुरन्मुक्तादामानि येषां तैः उल्लसत्किसलयानां शोभमानपल्लवानां श्रेण्येव वितानं तेन उज्ज्वलैः। सिन्धुना समुद्रेण प्रेषितैः रत्नैः संहितानि खचितानि तलानि येषां तैः । सुवर्णोन्नतस्तंभवत् अङ्गानि प्रकाण्डाः येषां तैः समानायतैः समानप्रमाणैः मणिमण्डपानुकृतिभिः रत्नमण्डपानुकृतिभिः । वृक्षैर्युक्तं वनं अविशदित्यु-त्तरेणान्वयः ॥ २६ ॥

**विष्वग्लम्बिफलोच्चयं कलपिकैरारब्धगीतं वनं**
**गर्जद्वारिधिमर्दलं शुकवचस्तोत्रं स्वतन्वीक्षया ।**
**नृत्यत्केकिनटीमनोज्ञमलिगीर्वीणानिनादं पत-**
**त्पुष्पौघाक्षतलाजवृन्दमविशन्माङ्गल्यवेश्मोपमम् ॥ २७ ॥**

**व्या :** विष्वगिति । अयं श्रीकृष्णः विष्वक् समन्तात् लम्बिनः फलोच्चयाः यस्मिन् तत् तथोक्तं कलपिकैर्मनोहरकोकिलैरारब्धगीतम् । गर्जद्वारिधिरेव मर्दलं वाद्यविशेषः यस्मिन् तत् । शुकवचस्तोत्रम् । स्वतनोः नीलमेघोपमस्य शरीरस्येक्षया दर्शनेन नृत्यन्तः केकिन एव मयूरा एव नट्यः नर्तक्यः ताभिर्मनोज्ञमलीनां भ्रमराणां गिर एव वीणानिनादो यस्मिन् तत् । पताकाचलनोत्पन्नवायुवशात् पततां पुष्पाणाम् ओघ एव अक्षतलाजवृन्दं यस्मिन् तत् माङ्गल्यवेश्मोपमं विवाहमण्टपोपमम् । मूलमाधवं तदाख्यं वनम् अविशत् ॥ २७ ॥

**यदिन्दिरायास्तदभूद्धि मूलं प्रियाङ्गसंश्लेषमहोत्सवश्रियः ।**
**ततस्तदार्याः प्रवदन्ति नूनं स्थलं स्थलज्ञा भुवि मूलमाधवम् ॥२८॥**

**व्या :** यदिति । यत् यस्मात् कारणात् तत् वनं इन्दिरायाः रुग्मिण्याः प्रियस्याङ्गसंश्लेष एव महोत्सवः तस्य श्रीः सम्पत् तस्य मूलं कारणम् अभूद्धि । ततः कारणात् स्थलवाचकशब्दप्रवृत्तिनिमित्तज्ञाः आर्याः भुवि तत्स्थलं मूलमाधवं प्रवदन्ति । मायाः लक्ष्म्याः धवस्य पत्युः मूलं मूलमाधवमिति व्युत्पत्तेरिति भावः ॥ २८ ॥

**आसन् नृपाः केचन भीष्मपुत्र्याः पक्षे सदारा अपरे मुरारेः ।**
**वार्धिस्तदा गर्जति वारिजाक्ष्याः पक्षेऽहमेवेति वदन्निवोच्चैः ॥ २९ ॥**

**व्या :** आसन्निति । अथानन्तरं केचन नृपाः सदाराः सन्तः भीष्मपुत्र्याः पक्षे आसन् । एकाकिन्याः रुग्मिण्याः आनीतत्वात् विवाहोचितविनोदकरणाय रुग्मिणीपक्षेऽपि स्त्रीपुरुषाणामपेक्षितत्वात् । अपरे नृपाः मुरारेः पक्षे आसन् । तदा बलादानीतस्वपुत्रीसहायमसहमानः वार्धिः समुद्रः वारिजाक्ष्या रुग्मिण्याः पक्षेऽहमेवेति वदन्निवोच्चैर्गर्जति ॥ २९ ॥

**रत्नौघपूर्णरविवर्णसुवर्णपात्रे सत्कर्णपत्रमुखशोभनवस्तुराशिम् ।**
**विस्तीर्य शङ्खपटहध्वनिपूरिताशा जग्मुर्वधूगृहमथोत्सवनिर्णयाय ॥३०॥**

**व्या :** रत्नौघेति । रत्नौघैः पूर्णं रविवर्णं बालसूर्यप्रभं सुवर्णपत्रं तस्मिन् सत्कर्णपत्रं कर्णालङ्कारं समीचीनतालपत्रं मुखं प्रभृति यस्य तत् । शोभनवस्तु हरिद्रादि । तद्राशिं विस्तीर्य । शङ्खपटहध्वनिपूरिताशाः सन्तः उत्सवनिर्णयाय विवाहोत्सवनिश्चयाय । वधूगृहं जग्मुः गतवन्तः ॥३०॥

**विविच्य सर्वाङ्गविचारकाले तयोः समन्ताद्धटना किलासीत् ।**
**सुपीनदेवीस्तनमध्यदेशे सुदुर्लभा सा परमच्युतस्य ॥ ३१ ॥**

**व्या :** **विविच्येति** । **तयोः** रुग्मिणीकृष्णयोः **सर्वेषामङ्गानां** विवाहाङ्गानां राश्यादिकूटानां हस्तमुखाद्यवयवानामिति ध्वनिः । **विविच्य पृथग्विचारकाले** घटनाघटनारूपविचारावसरे तादृशकूटेष्वपि सर्वावयवेष्वपीति ध्वनिः । **घटना आसीत् किल** । ध्वनिलब्धार्थेष्वेकस्याक्षेपमाह । **सुपीनेत्यादिना** । **अच्युतस्य** श्रीकृष्णस्य **परं** केवलं **सुपीनौ** निबिडौ **देव्याः स्तनौ तयोर्मध्यदेशे सा** घटना सम्बन्धः **दुर्लभा** आसीत् । आलिङ्गनादौ सर्वावयवेषु घटना सम्भाविता । निबिडस्तनाभ्यन्तरेषु दुर्लभेति शृङ्गारलब्धो विनोदः ॥ ३१ ॥

**कन्यामिमां कनकदामकदम्बगौरीं**
**धन्यां दिशन्तु हरये हरिनीलभासे ।**
**युक्तस्तयायमुदवाह इवात्तविद्यु-**
**द्विष्वक् करिष्यति समस्तपुमर्थवर्षम् ॥३२॥**

**व्या :** वाग्दानप्रक्रियां वर्णयति । **कन्यामिति** । **कनकदामकदम्बगौरीं** सुवर्णमालावत् कदंबपुष्पवच्च गौरीं **धन्यां** कृतार्थाम् । **इमां कन्यां** रुग्मिणीं **हरिनीलभासे** इन्द्रनीलप्रभाय **हरये** श्रीकृष्णाय **दिशन्तु** । तेन इन्द्रनीलखचितसुवर्णालङ्कृतिवद्भविष्यतीति भावः । तया कनकदामगौर्या रुग्मिण्या अयमिन्द्रनीलप्रभः श्रीकृष्णः आत्ता स्वीकृता **विद्युत्**सौदामिनी येन स तथोक्तः । **उदवाह इव** मेघ इव **विष्वक्** समन्तात् **समस्तपुमर्थवर्षं** सकलपुरुषार्थाभिवृष्टिम् । **करिष्यति** । रुग्मिणीप्रदानेन सकलपुरुषार्थं दास्यतीत्यर्थः ॥ ३२ ॥

**वैदर्भवंशोदधिजातरत्नमियं सती सोऽप्युडुनायकस्य ।**
**कुलोद्भवालङ्कृतिरेतयोस्तत् परम्परायोग्यमवैत योगम् ॥३३॥**

**व्या :** ''कुलमग्रे परीक्षेत'' इत्युक्तेः कुलविचारप्रकारमाह – **वैदर्भेति** । **इयं सती** रुग्मिणी वैदर्भस्य भीष्मकस्य **वंश** एव **उदधि**वदुदधिः समुद्रः तत्र **जातं रत्नम्** । अथवा विगताः दर्भवंशाः कुशवेणवो यस्मिन् स चासौ उदधिश्च क्षीरसमुद्र

इत्यर्थः । तज्जातरत्नं इयं साक्षाद्रमैव । **सोऽपि कृष्णः उडुनायकस्य कुले उद्भवो** येषां तेषां यादवानां **अलङ्कृतिरलङ्कारभूतः तत्** तस्मादेतत्कुलमूलभूतयोः समुद्रसोमयोः सहजमित्रत्वादेतयोः रुग्मिणीकृष्णयोः । **परम्परायोग्यं** वंशपरम्परोचितं योगं सम्बन्धम् **अवैत** जानीत । विदर्भाणां यादवानां च परम्परायोग्ययोग इत्येकः । क्षीरसमुद्रजातत्वेन रुग्मिण्याः लक्ष्मीत्वोक्त्या सोमकुलोद्भवानां पुरुषाणां अलंकृतिरिति पुरुषोत्तमत्वोक्त्या लक्ष्मीनारायणयोः मूलरूपयोगाख्यपरम्परा-योगोऽपरः । रत्नमलङ्कृतिरित्यनेन रत्नस्य सुवर्णाभरणस्येव मनोहरस्त्रीपुरुषयोरेव साक्षान्मिथो योग एक इति त्रेधा सम्बन्धघटना प्रदर्शितेति ज्ञातव्यम् ॥ ३३ ॥

**पद्मालया सा किल पावनाङ्गी नारायणोऽयं नवनीरदाभः ।**
**तेनानयोः सुस्थिरमेव योगं मन्यामहेऽन्योन्यविभूतिहेतुम् ॥३४॥**

**व्या :** प्रकारान्तरेण सम्बन्धघटनामाहुः । **पद्मेति** । सा **पावनाङ्गी** रुग्मिणी पद्ममेवालयो यस्याः सा किल । ''लक्ष्मीः पद्मालया'' इत्युक्तेः । नवनीरदाभः अयं श्रीकृष्णः । नाराः आपः **अयनं** यस्य स नारायणः **किल** । **तेन** जल पद्मयोर्नित्यसमागमनकारणेन **पद्मालयानारायणरूपयोः योगं सुस्थिरमेव** मन्यामहे । **पद्मजलयोः** परस्परशोभाकारित्वेन तद्वासिनोरनयोरपि **योगम् अन्योन्यविभूतिहेतुं** परस्परशोभाकारणं **मन्यामहे** । पद्मस्य जलशोभाका-रित्वमात्रम् । जलस्य तु पद्मोज्जीवकत्वेन वरत्वं द्योत्यते । **नवनीरदाभ** इत्यनेन नीरदं प्रति स्पर्धितया श्रीकृष्णस्य तदपहारकत्वेन पद्मानिष्टापहारकत्वे ध्वनिः रुग्मिणीवैरिनाशकत्वं च द्योत्यते ॥ ३४ ॥

**आर्यः स्वभार्यां यदि भारकार्ये नैवोपदिश्यान्न पुनः कदाऽपि ।**
**एनां त्यजेज्ज्ञात्वपि नात्र कुप्येद्वल्लातु तर्ह्यब्जमुखीकरं नः ॥३५॥**

**व्या :** आर्य इति । आर्यः श्रीकृष्णः स्वभार्यां यदि भारकार्ये स्थूलकार्ये नैवोपदिश्यान्नाज्ञापयेत । पुनः कदापि एनां न त्यजेत् । अत्र अस्यां यदि जात्वपि कदापि न कुप्येत् कोपं न कुर्यात् तर्ह्यस्माकमब्जमुखीकरं गृह्णातु ॥ ३५ ॥

**सन्देशमात्रमभिवीक्ष्य हरे गृहं नः**
**सम्प्रेषयिष्यसि करिष्यसि नान्यपत्नीम् ।**
**बन्धून् स्मरिष्यसि विभो यदि विश्वदो न-**
**स्त्वां तर्हि वल्गुवदना वरयेद्वरिष्ठम् ॥ ३६ ॥**

**व्या :** सन्देशमात्रमिति । हे विभो हे हरे श्रीकृष्ण । नो विश्वदः सर्वदः त्वं एनां नः सन्देशमात्रं पत्रिकामात्रमभिवीक्ष्य यदि नोऽस्माकं गृहं सम्प्रेषयिष्यसि। अन्या च सा पत्नी च अन्यपत्नी पत्न्यन्तरं यदि न करिष्यसि पत्न्यन्तरपरिग्रहं न करिष्यसीत्यर्थः । यदि बन्धून् नः स्मरिष्यसि कन्यावरणानन्तरं कृतकृत्यतया वयं न विस्मरणीया इत्यर्थः । तर्हि वल्गुवदना मनोहरवदना । वरिष्ठं वरं त्वां वरयेदिति कन्यापक्षीयानां वचनम् ॥ ३६ ॥

**ब्रह्माण्डाख्यगृहं चतुर्दशलसत्प्रासादशोभं हरेः**
**साध्वीयं सततं विचारयतु सन्मध्ये गृहस्योचितम् ।**
**स्वर्णाद्रिक्षितिधान्यरत्नलवणक्षीरेक्षुसर्पिर्दधि-**
**[1]स्वादूदादि सुतांश्च पद्मजमुखांस्तेषां धुरं मन्दिरम् ॥३७॥**

---

१ लक्ष्मीर्यस्य परिग्रहः कमलभूः सूनुर्गरुत्मान् रथः
पौत्रश्चन्द्रविभूषणः सुरगुरुः शेषश्च शय्या पुनः ।
ब्रह्माण्डं वरमन्दिरं सुरगणा यस्य प्रभोः सेवकाः
स त्रैलोक्यकुटुम्बपालनपरः कुर्यात् हरिर्मङ्गलम् ॥
- इतिश्रीराजराजेश्वरतीर्थश्रीचरणकृतमङ्गलाष्टकस्थश्लोकवज्ज्ञेयम् ।

**व्या :** इदानीं वरपक्षीयानां वचनमाह – **ब्रह्माण्डेति** । इयं साध्वी चतुर्दश पातालाद्याः लोका एव **सत्प्रासादाः** तैः **शोभत** इति तथोक्तम् । **ब्रह्माण्डाख्यगृहं सततं विचारयतु** । **सन्मध्ये** ब्रह्माण्डाख्यगृहमध्ये **गृहस्योचितं स्वर्णाद्रिश्च क्षितिश्च धान्यानि रत्नानि** समुद्राकारेण विद्यमानानि **लवणं** च **क्षीरं** च **इक्षुश्च सर्पिश्च दधि** च **स्वादु** च तदुदकञ्च तान्यादीनि यस्य तत् । आदिपदेन सुरासमुद्रादिकं गृह्यते । बृहच्छरीरतया महागृहस्थत्वेन गृहादीनां स्थूलत्वमुक्तमिति द्रष्टव्यम् । पद्मजमुखान् **सुतांश्च हरेः** सर्वस्रष्टृत्वादस्याश्च लोकमातृत्वादिति भावः ॥ **तेषां धुरं** सत्यलोकाधिपत्यादिकं सत्यलोकादिकं **मन्दिरं** च विचारयतु । ब्रह्माण्डादीनामेतेषां सम्पद्रूपत्वे नास्याश्च सम्पदभिमानिश्रीत्वेनैव तद्विचार्यमिति भावः ॥ ३७ ॥

**कार्यं गृहिण्या गृहकृत्यमेतन्नो भारकार्यन्यजनैरसाध्यम् ।**
**तन्वी तदेतत् सकलं स्वलोललीलाकटाक्षेण करिष्यतीयम् ॥३८॥**

**व्या :** ननु भारकार्ये नैवोपदिश्यादित्युक्तेर्महाकार्यमिदं कथमुपदिश्यत इत्यत आहुः । **कार्यमिति** । एतद्गृहकृत्यं **गृहिण्या** रुग्मिण्या **कार्यम्** । कार्याकार्य-विचार्यतया गृहमस्या वशे वर्तत इति गृहिणीति व्युत्पत्तेरिति भावः । **अन्यजनैरसाध्यं** एतत् गृहान्तः प्रासादादेः रत्नादेर्विचार इति लौकिकम् । ब्रह्माण्ड-पालनादेरनन्यसाध्यमिति हृदयम् । **भारकारि नो** भवति । भाररूपत्वेऽपि गृहकृत्यमिदमनयैव कर्तव्यमित्यर्थः । अन्यस्याः **भारकार्यत्वे**ऽपि अस्या नैव भारकार्यमित्याह । **तन्वीति** । इयं **तन्वी तदेतत्सकलं** ब्रह्माण्डपोषणादिकम् । **स्वलोललीलाकटाक्षेण** स्वचञ्चलापाङ्गकटाक्षनिरीक्षणमात्रेण **करिष्यति** ।

विश्वस्थितिप्रलयसर्गमहाविभूतिवृत्तिप्रकाशनियमावृतिबन्धमोक्षाः ।
यस्या अपाङ्गलवमात्रत ऊर्जिता सा श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥[१]

इत्युक्तेः । **भारकार्ये** नैवोपदिश्यादित्यस्येदमुत्तरम् ॥ ३८ ॥

---

१ द्वादशस्तोत्रम् (७/१)

**नैनां संसदि सन्त्यजेन्न रहसि स्वैरावतारेषु वा**
**स्नानाभ्यञ्जनभोजनादिविविधक्रीडासु वाऽस्यै दिशेत् ।**
**स्वाङ्गाश्लेषसुखं विभूषणगतं बिम्बोष्ठजं चामृतं**
**वंशाद्याश्रितमेतया विरहितं देशं परं सन्त्यजेत् ॥ ३९ ॥**

**व्या :** **नैनामिति** । स कृष्णः एनां रुग्मिणीं **संसदि** सभायामपि न **सन्त्यजेत्**। सभायां लक्ष्मीनारायणरूपतया अवस्थितेरिति भावः । **रहसि** कथं संत्यजेत् । प्रलयेऽपि श्रिया सह अवस्थितेरिति भावः । **स्वैरेण अवतारेषु** रामकृष्णाद्यवतारेषु। न संत्यजेत् । सीतादिरूपेण लक्ष्म्या अपि सहावतारादिति भावः । **स्नानमभ्यञ्जनमभ्यङ्गः भोजनानि** आदयो यासां ताः **विविधक्रीडाः** तासु। विविधक्रीडास्वित्यनेन स्नानादिकमपि क्रीडार्थं नतु सुखावाप्त्यर्थमिति द्योत्यते । एनां न सन्त्यजेदित्यन्वयः । सश्रीकतया अभिषेकादिसर्वपूजास्वीकारादिति भावः । **विभूषणगतं** कण्ठमालाद्याभरणगतं **स्वाङ्गाश्लेषसुखं** स्वशरीरसम्बन्धसौख्यम् **अस्यै** रुग्मिण्यै **दिशेत्** । लक्ष्म्या एव भूषणाकारतया स्थितत्वादिति भावः । **वंशः** वेणुवाद्यं तदादिमुखचुम्बिवस्तुषु आश्रितं **बिम्बोष्ठजम् अमृतम्** अधरामृतं चाप्यस्यै दिशेत् । "श्रीदेवी वेणुमाश्रित्य"[1] इति वचनात् । **परं** केवलम् एतया रुग्मिण्या **विरहितं देशं सन्त्यजेत्** । देशतः कालतश्च रुग्मिण्याः समव्याप्तेरिति भावः । एतद्रहितं देशमेव त्यजेदित्युक्त्या सुतरामस्याः वियोगो नेति सूचितम् । न पुनः कदापि एनां त्यजेदित्यस्योत्तरम् ॥ ३९ ॥

**क्रुद्धोऽपि सर्वभुवनाय न भीष्मपुत्र्यां**
**क्रोधं करिष्यति परं परिरभ्य दोर्भ्याम् ।**
**एनां तदाऽपि रमयेत् किल कोमलाङ्गीं**
**कोपोऽस्य तत्र य इमां कलयेद्वियुक्ताम् ॥ ४० ॥**

---

१ भागवततात्पर्ये (१०/१९/१०)

**व्या : क्रुद्धोऽपीति** । अयं श्रीकृष्णः **सर्वभुवनाय क्रुद्धोऽपि** संहृतसर्वलोकोऽपीत्यर्थः । ''क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः''[1] इति चतुर्थी । **भीष्मपुत्र्यां** भीष्मकपुत्र्यां रुग्मिण्यां **क्रोधं न करिष्यति** । परन्तु । **तदाऽप्येनां** लक्ष्मीरूपिणीं रुग्मिणीं **कोमलाङ्गीं दोर्भ्यां** परिरभ्य **रमयेत् किल** । **किलेत्यनेन** ''लक्ष्मीभुजान्तरगतः स्वरतोऽपि चाग्रे''[2] इति पुराणप्रसिद्धिर्द्योत्यते। यः इमां रुग्मिणीं **वियुक्तां** सीतावतारादिषु वियोगवर्ती कलयेत् जानीयात् । अस्य श्रीकृष्णस्य कोपस्तस्मिन्नेव । लक्ष्म्याः वियोगं वदतः सुराणकादेः[3]

---

१ पा.सू. (१/४/३७)

२ म.भा.ता.नि. (१/२)

३ सुराणकानां तमःप्राप्तिप्रसङ्गः म.भा.ता.निर्णये निरूपितः -
अथ केचिदासुरसुराः सुराणकाः इत्युरुप्रथितपौरुषाः पुरा ।
ते तपः सुमहदास्थिता विभुं पद्मसम्भवमवेत्य चोचिरे ॥
भूरिपापकृतिनोऽपि निश्चयान्मुक्तिमाप्नुम उदारसद्गुण ।
इत्युदीरितमजोऽवधार्य तान् प्राह च प्रहसिताननः प्रभुः ॥
यावदेव रमया रमेश्वरं नो वियोजयथ सद्गुणार्णवम् ।
तावदुच्चमपि दुष्कृतं भवन्मोक्षमार्गपरिपन्थि नो भवेत् ॥
इत्युदीरितमवेत्य तेऽसुराः क्षिप्रमोक्षगमनोत्सुकाः क्षितौ ।
साधनोपचयकाङ्क्षिणो हरौ शासति क्षितिमशेषतोऽभवन् ॥
तानानादिकृतदोषसंचयैर्मोक्षमार्गगतियोग्यतोज्झितान् ।
मैथिलस्य तनया व्यचालयन्मायया स्वतनुवा स्वमार्गतः ॥
आज्ञयैव हरेस्तु मायया मोहितास्तु दितिजा व्यनिन्दयन् ।
राघवो निशिचराहृतां पुनर्जानकीं जगृह इत्येनकशः ॥
ब्रह्मवाक्यमृतमेव कारयन् पातयंस्तमसि चान्ध आसुरान् ।
नित्यमेव सहितोऽपि सीतया सोऽज्ञसाक्षिकमभूद्वियुक्तवत् ॥
तेन चान्धतम ईयुरासुराः ...................... ॥
- इति म.भा.ता.नि. (९/२७-३४)

तमोदानादिति भावः । अविद्यमानवियोगज्ञातरि कोप इत्युक्त्या अस्यां कदापि न क्रोध इति सूचितम् ।। ४० ।।

**केशं प्रगृह्य करजैः कुचकुम्भपार्श्वे**
**कुर्वन् व्रणानि मृदुलोष्ठपुटं स दंशन् ।**
**दन्तक्षतं विरचयेद्दयितः स्वपुंसां**
**क्रोधं तदा न कलयध्वमसौ विलासः ।। ४१ ।।**

**व्या :** केशमिति । **स्वपुंसां** स्वभक्तानां **दयितः** प्रियः श्रीकृष्णः रुग्मिण्याः **केशं प्रगृह्य करजैः** नखैः । **कुचकुम्भपार्श्वे व्रणानि** क्षतानि **कुर्वन् मृदुलोष्ठपुटं दंशन्** दशनं कुर्वन् **दन्तक्षतं** यदा **विरचयेत्** तदा **क्रोधं** न **कलयध्वं** न जानीध्वम् । केशग्रहणव्रणकरणदन्तक्षतादेः कोपेऽपि दर्शनादिति भावः । तर्हि किमर्थं कचग्रहणादिकमित्यत आह । **असौ** केशग्रहणादिर्**विलासः** विनोदः । कोपभ्रमनिवारणव्याजेनोपरिकरिष्यमाणविलासकथनम् इदं कन्यायाः चित्ता-कर्षणार्थं जात्वपि नात्र कुप्येदित्यस्योत्तरम् ।। ४१ ।।

**प्रायः स न प्रेषयति स्वभक्तगेहेष्विमां तेऽपि न तां लषन्ति ।**
**अथ प्रदत्तामपि तामिदानीं धीराः परावृत्य न किं दिशध्वम् ।।४२।।**

**व्या :** प्राय इति । श्रीकृष्णः **स्वभक्तगेहेषु** प्रायः **इमां** श्रीं रुग्मिणीं **न प्रेषयति**[१] । ''तं भ्रंशयामि सम्पद्भ्यो यस्य चेच्छाम्यनुग्रहम्''[२] इति वचनात् । **तेऽपि** भक्ता अपि **तां** सम्पदं **न लषन्ति** न वाञ्छन्ति । ''तथाऽपि मत्परा राजन्नैव वाञ्छन्ति

---

१ यतश्च ब्रह्मरुद्राद्या देवाः सर्वे दिगीश्वराः ।
कृतास्त्वया निजजनाः सर्वयज्ञभुजोऽपि च ।।
यस्मादेषां महाभाग्यवतां किञ्चिद्धनं च न ।
अतो निष्किञ्चनजनप्रियश्चासि त्वमच्युत ।। - सरसभारतीविलासे(४/२३,२४)

२ भागवते (१०/२७/१६)

किञ्चन''[१] इति वचनात्। हे **धीराः इदानीमथ** द्वारकायां निवासकाले **प्रदत्तामपि** गृहनिधिपश्वादिरूपेण **दत्तामपि** । 'अच उपसर्गात् तः'[२] इति दकारस्य तकारादेशः । इमां श्रियम् । ''आचण्डालादिकप्राप्यद्वारकानिधिकोटिकृत्''[३] इति वचनात्। परावृत्य दात्रे श्रीकृष्णायेति शेषः । न दिशध्वं किम्। 'दारान् सुतान् प्रियान् प्राणान् परस्मै सन्निवेदयेत्'[४] इति वचनात्। दिशध्वमेवेत्यर्थः । गृहं नः सम्प्रेषयिष्यसीत्यस्योत्तरम्।। ४२ ।।

**नैवान्यां वरयेत् कन्यां पूर्णोऽयं पुरुषाग्रणीः ।**
**वृतोऽप्यन्याङ्गनादेहे[५] रमयेत् प्रेयसीमिमाम्।। ४३ ।।**

**व्या :** नैवान्यामिति । **पूर्णः** रुग्मिणीमात्रेणाप्तकामः **अयं पुरुषाग्रणीः** अन्यां **कन्यां न वरयेत्** । **वृतोऽपि** षोडशसहस्रकन्याभिः गोपीभिश्च युक्तोऽपि अनेन स्वस्याकाङ्क्षाभावेऽपि तासाम् आकाङ्क्षानुसारेण वरणमिति सूचितम्। **अन्याङ्गनादेहेऽपि इमां प्रेयसीं रमयेत्**। अनेनानुभूयमानासु सर्वासु लक्ष्मीसन्निधानादिति भावः । करिष्यसि नान्यपत्नीमित्यस्योत्तरम्।। ४३ ।।

**सदाऽपरोक्षीकृतसर्वविश्वः कथं स्मरेद्धः स्मरणीयशीलः ।**
**तथापि युष्मासु कृपां स कुर्यात् स्मृतेः फलं स्वाङ्घ्रियुगाश्रयेषु ।।४४।।**

**व्या :** बन्धून् स्मरिष्यसीत्यस्यानङ्गीकारेणोत्तरमङ्गीकारयति । **सदेति** । **सदापरोक्षीकृतसर्वविश्वः** साक्षाच्चक्षुषा [६]दृश्यमानसकलपदार्थः । **स्मरणी-**

---

१ भागवते (१०/३७/२)
२ पा.सू. ७/४/४७
३ पद्मपुराणान्तर्गतवासुदेवसहस्रनामवचनम्। - (उत्तरखण्डे. ७१/२६७)
४ भागवते (११/३/२८)
५ ऋते रमां ममाङ्गसङ्गयोग्याङ्गना नैव सुरालयेऽपि ।- इति म.भा.ता.नि(११/१२६)
६ स्वपरगताशेषविषयकमीश्वरज्ञानम् - इति प्रमाणलक्षणे
सूर्यप्रभावादखिलं भासयन्ती निरन्तरा। - इत्यनुव्यख्याने (४/२/१९)

**यशीलः** श्रीकृष्णः **कथं वः स्मरेत्** । चक्षुषा दर्शने जागरूके सति तज्जन्यसंस्कारोत्तरकालीनस्मरणस्यासम्भवादित्यर्थः । स्मरणीयशील इत्यनेन 'यत्तदद्रेश्यम्'[१] इत्यादिना स्वानुग्रहमन्तरा साक्षाददृश्यविषयस्य तस्य स्मरणं भवद्भिरेव कार्यमिति सूचितम् । **तथापि स्वाङ्घ्रियुगाश्रयेषु युष्मासु स्मृतेः** स्मरणस्य फलं फलरूपां **कृपां कुर्यात्** । स्मरणेऽपि कृपां कर्तव्यामेव करिष्यतीति भावः ॥ ४४ ॥

**न पारिबर्हं बहु दातुमीशा रथाश्वहस्त्यादिबलानि चास्मै ।**
**इमां परं पद्ममुखीं दिशामस्तिथिज्ञमाहूय तिथिर्विचार्यताम् ॥४५॥**

**व्या : नेति** । वयमस्मै कृष्णाय **पारिबर्हं** वराय दीयमानं द्रविणं **बहु दातुं नेशाः** न समर्थाः । **रथाश्वहस्त्यादिबलानि** वा दातुं न समर्थाः **परं** केवलं **इमां पद्ममुखीं दिशामः** । **तिथिज्ञं** ज्योतिर्विदम् **आहूय** विवाहयोग्या **तिथिर्विचार्यताम्** ॥४५॥

**न पारिबर्हं स वृणोति पूर्णसुखः परं काङ्क्षति तत्कटाक्षम्**[२] **।**
**विरिञ्चवैरिञ्चमुखामराणामगण्यभाग्यं हि यतो बभूव ॥४६॥**

**व्या : न पारिबर्हमिति** । **पूर्णसुखः** श्रीकृष्णः **पारिबर्हं न वृणोति** । **परन्तु** तस्याः **कटाक्षं** लीलावीक्षणं **काङ्क्षति** । **यतः** कटाक्षात् । **विरिञ्चः** ब्रह्मा **वैरिञ्चः** शिवः। तौ मुखौ प्रमुखौ येषां तेषाम् **अमराणाम् अगण्यं** भाग्यं **बभूव हि** ॥४६॥

**यद्वक्त्रे विधुमामनन्ति सुबुधं मुग्धस्मिते हस्तयो-**
**रुद्यद्व्योममणिं गुरुं कटितटे मध्यं च काव्यास्पदम् ।**
**यत्पादस्पृशि मङ्गलं पदतले केतुं गतौ मन्दगं**
**यद्रोचिश्चकितं तमस्तदनयोर्नित्यं मुहूर्तोदयः ॥ ४७ ॥**

---

१ इति मुण्डकोपनिषदि

२ 'श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥' इति द्वादशस्तोत्रे । व्यक्तमेतत् सर्वम्
- द्वादशस्तोत्रे सप्तमाध्याये ॥

**व्या :** रुग्मिणीकृष्णयोरवयववर्णनव्याजेन पञ्चानां शुभग्रहाणां मुखाद्युच्चस्थानस्थितत्वं चतुर्णामशुभग्रहाणां पादाद्यधमस्थानस्थितिं च वर्णयन् शुभानां पञ्चग्रहाणाम् उच्चस्थानस्थितत्वे अशुभानां नीचस्थानस्थितत्वे सुमुहूर्तत्वस्य ज्योतिःशास्त्रप्रसिद्धत्वात् सर्वाऽपि तिथिरनयोरनुकूलेत्याह। **यद्वक्त्रेति**। **यद्वक्त्रे** ययोः रुग्मिणीकृष्णयोः वक्त्रे। जात्येकवचनम्। **विधुं** चन्द्रं **आमनन्ति** वदन्ति। चन्द्रोपममुखत्वादिति भावः। मन्दस्मिते मनोहरमन्दहासे। **सु** शोभनं **बुधं** सौम्यम् आमनन्ति। स्मितस्य मन्दत्वेन अल्पप्रकाशबुधसदृशत्वादितिभावः।यद्वा**मुग्धस्मिते**सतिसुबुधंसम्यग्ज्ञानिनमामनन्ति। यमुद्दिश्य कृपया मन्दस्मितं कुरुतः सः सम्यज्ज्ञानी भवतीत्यर्थः। **हस्तयोः** करतलयोः **उद्यद्व्योममणिं** बालसूर्यमामनन्ति। करतलस्य रक्तत्वेन बालसूर्योपमेत्यर्थः। **कटितटे गुरुं** पृथुत्वात्। गुरुं बृहस्पतिमिति ध्वनिः। 'गुरुर्निषेकादिकरे पुरोधसि बृहस्पतौ' इत्यभिधानात्। **मध्यं काव्यास्पदं** काव्यविषयं बहुगुणवदिदम् अनेककाव्येन वर्णयितुं योग्यमिति अनेकगुणवदिति भावः। शुक्रास्पदमिति ध्वनिः। उशनाः शुक्रः काव्य इति हलः। पञ्चानां ग्रहाणाम् उच्चस्थानस्थितिरुक्तेति द्रष्टव्यम्। **यत्पादस्पृशि** ययोः पादार्चनं कुर्वतीत्यर्थः। मङ्गलमामनन्ति। अङ्गारकमिति ध्वनिः। **पादतले केतुं** रेखारूपाख्यध्वजम्। केत्वाख्यग्रहमिति ध्वनिः। गतौ गमने शनैश्चरम् आमनन्ति। गतेर्मन्दत्वेन शनैश्चरसाम्यमिति भावः। तमः अन्धकारं **यद्रोचिषा** ययोर्दम्पत्योः रुग्मिणीकृष्णयोः कान्त्या शङ्कितमामनन्ति। राहुमिति ध्वनिः। 'तमो राहौ गुणे ध्वान्ते' इति रत्नमालोक्तेः। तस्मात् कारणादनयोः रुग्मिणीकृष्णयोः **नित्यं मुहूर्तोदयः** शुभमुहूर्तोदयः। महाशुभलक्षणसम्पन्नयोरनयोः किं मुहूर्तविचारेणेति हृदयम्॥४७॥

**यदीयवीक्षाविषयस्य नित्यं विधोर्बलं तारबलं[1] च सुष्ठु।**
**यदीयतारं जपतस्तदस्य सदा मुहूर्तोदयमेव मन्ये॥ ४८॥**

---

१ तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव।
विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि॥

**व्या : यदीयेति । यदीयवीक्षाविषयस्य** यत्सम्बन्धिकृपाकटाक्षविषयस्य **नित्यं** विधोश्चन्द्रस्य बलमस्ति । ''सूर्याचन्द्रमसावस्य चक्षुषी'' इति श्रुतेः। वीक्षायाश्चन्द्राश्रितत्वादिति भावः । **यदीयतारं** यत्प्रतिपादकप्रणवं **जपतः सुष्ठु तारबलं** तारस्य नक्षत्रस्य बलमस्ति । नक्षत्रप्रणवयोरपि तारशब्दवाच्यत्वात् तारजपेन तद्बले सति नक्षत्रादे रप्यनुकूलत्वावश्यम्भावात् शब्दस्य साम्याच्चैतदुक्तम् । **तत्** तस्मादस्य कृष्णस्य सदा **मुहूर्तोदयं** चन्द्रताराबलोपेतं मुहूर्तोदयं मन्ये ॥४८॥

**द्वित्रैर्दिनैरन्तरिताऽपि साऽभूज्ज्योतिष्पथज्ञोक्ततिथिः क्षणाभा ।**
**उद्यन्महर्धिं मिषतां जनानां भैष्म्यास्तु कल्पायुतसम्मिता[१]ऽऽसीत् ॥४९॥**

**व्या** : द्वित्रैरिति । सा ज्योतिषां पन्थानं जानन्तीति ज्योतिष्पथज्ञास्तैरुक्ता तिथिः द्वित्रैः द्वौ वा त्रयो वा मानं येषां तानि द्वित्राणि तैः ''सङ्ख्ययाव्यय..'' इत्यादिना[२] समासः । ''बहुव्रीहौ सङ्ख्येये डजबहुगणात्''[३] इति डच् । दिनैरन्तरिताऽपि व्यवहिताऽपि महस्य विवाहोत्सवस्य ऋद्धिः अभिवृद्धिः उद्यन्ती च सा महर्धिश्च तां विवाहोत्सवार्थं सम्पादितां वस्तुसम्पत्तिमित्यर्थः । मिषतां पश्यतां नारीनराणां क्षणाभा क्षणेन समाना आसीत् । नानाविधसम्भ्रमदर्शनार्थं इतस्ततो गच्छतां क्षणप्रायोऽभूदिति भावः । भैष्म्यास्तु कल्पायुतसम्मिता[४] आसीत् । कल्पानां अयुतेन समानीकृता आसीत् तावत्पर्यन्तं श्रीकृष्णकरग्रहण प्रत्यूहहेतुत्वादिति भावः ॥ ४९ ॥

---

१ त्रुटि युगायते त्वामपश्यताम् -भागवते (१०/३१/१५)इतिवत् ज्ञेयम् ।

२ सङ्ख्ययाऽव्ययासन्नादूराधिकसङ्ख्याः सङ्ख्येये । - पा.सू. २/२/२५

३ पा.सू. ५/४/७३

४ 'अहस्तु मासशब्दोक्तं यत्र चिन्तायुतं व्रजेत् ।
एवं संवत्सराभाद्यं च विपरीते विपर्ययः' इति नाममहोदधौ ॥
-भा.ता. (१/१३/२)

**ताम्बूलपत्रं किल पूगयुक्तमासीद्विवाहोत्सवनिर्णयाय ।**
**चेतः सुनिश्चाययति स्म यूनां माङ्गल्यदीक्षोत्सवमेतदेव ॥५०॥**

**व्या :** ताम्बूलपत्रमिति । **पूगयुक्तं** क्रमुकयुक्तं **ताम्बूलपत्रं विवाहोत्सवनिर्णयाय आसीत् किल** । निश्चयताम्बूलमिति लोकप्रसिद्धेरिति भावः । तथाहि । **यूनां चेतः**सु चित्तेषु **एतदेव** तांबूलमेव **माङ्गल्यदीक्षोत्सवं निश्चाययति स्म** । कामोद्रेककारित्वेन तच्चर्वणेन मनोद्दीपितं चेतः विवाहदीक्षामाकाङ्क्षतीति भावः ॥ ५० ॥

**ततः क्रमेणोभयवर्गनार्यो गृहे गृहे तैलयुतां हरिद्राम् ।**
**ददुर्विवाहोत्सवमूलभूतां परस्परं स्नेहमिवार्पयन्त्यः ॥ ५१ ॥**

**व्या :** तत इति । ततोऽनन्तरं **क्रमेण उभयवर्गनार्यः** कन्यावरपक्षीयाः सुवासिन्यः **तैलयुतां हरिद्रां विवाहोत्सवमूलभूतां** विवाहस्य स्नेहमूलत्वादिति भावः । **स्नेहं परस्परमर्पयन्त्य** इव **गृहे गृहे ददुः** । तैलस्य स्नेहशब्दवाच्यत्वादिति श्लिष्टमूलेयमुत्प्रेक्षा ॥ ५१ ॥

**कन्यावरौ चक्रतुरर्थकामावन्येद्युरर्चां पितृदेवतानाम् ।**
**मन्येऽहमन्योन्यममू तदग्रे चीर्णोत्सवौ सम्प्रति जातलज्जौ ॥५२॥**

**व्या :** कन्यावराविति । **अर्थकामा**वभ्युदयरूपपुरुषार्थकामौ **कन्यावरौ** रुग्मिणीश्रीकृष्णौ । **अन्येद्युः** अन्यस्मिन् दिवसे **पितृदेवतानां** नान्दीमुखानां **अर्चां चक्रतुः किल** । किलेत्यनेन सर्वपितृदेवतापूज्यस्य तत्पूजनमौपचारिकमिति द्योत्यते । कविराजस्तु निमित्तान्तरमुत्प्रेक्षते । तदग्रेति । **तदग्रे** तासां पितृदेवतानां पुरतोऽन्योन्यं **चीर्णोत्सवौ** कृतविवाहोत्सवौ । क्षीरसमुद्रमथनानन्तरं देवतासभामध्ये विवाहस्य जातत्वादिति भावः । **अमू** रुग्मिणीकृष्णौ **सम्प्रति** इदानीं तत्सन्निधाने पुनर्विवाहोद्योगे सति अपहसिष्यन्तीति **जातलज्जौ** तन्मुखमुद्रणायार्चां चक्रतुरित्यहं **मन्ये** ॥ ५२ ॥

**अथ स्नातकसाधर्म्यं सम्प्राप्य यदुनन्दनः ।**
**स्नातुं जिगमिषुस्तीर्थं प्रीत्येत्थं प्रत्यषिध्यत ॥ ५३ ॥**

अथेति । **अथ स्नातकसाधर्म्यं** स्नातकव्रतिनः साधर्म्यं **सम्प्राप्य** कृतस्नातकव्रत इत्यर्थः । **तीर्थं स्नातुं जिगमिषुः** गन्तुमिच्छुः **यदुनन्दनः** श्रीकृष्णः **इत्थं** वक्ष्यमाणप्रकारेण **प्रीत्या** श्वशुरपक्षीयेन **प्रत्यषिध्यत** निवारितः ॥ ५३ ॥

**परिहृतभवपाश श्रीश मा याहि शौरे**
**त्रिभुवनपरिगीतं तीर्थजातं त्वयीशे ।**
**व्रजति सकलमासीत् पृष्ठतः स्पष्टयुष्म-**
**च्चरणवरणभूम्यां क्वास्ति तीर्थं त्वदग्रे ॥ ५४ ॥**

**व्या : परिहृतेति । परिहृतभवपाश श्रीश** श्रीलक्ष्मीपते **शौरे** श्रीकृष्ण **मा याहि** इदं विशेषणद्वयं हेतुगर्भम् । संसाराभावान्नैतत्परिहाररूपपारत्रिकफलाय यात्रा । लक्ष्मीपतित्वान्न संपदाद्यैहिकफलाय वा संभवितेति हेतुसूचनात् । **स्पष्टं** च हेतुमाह । **त्रिभुवनेत्यादिना । ईशे** स्वामिनि **त्वयि व्रजति** गच्छति सति । **त्रिभुवनपरिगीतं सकलं तीर्थजातं** तीर्थसमूहः । **पृष्ठतः** पृष्ठभागे । ध्वजवज्रादिचिह्नोपेतत्वेन सर्वविलक्षणत्वात् कृष्णचरण एवायमिति स्पष्टीकर्तुं शक्यस्य **युष्मच्चरणस्य वरण**मङ्गीकारः सम्बन्धः इत्यर्थः । यस्याः सा तथोक्ता **भूमिः** तस्या तव पादरजोराजितायां पूर्वं क्षिप्तपदभूम्यामित्यर्थः । अत एव प्राक् पृष्ठत इत्युक्तमासीत् । श्रीकृष्णपादधूल्यां गङ्गादिसकलतीर्थानां सन्निधानादिति भावः । तत्तत्तीर्थोद्देशेनाग्रतो गमने उद्दिष्टतीर्थानां पृष्ठतः अवस्थानात् कारणादग्रे पुरोभागे **तीर्थं क्वास्ति** । यस्य पादरजसि सकलतीर्थानीत्युक्तं तस्य तव किं तीर्थयात्रयेति । यदि लोकनटनार्थं व्रजसि तदाऽपि स्पष्टं विष्णुपादाङ्कदर्शनेन विष्णुपादरजस्त्वबुद्ध्या सर्वैरपि सकलतीर्थवत्तया ज्ञाते प्राचीनपदाङ्के स्नातुं परावृत्त्यैवागच्छ । उत्तरत्र पादविक्षेपाभावेन सकलतीर्थस्यैवाभावान्न गच्छेति ।

स्थितपादे मानुषाकारत्वात् पादस्य श्रीविष्णुपादत्वज्ञापकध्वजाद्यसाधारणचिह्ना नां स्पष्टमितराद्दृश्यतया तीर्थबुद्ध्यभावेन लोकरञ्जनार्थं यात्रां न कुर्यादतस्तिष्ठेति भावः ॥ ५४ ॥

**यर्हीश ते सकलतीर्थनिषेवणेच्छा**
**तर्हि त्वदीयमुनयः किल तत्र तत्र ।**
**त्वां स्नापयन्ति जलमध्यगतं विवेकैः**
**कुर्वन्ति तत् तव किमद्य विधेयमस्ति ॥ ५५ ॥**

**व्या :** यर्हीति । हे ईश श्रीकृष्ण । यर्हि ते तव । सकलतीर्थनिषेवणेच्छा तर्हि त्वदीयमुनयः तत्र तत्र तीर्थे त्वां स्नापयन्ति । सालिग्रामादिषु सन्निहितं त्वां पुरुषसूक्तादिभिर्मन्त्रैरभिषिञ्चन्तीति भावः । उद्धृतजलेनैवेदं स्नानं न मज्जनमित्यत आह । जलमध्येत्यादिना । विवेकैर्ध्यानविशेषैर्जलमध्यगतं कुर्वन्ति । अघमर्षणस्नानावसरे ''ऋतं च''[१] इत्यादिमन्त्रैः जलान्तः सन्निधापयन्ति । तत् तस्मात् अद्य इदानीं तव विधेयं कर्तव्यं किमस्ति न किमपीत्यर्थः ॥ ५५ ॥

**यत्र त्वदीयगुणकीर्तननर्तनादि**
**तत्रैव तीर्थनिकराः किल संवसन्ति ।**
**यत्रार्पयन्ति सुजनाः सुकृतं समस्तं**
**तस्येश ते सकलमाकलयामि पूर्णम् ॥ ५६ ॥**

**व्या :** यत्रेति । यत्र यस्मिन् देशे त्वदीयगुणकीर्तननर्तनादि भवति । तत्रैव तीर्थनिकराः सम्वसन्ति । किलेत्यनेन ''सर्वाणि तीर्थानि वसन्ति तत्र यत्राच्युतोदारकथाप्रसङ्गः''[२] इति पुराणप्रसिद्धिर्द्योत्यत इति । यदि तीर्थं

---

१ ऋग्वेदे (१०/१९०/१)

२ पुराणवचनम् ।

जिगमिषुः स्यात् तर्हि त्वदीयं श्रीकृष्णमुकुन्दादिद्वित्रिनाम्नामुच्चारणं कर्तव्यम्। तेन तीर्थानि स्वयमेवायास्यन्तीति भावः । **सुजनाः** सज्जनाः **समस्तं** नित्यनैमित्तिककाम्यकर्मानुष्ठानजनितं **सुकृतं** पुण्यं यत्र यस्मिन् त्वय्यर्पयन्ति । ''करोति यद्यत् सकलं परस्मै नारायणायेति समर्पयेत्तत्''[१] इतिवचनात् । हे हरे ईश ते तव सकलं कृत्यं **पूर्णम्** आकलयामि कृतकृत्यो भवानीत्यर्थः ॥ ५६ ॥

**गङ्गादितीर्थनिकराः किल यत्पदाब्ज-**
**सङ्गात् पुनन्ति भुवि तानपि पावयन्ति ।**
**अङ्गानुषङ्गकरणाद्भवदन्तरङ्गाः**
**किं गाहनेन तव तीर्थचयेषु तस्य ॥ ५७ ॥**

**व्या : गङ्गादीति** । ईश **गङ्गादितीर्थनिकराः** यस्य तव **पादाब्जसङ्गात् पुनन्ति**। ''या वै लसच्छ्रीतुलसीविमिश्रकृष्णाङ्घ्रिरेण्वभ्यधिकाम्बुनेत्री''[२] इति वचनात् । भुवि **भवानन्तरङ्गे** चित्ते येषां ते तथोक्ताः । मुनयोऽङ्गानां शरीराणां सम्बन्धः तस्य **करणात्** विधानात् । तान् तीर्थनिकरान् **पावयन्ति किल** । किलेत्यनेन ''तीर्थीकुर्वन्ति तीर्थानि स्वान्तःस्थेन गदाभृता'' इति वचनं स्मारयन्ति । **तस्य** तीर्थपवित्रीकरणसमर्थपादस्य स्वसन्निधानोपेतमुनिस्पर्शमात्रेणापि तीर्थपवित्रीकरणसमर्थस्य **तव तीर्थचयेषु गाहनेन किं** न किमपि प्रयोजनमित्यर्थः ॥५७॥

**यद्रोमकूपमपि पूरयितुं न शेकु-**
**र्ब्रह्माण्डखर्परशतायुतकोटयोऽपि ।**
**गङ्गाऽपि यच्चरणसन्नखसेकमात्रं**
**तत् क्वास्ति मज्जनविधौ तव तीर्थमुर्व्याम् ॥ ५८ ॥**

---

१ भागवते ११/२/३६

२ भागवते १/१९/६

**व्या :** यद्रोमेति । ब्रह्माण्डखर्परशतायुतकोटयोऽपि यस्य तव रोमकूपमपि पूरयितुं न शेकुः । न समर्थाः । गङ्गाऽपि यच्चरणसन्नखसेकमात्रम् । तस्मादेतादृशबृहच्छरीरस्य तव मज्जनविधौ उर्व्यां तीर्थं कुत्रास्ति । रोममात्रमपि मज्जयितुं तीर्थं न पश्यामीति भावः ॥ ५८ ॥

**भ्रूकाशीं वरनाभिमानसवतीं हारावलीजाह्नवीं**
**नीवीदिव्यसरस्वतीं प्रविलसद्रोमालिसूर्यात्मजाम् ।**
**काञ्चीशोभिकटिं कुचोच्चबदरीं नेत्रान्तयुग्मप्रभा-**
**कावेर्यन्तरगास्यचन्द्रसरसीं यात्राऽस्तु भैष्मीं प्रति ॥ ५९ ॥**

**व्या :** उद्वाह्यरुग्मिण्यां श्रीकृष्णमनो रञ्जयितुं तदवयववर्णनं कुर्वन् सकलदेवताग्र-गण्याया यात्रया सकलतीर्थयात्राफलं स्यादिति भावेनाह । **भ्रूकाशीमिति**। भ्रूरेव काशी यस्यास्ताम् । काश्याः धनुराकारतया भ्रूसदृशत्वात् । **वरनाभिरेव मानसं** मानससरोवरम् अस्याः वर्तत इति सा तथोक्ता ताम् । सरोवरवन्नाभेर्निम्न-त्वात्। **हारावल्येव जाह्नवी** यस्यास्ताम् । हारावल्याः गङ्गावद्धवलत्वात् । **नीव्येव दिव्या सरस्वती** यस्यास्ताम् । सरस्वत्याः पीतवर्णत्वात् । देव्याः पीताम्बरत्वात् । **प्रविलसद्रोमावलिरेव सूर्यात्मजा** यमुना यस्यास्ताम् । उभयोरपि नीलत्वात् । कांच्या रशनया **शोभिनी कटिः** यस्यास्ताम् । ध्वनिता **काञ्ची** । **कुचावेव उच्चे** स्थूले बदर्यौ **बदरीफले** यस्यास्ताम्। अभिनवराजकन्यात्वात् उच्चबदरीफलसमौ कुचाविति भावः । बदरिकाश्रमौ ध्वनिलब्धौ । **नेत्रान्तयुग्मयोः प्रभे एव कावेर्यौ**। द्वेधा विशीर्णकावेरीप्रवाहौ तयोरन्तरं मध्यं गच्छतीति तथोक्तम् । आस्यमेव चन्द्रसरसी यस्याः ताम् चन्द्रमुखीत्वादिति भावः । **भैष्मीं प्रति** तव **यात्राऽस्तु** । एकत्रैव सकलतीर्थनिषेवणस्य लाभादिति भावः ॥ ५९ ॥

**क्षेत्रे त्वमस्मिन् परिगृह्य भैष्म्याः पाणिं जगत्यप्रतिमं तदेतत् ।**
**तीर्थं विधेहीश न कृष्ण यात्रां व्याप्तस्य ते सम्प्रति नन्दयामः ॥६०॥**

**व्या :** क्षेत्र इति । हे ईश अस्मिन् क्षेत्रे मूलमाधवाख्ये । त्वं **भैष्म्याः** भीष्मपुत्र्याः रुग्मिण्याः **पाणिं परिगृह्य** तदेतत् **तीर्थं जगति अप्रतिमम्** असदृशं **विधेहि**। अत्रैव रुग्मिणीविवाहोत्सवे सत्यस्यैव सकलतीर्थोत्तमत्वप्राप्तेरिति भावः । हे **कृष्ण सम्प्रति** इदानीं व्याप्तस्य ते तव यात्रागमनं **न नन्दयामः** नाङ्गीकुर्मः। व्याप्तस्य गगनवच्चलनायोगात् । कथञ्चित् स्वशक्त्या चलनसम्भवेऽपि यत्र जिगमिषा तत्रापि व्याप्ततया तवावस्थितेः किं यात्रयेति भावः ॥ ६० ॥

**नित्यं निजोरुस्थितभीष्मपुत्रीनृत्यद्घनोत्तुङ्गकुचग्रहस्य ।**
**प्रत्यूहशान्तीरिव काङ्क्षमाणश्चक्रे स शौरिर्ग्रहशान्तिकर्म ॥६१॥**

**व्या :** नित्यमिति । **स शौरिः** श्रीकृष्णः **नित्यं** सर्वदा **निजोरुस्थितायाः** लक्ष्मीरूपेण स्वाङ्कस्थितायाः **भीष्मपुत्र्याः** रुग्मिण्याः **नृत्यन्तौ घनौ** दृढौ **उत्तुङ्गा**वुन्नतौ **कुचौ** तयो**र्ग्रहस्य** ग्रहणस्य **प्रत्यूहशान्तीः** विघ्नपरिहारान् **काङ्क्षमाण इव ग्रहशान्तिकर्म** आदित्यादिग्रहपूजाकर्म **चक्रे** । ग्रहशान्तिकर्मणि कृते कुचग्रहणविघ्नशान्तिर्भविष्यतीत्यभिप्रायेण ग्रहशान्तिकर्म कृतमित्युपहासः । 'अनेन सकलदेवतापूज्यस्य कृष्णस्य ग्रहपूजाकरणमौपचारिकमिति द्योत्यते ॥

**रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि**
**प्रेम्णा चिन्तयतां विचित्रविमलश्लाघ्यार्थसन्दायिनि ।**
**सञ्जाते भुवि रुग्मिणीशविजये सद्वादिराजोदिते**
**सर्गः पञ्चदशो मुदामयमभूत् स्वर्गीश्वराणां कुले ॥ ६२ ॥**

**इति श्रीवादिराजतीर्थप्रणीतरुग्मिणीशविजये पञ्चदशः सर्गः ॥१५॥**

**व्या :** रोम्णामिति । **स्वर्गीश्वराणां** देवश्रेष्ठानां **कुले मुदां** सन्तोषाणां पञ्चदशः सर्गः सृष्टिरभूत् । बहुवारं सन्तोषो जात इत्यर्थः । काव्यपक्षे पञ्चदशसर्गोऽभूदित्यर्थः ॥६२॥

**॥ इति रुग्मिणीशविजयटीकायां गुरुभावप्रकाशिकायां पञ्चदशः सर्गः ॥**

*****

# षोडशः सर्गः

**स्वयंवरसमुद्योगे स्वयम्भुप्रमुखान् सुरान् ।**
**समागतान् समीक्ष्येत्थं बभाषे रुग्मिणीं सखी ॥ १ ॥**

स्वयंवराशा रुग्मिण्याः स्वयंवरविचारधीः ।
शुद्धिं विदध्यादस्माकं बुद्धेर्बुधमनोरमा ॥ १ ॥

**व्या :** श्रीकृष्णस्य सकलदेवोत्तमत्वं प्रतिपादयितुं रुग्मिण्याः स्वयंवरं वर्णयत्यस्मिन् सर्गे । अत्रादौ ब्रह्मादीन् यथास्वरूपं वर्णयन्ती सखी तेष्वस्वरसबीजं प्रदर्शयति – **स्वयंवरेति** । रुग्मिण्याः **स्वयंवरसमुद्योगे** स्वयमेव पतिवरणोद्योगे सति **समागतान्** विवाहदर्शनार्थमागतान् **स्वयम्भुप्रमुखान् सुरान् समीक्ष्य** सखी बुद्धिलक्षणा **सखी** इत्थं वक्ष्यमाणप्रकारेण **रुग्मिणीं बभाषे** । रुग्मिणी स्वविवाहदर्शनार्थमागतान् वीक्ष्य स्वबुद्ध्या इत्थं विचारितवतीत्यभिप्रायः ॥१॥

**कल्पादिवार्षु कमनीयफणीन्द्रतल्पे**
**लक्ष्म्या सहादिपुरुषस्य कृतालयस्य ।**
**मुक्तौघसेवितपदः किल नाभिदेशात्**
**पद्मं पुराऽजनि ततः सखि पद्मयोनिः ॥ २ ॥**

**व्या : कल्पादीति** । **पुरा** कल्पस्य ब्रह्मकल्पस्य आदिः तस्य वारीणि उदकानि तेषु **कल्पादिवार्षु** प्रलयोदकेष्वित्यर्थः । **कमनीयफणीन्द्रतल्पे लक्ष्म्या सह कृतालयस्य मुक्तौघैः सेवितः पत्** पादौ यस्य स तथोक्तस्तस्य । 'पद्द...'[१] इत्यादिना पदादेशः । **आदिपुरुषस्य** श्रीनारायणस्य **नाभिदेशात् पद्मम् अजनि** । जातम् । हे **सखि** रुग्मिणि **ततः** पद्मात् **पद्मयोनिः पद्मं** योनिर्यस्येति व्युत्पत्त्या पद्मयोनिपदवाच्यो ब्रह्मा **अजनि** । तस्य पद्माज्जातत्वे विवदमानं प्रति तन्नामैव प्रमाणीकृतं भवति । अनेन नारायणोत्पन्नत्वेन तत्सदृशत्वाभावोऽनङ्गीकारेऽस्वरसबीजं सूचितम् ॥ २ ॥

---

१ पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासच्छस्प्रभृतिषु । पा.सू. ६/१/६३

**आत्माभिधः स्वयमिति प्रथितो ह्यवाच्य-**
**स्तातोऽस्य यन्मुररिपुस्तदमुं मुनीन्द्राः ।**
**ख्यात्या स्वयम्भुवमजं विदुरात्मयोनिं**
**[1]चेतःस्थितश्रुतिततिं सखि वेदगर्भम् ।। ३ ।।**

**व्या :** ननु स्वयम्भुवादिपदवाच्यतया अनुत्पत्तिरित्यत आह – **आत्माभिध** इति। **यत्** यस्मात् कारणात् आत्मेत्यभिधा नाम यस्य सः । **स्वयमिति प्रथितः** प्रसिद्धः स्वयंशब्दवाच्य इत्यर्थः । अ इति शब्देन वाच्यः [2]अवाच्यः **मुररिपुः** नारायणः **अस्य** चतुर्मुखस्य **तातः** जनकः । **तत्** तस्मात् **मुनीन्द्राः ख्यात्या** नाम्ना स्वयं श्रीकृष्णः भूः उत्पत्तिस्थानं यस्येति **स्वयंभूः** तम् । आत् अकारवाच्यात् जात इति अजः तम् । आत्मा योनिः उत्पत्तिकारणं यस्येत्यात्मयोनिः तं विदुः । अन्यथा ''पद्मयोनिर्नाभिजन्मा अण्डजः'' इत्यादिजन्मप्रतिपादकनिरवकाशशब्दविरोधादिति भावः । वेदानां गर्भः प्रतिपाद्य इति भ्रान्तिं निवारयन्नाह **चेतःस्थितेति** । हे सखि रुग्मिणि चेतसि स्थितस्य तस्य विष्णोः प्रतिपादिका श्रुतिततिर्यस्येति अमुं [3]चतुर्मुखं **वेदा गर्भे** यस्येति तं **वेदगर्भं** विदुः ।। ३ ।।

**महोर्मिसङ्घातशताततताम्भस्यदृष्टसद्विष्टरपद्ममूलः ।**
**विधिर्विधिज्ञो विजिताक्षवृत्तिस्तपः स तेपे पितरं दिदृक्षुः ।।४।।**

**व्या : महोर्मीति । महोर्मिसङ्घातशतैः आततं** व्याप्तम् **अम्भः** प्रलयजलं तत्रा**दृष्टं सद्विष्टरम्** । स्वस्य समीचीनपीठं **पद्मं** तस्य **मूलं** कारणं येन स तथोक्तः। यतः परमात्मनो नाभेरिदं पद्ममुत्पन्नं तद्दर्शनशून्य इत्यर्थः । **विधिं** तदुचितकर्म जानातीति **विधिज्ञः** । **विजिताक्षवृत्तिः विजितः अक्षवृत्तिः** इन्द्रियव्यापारो

---

१ चेतस्थतच्छ्रुतिततिम् । (पा.)

२ साकल्येन अवाच्यः । इति वा । 'यतो वाचो निवर्तन्ते' इत्युक्तेः ।

३ ब्रह्माऽऽत्मभूः सुरज्येष्ठः स्वयम्भूश्चतुराननः । - इत्यमरकोशे

येन स तथोक्तः । स विधिः ब्रह्मा पितरं दिदृक्षुः सन् [१]तपस्तेपे । अज्ञानं तपःकरणं चात्रास्वरसबीजम् ॥ ४ ॥

**अथाम्बुकल्लोलविलोलडोलान्तरस्थनागाधिपभोगशय्याम् ।**
**फणासहस्रामलरत्नरश्मितृणीकृतार्कोडुपलक्षलक्ष्मीम् ॥ ५ ॥**

---

१ दिव्यं सहस्राब्दममोघदर्शनो जितानिलात्मा विजितोभयेन्द्रियः ।
अतप्यत स्माखिललोकतापनं तपस्तपीयांस्तपतां समाहितः ॥
- भागवते (२/९/८)

न वर्तते यत्र रजस्तमस्तयोः सत्वं च मिश्रं न च कालविक्रमः ।
न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः ॥
श्यामावदाताः शतपत्रलोचनाः पिशङ्गवस्त्राः सुरुचः सुपेशसः ।
सर्वे चतुर्बाहव उन्मिषन्मणिप्रवेकनिष्काभरणाः सुवर्चसः ॥
प्रवाळवैदूर्यमृणालवर्चसां परिस्फुरत्कुण्डलमौलिमालिनाम् ।
विद्योतमानप्रमदोत्तमाभिः सविद्युदभ्रावलिभिर्यथा नभः ॥
श्रीर्यत्र रूपिण्युरुगायपादयोः करोति मानं बहुधा विभूतिभिः ।
प्रेङ्खश्रिता या कुसुमाकरानुगैर्विगीयमाना प्रियकर्म गायती ॥
ददर्श तत्राखिलसात्वतां पतिं श्रियःपतिं यज्ञपतिं जगत्पतिम् ।
सुनन्दनन्दप्रबलार्हणादिभिः स्वपार्षदमुख्यैः परिसेवितं विभुम् ॥
भृत्यप्रसादाभिमुखं दृगासवैः प्रसन्नहासारुणलोचनाननम् ।
किरीटिनं कुण्डलिनं चतुर्भुजं पितांशुकं वक्षसि लक्षितं श्रिया ॥
अध्यर्हणीयासनमास्थितं परं वृतं चतुष्षोडशपञ्चशक्तिभिः ।
युक्तं भगैः स्वैरितरत्र चाधृवैः स्व एव धामन् रममाणमीश्वरम् ॥
तद्दर्शनाह्लादपरिप्लुतान्तरो हृष्यत्तनुः प्रेमभराश्रुलोचनः ।
ननाम पादाम्बुजमस्य विश्वसृग् यत् पारमहंस्येन पथाऽधिगम्यते ॥
तं प्रीयमाणं समुपस्थितं कविं प्रजाविसर्गे निजशासनार्हणम् ।
बभाष ईषत्स्मितशोचिषा गिरा प्रियः प्रियं प्रीतमनाः करे स्पृशत् ॥
- भागवते (२/९/१०-१८)

**व्या :** अथेति । अथ तपःकरणानन्तरं सः ब्रह्मा **फणासहस्रेषु** स्थितामल-**रत्नरश्मिभिः तृणीकृता अर्कोडुपयोः** सूर्याचन्द्रमसोः **लक्षस्य** शतसहस्रस्य **लक्ष्मीः** कान्तिर्यया सा ताम् । **अम्बुकल्लोला** एव प्रलयोदकमहातरङ्गा एव 'महत्सूल्लोलकल्लोलौ' इत्यमरः । **विलोलडोलायाः अन्तरे** मध्ये स्थितस्य **नागाधिपस्य** शेषस्य **भोग** एव शरीरमेव **शय्या** ताम् । अपश्यदित्युत्तरेणान्वयः । मुक्तौघसेवितपद इत्युक्तत्वान्मुक्तोऽयं शेष इति द्रष्टव्यम् ॥ ५ ॥

**अपश्यदस्यां सह सिन्धुपुत्र्या शयानमम्भोजविशालनेत्रम् ।**
**मनोज्ञदोर्दण्डसहस्रभासं प्रवालमृद्वङ्घ्र्यरुणीकृताशम् ॥ ६ ॥**

**व्या :** अपश्यदिति । **अस्यां** फणीन्द्रभोगशय्यायां **सिन्धुपुत्र्या** लक्ष्म्या **सह शयानम् अम्भोजविशालनेत्रं मनोज्ञदोर्दण्डानां सहस्रस्य** भाः कान्तिर्यस्य तम्। **प्रवालवत्** किसलयवत् मृदुना **अङ्घ्रिणा** अरुणीकृताः आशाः दिशो येन तं श्रीविष्णुमपश्यत् ॥ ६ ॥

**सुवर्णवर्णाम्बरशोभिमध्यमगण्यलावण्यसमुद्रहृद्यम् ।**
**विशालनीलाचलकल्पमल्पस्मिताननाधःकृतचन्द्रदर्पम् ॥७॥**

**व्या :** सुवर्णेति । **सुवर्णवद्वर्णो** यस्य तत् **अम्बरं** पीताम्बरमित्यर्थः । तेन **शोभि मध्यो** यस्य तत् । **अगण्यलावण्यसमुद्रेण** अपरिमितसौन्दर्यसमुद्रेण **हृद्यं मनोहरम्** । **विशालनीलाचलकल्पं** विस्तृतनीलपर्वतोपमम् । **अल्पं स्मितं** यस्य तेन **आननेनाधःकृतः** चन्द्रदर्पो येन तमपश्यदित्यन्वयः ॥ ७ ॥

**परिस्फुरत्कुण्डलहारकाञ्चीकिरीटमुद्राङ्गदनूपुराद्यैः ।**
**विराजितं तिग्ममरीचिरोचिःशरीरसम्भासितसर्वदेशम् ॥८॥**

**व्या :** परिस्फुरदिति । परिस्फुरत्कुण्डलहारकाञ्चीकिरीटमुद्राङ्गदनूपुराद्यैः आभरणौघैः **विराजितम्** । **तिग्ममरीचिः** सूर्यः तस्य **रोचिरिव** रोचिर्यस्य तत् **शरीरं** तेन **सम्भासितः** प्रकाशितः **सर्वदेशो** येन तमपश्यत् ॥ ८ ॥

**विशालवक्षःस्थलशोभिरत्नं विमुक्तशक्रार्कविरिञ्चिमुख्यैः ।**
**विचित्रभूषावलिभूषिताङ्गैर्विवृद्धभक्त्याऽवनतैः परीतम् ॥९॥**

**व्या :** विशालेति । विशालवक्षःस्थले शोभि रत्नं कौस्तुभं यस्य तम् । विचित्रभूषावलिभिः भूषितानि अङ्गानि येषां तेः । विवृद्धभक्त्या अवनतैर्नम्रैः । विमुक्तशक्रार्कविरिञ्चिमुख्यैः देवैः परीतं तमपश्यदिति योजना ॥ ९ ॥

**उन्नालाब्जवरातपत्रमहिराडुन्नम्रसिंहासनं**
**सन्नद्धोर्जितमुक्तभृत्यनिकरं मान्योर्मिसच्चामरम् ।**
**तन्नादाभिधदुन्दुभिं शुभयशश्चिह्नोक्तिभिर्बन्दिवत्**
**तन्नारायणचक्रवर्तिनमसावुन्मीलिताक्षं व्यधात् ॥ १० ॥**

**व्या :** उन्नालेति । असौ ब्रह्मा । उद्गतं नालमेवोर्ध्वनालं छत्रदण्डस्थानीयं यस्य तत् । अब्जं नाभिपद्ममेव वरम् आतपत्रं छत्रं यस्य तम् । अहिराडेव शेष एव उन्नम्रम् उन्नतं फणावलिभिः ऊर्ध्वभागे नम्रं च सिंहासनं यस्य तम् । सन्नद्धाः शङ्खचक्रादिसन्नाहयुक्ताः ऊर्जिता मुक्ता एव भृत्यास्तेषां निकरो यस्य तम् । मान्याः ऊर्मय एव सच्चामराणि यस्य तम् । तेषामूर्मीणां नादाभिधः दुंदुभिर्यस्य तम् । नारायणचक्रवर्तिनं बन्दिवत् स्तुतिपाठक इव शुभानि यशांसि चिह्नानि यासां ताभिः उक्तिभिः । श्रीकृष्णयशोङ्कितवचनैरित्यर्थः । उन्मीलिताक्षं व्यधात् । सुदर्शनधारिणि नारायणे चक्रं वर्तयतीति व्युत्पत्त्या साक्षादेव चक्रवर्तित्वस्य स्वभावसिद्धत्वादेकान्तेऽपि चक्रवर्तिनश्चिह्नं न मुञ्चतीति भावः ॥१०॥

**रमारमेशानुगृहीत एषः क्रमात् ससर्जाग्र इदं समस्तम् ।**
**सदाऽच्युताङ्घ्रिस्मरणेन धन्यस्तदीयभक्तेष्वयमग्रगण्यः ॥११॥**

**व्या :** रमेति । रमारमेशाभ्याम् अनुगृहीतः एषः ब्रह्मा अग्रे क्रमात् इदं समस्तं जगत् ससर्ज सृष्टवान् । 'सृजामि तन्नियुक्तोऽहम्'[1] इति वचनात् ।

---

१ भागवते २/६/३१

**सदा अच्युताङ्घ्रिस्मरणेन** धन्योऽयम् । 'यन्मे हृदौत्कण्ठ्यवता धृतो हरिः' इति[1] वचनात् । **तदीयभक्तेषु** विष्णुभक्तेषु **अग्रगण्यः** श्रेष्ठः । श्रीविष्णुप्रेरणाभावे सृष्टौ सामर्थ्याभावः । तद्ध्यानेन धन्यत्वं चात्रास्वरसबीजमिति ब्रह्माणमुद्दिश्य वचनमिदम् ॥ ११ ॥

**अयं सखि प्राणगणाधिनाथः स्वयम्भुवा सर्वगुणैः समानः ।**
**शिवादिदेवा व्यवदन्त पूर्वं ततोऽस्य सत्त्वं प्रकटीबभूव[2] ॥१२॥**

---

१ इति नारदं प्रति ब्रह्मवचनम् (भागवते २/६/३३)

२ तस्मात् पुनः सर्वसुराः प्रसूतास्ते जानमाना अपि निर्णयाय ।
निःसृत्य कायादुत पद्मयोनेः सम्प्राविशन् क्रमशो मारुतान्ताः ॥
पपात वायोर्गमनाच्छरीरं तस्यैव चावेशात उत्थितं पुनः ।
तस्मात् स एको विबुधप्रधान इत्याश्रिता देवगणास्तमेव ।
हरेर्विरिञ्चस्य च मध्यसंस्थितेस्तदन्यदेवाधिपतिः स मारुतः ॥
- म.भा.ता.नि.(३/२३,२४)

अहंश्रेयोविवादं तु येन कृत्वाऽखिलाः सुराः ।
असमर्थाः स्वरक्षायां स वायुः सुरनायकः ।
विवदन्तोऽखिला देवा ययुर्नारायणं प्रभुम् ।
अहं श्रेयानहं श्रेयानिति वायुपुरःसराः ।
उक्तं भगवता तेन येन त्यक्तेऽखिला अपि ।
स्थातुं न शक्ताः स श्रेयानित्युक्ताः पुनरागताः ।
उत्क्रान्ताश्च पुनः सर्वे तद्विज्ञास्ये ऐ पृथक्पृथक् ।
सुपर्णशेषरुद्रेन्द्रसूर्यादिषु पृथक्पृथक् ।
उत्क्रान्तेषु ब्रह्मदेहाच्छरीरं न पपात ह ।
ऋत उत्क्रान्तमेकं तु तदन्ये निवसन्ति च ।
प्राण उच्चिक्रमिषति स्थातुं नाशक्नुवन्परे ।
प्राणं विना न च ब्रह्मा तं विना प्राण एव च ।
अन्योन्यापाश्रयाच्छक्तौ स्थातुमन्ये कुतस्ततः ।
तस्मात् प्राणो वरो देवेष्विति सर्वेपि मेनिरे' इति पवमाने । - इति बृहद्भाष्ये

**व्या :** इदानीं वायुस्वरूपं वर्णयति । **अयमिति** । हे **सखि** रुग्मिणि **अयं** पुरोवर्ती **प्राणगणानाम्** इन्द्रियगणानाम् **अधिनाथः** मुख्यप्राणः **स्वयम्भुवा** ब्रह्मणा **सर्वगुणैः समानः पूर्वं** आदिकाले शिवादिदेवाः व्यवदन्त । अहं श्रेष्ठोऽहं श्रेष्ठ इति विवादमकुर्वन्त । ''अहमुक्थमस्म्यहमुक्थमस्मीति ता अब्रुवन्''[१] इति श्रुतेः। **ततो** विवादानन्तरम् । **अस्य** मुख्यप्राणस्य **सत्त्वं** बलं **प्रकटीबभूव**। ''तत्प्राणे उत्क्रान्तेऽपद्यत तत्प्राणे प्रपन्न उदतिष्ठत । तं देवा अब्रुवन् । त्वमुक्थमसि''[२] इति श्रुतेः । एवं शिवाद्युत्तमत्वेन सिद्धोऽप्ययं पूर्वोक्तब्रह्मसमान एव । न तत्पितृश्रीकृष्णसमान इत्येतदत्रास्वरसबीजम् ॥१२॥

**हरेर्मनुं जीवनिकायकाये जपन्नयं जीवयतीह विश्वम् ।**
**निजाङ्कमारोप्य[३] किलैनमार्ये जगत्पतिर्जातसुखं विधत्ते ॥१३॥**

**व्या : हरेरिति** । **हरेर्मनुं** हंसमन्त्रं **जीवनिकायकाये** प्राणिसमूहशरीरे स्थित्वा **जपन्नयं** मुख्यप्राणः **इह** लोके **विश्वं** सर्वं **जीवयति** । [४]हंसमन्त्रस्य

१ ऐतरेयोपनिषत् (१/४)

२ ऐतरेयोपनिषत् (१/४)

३ ''उद्यद्रविप्रकरसन्निभमच्युताङ्के स्वासीनम्'' - इति तन्त्रसारसङ्ग्रहे ॥ (४/६९)

४ श्वासरूपो जपो नित्यमुभयोर्विद्धदङ्ग्रयोः ।
एकविंशत्सहस्रात्मा सषट्शतमहर्निशम् ॥ - तन्त्रसारसङ्ग्रहे (४/२२)
अपि चानन्तजीवानां भवद्भूतभविष्यताम् ।
हृदि स्थित्वा पञ्चरूपी यस्य मन्त्रत्रयं सुधीः ॥
अहर्निशं चैकविंशत्सहस्रं षट्शताधिकम् ।
यथा भवति मानेन तथाऽनूनतया जपन् ॥
मुख्यप्राणो मम गुरुस्तस्य हंसात्मनो हरेः ।
मुख्यदासोऽभवन्नित्यमित्थं विष्णोर्महामनुम् ॥
अहर्निशं च जपतः स्यात् कदा मतिरन्यथा ।
हरौ कदाचित् स्पर्धाऽस्य यदि स्यान्न जपेत् सदा ॥

श्वासोच्छ्वासरूपत्वादिति भावः। हे **आर्ये** रुग्मिणि **जगत्पतिर्विष्णुः एनं मुख्यप्राणं निजाङ्कं** स्वोत्सङ्ग**मारोप्य जातसुखं** सम्पन्नानन्दं **विधत्ते किल**। 'अच्युताङ्के स्वासीनम्'[१] इति मुख्यप्राणध्यानादिति भावः । अत्र विष्णुमनुजापकत्वेन तद्दासत्वं तल्लालनार्हशिशुत्वं चास्वरसबीजम् ।। १३ ।।

**क्वचिद्धि रक्षोवशता सुराणां भवेदमुष्मिन्न कदापि साऽस्ति।**
**अयं किलाच्छिन्नमुकुन्दधर्मो[२] विरिञ्चतामेष्यति भाविकल्पे[३]।।१४।।**

**व्या : क्वचिदिति** । हे आर्ये **सुराणां** शिवादीनाम् । क्वचित्काले [४]**रक्षोवशता** असुरावेशेन तद्वशता **भवेत्**। **अमुष्मिन्** मुख्यप्राणे **कदापि** रक्षोवशता नास्ति 'तं वा हासुरा ऋत्वा विदध्वसुः'[५] इति श्रुतेः **अच्छिन्नाः** कदाचिदपि विच्छेदरहिताः **मुकुन्दधर्माः** हरिभक्त्यादयो यस्य सोऽयं मुख्यप्राणः **भाविकल्पे** भविष्यत्कल्पे विरिञ्चताम् एष्यति ।। १४ ।।

---

जपाभावेऽपि नष्टं स्याज्जगदेतच्चराचरम् ।
एवं च जीवनार्थी यः स वायोश्च श्रियःपतेः ।।
मत्यैक्यं पोषयेन्नित्यं दूषयेन्न कदाचन ।
दिने दिनेऽप्यसङ्ख्यातनानाजीवेष्वहर्निशम् ।।
अनन्तानन्तधा विष्णोर्मनुमेतमनुत्तमम् ।
जपन्नयं वायुदेवः सर्वजीवोत्तमो न किम् ।।

- इति सरसभारतीविलासे (८/७२-७८)

१ तन्त्रसारसङ्ग्रहवचनात् (४/६६)

२ शुद्धे भागवते धर्मे निरतो यद्वृकोदरः । - इति म.भा.ता.नि. (१८/४)

३ सोऽयं नवव्याकरणार्थवेत्ता ब्रह्मा भविष्यत्यपि ते प्रसादात् ।।
- इति वाल्मीकिरामायणे (७/३६/४७)

४ **प्राणस्य नासुरावेश आखणाश्मसमो हि सः** - इति छान्दोग्यभाष्ये

५ छान्दोग्योपनिषत् ( ३/७)

**पयोऽब्धिजं दुर्विषहं विषं प्राक् स्वयं पपौ नष्टजवं शिवोऽल्पम् ।**
**विमुक्तिमप्येष हरेर्निदेशात् प्रियाय दातुं प्रभुरम्बुजाक्षि ॥१५॥**

**व्या :** पयोब्धिजमिति । हे अम्बुजाक्षि एषः मुख्यप्राणः **स्वयं पयोब्धिजं** क्षीरसमुद्रमथनेनोत्पन्नम् । **दुर्विषहं** सोढुमशक्यं **विषं प्राक्** पूर्वं पपौ । **शिवो नष्टजवं** वायुना कराभ्यां मथनेन **नष्टः जवः** शीघ्रमारकत्वरूपो वेगः यस्य तत् । **अल्पं** मुख्यप्राणभुक्तशेषं स्वल्पं विषं **पपौ** । **'वायुरस्मा उपामन्थत्पिनष्टि स्मा कुनन्नमा । केशी विषस्य पात्रेण यद्रुद्रेणापिबत् सह'**[१] इति श्रुतेः ।

---

१ ऋग्वेदे (१०/१३६/७)। व्याख्यातोऽयं मन्त्रः श्रीवादिराजश्रीचरणैः महाभारत-तात्पर्यनिर्णयभावप्रकाशिकायाम् । (१०/१६) -
अस्य श्रुतेरयमर्थः - केशी=प्रशस्तकेशवान् सुखरूपनारायणाख्येशकत्व कुनन्नमा=कुत्सितकल्यादून् विशेषेण नमयत्यधः पान्तयतीति अन्धे तमसि मज्जयति इति कुनन्नमा=वायुः विषस्य पात्रेण=सुवर्णपात्रेण धृतं यद्विषं रुद्रेण सह अपिवत् तद्विषं अस्मै तुद्राय उपामन्थत्=उप उपपन्नं पानार्हं यथा भवति तथा अमथ्नात् । पिनाष्टि स्म =पिष्टकरोच्च । अस्मै उपामन्थदित्युक्त्या स्वस्मै मथनं नेति सिद्धम् । पात्र एव मथनं चेत् स्वस्मा अपि मथनं स्यात् । अतः पात्रादन्यत्रैव मथनं सिद्धम् । तच्च योग्यतया कर एवेति भावनाह – करे विमथ्येति । पानयोग्यं यथा भवति तथेत्युक्त्या विषस्यात्युग्रता निरस्तेति गम्यते इति भावनेहुः अस्तबलं विधायेति । अस्मा उपामनथदित्युक्त्या नतु स्वेन पीयमानमप्यमथ्नादिति लभ्यते । अत एव स्वयं त्वनिर्मथ्येत्याहुः । रुद्रेण सह वायुरपिबदित्युक्त्या वायोरेव मख्यापातृत्वं रुद्रस्य त्वमुख्यतः पातृत्वं च लभ्यते । सहयोगे अप्राधान्यस्य शिष्येण सहागतो गुरुरित्यादौ दर्शनात् । अनुशासनाच्च । अत एव किञ्चिद्गिरिशाय ददावित्याहुः । विषयपानेनापि रुद्रस्य रोदनमासीदिति सूचनाय रुद्रपादम् । 'सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्व'मिति हि श्रुतिः । एतदेवाभिप्रेत्याहुः 'स तत्पिकत्कण्ठगतेन तेन निपातितो मूर्च्छित आशु रुद्र' इति । सुखरूपनारायणस्य स्वहृदि धारणात् कुननन्नमत्वाच्च वायोस्तु विषपानेन दुःखलेशोऽपि नाभूदिति सूचनाय वायुरित्युक्तम् । 'वय गता' -तिति धातुः । एतदप्याहुः तदुतास्य जीर्णमिति । गोप्यत्वादयमर्थः नतु पुराणादौ स्पष्टमुदितः । सर्वज्ञत्वाद्देवाः श्रुत्युक्तमिमं सर्वमेकीकृत्य अस्तुवन्निति ग्रन्थकारस्य भावः ।

एष मुख्यप्राणः **हरेर्निदेशात् प्रियाय** भक्ताय विमुक्तिमपि मोक्षमपि **दातुं प्रभुः** समर्थः । 'विष्णुर्हि दाता मोक्षस्य वायुश्च तदनुज्ञया'[1] इति वचनात् ॥ १५ ॥

**इहावतीर्याथ हनूमदाख्यो [2]व्यधत्त सेवां स तु भीमरूपः ।**
**विभोर्विधत्तेऽद्य स मध्वरूपी विधास्यतेऽन्यैस्त्रिदशैरसाध्याम् ॥१६॥**

**व्या :** इहेति । हे सखि सः वायुः **इह** भूमौ **अवतीर्य हनूमदाख्यः** सन् **विभोः** स्वामिनः श्रीरामस्य **अन्यैः त्रिदशैः** देवैः [3]**असाध्याम्** अशक्यां **सेवां व्यधत्त**।

श्रान्तेषु तेष्वेक उरुक्रमस्त्वं सुधारसास्यै मुदितो ह्यमथ्नाः ।
तदा जगद्ग्रासि विषं समुत्थितं त्वदाज्ञया वायुरधात् करे निजे ॥
कलेः स्वरूपं तदतीव दुःसहं वराद्विधातुः सकलैश्च दुःस्पृशम् ।
करे विमथ्यास्तबलं विधाय ददौ स किञ्चिद्गिरिशाय वायुः ॥
स तत् पिबन् कण्ठगतेन तेन निपातितो मूर्छित आशु रुद्रः ।
हरेः करस्पर्शबलात् स सञ्ज्ञामवाप नीलोऽस्य गलस्तदाऽऽसीत् ॥
अथ त्वदाज्ञां पुरतो निधाय निधाय पात्रे तपनीयरूपे ।
स्वयं त्वनिर्मथ्य बलोपपन्नं पपौ स वायुस्तदुतास्य जीर्णम् ॥
अत्यल्पपानाच्च बभूव शूला शिवस्य शीर्ष्णश्च करावशिष्टम् ।
अभूत् कलिः सर्वजगत्सुपूर्णं पीत्वा विकारो न बभूव वायोः ॥
- म.भा.ता.नि.(१०/१३-१७)

'रुद्रस्य यशसोऽर्थाय स्वयं विष्णुर्विषं प्रभुः ।
न सञ्जह्रे समर्थोऽपि वायुं चोचे प्रशान्तये ॥' - भा.ता. (८/७/१९)

१ म.भा.ता.नि.(१/७८)

२ प्रथमो हनुमान् नाम द्वितीयो भीम एव च ।
पूर्णप्रज्ञस्तृतीयस्तु भगवत्कार्यसाधकः ॥
-इति म.भा.ता.नि. (२/१२९) उद्धृत भविष्यत्पर्ववचनम् ।

यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
बट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपुः
मध्वो यत् तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ॥ - इति श्रीमदाचार्यवचनम् ॥

३ 'आज्ञामन्यैरधार्याम् ...' - इति वायुस्तुतौ

भीमरूपः सन् विभोः श्रीकृष्णस्य सेवाम् अद्य अधुना विधत्ते। मध्वरूपी सन् विभोः वेदव्यासस्य सेवां करिष्यति[१]। अत्रापि सेवाकरत्वमेवास्वरसबीजम् ॥

**स्वबुद्धिसख्येत्थमुदीरिता सा कृपाकटाक्षेण निरीक्ष्य भैष्मी।**
**निजाङ्घ्रिपद्मावनतौ सुतौ तौ स्वकान्तमेतत्प्रभुमेव मेने ॥१७॥**

**व्या :** स्वबुद्धिसख्येति। **सा भैष्मी** रुग्मिणी **स्वबुद्धिसख्या इत्थं** उक्तप्रकारेण **उदीरिता** सती **निजाङ्घ्रिपद्मावनतौ तौ सुतौ** ब्रह्मवायू **कृपाकटाक्षेण निरीक्ष्य एतत्प्रभुमेव** एतयोर्ब्रह्मवाय्वोः प्रभुं स्वामिनं श्रीकृष्णमेव **स्वकान्तं** स्वपतिं **मेने** ॥१७॥

**भवोऽयमब्जासनलब्धजन्मा विहङ्गराजोऽयमहीश्वरोऽयम्।**
**समानविज्ञानबलप्रमोदा मुकुन्दसेवाभिरताः किलैते ॥ १८ ॥**

**व्या :** भवोऽयमिति। हे सखि **अब्जासनात्** चतुर्मुखात् **लब्धं** [२]**जन्म** यस्य सोऽयं **भवः** शिवः[३] **अयं** पुरोवर्ती **विहङ्गानां** पक्षिणां **राजा** गरुडः। **अयम् अहीनां** सर्पाणाम् **ईश्वरः** श्रेष्ठः शेषः **मुकुन्दसेवाभिरताः एते** शिवगरुडफणीश्वराः **समानाः विज्ञानबलप्रमोदाः** येषां ते तथोक्ताः। **किले**त्यनेनात्रास्वरसबीजं स्पष्टम् ॥ १८ ॥

---

'सर्वज्ञमन्यमनवेक्ष्य स कार्यवीर्यं ...' - इति मध्वविजये (२/२)

१ अद्यापि वदरीशैले बदरीषण्डमण्डिते।
मध्ये मुनिनामध्यास्ते विद्वान् व्यासस्य सन्निधौ ॥ -इति सरसभारतीविलासे। (७/१०)

२ यस्याः प्रसादात् परमं विदन्ति शेषः सुपर्णो गिरिशः सुरेन्द्रः।
माता च येषां प्रथमैव भारती सा द्रौपदी नाम बभूव भूमौ ॥
या मारुताद्गर्भमधत्त पूर्वं शेषं सुपर्णं गिरिशं सुरेन्द्रम्।
चतुर्मुखाभांश्चतुरः कुमारान् सा द्रौपदी नाम बभूव भूमौ ॥
- म.भा.ता.नि. (२/१७०,१७१)

१ अग्रे शिवोऽहम्भव एव - इति म.भा.ता.नि.(३/२८)

**शर्वः सुपर्वरिपुगर्वविभेददक्षः**
**पूर्वं पुरत्रयमयं किल देव्यजैषीत् ।**
**हर्यङ्घ्रितीर्थपरिपूतकपर्दमेनं**
**गौर्यत्यसाध्यमपि तं वशयाम्बभूव ॥१९॥**

**व्या :** सम्मुग्धाकारेणोक्तं क्रमेणैकैकं विविच्य वर्णयति । **शर्व** इति । हे देवि रुग्मिणि अयं **शर्वः सुपर्वाणां** देवानां **रिपवो** अप्रिया राक्षसास्तेषां **गर्वविभेदे दक्षः** समर्थः अतिशौर्यवानित्यर्थः । तदेव शौर्यमेकत्र शृङ्गिग्राहिकया दर्शयति । **पूर्वं** पुरा **पुरत्रयम्** अजेयदैत्यसमेतपुरत्रयम् **अजैषीत् किल** । गुणान्तरं वदति । गौरी पार्वती हरेः **श्रीकृष्णस्याङ्घ्रितीर्थं** पादतीर्थं तेन **परिपूतः कपर्दो** जटाजूटो यस्य सः **तम्** । अत्यसाध्यं वैराग्याभिमानित्वात् स्त्रीभिः वशीकर्तुमशक्यमपि तमेनं शिवं **वशयाम्बभूव** वशीचकार। अत्र श्रीविष्णुपादोदकधारणं स्त्र्यन्तरपरिग्रहश्चास्वरसबीजम्। **गौरीत्यनेन** परिगृहीतस्त्र्यंतरस्यातिसौन्दर्यम् अस्वरसबीजं च द्योत्यते । अतिसौन्दर्यवद्वनितान्तरोपेतस्त्याज्य इति भावः ॥ १९ ॥

**पुच्छेन कच्छपतनोः पवनस्य पृष्ठ-**
**मच्छोऽवलम्ब्य सरिदर्णवशैलपूर्णाम् ।**
**सिद्धार्थखण्डमिव कुण्डलिराट् सुपृथ्वीं**
**पृथ्वीमयं किल बिभर्ति फणातपत्रे ॥ २० ॥**

**व्या :** इदानीं शेषमभिवर्णयति । **पुच्छेनेति** । अच्छः शुभ्रः अयं **कुण्डलिराट्** अहीश्वरः **कच्छपतनोः पवनस्य** वायोः **पृष्ठं पुच्छेन** **स्वपुच्छेनावलम्ब्य** आश्रित्य **सरिदर्णवशैलपूर्णाम्** अत एव **सुपृथ्वीं** बहुविस्तारवतीं पृथ्वीं भूमिं **फणातपत्रे सिद्धार्थखण्डमिव**[१] सर्षपखण्डमिव **बिभर्ति किल** । एतादृशोऽपि

---

१ तस्य मूलदेशो त्रिंशद्योजनसहस्रान्तर आस्ते या वै कला भगवतस्तामसी समाख्याताऽनन्त इति सात्वतीया द्रष्टृदृश्ययोः सन्निकर्षणमहमित्यभिमानलक्षणं यं

श्रीकृष्णपुत्रवायुकूर्माश्रय इत्यत्रास्वरसबीजम् ॥ २० ॥

**सोऽयं गरुज्जनिमरुज्जवचालिताद्रि-**
**द्वीपाम्बुराशिरहिवर्ण्यबलः सुपर्णः[१] ।**

---

सङ्कर्षणमित्याचक्षते। तस्येदं क्षितिमण्डलं भगवतोऽनन्तमूर्तेः सहस्रशिरस एकस्मिन्नेव शिरसि ध्रियमाणं सिद्धार्थ इव लक्ष्यते । -भागवते(५/२४/३२)

सहस्रमूर्ध्नोऽस्य बतैकमूर्धनि ससप्तपातालगिरीन्द्रसागरा ।
धराऽखिलेयं ननु सर्षपायति प्रसह्य को नाम हरेत् तमेनम् ॥
- म.भा.ता.नि.(८/८८)

एतस्मिन् एव काले तु क्षीरोदे सागरोत्तमे । निवासे देवदेवस्य शङ्खचक्रगदाभृतः ॥
उपासीनो महाबाहुः श्रीमान् वैरोचनो बलिः । जहार देवदेवस्य किरीटं रत्नचित्रितम् ॥
इन्द्रनीलसहस्राढ्यं गोमेदकशताचितम् । पद्मरागमहानीलमुक्ताफलविराजितम् ॥
पुष्यरागप्रवालाढ्यं दिव्यकाञ्चननिर्मितम् । हृतं दानववीरेण विदित्वा पुरपालकः ॥
तमन्वधावत् त्वरितं वैनतेयो विहङ्गराट् । तमन्तरे समासाद्य दानवेन्द्रं दुरासदम् ॥
कृत्वा युद्धं महाघोरं जित्वा दानवपुङ्गवम् । गृहीत्वा रत्ननिचयं किरीटं भास्करोपमम् ॥
आगच्छन् ददृशे देवं देवकीनन्दनं हरिम् । वसन्तं साग्रजं रम्ये गोमन्ते पर्वतोपमे ॥
तस्य मूर्ध्नि निधायाशु किरीटं दिव्यभूषणम् । प्रणम्य पादयोर्मूर्ध्ना स्तोतुं तमुपचक्रमे ॥
- भागवते(१०/५३/७-१३)

बहूनि स्थानजातानि कृष्णस्य क्षीरसागरे । कानिचिन्मुक्तगम्यानि नामुक्तैस्त्रिदशैरपि ॥
गन्तुं शक्यान्यथान्यानि गम्यान्यन्यैरपि क्वचित् । तत्र देवाश्च योगीन्द्रा भक्ताश्चान्ये जनार्दनम् ॥
गत्वाऽर्चयन्ति देवेशं बलिस्तत्रागमत् क्वचित् । तस्य तत्रासुरावेशात् पापबुद्धिरजायत ॥
तद्व्यक्त्यर्थं जगन्नाथः शिश्ये सुप्तवदव्ययः । तदा स पापया बुद्ध्या किरीटमहरद्विभोः ॥
तं जित्वा गरुडस्तत्तु हृत्वा गोमन्तमाव्रजत् । तत्र कृष्णस्य शिरसि किरीटममुचत् प्रभोः ॥
- इति मात्स्ये । - भा.ता. (१०/५३/८)

१ तदा दुग्धाब्धौ संसृतिस्थैः सुराद्यैः पूजां प्राप्तुं स्थानमेषां च योग्यम् ।
मुक्तस्थानादाप नारायणोऽजो बलिश्चागात् तत्र सन्द्रष्टुमीशम् ॥
तत्रासुरावेशममुष्य विष्णुः सन्दर्शयन् सुप्तिहीनोऽपि नित्यम् ।
संसुप्तवच्छिश्य उदारकर्मा सञ्ज्ञायै देवानां मुखमीक्ष्याप्रमेयः ॥
देवाश्च तद्भावविदोऽखिलाश्च निमीलिताक्षाः शयनेषु शिश्यिरे ।

**प्रादान्नियुध्य बलिना बलिना समं यो**
**गोमन्तमूर्ध्नि मुकुटं निजदेवतायै ॥ २१ ॥**

**व्या :** गरुडं प्रति वदति । **सोऽयमिति** । हे सखि अहिभिः शत्रुभिः सर्पैर्वर्ण्यं स्तुत्यं बलं यस्य सोऽयं सुपर्णः गरुद्भ्यं पक्षाभ्यां जनिरुत्पत्तिर्यस्य तस्य मरुतो वायोः जवेन वेगेन **चालिताः अद्रिद्वीपाम्बुराशयो** येन स तथोक्तः । अतिसमर्थ इत्यर्थः । यः **सुपर्णः** बलिना सामर्थ्यवता । **बलिना** श्रीविष्णुमुकुटापहारिणा महाबलिना **समं** नियुध्य **गोमन्तमूर्ध्नि** गोमन्ताख्यपर्वताग्रे **निजदेवतायै** स्वस्वामिने श्रीकृष्णाय **मुकुटं** प्रादात् । कथा तु भागवतादौ[१] स्पष्टा द्रष्टव्या । अत्रान्यसेवाकारित्वं श्रीविष्णुपरदेवताकत्वं चास्वरसबीजम् ॥ २१ ॥

**स विष्णुवाहत्वमवाप[२] ताक्ष्र्यस्तपोभिरप्यन्यसुरैरसाध्यम् ।**
**तदीयतल्पत्वमहीश्वरोऽयं विमुक्तिमार्गौ किल तौ सुराणाम् ॥२२॥**

---

तदा बलिस्तस्य विष्णोः किरीटमादायागाज्जहसुस्तत्र देवाः ॥
नारायणे सर्वदेवैः समेते ब्रह्मादिभिर्हासमाने सुपर्णः ।
गत्वा पातालं युधि जित्वा बलिं च किरीटमादायाभ्ययाद्यत्र कृष्णः ॥
तत् तस्य शीर्ष्णि प्रतिमुच्य नत्वा खगः स्तुत्वा देवदेवं रमेशम् ।
स्मृत आगच्छेत्येव विसर्जितोऽमुना ययौ दुग्धाब्धिं यत्र नारायणोऽसौ ॥
किरीटं तत् कृष्णमूर्ध्नि प्रविष्टं तत्तुल्यमासीत् तस्य रूपेष्वभेदात् ।
तदिच्छया चैव नारायणस्य शीर्ष्ण्यप्यासीद्युगपद्दुग्धवार्धौ ॥
- म.भा.ता.नि.(१६/४-९)

१ हरिवंशे (२/३७-४८); म.भा.ता.नि.(१६/४-९)

२ तत्पादपङ्कजमहासनतामवाप शर्वादिवन्द्यचरणो यदपाङ्गलेशम् ।
आश्रित्य नागपतिरन्यसुरैर्दुरापां श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥
नागारिरुग्रबलपौरुष आप विष्णोर्वाहत्वमुत्तमजवो यदपाङ्गलेशम् ।
आश्रित्य शक्रमुखदेवगणैरचिन्त्यं श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥
-इति द्वादशस्तोत्रे । (७/७,८)

**व्या :** पुनरपि सुपर्णशेषयोः स्वरूपं वर्णयति । **स** इति । **स ताक्ष्यों** गरुडः अन्यसुरैरिन्द्रादिभिः **तपोभिरप्यसाध्यम्** 'कर्तृकरणयोस्तृतीया'[१] । श्रीविष्णु-वाहत्वं **श्रीविष्णुवाहनत्वं** तपोभिरवाप । **अयमहीश्वरोऽपि** तपोभिस्तदीय-तल्पत्वमवाप । **तौ** गरुडशेषौ **सुराणां** स्वावरदेवानाम् । **विमुक्तिमार्गौ** मोक्षस्य मार्गभूतौ किलेत्यनेन केचन देवाः गरुडमाविश्य विमुक्तिं गच्छन्ति केचन शेषमाविश्येति शास्त्रप्रसिद्धिं द्योतयति ॥ २२ ॥

**गरुत्मदंसाचलनीलमेघं फणीन्द्रहारोच्चयनीलरत्नम् ।**
**उमेशहंसप्रियपादपद्मं पतिं सती सा चकमे रमेशम् ॥ २३ ॥**

**व्या :** पूर्वोक्तास्वरसबीजं स्पष्टयन्ती रुग्मिणी तान् विहाय तत्पतिं श्रीकृष्णमेवैच्छदित्याह कविः । **गरुत्मदंसेति** । **सा सती** रुग्मिणी **गरुत्मदंस** एवाचलः पर्वतः तत्र **नीलमेघ** इव तम् । गरुडांसमारूढमित्यर्थः । **फणीन्द्रः** शेष एव **हारोच्चयस्तत्र** मध्यनायकत्वेन विद्यमानं **नीलरत्नं** फणीन्द्रतल्पे स्थित-मित्यर्थः । **उमेश** एव हंसः **हंसपक्षी** तस्य **प्रियमिष्टं पादपद्मं** यस्य तम् । पादोदकस्य शिवेन शिरसि धृतत्वादिति भावः । **रमेशं** श्रीकृष्णं पतिं **चकमे** ऐच्छत् ॥ २३ ॥

**त्रिविष्टपेशोऽयमभूद्बलारिस्त्रिविक्रमश्रीचरणप्रसादात् ।**
**विमथ्नता तेन पयः पयोधिं विचित्रसौभाग्यवृतः कृतोऽसौ ॥२४॥**

**व्या :** इन्द्रं वर्णयति । **त्रिविष्टपेश** इति । हे सखि **अयं** बलस्य बलनामकस्यासुरस्यारिः शत्रुः इन्द्रः **त्रिविक्रमस्य** उपेन्द्रस्य नारायणस्य **श्रीचरणप्रसादात्** त्रिविष्टपस्य स्वर्गस्य **ईशः अभूत्** । पयांस्येव क्षीराण्येव पयांसि उदकानि धीयन्ते पूर्यन्ते अस्मिन्निति स तथा तम् । **पयः पयोब्धिं** क्षीरसमुद्रं **विमथ्नता तेन**

---

१ पा.सू. २/३/१८

नारायणेनासाविन्द्रः **विचित्रसौभाग्यैः** महार्हरत्नपारिजातादिभाग्यैः **वृतः** कृतः। अत्रास्वरसबीजं स्पष्टम् ॥ २४ ॥

**कल्पद्रुमः करिवरः कविवर्ण्यवाजी**
**नित्यं वशेऽस्य किल देवि सभां स दैवीम् ।**
**मध्ये महासनगतः परिपात्यजस्र-**
**मिन्द्रोऽयमिन्द्रपदयोग्यमहाविभूतिः ॥ २५ ॥**

**व्या :** तदेव सौभाग्यं विविच्य वदति । कल्पद्रुम इति । हे देवि **कल्पद्रुमः** कल्पवृक्षाः **करिवरः** गजेन्द्रः ऐरावतः । **कविवर्ण्यः** स्तुत्यः **वाजी** उच्चैःश्रवाः अस्येन्द्रस्य **वशे नित्यं** सन्ति **किल** । हे सखि इन्द्र इति **पदस्य** शब्दस्य **योग्या** उचिता **महाविभूतिः** परमैश्वर्यं यस्य स तथोक्तः । 'इदि परमैश्वर्ये'[1] इति धातोः । सोऽयमिन्द्रः **मध्ये** सभामध्ये **महासनगतः** सिंहासनगतः सन् **दैवीं** देवतासम्बन्धिनीं **सभां अजस्रं पाति** शास्ति ॥ २५ ॥

**अयं सुराणां गुरुरेष धर्मः सुधाकरोऽसौ स सहस्ररश्मिः ।**
**अयं च रत्नाकरशब्दितोऽग्र्ये महत्त्वमेषामभिधैव वक्ति ॥२६॥**

**व्या :** इदानीं देवतासमुदायं प्रति वदति । अयमिति । हे **अग्र्ये** श्रेष्ठे रुग्मिणि। **अग्र्य** इति सम्बोधयन्ती सखी त्वमेतेभ्योऽपि श्रेष्ठा कथमवरान् वरयसीति ध्वनयति। **अयं** बृहस्पतिः **सुराणां गुरुः एषः** यमः **धर्मः** धर्मप्रवर्तकत्वाद्धर्मनामा **असौ** चन्द्रः **सुधाकरः** अमृतकरः । **स** सूर्यः **सहस्ररश्मिः** । **अयं** वरुणश्च **रत्नाकरशब्दितः** रत्नाकरशब्दवाच्यः । एतेषां बृहस्पत्यादीनां **महत्त्वं** श्रैष्ठ्यम् **अभिधैव** नामैव **वक्ति** ॥२६॥

**इमे सुराः श्रीपतिनित्यसेवावियोगभीत्याऽनिमिषा विनिद्राः ।**
**प्रपेदिरे तत्करुणाप्रभूतसुधारसास्वादनतोऽमरत्वम् ॥ २७ ॥**

---

१ ऐतरेयभाष्ये

**व्या :** इमे सुरा इति । हे अग्रये श्रीपतेः श्रीकृष्णस्य **नित्यसेवावियोगभीत्या अनिमिषाः** निमेषरहिताः **विनिद्राः** अस्वप्राः इमे सुरास्तस्य लक्ष्मीपतेः करुणया प्रभूतः **सुधारसस्तस्यास्वादनतोऽमरत्वं प्रपेदिरे** ॥ २७ ॥

**मरुत्वदत्युच्छ्रितभाग्यहेतुं सुरौघसञ्जीवनमूलभूतम् ।**
**नरांस्तृणीकृत्य जगाम भैष्मी परिस्फुरद्भूषणभूषणाङ्गी ॥२८॥**

**व्या :** मरुत्वदिति । **मरुत्वत** इन्द्रस्य **अत्युच्छ्रितभाग्यहेतुं सुरौघस्य संजीवनम**मृतं तस्य **मूलभूतं** कारणभूतं श्रीकृष्णं **परिस्फुरद्भूषणानां भूषणभूतानि** अङ्गानि यस्याः सा **भैष्मी नरान् तृणीकृत्य** श्रीकृष्णवरणार्थं **जगाम** ॥ २८ ॥

**अयं मुकुन्दः सखि चित्प्रमोदमयाव्ययाङ्गोऽखिलदोषशून्यः ।**
**अवातरद्विश्वजनस्य गुप्त्यै गुणाम्बुराशिः किल भूतलेऽस्मिन् ॥२९॥**

**व्या :** इदानीं वरणीयश्रीकृष्णस्य महत्त्वं पूर्वोक्तेभ्यो विशिनष्टि । **अयमिति** । हे **सखि अयं** श्रीकृष्णः **मुकुन्दः** मोक्षप्रदः **किल** । **चित्** ज्ञानं सा च **प्रमोदो** आनन्दः स च चित्प्रमोदौ । तावेव तन्मयानि **अव्ययाङ्गानि** नाशरहिताङ्गानि यस्य स तथोक्तः तम् । **अखिलदोषशून्यः** । गुणैरम्बुराशिरिव समुद्र इव । **गुणाम्बुराशिः** मोक्षप्रदत्वादिगुणसमुद्रः श्रीकृष्णः **विश्वजनस्य गुप्त्यै** रक्षणायास्मिन् भूतले **अवातरत्** किल ॥ २९ ॥

**जगज्जनिस्थेमलयादिधर्मा भवन्त्यमुष्मात् किल शास्त्रयोनेः ।**
**अमुष्य साम्यं कतमः सुराणामुपैति यद्रोमसु विश्वकोशाः ॥३०॥**

**व्या :** जगदिति । हे सखि **जगतः** विश्वस्य **जनिरु**त्पत्तिः **स्थेमा** स्थितिः **लयो** नाशः एते आदयो येषां **धर्मा**णाम् । आदिशब्देन ज्ञानाज्ञानबन्धमोक्षादि गृह्यन्ते शास्त्रं योनिः प्रमाणं यस्य । अनेन उक्तवक्ष्यमाणश्रीकृष्णमाहात्म्य-प्रतिपादकशास्त्रं प्रमाणमुक्तं भवति । ''जन्माद्यस्य यतः''[1] 'शास्त्रयोनित्वात्'[2]

१ ब्रह्मसूत्रम् (१/१/२)   २. ब्रह्मसूत्रम् (१/१/३)

इत्यादिसूत्रमुख्यार्थोऽयमिति सूच्यते । **तस्मादमुष्मात् भवन्ति किल** । यद्रोमसु [१]**विश्वकोशाः** ब्रह्माण्डानि तिष्ठन्तीति । **अमुष्य** श्रीकृष्णस्य **साम्यं सुराणां** मध्ये **कतमः** सुरः **उपैति** । न कोऽपीत्यर्थः । एतादृशमाहात्म्यस्यान्यत्राभावादिति भावः ॥ ३० ॥

**समस्तवेदाः किल सेतिहासाः पुराणयुक्ताः स्मृतिभिः [२]सहैनम् ।**
**समानशून्यं प्रभुमामनन्ति प्रमथ्य योऽब्धिं लभते स्म लक्ष्मीम् ॥३१॥**

**व्या :** समस्तेति । **सेतिहासाः पुराणयुक्ताः समस्तवेदाः स्मृतिभिः** सह एनं **प्रभुं** श्रीकृष्णं **समानशून्यं आमनन्ति** । "न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप"[३] । "नास्ति नारायणसमम्"[४] इत्यादेः । युक्तिं चाह । **यः** कृष्णः **अब्धिं** विमथ्य **लक्ष्मीं लभते स्म** । अलभत । तव मूलरूपे पतिरयम् अधुनाऽपि वरणार्ह इति सूचितम् ॥ ३१ ॥

**यदीयपादोऽण्डकटाहभेदी विधातृहस्तार्हणसारवेदी ।**
**मृगाक्षि सोऽयं विविधावतारवियोजितात्युद्धतभूमिभारः ॥३२॥**

---

१ 'यस्मिन् परेऽन्येप्यजजीवकोशाः सहस्रशो यत्र वयं भ्रमामः' - इति भाग. (९/६/४५)

२ वेदे रामायणे चैव पुराणे भारते तथा ।
आदावंते च मध्ये च विष्णुः सर्वत्र गीयते ॥ -इति हरिवंशेषु ॥
आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥ -इति भारते
अर्थोऽयमेव निखिलैरपि वेदवाक्यै रामायणैः सहितभारतपञ्चरात्रैः ।
अन्यैश्च शास्त्रवचनैः सह तत्त्वसूत्रैर्निर्णीयते सहृदयं हरिणा सदैव ॥
- इति म.भा.ता.नि. ॥(१/२२)

३ ऋग्वेदे ७/९९/२

४ म.भा.ता.निर्णयोद्धृतभारतवचनम् (१/१/११) PPS Sastry Edition

**व्या** : यदीयेति । अण्डकटाहभेदी ब्रह्माण्डाख्यकटाहविशेषभेदी यस्य श्रीकृष्णस्य सम्बन्धी यदीयः स चासौ पादः विधातुर्ब्रह्मणः हस्तेन क्रियमाणं पादप्रक्षालनरूपा पूजा तस्य सारवेदी । हे मृगाक्षि सोऽयं श्रीकृष्णः विविधावतारैः वियोजितः उद्धतः अत्युद्धतः अतिशयितः भूमिभारो येन स तथोक्तः । अनेनापि सर्वोत्तमत्वमेव स्पष्टीकृतं भवति ॥ ३२ ॥

**विवेकसख्येति विबोधिता सा बभूव तूष्णीं कमलाऽऽत्तमाला ।**
**प्रहर्षचिह्नानि परं तदोचुः प्रभुं तमाकाङ्क्षति रुग्मिणीति ॥३३॥**

**व्या** : विवेकेति । विवेकसख्या बुद्धिसख्या । इति उक्तप्रकारेण विबोधिता सा आत्तमाला गृहीतमाला कमला रुग्मिणी तूष्णीं बभूव । लज्जावशादयमेव मे पतिर्भूयादिति नोक्तवतीत्यर्थः । तदा परं केवलं प्रहर्षचिह्नानि रोमोद्गमादीनि तं प्रभुं श्रीकृष्णं रुग्मिणी आकाङ्क्षति इत्यूचुः ॥ ३३ ॥

**तयोर्मुहूर्तावधि मध्यदत्तपटं विनिर्भिद्य मिथः स्पृशन्त्यः ।**
**प्रभाः सदाऽखण्डितयोगभाग्यं विबोधयन्ति स्म विवेकभाजः ॥३४॥**

**व्या** : तयोरिति । मुहूर्तावधि पाणिग्रहणमुहूर्तपर्यन्तम् । तयोः रुग्मिणी-श्रीकृष्णयोर्मध्ये दत्तपटं तिरस्करणीयरूपपटं विनिर्भिद्य मिथः रुग्मिणीप्रभाः श्रीकृष्णं श्रीकृष्णप्रभाः रुग्मिणीमिति परस्परं स्पृशन्त्यः पटस्य सूक्ष्मत्वात् कान्तेरतिशयितत्वाच्चान्योन्याभिगमनमिति भावः । प्रभाः कान्तयः । विवेकभाजः ज्ञानिनः पुरुषान् प्रति सदा अखण्डितयोगस्य भाग्यं विबोधयन्ति स्म । योगविघटनार्थं तयोर्मध्ये पटे दत्तेऽपि योगविघटनाभावादिति भावः ॥३४॥

**सीतास्वयंवरमहोत्सवगानकाले**
**जातौ रमापुलकमाधवमन्दहासौ ।**

**सा जानकीयमयमेव हि रामचन्द्रः**
**किं तन्मुहूर्तकथयेति हि शंसतः स्म ।। ३५ ।।**

**व्या :** सीतेति । सीतायाः **स्वयंवरमहोत्सवगानकाले** मङ्गलार्थं सीतास्वयंवरवर्णनगाथाकाले **जातौ** रमायाः रुग्मिण्याः पुलकः माधवस्य श्रीकृष्णस्य मन्दहासश्च **रमापुलकमाधवमन्दहासौ** । **सा जानकी** सीता **इयं** रुग्मिणी **स रामचन्द्रः अयमेव** श्रीकृष्ण एव अतः **तन्मुहूर्तकथया** रुग्मिणीश्रीकृष्णमुहूर्तावधिकथनेन **किं** प्रयोजनमिति **शंसतः स्म** । अन्ययोर्विवाहवार्तायां ततोऽन्ययोः पुलकादौ कारणाभावेन इमावेव सीतारामाविति द्रष्टॄणां मतिरासीदिति भावः ।।३५।।

**आसीत् परस्परनिरीक्षणकर्मकाले**
**भैष्मीमुखाम्बुजगतं नयनं मुरारेः ।**
**तस्याश्च नाभिसरसीनिलयं तदेत-**
**द्युक्तं यदर्कदृगसावियमुत्पलाक्षी ।।३६।।**

**व्या :** आसीदिति । **परस्परनिरीक्षणकर्मकाले मुरारेः** श्रीकृष्णस्य **नयनं भैष्मीमुखाम्बुजगतं** रुग्मिणिमुखारविन्दे निपतितमासीत् । **तस्याः** रुग्मिण्याः नयनं च मुरारेः **नाभिरेव सरसी** सरोवरं सैव **निलयो** गृहं यस्य स तथोक्तमासीत् । तत्र निपतितमित्यर्थः । अनेन नवोढायाः लज्जा सूच्यते । तदेतत्कृष्णनयनस्य मुखाम्बुजे पातः रुग्मिणीनयनस्य नाभिसरस्यां पात इत्येतद्युक्तं हि उचितं हि । **यत्** यस्मात् कारणादसौ श्रीकृष्णः अर्कः दृशि यस्यासौ **अर्कदृक्** इयं रुग्मिणी **उत्पलाक्षी** । अर्कस्य कमलप्रियत्वादुत्पलस्य सरसिजातत्वात् स्थित्यर्थं तदपेक्षणादिति भावः ।। ३६ ।।

**गुडान्विताभिः शुभजीरिकाभिः परस्परं वर्षति बन्धुवर्गे ।**
**वक्षःस्थिताम्भोधिसुताजितस्तत्पक्ष्यैः प्रयुक्तं प्रथमं बभार ।।३७।।**

**व्या :** गुडेति । **बन्धुवर्गे** । **गुडान्विताभिः शुभजीरिकाभिः** शोभनजीरिकाभिः । **परस्परं** परस्परमुपरि **वर्षति** सति **वक्षःस्थिताम्भोधिसुताजितः** श्रीकृष्णः रमायाः श्रीकृष्णवक्षः समाक्रम्य स्थितत्वेन तया जित इत्यर्थः । **तत्पक्ष्यैः** रुग्मिणीपक्षीयैः **प्रयुक्तं** गुडजीरिकासमूहं **प्रथमं** पूर्वं **बभार** धृतवान् । वधूवरयोर्मध्ये पुरुषप्रयुक्तं जीरिकादिकं प्रथमं कन्योपरि पतति चेत् पुरुषो जयवान् कन्याप्रयुक्तं पुरुषोपरि पतति चेत् कन्या जयवतीति लोकप्रवादः । अत्र रमारूपेण वक्षः समाक्रम्य स्थितायाः कन्यायाः जयः स्पष्ट एवेति तत्प्रयुक्तजीरिकाः श्रीकृष्ण एव प्रथमं बभारेति भावः ॥ ३७ ॥

**आकण्ठमा पादतलान्मुरारेर्नेत्रान्तनीलोत्पलचारुमालाम् ।**
**श्रीः सन्दधे तत्क्षणहृष्टरोमसत्कञ्चुकं श्रीपतिरात्मपत्न्याम् ॥३८॥**

**व्या :** आकण्ठमिति । **श्रीः** रुग्मिणी **नेत्रान्त** एव **नीलोत्पलानि** तेषाम् । **चारुमालां मुरारेः** श्रीकृष्णस्यापादतलात् पादमारभ्य कण्ठात् आ **आकण्ठम्** । अव्ययीभावसमासस्यानित्यत्वादापादतलादित्यत्र **आ** इति भिन्नं पदम् । आकण्ठमित्यत्र समस्तम् । **सन्दधे** संक्षिप्तवती । लज्जावशात् मुखमदृष्ट्वा पादतलमारभ्य क्रमेण कण्ठपर्यन्तं दृष्टवती । मालाऽपि पादमारभ्य कण्ठपर्यन्तं स्थापनीयेत्यर्थः । **श्रीपतिः** श्रीकृष्णः **आत्मपत्न्यां** स्वभार्यायां रुग्मिण्याम् । **तत्क्षणे** लावण्यभरितस्वगात्रावयवनिरीक्षणकाले **हृष्टरोमाख्यसत्कञ्चुकं** सन्दधे । श्रीकृष्णसन्दर्शनेन रुग्मिण्या रोमाञ्चो जात इत्यर्थः । भर्तृजनितानन्दस्य हृदन्तरजृंभणात् । बहिस्तु परितः स्थितेषु करोरःपृष्ठदेशेष्वेव रोमोद्गमस्य जातत्वात् तस्यैव कञ्चुकोपमात्वम् । विवाहकाले कन्यया माला दातव्या । वरेण कञ्चुकादिकं त्विति तदुभयमलौकिकयोः स्त्रीपुरुषयोरलौकिकमेव भवेदित्याशयेन एवं कृतमिति भावः ॥ ३८ ॥

**उग्रोऽयं सखि चञ्चलोऽयममले सोऽयं रमे गूढपा-**
**द्वृद्धोऽसौ ज्वलनोऽयमेष तपनः सद्वक्रतुण्डो ह्यसौ ।**

**मुग्धेऽदन्तक एष देवि जलराट् गोत्रासहोऽसौ क्षिता-**
**वित्याद्याभिधयैव धिक्कृतसुरा श्रीराससादाच्युतम् ॥ ३९ ॥**

**व्या :** उग्रोऽयमिति । हे **सखि अयं** शिवः **उग्रः** । 'उग्रः कपर्दि' इत्यभिधानात् । क्रूरत्वेनोग्रनाम हि । **अमले अयं** वायुः **चञ्चलः** । हे **रमे सोऽयं** शेषः **गूढपात्** । **असौ** ब्रह्मा **वृद्धः** । अयमग्निर्ज्वलनः । एष सूर्यस्तपनः । **असौ** गरुडः **सद्वक्रतुण्डः** वक्रमुखः । हे **रमे मुग्धे एष** पूषा **अदन्तः** दन्तरहितः । ''पूषा प्रमिष्टभागे अदन्त'' इति श्रुतेः । हे **देवि** असौ वरुणः **जलराट्** । डलयोरभेदान्मूर्ख इति निन्दाध्वनिः । असाविन्द्रः **क्षितौ गोत्रासहः** पर्वतविरोधी कुलविरोधीति ध्वनिः । इत्याद्यया **अभिधयैव** विविधदोषसूचकतन्नाम्नैव **धिक्कृतसुरा** श्रीरुग्मिणी **अच्युतं** श्रीकृष्ण**मारससाद** । मालादानार्थं श्रीकृष्णसमीपं गतवती ॥ ३९ ॥

**वेधा वैदिकमौलिरेष पवनो मन्त्रं जपन् सन्ततं**
**शर्वोऽसौ सुविरक्तधीः स मघवा व्यापारभाराकुलः ।**
**सूर्यः पर्यटनप्रियः स तु शशी दोषाकरोऽसौ स्मरोऽ-**
**नङ्गश्चेत्यखिलानुपेक्ष्य कमला वव्रे यदूनाम्पतिम् ॥४०॥**

**व्या :** भङ्ग्यन्तरेण देवोपेक्षानिमित्तमाह । **वेधा** इति । वेधाः ब्रह्मा **वैदिकमौलिः** छान्दसशिरोमणिरित्यर्थः । **एष पवनः सन्ततं मन्त्रं** हंसमन्त्रं **जपन्** जपशील इत्यर्थः । **असौ शर्वः सुविरक्तधी**र्विरक्त इत्यर्थः । **स मघवा**न् इन्द्रः **व्यापारभारेण** त्रैलोक्यपरिपालनरूपेणा**कुलः** । **सूर्यः पर्यटनप्रियः** । सदा सञ्चरणशील इत्यर्थः । **सः शशी दोपाकरः** निशाकरः दोषाश्रय इति ध्वनिः । **असौ स्मरः अनङ्गः** शरीररहितः । च शब्देनाकर्णः शेषः पक्षपाती गरुडः प्रेतपतिर्यमः इत्यादिदोषं समुच्चिनोति । इति उक्तप्रकारेण तेषु तेषु दोषस्य विद्यमानत्वात् । **अखिलान्** पूर्वोक्तान् अमरान् **उपेक्ष्य कमला** रुग्मिणी **यदूनां पतिं** श्रीकृष्णं **वव्रे** ॥ ४० ॥

**पुत्रो[१] यस्य स पद्मभूः फणिपतिः शय्या खगेशो रथः**
**शम्भुर्यच्चरणाम्बुमौलिरगभित् तद्दत्तसाम्राज्यभुक् ।**
**नित्यं यत्पदसङ्गतौ विधुरवी यद्वल्लभा श्रीवधू-**
**स्तं वर्यं वरयाम्बभूव सुदती सा द्वारकानायकम् ॥४१॥**

**व्या :** पुत्र इति । सः पद्मभूर्ब्रह्मा । यस्य पुत्रः फणिपतिः शेषः यस्य शय्या । खगेशो गरुडः यस्य रथः । शम्भुः शिवः यस्य चरणाम्बु पादजलं मौलौ यस्य स तथोक्तः । अगभित् गोत्रभित् इन्द्रः यद्दत्तं साम्राज्यं भुनक्तीति तथोक्तः । विधुरवी चन्द्रसूर्यौ । नित्यं सर्वदा यस्य विष्णोः पदम् आकाशं सङ्गतौ । प्राप्तौ । हरिचरणभजकाविति ध्वनितोऽर्थः । श्रीवधूः लक्ष्मीः यद्वल्लभा यस्य प्रिया । तं वर्यम् उत्तमं द्वारकायाः नायकम् । पतिं श्रीकृष्णं सा सुदती सुन्दरी श्रीरुग्मिणी वरयाम्बभूव ॥ ४१ ॥

**या वै चम्पकसम्पदाऽब्जवसतेर्दूर्वाश्रिया स्वात्मनः**
**केतक्या विभवेन कृत्तिवसनस्याम्भोजकान्त्या विधोः ।**
**सन्नीलोत्पलशोभया दिनमणेः श्रीमत्तुलस्याऽमता**
**हेरम्बस्य हरेः परं समुचिता सा मालिका शोभते ॥४२॥**

**व्या :** या वै इति । या मालिका चम्पकसम्पदा चम्पकानां मालायामर्पित-चम्पकपुष्पाणां सम्पदा श्रिया । अब्जमेव वसतिर्यस्य तस्य ब्रह्मणः । भ्रमरेति ध्वनिः । तस्यापि मधुपानार्थित्वेनाब्जवसतित्वात् । अमता वै अप्रिया वै । भ्रमरच-

---

१ कलत्रं कमला यस्य पुत्रः कमलसम्भवः ।
शिवाद्याः सेवकास्तस्मै नमो विश्वकुटुम्बिने ॥ -इति तत्त्वनिर्णयटीकायाम् ।
लक्ष्मीर्यस्य परिग्रहः कमलभूः सूनुर्गरुत्मान् रथः
पौत्रश्चन्द्रविभूषणः सुरगुरुः शेषश्च शय्या पुनः ।
ब्रह्माण्डं वरमन्दिरं सुरगणा यस्य प्रभोः सेवकाः
स त्रैलोक्यकुटुम्बपालनपरः कुर्याद्धरिर्मङ्गलम् ॥ -इति मङ्गलाष्टके ॥

म्पकयोर्विरोधादिति भावः। **दूर्वाश्रिया** दूर्वाणां कान्त्या। **स्वात्मनः** दुर्गारूपायाः स्वस्याः । अमता । ''दूर्वाभिर्नाचयेद्दुर्गाम्''[१] इति भावः । **केतक्याविभवेन कृत्तिवसनस्य कृत्ति गजचर्म** वसनं यस्य तस्य शङ्करस्यामता। ''न केतक्या च शङ्करम्''[२] इति स्मृतेः । **अम्भोजकान्त्या विधोः** चन्द्रमसः **अमता**। चन्द्राम्भोजयोर्विरोधादिति भावः। **सन्नीलोत्पलशोभया दिनमणेः** सूर्यस्यामता। सूर्योत्पलयोर्विरोधादिति भावः । **श्रीमत्तुलस्या हेरम्बस्य** विनायकस्यामता। ''न तुलस्या विनायकम्''[३] इति । **परं** केवलं **हरेः** श्रीकृष्णस्य **समुचिता** योग्या। सकलपुष्पैरपि हरिपूजायाः कर्तुं शक्यत्वात्। ''नाक्षतैरर्चयेद्विष्णुम्''[४] इत्युक्ताक्षतायाः मालायामप्रवेशाच्चेति भावः। **सा मालिका शोभते** ॥ ४२ ॥

**हरेः प्रसादैकभुजां सुराणामिमां प्रदास्यामि कथं त्वितीव।**
**रमा प्रमोदोत्थितरोमराजिः [५]समर्पयामास मुकुन्दकण्ठे ॥४३॥**

**व्या : हरेरिति । प्रमोदोत्थितरोमराजिः** सन्तोषादुत्थिता रोमराजिः रोम्णां परम्परा यस्याः सा तथोक्ता । **रमा** रुग्मिणी । 'विष्णोर्निवेदितान्नेन

---

१ दूर्वाभिर्नार्चयेद् दुर्गां न केतक्या च शङ्करम्।
नाक्षतैरर्चयेद्विष्णुं न तुलस्या विनायकम् ॥ - इति स्मृतिः

२ केतकीभवपुष्पैश्च नैवार्च्यः शङ्करस्तथा। - पद्मपुराणे (उ.खं. ९२/२६)

३ न त्वविहिपुष्पैः ''न त्वविहितपत्रादि तस्यापराधत्वोक्तेर्वाराहादौ ॥
-इति गीताभाष्यवचनात् (९/२६)
''उर्वारुकपलाशोत्थैः पुष्पैः कुर्यान्ममार्चनम्'' (महापराधान् जानीहि द्वात्रिंशन्न क्षमापितान् ॥) - इति वाराहे।
अकर्मण्यप्रसूनार्चा - इति योगदीपिकायाम् (३/६३)

४ ... विष्णुर्नार्च्यस्तथाऽऽक्षतैः। -पद्मपुराणे (उ.खं. ९२/२५)

५ अथो कराभ्यां प्रतिगृह्य मालामम्लानपद्मां जलजायताक्षी।
उपेत्य मन्दं ललितैः पदैस्तां तदंस आसज्य च पार्श्वतोऽभवत् ॥
- इति म.भा.ता.नि. (४/२८)

यष्टव्यं देवतान्तरम्' इति स्मृतेः । हरेः प्रसादैकभुजां हरिभुक्तनैवेद्यगन्धमाल्यादिधारणशीलानां सुराणाम् । इमामप्रसादैकरूपां मालां कथं प्रदास्यामीतीव । मुकुन्दकण्ठे श्रीकृष्णकण्ठे समर्पयामास ॥ ४३ ॥

**सा धाराम्बुकदम्बकेन सह सुप्रेमाश्रुधारां हरे-**
**र्भ्राजन्मालिकया समं प्रणयसन्मालां सुनीराजनम् ।**
**नेत्रान्तेन शुचिस्मिताऽमृतरसैर्नैवेद्यमावेद्य त-**
**त्पार्श्वं मन्दमुपाश्रयत्फलमिव व्यालोलहारोज्ज्वला ॥४४॥**

**व्या :** सेति । व्यालोलहारोज्ज्वला सा रुग्मिणी । **धाराम्बुकदम्बकेन** धारोदकसमूहेन सह । **प्रेमाश्रुधारां हरेः** श्रीकृष्णस्य आवेद्य **भ्राजन्मालिकया समं प्रणयाख्यसन्मालां** आवेद्य **नेत्रान्तेन** कटाक्षेण **सुनीराजनं** आवेद्य **शुचिस्मितामृतरसैः नैवेद्यमावेद्य फलमिवा**भिषेकपुष्पमालानीराजननैवेद्यादिभिर्हरेः पूजायां कृतायां तत्सामीप्यगमनमोक्षलक्षणफलमिव । **तत्पार्श्वं** श्रीकृष्णपार्श्वं **मन्दं** शनैरुपाश्रयत् ॥४४॥

**नार्योऽक्षतान् प्रववृषुर्नवकुङ्कुमाभान्**
**सङ्गीतमङ्गलकथाः समलङ्कृताङ्ग्यः ।**
**सौवर्णविष्टरगतौ सदयैरपाङ्गैः**
**कन्यावरौ च फलमक्षयमेव तासाम् ॥ ४५ ॥**

**व्या :** नार्य इति । **समलङ्कृताङ्ग्यः** । **सङ्गीताः** सम्यग्गीताः **मङ्गलकथाः** याभिस्ताः नार्यः **नवकुङ्कुमाभान् अक्षतान् प्रववृषुः** । **सौवर्णविष्टरगतौ** सुवर्णनिर्मितासनगतौ **कन्यावरौ** रुग्मिणीश्रीकृष्णौ **च सदयैः** दयासहितैः **अपाङ्गैः** नेत्रप्रान्तैः **तासां** स्त्रीणामक्षतमेव **फलं** नाशरहितं मोक्षाख्यं ववर्षतुः । अक्षतदानस्याक्षयफलदानमुचितमिति भावः ॥ ४५ ॥

**गृहीतपाणी किल चक्रतुस्तौ प्रदक्षिणं लाजसमेधिताग्नेः ।**
**वधूवरौ रम्यरहस्यगोष्ठ्यां विधातुमात्मीयमिवास्यगं तम् ॥४६॥**

**व्या :** गृहीतेति । **गृहीतौ पाणी** याभ्यां तौ **वधूवरौ** रुग्मिणीश्रीकृष्णौ । आस्यगं स्वमुखे स्थितम् । 'मुखादिन्द्रश्चाग्निश्च'[१] इति श्रुतेः । तमग्निं **रम्यरहस्यगोष्ठ्यां** रम्या च सा रहस्यगोष्ठी च तस्याम् । रमणसमये मनोहरशृङ्गारवचनगोष्ठ्यामित्यर्थः । **आत्मीयं** स्वकीयं **विधातुं** कर्तुमिव । **लाजसमेधिताग्नेः प्रदक्षिणं** प्रचक्रतुः ॥ ४६ ॥

**ततश्चतुर्थे दिवसे किलैतौ चिरं रतौ तल्पतनौ फणीन्द्रे ।**
**विलम्बिनि क्ष्मां वहतेति नूनं प्रचक्रतुर्नागबलिं प्रहृष्टौ ॥४७॥**

**व्या :** तत इति । ततोऽनन्तरम् । **चतुर्थे दिवसे प्रहृष्टावेतौ** रुग्मिणीश्रीकृष्णौ । **चिरं रतौ** आवयोः सुरते सति **तल्पतनौ** तल्पाकारा तनुः यस्य तस्मिन् **फणीन्द्रे** शेषे **विलम्बिनि** रतावसानपर्यन्तं तल्पतया अस्मत्सन्निधावेव स्थिते सति **क्ष्मां** भूमिं **वहत** धारयत इति **नागबलिं** नागानां गजानां पूजां **प्रचक्रतुः किल** । दिग्गजैर्युष्माभिः सह भूमण्डलधारिशेषे अस्मद्भोगार्थं तल्पतया भूमेरुपर्येव स्थिते सति यूयमौदासीन्यं विहाय क्ष्मां धारयतेति धिया तद्बलिरिति उत्प्रेक्षा ॥ ४७ ॥

**सा मन्दस्मितमौक्तिकेन सदपाङ्गाख्यैर्हयैर्हृत्पुरा**
**वक्षोजद्विरदेन कायकनकेनोद्भूतरोमानुगैः ।**
**तत्संसक्तमनोरथेन विविधाङ्गश्रीविचित्राम्बरै-**
**स्तद्योग्यामृतसाधनाधरभुवा सन्तर्पयामास तम् ॥ ४८ ॥**

---

१ पुरुषसूक्ते (१०/९०/१)

**व्या :** सेति । सा रुग्मिणी । **मन्दस्मितमेव मौक्तिकं तेन सदपांगाख्यैर्हयैः** सन्तः ये **अपाङ्गाः** त इति आख्या नाम येषां ते तथोक्ताः । ते च ते हयाश्च तैः । अपाङ्गानामितस्ततः सञ्चरणशीलत्वादिति भावः । हृदेव पूस्तद्योग्यं पुरं तया । 'हृदयं ब्रह्मपुरम्' इति श्रुतेः । सर्वप्रलयेऽपि 'लक्ष्मीभुजान्तरगतः'[१] इत्युक्त्या हरेर्लक्ष्मीवक्षस्यवस्थितेः । वैकुण्ठादिलोकत्रयस्यापि श्रीरूपत्वात् रुग्मिणीहृदेव भगवतो योग्या पूरिति भावः । वक्षोज एव कुच एव **द्विरदः** गजः **तेन** । करिकुम्भद्वयाकारेण कुचस्योत्तुङ्गत्वादिति भावः । **कायाख्यकनकेन** सुवर्णेन **उद्भूतरोमानुगैः**रुद्भूतरोमाख्यानुगैः । श्रीकृष्णसङ्गमनुसृत्य गमनाद्धहुत्वाच्चेति भावः । तस्मिन् श्रीकृष्णे संसक्तं यन्मनः तदेव रथः तेन । **विविधानामङ्गानां** पादहस्ततलनखकटाक्षकुचानां **श्रिय एव** कान्तयः त एव **चित्राम्बराणि** रक्त शुभ्रनीलश्यामवर्णोपेतानि वस्त्राणि तैः । प्रणयापराधशमनालिङ्गननखक्षत-निरीक्षणोपरिसुरतकाले पादादिकान्तीनां श्रीकृष्णाङ्गस्पर्शयोग्यत्वात् तासां तद्वस्त्रत्वम् । श्रीकृष्णान्तःपुरदासी च स्वयमेवेत्यतः स्वाङ्गेषु तान्यूढ्वा काले काले स्वभर्तुरर्पयतीति भावः । तस्यैवं रूपस्य श्रीकृष्णस्य योग्यं **यदमृतं** तस्य । **साधनं** च सा अधराख्यभूश्च तया । दुग्धाब्धिमथनोद्भूतामृतस्यापि स्वयमपीत्वा देवेष्वेव दानादिदमेवामृतं भगवद्योग्यमिति भावः । **तं** श्रीकृष्णं **सन्तर्पयामास** ।। ४८ ।।

**ज्वलत्कलापाः स्फुरदङ्गलेपा विचित्रवस्त्राः स्मितशोभिवक्त्राः ।**
**स्वयंवरे तत्र नराश्च नार्यो वधूवराभाः किल सञ्चरन्ति ।।४९।।**

**व्या :** ज्वलदिति । **ज्वलत्कलापाः** प्रकाशभूषणाः **स्फुरदङ्गलेपाः** । **विचित्रवस्त्राणि** येषां यासां ते तथा । नारीविशेषणत्वे स्त्रीलिङ्गबहुव्रीहिः । **स्मितशोभीनि वक्त्राणि** येषां यासां ते ताश्च **वधूवराभः** वधूवरसदृशाः **नरा नार्यश्च स्वयंवरे** तत्र तत्र **सञ्चरन्ति किल** ।। ४९ ।।

---

१ म.भा.ता.नि. (१/२)

**स्वर्गिभिर्गीयमानः स्वं दुर्गमाविश्य दुर्गमम् ।**
**भग्नदुर्जनदर्पोऽसौ रुग्मिणीरमणो बभौ ॥ ५० ॥**

**व्या :** स्वर्गिभिरिति । स्वर्गिभिर्देवैर्गीयमानः भग्नदुर्जनदर्पः । असौ रुग्मिणीरमणः श्रीकृष्णः दुर्गममन्यैर्दुःखेन गन्तुमशक्यं स्वं दुर्गं द्वारकां आविश्य प्रविश्य बभौ शुशुभे ॥ ५० ॥

**स्वफेनकान्त्या सितपार्श्वयुग्मः शिखाभिरौर्वस्य सुपीतमध्यः ।**
**सितेतरोऽन्यत्र स भूतधात्र्या विचित्रवस्त्रश्रियमातनोति ॥५१॥**

**व्या :** इदानीं सर्गावसानपर्यन्तं समुद्रं वर्णयति । **स्वफेनेति** । **स्वफेनकान्त्या सितं** शुभ्रं **पार्श्वयुग्मं** यस्य स तथोक्तः । **और्वस्य** वडवाग्नेः । 'और्वस्तु वाडवो वडवानलः' इत्यमरः । **शिखाभिः सुपीतं मध्यं** यस्य स तथोक्तः । **अन्यत्र** प्रदेशे **सितेतरः स** सिन्धुः **भूतधात्र्याः** भूम्याः । 'भूतधात्र्यब्धिमेखला' इत्यमरः । **विचित्रं** शुभ्रपीतनीलवर्णैः रञ्जितम् । बाणगरेत्यपभ्रष्टभाषया कथ्यमानं **वस्त्रं** तस्य **श्रियं** कान्ति**मातनोति** । भूम्या स्वजघनोपरि धृतविचित्राम्बरवत्तिष्ठतीत्यर्थः। 'सागराम्बराम्'[१] इत्यादौ सागरस्य भूम्यन्तरत्वं पूर्वकवयोऽपि कथयन्ति । विचित्राम्बरत्ववर्णनमिदमपूर्वमेवेति ज्ञातव्यम् ॥ ५१ ॥

**असह्यवह्निव्यथितोऽपि वार्धिरनन्तरत्नान्युदरे पिधाय ।**
**न जातु पानीयमपि प्रदत्ते धनस्य लाभादधिको हि लोभः ॥५२॥**

**व्या :** **असह्येति** । **वार्धिः** समुद्रः । **असह्यवह्निना** वडवाग्निना **व्यथितोऽपि** प्राणसङ्कटं प्राप्तोऽपीति ध्वनिः । **अनन्तरत्नानि उदरे** गर्भे **पिधाय** बहुद्रव्यवानिति

---

१ पायात् स वोऽसुरवधुहृदयावसादः पादो हरेः कुवलायमलखड्गनीलः ।
यः प्रोद्यतस्त्रिभुवनक्रमणे रराज वैडूर्यसङ्क्रमविाम्बरसागरस्य ॥
- इति भासकविकृत-मध्यमव्यायोगे ।

ध्वनितोऽर्थः । **जातु** कदाचित् **पानीयमपि** पातुं योग्यं जलमपि **न प्रदत्ते** । लवणजलत्वादिति भावः । **तथा हि** । **धनस्य लाभात् अधिकः** उत्कृष्टः **लोभो भवति** । ''लाभाल्लोभो विवर्धते'' इति उक्तेः ॥ ५२ ॥

**सरित्पतिस्तन्मुखतो हि वेलां विलङ्घयत्यत्र विवेकहीनः ।**
**तथा हि नार्या सह सङ्गतानां कुतो विवेकः कुत एव वेला ॥५३॥**

**व्या : सरित्पतिरिति । सरितां** नदीनां **पतिः** समुद्रः **तन्मुखतः** समुद्रसङ्गमस्थलं नदीमुखमित्युच्यते । आचुम्बितनद्याख्यस्त्रीमुख इति ध्वनिः । **वेलां** तीरं मर्यादामिति ध्वनिः । **विलङ्घयति** । नदीमुखस्थले समुद्रजलं तीरमतिक्रम्य नदीं प्रविश्य बहुदूरं गच्छतीति भावः । **अत्र** नदीमुखस्थले **विवेकहीनः** । इदं नदीजलं इदं समुद्रजलमिति विवेचयितुमशक्य इत्यर्थः । धर्माधर्मविवेकशून्य इति ध्वनिः । ननु गांभीर्यादिगुणयुक्तस्य मर्यादालङ्घनं विवेकराहित्यं च कथमिति ध्वनितार्थमाशङ्क्यार्थान्तरं न्यस्यति । तथाहीति । तद्युक्तं हि । **नार्या सह सङ्गतानां** कान्तया सह सञ्चरतां पुरुषाणां **विवेकः कुतः वेला** समयः **कुतः** । स्त्रीसङ्गमनेनोद्रिक्तकामानां तिथ्यादिमर्यादा धर्माधर्मविचारश्च नास्तीति भावः ॥ ५३ ॥

**बहूपभोग्याऽपि सरित्समुद्रतटेन सा कण्ठकितोपकण्ठा ।**
**रहस्युपाहूय विटान् स्वभर्तृतटे सदाचारपरा हि काश्चित् ॥५४॥**

**व्या : बहूपभोग्येति । सरित्** नदी स्वोत्पत्तिस्थले **बहूनामुपभोग्या** स्नानपानाद्युपभोगार्हाऽपि । सञ्जाताः **कण्टकाः** अस्येति **कण्टकितम्** । तादृशम् उपकण्ठं समीपं यस्याः **सा** नदी । **समुद्रतटे बहूपभोग्या** न भवति । उपभोगस्तु दूरे । गालीप्रदानभर्त्सनार्थं समीपमागन्तुं न मुञ्चतीति सूचनार्थं कण्टकितोपकण्ठेत्युक्तम् । नदी स्वोत्पत्तिस्थले स्वादुजलोपेतत्वात् सर्वजन-सेव्या । समुद्रतटे कण्टकग्रस्ततीरत्वाल्लवणजलोपेतत्वाच्च नोपभोगार्हेति स्वभावः ।

अत्र स्वैरिणीजात्या अर्थान्तरं न्यस्यति । तथाहीति । काश्चित् स्त्रियः रहसि विटानाहूय स्वभर्तृतटे स्वभर्तृसमीपे सदाचारपरा हि ॥ ५४ ॥

**स्वीयाशायुवतिमुपेत्य रागभाज-**
**स्तोयेशः सुहृदपि वीक्ष्य नाशमिन्दोः ।**
**आनन्दादनिशमुपैति वृद्धिमुच्चै-**
**रेकस्यामभिरतिमिच्छतोः क्व मैत्री ॥५५॥**

**व्या :** स्वीयाशेति । सुहृत् चन्द्रसुहृदपि तोयेशः समुद्रः । स्वीया स्वकीया आशा दिक् सैव युवतिः ताम् । वारुणीदिक्कामिनीम् उपेत्य प्राप्य रागभाजः रक्तिमानं प्राप्तस्य अनुरागभाज इति ध्वनिः । इन्दोश्चन्द्रस्य नाशमस्तमयं वीक्ष्य । आनन्दात् सन्तोषादनिशमुच्चैः वृद्धिमुपैति । चन्द्रास्तमये सति समुद्रोऽभिवर्धत इति प्रसिद्धिः। ननु सुहृन्नाशे कथं सन्तोष इत्यतः पश्चिमदिशः वरुणस्त्रीस्थानीयत्वेन चन्द्रस्य तदनुषङ्गे एकस्यामुभयानुषङ्गं मनसि निधाय अर्थान्तरं न्यस्यति । एकस्यां नार्याम् अभिरतिं [१]सुन्दोपसुन्दवत् सुरतक्रीडामिच्छतोः पुरुषयोः मैत्री क्व कुतः ॥ ५५ ॥

**अन्तः कृतान्तोपमवाडवाग्निसन्तप्तगात्रोऽपि मुदेव गर्जन् ।**
**फेनस्मितश्रीर्गगनस्पृगूर्मिर्गाम्भीर्यमावेदयतीव वार्धिः ॥५६॥**

**व्या :** अन्तरिति । अन्तः स्वोदरे कृतान्तोपमवाडवाग्निना सन्तप्तगात्रोऽपि वार्धिः समुद्रः मुदेव सन्तोषेणेव गर्जन् ध्वनन् फेनस्मितश्रीः गगनस्पृगूर्मिः सन् गाम्भीर्यमावेदयतीव प्रकटयतीव । गम्भीरोऽपि अन्तर्महाव्यसनोऽपि बहिर्मुखहासादिना सन्तोषमेव प्रकटयति तद्वदिति भावः ॥ ५६ ॥

**असेव्यतां दोषिसखित्वजातां जहार कृष्णः स्वगृहस्य सिन्धोः ।**
**इति स्म चित्रं न यतस्तदिष्टा हरन्ति पापानि महान्ति हृष्टाः ॥५७॥**

---

१ सुन्दोपसुन्दौ भ्रातरौ ब्रह्मवाक्यात् परस्परादन्यतो नैव वध्यौ ।
तिलोत्तमार्थे निहतौ परस्परं तयोर्वधार्थे सृष्टया तेन दैत्यौ ॥ -म.भा.ता.नि.(२०/१५०)

**व्या :** असेव्यतामिति । **श्रीकृष्णः स्वगृहस्य** स्वावासभूतस्य **सिन्धोः** समुद्रस्य दोषा रात्रिः अस्यास्तीति **दोषी** । कलङ्कीति वा । तस्य चन्द्रस्य **सखित्वेन जातां** सुहृत्त्वेन जाताम् । असेव्यताम् । दोषिसमागमेन साधुरप्यसेव्यो भवतीति ध्वनिना दोषिसखित्वजातामित्युक्तम् । लवणजलत्वादपेयतां **जहार** । 'सबालस्त्रीजलक्रीडामृतवापीकृतार्णवः'[१] इति वचनात् । द्वारवत्यां समुद्रजलमपि स्वादुत्वात् सदा स्नानपानयोग्यमिति भावः । **इति यत् तत् चित्रम्** आश्चर्यं न भवति । **यतः** कारणात् **तदिष्टाः** श्रीकृष्णभक्ताः **हृष्टाः** सन्तः । **महान्ति पापानि** दर्शनमात्रेण **हरन्ति** । किं पुनस्तस्य सहवासे सतीति भावः ।। ५७ ।।

**पुराऽप्यजेयो मुरजित् किलात्र पुरीं विधायाभवदत्यजेयः ।**
**ममेत्थमाभाति कलत्रवस्त्रकृतालयं कः खलु जेतुकामः ।।५८।।**

**व्या :** पुराऽपीति । **पुराऽपि** पूर्वमपि **अजेयः मुरजित्** श्रीकृष्णः **अत्र** समुद्रे **पुरीं विधाय अत्यजेयोऽभवत् किल** । अत्र शत्रुभिरजेयत्वे **इत्थं ममाभाति** । **कलत्रवस्त्रकृतालयं** भार्यावस्त्रे कृतनिलयं स्त्रीनीवीलीनमित्यर्थः । जेतुं कामो यस्य **जेतुकामः कः खलु** न कोपीत्यर्थः । भूमेर्विष्णुपत्नीत्वात् समुद्रस्य भूवस्त्र-स्थानीयत्वाल्लोकधर्ममाश्रित्य इयं विनोदोक्तिः ।। ५८ ।।

**स रम्यफेनासवशोभिवक्त्रस्तरङ्गहस्तैर्जघनं नदीनाम् ।**
**विधूदये संस्पृशतींदुदृष्ट्या न कस्य कामः सरसस्य हि स्यात् ।।५९।।**

**व्या :** स इति । **रम्यफेन** एव **आसवः** मद्यम् । उभयोरपि शुभ्रत्वात् फेनिलत्वाच्चेति भावः । तेन **शोभि वक्त्रं** यस्य स तथोक्तः । सः समुद्रः विधूदये सति **तरङ्गहस्तैः** । '**नदीनां जघनं** तीरं कटिमिति ध्वनिः । **स्पृशति** । विधूदये तावदभिवर्धत इत्यर्थः । तथाहि । **इन्दुदृष्ट्या** चन्द्रदर्शनेन **सरसस्य** रसिकस्य मद्यरससेवितमनस्कस्येति ध्वनिः । **कस्य कामो न स्यात्** । स्यादेवेत्यर्थः ।।५९।।

---

१ पद्मपुराणान्तर्गत-वासुदेवसहस्रनामस्तोत्रे (३/७१/२६८)

**सितेतरः पीतकृशानुमध्यः सहस्रशः श्लिष्टतनुर्नदीभिः ।**
**अनेकयोषित्परितोषदायी स पीतवासा इव भासतेऽब्धिः[1] ॥६०॥**

**व्या :** सितेतर इति । सितेतरः नीलः पीतः कृशानुः अग्निः मध्ये यस्य सः सहस्रशो नदीभिः श्लिष्टा तनुः यस्यः सः [2]अब्धिः । अनेकयोषित्परितोषदायी पीतवासा इव पीताम्बरधारी श्रीकृष्ण इव भासते ॥ ६० ॥

**वर्त्मनीत्थं वारिराशिं वर्णयन्तो मुनीश्वराः ।**
**समेत्य तां द्वारवर्तीं मुदा कृष्णमुपासते ॥ ६१ ॥**

**व्या :** वर्त्मनीति । मुनीश्वराः वर्त्मनि मार्गे इत्थमुक्तप्रकारेण । वारिराशिं समुद्रम्। वर्णयन्तः सन्तः । तां द्वारवतीं समेत्य मुदा सन्तोषेण श्रीकृष्णमुपासते ॥ ६१ ॥

**रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि**
**प्रेम्णा चिन्तयतां विचित्रविमलश्लाघ्यार्थसन्दायिनि ।**
**सञ्जाते भुवि रुग्मिणीशविजये सद्वादिराजोदिते**
**सञ्जातः सुरमण्डलीषु [3]महितः सर्गो मुदां षोडशः ॥६२॥**

**॥ इति श्रीवादिराजतीर्थप्रणीतरुग्मिणीशविजये षोडशः सर्गः ॥ १६ ॥**

**व्या :** रोम्णामिति । उक्तोऽर्थः ॥ ६२ ॥

**॥ इति रुग्मिणीशविजयटीकायां गुरुभावप्रकाशिकायां षोडशः सर्गः ॥**

*****

---

१ सरसामस्मि सागरः -इति गीता । (१०/२४)

२ जयत्यसङ्ख्योरुबलाम्बुपूरो गुणोच्चरत्नाकर आत्मवैभवः ।
सदा सदात्मज्ञनदीभिराप्यः कृष्णावतारो हरिरेकसागरः ॥- म.भा.ता.नि.(३/३)

३ सुतराम् (पा.)

# सप्तदशः सर्गः

**स्वभजकाब्जकुलोदयहेतवे जलनिधौ वरभोगिनिकेतने ।**
**भवमहानलमुक्तभयानुगच्छविपदेऽविपदे लसते नमः ॥ १ ॥**

**व्या :** नारायणं मुनीन्द्रौघभारतीगीतसत्कथम् ।
द्वारकानायकं वन्दे तारकं भवसागरात् ॥ १ ॥

**व्या :** एकार्थेन तत्तदवतारान् एकार्थेन सर्वपद्येषु श्रीकृष्णकथां चतुर्विंशतिपद्यैः ऋषिवाक्यतया वर्णयिष्यन् आदौ मूलरूपं च एकोक्त्या वर्णयति । **स्वभजकेति**। **स्वभजकः** स्वभक्तः अद्भ्यः जायत इति **अब्जः** ब्रह्मा । 'अद्भ्यः सम्भूतो हिरण्यगर्भः' इति श्रुतेः । तस्य कुलं गोत्रं ऋजुगणः तस्योदयः सृष्टिस्तस्य हेतवे कारणाय । यद्वा अब्जकुलं मुक्तब्रह्मगणः । तस्याभ्युदयहेतवे । भवमहानलः संसाराग्निः तस्मान्मुक्तभयाः श्रीदेवीविमुक्तगरुडविष्वक्सेनाद्या विमुक्ता इत्यर्थः । त एवानुगाः सेवकाः तेषां च्छविः कान्तिः तस्याः पदे स्थाने **जलनिधौ** प्रलयसमुद्रे **वरः** श्रेष्ठः **भोगी** मुक्तशेषः स एव **निकेतनं** तस्मिन् लसते विकासमानाय । अविपदे जननमरणादिविपद्रहिताय । सृष्ट्यादिना आयासरहिताय वा । नारायणाय नम इति मूलरूपस्वभावः सर्वोऽपि वर्णितः । एवं सर्वत्र द्रष्टव्यम् । **कृष्णपक्षे तु** स्वभजकः अब्जश्चन्द्रः । 'अब्जो जैवातृकः सोमः' इत्यमरः। तस्य कुलं वंशः सोमवंश इत्यर्थः । तदुदयहेतवे तदभिवृद्धिकारणाय । सोमकुलोत्पन्नायेत्यर्थः । जलनिधौ द्वारावतीसमुद्रे वराः श्रेष्ठाः भोगिनः सुखिनः । 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः । तेषां **निकेतने** स्थानभूते । **भवस्य** काशिराजेष्टदेवस्य शिवस्य **महानलः** द्वारकानाशाय प्रयुक्तः कृत्यारूपोऽग्निः । तस्मान्मुक्तभयास्ते च ते अनुगाश्च अनुचराः यादवाः । तेषां **च्छविपदे** कान्तिस्थाने द्वारावतीपट्टणे लसते शोभमानाया**विपदे** विपद्रहिताय । अथवा विः पक्षी गरुडः तस्मिन् पदौ चरणौ यस्य तस्मै । पदादयः पृथक्शब्दा इत्येके । गरुडवाहनायेत्यर्थः । तुभ्यं श्रीकृष्णाय **नम** इति सम्बन्धः ॥ १ ॥

**कुशकृतस्थलसिद्धपुरीश्वरं कठिनतत्त्वगतिश्रमदायुधम् ।**
**जनककर्दमशोभिगृहाङ्गणे मुनिजना निजनाथममुं जगुः ॥२॥**

**व्या :** कपिलावतारकथया[१] सह श्रीकृष्णकथां वर्णयति । **कुशकृतेति** । कुशैर्दर्भैः **कृतं स्थलं** यस्यां सा **सिद्धपुरी** नाम कश्चन कपिलाश्रमः ऋष्याश्रमत्वेन परितः कृशकृतस्थलेत्यर्थः । तस्याः **ईश्वरम्** । **कठिणानां** दुर्बोधानां **तत्त्वानां गतिरवगतिः** तस्याः **श्रमः** अज्ञानविपरीतज्ञानजन्यः खेदः तं द्यति खण्डयतीति कठिणतत्त्वगतिश्रमदम् । तच्च तत् आयुधश्च । तत्त्वमार्गज्ञानविघ्नछेदने आयुधरूपमित्यर्थः । **कठिणतत्त्वगतिश्रमदम् आयुधं** ज्ञानलक्षणं यस्येति वा। तत्त्वनिरूपणाय कपिलस्यावतारात् । **जनकः** प्रजापतिः स चासौ **कर्दमः** । कर्दमप्रजेश्वर इत्यर्थः । तस्य **शोभि** च तत् **गृहाङ्गणम्** । तस्मिन् स्थितमिति शेषः । **अमुं** कपिलम् । **मुनिजनाः** **निजनाथं** मुनिकुलाचार्यम् । **जगुः** । अनेन कपिलावतारवर्णनम् । तत्स्थलम् अवतारप्रयोजनं तत्पितृनिरूपणं च कृतमिति बोध्यम् । **कृष्णावतारपक्षे तु** – कुशो नाम दैत्यः तेन कृतं स्थलं स्थानम् । कुशस्थलीत्यर्थः । तत्र सिद्धा सम्पन्ना पुरी द्वारवती तस्याः ईश्वरम् । कुशनामदैत्यं हत्वा कुशस्थल्यां द्वारवतीनिर्माणं कृतवानिति[२] पौराणिकी कथा। कठिणा या तस्य कुशदैत्यस्य त्वक् कठिणत्वक् । तस्याः अतिश्रमदं मुहुर्मुहुः छेदादिना अतिदुःखदं आयुधं शार्ङ्गशराख्यं यस्य तम् । त्रिविक्रमरूपिणा हरिणा शार्ङ्गमुक्तशरेण वारं वारं छिन्नसर्वाङ्गः सः कुशदैत्यः स्वकुलदेवशिवकृपया पुनःपुनरुज्जीवितश्च न ममार किल । ततस्तं दैत्यं शार्ङ्गशरघातेन श्रान्तसर्वाङ्गं शेषकरस्थहलेन कृतपरिखायां स्थापयित्वा उपरि कुशेश्वराख्यशिवलिङ्गं

१ सुतपोरुचेरयमपापकर्दमान्नु मानवीतनयतामुपेयिवान् ।
समयेन भूरिनिजभक्तिपूरितान् समजीजनत् सुमनसः स देवराट् ॥-म.वि.(८/३६)

२ त्रिविक्रमो विजयते त्रयीविख्यातविक्रमः ।
यः कुशं दमयित्वेमां चक्रे विप्रकुशस्थलीम् ॥ - तीर्थप्रबन्धे (१/९१)

प्रतिष्ठिते सति लिङ्गभङ्गभयेन स्वोत्थानमसहमानः तत्रैव ममारेति पौराणिकीं कथां सूचयितुम् गतिश्रमदायुधमित्युक्तम् । त्रिविक्रमावतारे येन शार्ङ्गशरेण कुशाङ्गत्वक् छिन्ना स एव शरः कृष्णकरेऽप्यस्तीति भावः । त्रिविक्रमावतारकृतपूर्वकथासङ्ग्रहाय च इत्थमुक्तम् । अमुं श्रीकृष्णं मुनिजनाः जनकस्य पितुर्नन्दगोपस्य कर्दमेन गोमूत्रादिसम्बन्धजनितपङ्केन शोभि गृहाङ्गणस्थितं कर्दमदिग्धसर्वाङ्गतया सञ्चरन्तं शिशुरूपं निजनाथं जगुः । इदानीं सर्वोत्कृष्टत्वेन द्वारकानाथं गायन्तीति किं वक्तव्यमिति भावः ॥ २ ॥

**यमजनिं भज तापसविग्रहं प्रकटितं निजचिद्घनमूर्तितः ।**
**नरधृतं गिरिमूर्धनि यत्पदं विलसते लसतेड्यनखेन्दुना ॥३॥**

**व्या : यमजनिमिति** । हे ऋषे **यमात्** [१]धर्मात् जनिरुत्पत्तिर्यस्य तं निजा स्वविषयिणी चित् ज्ञानं तया घना निबिडा । नारायणविषयकज्ञानभरितेत यर्थः । सा च सा मूर्तिश्च मूर्तिनाम्नी धर्मस्य पत्नी तस्याः **प्रकटितमा**विर्भूतं **तापसविग्रहं** मुनिरूपं नारायणं **भज** सेवस्व । बहूनां परस्परऋषिवाक्यतया एकं प्रति सम्बोधने एकवचनम् । बहून् प्रति सम्बोधने बहुवचनमिति सर्वत्र द्रष्टव्यम् । **गिरिमूर्धनि** शतशृङ्गपर्वतमध्यस्थिते नारायणावासभूते तुङ्गशिरसि **नरेण** नरनामकऋषिणा सेवार्थं **धृतं यत्पदं** यस्य नारायणस्य पदं **लसता** मनोहरेण **ईड्यनखेन्दुना** स्तुत्यनखचन्द्रेण **विलसते** शोभते । यमजनिं **मूर्तितः** प्रकटितमिति नारायणस्य मातापित्रोः कथनम् । तापसविग्रह इत्यवतारकथनम् । नरधृतमिति तदनुजनस्वरूपकथनम् । **गिरिमूर्धनीति** अवतारस्थलकथनं

१ अतिदुर्जयेन्द्रियजयादिरूपिणा तपसा वसन्तमिव सन्ततं वने ।
निजरूपभूतनिरपेक्षनिर्मलप्रचुरात्मसौख्यरतमप्यनारतम् ॥ -म.वि.(८/८)
उदपादि धर्मतनयो ह्ययं हरिर्नरदेवसोदर उदारविक्रमः ।
अपि कृष्ण इत्यभिहितो मुदे सतां स्वयमेव यस्य सहजो व्यजायत ॥-म.वि.(८/४०)

चेति द्रष्टव्यम् । शतशृङ्गपर्वते धर्मात् मूर्त्यां नारायणोऽवततारेति पौराणिकी[१] कथा । कृष्णावतारपक्षे तु । हे मुनयः यं श्रीकृष्ण**मजनिं** जनिरहितम् । भजत भजध्वम् । स कृष्णः **निजा** स्वाभाविकी **चिद्घना** ज्ञानमयी **मूर्तिः** मूलमूर्तिः ततः प्रकटितं कृष्णकेशात्मना आविर्भूतं नतु शुक्लशोणितादुत्पन्नमित्यर्थः । विग्रहं शरीरम् आप । शुक्लशोणितोत्पन्नोऽयं विग्रहः किन्नेत्यतो युक्तिमाह । नरेति । गिरिस्तुतिरूपवाचि मूर्धनि अवनते शिरसि । नरेण अर्जुनेन धृतम् ।

पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतविशेषसङ्घान् ।
ब्रह्माणमीशं कमलासनस्थं ऋषींश्च सर्वानुरगांश्च दिव्यान् ॥
नान्तं न मध्यं न पुनस्तवादिं पश्यामि विश्वेश्वर विश्वरूप ॥[२]

इत्यादिना स्तुतम् । ''नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्वेत्या''दिना[३] नमस्कृतम् । केवलं शुक्लशोणितोत्पन्नदेहस्यैतादृशव्याप्त्यादेः देवक्युदरादुत्पत्तेः पूर्वमपि विद्यमानब्रह्मरुद्रादिदेवताधारकत्वस्य चायोगादिति भावः । यत्पदं यस्य श्रीकृष्णस्य पदं लसता शोभमानेन मौक्तिकादिद्रव्येणेड्यो यो नखेन्दुः तेन विलसते उत्पन्नदेहाद्विलक्षणतया विशेषेण च शोभते । प्रथमश्लोके सोमवंशादुत्पत्तिः यादवैः सह द्वारवत्यां निवासः कथितः । द्वितीयपद्ये द्वारवतीनिर्माणप्रकारः बाललीला च वर्णिता । तृतीयपद्येऽस्मिन् शुक्लशोणितादुत्पत्त्यभावः ज्ञानमयशरीरत्वं चेति सयुक्तिकं तात्पर्यं कथितम् । एवमुत्तरत्रापि भिन्नाभिन्ना सकलाऽपि श्रीकृष्णकथा वर्णिता । अर्थान्तरेण तु मूलरूपमारभ्य सकलावतारकथा च वर्णितेति चतुर्विंशतिश्लोकात्मकमिदमेवेकं चित्रकाव्यमिति द्रष्टव्यम् ॥ ३ ॥

---

१ धर्मस्य दक्षदुहितर्यजनिष्ट मूर्त्यां नारायणो नर इति स्वतपःप्रभावः ।
- इति भागवते (२/७/६)

२ गीता (११/१५/१६)

३ गीता (११/४०)

**विमलदत्तपदः प्रणतार्जुनाभ्युदयहेतुरमानवयोगधृत् ।**
**हृदि धृतः सुधिया ह्यनसूयया स भवताद्भवतापहरो मम ॥४॥**

**व्या :** दत्तावतारं श्रीकृष्णावतारं चैकयोक्त्या वर्णयति । **विमलेति** । विमलं दत्त इति पदं वाचकं नाम यस्य स **विमलदत्तपदः** [१]दत्तात्रेयनामेत्यर्थः । **प्रणतस्यार्जुनस्य** कार्तिवीर्यार्जुनस्याभ्युदयहेतुः[२] योगाभ्युदयहेतुः । **अमानवयोगधृत्** दिव्ययोगाभ्यासधारी । शोभना धीर्यस्याः सा तया अनसूयया देव्या **हृदि** गर्भे **धृतः** स दत्तात्रेयः **मम भवतापहरः भवतात्** । अत्र विमलदत्तपद इत्यवतारनामकथनम् प्रणतार्जुनाभ्युदयहेतुः अमानवयोगधृदित्यवतारप्रयोजनकथनम् । **अनसूयया** हृदि धृत इत्यनेन मातृकथनञ्च द्रष्टव्यम् । **कृष्णावतारपक्षे** तु – विमलाय निर्दोषाय विष्णुभक्ताय दत्तं पदं द्वारवतीस्थानं येन स तथोक्तः । ''चक्राङ्किताः प्रवेष्टव्या यावदागमनं मम'' ॥ ''नामुद्रिता प्रवेष्टव्या यावदागमनं ममेति''[३] वचनात् । प्रणतार्जुनस्य प्रणतस्य भीमानुजार्जुनस्याभ्युदयहेतुः । न विद्यते मानं मितिः एषां तानि अमानानि अपरिमितानीत्यर्थः । वयांसि पक्षिणो यस्मिन् सः **अमानवयाः** स चासावगः पर्वतः गोवर्धनः तं धारयतीति तथा । असूयया रहितया **सुधिया** सम्यग्ज्ञानेन भक्तैः **हृदि** हृदये । धृतः ध्यात इत्यर्थः ।

---

१ सुजनाय दत्तपद आत्मशुद्धिदः सुकुमाररूप्यभवदेष शाश्वतः ।
अनसूयया शुचिमनीषया धृतः परमादरेण मुनिपुङ्गवोढया ॥ - म.वि.(८/३८)

२ यदोर्वंशे चक्रवर्ती कार्तवीर्यार्जुनोऽभवत् ।
विष्णोर्दत्तात्रेयनाम्नः प्रसादाद्योगवीर्यवान् ॥ - म.भा.ता.नि.(११/३)
हैहयानामधिमतिरर्जुनः क्षत्रियर्षभः ।
दत्तं नारायणस्यांशमाराध्य परिकर्मभिः ॥ - इत्यादि भा ९/१५/१७

३ न चामुद्रः प्रवेष्टव्यो द्वारपालस्य पश्यतः ।
यावदागमनं मह्यं तावेदवं भविष्यति ॥ - इति हरिवंशे १३/१४/२५
न चामुद्रोऽभिनिर्याति न चामुद्रः प्रवेश्यते ॥ - इति भारते (वन/१५/१९)

सः श्रीकृष्णः मम तापहरो भवतात् । अर्जुनराज्यप्रदत्वं गोवर्धनगिर्युद्धारणं च प्राक्कथितमेवात्र कथितम् ।। ४ ।।

**भरतशास्त्रविशारदताकरं प्रियकृतं पितृवन्नवयोगिनाम् ।**
**यमृषभं सुमतिर्हि जयन्त्यगात् सुमधुरा मधुराधिपमन्तिके ।।५।।**

**व्या :** इदानीमृषभावतारं[1] कृष्णावतारेण सहैकयोक्त्या वर्णयति । **भरतेति** । भरतस्य स्वपुत्रस्य । शास्त्रविशारदतां शास्त्रे प्रावीण्यं तत्करोतीति स तथा तम् । भरतस्य शास्त्रोपदेष्टारमिति भावः । नवयोगिनां ''कविर्हरिः''[2] इत्यादिनवसङ्ख्यानां योगमार्गरतानां भरतानुजानां स्वपुत्राणां पितृवत् । यथेह पिता पुत्राणां तथा लोकवत् शुक्लशोणितसम्बन्धेन पितृत्वाभावात् पितृवदित्युक्तम् । **प्रियकृतं** प्रियकरं मधुराणां प्रियंवदानामधिपं **यं** ऋषभनामकं **ऋषभं** हरिं **सुमधुरा** मनोहरा । **सुमतिः** शोभना बुद्धिः । **जयन्ती** जयन्तीनाम्नी पत्नी **अन्तिके** समीपे **अगात्** । ऋषभ इन्द्रदत्ताम् जयन्तीं नाम पत्नीं उवाहेति पौराणिकी[3] कथा । अत्र भरतशास्त्रेत्यादिना विशेषणद्वयेनावतारप्रयोजनस्य ऋषभ इति नाम्नः जयन्तीति भार्यायाः **मधुराधिप** इति शान्तावतारत्वस्य च कथनं कृतमिति द्रष्टव्यम् । **श्रीकृष्णविषये तु – भरतशास्त्रे** नाट्यशास्त्रे **विशारदता** निपुणता तस्या आकरमाश्रयम् । वृन्दावने विचित्रनाट्यकरणादिति भावः । पितृवन्नवयोगिनां नूतनयोगाभ्यासवतां प्रियकृतम् अभीष्टकारिणम् । नूतनयोगाभ्यासकारिणामुपनीतानामन्तःकरणशुद्ध्यादिप्रदमित्यर्थः । उपनयनानन्तरं प्रथमं श्रीकृष्णमन्त्रस्यैव लोके उपदेशादिदमुक्तम् । मधुराधिपं यं ऋषभं श्रेष्ठं श्रीकृष्णं सुमधुरा सम्यक्

---

१ दयितः सतामृषभ एष भूधरो वपुरुद्वहन् परमहंसलक्षणम् ।
व्यहरद्बलक्षतमपक्षशोभनं परतत्त्वलिप्सुसनकादिवन्दितः ।। - म.वि.(८/३९)

२ **कविर्हरिरन्तरिक्षः प्रवुद्धः पिप्पलायनः ।**
**आविर्होत्रोऽथ द्रुमिलश्चमसः करभाजनः** -इति भागवते (११/२/२१)

३ भागवते (५/४/८)

शान्ता जयन्ती विषयादिकं जयन्ती। सुमतिः शोभना बुद्धिः। अन्तिकमगात्। शोभनबुद्धेर्विषय इत्यर्थः। मधुरायां प्राक्कंसभयेन श्रीकृष्णस्मरणादौ शङ्कितचित्ताः सन्तः कंसं हत्वा श्रीकृष्णे मधुराधिपे जाते सति निःशङ्कं ध्यानगानादिना स्वमनस्तन्निष्टमेव कृतवन्त इति भावः। यद्वा आधिर्मानसी व्यथा तां पाति वर्धयतीत्याधिपम्। रागोद्रेकात् सेवितमपि पश्चात्तापकारीत्यर्थः। सुमधु शोभनं मद्यं रामस्य दाशरथेर्धुरा व्यापारेण वनवासकन्दमूलफलाहारादिव्रतचर्ययेत्यर्थः। जयन्ती अनाकाङ्क्षन्ती सुमतिर्यमगादिति सम्बन्धः। मद्यादिदुर्विषयेष्वनासक्ता व्रतादिसत्कर्मस्वासक्ता च बुद्धिः श्रीकृष्णं विषयीकरोति नान्येत्यर्थः॥ ५॥

**जनकदोषमुपेत्य स शर्वरीत्यनुभवं जननीमपि हर्षयन्।**
**घटयते दृशि बालवपुः स्फुरत्सुरसदो रसदोहकृदन्वहम्॥६॥**

**व्या :** इदानीं शिंशुमारावतारं श्लिष्टोक्त्या वर्णयति। **जनकेति**। भवमनु **अनुभवं** कृतावतारमित्यर्थः। **जनकः** प्रजापतिः **दोषः** दोषाभिधः तम् **उपेत्य** पूर्वं तद्धृदयं प्रविश्येत्यर्थः। पश्चात् **शर्वरी**तिनाम्नीं **जननीमपि हर्षयन्** तदुदरादवतीर्ण इत्यर्थः। दोषाख्यप्रजेश्वरात् शर्वरीनाम्न्यां तत्पत्न्यां शिंशुमारोऽवतीर्ण इति पौराणिकी कथा[1]। **अन्वहं** दिने दिने **रसस्या**द्भुतरसस्य **दोहकृत्**। अद्भुतकार्यकृदित्यर्थः। तदेव दर्शयति – **बाल** इति। **बाले** पुच्छे **वपुषि** शरीरे च **स्फुरतां सुराणां** शुक्राङ्गारकबृहस्पतिचन्द्रसूर्यादिज्योतिश्चक्राश्रितदेवानां **सदः** सभाम्। **दृशि** जनानां चक्षुषि **घटयते** दर्शयतीत्यर्थः। शिंशुमारपुच्छशरीराश्रितं ज्योतिश्चक्रं प्रवर्तत इति[2] पौराणिकी प्रसिद्धिः। अत्रापि शिंशुमारावतारप्रयोजनं मातापितृनाम च कथितमिति द्रष्टव्यम्। **श्रीकृष्णपक्षे** तु अन्वहं प्रत्यहं स्फुरत्सुरसदसः। स्वर्गस्य सम्बन्धि रसस्य सुखस्य दोहकृत् द्रष्टॄणां स्वर्गसुखप्रद इत्यर्थः। बालवपुः शिशुरूपी

---

१ दोषस्य शर्वरीपुत्रः शिंशुमारो हरेः कला॥ - भागवते (६/६/१४)

२ भागवते (५/२३/४)

श्रीकृष्णजनकस्य नन्दगोपस्य दोषं हस्तमुपेत्य प्राप्तः तस्य करेण लालित इत्यर्थः । जननीं यशोदामपि हर्षयन् प्राक् पितृकरेण लालितः पश्चान्मातृकरं प्राप्य तयाऽपि लालित इत्यर्थः। शर्वस्य शिवस्य रीतिः प्रकारः दिगम्बरत्वधूलीधूसरत्वजटिलत्वललाटलंब्यश्वत्थपत्राकृतिसुवर्णनिर्मितललाटाभरणेन त्रिनेत्रत्वाद्याकारेणेत्यर्थः। तस्याः अनुभवं स्मरणभिन्नज्ञानं दृशि घटयते। लोकैश्चक्षुषा शिव इव दृश्यत इत्यर्थः। कर्दमशोभिगृहाङ्गण इति श्लोकसूचिता बाललीला अनेन श्लोकेन प्रपञ्चितेति द्रष्टव्यम् ।। ६ ।।

**विजनितापदवद्यवनाय यो ह्यगदपाणिरभूच्छमदायकः ।**
**उदधिरत्नममुं सहजश्रियं हृदि भजेदिभजेड्यगतिं कृती ।।७।।**

**व्या :** इदानीं धन्वन्तरिं[१] श्लेषोक्त्या वर्णयति । **विजनितेति** । **यः** धन्वन्तरिः **अगदः** औषधं **पाणौ** यस्य स तथोक्तः सन् **विजनिताः** विशेषेणोत्पादिताः याः **आपदो व्याधयो** यैस्तान्येवावद्यानि वातपित्तश्लेष्मदोषत्रयाणि विजनितापदवद्यानि तान्येव वनं तस्मै **शमदायकः** नाशप्रदोऽभूत् । धन्वन्तरे वैद्यशास्त्रप्रवर्तकत्वादवतारप्रयोजनमुक्तं भवति । **उदधेः** क्षीरसमुद्रस्य **रत्नमिव रत्नम्**। क्षीरसमुद्रोत्पन्नमित्यर्थः । **सहजा** सहोदरा श्रीर्लक्ष्मीर्यस्य तम् । **इभजवत्** कलभवत् **ईड्या गतिर्गमनं** यस्य स तथोक्तः बालगजगमनमित्यर्थः। अमुं धन्वन्तरिं **कृती** कुशलः **हृदि** भजेत् । **श्रीकृष्णविषये तु** । यः कृष्णः वेः पक्षिणः जनिरुत्पत्तिर्यस्य स विजनिः बालपक्षी । 'विश्चक्षुषि व्योम्नि वाते परमात्मनि पक्षिणि' इति रत्नमाला । तस्य तापदवत् नाशदवत् । यथा बालपक्षिघातकः आयुधं नापेक्षते तद्वदित्यर्थः । न विद्यते गदा यस्य सोऽगदः पाणिर्यस्य सोऽगदपाणिः सन् । ''निश्चक्राम निरायुधः'' इति[२] वचनात् ।

---

१ सुबृहत्पयोधरमिथःप्रसंहतिप्रकटीभवत्परमयौवनाकृतिः ।
असुराहितां वरविलासिनीतनुः प्रददावमुष्य सुरराशये सुधाम् ।। - म.वि.(८/३७)

२ निर्जगाम पुरद्वारात् पद्ममाली निरायुधः ।। - इति भागवते (१०/५०/५८)

यवनाय कालयवनाय शमदायकः मृत्युप्रदः । मृत्युश्च मुचुकुन्दनयनाग्निनेति सूचनाय प्राक् तापदवदित्युक्तम् । सहजश्रियं स्वाभाविकसम्पदम् । इभजेन इभात् जातः तेन कुवलयापीडाख्यगजेन ईड्या स्तुत्या गतिः तदग्रे सञ्चारो यस्य स तथोक्तः । यद्यप्यसौ दुष्टत्वान्न स्तौति तथापि कौशलवशात् स्तुतिरित्यर्थः । उदधेः रत्नं अलङ्कारभूतम् अमुं श्रीकृष्णं कृती हृदि भजेत् ॥७॥

**मधुरयाजित दानवसद्गिरावशनिकाय गतागमसाधक ।**
**नरतुरङ्गमहर्षकराकृते भवगतावगताखिल पाहि नः ॥ ८ ॥**

**व्या :** हयग्रीवकथां[१] श्लिष्टोक्त्या वर्णयति । **मधुरयेति** । मधोर्दानवस्य रयो वेगस्तेनाजितः । युद्धे अतिवेगवता मधुनामकदैत्येन जेतुमशक्येत्यर्थः । दानवानां सत् सीदन्ति निषीदन्त्यस्यामिति सत् सभेत्यर्थः । सैव गिरिः पर्वतः तस्मिन् दानवसद्गिरौ विषये अशनिवत् वज्रवत् कायो यस्य तस्य सम्बुद्धिः । दैत्यपर्वतध्वंसे वज्रकल्पावयवेत्यर्थः । अङ्के निक्षिप्य मुष्टिनैव मधुकैटभयोर्मर्दनात् । गतः मधुकैटभाहृतः आगमो वेदस्तस्य साधक । वेदापहारिणौ तौ हत्वा पुनरानीतसकलवेदेत्यर्थः । हर्षकरी आकृतिर्यस्य तस्य सम्बुद्धिः । अश्वाकारत्वेऽप्यतिसुन्दरेत्यर्थः । भवः संसारः गतो तस्मात् तस्य सम्बुद्धिः । भवगत मोक्षदायकसकलवेदोपदेष्टृत्वात् भवात् संसारात् गत नित्यमुक्तेति वा । अवगतम् अखिलं येन । सर्वज्ञ इत्यर्थः । नरश्चासौ तुरङ्गमश्च नरतुरङ्गमः हयग्रीवः अर्धेन नराकारः अर्धेन तुरङ्गमाकारः नः पाहि । मातापित्रोरभावात् तन्मूर्तेर्वर्णनमवतारप्रयोजनं चोक्तम् । **श्रीकृष्णपक्षे तु** । **मधुरया** मनोहरया युद्धे अहं एकाकी आयुधं न गृह्णामीत्यादिरूपया **सद्गिरा** समीचीनवचनेन जितः वञ्चितः **दानवो** दुर्योधनो येन तस्य सम्बुद्धिः । **वशानां** स्ववशानां पाण्डवानां निकायस्य समूहस्य

---

१ चतुराननाय चतुरः पुराऽऽगमान् प्रददावसावनिमिषेश्वरः प्रभुः ।
विनिहत्य हि श्रुतिमुषं पुरातनं वपुषोद्धतं हयमुखेन सद्रिपुम् ॥ - म.वि.(८/१४)
हयमुखेन वपुषा उद्धतमसुरं निहत्य । सुरेश्वरो हयग्रीवेन वपुषा मधुम् । - (भा.प्र.)

गतं द्यूतेन परैरपहृतं यत् राज्यादि तस्यागमः पुनः पाण्डवेषु प्राप्तिः तस्य साधक। **नरतुरङ्गमाः** अर्जुनतुरङ्गमाः रथनिबद्धाश्वास्तेषां **हर्षकरी** आकृतिराकारो यस्य तस्य सम्बुद्धिः। सारथीभूय लालितपार्थरथाश्वेत्यर्थः। भवः संसारः तस्मिन् गतिः स्थितिः तस्यां भूलोकप्राप्तावपीत्यर्थः। अगताः सहैव स्थिता इत्यर्थः। अखिलाः निखिलाः पूर्णत्वादयो यस्मात् तस्य सम्बुद्धिः। **अगताखिल** श्रीकृष्ण। नः पाहि। पूर्वश्लोके कालयवनवधप्रकारो वर्णितः। अत्र भारतकथेति विवेकः ॥ ८ ॥

**प्रणतविप्रजनाम यतोऽकरोन्ननु जलान्तरवर्ति निजास्पदम्।**
**विमलभीमरथीप्सितदायकः स्वविजितोऽविजितोऽप्ययमच्युतः ॥९॥**

**व्या :** इदानीं पाण्डुरङ्गं[1] वर्णयति। **प्रणतेति**। यतः कारणात् **जलस्य** पुण्डरीकतीर्थजलस्य **अन्तरे** मध्ये **वर्ति** निजास्पदं स्वगृहं **प्रणतः** यो **विप्रः** पुण्डरीकः तस्मात् जातं नाम पुण्डरीकदेवालय इत्यभिधा यस्य तत्। **अकरोन्ननु** कृतवान् खलु। स्वकीयस्थलमपि पुण्डरीकनामसमन्वितनाम्ना प्रथयामास। इतः विमला भीमरथी नदी तस्या ईप्सितदायकः अभीप्सितवरदायकः अयमच्युतः पाण्डुरङ्गः अविजितोऽपि स्वैः स्वभक्तैः विजितः[2] तदिच्छानुसारेण वर्तमान

---

१ तीरे सत्सरितस्तिरस्कृतधनासक्तिर्विरक्तिप्रियः
पादाम्भोजमिदं मदङ्कसहितः सञ्चिन्तयान्तर्हृदि।
पश्चात् ते कटिमात्र एव भविता संसारवार्धिर्न चेत्
शिक्षामीति हि लक्षयत्यनुदिनं स्वावस्थया विठ्ठलः ॥
पापावलीपाटनपद्मपाङ्गः श्रीपाणिपद्माश्रितजानुजङ्घः।
गोपालबालः कृपया स्वयं नः श्रीपाण्डुरङ्गो भवतु प्रसन्नः ॥
पापापनोदनपटु प्रियभृत्यभृङ्गैः पेपीयमानशुभसुन्दरतारसार्द्रम्।
तापत्रयोपशमनं तरुणार्कवर्णं गोपालबालचरणाम्बुरुहं श्रितोऽस्मि ॥
- तीर्थप्रबन्धे(२/६-८)

२ अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज ॥ इति भागवते (९/४/६३)

इत्यर्थः । इति पाण्डुरङ्गस्य महिमा वर्णिता । **कृष्णविषये तु – प्रणताः विप्रजनाः** मधुरापुरस्था ब्राह्मणजनाः तेषामामयः कालयवनकृतोपद्रवः तस्मान्निजास्पदं स्वपट्टणं जलान्तरवर्ति समुद्रजलमध्यवर्ति अकरोत् । ननु । **विमलः** अच्छिन्नधर्मः[1] **भीमः** भीमसेन एव **रथी** महारथिकः । तस्याभीप्सितदायकः **अयमच्युतः** श्रीकृष्णः **अविजितोऽपि** वैरिजनैरजितोऽपि **स्वविजितः** । भीमसेनाख्यनिर्मल भक्ताभीष्टदायकत्वात् स्वभक्तविजित इति भावः ।। ९ ।।

**रुचिर केशव शम्बरधाम ते लसति मारमणोऽसि समाकृते ।**
**सकलगोकुलपालक दुष्कृतिं परिहरारिहराखिलवास नः ।।१०।।**

**व्या :** केशवाद्यवतारान् वर्णयति । **रुचिरेति** । हे **रुचिर** मनोहर । **केशव** तन्नामक ते तव **शम्बरधाम** उदकाख्यगृहम् । नीरक्षीराम्बु शम्बरमित्यमरः । **लसति** । अनेन नारायणेत्युक्तं भवति । हे **समाकृते** सर्वावतारेषु समाकार । त्वं मायाः लक्ष्म्याः **रमणोऽसि** । मायाः धवः पतिरिति व्युत्पत्त्या माधवेत्युक्तं भवति । कलाभिः सहितं **सकलं गोकुलं** शास्त्रसमूहं तस्य **पालकः** । गाः शब्दान् विन्दते प्राप्नोति पालयतीति व्युत्पत्त्या गवां शब्दानां विन्द इति व्युत्पत्त्या गोविन्देत्युक्तं भवति । निरुक्तत्वाद्रेफलोपादिकं द्रष्टव्यम् । **अरिहर** शत्रुसंहारक । अखिलेषु वासो आवासो यस्य तस्य सम्बुद्धिः । अनेन विषऌ व्याप्ताविति धातोः विष्णो इत्युक्तं भवति । **नः** अस्माकं **दुष्कृतिं** पापं **परिहर** । **श्रीकृष्णपक्षे तु** – हे रुचिरकेश मनोहरकुन्तल । मारस्य मन्मथस्य मनसः असिसमा खड्गसमा आकृतिर्यस्य तस्य सम्बुद्धिः कन्दर्पादप्यनन्तगुणितसौन्दर्येत्यर्थः[2] पूर्वत्र रमणेत्येकपदत्वाण्णत्वम् । अत्र मारस्य मन इति भिन्नपदत्वाण्णत्वाभावः। श्रीकृष्ण ते तव वशम् अधीनम् । वरधाम उत्तमद्वारवतीमन्दिरं लसति ।

---

१ शुद्धे भागवते धर्मे निरतो यद्वृकोदरः ।। - इति म.भा.ता.नि. १८/४

२ साक्षान्मन्मथमन्मथः । -इति भागवते(१०/३१/२१)

वबयोरभेदात् पूर्वत्र बकारः । सकलगोकुलस्य नन्दगोकुलस्य पालक । अरिहर कंसादिशत्रुनाशक अखिलावास खिलो न भवतीत्यखिलो **वासः** स्थानं यस्य तस्य सम्बुद्धिः । अद्यापि समुद्रान्तः भगवन्मन्दिरम् अविनष्टं सदस्तीति पौराणिकी वार्ता[1] । श्रीकृष्ण नः दुष्कृतिं पापं परिहर ॥ १० ॥

**मधुमदक्षय माल्यसुविस्तृते कुजनमानसमाप्तिदविक्रम ।**
**सुखद वामन सोमरसार्थिषु श्रियमुदाय मुदाऽऽर्जयसेऽवनौ ॥११॥**

**व्या : मध्विति** । मधोर्दैत्यस्य मदक्षयः गर्वक्षयः यस्मात् तस्य सम्बुद्धिः । **मधुमदक्षय** मधुसूदनेत्यर्थः । मैव लक्ष्मीरेवालिः सखी तस्याः असुः प्राणस्तस्य विस्तृतिर्विस्तारो यस्मात् तस्य सम्बुद्धिः । लक्ष्मीप्राणनाथेत्यर्थः । कोः पृथि॰ याः जनस्य जनोलोकस्य उपलक्षणं चैतत् । लोकत्रयस्य मानं प्रमाणं तस्य समाप्तिम् इयत्तां ददातीति **कुजनमानसमाप्तिदः विक्रमः** पादविक्षेपो यस्य तस्य सम्बुद्धिः । त्रिषु लोकेषु विक्रमो यस्येति व्युत्पत्त्या त्रिविक्रमेत्युक्तं भवति । सोमस्य **सोम**लतायाः यो **रसः** तम् **अर्थितुं** शीलमेषामस्तीति सोमरसार्थिनस्तेषु यज्ञेषु दीयमानसोमलतारसार्थिष्वित्यर्थः । देवेषु **सुखद** सुखप्रद हे **वामन** उत्कृष्ट अयाः अभीष्टं यस्य स तथोक्तः तत्सम्बुद्धिः उदाय अवाप्तसकलकामेत्यर्थः। अवनौ भूमौ मुदा श्रियं श्रीदेवीं सम्पदम् आर्जयसे धारयसीत्यर्थः । अनेन **श्रियं** धारयतीति व्युत्पत्त्या श्रीधरेत्युक्तं भवति । **श्रीकृष्णपक्षे तु** – मधु पुष्परसोऽस्य वर्तत इति मधुमत् । न विद्यते क्षयो यस्य तदक्षयम्। अम्लानमपीत्यर्थः । मधुमदक्षयमाल्यं वनमाला तस्य विस्तृतिः विस्तारो यस्य तस्य सम्बुद्धिः । मधुमदक्षयमाल्यसुविस्तृते आकण्ठम् आपादं चालम्बमानाम्लानवनमाला-सहिता'[2] इत्यर्थः । कुजनानां दुर्जनानां मानमहङ्कारस्तस्य समाप्तिदो

---

१ वर्जयित्वा महाराज श्रीमद्भगवदालयम् ॥ - भागवते ११/३१/२३

२ आपादलम्बिनी माला वनमालेति कीर्त्यते ॥ - स्मृतिः (पूजाकल्पलतायामुद्धृता)

नाशदः विक्रमः पराक्रमो यस्य तस्य सम्बुद्धिः । कुजनमानसमाप्तिदविक्रम । अमरसार्थिषु देवसहायवत्सु । सार्थः सहायः देवप्रियजनेष्वित्यर्थः । न विद्यते मनो यस्य सः अमनाः मनोरहितः तत्र प्रीतिरहित इत्यर्थः । तस्यामनसः दुर्जनस्य सुखदव सुखस्य दव दावाग्निकल्प । दुर्जनसन्तोषविनाशकरेत्यर्थः । **उदाय** अवाप्तसकलकाम श्रीकृष्ण । अवनौ भूमौ **मुदा श्रियं** सम्पदम् **आर्जयसे**। अथवा श्रियं द्वारवतीसम्पदम् **उदाय** समुद्रोदकाय दातुम् आर्जयसे । अन्ते समुद्रः प्लावयिष्यतीति वचनात् । पूर्वोक्तपूर्णत्वद्रव्यार्जनयोर्विरोधपरिहारायेयं योजना । सकलदेशस्थितं द्रव्यं समुद्रे स्थापयितुं द्वारकायां संपत् स्थापयसीति भावः । अत्रापि श्लोके 'माल्यसुविस्तृते' इत्यत्र डलयोरभेदात् माल्यसुविस्तृते । पाठभेदे अर्थद्वयसिद्धिर्द्रष्टव्या ॥ ११ ॥

**[1]करणपालनशील नते स्थितिं जलजनाभ वदन्ति कमाश्रिताः ।**

---

१ **अयं श्लोकः श्रीवादिराजश्रीमच्चरणैरेव स्वकृत-उपन्यासरत्नमालायां व्याख्यातः –**
करणपालनशील न ते स्थितिं जलजनाभ वदन्ति कमाश्रिताः ।
विदुरमी वरदामधरोदरप्रियजुषो यजुषोऽग्निबलानिव ॥
इति रुग्मिणीशविजयस्थं पद्यम् । अनेन हि पद्येन त्रिविधजीवानां स्वभावत्रयं तदुचितफलत्रयं चोक्तम् । तथाहि । **करणपालनशील**-सृष्टिरक्षणस्वभाव, हे **जलजनाभ** कृष्ण! **वरदामधरोदरप्रियजुषः**-प्राङ्मात्रा वरेण दाम्ना बद्धोदरस्य तव प्रियजुषः प्रियमेव कुर्वाणाः, **जलाः**-जडाः, **जनाः**-मूर्खजनाः दुर्जना येभ्यस्ते जडीकृत-दुर्जना इत्यर्थः। **अमी**-द्वारकास्थिताः परमवैष्णवाः **नते**-नम्रे रमाब्रह्मादिचेतनजने अधिकरणे, **स्थितिं**-नियामकतयाऽवस्थानम् 'ष्ठा गतिनिवृत्तौ' इति धातोराधाराधेयभावेन हृद्यवस्थानं मुक्तावपि न निवर्तत इति सूचयितुं "वितन्वताऽजस्य सर्तीं स्थितिं हृदि" इति स्पष्टभागवतवाक्यमुक्तार्थे प्रमाणीकर्तुं च स्थितिमित्युक्तम् । **वदन्ति**-स्वशिष्यान् प्रत्युपदिशान्ति । **विदुश्च**-मुक्तौ संसारे च रमाब्रह्मादिसर्वचेतनानां भगवान् नियामकतया सर्वदा सर्वोत्तम एवाधाराधेयतया तेषां हृदि स्थित एव न तु कदाप्यैतैरेकीभूतश्चेति जानन्ति उपदिशन्ति च । कथमिव, **यजुषः**-यजुर्वेदात् **अग्निबलानिव**-यज्ञानिव यजुर्वेदस्य यज्ञतन्त्रत्वादिति तज्जीवानां स्वभावः कथितः ।

**भवतः**-वैकुण्ठादिलोकत्रयस्थितस्य तव **अन्तिकं** समीपं । **आश्रिताः**-सम्यक् श्रिताः सायुज्यं च सूचयितुमाङित्युपसर्गः । अस्ति भवत्योस्सर्वत्रान्वयात् भविष्यन्तीति तेषां फलं चोक्तमित्येका योजना ॥ १ ॥

**भवः** - शिवः, **दन्ती** - विनायकः, **कः**-ब्रह्मा सूर्यश्च, **मा**-शक्तिरूपा लक्ष्मीः भवदन्तिकमाः । ता एव **आ** सम्यक् परदेवतात्वेन श्रिताः **शैव** -गाणपत्य-ब्राह्म-सौर-शाक्तादि दुर्मतावलम्बिनः त ऐहिकसम्पदा **अधरोदरप्रियजुषः**-उदरादधरस्य शिश्नस्य उदरस्य च प्रियं कुर्वाणाः । **जलजनाः**-मूर्खजनाः मिथ्याज्ञानिनः । **अयजुषः**-यजुर्वेदरहिताः । **अग्निवलानिव**-यज्ञानिव **ते**-तव । **वरदां स्थितिं**-सर्वोत्तमत्वं । न विदुरित्यधमजीवस्वभावो दर्शितः । **भवन्** सर्वदा वर्तमानः **अन्तो**-नाशः शक्त्याद्यस्त्रपातेन हिंसेत्यर्थः । सोऽस्य वर्तत इति भवदन्तिं, तच्च **तत्कं**-शिरश्च भवदन्तिकं जात्येकवचनं । अन्धे तमसि पाते सति नानाशस्त्रघातैः सदा ताड्यमानानि स्वस्वरूपभूतशिरांसीत्यर्थः । **आ** सम्यक् **आ** अनन्तकालपर्यन्तं च श्रिता भविष्यन्तीत्यधमजीवानां फलं चोक्तमीति द्वितीया योजना ॥ २ ॥

**अधरोदरप्रियजुषः** - शिश्नोदरपरायणाः । **जलजनाः**-कदाचिज्जला मिथ्याज्ञानिनः कदाचिज्जानन्तीति **जनाः** तत्त्वज्ञानिनश्च सन्तः कदाचिद्वैष्णवसमागमे सति भवतोऽन्तिकमाश्रितास्त्वामेव सेवमाना इति यावत् । कदाचिन्मिथ्याज्ञानिनां समागमे शैवसमागमे भवम् । गाणपत्यसमागमे दन्तिनम् । ब्राह्मसौरसमागमे कम् । शाक्तसमागमे माम् च आश्रिता इति कृत्वा ते वरदां स्थितिं-अवस्थां यजुषेऽग्निबलानिव विदुः कदाचिज्जानन्ति अयजुषोऽग्निबलानिव **विदुः कदाचिन्न जानन्तीत्यर्थः** । ज्ञानस्यैव कादाचित्कत्वात् विषयभोग एव तेषां भूयानिति ज्ञापनाय 'अधरोदरप्रियजुषः' इति प्राग्विशेषणमुक्तम् । अनेन मध्यमजीवानां स्वभावो वर्णितः । उदरप्रियं सुखं तस्मादधरमधमं दुःखं । ''सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम्'' इति वचनात् सुखादधस्ताद्विद्यमानं जुषन्त इति ते तथोक्ताः । ज्ञानानुसारेण लिङ्गभङ्गे जातेऽपि स्वस्वरूपभूतसुखदुःखे क्रमेण भुञ्जाना इत्यर्थः । एतदेव स्पष्टयितुमुक्तं 'भवदन्तिकमाश्रिता' इति । **भवन्**-जायमानः अन्तो अवसानमस्तीति भवदन्ति तच्च **तत्कं** सुखंभवदन्तिकं स्वानुभवसमये व्यक्त्यात्मना स्थितं दुःखानुभवसमये ईशेच्छया शक्त्यात्मना स्थितं चेत्यर्थः । आ समान्तात् सर्वत्रेत्यर्थे । ''त्रिदिवनिरयभूगोचरान्''- इत्युक्तेः । लिङ्गभङ्गानन्तरमपि स्वर्गस्थितावनित्यकेवलसुखानुभवितृस्वर्गिवत् स्वरूपभूतसुखमेवानुभवन्तो नरकस्थितिदशायामनित्यदुःखमात्रानुभवितृनारकिवत्स्वरूपभूतदुःखमेवाऽनन्तोभूस्थितिदशा-

यामनित्यसुखदु:खभोक्तृभूस्थमनुष्यादिवत् कदाचित्स्वरूपसुखं कदाचित्स्वरूपदु:खं चानुभवन्त इति मध्यमजीवानां फलं स्थानं चोक्तं भवतीति तृतीया योजना ॥ ३ ॥ समुदायाभिप्रायस्तु केवलं सर्वोत्तमविष्णुभक्ताः स्वरूपभूतनित्यसुखमात्रानुभविन ऊर्ध्वलोकस्थाश्चेति त्रेधाऽप्युत्तमजीवा उत्तमाः । अधमजीवास्तु विष्णोरधम-जीवानुवर्तिनः स्वरूपभूतदु:खमात्रानुभविनः सर्वतोऽप्यवाचीने तमस्येव स्थिता इति त्रेधाऽप्यधमजीवा अधमाः । मध्यमजीवास्तु कदाचित्सर्वोत्तमं विष्णुं कदाचित्ततोऽ-धमान् रमादींश्च परदेवतात्वेन सेवमानाः स्वरूपभूतसुखदु:खाख्यमध्यमफलानुभ-विनः स्वर्गनरकभूलोकाख्यमध्यमस्थानस्थिताश्चेति त्रेधाऽपि मध्यमजीवा मध्यमा इति विवेचनीयम् । न च वाच्यं पदचमत्कारलब्धोऽप्ययं त्रिविधोऽर्थः प्रमाणाभावात् कथमादरणीय इति । यौक्तिकेन युक्तिसिद्धेऽर्थे पृथक्प्रमाणानपेक्षणात् । तथाहि - अस्ति तावन्मुक्ताश्चेतनाः नित्यसुखमात्रानुभवरूपा इति परस्यापि मतम् । चेतन-स्वरूपभूतनित्यसुखानुभवात्मिका मुक्तिश्च 'विद्यैव तु निर्धारणात्' इति ब्रह्मसूत्रेण यथेच्छसम्भवदन्वयमेवकारं पुरस्कृत्यागतां 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इति स्मृतिमपेक्ष्य स्वोक्तविद्याख्यसाधनं निर्धारयतः सूत्रकृतोऽभिप्रेतया अयोगव्यवच्छेदान्ययोगव्यवच्छेदात्यन्तायोगव्यवच्छेदाख्यार्थत्रयसाधारणमेव-कारं विहाय **''नान्यः पन्था अयनाय विद्यते''** इति साक्षात्तदर्थभूतस्वापेक्षिता-न्ययोगव्यवच्छेदमेव स्पष्टं स्वीकृतवत्या अत एव निरवकाशया ''तमेवं विद्वान्'' इति श्रुत्या च तं ''श्रीश्च ते लक्ष्मीश्च पत्न्यौ'' इति सूक्तान्ते स्पष्टदृष्टलिङ्गं पुरुनामकनारायणं **एवं** -'उतामृतत्वस्येशानः' । 'अतो ज्यायांश्च पुरुषः' - इत्यादिनाऽस्मिन्नेव सूक्ते स्पष्टमुक्तसर्वोत्तमत्वादिप्रकारेण विद्वानमृतो भवतीति विष्णु-सर्वोत्तमत्वज्ञानाख्यतत्वज्ञानसाध्यत्वमपि सिद्धम् । एवं च सर्वतोऽप्यूर्ध्वगति-रूपमुक्तेः साक्षाद्विरुद्धे सर्वतोऽप्यधोगतिरूपेऽन्धेतमसि पतिता जीवाः मुक्तिविरुद्धनित्य-दु:खमात्रानुभवात्मकाः **बलाद्वक्तव्याः** । सा च तेषां गतिः मुक्तिसाधनत्वेनोक्तविष्णु-सर्वोत्तमत्वज्ञानरूपत्वज्ञानात् विपरीतशिवसर्वोत्तमत्वज्ञानादिरूपमिथ्याज्ञानसाध्या च तद्वदेव बलाद्वाच्या । न च तादृशी गतिरेव नास्तीति वाच्यम् - ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः । जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥ इति गीतायां सत्त्वस्था इत्यादित्रिविधजीवस्वभावानां च स्पष्टमुक्तेः । न च तामसानामेव कदाचित्साात्त्विकत्वसम्भवादनियतेयं गतिरिति वाच्यम् । 'त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा । सात्विकी राजसी चैव तामसी चेति तां श्रुणु' ॥ - इति

तत्रैव गतित्रयस्यापि भगवतैवोत्तममध्यमाधमाख्यत्रिविधजीवस्वभावसम्भूतत्वकथनेन कदाप्यन्यथाकर्तुमशक्यत्वात् । न हि स्वाभाविकस्यापि कदाचिदभावः सम्भवति । तथाच 'मध्ये तिष्ठन्ति राजसाः' इत्युक्तमध्यमजीवाश्च मुक्तितमोयोग्योत्तमाधमजीववत् कदाचिदुत्तमत्वस्य कदाचिदधमत्वस्य च मध्यमत्वेन स्वरूपभूतसुखदुःखानुभवात्मकाः न्यायसाम्यादेवानिच्छताऽपि वाच्याः । अत एव सा गतिः कादाचित्कोक्तोभयविधसाधनसाध्या च सिद्धेति स्वोक्तार्थो यौक्तिक इति मन्यामहे ।

सत्कर्मसाध्यायामत एव 'नास्त्यकृतः कृतेन' इति सन्मुक्तेः कर्मासाध्यनित्यपुरुषार्थमोक्षविलक्षणत्वेनानित्यायां स्वर्गाख्योर्ध्वगतावनित्यकेवलसुखेन सुखितावत्तद्विरुद्धदुष्कर्म साध्यायामत एवानित्यायां भूम्याख्यमध्यमगतावनित्याभ्यां सुखदुःखाभ्यां सुखितादुःखितावच्च तत्त्वज्ञानसाध्यायामत एव नित्यायां 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इत्यादिश्रुत्या 'आद्यः स्थिरचराणां यो वेदगर्भः सहर्षिभिः' इत्यादिस्मृत्या च तत्त्वज्ञानिश्रेष्ठसुरादिप्राप्यत्वेनोक्तायां स्वर्गादप्यूर्ध्वगत्यां मुक्तावतोऽप्याधिक्यावश्यम्भावेन नित्यादुःखनित्यसुखरूपतां कथं न युक्तिरुत्तेजयेत्।'अन्धं तमः प्रविशन्ति येऽविद्यामुपासते' इति श्रुत्या 'अविद्याम्' विद्यापदोदिततत्त्वज्ञानविरुद्धविद्याम्, मिथ्याज्ञानमिति यावत् । उपासते - सेवन्ते तत्रैवादरं कुर्वन्तीत्यर्थः । तेऽन्धंतमः प्रविशन्तीति मिथ्याज्ञानसाध्यतया स्पष्टमुक्तायां अस्ति तावत्तवापि मते मिथ्याज्ञानं त्वदभिलषिततत्त्वज्ञानानिर्मोक्षप्रसङ्गात् सामग्रीवैय्यर्थ्यायोगाच्च । नापि नरकमात्रफलम् । तत्त्वज्ञानस्यापि स्वर्गमात्रफलत्वापातादिति युक्त्या च मिथ्याज्ञानसाध्यत्वयोग्यायामत एव नित्यायां 'असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः' इत्यादि श्रुत्या मिथ्याज्ञानिश्रेष्ठासुरादिप्राप्यत्वेनोक्तायामत एव नरकादप्यधमत्वयोग्यायां 'संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्' इति सूत्रे ''एतेऽशुभकृतः संयमने प्रपतन्ति तत्र ह ये परद्विषो गुरुद्विषः श्रुतिद्विषस्तदवमन्तारः शठा मूर्खा इति ते वै ततोऽवरुह्य तमसि प्रपतन्ति नैवैत उत्तिष्ठन्तेऽपि कर्हिचिद्धव्र वा एतदित्याहुरथ येऽन्ये ब्रह्मद्विषः स्तेनाः सुरापा इति ते वै तदनुभूयेमं लोकमनुव्रजन्ति'' इति सूत्रसूचितश्रुतौ च स्पष्टं पुनः संयमिन्यामेव यातनाभोक्तृजीवेभ्य इतरेषां विस्तीर्णयातनानां जीवानां मध्ये केवलमिथ्याज्ञानात् परमनरकादधमत्वेनोक्तायां तमोरूपदुर्गतौ ततोऽप्याधिक्यावश्यम्भावेन तत्र पतितानामसुर्या इति श्रौतपदसूचितासुरादीनां नित्यासुखनित्यदुःखरूपतां कथं न युक्तिरुत्तेजयेत् । इतरेषां केवलमिथ्याज्ञानिनां चेत्यर्थः । उभयविधज्ञानसाध्यायामत

एव नित्यायाम्, उत्तमाधमगत्योर्मध्यभागस्थितगीतोक्तमध्यमगतौ च स्थितानामुत्तमाधमजीवाभ्यां वैसादृश्याय कर्मसाध्यस्वर्गादिरूपजीवफलतो वैसादृश्याय च नित्यसुखदुःखस्वरूपतां कथं न युक्तिरुत्तेजयेत् । सदसन्मिश्ररूपकर्मणामवैय्यर्थ्याय च नित्यसुखदुःखस्वरूपतां कथं न युक्तिरुत्तेजयेत् । सदसन्मिश्ररूपकर्मणामवैय्यर्थ्याय तत्फलत्रैविध्यस्यावश्यकत्वे सदसन्मिश्ररूपज्ञानानामपि त्रैविध्यं कुतो नापतेत् । न ह्युपेक्षाविषयत्वेन प्रसिद्धतृणादिकमपि पशूनामर्थे सृजन् भगवान् किमप्यफलं निर्मिमीते । अतस्तत्त्वविदग्रेसरो मध्वगुरुर्न युक्तिविधुरं कदाप्यवदत् । किञ्च, देवादयः सज्जना नियमेन पुण्यशीला हर्येकपरायणाश्चेदानीं दृश्यन्ते । कदाचित् किञ्चितेष्वपि दृश्यमानमवश्यं स्फटिके लौहित्यमिव तदाविष्टासुरैरेव कृतमिति तत्पापपरम्परामूलमेव न स्वाभाविकम् । स्फटिकलौहित्यं स्फटिकावयवलौहित्यपरम्परामूलतो न कुचोद्यावकाशः । दैत्यादयो दुर्जनाश्च नियमेन पापशीलाः शिवादिभजकाश्चेदानीं दृश्यन्ते । मनुष्याश्च प्रायः पुण्यपापाख्योभयस्वभावास्तत्र तत्र गमने सति तां तां देवतामेव सेवमाना इदानीं कर्मणः सर्वोत्पत्तिमन्निमित्तकारणत्वात् पापेन पुण्याजननात्, पुण्येन पापाजननाच्च इदानीं पुण्यशीला इदानीं क्रियमाणस्वपुण्यजननाय पूर्वजन्मनि पुण्यशीलाः ततस्ततः पूर्वमप्येवमित्यनादौ काले च पुण्यकरणस्वभावत एव कथं न स्वभावत एवोत्तमाः । अनयैव दिशा अधमाः कथं न स्वभावत एवाधमाः । मध्यमाश्च कथं न स्वभावत एव मध्यमाः । मनुष्येष्वपि पुण्यैकरता हरिपरायणाः केचिदिदानीं दृश्यन्ते । त उत्तमकोटौ प्रविशन्ति । पापैकरतास्तूक्तयुक्त्या घोरतमाधमकोटौ प्रविशन्ति । देवादिष्वेवाभिनिवेशवन्तश्च मध्यमकोटावित्यपि विवेको द्रष्टव्यः । एवं च जीवत्रयस्योत्तमत्वादिविरुद्धत्रिविधस्वभावस्य चैकविधफल योगात्स्वभावत्रयोचितं फलत्रयं च कथं न युक्तेः प्रभावः सम्भावयेत्। अत एव मध्यमजीवानां न लिङ्गदेहभङ्गोऽस्तीति मन्दाशङ्काऽपि न युक्तिसहा। उत्तमाधमसामग्रीव मध्यमस्यापि सामग्रीकृतलिङ्गदेहभङ्गात् स्वाभाविके तत्स्वरूपसुखदुःखे अनुभावयेदेव सामग्र्याः कार्याजकत्वनियमस्य सर्ववादिभिरङ्गीकृतत्वात् । अन्यथा कृतहानिप्रसङ्गात् । कथं चान्यथाऽनित्याभ्यां सुखदुःखाभ्यां तेषां नित्यसंसारित्वम्? न हि प्रवाहतोऽनित्या घटाद्या नित्या इत्युच्यन्ते। एवं च 'तनुभृत्स्वभावसम्भूतये'' ''सुखदुःखमध्यसम्प्राप्तये'' ''नित्यं ययुः'' ''असुरास्तु तमो घोरं यदि तत्रैव मध्यमाः । मध्यमां गतिमेवापुः'' इत्याद्याः प्राचां वाचोऽपि समाहिताः । ''अन्यथाऽनुपपत्तिश्चास्य समाधानम्''इत्युपलक्षणम् । भूतचतुष्टयस्य तन्मात्राचतुष्टयस्य च मुखतोऽनुक्त्योपेक्षितत्वेन च भगवदधीनत्वेनावर-

त्वमित्यपि ज्ञेयम् । ''नासदासीन्नो सदासीत्'' इत्यनेन ''नासदासीन्नो सदासीत् तदानीं नासीद्रजो नो व्योमापरो यत्। किमावरीवः कुह कस्य शर्मन्नम्भः किमासीद्गहनं गभीरम्। न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत् प्रकेत'' इति श्रुतिखण्डत्रयं गृह्यते ॥ ''मूर्तं सदिति सम्प्रोक्तममूर्तमसदुच्यते'' इति स्मृतेः सत्पदेन पृथिव्यप्तेजोरूपं भूतत्रयं - असत्पदेन वाय्वाकाशभूतद्वयं च ग्राह्यमिति भावेनाह ''पञ्चभूतानि नासुः''इति । रजःपदं सत्त्वतमसोरुपलक्षणमिति भावेनाह ''गुणत्रयम्'' इति। देहलीदीपन्यायेनोभयसङ्ग्रहार्थं श्रुतौ मध्यपतितं रज एव गृहीतमिति ज्ञेयम्। पर इति वदता ''पॄ पालनपूरणयोः''इति धातोः कर्त्रर्थे असुन्प्रत्यये कृते सति पर इति सकारान्तं पदमिति सूचितम्। ''न मृत्युरासीत्''इति श्रुतिखण्डस्यार्थमाह ''मृत्युः'' इत्यादिना। प्रकृष्टं केतः केतनं चिह्नमसाधारणधर्म इति भावेनाह ''दिवारात्र्योश्च प्रभावः'' इति। ''किमावरीवः'' इति श्रुतिखण्डस्यार्थमाह 'एतदभावात्' इत्यादिना । अवातमित्यस्यार्थो 'निवातम्' इति । स्वधयेत्यस्यार्थकथनं ''स्वसामर्थ्येन''इति । धीयते धार्यते अनया सर्वं जगदिति व्युत्पत्त्या स्वधापदेन स्वसामर्थ्यमुच्यते इति भावः । आनीदित्यस्यार्थकथनम् ''अचेष्टत'' इति । ''अन चेष्टायाम्'' इति धातोः लुङ् रूपमिदम् । ''तस्मादन्यत्पर आस'' इत्यत्र पर उत्तममित्यर्थः । अन्यत्वार्थकथने प्रागुक्तान्यपदेन पौनरुक्त्यापत्तेः। ''विकृतरूपविनाशः'' इत्यस्य विकृतरूपस्य विनाश इत्यर्थः। आदिपदेनानुपकारित्वं गृह्यते। तमोभिमानित्वात् ''तमु ग्लाने'' इति धातोः दुर्गारूपेण जगत्संहर्तृत्वाच्च श्रीरूपं सलिलं तमःपदेनोच्यते। प्रकृष्टं केतः केतनं निकेतनं स्थानं यस्येति व्युत्पत्तिमाश्रित्याह ''अपरिमितम्''इति । प्रकृत्याख्यं श्रीरूपप्रकृत्याख्यमित्यर्थः । गूळ्हं गूढमित्यस्यार्थकथनं ''गूहितम्''इति । प्रपञ्चस्य ब्रह्मानन्यत्वे प्रमाणाभावात्'' इत्युपलक्षणम् । एवं सत्यादिपदोल्लङ्घने कारणाभावादल्पाक्षरत्वाच्च वाचादिशब्देभ्य इत्येव सूत्रप्रवृत्तिप्रसङ्ग इत्यपि द्रष्टव्यम्। ''प्रमाणविरुद्धं च'' इत्युपलक्षणम्। ब्रह्मात्मकपदेनैकत्र बाधः । अन्यत्राभेद इति विरम्यव्यापारप्रसङ्गश्च । ''लोकसिद्धत्वात्''इत्यस्य एकाकिराजापेक्षया स्वाधीनचतुरङ्गसैन्यसहितस्य राज्ञो महिमदर्शनादिति भावः। ''शरीरेन्द्रियप्राणादिः'' इति वदता सूत्रगतादिपदेन शरीरेन्द्रियादिकं गृह्यत इति सूचितम्। ''अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात्'' इति वक्ष्यमाणसूत्रस्यायमभिसन्धिः। अन्यथाऽनुमितौ प्रकृत्युपसर्जनपुरुषानुमितौ क्रियमाणायां च जानातीति ज्ञो जीवः। तस्य शक्तिवियोगात् शरीरप्रवेश एव स्वतः शक्त्यभावात् । भावं चान्यत्रापि स्वत एव प्रवृत्तिसम्भवात्

शरीरप्रवेशवैय्यर्थ्यमित्युभयथाऽपि जीवकर्तृत्वं न घटते इति ॥ ''पुनराशङ्कोदयात्'' इति वदता ''यथा प्राणात्''इति सूत्रे प्राक् भगवतोऽनुप्रवेशः कथितः। स माऽस्तु। जीवानुप्रविष्टमेव शरीरं प्रवर्ततामिति पुनराशङ्कोदय इति सूचितम्। ''विद्यते च ते जीव'' इत्यत्र बहुकालं हिताकरणमहितकरणं चेत्यस्य सुखेन जीवामीति यद्धितं तस्याकरणं मध्य एव मरणात्। भुञ्जानस्य यदृच्छया स्वजिह्वादंशनादिकं यदहितं तस्य करणं चेत्यर्थः। ''इङ्गयत्यङ्गमङ्गानि'' इत्यत्र कृत्रिमप्रतिमाया एकैकावयवचलनमात्रे अपेक्षिते तदङ्गमेवेङ्गयति। नर्तनविशेषादौ सर्वाङ्गचालने अपेक्षिते अङ्गानीङ्गयतीति सम्बन्धः। ''अन्नं रसादिरूपेण''इत्यत्र गोभिर्भुक्ततृणादिरूपमन्नं तदुदरे तिष्ठति। तस्यान्नस्य रसं ''व्यानः सर्वशरीरगः'' इति वचनात् नाडीस्थितो व्यानः अधोभागे आनयति। एवं नारीभिर्भुक्तमन्नं तदुदरे तिष्ठति। तस्य च रसं ऊर्ध्वनाडीद्वारा तासां स्तनद्वये प्रवेशयति। गवां नारीणां चान्तरस्वातन्त्र्यान्न तत्कर्तृत्वमिति भावः। ''कार्योपसंहारकर्तृत्वानुपपत्तेः'' इत्युपलक्षणम्। कृषीवलानां योद्धॄणां राज्ञां वणिजां च मध्ये कार्यविच्छेददर्शनादित्यपि द्रष्टव्यम्। ''तस्या अनुपलब्धिबाधितत्वात्'' इत्यत्र तस्या ईश्वरसाधकश्रुतेरनुपलब्धिः क्वापि केनापि य ईश्वरस्यानुपलम्भस्तद्बाधितत्वादित्यर्थः। न तु श्रुतेरेवानुपलम्भः। ''तच्च प्रतिपादितम्'' इत्यत्राभिमान्यधिकरणे इति शेषः। ''अविचारितरमणीयाऽविद्या'' इत्यत्राविचारिते सति रमणीया, विचारिते सति अन्ततोऽघटितबहुप्रमेयघटितेत्यर्थः। सेश्वरवादेऽपि निरवयवत्वशब्दव्याकोपस्य कः परिहार इत्यतोऽपीदमुदितम्। ''यद्धि युक्त्या'' इति ईश्वरस्याघटितघटकत्वशक्तेरीशशब्देनैव सूचितत्वात्। अनीशस्य तु जीवस्येश्वरविषयकाज्ञानमात्रात् स्वविनाशे प्राप्ते स्वात्मानमेव रक्षितुमप्यसमर्थस्य जीवस्य तदसम्भवादिति भावः। ''योऽसौ विरुद्धः'' इत्यत्राणुत्वमहत्वे यौगपद्येन कथ्यमाने यः परमात्मा लोकदृष्ट्याविरुद्धः, विरोधवान् ''अणोरणीयान् महतो महीयान्'' इत्यादि प्रमाणैरविरुद्धः। लोकदृष्ट्या मनुः मननयोग्यः ''यतो वाचो निवर्तन्ते अप्राप्य मनसा सह'' ''नाहं विदाम्यहममी मुनयः सुरेशाः'' इत्यादिप्रमाणैरमनुः, आन्तं मननायोग्यः, लोकदृष्ट्या, वाक् वक्तुं योग्यः, ''सन्त्यश्रुता अपि नैवात्र शङ्का''। ''यतो वाचो निवर्तन्ते'' इत्यादिप्रमाणैरवाक् आन्तं वक्तुमयोग्यः। लोकदृष्ट्या इन्द्रः ''अर्श आद्यच्'' इन्द्रवान्। कृष्णरामाद्यवतारेषु विश्वामित्रनारदादीनामभिवादनदर्शनात्। ''मत्तः परतरं नान्यत्'' ''न दैवं केशवात् परम्'' इत्यादिप्रमाणैरनिन्द्रः न विद्यते इन्द्रो यस्येति विग्रहः। लोकदृष्ट्या प्रवृत्तिः प्रवर्तकत्वात् ''नाहं किञ्चिदुपाश्रितः''

**विदुरमी वरदामधरोदर प्रियजुषोऽयजुषोऽग्निबलानिव ॥१२॥**

इत्यादिप्रमाणैरप्रवृत्तिरिति योजना । ''न हि शब्दैकसमाधिगम्ये'' इत्यनेन यथा शब्दो वक्ति तथैव सोऽङ्गीकार्यः ॥ नतु लोकदृष्ट्या विरोधः शङ्कनीय इति सूचितम् । ''सर्वोपेता च'' इत्यत्र सर्वविषयिण्यः सर्वदा विद्यामानाश्च सर्वाः शक्तयस्ताभिः शक्तिभिरुपेतेत्यर्थः । ''श्रुत्यनुसारेण स्त्रीलिङ्गप्रयोगः'' इत्यत्र ''आत्मा हि''इति प्रागात्मनः प्रस्तुतत्वात् । अत्रापि सर्वोपेत इत्येव वक्तव्यम् । स्त्रीलिङ्गपदप्रयोगस्तु ''सर्वोपेता'' इति श्रुत्यनुसारात् ''यदपस्पृधेथां त्रेधा सहस्रं वितदैरयेथाम्'' इति श्रुतिः स्पष्टं जीवानां त्रैविध्यमाह । हे इन्द्राविष्णू उभा उभौ युवां जिग्यथुः सर्वानसुरान् जितवन्तावभूताम् । न पराजयेथे कदापि पराजयं नाप्नुथः । एनोरेनयोर्युवयोर्मध्ये कतरश्च कश्चन न पराजिग्ये पराजयं नाप । हे विष्णो इन्द्रश्च त्वं चेत्युभौ अपस्पृधेथां दैत्यैस्सह स्पर्धामकृषाथां इति यत् तत् तेन दैत्यैः सह स्पर्धाकरणेन स्पर्धा कृत्वा तद्बलेनेत्यर्थः । सहस्रमनन्तानन्तजीवान् विशेषेण विविधतया विरुद्धतया चेति त्रेधा ऐरयेथां प्रेरणामकुर्वाथाम् । उत्तमजीवेषु ब्रह्मादिषु हरिसर्वोत्तमत्वबुद्धिं चेति त्रेधा ऐरयेथाम् । अधमेषु पुनः पुनः विरोधमेव ऐरयेथाम् । मध्यमजीवेषु दैत्यवधादिसमये हरेः सर्वोत्तमत्वबुद्धिं वधात् प्राक् तेषां शिवदत्तसम्पद्दर्शने सति जरासन्धादियुद्धेषु कदाचिल्लीलया युवयोः पलायने च सति वरदातॄणां शिवादीनां सर्वोत्तमत्वबुद्धिं चेति त्रेधा ऐरयेथाम् । यद्वा शिवादीनां वरादन्यैरवध्यदैत्यैः सह युवयोः तत्कृतजगदुपद्रवदर्शनेन प्रथमं सहिष्णुत्वरूपस्पर्धैवाजायत । नतु तदैव त्वधोऽपि कृत इति यत् तस्मात् तैरेवोपद्रुतानां तेषां वरदायकानां ब्रह्मशिवादीनामवध्यतद्वधे समर्थयोः सर्वोत्तमयोर्युवयोः पृथिव्यादौ अवतारे सति सहावतारादौ च विशेषेण बुद्धिमैरयेथाम् । दैत्यादीनां तु अवतीर्णे स्वस्मिन् स्वभक्तेषु पाण्डवादिषु च पुनः पुनर्विरोधकरणाय मतिमैरयेथाम् । मध्यमजीवानां तु प्राक् दैत्यानां प्राबल्ये पराजये च सति तैः सह सख्येन वरदायक-शिवादीनामुत्कर्षबुद्धिं पुनस्तैरेवोपद्रुतानां तव प्रार्थने सति तेष्वपकर्षबुद्धिं युष्मदुत्कर्षे बुद्धिं चेति विविधमैरयेथामिति श्लोकोक्तः सर्वोऽप्यर्थः कथं न श्लोक्यः इति सर्वमवदातम् । तस्माद्विरुद्धे गती परिजिहीर्षता अनुकूलां स्वयोग्यगतिं मुक्तिं प्रेप्सुना च हरेस्तत्त्वनिर्णायकेषूक्तदशोपन्यासेषु श्रद्धावता भाव्यम् । अतः पूर्णमतिना यतिना निरूपित एव शास्त्रार्थ इति स्थितम् । इति फलोपन्यासः ।

वादिराजेन रचिता मालेयं विमला सदा ।
सदये हृदये धार्या हरिणा भववैरिणा ॥ - उपन्यासरत्नमालायाम्

**व्या : करणेति । करणानामिन्द्रियाणां पालने शीलं** यस्य स तथा । तस्य सम्बुद्धिः । हृषीकाणामिन्द्रियाणामीशेति व्युत्पत्त्या हृषीकेशेत्युक्तं भवति । हे **जलजनाभ** पद्मनाभ । **कं** मुख्यप्राणम् । 'मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोम्बुनोः' इत्यमरः । **आश्रिताः** मध्वमतानुसारिण इत्यर्थः । **नते** प्रणते भक्तजने इत्यर्थः । **स्थितिं** तव सन्निधानं **वदन्ति । वरदामधरोदर** वरदामधरमुदरं यस्य तस्य सम्बुद्धिः । दाम उदरे यस्येति व्युत्पत्त्या दामोदरेत्युक्तं भवति । **प्रियजुषः** तव प्रियकरकर्मादिसेवकाः त्वत्प्रियकारिण इत्यर्थः । अमी मध्वशिष्याः पूर्वोक्तानते भक्तजने स्थितिं विदुः कथमिव । यजुषः यजुर्वेदात् तदभ्यासादित्यर्थः । अग्निबलानिव यज्ञानिव । यजुर्वेदस्य यज्ञतन्त्रत्वादिति भावः । **श्रीकृष्णपक्षे** तु – करणं सृष्टिः पालनं रक्षणं तत्र शीलं यस्य तस्य सम्बुद्धिः । काय मरुताय भीमार्थमित्यर्थः । रणं जरासन्धयुद्धं तस्य पालनशीलन असमाप्तिकर । भीमसेनाय यशोदानायाहिंसितजरासन्धेत्यर्थः । श्रीकृष्ण भवदन्तिकं त्वत्समीपमाश्रिताः मधुराद्वारकादिषु तव समीपे स्थिता यादवा इत्यर्थः । एकस्मिन् शरीरे त्वया सह विद्यमाना वा । ''द्वासुपर्णौ''[१] इति श्रुतेः । अधरस्य अधोविद्यमानस्य उपस्थस्येत्यर्थः । उदरस्य उपस्थस्य च प्रियजुषः शिश्नोदरपरायणा इत्यर्थः । अमी जलजनाः जडजनाः मूर्खजनाः वरदां अभीष्टदाम् । ते स्थितिं तवावस्थां न विदुः । त्वं न मनुष्यः साक्षादादिपुरुष इति न विदुरित्यर्थः । कथमिव अयजुषः यजुर्वेदाभ्यासरहिता **अग्निबलीनिव** ॥१२॥

**शुभसमुद्रकरं भजतां मुदे प्रियमृगाजिनताऽखिलदैवतम् ।**
**वरयते स्थिरभूतिमहो मुहुर्विभजते भजतेऽत्यरुचिप्रदा ॥१३॥**

**व्या :** वेदव्यासावतारं वर्णयति । **शुभसमुद्रकरमिति । विभजते** स्वाङ्गात् विभागं कुर्वते मुञ्चते इत्यर्थः । वेदव्यासाय अत्यरुचिप्रदा । त्यागसमये

१ मुण्डकोपनिषत् (३/१/१)

अप्रीतिप्रदेत्यर्थः । प्रियमिष्टं मृगाजिनं कृष्णाजिनं यस्य स तथोक्तः । तस्य भावः **प्रियमृगाजिनता** । कृष्णाजिनधारित्वमित्यर्थः । तं वेदव्यासं **मुहुर्भजेत** । ''चर्म चैणं वसानः''[१] इत्युक्तेः वेदव्यासः सदा कृष्णाजिनधारीत्यर्थः । कथमिव। **अखिलो** अविनष्टः मोक्षस्तं ददातीत्यखिलदा ब्रह्मविद्येव । यथा ब्रह्मविद्या न मुञ्चति तथा प्रियमृगाजिनताऽपि न मुञ्चतीति भावः । कथम्भूतं [२]वेदव्यासम्। भजतो शुकादीनां मुदे सन्तोषाय शुभसमुद्रकरं मुद्रया सहितः समुद्रः स चासौ करश्च । शुभः समुद्रकरो यस्य सः शुभसमुद्रकरस्तम् । पुनः कथम्भूतम् । वरयतेरुत्तमसन्न्यासिनः श्रीमदाचार्यस्य **स्थिरा भूति**र्ज्ञानलक्षणैश्वर्यं यस्मात् तं भजत **अहो** इत्यन्वयः । मुख्यप्राणादीनामुपदेष्टृत्वेन साक्षादादिपुरुषोऽपि कृष्णाजिनधारित्वादिऋषिचर्यया लोकमनुसरतीत्यहो इत्युक्तम् । **श्रीकृष्णपक्षे तु** – **भजतां** यादवानां **मुदे** स्नानपानादिसुखाय । शुभसमुद्रकरं द्वारकायां परितः अमृतसमुद्रकरमित्यर्थः । आजौ पारिजातापहारकालीनयुद्धे नताः प्रणताः अखिलदेवता यस्य तम् । प्रियं सकलजनेष्टं श्रीकृष्णम् । स्थिरा भूतिर्भस्म यस्य स तथोक्तः । भूतिर्भस्मनि सम्पदीत्यमरः । तस्य शिवस्य महः तेजः माहात्म्यमित्यर्थः । **भजते** सेवमानाय शिवभक्तायेत्यर्थः । **अत्यरुचिप्रदा** अप्रीतिदा ऋक् ''न ते विष्णो जायमानः''[३] ''विष्णोर्नु कं वीर्याणि प्रवोचम्''[४] ''अस्य देवस्य मीळ्हुषो वया विष्णोः''[५] इत्यादिऋग्वेदवागीत्यर्थः। वरयते वृणोति प्रतिपादयतीत्यर्थः । आजौ सर्वदेवताजये सतीदृशवेदवाक्यानां

---

१ म.भा.ता.नि. (१०/५३)

२ कथयन्त्यमुं परशुभासमानगोहतमर्त्यदेवतमसं मुहुर्मुहुः ।
जगतां हितं हरिमिवापरं हरिं गुरुशक्तितापसवरान्वयोद्भवम् ।। - म.वि. (८/१८)

३ ऋग्वेदे (७/९९/२)

४ ऋग्वेदे (१/१५४/१)

५ ऋग्वेदे (७/४०/५)

श्रीकृष्णप्रतिपादने अवकाशो जात इत्यर्थः । **स्थिरभूतिं शिवं मुहुर्विभजते** श्रीकृष्णाद्भिन्नं करोत्यहो । ''विदे हि रुदो रुद्रियं महित्वम्''[१] इत्यादिना रुद्रं श्रीकृष्णाद्भिन्नं प्रतिपादयतीत्यर्थः ।। १३ ।।

**भजकभाविविरिञ्चिकृते प्रियप्रणयपाशवृतस्त्वमथेष्यसि[२] ।**

**तदवनिं शिवरूप्यमितोऽब्धिगः कुमतिनामतिनाशनदण्डधृत् ।।१४।।**

**व्या :** रजतपीठस्थितं श्रीकृष्णं वर्णयति । **भजकेति** । प्रियेषु प्रणयो यस्य तस्य सम्बुद्धिः । प्रियप्रणय भक्तवत्सल श्रीकृष्ण । पाशवृतः पाशेन दाम्ना वृतः एकहस्तेन पाशधारीत्यर्थः । कुत्सितं मतं दुःसिद्धान्तो एषामस्तीति कुमतिनः मायावादिनः तेषामतिनाशनः अत्यन्तनाशकरः दण्डो यष्टिस्तं धारयतीति स तथोक्तः । अपरेण हस्तेन मन्थानदण्डधारीत्यर्थः । त्वम् अथ अनन्तरं **भजकः** सेवको **भाविविरिञ्चिः** आगामिब्रह्मा श्रीमदाचार्यस्तस्य **कृते** तदर्थमितो द्वारवतीतः अब्धिगः सन् समुद्रमार्गगः सन्नित्यर्थः । इतः किञ्चित्कालानन्तरम् । **तदवनिं** तस्य श्रीमध्वाचार्यस्य जन्मभूमिं **शिवरूप्यं** शिवरूप्याख्यं ग्रामम् । तद्देशभाषायां शिवबेल्लीति[३] प्रसिद्धमिति । एष्यसि गमिष्यसि । रूप्यपीठ-पुराधिवासिनः श्रीकृष्णस्य महिमा वर्णितः । **श्रीकृष्णपक्षे तु – शिवं** मङ्गलं रूपमस्यास्तीति शिवरूपी कन्दर्पकोटिलावण्य इत्यर्थः । **कुमतिना** कुत्सितमतिना

---

१ ऋग्वेदे (१/१५४/१)

२ द्वारावर्ती सकलभाग्यवतीमुपेक्ष्य गोपालबाललललनाकरपूजनं च ।
वार्धिं वधूगृहमतीत्य स मध्वनाथो यत्रास्ति तद्रजतपीठपुरं गरीयः ।- तीर्थप्रबन्धे १/९
मरुद्रूपे गुरौ प्रेम्णा हरिर्द्वारवती पुरात् ।
नावा सेवातुरं द्रष्टुकामो दामोदरः प्रभुः ।
आदायायासहृत् स्वानामिति सर्वस्य सम्मतम् ।।- सरसभारतीविलासे (७/१८,१९)

३ शिवरूप्यनामा - शिवळ्ळीत्यपभ्रष्टभाषायाम् ।
- इति मध्वविजयभावप्रकाशिका (२/१०)

कंसजरासन्धादिना अमितः अज्ञातः **अमतिनाशनः** अज्ञानविनाशनः **दण्डः** शिक्षा तं धारयतीति तथोक्तः । इतरासाध्यकंसादिशिक्षणे सति त्वमप्येको मनुष्य इति अज्ञानं विवेकवताम् प्रणश्यतीत्यर्थः । त्वं इदानीमिव अथ ब्रह्मणः आगामिनि दिने **अब्धिगः** मूलरूपेण क्षीरसमुद्रशायी सन् भजकः सेवकः स चासौ भावो भक्तिरस्यास्तीति भावी स चासौ विरिञ्चः तस्य कृते तदर्थं तत्प्रयोजनायेत्यर्थः । **प्रियेषु** भूमिस्थितभक्तेषु यः **प्रणयः** स एव **पाशस्तेन वृत** आवृतः सन् तदवनिं तेषां भक्तानां भूमिम् **एष्यसि** । ब्रह्मणो दिने दिनेऽप्येवमेवावतारं करिष्यसीत्यर्थः ।। १४ ।।

**भुवनवास्यनिशं मनुसंस्तुतो विधिविरोधिविनाशकृदन्वहम् ।**
**अनिमिषप्रभुरागमहर्षदो निजवशो जवशोभितसागरः ।।१५।।**

**व्या :** क्रमेण दशावतारान् वर्णयति । **भुवनवास्यनिशमिति** । अनिशं सर्वदा भुवने जले वासोऽस्यास्तीति भुवनवासी । मत्स्यस्य सदा जलवासित्वादिति भावः । भुवनं चाम्बुलोकेष्विति रत्नमाला । अन्वहं ब्रह्मणः दिने दिने **मनुना** वैवस्वतमनुना **संस्तुतः** । विधेर्ब्रह्मणः विरोधिनः तन्मुखस्थवेदापहारिदैत्यस्य विनाशकृत् आगमानां वेदानां हर्षदः । दैत्यापहृतान् वेदानानीय पुनः प्रचारकरणेन तेषां हर्षद इत्यर्थः । जवेन वेगेन शोभितः सागरः प्रलयसमुद्रो येन स तथोक्तः। त्वरया इतस्ततो गमने सति स्वकांत्या समुद्रस्यापि शोभां जनयन्नित्यर्थः । अनिमिषाणां मत्स्यानाम् । 'अनिमिषश्चानिमेषौ द्वावेतौ सुरमत्स्ययोः' इति रत्नमाला । **प्रभुः** [१]मत्स्यावतारो हरिः निजानां स्वकीयानामस्माकं वशः वशवर्ती। भक्ताभीष्टकारित्वात् भक्तवश इत्यर्थः । अस्तु । श्रीकृष्णपक्षे तु । 'अनिशं नित्यं भुवनेषु लोकेषु वासोऽस्यास्तीति तथोक्तः । **अन्वहं** मनुना कृष्णमन्त्रेण संस्तुतः ।

---

१ चतुराननाय चतुरः पुराऽऽगमान् प्रददावसावनिमिषेश्वरः प्रभुः ।
विनिहत्य हि श्रुतिमुषं पुरातनं वपुषोद्धतं हयमुखेन सद्रिपुम् ।। - म.वि.(८/१४)

**विधेः** विहितराजसूययज्ञादिसत्कर्मानुष्ठानस्य **विरोधिनः** जरासन्धशिशुपाला-दिदैत्यास्तेषां **विनाशकृत् आगमने** इन्द्रप्रस्थं प्रति स्वागमेन **हर्षदः** पाण्डवानां सन्तोषदः । **जवेन** द्वारवतीं प्रति पुनः परावृत्त्य गमनवेगेन **शोभितः सागरो** येन स तथोक्तः । **अनिमिषाणां** देवानां **प्रभुः** श्रीकृष्णः **निजानां** भक्तानां **वशोऽस्तु** ॥ १५ ॥

**भुजगदिक्करिभारजशोकहृत्सुरमनोरथपूरणकारणः ।**
**स्वमतवारिनिधेर्मथने पटुर्गिरिधरोऽरिधरोऽयमिहागतः ॥१६॥**

**व्या :** कूर्मावतारं[1] वर्णयति । **भुजगेति** । **भुजगस्य** शेषस्य **दिक्करिणां** दिग्गजानां **भारजः** महीमहीधरादिभारजनितः **शोकस्तं** हरतीति तथोक्तः । बहुभारवशाज्जले निमज्जतां शेषदिग्गजादीनाम् आधारतया वायुकूर्मे अन्तर्यामिकूर्मरूपेणावस्थानादिति भावः । **सुराणां मनोरथस्य** अमृतपानोत्सुकमनसः **पूरणे कारणं** मन्दरोद्धरणं यस्मात् स तथोक्तः । स्वस्य मतः **सम्मतः वारिनिधिः** क्षीरसमुद्रः तस्य **मथने** निर्मथने **पटुः** समर्थः । स्वपृष्ठेन गिरेर्धारणाभावे मथनासम्भवात् कूर्म एव मथने पटुरित्याशयात् । **गिरिधरः** मन्दरपर्वतधरः । **अरिधरः** चक्रधरः । **अयं** कूर्मः । **इह** क्षीरसमुद्रमथनप्रदेशे **आगत** इति द्रष्टव्यम् । **कृष्णपक्षे तु** – भुजगः शेषः । दिक्करिणो दिग्गजाः तेषां भारजः शोकस्तं हरतीति स तथोक्तः । भूभा-रायितदैत्यविध्वंसनेन भूधारिणां शेषदिग्गजानां शोकापहारीत्यर्थः । सुराणां मनोरथं पूरयतीति सुमनोरथपूरणं तच्च तत् कारणं युद्धसाधनं चक्राद्यायुधजालं

---

१ अमरेन्द्रवैरिभुजदण्डमण्डलप्रतिकर्षपुष्करपतद्धरोद्धृतिः ।
विदधे वराहवपुषाऽमुनोर्मिमत्सृतिसिन्धुकच्छपतयाऽऽप्तक्षिणा ॥ - म.वि.(८/१५)
वीचिमद्व्याप्तिके समुद्रे कूर्मतया । गर्भीभावजननवृद्धिपरिणामापक्षयविनाशाख्यो-र्मिमत्संसृतिसमुद्रस्य कच्छं मोक्षं च पाति । - म.वि.भा.प्र.
**कूर्मस्वरूपक** मन्दरधारिन् लोकविधारक देववरेण्य । -द्वादशस्तोत्रे (६/२)
सुरदितिजसुबलविलुलितमन्दरधर **वरकूर्म** हे भव मम शरणम् ।-द्वादशस्तोत्रे(९/६)

यस्य स तथोक्तः । श्रीकृष्णकरस्थदिव्यायुधदर्शनेनास्माकं सर्वकार्यमभूदिति देवानां मनोरथपूर्तिर्जायत इति भावः । सु अमताः स्वमताः सम्यगनभिमताः दैत्याख्यशत्रव इत्यर्थः त एव वारिनिधिः समुद्रः तस्य मथने हिंसायां पटुः समर्थः गिरिधरः गोवर्धनगिरिधरः अरिधरः अरीणां शत्रूणां धरः पर्वत इव। शत्रुभिरचाल्य इत्यर्थः । अयं श्रीकृष्णः इह द्वारवत्यामागतः भूभारहरणार्थ-मवतीर्णस्यामोघचक्रगदाद्यायुधवतः बहुवारं बहुतरजरासन्धसेनासंहारं कृतवतः बाल्येऽपि गिर्युद्धरणसमर्थस्य श्रीकृष्णस्य शत्रुभयादिहागमनं नेति सूचनाय विशेषणपञ्चकम् ॥ १६ ॥

**स्ववशगो रिपुभीषणचेष्टितो वरवराहतया दवकृद्द्विषाम् ।**
**मखसहायकृतिर्धरयाऽर्चितः कमलयाऽमलयाऽयमहो वृतः ॥१७॥**

**व्या :** वराहावतारं वर्णयति । **स्ववशेति** । स्ववशा स्वाधीना गौर्भूमिः । 'गौर्नाके वृषभे चन्द्रे वाग्भूदिग्धेनुषु स्त्रियाम्' इति रत्नमाला । तस्याः **रिपुः** हिरण्याक्षः तस्य **भीषणं** भयङ्करं **चेष्टितं** यस्य स तथोक्तः । **वरः** श्रेष्ठश्चासौ **वराहः** सूकरश्च तस्य भावस्तत्ता **तया** । **द्विषां** दैत्यानां **दवकृत्** अग्निकृत् परस्परहन्यमानदंष्ट्राग्रे-णाग्निं वमन्नित्यर्थः । **मखस्य** यज्ञस्य **सहायाः** साधनीभूताः कुशाद्याः तेषां **कृतिः** स्वाङ्गेभ्यः करणं यस्मात् स तथोक्तः । **धरयाऽर्चितः** अयं वराहः **अमलया** निर्मलया **कमलया** लक्ष्म्या **वृतः** । अहो आश्चर्यम् । **श्रीकृष्णपक्षे तु** – स्ववशानां गोपालावस्थायांस्वाधीनानांगवांरिपवःशार्दूलवनमहिषादयस्तेषांभीषणचेष्टितः। द्विषां दैत्यानां वरेभ्यः श्रेष्ठेभ्यः रुद्रादिभ्यः ये वराः सर्वशत्रुसंहरणादिरूपाः तैरहतान् अविनष्टान् यादवान् करोतीति वरवराहतयादवकृत् । श्रीकृष्णवशानां यादवानां रुद्रादिवरोऽकिञ्चित्कर इति भावः । मखस्य राजसूयस्य सहायकृतिः सहायाचरणं यस्मात् । मखं राजसूयं सहन्ते इति मखसहाः राजसूययोग्याः पाण्डवास्तेषां आयस्य वित्तप्राप्तेः कृतिर्यस्मात् स तथोक्त इति वा । धरया

प्राग्जोतिषपुरे नरकासुरमात्रा भूम्या अर्चितः अयं श्रीकृष्णः **अमलया** कमलया रुग्मिण्या वृतः अहो ॥ १७ ॥

**अरिहिरण्यकसंक्षयकारकं नरमृगाधिपमद्भुतचेष्टितम् ।**
**अघकृदिन्द्रकृतार्चनतोषितं भज मनोजमनोहरविक्रमम् ॥१८॥**

**व्या :** नृसिंहावतारं[1] वर्णयति । **अरिहिरण्यके**ति । **अरिः हिरण्यको** हिरण्यकशिपुः तस्य **संक्षयकारकं** अद्भुतं चेष्टितं गर्जनज्वालादिना गिरिविदारणदाहादिकं यस्य तम् । अघकृत् वृत्रहत्यारूपपापकृत् इन्द्रस्तेन कृतम् अर्चनं भजनं तेन तोषितम् वृत्रहत्यादोषपरिहाराय इन्द्रेण नृसिंहार्चनं कृतमिति [2]पुराणे प्रसिद्धम् । अजस्य ब्रह्मणो मनोहरः विक्रमः प्रतापो यस्य तम् । **नरमृगाधिपं** नरसिंहम् । हे मनः भज सेवस्व । **श्रीकृष्णपक्षे तु** – अरीणां शत्रूणां दुर्योधनादीनां हिरण्यमेव सुवर्णमेव हिरण्यकं तस्य संक्षयकारकं दुर्योधनादीनां संपद्विनाशकमित्यर्थः। **अद्भुतं चेष्टितं** शैशवेऽप्युदरे ब्रह्माण्डधारणादिकं यस्य तम् । **अघकृत्** स्वयागध्वंसे सति कृष्णावज्ञारूपापराधकृत् स चासाविन्द्रश्च तेन **कृतम् अर्चनं** पट्टाभिषेकादिपूजा तेन **तोषितम्** । अजस्य कामस्य । 'अजः शम्भौ विष्णुधात्रोः कामे छागे रघोःसुते' इति रत्नमाला । **मनोहरः विक्रमः** पादविक्षेपो यस्य तम् । मन्मथमनोहरगमनमित्यर्थः । नरमृगाधिपं पुरुषोत्तमं श्रीकृष्णं भज ॥ १८ ॥

**बलहृदार्तिहरोऽनुजनिः प्रभुर्बलिपराजयकृज्जयकृत् सताम् ।**
**अवनिजातपलाशसुदण्डधृग्भुवनपावनपादसरोरुहः ॥ १९ ॥**

---

१ नरसिंह एष विददार दारुणं प्रतिघोदये नखरचक्रतेजसा ।
स्वरिपुं क्षणेन सरसः स्फुरत्तनुं पृथुसत्त्वमिष्टजनभीतिभञ्जनः ॥ -म.वि.(८/१६)
नरसिंहः पुरुषोत्तमश्च । - म.वि.भा.प्र.

२ स्मरणात्तु नृसिंहस्य शक्रो मुक्तो वृहद्वधात् ।
हिरण्यकहताश्चापि तथैवाप्सरसां गणाः ॥
-इति भागवततात्पर्योद्धृत भवभञ्जनवचनम् ।

**व्या :** वामनावतारं[१] वर्णयति । **बलहृदिति** । बलं बलनामकासुरं हरति संहरतीति बलहृदिन्द्रः तस्यार्तिं सम्पन्नाशनिमित्तदुःखं हरतीति बलहृदार्तिहरः। स चासावनुजनिः **अनुजः** इन्द्रावरज इत्यर्थः । **बलेः** महाबलेः **पराजयकृत् सतां** देवानां **जयकृत् अवनौ** भूमौ **जातः** नतु शाखास्वरूप इत्यर्थः । **पलाशः** पलाशवृक्षः तस्य **सुदण्डः** तं धारयतीत्यवनिजातपलाशसुदण्डधृक् । वामनस्य ब्रह्मचारित्वादिति भावः । शाखारूपाद्दण्डात् साक्षाद्भूमिजातस्य **पलाशदण्डस्य** मुख्यतो धार्यत्वादवनिजातेत्युक्तम् । भुवनानि लोकान् स्वपादप्रक्षालनोदकेन पावयतीति भुवनपावनं **पादसरोरुहं** यस्य स तथोक्तः वामनः । नोऽस्माकं प्रभुः स्वामी । **श्रीकृष्णपक्षे तु** – बलम्य बलभद्रस्य हृदि चित्ते आर्तिः तां हरतीति बलहृदा-र्तिहरः । बलभद्रस्य सुखकर इत्यर्थः स चासावनुजनिः अनुजः बलभद्रानुज इत्यर्थः । बलिनो बलाढ्याः कंसदुर्योधनादयः तेषां पराजयकृत् त ।तोऽनन्तगुणितबलवानित्यर्थः । सतां पाण्डावनां जयकृत् अवनौ भूम्यां जातः पलं मांसमश्नन्तीति पलाशा राक्षसाः । पलमुन्मीनमांसयोरिति भास्करः। तेषां **सुदण्डधृक्** सम्यक् शिक्षाकृदित्यर्थः । **भुवनं** लोकं पातीति भुवनपः । अर्जुनः तस्यावनं रक्षणं यस्मात्तत् **भुवनपावनं** पादसरोरुहं यस्य स तथोक्तः । शिरोदेशे स्थितदुर्योधनं त्यक्तवा **पादयोः** समीपे स्थितत्वेनार्जुनस्य रक्षणादिति भावः ।। १९ ।।

**युधि सहस्रकरोर्जितबाणहृत् परशुरर्जुनसत्क्षितिदायकः ।**
**कुभरसंहरणोग्ररणाग्रणीर्द्विजभवोऽजभवोन्नतिदायकः ।।२०।।**

---

१ अपि वामनो ललितबाल्यवानयं प्रतिभाबलेन कृतदैत्यकौतुकः ।
उपधेरधःकृतबलीन्द्रशात्रवः स्वजनाय केवलमदात् परं पदम् ।। -म.वि.(८/१७)
वामनरूपकोऽपि अधःकृतबलिनामकासुरः स्वजनाय इन्द्राय पदमदात् ।
- म.वि.भा.प्र.

**व्या :** परशुरामावतारं[१] वर्णयति । **युधीति** । **युधि** युद्धे **सहस्रकरः** कार्तवीर्यार्जुनः तस्य ऊर्जिता बाणाः शरास्तान् हरति छिनत्तीति **सहस्रकरोर्जितबाणहृत् परशुर्यस्य** स तथोक्तः । **अर्जुनस्य** कार्तवीर्यस्य **सती** समीचीना क्षितिः क्षयः तस्य **दायकः** । 'क्षितिः क्षयावासभूषु' इति रत्नमाला । बाणान् छित्वा अन्ते तस्यापि खण्डनं कृतवानिति भावः । कुं पृथ्वीं विभ्रति पालयन्तीति कुभराः क्षत्रियाः तेषां संहरणं विनाशो यस्मिन् **कुंभरसंहरणं** तच्च तत् **उग्ररणं** च **तत्राग्रणीः** अग्रेसरः त्रिःसप्तकृत्वः क्षत्रियैः सह कृतसङ्गर इत्यर्थः । **द्विजभवः** ब्राह्मणकुलोत्पन्नः परशुरामः अजभवयोर्विरिञ्चभवयोरुन्नतिदायकः श्रैष्ठ्यस्य प्रदाता । ''शिवाखिलज्ञानदातेति''[२] परशुरामनामसु पाठात् । अजाद्भवतीत्यजभवः शिवः तस्य **उन्नतिदायक** इति वा । **श्रीकृष्णपक्षे तु** – युधि सहस्रं कराः यस्य स सहस्रकरः स चासौ ऊर्जितबाणः बाणासुरः तस्य हृदि हृदये परशुरिवार्जुनस्य पार्थस्य सत्क्षितिदायकः समीचीनभूमिप्रदः । अर्जुनस्य राज्यदातेत्यर्थः । प्राक् प्रणतार्जुनाभ्युदये हेतुरित्यत्रोक्ताभ्युदयस्यात्र क्षितिपदेन स्पष्टीकरणान्न पौनरुक्त्यम् । कुभरस्य भूभारस्य संहरणं यस्मात् कुभरसंहरणं तच्च तदुग्ररणं च तत्राग्रणीः द्विजानां ब्राह्मणानां भवो मङ्गलं यस्मात् स द्विजभवः । भवः सत्ताभद्रशर्वप्राप्तिसंसारजन्मस्विति रत्नमाला । श्रीकृष्णः अजात् ब्रह्मणः भवतीत्यजभवः शिवस्तस्योन्नतिदायकः कैलासयात्रायां श्रैष्ठ्यप्रदः[३] । **अजभवयोः** ब्रह्मशिवयोः

---

१ कथयन्त्यमुं परशुभासमानगोहतमर्त्यदेवतमसं मुहुर्मुहुः ।
जगतां हितं हरिमिवापरं हरिं गुरुशक्तितापसवरान्वयोद्भवम् ॥ म.वि. (८/१८)
अमुं महाशक्तेस्तापसवरस्य भृगोरन्वयोद्भवं श्रीरामं कथयन्ति । त्रिलोकगुरोः शक्तितापसवरस्य च श्रीवेदव्यासं हरिमिव अर्कमिव । परशुरेव भासमानरश्मिरस्य मर्त्यदेवा राजान एव तमः । पराः शुभाश्चासमानाश्च गावो वाचः । मर्त्यानां देवानां तमस्त्वज्ञानम् ॥ -म.वि.भा.प्र. (८/१८)

२ पद्मपुराणान्तर्गतवासुदेवसहस्रनामस्तोत्रे (उत्तरखण्ड ७१/२१०)

३ त्वामाराध्य तथा शम्भो ग्रहीष्यामि वरं सदा ।

उत्कृष्टा नतयः स्वचरणनमस्काराः तासां प्रदायकः देवकीगर्भमारभ्य अवतारस्य समाप्तिपर्यन्तं क्षणे क्षणे श्रीकृष्णपराक्रमदर्शनेन ब्रह्मरुद्रयोः श्रीकृष्णनमस्कारेणैव कालो गत इति भावः ।। २० ।।

**अहिमकान्तिमतः कलया कुलं व्यतनुताधिकभूषितमञ्जसा ।**
**अभयमन्यदशास्यसुखण्डनः क्षितिसुतातिसुतापभिदाकृतिः ।।२१।।**

**व्या :** रामावतारं[१] श्लिष्टोक्त्या वर्णयति । **अहिमकान्तिमत** इति । अहिमा

---

द्वापरादौ युगे भूत्वा कलया मानुषादिषु ।।
स्वागमैः कल्पितैस्त्वं च जनान् मद्विमुखान् कुरु ।
मां च गोपय येन स्यात् सृष्टिरेषोत्तराधरा ।। -इति पद्मपुराणे (७१/१०६/१०७)

१ करुणाकरः स वसुदेवमोददो भगवान् पुरा(ऽ)हिमकरान्वयेऽभवत् ।
जितवान् दिशो दशरथोऽग्र्यसम्पदो जनको बभूव भुवि यस्य वैरिहा ।।
भुजगेश्वरोऽपि भुवनेश्वरप्रियः समजन्यथारिदरजन्म भुव्यभूत् ।
तममुष्य कान्तिविजितेन्दुमग्रजं रमणीयमाहुरिह रामनामकम् ।।
जनकेन सोऽथ विरहासहिष्णुना मुहुरीक्षितो वनमनीयत प्रभुः ।
चकितेन दुष्टजनतस्तपस्विना तत आसुरीं निशिचरीं जघान सः ।।
मुनिसप्ततन्तुकृतवैरबन्धनं कटुकेश्यरिष्टपदमुख्यदुर्जनम् ।
क्षपयन्तमुद्यतसुबाहुमाहवे तमथाभ्यनन्ददमरादिसद्गणः ।।
सवने विकस्वरगुणस्वरद्विजे स्फुरिते चरन् सकलगोकुलप्रियः ।
इतकामतापसरसार्द्रधीगिरः प्रतिलालयन्नरमतैष सुन्दरीः ।।
सहजान्वितः सकलमित्रसंयुतो मधुरां पुरीं जनकवल्लभां गतः ।
प्रविशन्निमां स जगदेकसुन्दरो नरनार्युदारनयनोत्सवोऽभवत् ।।
अथ खण्डितेश्वरधनुः स लीलया क्षपितोग्रसेननृपपुत्रपौरुषः ।
समुपास्य विप्रगुरुमब्जभूगुरुः स्वजनानमोदयदमेयतेजसा ।।
कमलामयं कमलपत्रलोचनां भुवमागतां नृपसुतां गृहीतवान् ।
निजलीलया विजितराजशात्रवो मुदमापदाप्य पुरमब्धिदुर्गमम् ।।
स जगाम मातृजनतुष्टये किल त्वरितो(ऽ)वनं विदधदीप्सितं सताम् ।
सह भार्ययाऽपि शुभया महाजयध्वजलक्ष्मणाग्र्यसुहृदा विना(ऽ)मुदा ।।

कान्तिरस्यास्तीति अहिमकान्तिमान् उष्णकिरणः सूर्यः तस्य **कुलं कलया अंशेनाधिकभूषितं** अधिकालङ्कृतं **व्यतनुत** कृतवान् । सूर्यकुलालङ्कारा यांशेनावतीर्ण इत्यर्थः । **अन्यो** वैरी **दशास्यः** रावणः **तस्यासुखण्डनः** पुत्रपौत्रादिभिः सह प्राणापहारी । शकध्वादेराकृतिगणत्वाच्छकन्ध्वादिषु पररूपं वाच्यमिति[1] पररूपत्वाद्दशास्यसुखण्डन इत्यत्र सवर्णदीर्घाभावः क्षिति-

---

समतीतपर्वतपुरोगदुर्गमः खरदूषणादिसुजनद्विषो बहून् ।
स निहत्य विश्वभयदं सुदुःसहं नरकं महातम उपानयत् क्रमात् ।।
रुचिराश्रमाजिरचिताग्र्यतेजसा प्रियया प्रियो भुवनमान्यया समम् ।
भृशमाकुलीकृतमदप्रमादवत् सुरपारिजातहृदवाप धाम सः ।।
हरितामधीशनरदेवमण्डलं दशकं विजित्य परभीषणं मुहुः ।
स्फुरितामिह प्रियतमां निजश्रियं भगवानुपैक्षत हरन्तमप्रियम् ।।
अभिनन्दितः पवननन्दनादिभिः स कदाचिदिन्द्रसुतवर्धको गवा ।
निजराज्यमात्मदयिताय दत्तवान् हरिसूनवे हतविपक्षमुत्तमम् ।।
मुदमाप्य तत्र दयितोरुवार्तया मधुहा मरुत्सुतमुखप्रवृत्तया ।
हरितिग्मचक्रलसितोऽब्धिमध्यगं प्रययौ स पुण्यजनसेवितं पुरम् ।।
पृथुकुम्भकर्णगजराजमुद्धतं ससहोदरं सविबुधेन्द्रशात्रवम् ।
धरणीभरं पृथुलचक्रमक्षिणोन्निशितेषुचक्रकृतविक्रमः प्रभुः ।।
अथ भार्यया हुतवहं प्रविष्टया सहितः सहोदरपुरःसरैरपि ।
अयमाप्य धाम चिरमिष्टदः सतां निजमूलरूपपरमैक्यमेयिवान् ।।

- म.वि. (८/१९-३४)

सवसूनां देवानां मोददः पूर्वमहिमकरान्वयेऽभवत् श्रीरामः । यस्य जनको दशरथः । स हिमकरान्वयेऽभवत् श्रीकृष्णः । यस्य रथो दश दिशो जितवान् । अग्र्याणां सम्पदां जनको बभूव -म.वि.भा.प्र. (८/१९)

अथ शङ्खचक्रजन्म भरतशत्रुघ्नत्वेन अरीणां भय जन्म च । तममुष्य लक्ष्मणस्याग्रजं श्रीराममाहुः । अमुष्य श्रीकृष्णस्य च । - म.वि.भा.प्र.-८/२०)

तपस्विना विश्वामित्रेण वनमनीयत । जनकेन मुहुरादृतः । जनकेना- नीयत । दुष्टजनो मारीचादिः कंसश्च । निशिचरीं ताटकां पूतनां च । - म.वि.भा.प्र.८/२१)

१ वार्तिकम् ।

**सुतातिसुतापभिदाकृतिः** । क्षितिसुतायाः आकृतिरूपायाः सीतायाः अतिसुतापाः अत्यन्तसन्तापास्तान् भिनत्तीति क्षितिसुतातिसुतापभित् आकृतिर्यस्य स तथोक्तः । यद्वा क्षितिसुतार्थं सीतार्थं ये अतिसुतापाः लोकमोहनार्थं स्वकृतसन्तापाः त एव सुतापाः सुखकरास्तापा इत्युक्तम् । तैः साधनैः भिदायाः रामो दुःखीति मिथ्याज्ञानस्य कृतिः करणं यस्मादिति वा । स रामः अञ्जसा अभयं लोकस्य क्षेमं व्यतनुत । **श्रीकृष्णपक्षे तु** – क्षितिसुतो नरकासुरः तस्यातिसुतापः अतिक्लेशो यया सा च सा भिदा विदारणं शिरश्छेद इत्यर्थः । तस्याः कृतिर्यस्मात् सः क्षितिसुतातिसुतापभिदाकृतिः । अथवा क्षितिश्च सुतश्च तयोः पृथ्वीप्रद्युम्नयोः अतिसुतापौ भारदेहाभावनिमित्तौ क्लेशौ भिनत्तीति क्षितिसुतातिसुतापभृत् आकृतिर्यस्य सः कृष्णः अत एवान्येषां शत्रूणां दशा अवस्था असिः आयुधम् असुः प्राणः अन्यदशास्यसवः तान् खण्डयतीति अन्यदशास्यसुखण्डनः । अन्येत्यनेन सहजशत्रूणां कंसादिदैत्यानामेव प्राक् चतुरङ्गसेनोपेतावस्थां ततस्तदायुधमन्ते प्राणांश्च संहरति नतु कदाचिदपकुर्वतां भक्तानामिति सूच्यते । यस्मादेव कारणात् कानां मस्तकानां फणानां लयेन मर्दनेन आकुलमत एवाकान्तिं कान्तिरहितमहिं कालियसर्पं यत्रेदानीं तिष्ठति अतः यमुनाह्रदात् अधिका भूः जन्मभूस्तस्यां उषितं स्थितं व्यतनुत । कृतापराधमपि तं भक्तं न हिंसितवान् प्रत्युत तस्योपचक्रे इत्याह । अञ्जसेति । **अञ्जसा** अभयं शिरसि स्वपादचिह्नकरणेन गरुडभयरहितं व्यतनुत । गरुडभयाद्रमणकद्वीपं त्यक्त्वा सौभरिशापात् गरुडागम्ययमुनाह्रदं कालियनागः स्थित इति पौराणिकी वार्ता[१] । भक्तत्वादपराधिनमपि तमहत्वा नृत्यव्याजेन शिरसि कृतस्वपादलाञ्छनैः कालियनागं गरुडभयरहितं कृत्वा स्वस्थानं प्रत्येव प्रेषितवानिति भावः ॥२१॥

**रुचिरभारतपुण्यकथोदयः शुकसुभाषणतोषणकारणः ।**
**विमलधर्मशुभस्थितिकृत् क्षितावयमसौ यमसौहृदकृन्नृणाम् ॥२२॥**

---

१ भागवते (१०/१२/१७)

**व्या :** इदानीं श्रीकृष्णस्य श्रीवेदव्यासस्य च कथां श्लिष्टोक्त्या वर्णयति। **रुचिरेति । भारतो** भरतकुलोत्पन्नः पार्थः तस्य **रुचिरा** या **पुण्यकथा** तं प्रत्युपदिष्टगीताख्यकथा तस्या **उदय** उत्पत्तिर्यस्मात् स तथोक्तः । **शुकवत् सुभाषणमेव तोषणकारणं** यस्मिन् सः । **क्षितौ** नृणां मध्ये **विमलधर्मस्य** निष्पापयुधिष्ठिरस्य **शुभस्थितिकृत्** उत्तमराज्यस्थितिकृत्। यमयोर्नकुलसहदेवयोः सौहृदकृत् **असौ** श्रीकृष्णः **अयम्** इदानीं द्वारवत्यां विद्यमान इति मुनिवचनम्। श्रीवेदव्यासपक्षे तु । रुचिरभारतपुण्यकथा महाभारतपुण्यकथा तस्या उदयो यस्मात् लक्षपरिमितमहाभारताख्यग्रन्थकृदित्यर्थः । शुकस्य शुकाचार्यस्य सुभाषणमेव तोषकारणं यस्य स तथोक्तः । पुत्रत्वात्स्वाभिप्रायविवेचकशुकवाक्येन तुष्यन्नित्यर्थः । क्षितौ विमलधर्मस्य नित्यनैमित्तिकादेः शुभस्थितिकृत् धर्मस्थापक इत्यर्थः । असौ अयम् श्रीवेदव्यासः **नृणां** यमेनान्तकेन सह सौहृदं मैत्रीं करोतीति **यमसौहृदकृत्**। श्रीव्यासोक्तधर्ममाचरतां यमभयं नास्तीति भावः। प्रागनुक्तैव श्रीवेदव्यासकथाऽत्र वर्णितेति न पुनरुक्तिरिति ज्ञातव्यम्॥२२॥

**भुवि तथागत एष यथाऽम्बरं स्वविदितो नवमाकृतिरात्मनः ।**
**सकलवित् खलसञ्चयवञ्चकः स्वमतिदो मतिदोषहरोऽस्तु नः ॥२३॥**

**व्या :** बुद्धावतारं[1] श्लिष्टोक्त्या वर्णयति। **भुवीति**। स्ववित् स्वप्रकाशः यथाम्बरं व्योम तथा **भुवि** इतः व्याप्तः । आत्मनः परमात्मनः विष्णोर्नवमाकृतिः दशावतारमध्ये नवमावतारः **सकलवित्** सर्वज्ञः **खलानां** त्रिपुरस्थदैत्यानां **सञ्चयस्य** समूहस्य **वञ्चकः** । सुष्ठु अमतिं मतिविरोधिमिथ्याज्ञानं स्वविरचितबौद्धागमेन ददातीति

१ अपि वामनो ललितबाल्यवानयं प्रतिभावलेन कृतदैत्यकौतुकः ।
उपधेरधःकृतबलीन्द्रशात्रवः स्वजनाय केवलमदात् परं पदम् ॥ - म.वि.(८/१७)
बुद्धरूपो वामनोऽल्पशरीरो भूत्वा जिनस्य पुत्रतां प्रकाश्य अधःकृतबलवद्सुरः
स्वजनायैव मोक्षमदात् । -म.वि.भा.प्र. (८/१७)

**स्वमतिदः** । **एषः तथागतो** बुद्धः । 'सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागत' इत्यमरः । नोऽस्माकं **मतिदोषहरः** कामक्रोधादिबुद्धिदोषहरोऽस्तु । **श्रीकृष्णपक्षे तु** – **यथाम्बर**माकाशः तथा भुवि आगतः जन्मजरामरणच्छेदभेदादिदोषराहित्येनागतः अवतीर्णः **स्वविदितः** स्वैः स्वभक्तजनैर्विदितः ज्ञातः । **आत्मनः** परमात्मनः मूलमूर्तेः सकाशादनवमा आकृतिर्यस्य सोऽनवमाकृतिः । सकलवित् सर्वज्ञः । खलसञ्चयस्य दुर्योधनादिदुष्टसमूहस्य वञ्चकः । स्वमतिदः स्वविषयज्ञानप्रदः श्रीकृष्णः **नः** अमतिः अज्ञानं सैव दोषः तं हरतीति अमतिदोषहरोऽस्तु । अज्ञानं परिहरत्वित्यर्थः ॥ २३ ॥

**वितत विष्णुयशोजननाञ्जसा कृतयुगोन्नतिदातृकरोर्जित ।**
**द्विजसुहृत्कलिकाननदैन्यहेत्वसिधरासि धराभयकारकः ॥२४॥**

**व्या :** इदानीं [१]कल्क्यवतारं श्लिष्टोक्त्या वर्णयति । **वितते**ति । हे **वितत** व्याप्त । विष्णुयशसः **विष्णुयशो**नामकब्राह्मणात् जननं प्रादुर्भावो यस्य तस्य सम्बुद्धिः विष्णुयशोजनन । **अञ्जसा** सम्यक् । कृतयुगस्योन्नतिः औन्नत्यं श्रैष्ठ्यं ददातीत्यु**न्नतिदाता** स चासौ **करः** हस्तस्तेनो**र्जित** । स्वहस्तेन म्लेच्छान् हत्वा **कृतयुगस्य** सद्धर्मप्रवर्तनेन श्रैष्ठ्यदायकेत्यर्थः । ''सत्यप्रवर्तको देवद्विजदीर्घक्षुधापहः'' [२]''अनन्तस्वर्णयागैकहेमपूर्णाखिलद्विज'' इति[३] कल्किनामसु पाठात् । **द्विजानां** ब्राह्मणानां **सु** शोभनं **हृत्** हृदयं तत्र विद्यमानो यः **कलिः** स एव **काननं** तस्य **दैन्यं** छेदः तस्य **हेतुं** कारणीभूतम् असिं खड्गं धारयतीति द्विजसुहृत्कलिकाननदैन्यहेत्वसिधर । कल्किन् । त्वं धरायाः भूमेः

---

१ महिदासपूज्यचरणो द्विजादभूद्विदितात् स विष्णुयशसोऽमलात्मनः ।
इह यो दधे जगति पापशान्तये बहुधामहेतिमतिदीप्तगोस्थितिम् ॥- म.वि.(८/३५)

२ पद्मपुराणान्तर्गतवासुदेवसहस्रनामस्तोत्रे (उत्तरखण्ड । ७१/२८१)

३ पद्मपुराणान्तर्गतवासुदेवसहस्रनामस्तोत्रे (उत्तरखण्ड । ७१/२८३)

अभयकारकोऽसि । **श्रीकृष्णपक्षे तु** – विततस्य व्याप्तस्य विष्णोर्नारायणस्य यशसः कीर्तेः जननं प्रादुर्भावो यस्मात् स विततविष्णुयशोजननः तस्य सम्बुद्धिः । अञ्जसा वक्तव्रात्वादिदोषराहित्येन कृतं निर्मितम् । युगं रथावयवविशेषः तद्वदुन्नतिः दैर्घ्यं यस्य सोऽञ्जसाकृतयुगोन्नतिः स चासौ दाता पुरुषार्थप्रदः करो हस्तस्तेनोर्जित। द्विजानां नक्षत्राणां सुहृत् चन्द्रः तस्य कलिका कला तद्वत् आननं यस्य तस्य सम्बुद्धिः चन्द्रसदृशाननेत्यर्थः । दैन्यहेत्यसिधर शत्रूणां दैन्या पादकनन्दकाख्यखड्गधर हे श्रीकृष्ण । धराभयकरोऽसि ॥ २४ ॥

**इत्थं सरससल्लापैः संस्तुवन्तः सतां पतिम् ।**
**प्रत्यहं तत्पदाम्भोजमीक्षमाणा वसन्ति ते ॥ २५ ॥**

**व्या :** अवतारमालिकावर्णनं समापयति । इत्थमिति । इत्थमुक्तप्रकारेण । **सरससल्लापैः** स्नेहसहितोक्तिभिः **सतां पतिं** श्रीकृष्णं **संस्तुवन्तः ते** मुनयः **प्रत्यहं** तस्य श्रीकृष्णस्य **पदाम्भोजमीक्षमाणाः** सन्तः द्वारकायां निवसन्ति ॥ २५ ॥

**इहाखिलैश्वर्यसुभोगवृद्धेः परत्र निश्रेयससौख्यसिद्धेः ।**
**महः परं द्वारमवाप्य पृथ्व्यामसौ पुरी द्वारवती बभूव ॥ २६ ॥**

**व्या :** इदानीमासर्गं द्वारकां वर्णयति । इहेति । इह संसारे **अखिलैश्वर्यस्य** समस्तराज्यवित्ताद्यैश्वर्यस्य स्रक्चन्दनवनितादिसुभोगस्य च **वृद्धे**रभि**वृद्धेः परत्र** तु **निश्रेयससौख्यसिद्धेः** मोक्षसुखप्राप्तेः **परम्** उत्तमं **द्वारं** द्वारभूतं **महः** तेजः तेजोरूपिणं श्रीकृष्णमवाप्य । स्वस्यां स्थाप्येत्यर्थः । **पृथ्व्यामसौ पुरी द्वारवती बभूव** । यद्यपि द्वारमस्यां वर्तत इति व्युत्पत्तिसम्भवात् सर्वासामपि पुरीणां द्वारवतीत्वं तथाऽप्युक्तरीत्या विलक्षणद्वारवत्वात् असाधारण्येन व्यपदेशा भवन्ति' इति न्यायादस्या एव द्वारवतीशब्दवाच्यत्वम् ॥ २६ ॥

**यतोऽभितोऽच्छस्फटिकावदातलसत्कवाटान्तरिताऽपि सेयम् ।**
**पुरी नृणां द्वारवतीव भाति ततोऽपि तां द्वारवतीं वदन्ति ॥२७॥**

**व्या :** यत इति । सेयं **पुरी यतः** कारणात् **अभितः** समन्ताच्चतुर्षु द्वारेष्वित्यर्थः। **अच्छस्फटिकैः** स्वच्छस्फटिकपाषाणैः अवदातानि शुभ्राणि **लसत्कवाटानि तैरन्तरिताऽपि** पिहिताऽपि **नृणां द्वारवतीव** कवाटानां स्वच्छत्वेन बहिःस्थितव्यापारस्यान्तःस्थितैर्दृश्यमानत्वादन्तःस्थितव्यापारस्य बहिस्स्थितैर्दृश्यमानत्वात् सदा विवृतद्वारवतीव **भाति । ततोऽपि** कारणात् । अपिशब्दः पूर्वपद्योक्तकारणसमुच्चये। **तां पुरीं द्वारवतीं वदन्ति** ॥ २७ ॥

**यतः कवाटे विवृतेऽपि सेयं पुरी कवाटान्तरितेव भाति ।**
**हरिन्मणीनां प्रभया महत्या कथं नु सा द्वारवतीति मन्ये ॥२८॥**

**व्या :** इदानीमस्या द्वारवतीत्वं प्रतिक्षिपति । यत इति । **सेयं पुरी यतः** कारणात् **कवाटे विवृते** सत्यपि **महत्या** बह्व्या निबिडयेत्यर्थः । **हरिन्मणीनां** द्वारबन्धस्थमरकतरत्नानाम् । 'गारुत्मतं मरकतमश्मगर्भं हरिन्मणिः' इत्यमरः । **प्रभया** कान्त्या **कवाटान्तरितेव** । स्फटिककवाटस्य विवृतत्वेन तत्कान्त्यभिभवाभावात् द्वारबन्धस्य मरकतरत्नकान्त्याऽऽवृतत्वेन कवाटान्तरितेव **भाति** । अतः **सा** पुरी **कथं द्वारवतीति मन्ये** । भ्रान्तिमदुत्प्रेक्षाक्षेपानां सङ्करः । [1]कवाटतिरोधाने सत्यसम्भावितद्वारवत्त्वस्य सद्भाववर्णनं कवाटोद्घाटने सति

---

१ स्फाटिकं स्थलमासाद्य जलमित्यभिशङ्कया ॥
सवस्त्रोत्कर्षणं राजा कृतवान् बुद्धिमोहितः ।
दुर्मना विमुखश्चैव परिचक्राम तां सभाम् ॥
ततः स्थले निपतितो दुर्मना व्रीडितो नृपः ।
निःश्वसन् विमुखश्चापि परिचक्राम तां सभाम् ॥
ततः स्फाटिकतोयां वै स्फाटिकाम्बुजशोभिताम् ।
वापीं मत्वा स्थलमिव सवासाः प्रापतज्जले ॥ - भारते (सभा. ४७३-६)
स्थलेऽभ्यगृह्लाद् वस्त्रान्तं जलं मत्वा स्थलेऽपतत् ।
जले च स्थलवद् भ्रान्त्वा मयमायाविमोहितः ॥ - भागवते (१०/७५/३७)
द्वारं सभाया हरिनीलरश्मिव्यूढं न जानन् स विहाय भित्तिम् ।

सम्भावितद्वारस्यासंभववर्णनेनातिशयोक्तिरपि । सर्वेष्टदायकश्रीकृष्णाधिष्ठिता स्फटिकशिलामयचतुष्कवाटवती मरकतरत्नखचितद्वारबन्धनवती चेति पुरीवर्णनमपि द्रष्टव्यम् । एवमुत्तरत्रापि द्रष्टव्यम् ।। २८ ।।

**यदीयरत्नावृतहैमवप्रसकाशमभ्येत्य निवर्तते स्म ।**
**समुद्यतासीन् प्रतिबिम्बराशीन् निरीक्ष्य दीना बहुशोऽरिसेना ।।२९।।**

**व्या : यदीयेति** । **बहुशो** बह्वीः **अरिसेना** यस्य पुरस्य सम्बन्धिनः **रत्नावृतहैमवप्रस्य** रत्नखचितसुवर्णप्राकारस्य **सकाशं** समीपं एत्य । **समुद्यताः असयः** खड्गाः यैस्तान् **प्रतिविम्वराशीन्** प्रतिकृतिसमूहान् । रत्नानां बहुत्वेनैकस्य बहुप्रतिबिम्बसम्भवात् प्रतिबिम्बराशीनित्युक्तम् । **निरीक्ष्य दीना** सती बहुप्रतिभटबुद्ध्या भययुक्ता सतीत्यर्थः । **निवर्तते स्म** निवृत्ताऽभूत् । **बहुशो** बहुवारं निवर्तत इति वा । भ्रान्तिमदलङ्कारः।। २९ ।।

**मुक्तावलीराजितसर्वगेहा नित्यं प्रमोदाशनसत्समूहा ।**
**दुष्टैरगम्या दयिता मुरारेर्मुक्तिप्रभा द्वारवती पुरी सा ।। ३० ।।**

**व्या : मुक्तावलीति** । मुक्तावलीभिः मुक्तानां मौक्तिकानामावलीभिः । परम्पराभिः **राजितानि** शोभितानि । **सर्वगेहानि** यस्यां सा । मौक्तिकनिर्मित-गृहवतीत्यर्थः । अर्थान्तरे मुक्तानां समूहैः राजितसर्वगेहा विमुक्ताधिष्ठितगृहवती-त्यर्थः । श्रीकृष्णसन्निधानवशात् **नित्यं प्रमोदं** प्रकृष्टसुखमश्नन्तीति **प्रमोदाशनाः** ते च ते सन्तः सज्जनाः तेषां **समूहो** यस्यां सा तथोक्ता । अन्यत्र स्वरूपानन्दभरितसत्समूहेत्यर्थः । **दुष्टैः** शङ्खचक्रादिचिह्नरहितैः **अगम्या** गन्तुमयोग्या ।

---

अभ्यन्तराणां दृशि नो विघातिर्नी संस्फाटिकामाशु दृढं चुचुम्बे ।।
तत्रेन्द्रनीलभुवि रत्नमयानि दृष्ट्वा पद्मानि नीरमनसा जगृहे स्ववस्त्रम् ।
रत्नोरुदीधितिनिगूढजलं स्थलं च मत्वा पपात सहितोऽवरजैर्जलौघे ।।
-म.भा.ता.नि.(२१/२७४,२७६)

नामुद्रिताः प्रवेष्टव्याः[1] इति वचनात्। अन्यत्र **दुष्टैरयोग्यैर्दैत्यैरगम्या मुरारेर्दयिता सा द्वारवती पुरी मुक्तेः** मुक्तिस्थलस्य वैकुण्ठस्य **प्रभेव** प्रभा यस्याः सा तथोक्ता। तुल्ययोगितोज्जीवितोपमालङ्कारः ॥ ३० ॥

**विचित्ररत्नावृतवप्रसौधगृहाङ्गनागोपुरवापिकौघम्।**
**इदं पुरीरत्नमवाप्य नूनं बभूव रत्नाकरशब्दितोऽब्धिः ॥ ३१ ॥**

**व्या : विचित्रेति। अब्धिः** समुद्रः **विचित्ररत्नावृताः** इन्द्रनीलादिनानारत्नावृताः **वप्राः** प्राकाराः **सौधाः** राजसदनानि **गृहाः अङ्गनाः** नार्यः **गोपुराणि** पुरद्वाराणि **वापिकाः** दीर्घिकाः तासामोघो यस्मिन् तदिदं **पुरीरत्नं** [2]द्वारवतीपुराख्यरत्नं **अवाप्य** स्वान्तर्निधाय **रत्नाकरशब्दवाच्यो बभूव**। **नूनम्**। उत्प्रेक्षालङ्कारः ॥ ३१ ॥

**समुद्रमुत्सृज्य पुरीं प्रविष्टा बलेन मुक्तावलिराशुगस्य।**
**भवाब्धिमुल्लङ्घ्य मरुद्बलाप्तविकुण्ठमुक्तावलिवद्विरेजे ॥ ३२ ॥**

**व्या : समुद्रमिति। समुद्रमुत्सृज्य** तरङ्गवशात् समुद्रं त्यक्त्वा **आशुगस्य** वायोः **बलेन** वेगेन **पुरीं** द्वारवतीं **प्रविष्टा मुक्तावलिः** मौक्तिकसमूहः **भवाब्धिं** संसारसमुद्रमुल्लङ्घ्य तीर्त्वा **मरुतः** श्रीमुख्यप्राणस्य बलेनानुग्रहरूपेणाप्तः प्राप्तः **विकुण्ठो** वैकुण्ठो यैस्ते तथोक्ताः। ''स एनान् ब्रह्म गमयती''[3] इति श्रुतेः ते च ते **मुक्तास्तेषामावलिवद्विरेजे**। पूर्णोपमा ॥ ३२ ॥

---

१ हरिवंशे (३/७४/२५)

२ पुर एव पूरितमपूरयत् पुनर्ननु कृष्ण एष परमार्थसङ्घचया।
भगवन्मनः पुरमिवायतं पुरा निजधाम तां च जगृहे तदद्भुतम्॥ - म.वि.(८/३)

३ छान्दोग्योपनिषत् (४/५/६)

**तरुं मदीयं नयतूच्चमत्स्वःपुरीं न नेतुं भवते समर्थः ।**
**मरुत्वतेतीरित एव नूनं पुरीमिमां रम्यतमां चकार ॥ ३३ ॥**

**व्या :** तरुमिति । स हरिः श्रीकृष्णः **मदीयं तरुं** पारिजातवृक्षं **नयतु** स्वपुरीं प्रति प्रापयतु । **उच्चाम्** उन्नतां मम **स्वःपुरीं** स्वर्गपुरीम् अमरावतीं **नेतुं समर्थो न भवति इति मरुत्वता** इन्द्रेण **ईरित एव** श्रीकृष्णः **इमां पुरीं** द्वारवतीं **रम्यतमां** स्वर्गादप्यतिशयेन रम्यां **चकार नूनम्** । स्वर्गादप्यधिकमनोहरा द्वारवतीति भावः । उत्प्रेक्षालङ्कारः॥ ३३ ॥

**अधिष्ठिताः पोतममूं श्रयन्ते स्वकार्यलाभाय वणिक्समूहाः ।**
**स्वरूपलब्ध्यै हरिपादपोतकृताश्रयाः सिद्धजनाश्च दूरात् ॥३४॥**

**व्या :** अधिष्ठिता इति । **पोतं** नावमाधिष्ठिताः **वणिक्समूहाः स्वकार्यलाभाय** क्रयविक्रयादिना द्रव्यप्राप्त्यै दूरादागत्यामुं द्वारवतीमाश्रयन्ते । **हरिपादपोते** श्रीकृष्णपादपोते **कृत आश्रयो** यैस्ते **सिद्धजनः** योगिनः **स्वरूपलब्ध्यै** संसारावस्थायां ज्ञानानन्दादिस्वरूपस्य जीवाच्छादिकाविद्यया तिरोहितत्वात् तन्निवृत्तिपूर्वकं ज्ञानानन्दादिस्वरूपप्राप्त्यै **अमूं** द्वारवतीमा**श्रयन्ते** । ऐहिकामुष्मिकफलदेयं पुरीति भावः ॥ ३४ ॥

**इमामधिश्रित्य पुरीं परत्र विमुक्तिमेव व्रतिनो व्रजन्ति ।**
**पुराऽपि नाकाधिकलोकभाजां कथं स तेषां बहुमानपात्रम् ॥३५॥**

**व्या :** इमामिति । **व्रतिनो** यतीश्वराः **इमां पुरीं** द्वारवतीम**धिश्रित्या**श्रित्य **परत्र** लोके **विमुक्तिमेव** मोक्षमेव **व्रजन्ति** । नतु स्वर्गमित्येवकारार्थः कुत इत्यत आह पुराऽपीति । **पुराऽपि** पूर्वमपि संसारावस्थायामित्यर्थः । नाकात् स्वर्गात् अधिकः लोकः उत्तमलोकः द्वारवती तं भजन्तीति **नाकाधिकलोकभाजः तेषां**

व्रतिनां **स नाकः बहुमानपात्रं** स्पृहाविषयः **कथं स्यात्** । नहि क्षीरान्नभोजी यवागुमपेक्षत इति भावः ।। ३५ ।।

**गुणेन यस्याः श्रुतिसङ्गतेन स्वकोटिमात्रेण विनम्रवक्त्रा ।**
**अवद्यसञ्छादनवैखरीज्ञा बभार काशी[1] धनुषोऽनुकारम् ।। ३६ ।।**

**व्या : गुणेनेति** । **श्रुतिसङ्गतेन** वेदसम्बद्धेन वेदोक्तेनेत्यर्थः । **स्वकोटिमात्रेण** स्वस्या अपि कोटिसङ्ख्याप्रमाणेन कोटिसङ्ख्याधिकेनेत्यर्थः । **यस्याः** द्वारवत्याः **गुणेन** पापपरिहारकत्वमुक्तिप्रदत्वसदाश्रीकृष्णाधिष्ठितत्वादिगुणेन **विनम्रवक्त्रा** स्वतोऽप्यधिकद्वारवतीगुणा क्षान्त्या अवाङ्मुखी । स्वसेविनां नृणां **अवद्यसञ्छादनवैखरीज्ञा** दोषाच्छादनप्रौढिज्ञा **काशी** वाराणसी पुरी । स्वनिष्ठमात्सर्याख्यदोषाच्छादनार्थं **धनुषश्**चापस्य **अनुकारम्** आकारं **बभार**। श्रुतिसङ्गतेन आकर्णान्तमाकृष्टेन कोटिमात्रेण चापाग्रमात्रेण गुणेन मौर्व्या धनुषः नम्रीभावस्यौचित्यात्तदाकारे स्वीकृते सति स्वनिष्ठमात्सर्यलक्षणदोष आच्छादितो भवत्वित्यभिप्रायेणैव धनुराकारं बभ्रे इति भावः । अतएवावद्यसञ्छादनवैखरीज्ञेत्युक्तम् । 'काश्याः कोटिगुणाधिका[2] द्वारवतीति भावः ।।३६।।

**सुधर्मपुञ्जावनमूलभूतमिहाच्युतं वीक्ष्य कृताधिवासम् ।**
**सभां सुधर्मां प्रददौ पुरीवत् स्वसंसदत्युच्चसभाभियेव ।। ३७ ।।**

**व्या : सुधर्मेति** । इन्द्रः सुधर्माणां शोभननित्यनैमित्तिकादिधर्माणां पुञ्जस्यावने रक्षणे **मूलभूतं** कारणभूतम् । ''यदा यदा हि धर्मस्ये''ति[3] स्मृतेः । **अच्युतं**

---

१ रूप्याचले कृतपदोऽपि गिरीन्द्रपुत्रीप्रेमप्रवाहभरमानितमानसोऽपि ।
काशीमसीवरुणयोः पुरमन्तराले प्रेतावृतामपि सतीपतिरध्यतिष्ठत् ।।- ती.प्र. (२/२३)

२ विश्वम्भरां घनतरामपि भूरियन्त्रैर्निर्भिद्य यत्पदमुपेत्य बलीन्द्रगेहात् ।
आस्ते त्रिविक्रमतनुर्हरिरद्वितीया सा द्वारकेप्सितपुमर्थकरी पुरी नः ।। -(ती.प्र.१/९०)

३ गीता ४/७

श्रीकृष्णं सह द्वारवत्यां कृतः अधिवासः आवासो येन तम् । **वीक्ष्य पुरीवत्** अमरावतीसकाशात् अधिकमनोहरद्वारावतीवत् स्वसदसः स्वसभायाः सुधर्मायाः अत्युच्चसभाकरणेन मदीयसुधर्माख्यसभाऽप्युपेक्ष्या भविष्यतीति भियेवेत्यर्थः । **सुधर्मां सभां** श्रीकृष्णाय **प्रददौ**[1] ॥ ३७ ॥

**पुरीमगम्यां परिखीकृताब्धिं निशम्य कृष्णस्य निरूढचिन्तः ।**
**स मागधोऽभूदिह योग्यनामा क्रमाज्जरासंहितगात्रसीमा ॥३८॥**

**व्या :** पुरीमिति । श्रीकृष्णस्य **पुरीं** द्वारवतीं **परिखीकृतः अब्धिः** समुद्रो यस्याः सा ताम् । अत **एवागम्यां** शत्रुभिर्गन्तुमशक्याम् । **निशम्य** श्रुत्वा **निरूढा** जाता **चिन्ता** यस्य **स** तथोक्तः । स **मागधो** जरासन्धः । **क्रमात्** जरया चिन्तासान्तत्योत्पन्नजरया । **संहिता** सम्बद्धा । **गात्रसीमा** शरीरमर्यादा यस्य स तथोक्तः सन् । चिन्तया पलितगात्रः सन्नित्यर्थः । **योग्यनामा** जरयाग्रस्तशरीरत्वाज्जरासन्ध इत्यन्वर्थकनामा **अभूदिव** । जरया राक्षस्या संहितगात्रत्वेन जरासन्धनामा न बभूव । किन्तु चिन्ताजरया ग्रस्तत्वेन जरासन्धनामा बभूवेत्यर्थः । आमरणमुपायचिन्तयाऽपि द्वारवती असाध्येति भावः । अत्र जरासन्धनाम्नः कारणान्तरकल्पनायाः उत्प्रेक्षामूलत्वेन विभावना-मूलकोत्प्रेक्षालङ्कारः ॥ ३८ ॥

**सितानुलेपाम्बरमाल्यहाराः शुचिस्मिता वारवधूर्व्रजन्तीः ।**
**इहोदितेन्दुद्युतितोऽतिरिक्ता न यामिका लक्षयितुं क्षमन्ते ॥३९॥**

**व्या :** सितेति । **इह** द्वारवत्यां **यामिकाः** रात्रौ पुरपालकाः । **सिताः** शुभ्राः **अनुलेपः** अङ्गरागः **अम्बरं** वस्त्रं **माल्यानि** कबरीविन्यस्तमल्लिकादामानि **हाराः**

---

१ सुधर्मां परिजातं च महेन्द्रः प्राहिणोद्धरेः — भा (१०/५०/५५)
सभां सुधर्मनामिकां ददौ समीरणोऽस्य च ।
शतक्रतोः सभां तु तां प्रदाय केशवाय सः ॥ — म.भा.ता.नि. १७/१०५

मुक्ताहाराः यासां ताः । **शुचिस्मिताः** शुभ्रहासाः । **व्रजन्तीः** सङ्केतगृहं प्रति निशि गच्छन्तीः । **वारवधूः** वेश्याङ्गनाः । **उदितेन्दुद्युतितः** उदितचन्द्रकिरणेभ्यः **अतिरिक्ताः** । स्फटिककुट्टिमप्रदेशे चन्द्रकिरणानामतिनिबिडत्वात् तेभ्यः पृथग्भूताः । **लक्षयितुं द्रष्टुं न क्षमन्ते** । कबर्या मल्लिकामालाच्छादितत्वेनानुलेपस्मितादीनामतिशुभ्रत्वेन एताश्चन्द्रकिरणा एव न तु नार्य इति भ्रान्त्या ताः धर्षयितुं न क्षमन्त इत्यर्थः । अत्युक्तिरलङ्कारः॥ ३९ ॥

**काव्योचितश्लोकमपेक्षमाणा विचारयन्तीह पदे पदेऽर्थान् ।**
**विद्वज्जनानन्दकरान् मनोज्ञा बुधा वदान्याश्च पुरे मुरारेः ॥४०॥**

**व्या : काव्येति** । इह **मुरारेः** श्रीकृष्णस्य **पुरे** द्वारवत्यां **मनोज्ञा** श्रोतृविद्वन्मनः अर्थिनां मनश्च जानन्तीति ते तथोक्ताः । **बुधाः** कवयः । **वदान्या** दानशूराश्च काव्यस्योचितः योग्यः श्लोकः पद्यं **तमपेक्षमाणाः काव्योचितं श्लोकं** कर्तुमीहमानाः । वदान्यपक्षे काव्ये उचितः वर्णनयोग्यः श्लोको यशः । 'पद्ये यशसि च श्लोक' इत्युभयत्राप्यमरः । तमपेक्षमाणाः सन्तः । **विद्वज्जनानन्दकरान्** । **पदे पदे** प्रतिप्रतिशब्दम् । **अर्थान्** अभिधेयान् **विचारयन्ति** । वदान्यपक्षे विद्वज्जनानन्दकरान् विद्वज्जनसन्तोषकरान् अर्थान् हिरण्यवस्त्राभरणादीन् । पदे पदे प्रतिक्षणमित्यर्थः । विचारयन्ति ॥ ४० ॥

**यदङ्घ्रितीर्थेन यदीयनाम्नो बलेन काशी प्रथिता किलासीत् ।**
**मुरद्विषस्तस्य निवासभूता पुरी त्रिलोक्यामियमद्वितीया ॥ ४१ ॥**

**व्या : यदङ्घ्रीति** । काशी यस्य श्रीकृष्णस्या**ङ्घ्रितीर्थेन** पादोदकेन गङ्गया । **यदीय**स्य श्रीकृष्णसम्बन्धिनः **नाम्नः** रामनाम्नो **बलेन** काश्यां महेशः रामनाम उपदिस्य जनान् तारयतीति प्रसिद्धेः । **प्रथिता** प्रसिद्धा । **आसीत् किल** । **तस्य मुरद्विपः** श्रीकृष्णस्य **निवासभूते**यं **पुरी** द्वारवती **त्रिलोक्यामद्वितीया**

असदृशा। यस्य पादोदकनाममात्रेण काश्याः प्रथितत्वं किल । किमु तस्यैव निवासभूताया द्वारवत्या इति भावः ॥ ४१ ॥

**चलद्भ्रुवश्चञ्चलनेत्रपातैर्जनान् समानान् वशयन्ति तस्याम् ।**
**स्मरोच्चलत्कार्मुकलग्ननीलोत्पलेषुघातैरिव वारवध्वः ॥ ४२ ॥**

**व्या :** चलदिति । यस्यां द्वारवत्याम् । **चलद्भ्रुवः** वारवध्वः **समानान्** स्त्रीवश्या न भवाम इत्यभिमानयुक्तान् जनान् **चञ्चलनेत्रपात्रैः** लोलापाङ्गनिरीक्षणैः । **स्मरस्य** मन्मथस्य **उच्चलत्कार्मुके** चञ्चलभ्रूसाम्यायेदम् । **लग्नः** सम्बद्धः **नीलोत्पलेषुः** इन्दीवराख्यबाणः । नेत्रसाम्यायेदम् । तस्य **घातैरिव वशयन्ति** स्वाधीनान् कुर्वन्ति । द्वारवत्यां **वारवध्वः** स्वलीलानिरीक्षणमात्रेण **जनान्** वशयन्तीत्यर्थः । तथा लावण्यातिशयभरिता इति भावः ॥ ४२ ॥

**स्वगोपुरौघैरियमुन्मयूखैर्दिवं व्यतीयाय न तद्विचित्रम् ।**
**मुकुन्दमन्तर्हृदि धारयन्त्या विचित्रतीर्थानि च संस्पृशन्त्याः ॥४३॥**

**व्या :** स्वगोपुरौघैरिति । इयं द्वारवती उत् ऊर्ध्वमुखीभूताः **मयूखाः** रत्नकान्तयो येषां तैः **स्वगोपुरोघैः** प्रासादविशेषसमूहैः **दिवं** स्वर्गं **व्यतीयाय** । उत्तुङ्गगोपुर खचितरत्नकान्तयः स्वर्गादप्यूर्ध्वं गता इत्यर्थः । इति यत् अतिक्रम्य गतवतीति यावत् । तत् **मुकुन्दं** श्रीकृष्णम् **अन्तर्हृदि** हृदयान्तः **धारयन्त्याः विचित्रतीर्थानि च संस्पृशंत्याः** । द्वारवत्यां नानातीर्थानि सन्तीति प्रसिद्धेः । तस्याः द्वारवत्याः विचित्रमाश्चर्यं न भवति सकलतीर्थोपसेवनेन परमात्मध्यानेन च स्वर्गादूर्ध्वगमनम् अत्याश्चर्यं न भवतीति भावः । अतिशयोक्तिरलङ्कारः॥४३॥

**पुष्पीकृत्य शरासनं रतिपतेः पञ्चत्वभाजः शरां-**
**स्तत्सेनामबलां विधाय सचिवं तूष्णीं वसन्तं क्वचित् ।**
**तन्मित्रं क्षयभाजनं तदनुगान् माधुर्यधुर्यान् गिराऽ-**
**नङ्गीकृत्य च तं जनोऽत्र चरति ब्रह्मास्त्रवान् प्रत्यहम् ॥४४॥**

**व्या : पुष्पीकृत्येति** । अत्र द्वारवत्यां ब्रह्मैव परम्ब्रह्मभूतश्रीकृष्ण एव अस्त्रमस्यास्तीति तथोक्तः । जनः भक्तजन इत्यर्थः । सपरिवारकामजयाया-त्तब्रह्मास्त्र इति ध्वनितोऽर्थः । **रतिपतेः** कामस्य **शरासनं** धनुः **पुष्पीकृत्य**। अपुष्पं पुष्पं सम्पद्यते **तत्** तथाकृत्वा । पुष्पवदसारीकृत्येत्यर्थः । अत एव पुष्पधन्वेति कामप्रसिद्धिः । **शरान्** बाणान् । **पञ्चत्वभाजः** पञ्चत्वसङ्ख्योपेतान्। प्राप्तमरणानिति ध्वनितोऽर्थः । विधाय कृत्वा । अत एव पञ्चबाण इति प्रसिद्धिः। **तत्सेनां** मन्मथचमूं स्त्रियम् । जात्येकवचनम् । अबलां बलहीनां **विधाय** । अत एव **अबला** इति स्त्रीणां नाम । **सचिवं** मन्त्रिणं वसन्तं **क्वचित्प्रदेशे तूष्णीं वसन्तं** निर्व्यापारतया स्थितं विधाय । अत एव द्वितीयान्तपदेन वसन्तमिति वदन्ति । तन्मित्रं **तस्य** मदनस्य **मित्रं** सुहृदं चन्द्रं **क्षयभाजनं** विधाय । अत एव कृष्णपक्षे चन्द्रः क्षीयते । तस्य कामस्यानुगान् पिकशुकादीन् **गिरा** वाचा **माधुर्यधुर्यान्**। युद्धे मरणभीत्या त्वदीया वयं न हन्तव्या इति मधुरवचनवक्तॄनित्यर्थः । विधाय। अत एव पिकादयो मधुरभाषिणः । तं च काममनङ्गीकृत्य शरीररहितं कृत्वा । अत एवानङ्ग इति प्रसिद्धिः । **प्रत्यहं चरति** सञ्चरति । कृष्णकृपया सपरिकरं कामं निर्जित्य तत्तन्नाम्नैव स्वजयख्यातिश्च सम्पाद्य भक्तिसन्तुष्टो निष्कामो योगिजनोऽत्र सञ्चरतीत्यर्थः ॥ ४४ ॥

**स्मरस्य भार्यामपहृत्य विष्णोः स्नुषां तदङ्घ्र्यब्जयुगे निधाय ।**
**जयं स्वकीयं भुवि दर्शयन्तश्चरन्ति तस्यां परिपन्थिशून्याः ॥४५॥**

**व्या :** स्मरस्येति । **तस्यां** द्वारवत्यां **परिपन्थिशून्याः** शत्रुभूतकामेन रहिताः जितकामा इत्यर्थः । सन्यासिनो योगिजनाः **स्मरस्य** मन्मथस्य **भार्यां** विषयेषु विद्यमानां रतिमित्यर्थः । **अपहृत्य** निवर्त्य । युद्धे शत्रुवधानन्तरं तद्भार्यापहरणमिति ध्वनितोऽर्थः । **विष्णोः** श्रीकृष्णस्य **स्नुषाम्** । प्रद्युम्नपत्नीत्वादिति भावः। अनेनात्मभोगानर्हत्वं सूच्यते । तां रतिं तस्य **श्रीकृष्णस्याङ्घ्र्यब्जयुगे**

पादारविन्दयुगले निधाय समर्प्य विषये रतिं त्यक्त्वा श्रीकृष्णचरणस्मरण एव रतिमन्तः इत्यर्थः । **स्वकीयं जयं** कामजयं निष्कामुकत्वमित्यर्थः । **भुवि दर्शयन्तः सन्तः चरन्ति** ॥ ४५ ॥

**मारं दर्पकरं प्रतर्क्य सुहृदं मत्वा जगन्मोहनं**
**सेनां च प्रमदां शरांश्च विषमांस्तस्यानुगान् व्योमगान् ।**
**कोदण्डं सुमनःसमूहविनुतं तैः पूरितं सारथिं**
**सेनां तामवलम्ब्य तस्य वशगास्तस्यां रमन्तेऽपरे ॥ ४६ ॥**

**व्या :** धीराणां योगिनां कामस्वभावेनैव तज्जयप्रकारं वर्णयित्वा भीरूणां कामुकानां तत्स्वभावनिरीक्षणेनैव तज्जयप्रकारश्च वर्णयति । **मारमिति** । तस्यां द्वारवत्याम् **अपरे** कामिजनाः **मारं** कामं **दर्पकरं प्रतर्क्य** 'स्वप्रतिभटं मारयति' इति मारः 'अन्यान् दर्पयतीति दर्प' इति नाममात्रस्मरणे भीता इति भावः । तस्य **सुहृदं** चन्द्रं जगन्मोहनं **मत्वा** । जगदानन्दो **जगन्मोहन** इति चन्द्रस्य प्रसिद्धेः । **सेनाञ्च प्रमदां** प्रकृष्टो मदो यस्या इति[1] व्युत्पत्तेः प्रकृष्टमदकारिर्णीं मत्वा । **शरांश्च** बाणान् **विषमान्** विषमसङ्ख्याकान् । दुःसहानिति ध्वनिः । मत्वा **अनुगान्** अनुचरान् पिकादीन् व्योमचरान् मत्वा । भूचरैरस्माभिः अस्मत्तोऽप्युपरिसञ्चरणशीलैः खेचरैः सह कथं योद्धव्यमिति मत्वेत्यर्थः । **कोदण्डं** चापं **सुमनःसमूहविनुतं** कुसुमसमूहकारणेन विशेषेण नुतं स्तुतम् । कुसुममयत्वात् स्तुतमित्यर्थः । कुसुममयत्वाद्भृङ्गाख्यपक्षिभिः स्तुतमिति वा । देवसमूहेन विनुतमिति ध्वनिः । **स्मरसारथिं** वसन्तं **तैः** कामकोदण्डैः **पूरितम्** । वसन्तस्य कुसुमाकरत्वादिति भावः । मत्वा **तां** प्रमदारूपां **सेनामवलम्ब्य** प्रतिभटतया स्थिते सति कामो वधिष्यतीति भीत्या तदीयस्त्रीरूपसेनामाश्रित्येत्यर्थः । **तस्य** कामस्य **वशगाः** अधीनाः सन्तः **रमन्ते** द्वारवत्यां कामिनः कामिनीभिः सह सदा क्रीडन्तीत्यर्थः ॥ ४६ ॥

---

१ प्रमादकरणत्वात्तु प्रमदेति च गीयते ॥ भा.ता. ११/१४/३०

**तच्छास्त्रश्रवणोत्सवेन कतिचित्सङ्कीर्त्य संस्मृत्य तं**
**तत्पादाब्जनिषेवया च सुधियस्तस्यार्चया केचन ।**
**सख्येनाप्यपरे प्रणम्य बहुशः केचिच्च दासास्तवे-**
**त्यात्मानं च निवेद्य मोक्षनिरताः सन्त्यत्र कृष्णार्चकाः ॥४७॥**

**व्या :** द्वारवत्यां जनाः ''श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्''[१] इत्युक्तनवविधभक्तियुक्ता इति वर्णयति। **तच्छास्त्रेति** । अत्र द्वारवत्यां कतिचित् केचिज्जनाः **तस्य** श्रीकृष्णस्य **शास्त्रं** वैष्णवशास्त्रमित्यर्थः । तस्य **श्रवणोत्सवेन** श्रीकृष्णस्यार्चां कुर्वन्तीति श्रीकृष्णार्चकाः **कतिचित्** तं श्रीकृष्णं **सङ्कीर्त्य** स्तुत्वा । अपरे **तं** श्रीकृष्णं संस्मृत्य। **केचन सुधियः तस्य** श्रीकृष्णस्य **पादाब्जनिषेवया** श्रीकृष्णपादसेवनेनेत्यर्थः। केचन **तस्यार्चया** । **अपरे सख्येनापि** सुहृद्भावेन **च** । अपिशब्दः समुच्चये। केचित् **बहुशः प्रणम्य** प्रणामं कृत्वा । **केचिच्च** तव **दासा** वयमित्युक्त्वा। केचनात्मानं स्वशरीरादिकं सर्वं त्वदीयमिति **निवेद्य च श्रीकृष्णार्चका** इति प्रत्येकं सम्बन्धः । **मोक्षे निरताः सन्तो** वसन्ति ॥ ४७ ॥

**अङ्गीकारगिरां श्रुतावभिरताः सङ्कीर्त्य ता मानिनी-**
**स्तत्पादौ परिगृह्य वन्दनमहो कृत्वा त्वदीया वयम् ।**
**त्वद्दासा वयमित्युदीर्य मनसाऽतीतां स्मरन्ते रतिं**
**नीवीमोक्षफलाय सख्यकुशलाः केचिच्च रामार्चकाः ॥४८॥**

**व्या :** इदानीं विलासकृतनानावस्थानां नवविधभक्तिमत्वं वर्णयति। **अङ्गीकारेति**। अत्र द्वारवत्याम्। **अङ्गीकारगिरां** त्वया सह रंस्य इति स्त्रीणां अङ्गीकारवचसां **श्रुतौ** श्रवणे **अभिरताः** आसक्ताः । अनेन श्रवणलक्षणभक्तिरुक्ता भवति ।

१ भागवते (७/५/२३)

**मानिनीः** कोपवतीः **ताः** कामिनीः **सङ्कीर्त्य** कोपपरिहाराय स्तुत्वा । अनेन कीर्तनमुक्तं भवति । तासां पादौ **तत्पादौ प्रतिगृह्य** क्षमापनाय गृहीत्वा । अनेन पादसेवनमुक्तं भवति । **वन्दनं कृत्वा अहो** कामिनां दैन्यमाश्चर्यम् । वयं **त्वदीयाः** त्वदधीना इत्युदीर्य । अनेनात्मनिवेदनं सूचितम् । त्वद्दासा वयमित्युदीर्य । अनेन दास्यमुक्तं भवति **अतीताम्** पूर्वदिने अनुभूतां **रतिं मनसा स्मरन्तः** । अनेन स्मरणं सूचितं भवति । **सख्यकुशलाः** सौहार्दकरणे कुशलाः । अनेन सख्यमुक्तं भवति । केचन विलासिनो जनाः **नीवीमोक्षलक्षणफलाय** । अनेन विलासिनामपि मोक्षः सम्पादितः । **रामार्चकाः** रामाणां स्त्रीणाम् अर्चकाः पुष्पादिदानेन अर्हणं कुर्वन्तः । अनेनार्चनमुक्तम् । रामार्चनानामिति ध्वनिना कृष्णार्चनप्रतिनिधित्वस्फोरणायार्चका इत्यनुक्त्वा रामार्चका इत्युक्तम् ॥ ४८ ॥

**प्राकाराद्बहिरत्र वारिधिरयं प्राप्याम्बुदैरर्पितं**
**स्वातौ वारि ततश्चिरेण हृदये मुक्तामयो जायते ।**
**अन्तर्हस्ततटेषु विप्रजलधिः कृष्णाब्दवृष्टं सदा**
**वित्ताम्बु प्रतिपद्य तत्क्षणमहो मुक्तामयो जायते ॥ ४९ ॥**

**व्या : प्राकारादिति** । अत्र द्वारवत्यां प्राकाराद्बहिरयं **वारिधिः स्वातौ** स्वातीनक्षत्रे **अम्बुदैः** मेघैः **अर्पितं** वृष्टं **वारि** जलं **प्राप्य** । ततः वर्षाकालात् **चिरेण** बहुकालेन **हृदये** अन्तः **मुक्तामयः** मौक्तिकप्रचुरो **जायते** । स्वातौ मेघवृष्टं जलं समुद्रकरस्थानीयशुक्तिपुटेषु पतितं कालान्तरे मौक्तिकमणिभावं प्राप्नोतीत्यर्थः । द्वारवतीं परितः श्रीकृष्णसन्निधानवशात् समुद्रे मौक्तिकानि फलन्तीति भावः । **अन्तः** द्वारवत्याः अभ्यन्तरे **विप्रजलधिः** ब्राह्मणसमुद्रः ब्राह्मणसमूह इत्यर्थः । **हस्तपुटेषु** करतलेषु **कृष्णाब्दवृष्टं** कृष्णाख्यमेघेन वृष्टं **वित्ताम्बु** द्रव्यजलं **सदा प्रतिपद्य तत्क्षणं** तस्मिन्नेव क्षणे **मुक्तामयः** मुक्तः निर्गतः आमयः दारिद्र्यलक्षणो व्याधिः यस्य स तथोक्तः **जायते** । अहो आश्चर्यं श्रीकृष्णदत्तद्रव्यप्रतिग्रहीतॄणां

तदैव दारिद्र्यविनाशो भवतीति भावः । दीयमानानर्घ्यद्रव्येष्वपि भगवतो लोभाभावसूचनाय जलदत्वेन वर्णनम् । श्लिष्टगर्भव्यतिरेकालङ्कारः ।। ४९ ।।

**आशासक्तजनाशुगेन जविनोपान्ते रजो जृम्भयं-**
**स्तेनैवोग्रतमः सृजन् शुभदृशामप्यान्ध्यमापादयन् ।**
**अन्तस्तम्भितसत् त्ववृत्तिरनिशं संसारवाराशिवत्**
**प्रत्यूहीभवति[१] त्रिधामनगरप्राप्तौ जलौघाश्रयः ।। ५० ।।**

**व्या : आशासक्तेति** । **जविना** वेगवता अत एव आशासु दिक्षु आसक्ताः सम्बद्धाः जनाः येन सः **आशासक्तजनः** स चासावाशुगो वायुस्तेन जनानपि इतस्ततः प्रापयता झञ्झामारुतेनेत्यर्थः । **उपान्ते** तीरे **रजः** सैकतमयीं धूलिं **जृंभयन्** उत्थापयन् **तेनैव** बहुतरधूलिमुत्थापयता वायुना रविकरप्रतिरोधे सति **उग्रतमः** निबिडान्धकारं **सृजन् शुभदृशामपि** चक्षुष्मतामपि **आंध्यं** चक्षुषि धूलीप्रवेशेन **अन्धभावमापादयन् अनिशं** सर्वदा **अन्तः** अभ्यन्तरे **स्तम्भिता** तिरोहिता **सत्वानां** मत्स्यादीनां **वृत्तिर्वर्तनं** यस्य स तथोक्तः । जलौघाश्रयः समुद्रः **संसारवाराशिवत्** । संसारसमुद्रोऽपि जविना बहुदूरगमनेऽपि वेगवता आशया वित्ताशया आसक्ताः सम्बद्धाः जना एव आशुगो वायुस्तेनोपान्ते दातृसमीपे रजः दातृषु क्रियमाणरागातिशयमूलीभूतरजोगुणं जृम्भयन् । याञ्चया स्वहृदयस्थितवित्ताशां प्रकाशयन् । तेनैव याचकजनेनैव उग्रतमः तमोगुणम् । जृम्भयन् । द्रव्यालाभे सति तमोविकारं कोपं सृजन्नित्यर्थः । शुभदृशामपि ज्ञानिनामपि आंध्यमविवेकित्वमापादयन् । अन्तस्तम्भितसत्वस्य वृत्तिर्येन स तथोक्तः । **जलौघाश्रयः** मूर्खसमूहाश्रयः । **त्रीणि धामानि** अनन्तासनवैकुण्ठ

---

१ अन्तर्यामी त्रिधामाऽन्तःसाक्षी त्रिगुण ईश्वरः ।।
- इति वासुदेवसहस्रनामसु (पद्म-उ.खं. ७१/१३९
ओङ्कारो भगवान् विष्णुः त्रिधामा वचसां पतिः ।।
- विष्णुपुराणे

श्वेतद्वीपाख्यानि यस्य श्रीकृष्णस्य **नगरप्राप्तौ** द्वारवतीप्रवेश इत्यर्थः । अन्यत्र वैकुण्ठप्राप्तौ **प्रत्यूही** परिपन्थी **भवति** । यथा संसारः मोक्षं गन्तुं न मुञ्चति तथा द्वारावती परिखीभूतः समुद्रः अन्यान् द्वारवतीं गन्तुं न मुञ्चतीत्यर्थः ।। ५० ।।

**उत्तुङ्गोर्मिकरानुषक्तविलसच्चक्राङ्कशङ्खः स्फुर-**
**द्रत्नौघावृतगात्रवास्यनिमिषः फेनानुलेपोज्ज्वलः ।**
**स्वासक्तैर्जलसञ्चयैरपि महापापानि निर्मूलयन्**
**वार्धिः कृष्ण इवावतीह परितो योगीन्द्रजिह्वोत्सवः ।।५१।।**

**व्या :** उत्तुङ्गेति । उत्तुङ्गाः **ऊर्मय** एव तरङ्गा एव **करास्तेष्वनुसक्ताः** सम्बद्धाः विलसन्तश्चक्राङ्काः शङ्काश्च यस्य स तथोक्तः । द्वारवत्यां समुद्रजले **चक्राङ्कशिलानां शङ्खानां** चोत्पत्तेः । अन्यत्रोत्तुङ्गोर्मिवत् करौ हस्तौ तयोरनुषक्तौ चक्रस्य सुदर्शनस्य अङ्कश्चिह्नं शङ्खः पाञ्चजन्यश्च तौ यस्य स तथोक्तः । **स्फुरद्रत्नौघैः** आवृतं गात्रं रत्नाकरत्वादिति भावः । तत्र वसन्तीति स्फुरद्रत्नौघावृतगात्रवासिनः अनिमिषाः मत्स्याः यस्य स तथोक्तः । अन्यत्र **स्फुरद्रत्नौघैः** आभरणस्थरत्नसमूहैरावृतं **गात्रं** शरीरं तत्र **वासिनः अनिमिषाः** इन्द्रादयो देवाः यस्य स तथोक्तः । **फेन एवानुलेपः तेनोज्ज्वलः** । अन्यत्र फेनवत् सितः अनुलेपः अङ्गरागः तेनोज्ज्वलः । **स्वासक्तैः** स्वसम्बन्धिभिः **जलसञ्चयैः** जलसमूहैरपि । स्नानपानादिकुर्वतां **महापापानि निर्मूलयन्** समुद्रस्थचक्रतीर्थस्य[1] महापापपरिहारतीर्थत्वादिति भावः । अन्यत्र स्वसक्तैः स्वस्मिन् चित्तासक्तिमद्भिः जलसञ्चयैरपि भगवदितरविषये कौशलरहितैरपि। वैष्णवजनैरन्येषां महापापानि निर्मूलयन् । योगीन्द्राणां सतोतॄणां जिह्वायाः रसनायाः **उत्सवः** रसास्वादनादिशक्तिः यस्मात् स तथोक्तः । 'वरुणस्य

---

१ **चक्रतीर्थस्य** महिमा वर्णितुं केन शक्यते ।
यच्छिलामपि सङ्गेन विधत्ते विश्ववन्दिताम् । - इति तीर्थप्रबन्धे (१/९१)

रसनाभिमानित्वादिति भावः । अन्यत्र योगीन्द्राणां स्तोतॄणां जिह्वायाः उत्सवभूतः **योगीन्द्रजिह्वया** स्तुत इत्यर्थः । **वार्धिः** समुद्रः **श्रीकृष्ण इव इह** इमां पुरीं **परितः अवति** रक्षति ॥ ५१ ॥

**सच्चक्रा करपुष्टरम्यकटका भोगीन्द्रभोगास्पदा**
**नेत्रस्थानगतेन्द्विना कनकसद्मप्रातिपीताम्बरा ।**
**भाति स्वोदरवासिहंसगमना सेयं सुधर्मावहा**
**विष्णोराकृतिवत् समुद्रहृदये लक्ष्मीधरालिङ्गिता[१] ॥ ५२ ॥**

**व्या : सच्चक्रेति । सतां** सज्जनानां **चक्रं** समूहो यस्यां सा सच्चक्रा । द्वारवत्यां सन्त एव सन्ति न त्वसन्त इति भावः । अन्यत्र सत् समीचीनं चक्रं सुदर्शनं यस्याः सा तथोक्ता । **करेण** तत्र तत्र राजभ्यः समाहृतबलिरूपद्रव्येण । नतु कोशस्थद्रव्येण । **पुष्टं रम्यं कटकं** सेना यस्याः सा तथोक्ता । अन्यत्र करेण देदीप्यमानहस्तेन **पुष्टानि** बहुगुणितप्रभासहितानि कृतानि कटकानि करभूषणानि यस्याः सा । **भोगीन्द्राणां** विलासिश्रेष्ठानां **भोगस्य** विषयभोगस्यास्पदं यस्यां सा । अन्यत्र भोगीन्द्रस्य भोग एव शरीरमेवास्पदं शयनस्थानं यस्याः सा । 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकायोः' इत्यमरः । **नेत्रस्थाने** प्रासादानां किञ्चिदर्वाग्भागे **गतौ** स्थितौ **इन्द्विनौ** चन्द्रसूर्यौ यस्याः सा । अनेन प्रासादानामत्युच्चत्वं द्योत्यते । अन्यत्र नेत्रयोः स्थाने गतौ इन्द्विनौ यस्याः सा । 'सूर्याचन्द्रमसावस्य चक्षुषि' इति श्रुतेः । कनकसद्मप्रेणातिपीतं अम्बरं आकाशं यस्यां सा । अन्यत्र **कनकसद्मप्रवत् अतिपीतमम्बरं** वस्त्रं यस्याः सा । **स्वोदरे स्वाभ्यन्तरे** वासिन्यो **हंसगमनाः** हंसवन्मनोहरगमनाः नार्यः यस्यां सा तथोक्ता । अन्यत्र स्वोदरे स्वोदरस्थनाभिकमले इत्यर्थः । वासी हंसगमनः ब्रह्मा यस्याः सा । **सुधर्मां** सभां वहतीति तथोक्ता । अन्यत्र शोभननित्यनैमित्तिकादिधर्मास्पदभूता । लक्ष्मीधरेण

---

१ लक्ष्मीधराभ्यामाश्लिष्टः । - तन्त्रसारसङ्ग्रहे (१/२०)

श्रीकृष्णेनालिङ्गिता आश्रिता । अन्यत्र **लक्ष्मीधराभ्यां** देवीभ्यां **आलिङ्गिता**। सेयं पुरी **विष्णोराकृतिवत्** क्षीराब्धौ शेषशायिपद्मनाभमूर्तिवत् **समुद्रहृदये** समुद्रमध्ये भाति शोभते ।। ५२ ।।

**ये पुरारिरिपुणाऽनये पुरा सङ्गताम्रनयनाः स्म सङ्गताः ।**
**कान्तया सह वरालकान्तया तेऽपि रेचकभृतोऽत्र तेपिरे ।।५३।।**

**व्या :** य इति । ये विलासिनः **पुरा** पूर्वं **सङ्गेन** स्त्रीसङ्गेन **ताम्रे नयने** येषां ते तथोक्ताः सन्तः **पुरारेः** त्रिपुरान्तकस्य **रिपुणा** कामेन । **अनये** ग्राम्यधर्मे **सङ्गताः स्म सङ्गताः** प्रसिद्धाः। 'स्मातीते च प्रसिद्धे च' इत्यनुशासनात् । **तेऽपि** तथाभूता अपि अत्र पुर्यां **वराः** मनोहराः **अलकान्ताः** कुन्तलाग्राणि यस्याः सा तया वध्वा **सह रेचकं** प्राणायामं बिभ्रतीति तथोक्तः । प्राणायामनिष्ठाः सन्तः इत्यर्थः । प्राणायामैकदेशवाचिना रेचकशब्देन रेचककुम्भकपूरकरूपप्राणायामो लक्ष्यते । तेपिरे तपस्यां चक्रिरे । उपभोगार्हमनोहरनार्यभावात् न तपःकरणम्। किन्तु शान्तिरसप्रदद्वारवतीपुरप्रभावादिति भावेन वरालकान्तया कान्तया सहेत्युक्तम् ।। ५३ ।।

**चरन्ति तस्यां बहुमानयुक्ता बुधा विदग्धा बहुमानयुक्ताः ।**
**गजाश्च मत्ता बहुशस्तरङ्गा बहिश्च सिन्धोर्बहुशस्तरङ्गाः ।।५४।।**

**व्या :** चरन्तीति । **तस्यां** द्वारवत्यां **बहुमानयुक्ताः** विष्णोः सर्वोत्तमत्वादिविषयकबहुप्रमाणयुक्ताः **बुधाः** विद्वांसः । बहुमानेन अभिमानेन युक्ताः मानिन इत्यर्थः। **विदग्धाः** विलासिनश्च । **मत्ताः** मदयुक्ताः । **बहु शस्तं रङ्गं** गैरिकादिरञ्जनद्रव्यं येषां ते तथोक्ताः । **गजाश्च** चरन्ति सञ्चरन्ति । **बहिश्च** पुराद्बहिश्च **सिन्धोः** समुद्रस्य **बहुशः** बहवस्तरङ्गाः ऊर्मयश्चरन्ति । बुधविलासिजनगजादिसङ्कीर्णेयं पुरीति भावः ।। ५४ ।।

**अङ्गनालमलकावलिभृङ्गं मन्दहासमधु मन्मथबाणम् ।**
**अङ्गनाऽलममलं मुखपद्मं बिभ्रती वशयितुं जगदस्याम् ॥५५॥**

**व्या :** अङ्गनालमिति । अस्यां पुरि अङ्गमेव शरीरमेव नालं यस्य तत् । अलकावलिरेव **भृङ्गो** यस्य तत्तथोक्तम् । **मन्दहास** एव **मधु** मकरन्दो यस्य तत्तथोक्तम् । **मन्मथस्य** कामस्य **बाणं** बाणभूतम् । 'पद्मस्य कामबाणत्वादिति भावः । **अमलं** निर्मलं **मुखपद्मं बिभ्रती अङ्गना** । **जगत्** विश्वं **वशयितुं** वशीकर्तुमलं समर्था । 'जगन्मोहनकान्त्या समुपेतेयं पुरीति भावः ॥ ५५ ॥

**न मुनयोऽनुययुर्मनसा च यं तमपि लब्धुमिमामनसा चयम् ।**
**दधदुपैति जनः सह जायया विघटिता प्रकृतिः सहजा यया ॥५६॥**

**व्या : न मुनय** इति । **मुनयो** ऋषयः यं श्रीकृष्णं मनसा **च** न केवलं पादादि-बहिरिन्द्रियेण मनसाऽपीति चार्थः । **नानुययुः** न प्रापुः । **तमपि** श्रीकृष्णं लब्धुं गन्तुम् **अनसा** शकटेन **चयं** समूहं **दधज्जनः** पुञ्जीभूतो जन इत्यर्थः । **जायया** वध्वा **सह यया** पुर्या **सहजा** अनादिसिद्धा प्रकृतिः श्रीकृष्णदर्शनप्रतिबन्धिका **प्रकृतिः** । **विघटिता** निरस्ता । तामिमां द्वारवतीं पुरीमुपैति । षण्मासपर्यन्तमवस्थानार्थं भार्यापुत्रवित्तादिसमस्तभारं शकटैरूढ्वा चोरादिभयपरिहारार्थं पुञ्जीभूयाद्यापि गच्छतीत्यर्थः । 'द्वारवती योगिनामपि दुर्लभं श्रीकृष्णसाक्षात्कारं प्रयच्छतीति भावः ॥ ५६ ॥

**परमाप रमा यस्यामाश्रमं मा श्रमं दिवि ।**
**निवसन्निव संवेत्ति सर्वदा सर्वदानतः ॥ ५७ ॥**

**व्या :** परमिति । यस्यां द्वारवत्यां **रमा** लक्ष्मीः **परम्** उत्तमम् **आश्रमं** निवासम् आप प्राप । लक्ष्म्याः निवासभूतेयं पुरीति भावः । यस्यां निवसन् जनः दिवि स्वर्गे **निवसन्निव** । **सर्वदानतः** समस्तवस्तुप्रदानतो निमित्तात् ।

**श्रमं** द्रव्याभावनिमित्तक्लेशम् । **मा संवेत्ति** न जानाति । अमानोनाः प्रतिषेध इति वचनान्माशब्दः प्रतिषेधार्थः । द्वारवत्यां दरिद्रः कोऽपि नास्तीति भावः ॥५७॥

**निवारयन्तीह भटा यथेशो नवीनमार्गे विशतः कृतान्ते ।**
**न चेत् क्षिपन्तीह वृका इवार्ता नवीनमार्गे विशतः कृतान्ते ॥५८॥**

**व्या : निवारयन्तीति** । **इह** द्वारवत्यां **भटाः** श्रीकृष्णभटाः विशतः द्वारवतीं प्रविशतो दुर्जनान् **निवारयन्ति** । कथमिव । **ईशः** [१]शिवः **कृतस्य** कृतयुगस्य **अन्ते** अवसाने। **नवीनमार्गे** नूतनवैष्णवमार्गे । अधर्मिणां धर्ममार्गस्य नूतनत्वान्नवीनेत्युक्तम् । **विशतः** वैष्णवधर्ममाचरतो दैत्यान् । शैवागमादिदुःशास्त्रकरणेन मोहयित्वा वैष्णवधर्ममार्गे गन्तुं यथा **न** मुञ्चति तथेति सम्बन्धः । **न चेत्** निवारिता अपि न तिष्ठन्ति चेत् । बलाद्द्वारवतीं प्रवेष्टुमिच्छन्ति

१ एष मोहं सृजाम्याशु यो जनान् मोहयिष्यति ।
त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय ॥
अतथ्यानि वितथ्यानि दर्शयस्व महाभुज ।
प्रकाशं कुरु चात्मानमप्रकाशं च मां कुरु ॥
इति वाराहवचनं ब्रह्माण्डोक्तं तथा परम् ।
अमोहाय गुणा विष्णोराकारश्चिच्छरीरता ॥
निर्दोषत्वं तारतम्यं मुक्तानामपि चोच्यते ।
एतद्विरुद्धं यत् सर्वं तन्मोहायेति निर्णयः ॥
परमो विष्णुरेवैकः तज्ज्ञानं मोक्षसाधनम् ।
शास्त्राणां निर्णयस्त्वेषस्तदन्यन्मोहनाय हि ॥
ज्ञानं विना तु या मुक्तिः साम्यं च मम विष्णुना ।
तीर्थादिमात्रतो ज्ञानं ममाधिक्यं च विष्णुतः ॥
अभेदश्चास्मदादीनां मुक्तानां हरिणा तथा ।
इत्यादि सर्वं मोहाय कथ्यते पुत्र नान्यथा ॥ - म.भा.ता.नि. (१/४८-५५)

चेदित्यर्थः । अमार्गे राजमार्गं विहाय प्राकारोल्लङ्घनेन द्वारान्यमार्गे इह द्वारवतीं विशतः दैत्यान् कृतान्ते यमे क्षिपन्ति । तान् हत्वा यमलोकं प्रापयन्तीत्यर्थः। कथमिव । **वृकाः** अमार्गे विशतः मार्गं त्यक्त्वा अटव्यां इतस्ततः सञ्चरतः अत **एवार्तान्** आक्रोशतः अवीनिव उरणकानिव । 'बलात् द्वारवतीं गत्वा यमलोकं प्रापयन्तीत्यर्थः । अथवा कृष्णभटाः वृका इव आर्ताः न भवन्ति। किन्तु कृष्णाज्ञया **विः** पक्षिः **इनः** सूर्यः तयोर्मार्गे आकाशमार्ग इत्यर्थः । विशतः सौभादिव्योमचारियानेन द्वारवतीं प्रविशतः साल्वादीन् **कृतान्ते** अन्तके **क्षिपन्ति** । अन्तकलोकं प्रापयन्तीति योजना ॥ ५८ ॥

**तनोति सा कोपिनि शान्तभावं मनस्सु यः कोऽपि निशान्तभावम् ।**
**खगाश्च यस्यां कलशालिकण्ठा गृहाश्च भास्वत्कलशालिकण्ठाः ।५९**

**व्या :** तनोतीति । सा पुरी **कोपिनि** कोपवति पुरुषे **शान्तभावं तनोति** । क्रोधादिदोषपरिहर्त्रीयं पुरीति भावः । **यस्यां** पुर्यां **यः कोऽपि** यो वा को वा चण्डालोऽपीत्यर्थः । **मनस्सु** अन्तःकरणेषु । **निशान्तभावं** प्रभातस्वभावं तमोराहित्यमित्यर्थः । **तनोति** । द्वारवतीस्थाः सर्वेऽपि मनोदोषनिर्हरणसमर्था इति भावः । यस्यां पुर्यां कलेनाव्यक्तमधुरस्वरेण **शालिनः कण्ठाः** येषां ते **खगाः** पिकशुकादिपक्षिणश्च । **भास्वत्कलशानां** विलसत्कलशानाम् **आलिः** श्रेणिः **कण्ठे** सौधकण्ठप्रदेशो येषां ते गृहाश्च सन्ति । पिकादिपक्षिभिर्महागृहैश्च रम्येयं पुरीति भावः ।।५९।।

**भित्तिस्थरत्नफलितप्रतिरूपचित्रचित्राः**
**सुशोभिनवरत्नरुचा दधानाः ।**
**रङ्गानुषङ्गरमणीयमिव प्रदेशं**
**यस्यां विभान्ति मुरजिल्ललनानिवासाः ॥ ६० ॥**

**व्या : भित्तिस्थेति** । यस्यां पुरि **भित्तिस्थरत्नेषु फलितानि** प्रतिफलितानि **प्रतिरूपाणि** गृहान्तःस्थितायाः स्वस्याः प्रतिबिम्बान्येव चित्राणि आलेख्यानि तैः **चित्राः** विचित्राः **मुरजितः** श्रीकृष्णस्य **ललनानिवासाः** अवरोधवधूगृहाः **सुशोभीनि नवरत्नानि** पद्मरागगारुत्मतेन्द्रनीलमौक्तिकादीनि तेषां **रुचा** कान्त्या **रङ्गस्य** नीलपीतादिरङ्गवल्याः **अनुषङ्गेण** सम्बन्धेन **रमणीयं** मनोहरं प्रदेशं **दधाना इव** भान्ति ॥ ६० ॥

**सौहार्दनृत्यदुरुकेकिनिकायशोभिसौधेषु यत्र रुचिराचलशृङ्गबुद्ध्या ।**
**संसक्तमभ्रनिचयं परितः पतन्त्यः स्वस्पर्धिगात्रमजयन्मरुता पताकाः ॥**

**व्या : सौहार्देति** । यत्र पुरि **पताकाः** । **सौहार्देन** मेघसौहार्देन । **नृत्यन्त** उरुकेकिनः उत्तममयूराः तेषां निकायेन समूहेन । शोभिषु **सौधेषु रुचिराचलशृङ्गबुद्ध्या** । अनेन सौधानामत्युन्नतत्वं द्योत्यते । **संसक्तं** लग्नं स्वाभिः स्पर्धि स्पर्धनशीलं गात्रं यस्य तम् । **अभ्रनिचयं** मेघसमूहं **परितः पतन्त्यः** चलन्त्यः सत्यः मरुता स्वचलनजन्यवायुना अजयन् जितवत्यः । सौधस्थपताकाः स्वचलनजन्येन वायुना सौधलग्नमेघान् निराकुर्वन्नित्यर्थः ॥६१॥

**यस्यां सुवर्णवरवेष्टनभाजितेजः-**
**प्रद्योतिताम्बरहरिन्मणिविद्रुमाद्यैः ।**
**रत्नैर्नवैर्नवविधैः खचिते सहन्ते**
**प्रासादमूर्ध्नि न बुधाः कपिशीर्षनाम ॥६२॥**

**व्या : यस्यामिति** । यस्यां पुरि **बुधाः** विद्वांसः । **सुवर्णवरवेष्टनानि** सुवर्णनिर्मितप्रासादावरणफलकाः तान् भजतीति सुवर्णवरवेष्टनभाक् तस्मिन् । तेजोभिः **प्रद्योतितम् अम्बरं** गगनं यैस्ते । **हरिन्मणिविद्रुमाः** हरिन्मणयो विद्रुमाश्च ते **आद्या** येषां तानि तैर्नवविधैर्नवसङ्ख्याकैर्नवैर्नूतनैः **रत्नैः खचिते** । **प्रासादमूर्ध्नि** प्रासादाग्रे । **कपिशीर्षनाम** कपिशीर्षमित्याख्यम् । 'प्रासादाग्रे कपिशीर्षम्' इति

हलायुधः । न सहन्ते । नवरत्नखचितसौवर्णखचितप्रासादाग्रस्य कपिशीर्षमिति नाम नोचितमिति न **सहन्त** इत्यर्थः ॥ ६२ ॥

**नयति न यतिरन्यद्भोज्यमात्रान्नमात्रात्**
**चरति च रतिभर्त्रा प्रेरितो नैव भोग्ये ।**
**जनिमजनिमतज्ञः सन्तरत्येव चान्ते**
**यमभयमभयाप्त्या स्वस्थवृत्तिर्न वेत्ति ॥ ६३ ॥**

**व्या : नयतीति** । इह पुरि **यतिः** सन्यासी **भोज्यमात्रं** भोज्यप्रमाणं तच्च तत् अन्नमात्रं केवलान्नञ्च तस्मात् यावता उदरपूर्तिः ताव**दन्नमात्रात्** । अन्यत् न **नयति न** प्रापयति न गृह्णातीत्यर्थः । **रतिभर्त्रा** कामेन । **प्रेरितः** सन् **योग्ये** वनितादिविषये न चरति कामासक्तो वनितादिविषयं न भुङ्क्ते इत्यर्थः । अजनिर्ब्रह्मा तस्य मतं सिद्धान्तं मध्वसिद्धान्तमित्यर्थः । तं जानातीति अजनिमतज्ञः सन् । अन्ते देहावसाने जनिं पुनः पुनर्जननं संसारमित्यर्थः । सन्तरत्येव । **अभयाप्त्या** न विद्यते **भयं** यस्मात् तस्य परमात्मनः **आप्त्या** प्राप्त्या **स्वस्थवृत्तिः** सन् यमभयं मृत्युभयं न **वेत्ति** च ॥६३॥

**न वहति हृदि तोषं वैरिवध्वाः कपोले**
**नवहतिमवलोक्य श्वासविश्रान्तवाक्या ।**
**समुदितरविदृष्टिव्रीडविभ्रान्तनेत्रा**
**समुदितरवराज्ञी भावमाविष्करोति ॥ ६४ ॥**

**व्या : न वहतीति** । अत्र पुर्यां काचन कामिनी । **वैरिवध्वाः** सपत्न्याः **कपोले नवहतिं** नूतनदन्तहतिमवलोक्य **श्वासे** निश्वासे **विश्रान्तं** पर्यवसन्नं **वाक्यं** वचनं यस्यास्तथोक्ता सती ईर्ष्यया **श्वासं** मुञ्चती किमपि न वदन्ती सतीत्यर्थः । **हृदि** हृदये **तोषं** न वहति न प्राप्नोति । **समुदितरवेः** सम्यगुदितसूर्यस्य **दृष्ट्या** दर्शनेन **जातव्रीडेन** लज्जया **विभ्रान्ते** चञ्चले **नेत्रे** यस्याः सा तथोक्ता । सूर्यप्रकाशे सति

स्वकपोलस्थनवक्षतं जनाः पश्यन्तीति जातलज्जेत्यर्थः। मुदा सन्तोषेण सह वर्तत इति समुत्। **इतरवराङ्गी** तदितरनायकी **भावं** तन्निगूहनचेष्टाविलासमित्यर्थः। **आविष्करोति** प्रकटयति। तस्याः पुरतः स्वात्मनैवं लज्जया नेत्रचापल्यादौ कृते तस्याः असन्तोषो जात इति भावः॥ ६४॥

**विहाय सालोक्यमुदारमन्ते विहायसाऽऽलोक्य मुदा रमन्ते।**
**महीशकन्यासकलार्थरूपमहीशकन्यासकलार्थरूपम्॥ ६५॥**

**व्या :** विहायेति। **विहाय सालोक्यम् उदारम् अन्ते** विहायसा आलोक्य मुदा **रमन्ते महीशकन्यासकलार्थरूपम्** अहीशकन्यासकलार्थरूपमिति पदच्छेदः। इह पुरे सिद्धाः **अहिः** शेषः शिवः **कः** ब्रह्मा तेषां **न्यासो** विषयभोगत्यागः वैराग्यमित्यर्थः। तत्पूर्विका या **कला** विद्या। वैराग्यपूर्वकज्ञानमित्यर्थः। तस्या **अर्थरूपम्**। शेषादिज्ञानेऽपि पदार्थमर्यादया अवभासते न साक्षादिति शेषादीनामप्यगम्यत्वमनेन द्योत्यते। उदारम् उत्कृष्टं श्रीकृष्णं **महीशानां** राज्ञां **कन्याः** षोडशसहस्रकृष्णपत्न्यः तासाम्। **सकलाः** समस्ताः **अर्थाः** पुरुषार्थाः एभ्यस्तानि। **रूपाणि** षोडशसहस्रशरीराणि यस्य तम्। 'महीशकन्यासकलार्थान् वस्त्राभरणविलासादीन् रूपयतीति स तथोक्तः। तमिति वा। षोडशसहस्रपत्नीनां गृहे षोडशसहस्ररूपाणि कृत्वा तासामभीष्टानि च दत्वा स्थितमित्यर्थः। **विहायसा** आकाशमार्गेण स्थित्वा आलोक्य ब्रह्माद्यगम्यमाहात्म्यः श्रीकृष्णः षोडशसहस्रस्त्रीगृहेषु तावद्रूपं धृत्वा सञ्चरतीति कौतुकेन तं दृष्ट्वेत्यर्थः। **अन्ते** दत्तं **उदारं सालोक्यं** सालोक्यमोक्षं **विहाय मुदा** दर्शनजन्यसन्तोषेण रमन्ते। आनन्दाश्रुपुलकस्तुत्यादिक्रीडां कुर्वन्ति। मुक्तावप्येकैकस्वबिम्बदर्शनशक्ति-व्यक्तिः कदाचिदिह तु साष्टोत्तरशतषोडशसहस्ररूपाणि सर्वदा दृश्यन्त इति हर्षेण सिद्धाः वैकुण्ठादिलोकस्थित्याख्यसालोक्यमप्युपेक्ष्य गगने स्थित्वा द्वारवतीमहोत्सवं पश्यन्तीति भावः॥ ६५॥

**मदभ्रमत्तारविशङ्किनेत्रमदभ्रमत्ता रविशङ्किनेऽत्र ।**
**प्रायोजयद्या नगधीरचित्तं प्रायोऽजयद्यानगधीरचित्तम् ।।६६।।**

**व्या :** मदभ्रेति । मदभ्रमत्तारविशङ्किनेत्रम् अदभ्रमत्ता रविशङ्किने अत्र प्रायोजयत् या नगधीरचित्तं प्रायः अजयत् यानगधीः अचित् तमिति पदच्छेदः । अत्र पुर्याम् अदभ्रमत्ता वारुणीमदिरास्वादनेनात्यन्तं मत्ता प्रमत्ता अत एव अचित् न विद्यते चित् ज्ञानं यस्याः सा कार्याकार्यज्ञानशून्येत्यर्थः । या नारी रविशङ्किने सूर्यं दृष्ट्वा जनाः पश्यन्तीति शङ्कमानाय यस्मै पुरुषाय मदेन भ्रमत् चरत् तारकं कनीनिका यस्य तत् । कनीनिकाक्षयोस्तारमिति भास्करः । तच्च तत् विशङ्किनेत्रञ्च शङ्कितनयनं प्रायोजयत् प्रयुक्तवती । यानगानां विमानेन गच्छतां देवानां धीः चित्तं यस्यां सा देवैरप्यपेक्षणीयत्वेन अतिसुन्दरीत्यर्थः । सा नारी नगवत् पर्वतवत् धीरं निश्चलं चित्तं यस्य स तथोक्तः । अतिधैर्योपेतमि इत्यर्थः । तं पुरुषमजयत् जितवती । 'द्वारवत्यां कटाक्षाक्षेपमात्रेणातिधैर्योपेतपुरुषवशीकरणसमर्था नारी तिष्ठतीति भावः ।। ६६ ।।

**सरसा विलसद्धारसरसारशिरोधराः ।**
**नयनैर्वशयन्त्यस्यां नयनैर्पुण्यजिष्णुभिः ।। ६७ ।।**

**व्या :** सरसा इति । अस्यां पुरि सरसाः शृङ्गाररसभरिताः विलसन्तः प्रकाशमानाः हारसरा मुक्ताहाराः तैः साराः मनोहराः शिरोधराः कण्ठा यासां ताः नार्यः नयः नीतिः नैपुण्यं निपुणता ताभ्यां जिष्णुभिर्जयशीलैर्नयनैः नेत्रैः जनान् वशयन्ति स्वाधीनान् कुर्वन्ति ।। ६७ ।।

**सेयं पुरी वितनुते विषयोपभोक्तुः**
**प्रायः फलेन समतां विषयोज्झितस्य ।**

**यत्कृष्णसङ्गतवधूषु ललामलेपैस्त-**
**द्ध्यानधूतदुरितेषु च तस्य साम्यम् ॥६८॥**

**व्या :** सेयमिति । सेयं पुरी द्वारवती **विषयोपभोक्तुः** कामिजनस्य **विषयोज्झितस्य** विरक्तस्य च **प्रायः फलेन समतां** साम्यं **वितनुते** । यस्मात् श्रीकृष्णसङ्गतवधूषु **ललामलेपैः** रतिकालीनगाढालिङ्गनेनानुषक्ततिलकानुलेपैः । **तस्य** श्रीकृष्णस्य **साम्यं** सादृश्यम् । तत्तिलकेन तिलकं तदनुलेपेनानुलेपनमिति साम्यं वितनुते । **तद्ध्यानेन** श्रीकृष्णध्यानेन **धूतदुरितेषु** निरस्तदुष्कृतेषु पुरुषेषु **च तस्य** श्रीकृष्णस्य **साम्यं** सादृश्यं वितनुते । अन्तःकरणात् विषयोपभोक्तुः विषयोज्झितस्य च फलेन समतां वितनुत इति सम्बन्धः ॥ ६८ ॥

**दन्तक्षतं वीक्ष्य नवं नवोष्ठे चिन्ता दुरन्ता समभूत् सपत्न्याः ।**
**अन्या तदाच्छादनयुक्तिशून्या तन्वी मुहुर्दर्शयतीह दैन्यम् ॥६९॥**

**व्या :** प्रकारान्तरेण विषयोपभोक्तुर्विषयोज्झितस्य च फलसाम्यमाह । **दन्तक्षतमिति** । इह पुरि **नवायाः** युवत्याः **ओष्ठे** अधरे **नवं** नूतनं आर्द्रमित्यर्थः । **दन्तक्षतं वीक्ष्य सपत्न्याः दुरन्तचिन्ता समभूत्** । **तदाच्छादने** नूतनक्षताच्छादने **युक्तिशून्या** उपायशून्या । **अनेन** नायिकाया मुग्धावस्थाऽवगम्यते । **अन्या तन्वी दैन्यं** चिन्तां **मुहुर्दर्शयति** । भर्तृसङ्गतायाः तदसङ्गतायाश्च चिन्तासाम्यात् फलसाम्यमिति भावः । पूर्वं कपोले दन्तक्षतस्य वस्त्रादिना आच्छादनसंभवात् भावमाविष्करोतीत्युक्तम् । इदानीमधरोष्ठक्षतस्याच्छादनोपायाभावात् उभयोरपि **दैन्यमेवेति** विशेषः ॥ ६९ ॥

**वाचा यः कीर्तितोऽलं दिविजवरसभाराधितानां मुनीनां**
**जन्मान्ताद्येनसां यो रचयति विहतिं चित्फलं सुप्रगीतः ।**
**रुग्भेदी प्रौढसद्वाग्मिषु विविधसुवाणीविलासैः प्रतर्क्यः**
**शस्तोऽस्त्यादौ तथाऽन्ते विमलयतिततेर्जल्पशुद्धौ सहायः ॥७०॥**

**व्या :** यदर्थं द्वारवती वर्णिता तत्फलमाह – **वाचेति** । **यः दिविजवरसभायां** देवश्रेष्ठसभायां **आराधितानां मुनीनां** नारदादीनां वाचा अलमत्यर्थं **कीर्तितो** यः सुप्रगीतः सन् सम्यक् स्तुतः सन् । चिदेव ज्ञानमेव फलम् अपरोक्षज्ञानरूपफलमित्यर्थः । जन्मान्तरयोर्जननमरणयोः आदीनि कारणभूतानि एनांसि पापानि तेषां **विहतिश्च** नाशश्च **रचयति** । प्रथमम् परोक्षं ददाति । पश्चात् पूर्वोत्तराघं परिहरतीत्यर्थः । यः **रुग्भेदी** संसाररोगभेदी । यः **प्रौढसद्वाग्मिषु** मध्ये **विविधैः** नानारसभरितैः **सुवाणीविलासैः** शोभमानवाग्विलासैः **प्रतर्क्यः**। अत्रैकपदत्वान्न यतिभङ्गो दोषाय ।

> ''वागक्षोणिभुजापराक्रमयुजा निर्वासिता वैरिणः ।
> संविष्टाः प्रतिचत्वरं प्रतिवनं ये नूत्नकापालिकाः ।
> पूयाद्रविणसंस्पृशो व्यपनयन्तः सत्वरं मक्षिकावत्''

इतिवत् । यः आदौ स्थितिदशायाम् । **तथान्ते** मरणसमये । **विमलयतितते:** निर्मलसन्न्यासिसमूहस्य **जल्पशुद्धौ** वाक्यशुद्धौ **सहायः** सहायकारी । जीवता म्रियमाणेन वा योगिना एतन्नामोच्चारणेनैव वाक्शुद्धिः सम्पादनीयेति भावः । शस्तः प्रशस्तः श्रीकृष्णः अस्यां द्वारवत्याम् अस्ति । श्रीकृष्णसन्निधानवशादेवेयं पुरी वर्णितेति भावः । **पद्मबन्धमुखेन** कविनाम काव्यनाम च प्रदर्शयत्यनेन पद्येन काव्यकारः । तथाहि । शस्तः प्रशस्तः एतत्काव्यरूपो ग्रन्थः अस्ति अस्मिन् पद्येऽस्ति । वाचा यः कीर्तितोऽलमित्यादि विमलयतितते: जल्पशुद्धौ वाक्शुद्धौ सहाय इत्यन्तानि विशेषणानि सर्वाण्यपि पूर्ववदेव ग्रन्थपक्षेऽपि योजनीयानि । अस्मिन् पद्ये ग्रन्थः स्पष्टं न प्रतीयत इति तत्राह । विमलेति । विमलाः यतयः विच्छेदाः । त्रिमुनियतियुतेति वचनात् । एकविंशतिवर्णात्मके एकस्मिन् पादे सप्तसप्तवर्णेषु एकैको यतिरिति त्रयो यतयः । एवं पादचतुष्टये द्वादशयतयो द्रष्टव्याः। तेषां ततिः समूहः तस्या आदौ सप्तसप्ताक्षराणाम् अन्तस्त्ववसिते मध्य

इत्यभिधानात्। अन्ते श्लोकमध्ये अन्ते श्लोकावसाने च स ग्रन्थोऽस्तीति पूर्वेण सम्बन्धः । तथा च वाचा यः कीर्तितोऽलमित्येको यतिः तस्यादिवर्णो वाकारः एवमुत्तरत्रापि यतिषु एकादशवर्णाः श्लोकार्धावसाने एको वर्णः श्लोकावसाने एको वर्ण इति **'वादिराजरचितः रुग्मिणीशविजयः'** इति चतुर्दशवर्णा द्रष्टव्याः। द्वादशयतीनां पद्मद्वादशदलाग्रेषु मध्यवर्णस्यान्तिमवर्णस्य च प्रथमषष्ठद्वितीयषष्ठदलभागयोर्लेखने कृते सति द्वादशदलपद्मबन्धे **'वादिराजरचितः रुग्मिणीशविजयः'** इति कविकाव्यनाम क्रमेण द्रष्टुं शक्यते । काव्यनायकविषयतया काव्यविषयतया काव्यस्थितिस्थलसूचनपरतया चेत्येतत्पद्यस्यैव प्रवृत्तेः पद्यार्थकथनेनैव चारितार्थ्यं टीकाकृतो मम न तु काव्यान्तरटीकाकारस्येव बन्धस्थलप्रदर्शनाय स्वयं प्रयतितव्यम्। वृत्तं तु स्रग्धरा ॥ ७० ॥

**रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि**
**प्रेम्णा चिन्तयतां विचित्रविमलश्लाघ्यार्थसन्दायिनि ।**
**सञ्जाते भुवि रुग्मिणीशविजये सद्वादिराजोदिते**
**सर्गः सप्तदशो मुदामयमभूत् स्वर्गीश्वराणां कुले ॥७१॥**

**॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थश्रीचरणविरचिते श्रीरुग्मिणीशविजये महाकाव्ये सप्तदशः सर्गः॥**

रोम्णामिति । उक्तोऽर्थः ॥ ७१ ॥

**॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थश्रीचरणविरचितस्य श्रीरुग्मिणीशविजयमहाकाव्यस्य व्याख्यायां श्रीनारायणभट्टविरचितायां श्रीगुरुभावप्रकाशिकायां सप्तदशः सर्गः ॥**

*****

# अष्टादशः सर्गः

**रक्तात्मीयतलत्विषा प्रविलसत्स्वीयोर्ध्वभागश्रिया**
**स्वच्छेन्दुच्छविवृत्तसन्नखरुचा स्वासक्तभूषावलेः ।**
**यच्छन्त्यद्भुतरत्नबन्धनमहः श्रीरुग्मिणीकृष्णयो-**
**र्दम्पत्योः पदपङ्कजानि भजतां सम्पत्कराणि ध्रुवम् ॥ १ ॥**

**व्या :** रुग्मिणीकृष्णसौन्दर्यतिग्मभानुमरीचयः ।
स्निग्धं मनोज्ञं तमसा दिग्धमुद्बोधयन्तु नः ॥ १ ॥

सर्गेऽस्मिन् रुग्मिणीश्रीकृष्णयोः [1]पादतलमारभ्य सर्वावयववर्णनं करोति। **रक्तेत्यादिना** । **रक्ता** च सा **आत्मीयानि** स्वकीयानि तलानि **तेषां** त्विट् रक्तात्मीयतलत्विट् तया अनेन पद्मरागरत्नसम्बन्धः सूचितः । **प्रविलसन्ति** या **स्वीयोर्ध्वभागश्रीः** स्वीयः स्वकीयः पादतलादूर्ध्वभागः तस्य श्रीः कान्तिः तया । अनेन इन्द्रनीलसम्बन्धः सूचितः । **स्वच्छेन्दोः** निष्कलङ्कचन्द्रस्य छविरिव छविर्येषां ते तथोक्ताः वृत्ताः वर्तुलाः **सन्नखाः** तेषां **रुचा** कान्त्या। अनेन मुक्ताफलसम्बन्धः सम्पादितः । **स्वासक्तानां** स्वाश्रितानां **भूषाणां** मञ्जीराद्याभरणानाम् **आवलिः** समूहः **तस्याः अद्भुतानां** विचित्राणां रत्नानां प द्मरागेन्द्रनीलमुक्ताफलरूपाणां **बन्धनेन** वचनेन जातं **महः** कान्तिं नानाविधर त्नबन्धनजनितकान्तिमित्यर्थः । यच्छन्ति ददाति । **दम्पत्योः** जाया च पतिश्च दम्पती तयोः । जायाया जंभावो दंभावो वा निपात्यते । रुग्मिणीश्रीकृष्णयोः **पदपङ्कजानि भजतां** सेवमानानां **सम्पत्कराणि ध्रुवम्** । आश्रितानाम् अचेतनानामपि भूषणानां सम्पत्कराणि किल किमु भजतां चेतनानामिति भावः। उपमामूलो हेतुरलङ्कारः ॥ १ ॥

---

१ मनुष्या मौलितो वर्ण्या देवाश्चरणतस्तथा । - पुराणवचनम् ।

**लक्ष्मीस्तनस्फुरितकुङ्कुमपङ्कसङ्गे**
**भक्त्या स्मरन्मुनिमनःसरसीनिरूढे ।**
**उत्तुङ्गरम्यनखमौक्तिकपुञ्जशोभे**
**रक्तांगुलीपरिलसद्दलपङ्क्तिकान्ते ॥२॥**

**व्या :** कमलसाम्येन श्रीकृष्णस्य पादौ वर्णयति । **लक्ष्मीस्तनेति** । लक्ष्म्याः रुग्मिण्याः **स्तनौ** कुचौ तत्र **स्फुरितः कुङ्कुमाख्यः पङ्कः** तस्य **सङ्गः** सम्बन्धो यस्य तस्मिन् । पादसेवाकरणसमये रुग्मिण्या कुङ्कुमदिग्धस्ववक्षसि श्रीकृष्णपादस्य सन्निधापनादिति भावः । कमलस्यापि पङ्कजत्वेन पङ्कसम्बन्धः । **भक्त्या** स्मरन्तो ये मुनयः तेषां **मनःसरसि निरूढे** संनिहिते । **उत्तुङ्गाः रम्याः नखा** एव **मौक्तिकपुञ्जस्तस्य शोभा** यस्य तत्तथोक्तम् । तस्मिन् । पद्मप्रतिनिधित्वेन मुक्ताफलवतः पद्मसाम्यायेदं विशेषणम् । **रक्ता अङ्गुलय** एव **परितो** लसन्ति दलानि तेषां **पङ्क्त्या कान्ते** मनोहरे श्रीकृष्णाङ्घ्रिचारुकमले । मम चित्तभृङ्गः सन्ततं स्यादित्युत्तरेणान्वयः ॥ २ ॥

**प्रीत्या क्वणद्वदनहंसकदम्बजृम्भि-**
**मुक्ताफलोल्लसितकिङ्किणिमुख्यभूषे ।**
**तद्वक्त्रजातकविगीतमनोज्ञरेखा-**
**कल्पध्वजाङ्कुशयवाशनिलक्ष्मलक्ष्ये ॥३॥**

**व्या :** प्रीत्येति । **प्रीत्या क्वणत्** ध्वनत् **वदनं** येषां ते **हंसाः** हंसपक्षिणः तेषां **कदम्बवत्** समूहवत् **जृम्भिन्यः** शोभमानाः **मुक्ताफलोल्लसिताः किङ्किणीमुख्यभूषाः** सूक्ष्मघण्टाद्याभरणानि यस्य तस्मिन् । तेषां हंसानां **वक्त्रैः** तुण्डैः **जाताः** । **कविगीताः** कविभिर्वर्णिताः । **मनोज्ञरेखाः** तासां **कल्पानि** समानानि **ध्वजाङ्कुशयवाशनिलक्ष्माणि** पादतलस्थितचिह्नानि तैर्लक्ष्ये दर्शनीये श्रीकृष्णाङ्घ्रिचारुकमले मम चितभृङ्गः स्यादित्युत्तरेणान्वयः ॥ ३ ॥

**उन्मीलिते विमलबोधदिनेशभासा**
**सन्माननीयगुणभाजि कलङ्किदूरे ।**
**सौरभ्यलुब्धपवनेन सदा परीते**
**कारुण्यमान्यमकरन्दमहाप्रवाहे ।।४।।**

**व्या :** उन्मीलितेति । विमलो यो बोधो ज्ञानदिनेशः सूर्यस्तस्य भासा कान्त्या उन्मीलिते विकसिते निर्मलज्ञानविषय इत्यर्थः । **सतां माननीयाः गुणाः** सौन्दर्य-सौकुमार्यसौरभ्यादयो गुणाः तान् भजन्तीति तथोक्तं तत् तस्मिन् । **कलङ्किनः** दोषिणस्तेषां **दूरे** अप्राप्ये । कमलमपि कलङ्की चन्द्रः तस्य दूरं विरोधि । **सौरभ्ये** पादकमलसौरभ्ये **लुब्धः** मुख्यप्राणस्तेन **सदा** सर्वदा **परीते** परिसेविते । कमलपक्षे स्पष्टोऽर्थः । **कारुण्यं** कृपा तदेव **मान्यो मकरन्दस्तस्य महाप्रवाहो** यस्य तस्मिन् ।।४।।

**नित्यानुषक्तनिजभृत्यविलोचनाख्य-**
**मत्तानुरक्तमधुपैः सततं गृहीते ।**
**सत्कर्णिकोज्ज्वलतलत्विषि सन्ततं स्यात्**
**कृष्णांघ्रिचारुकमले मम चित्तभृङ्गः ।। ५ ।।**

**व्या :** नित्येति । **नित्यम् अनुषक्तानि निजभृत्यानां** स्वभक्तानां **विलोचनानि** तदाख्याः **मत्तानुषक्तमधुपास्तैः सततं गृहीते** स्वीकृते **सत्कर्णिकावत्** **उज्ज्वले** शोभमानं **तलं** पादतलं तस्य **त्विट्** कान्तिः यस्मिन् तस्मिन् । श्रीकृष्णाङ्घ्रिचारुकमले मम चित्तभृङ्गः सन्ततं स्यात् ।। ५ ।।

**शङ्खाम्भोजनिधी समीहितधनप्रत्यर्पणेनांकुशं**
**हस्तिन्यान्तरकर्षणेन दितिजप्रध्वंसनेनाशनिम् ।**

**निर्जित्य ध्वजमुत्पताकमदधाद्यः कृष्णपादो मुदा**
**प्रायस्तेऽपि च तस्य लक्षणगणव्याजेन भेजुस्तलम् ॥ ६ ॥**

**व्या :** शङ्खेति । यः श्रीकृष्णपादः शङ्खः शङ्खाख्यनिधिः स च **अम्भोजः** पद्मः तदाख्यनिधिः स च शङ्खाम्भोजनिधिः । 'महापद्मश्च पद्मश्च शङ्खो मकरकच्छपावि' इत्युक्तेः । **समीहितधनप्रत्यर्पणेन** भक्तानामभिलषि-तद्र० यदानेन निर्जित्य ऐहिकामुष्मिकसकलपुरुषार्थदानात् तयोर्जय इति भावः । हस्तिनीनां हस्तिनीजातिस्त्रीणामान्तरस्य चित्तस्य **कर्षणेनाकर्षणेन अङ्कुशं निर्जित्य हस्तिनीनां** करिणीनाम् आन्तराकर्षणमङ्कुशस्य धर्मः । स्मरणमात्रेण तन्मनसामाकर्षणाज्जय इति भावः । **दितिजानां** दैत्यानां **यत्प्रध्वंसनं** संहारः तेन **अशनिं** वज्रं **निर्जित्य** । बल्यादेरप्यधःकरणाज्जयः । उत् उन्नता पताका पताकाकाररेखा यस्य तम् । **उत्पताकं ध्वजं** ध्वजाकाररेखाम् अदधात् दधौ । यथा जयी राजा उत्पताकं ध्वजम् उन्नमयति तद्वदिति भावः । तेऽपि प्रायः बहुशः शङ्खाम्भोजाङ्कुशादयोऽपि **लक्षणगणव्याजेन** महदैश्वर्यसूचकशङ्खाम्भोजा-दिशुभरेखालक्षणसमूहछद्मना तस्य पादस्य **तलं भेजुश्च** । यथा पराजिताः जेतुः प्रायशः पादसमाश्रयणेन जीवन्ति तद्वदिति भावः ॥ ६ ॥

**धर्मा विरुद्धगतयोऽपि हरौ विरोधं**
**सन्त्यज्य सन्ति बहुशस्त्विति[1] बोधयन्तौ ।**
**पद्मस्थचन्द्रकलिकाद्युतिमन्नखाङ्कौ**
**श्रीरुग्मिणीशचरणौ शरणं ममास्ताम् ॥ ७ ॥**

---

१ 'सर्वधर्मोपपत्तेश्च' - इति ब्रह्मसूत्रम् । (२/१/३८)
गुणाः श्रुताः सुविरुद्धाश्च देवे संत्यश्रुता अपि नैवात्र शंका ।
चिंत्या अचिंत्याश्च तथैव दोषाः श्रुताश्च नाज्ञैर्हि तथा प्रतीताः ॥
-इति भाष्योद्धृता श्रुतिश्च
यस्मिन् विरुद्धगतयोऽप्यनिशं पतंति - भागवते ८/९/९६

**व्या : धर्मा** इति । **विरुद्धा गतिः** अवस्थितिर्येषां ते **विरुद्धगतयो** धर्माः युगपत् अणुत्वमहत्वादयो धर्माः । **हरौ** श्रीकृष्णे **विरोधं** सहानवस्थानलक्षणविरोधं **सन्त्यज्य** त्यक्त्वा **बहुशः** सन्तीति इयमर्थं **बोधयन्तौ** प्रकाशयन्तौ । **पद्मस्थायाः चन्द्रकलिकायाः** चन्द्रकलायाः **द्युति**र्येषामस्तीति ते **द्युतिमन्त**स्ते च ते **नखाः** त एव **अङ्कौ** ययोस्तौ । चन्द्रपद्मयोर्विरोधस्य प्रसिद्धेः । पादपद्मे नखचन्द्रावस्थाने विरोधत्याग इति भावः । **श्रीरुग्मिणीशस्य चरणौ मम शरणं** गृहम् । 'शरणं गृहरक्षित्रोः' इत्यमरः । **आस्ताम्** ॥ ७ ॥

**मूर्ध्र्यर्पितस्वसदृशं हरिपादपद्म-**
**माशङ्क्य नाम्बुजकुलं सहते शशाङ्कः ।**
**स्वस्पर्धि तच्च शशिना वशिनाऽनुरक्तं**
**मत्वा मनस्यधित तत्र तदप्यमैत्रीम् ॥ ८ ॥**

**व्या : मूर्ध्नीति** । शशाङ्कश्चन्द्रः **मूर्ध्नि** अग्रभागे **अर्पितः स्वसदृशः** स्वसमानः नखचन्द्रो येन तत् तथोक्तम् । अत एव **स्वस्पर्धि** स्पर्धाविषयम् । **हरिपादपद्ममाशङ्क्य अम्बुजकुलं** कमलकुलं न **सहते** । नखचन्द्राणां स्वसदृशत्वेन स्वविरोधि चन्द्राङ्गीकारिहरिपादकमलमिति जातया भ्रान्त्या सकलान्यम्बुजानि न क्षमत इत्यर्थः । तदपि अम्बुजकुलमपि स्वसदृशत्वात् स्वेन स्पर्धत इति स्वस्पर्धि । **तच्च** हरिपादपद्मञ्च **वशिना** वशवर्तिना सदा विद्यमानेनेत्यर्थः । **शशिना** चन्द्रेण **अनुरक्तं** सम्बद्धं **मत्वा** हरिपादपद्मे नखचन्द्रस्य सम्बद्धत्वात् तदितरेषु पद्मेषु चन्द्रस्यासम्बद्धत्वाद्धरिपादपद्मे चन्द्रमनुरक्तं स्वेषु चारक्तं मत्वेत्यर्थः । मनसि अमैत्रीं तत्र चन्द्रे वैषम्यनिमित्तेन शत्रुत्वम् **अधित** अदधात् । स्वस्पर्धिन्यनुरागकरणादेव पद्मस्य चन्द्रे वैरमिति भावः ॥ ८ ॥

**अङ्गीकृतः कमलयोच्चगतिः सदेति**
**सन्दर्शनाय कमलाकरसङ्गतं प्राक् ।**

**पश्चात् क्रमेण कुचफालकचाग्रलग्नं**
**श्रीकृष्णपादकमलं कुरुताच्छ्रियं नः ॥९॥**

**व्या :** अङ्गीकृत इति । यः **कमलया** लक्ष्म्या **अङ्गीकृतः** स पुरुषः सदा उच्चगतिर्भवति इति सन्दर्शनाय **प्राक्** प्रथमं **कमलायाः करेण सङ्गतं** कमलाया हस्तेन गृहीतमित्यर्थः । **पश्चात् क्रमेण** कमलायाः । **कुचफालकचाग्रेषु** स्तनललाटकबरीभाराग्रेषु । **लग्नं** सम्बद्धं स्नेहवशात् कमलया स्वविलासाय पूर्वं हस्तेन गृहीत्वा पश्चात् स्वकुचमण्डले निक्षिप्य ततः स्वफाले धृत्वा तदनन्तरं स्वशिरस्यारोप्य हरिचरणस्योपचारे क्रियमाणे सति कमलया अङ्गीकृतपुरुषः क्रमेणोच्चोच्चगतिर्भवतीति तत्त्वमपि स्पष्टमभूदिति भावः । तत् **श्रीकृष्णपादकमलं नः** श्रियं सम्पदं **कुरुतात्** । श्रीविलासपात्रत्वात् श्रीदानसामर्थ्यमिति भावः ॥९॥

**भिन्नप्रवालसदृशी परितः स्फुरन्ती**
**रम्यांगुलीदलचयद्युतिरिन्दिरायाः ।**
**पादाम्बुजे सहजराजदलक्तकाङ्क-**
**कान्तिं तनोति नखमण्डलमण्डनार्हाम् ॥ १० ॥**

**व्या :** भिन्नेति । **भिन्नस्य प्रवालस्य** विद्रुमशकलस्येत्यर्थः । **सदृशी परितः** कृष्णपादनखमण्डलमभितः **स्फुरन्ती रम्या** मनोहरा । **इन्दिरायाः** रुग्मिण्याः । **अङ्गुलीदलचयस्य द्युतिः** कान्तिः **पादाम्बुजे । नखमण्डलानां मण्डनार्हाम्** अलङ्कारोचिताम् । **सहजस्य** अकृत्रिमस्य **राजतः अलक्तकाङ्कस्य** लाक्षालक्षणः **कान्तिं** शोभां **तनोति** । श्रीकृष्णपादनखमण्डलं परितः प्रसरन्ती रुग्मिण्याः रक्ताङ्गुलीदलकान्तिः कृष्णपादनखमण्डले सहजालक्तकालङ्कृतिरिव भातीत्यर्थः ॥ १० ॥

**अन्तः समापूरितबह्वनन्तसौन्दर्यशेषैरिव पूर्यमाणैः ।**
**पुष्टोर्ध्वभागे परितः सुवृत्ते जङ्घे तयोः स्तां स्फुटमन्तरङ्गे ॥११॥**

**व्या :** अन्तरिति । **पूर्यमाणैः** आपूर्यमाणैः **अन्तः** अभ्यन्तरे । **समापूरितस्य** **बहुनन्तसौन्दर्यस्यापरिमितलावण्यस्य शेषैरिव** । आपूर्यावशिष्टैः सौन्दर्यैरिवेत्यर्थः। **पुष्टौ ऊर्ध्वभागौ** ययोस्ते । अवशिष्टसकललावण्यानां **ऊर्ध्वभागे** बलात् पूरणादिति भावः । **परितः** समन्तात् **सुवृत्ते** सुवर्तुले **तयोः** रुग्मिणीश्रीकृष्णयोः **जङ्घे** मे **अन्तरङ्गे** अन्तःकरणे **स्फुटं स्तां** तिष्ठताम् ॥ ११ ॥

**पूर्णस्य तज्जानु निजप्रचारैः सानन्दनन्दावसथाङ्गणे प्राक् ।**
**चूर्णीकृतानेकरजोऽस्मदीयमेनो धुनोत्वद्य हृदङ्गणस्थम् ॥ १२ ॥**

**व्या :** पूर्णस्येति । **पूर्णस्य** श्रीकृष्णस्य **यज्जानु प्राक्** पूर्वम् आनन्देन सहितः **सानन्दः** स चासौ **नन्दश्च** तस्यावसथो मन्दिरं तस्य **अङ्गणे निजप्रचारैः** स्वसञ्चरणैः । **चूर्णीकृतानेकरजः** चूर्णीकृतम् अनेकं रजो येन । **तत् जानु अद्य** अधुना । **हृदङ्गणस्थं** हृन्निष्ठम् । **अस्मदीयम् एनः** पातकम् । 'कलुषं वृजिनैनोऽघमंहोदुरितदुष्कृतम्' इत्यमरः । [१]**धुनोतु** ॥ १२ ॥

**सत्कान्त्या हरिनीलकाञ्चनसमौ हस्तीन्द्रहस्तोपमौ**
**विष्वग्वर्तुलतागुणेन मृदुताधर्मेण कुन्दस्रजः ।**
**कल्पौ यद्यपि रुग्मिणीमुरभिदोरूरू कथञ्चित् तुला**
**लावण्येन परस्परं परमिति द्वन्द्वात्मतां बिभ्रतौ ॥ १३ ॥**

**व्या :** सत्कान्त्येति । **रुग्मिणीमुरभिदोः** रुग्मिणीश्रीकृष्णयोः । **ऊरू यद्यपि** **सत्कान्त्या**समीचीनशोभयाकथञ्चित्**हरिनीलकाञ्चनसमौ**इन्द्रनीलसुवर्णसदृशौ। कृष्णस्य श्यामवर्णत्वात् रुग्मिण्याः सुवर्णवर्णत्वादिति भावः । सर्वांशेन सादृश्याभावात् कथञ्चिदित्युक्तम् । **विष्वक्** समन्तात् **वर्तुलतागुणेन** कथञ्चित् **हस्तीन्द्रहस्तोपमौ** । **मृदुताधर्मेण** सौकुमार्येण कथञ्चित् **कुन्दस्रजः कल्पौ**

१ हयास्यनासापुटजातवातविघातधूताघपललजातः ।
मुनीशवागीशसुतः सुरम्यां हरेः कथां शंसति वादिराजः ॥ (१/८) इतिवज्ज्ञेयम् ।

यद्यपि भवतः । तथापि **लावण्येन** सौन्दर्येण परं केवलं तु **परस्परम्** अन्योन्यं तुला उपमा इति कृत्वा **द्वन्द्वात्मतां बिभ्रतौ** । अन्यसादृश्याभावात् दक्षिणस्योरोः वामः सदृशः वामस्य दक्षिण[1] इति सादृश्यार्थं द्वौ द्वौ बभूवतुरित्यर्थः ॥ १३ ॥

**ऊरु समारोप्य मरुद्गणेशमारञ्जयन्तौ दिशतां सुखं मे ।**
**वैरिव्रजं संहरतां मुरारेः स्वारातिरक्षःक्षयमूलभूमी ॥ १४ ॥**

**व्या :** ऊरू इति । **मरुद्गणेशं** [2]मुख्यप्राणम् । **समारोप्य** निधाय । **आरञ्जयन्तौ** कान्तियुक्तं कुर्वन्तौ । **मुरारेः** श्रीकृष्णस्य ऊरू । **मे सुखं दिशताम्** । **स्वारातिरक्षः** स्वशत्रुभूतो राक्षसः हिरण्यकशिपुस्तस्य **क्षयमूलभूमी** कारणस्थाने नाशहेतू इत्यर्थः । ऊर्वोर्निधाय नृसिंहेण हिरण्यकशिपोः विदारितत्वादिति भावः । मे **वैरिव्रजं** शत्रुसमूहं **संहरताम्** ॥ १४ ॥

**अपरिमितसुखौघं स्वाश्रिताया रमायाः**
**शतगुणितविकासं वाससः स्वाश्रितस्य ।**
**अपगतनिजलाभः सन्ततं यो विधत्ते**
**स किल मुरभिदूरुः कारणं वैश्यजातेः ॥ १५ ॥**

**व्या :** अपरमित इति । **स्वाश्रितायाः रमायाः अपरिमितसुखौघं** अनन्तसुखराशिं **विधत्ते** विदधाति । ददातीत्यर्थः । तथा **अपगतनिजलाभः** स्वशोभातिशयाख्यलाभरहित एव सन् स्वरससुन्दरेत्यर्थः । **आश्रितस्य स्वाश्रितस्य** परिधानरूपस्य **वाससः** वस्त्रस्य च **शतगुणितविकासम्** अपरिमितशोभां विधत्ते । सूर्यकोटिप्रकाशभगवदूरूकान्त्यैव वस्त्रकान्तिर्जायत इति भावः । **सः मुरभिदूरुः**

---

१ सुकुमारतलाङ्गुलीमतोः पदयोरस्य निगूढगुल्फयोः ।
उपमानमहो न लभ्यते कविवर्यैरितरेतरं विना ॥ (म.वि. ७/२८) इतिवज्ज्ञेयम् ।

२ अच्युताङ्के स्वासीनम् ... - इति तन्त्रसारसङ्ग्रहे (४/६९)

वैश्यजातेः **कारणं किल**। ऊरू तदस्य यद्वैश्य इति श्रुतेः। किलेति वार्तायाम्। वैश्या हि स्वदत्तद्रव्यादपि द्विगुणद्रव्यलाभाय अन्यस्मै क्रयविक्रयरूपेण वस्त्रादिकं वृद्धिरूपेण दिशन्ति। अयं तु लाभहीनः सन् अन्यस्मै बहु दिशतीति [1]**वैश्यजातेः** कारणं कथं स्यादिति भावः। आक्षेपोऽलङ्कारः॥ १५॥

**सुवर्णवर्णाम्बरभासि भैष्मीमुकुन्दयोः पातु कटिद्वयं नः।**
**सुसान्द्रसन्ध्याघनसङ्गि शृङ्गमिवोल्लसत्काञ्चननीलगिर्योः॥१६॥**

**व्या :** सुवर्णेति। **सुवर्णवत्** कनकवत् **वर्णं** यस्य तच्च तत् **अम्बरं** वस्त्रं पीताम्बरमित्यर्थः। तेन **भासि**। **सुसान्द्रस्य सन्ध्याघनस्य** सन्ध्याकालीनमेघस्य सन्ध्याकालीनार्ककिरणसम्बन्धादतिरक्तस्येत्यर्थः। **सङ्गो**ऽस्यास्तीति तत् तथोक्तम्। **उल्लसत्काञ्चननीलगिर्योः** उल्लसतोः सुवर्णनीलाचलयोः **शृङ्गमिव** स्थितम्। **भैष्मीमुकुन्दयोः** रुग्मिणीश्रीकृष्णयोः **कटिद्वयं नः पातु**॥ १६॥

**पीताम्बरालङ्कृतमग्र्यरत्नस्यूतस्फुरत्किङ्किणिमेखलाद्यैः।**
**जातप्रभं पीनलसन्नितम्बं चेतः सदा चिन्तय चिन्मयस्य॥१७॥**

**व्या :** पीताम्बरेति। हे **चेतः पीताम्बरे**णा**लङ्कृतम्**। **अग्र्यरत्नैः स्यूतानि** छुरितानि **स्फुरत्किङ्किणिमेखलाद्यानि**। स्फुरत्सूक्ष्मघण्टिकाद्याभरणानि तैः **जातप्रभं** जातकान्तिम्। **चिन्मयस्य** ज्ञानात्मकस्य श्रीकृष्णस्य **पीनलसन्नितम्बं**[2] **सदा चिन्तय**॥ १७॥

**आपादपद्मं परिलम्बमाना नीवी रमाया रमणीयकांच्याः।**
**विष्वक्स्फुरद्रत्नगणस्य मध्यलक्ष्म्या विनम्रा इव भाति भासः॥१८॥**

---

१ ऊरू तदस्य यद्वैश्यः - इति पुरुषसूक्ते

२ जाम्बूनदाम्बराधारं नितम्बं चिन्त्यमीशितुः।
स्वर्णमञ्जीरसंवीतमारूढं जगदम्बया॥ - इति द्वादशस्तोत्रे (१/३)

**व्या :** आपादपद्ममिति । आपादपद्मं पादपद्मपर्यन्तम् । **परिलम्बमाना** परितो लम्बमाना । **रमायाः** रुग्मिण्याः **नीवी** । **रमणीयकाञ्च्याः** । रत्नखचितमनोहरमेखलायाः **विष्वक्** समन्तात् । **स्फुरद्रत्नगणस्य** मेखलाखचितरत्नसमूहस्येत्यर्थः । **मध्यलक्ष्म्या** मध्यकान्त्या **विनम्राः** पराजितत्वादधोमुखीभूताः **भास** इव कान्तय **इव भाति** । काञ्च्याः अधोभागे लम्बमाना नीवी सुवर्णवर्णत्वात् काञ्चीप्रभावद्भातीति भावः ॥ १८ ॥

**व्रजभुवि बहुपाशैर्यन्न बद्धं मुरारे-**
**स्तदुदरमधुनाऽऽसीत् सन्ततं भीष्मपुत्र्याः ।**
**पुलकितकरचारुप्रेमदाम्ना निबद्धं**
**प्रभुरपि वशमेति प्रेमभारैरुदारैः ॥ १९ ॥**

**व्या :** व्रजभुवीति । यत् उदरं **व्रजभुवि** नन्दगोकुले । **बहुपाशैः** यशोदया आनीतभूरिपाशैः । न **बद्धं मुरारेस्तदुदरम्** । **अधुना भीष्मपुत्र्याः** अङ्कस्थिताया रुग्मिण्याः सञ्जातः पुलकोऽस्येति **पुलकितः** **करएव चारुप्रेमदाम** मनोहरप्रणयपाशः तेन **सन्ततं निबद्धमासीत्** । अङ्कस्थितरुग्मिणीकरेण आलिङ्गितमासीदित्यर्थः । समर्थस्य बन्धनेन अन्याधीनत्वं कथमित्यतोऽर्थान्तरं न्यस्यति । प्रभुरिति । **प्रभुरपि** समर्थोऽपि **उदारैः** उत्कृष्टैः **प्रेमभारैः** स्नेहविशेषैर्**वशमेति** । समर्थोऽपि स्नेहवशादन्याधीनो भवतीत्यर्थः ॥ १९ ॥

**अङ्कस्थितोदधिसुतोच्चकरांगुलीनां**
**कान्तिस्त्रिधोदरगतेव वलिर्विरेजे ।**
**नाभिं प्रविश्य शनकैरुदिता तदीय-**
**नेत्रान्तकान्तिरिव रोमलता च तन्वी ॥ २० ॥**

**व्या :** **अङ्केति**[१] । वलिः श्रीकृष्णस्य वलिः त्रिधा त्रिःप्रकारेणोदरगता । श्रीकृष्णोदरं प्राप्ता । **अङ्कस्थितोदधिसुतायाः** रुग्मिण्याः उच्चा अङ्गुलीपञ्चकमध्ये दीर्घाः तर्जनीमध्यमानामिकरूपाः **कराङ्गुलयः** तासां **कान्तिरिव विरेजे** । **वलेः** त्रिरूपतया आलिङ्गितरुग्मिणीकराङ्गुलित्रयात् त्रिविधनिःसृतकान्तिरिव शुशुभ इत्यर्थः । श्रीकृष्णोदरवलीनां श्यामावदातत्वात् दृढं मांसपिण्डरूपतया रत्नखचिताङ्गुलीयकसम्बद्धकान्त्या ईषद्रक्तछायाशबलत्वादियमुक्तिः । तन्वी सूक्ष्मा मनोहरा कृष्णस्य रोमलता रोमरेखा च **नाभिं** श्रीकृष्णनाभिं **प्रविश्य शनकैः उदिता** ऊर्ध्वं निर्गता । तदीयस्य रुग्मिणीसम्बन्धिनः नेत्रान्तस्य कटाक्षस्य कान्तिरिव विरेजे । कटाक्षस्यास्थिरत्वादिति भावः ॥ २० ॥

**सुवर्णवर्णोदरमध्यलग्ना मनोज्ञरोमावलिरिन्दिरायाः ।**
**जिगाय वक्षोजकरीन्द्रकुम्भयुगावतीर्णां मदवारिधाराम् ॥२१॥**

**व्या :** सुवर्णेति । सुवर्णवर्णवत् वर्णो यस्य तच्च तत् उदरं तस्य **मध्ये लग्ना** सम्बद्धा। **इन्दिरायाः** रुग्मिण्याः **मनोज्ञरोमावलिः** । **वक्षोजा**वेव कुचावेव **करीन्द्रकुम्भौ** तयोर्युगात् **युग्मात् अवतीर्णां** निसृतां **मदधारां जिगाय** । मदोदकधारावत् रराजेत्यर्थः ॥ २१ ॥

**सद्रोमावलिनीलरत्नतिलकां तन्नाभिवापीतटा-**
**दुद्यान्तीं विलसत्कुचाचलतटीद्वन्द्वान्तरप्राप्तये ।**
**मध्ये व्योमवशादलब्धसरणिं धर्तुं विधात्रा कृतां**
**स्निग्धाष्टापदयष्टिमब्धिदुहितुर्मृद्वी वलिः स्पर्धते ॥२२॥**

---

१ कौशेयपीतवसनामरविन्दनेत्रां पद्मद्वयाभयवरोद्यतपद्महस्ताम् ।
उद्यच्छतार्कसदृशीं परमाङ्कसंस्थां ध्यायेद्विधीशनुतपादयुगां जनित्रीम् ॥
- तन्त्रसारसङ्ग्रहे (४/५८)

**व्या : सद्रोमेति ।** अब्धिदुहितुः रुग्मिण्याः **मृद्वी वलिः** विलसत्कुचाचलतटी द्वन्द्वान्तरप्राप्तये विलसन्तौ यौ कुचाचलौ तयोस्तटे **तयोर्द्वन्द्वं** तस्य **यदन्तरं** मध्यं तस्य **प्राप्तये । तस्याः** रुग्मिण्याः **नाभिः वापी** कूपः तस्याः **तटात् उद्यान्तीं** ऊर्ध्वं यान्तीं मध्ये व्योमवशात् । कृशोदरत्वादिति भावः । अलब्धमार्गाम् । **सद्रोमावलिनीलरत्नतिलकाम्** । सती या रोम्णां आवलिः सैव नीलरत्नलतिका तामित्यर्थः । धर्तुं धारणाय विधात्रा ब्रह्मणा **कृतां स्निग्धाष्टापदयष्टिं** मनोहरसुवर्णयष्टिं **स्पर्धते** । रोमावल्याख्यनीलरत्नतिलकायाः **कुचाचल-**पर्यन्तमभिवृद्धत्वात् **मध्ये व्योमवशात्** स्वयमेव गमनायोगेन तां धर्तुं क्रमेण उपर्युपरि **विधात्रा** रचितं सुवर्णयष्टित्रयमिव देव्याः वलित्रयं विराजत इत्यर्थः। रूपकपञ्चकेन नाभिवलिमध्ये व्योमरोमलताकुचाख्यपञ्चावयवानां एकदैव वर्णनादतिचमत्कारोऽयम् । अत एव रूपकोज्जीवितोत्प्रेक्षालङ्कारः ॥२२॥

**श्रीभूकटाक्षोत्पलमब्जभूद्विरेफालयाम्भोरुहमच्युतस्य ।**
**नाभिह्रदं वृत्तमगाधमच्छशोभाम्बुपूर्णं विश चित्तमीन ॥२३॥**

**व्या : श्रीभूकटाक्षेति । श्रीभुवोः** लक्ष्मीधरादेव्योः **कटाक्षा एवोत्पलानि** यस्य तत् । **अब्जभूः** ब्रह्मैव **द्विरेफः** भ्रमरस्तस्यालयो निवासभूतं **अम्भोरुहं** कमलं यस्य तत् । **वृत्तं** वर्तुलम् । **अगाधं** गम्भीरम् । **अच्छशोभैवाम्बु** जलं तेन पूर्णम्। **अच्युतस्य** श्रीकृष्णस्य [1]**नाभिह्रदम्** । हे [2]**चित्तमीन** चित्ताख्यमत्स्य । **विश** प्रविश ॥ २३ ॥

---

१ एको नारायण आसीन्न ब्रह्मा न च शङ्करः ।
अजस्य नाभावध्येकमर्पितं मात्रया परः ॥ - इत्यनुव्याख्याने (२/२/२८०)

२ चञ्चलोऽयं मनोमीनः समानेयो हरिस्थले ।
विषयोदकसञ्चारी सुयत्नबडिशाहृतः ॥ - इति श्रीमदाचार्यकृतश्लोकः

**उद्दीप्तहारान्तररत्नकान्त्या हृद्यं मनोज्ञोदरबन्धबद्धम् ।**
**तद्विश्वपित्रोस्त्रिवलि त्रिकालं शर्माणि निर्मातु कृशोदरं नः ॥२४॥**

**व्या :** उद्दीप्तेति । उद्दीप्तहाराणाम् अन्तररत्नकान्त्या मध्यस्थरत्नकान्त्या **हृद्यं** मनोहरम् । **मनोज्ञोदरबन्धनेन** मनोहरोदरबन्धाख्याभरणविशेषेण बद्धं तिस्रो वलयो यस्य **तत्** । **विश्वपित्रोः** रुग्मिणीश्रीकृष्णयोः तत् [1]**कृशोदरं नः** अस्माकम् । **त्रिकालं** कालत्रयाणां समाहारः त्रिकालम् । 'पात्रादिभ्यो न' इति स्त्रीत्वाभावः । कालाध्वनोरत्यन्तसंयोग इति[2] द्वितीया । **शर्माणि** सुखानि **निर्मातु** जनयतु ॥ २४ ॥

**गर्भस्थसर्वभुवनावपि ताविदानीं**
**प्रद्युम्नमुख्यजनकाविति सूचनाय ।**
**विश्वैकमन्दिरमपि स्म दधत् तदीयं**
**मध्यं मुदे भवतु मन्मथगात्रमात्रम् ॥ २५ ॥**

**व्या : गर्भस्थेति** । तौ रुग्मिणीश्रीकृष्णौ । **गर्भस्थसर्वभुवनावपि** उदरस्थितसकललोकावपि । **इदानीं प्रद्युम्नमुख्यजनकौ** प्रद्युम्नस्य मुख्यं प्रथमं जनकौ । प्रथमं प्रद्युम्नजनकाविति भावः । **इति सूचनाय** इममर्थं ज्ञापयितुं **विश्वैकमन्दिरमपि** विश्वम्भरमपि मन्मथस्य अनङ्गस्य गात्रमात्रं दधत् । **मन्मथस्यानङ्गत्वात्** तद्गात्रमात्रम् अङ्गशून्यतां **दधदित्यर्थः** । मध्यस्यातिकृशत्वादिति भावः । **तदीयं** रुग्मिणीश्रीकृष्णसम्बन्धि**मध्यं मुदे** सन्तोषाय भवतु । मातापितृभ्यां गर्भेण धृतस्यैव पुत्रत्वौचित्यात् मन्मथस्य **गात्रमात्र**धारणेन प्रद्युम्नमुख्यजनकत्वसूचनमुपपद्यत इति द्रष्टव्यम् ॥ २५ ॥

---

१ उदरं चिन्त्यमीशस्य तनुत्वेऽप्यखिलम्भरम् ।
वलित्रयाङ्कितं नित्यमुपगूढं श्रियैकया ॥　　- इति द्वादशस्तोत्र(१/५)

२ पा.सू. (२/३/५)

**सत्तर्कमात्रकलितं सकलापवर्गं**
**मध्यं मुदेऽस्तु मधुकैटभमर्दनस्य ।**
**तद्रम्यनाभिविवराभ्युदिताम्बरस्य**
**पद्मोपभोग्यपरिणाम इवोपरिष्टात् ॥२६॥**

**व्या : सत्तर्केति** । **सत्तर्कमात्रकलितम्** अनुमानमात्रेण ज्ञातं परमसूक्ष्मत्वे-नाचाक्षुषत्वादनुमानमात्रज्ञेयमित्यर्थः । **सकलानां** समस्तानां सज्जनानाम् **अपवर्गो** मोक्षो यस्मात् तत् तथोक्तम् । तस्य श्रीकृष्णस्य **रम्यनाभिविवरात्** नाभिछिद्रात् **अभ्युदिताम्बरस्य** सञ्जाताकाशस्य । ''नाभ्या आसीदन्तरिक्षम्'' इति श्रुतेः । **उपरिष्टात्** ऊर्ध्वभागे **पद्मोपभोग्यपरिणाम** इव । रुग्मिण्युपभोग्याभि-वृद्धिरूपपरिपाक इव स्थितम् । मध्यप्रदेशस्य नाभिप्रदेशादुपरिस्थितत्वादु-परिष्टादित्युक्तम् । अङ्कस्थितरुग्मिणीकरेण मध्यस्य आलिङ्गितत्वादिति भावः । नाभिस्थसूक्ष्माकाशस्य मध्ये परितो व्याप्तत्वात् सूक्ष्मतया सुतरामदृश्यत्वाच्च पद्मोपभोग्यपरिणाम इत्युक्तम् । **मधुकैटभमर्दनस्य** कृष्णस्य **मध्यं मुदे अस्तु** ॥ २६ ॥

**लक्ष्मीमुकुन्दतनुवृत्तमनोज्ञमध्य-**
**मुद्वीक्ष्य शिक्षितधियः कवयोऽपि यस्मात् ।**
**किञ्चास्ति नेति खलु सन्दिहतेऽधुनापि**
**सन्देहसंज्ञितमभूदत एव मध्यम् ॥ २७ ॥**

**व्या : लक्ष्मीमुकुन्देति** । यस्मात् कारणात् **शिक्षितधियः कवयोऽपि** सूरयोऽपि । लक्ष्मीमुकुन्दयोः रुग्मिणीश्रीकृष्णयोः । **तनुं** सूक्ष्मं **वृत्तं** वर्तुलं **मनोज्ञं मध्यम् उद्वीक्ष्य** सूक्ष्मत्वान्मध्यमस्ति किमु न वेति **अधुना**ऽपि **सन्दिहते** मनःसन्देहं कुर्वते **खलु** । **अत एव मध्यं** सन्देहसञ्ज्ञितं सन्देह इति संज्ञमभूत् । 'सन्देहो मध्यदेहकः' इति हलः । सन्देहविषयत्वादेव मध्यस्य **सन्देहसंज्ञेति** निमित्तान्तरोत्प्रेक्षा ॥२७॥

**मध्यं मनोज्ञं मृदुलं सुवृत्तं बुद्धौ सदा तिष्ठतु यत्कृशत्वम् ।**
**उद्वीक्ष्य तत्पूर्तिविधित्सयैव पद्मा कराब्जेन सदाऽऽलिलिङ्गे ॥२८॥**

**व्या :** मध्यमिति । सुवृत्तं मृदुलं मनोज्ञं मध्यं श्रीकृष्णोदरं सदा सर्वदा मम बुद्धौ मम चित्ते तिष्ठतु । पद्मा रुग्मिणी यस्य मध्यस्य कृशत्वं कार्श्यम् उद्वीक्ष्य तस्य मध्यस्य पूर्तिविधित्सयैव पूर्णं कर्तुमिच्छयैव कराब्जेन सदा आलिलिङ्गे आलिङ्गितवती ॥ २८ ॥

**वक्षः सुरक्षां कुरुतान्मुरारेः सद्वर्ण्यलावण्यगुणैकधाम ।**
**तत्याज यन्नैव चिरं सपत्नीवक्षोजलब्धाङ्कमपि स्म लक्ष्मीः ॥२९॥**

**व्या :** वक्ष इति । सद्भिर्वर्ण्यः स्तुत्यः लावण्यगुणः तस्य मुख्यधाम श्रीकृष्णस्य वक्षः उरःस्थलं सुरक्षां सम्यग्रक्षां कुरुतात् । लक्ष्मी यद्वक्षः चिरं सपत्नीनां वक्षोजात् कुचात् लब्धः अङ्कः कुङ्कुमाङ्को यस्य तत् तथोक्तमपि नैव तत्याज । परित्यागकारणे विद्यमानेऽपि सौन्दर्यलोभात् श्रीकृष्णस्य वक्षस्येव तिष्ठतीत्यर्थः ॥२९॥

**आलिङ्गितप्रियतमाकुचकुङ्कुमाङ्क-**
**लक्ष्यं जिगाय वसुदेवसुतस्य वक्षः ।**
**मत्तस्फुरत्परिणतद्विपधातुरक्त-**
**कुम्भाङ्कजृम्भिहरिनीलविशालवप्रम् ॥ ३० ॥**

**व्या :** आलिङ्गितेति । आलिङ्गितायाः प्रियतमायाः रुग्मिण्याः कुचकुङ्कुमाङ्केन लक्ष्यं दर्शनीयं वसुदेवसुतस्य श्रीकृष्णस्य वक्षः । मत्तः मदोपेतः अत एव देदीप्यमानः स चासौ परिणतः तिर्यग्दन्तप्रहारवान् द्विपः गजः । 'तिर्यग्दन्तप्रहारस्तु गजः परिणतो मतः' इति हलायुधः । तस्य धातुरक्तकुम्भाङ्केन गैरिकादिधा-तुरञ्जितमस्तकचिह्नेन जृम्भि मनोहरं हरिनीलविशालवप्रं इन्द्रनीलपर्वतस्य

विस्तीर्णतटं जिगाय । गजकुम्भसङ्गिधातुरसेन सिक्तेन्द्रनीलपर्वतसानुवद्विरेज इत्यर्थः ॥३०॥

**वक्षो विशालं हरिनीलनीलं लक्ष्मीगृहं चन्दनचर्चितं तत् ।**
**सत्कौस्तुभोद्भासकमस्तु चित्ते विस्तीर्णभूषावलि विट्ठलस्य ॥३१॥**

**व्या :** वक्ष इति । **विशालं हरिनीलनीलं** इन्द्रनीलवन्नीलम् । **लक्ष्मीगृहं** लक्ष्म्याः मन्दिरम् । **चन्दनेन चर्चितम्** । सत्कौस्तुभस्योद्भासकं प्रकाशकम् । स्वेनैव कौस्तुभस्य प्रकाशः[१] न तु कौस्तुभेन स्वस्य प्रकाश इति भावः । **विस्तीर्णानां भूषणानाम्** आवलिर्यस्य तत्तथोक्तम् । विट्ठलस्य श्रीकृष्णस्य तद्वक्षः मम **चित्ते** मम मनसि **अस्तु** तिष्ठतु ॥ ३१ ॥

**सौवर्णरम्यकलशोपमितं मनोज्ञं**
**वक्षोजकुड्मलयुगं जयतीन्दिरायाः ।**
**यच्चर्चितोऽपि नवकुंकुमराशिरासी-**
**द्वक्षोऽनुलेपनमणिः पुरुषोत्तमस्य ॥ ३२ ॥**

**व्या : सौवर्णेति** । **सौवर्णः** सुवर्णविकारः स चासौ **रम्यकलशः** मनोज्ञकुम्भः **तेनोपमितं मनोज्ञम्** इन्दिरायाः रुग्मिण्याः **वक्षोजकुड्मलद्वयं** वक्षोजावेव स्तनावेव कुड्मले पद्मकोरके तयोर्युग्मं **जयति** उत्कृष्टं वर्तते । यस्मिन् **वक्षोजकुड्मलयुगे चर्चितो**ऽप्यनुलिप्तोऽपि **नवकुङ्कुमराशिः पुरुषोत्तमस्य** श्रीकृष्णस्य **वक्षोऽनुलेपनमणिः** उरस्थललेपनश्रेष्ठः आसीत् । यत्प्रसादो ब्रह्मादिभिर्धृतः तादृशेनापि श्रीकृष्णेन रुग्मिणीवक्षोजप्रसादधारणात् वक्षोजसौन्दर्यस्यातिशयः कथं कथनीय इति भावः ॥ ३२ ॥

---

१ कौस्तुभोद्भासिभासकम् । - इति द्वादशस्तोत्रे (१/७)

**आच्छादितोरःस्थलमूलदेशं जातस्य यस्याखिलधर्मगोप्ता ।**
**शौरिः करं यच्छति तं रमायाश्चारुस्तनं वर्णयितुं क ईशः ॥३३॥**

**व्या :** आच्छादितेति । आच्छादितः उरःस्थलमूलदेशः उरःस्थलमेव मूलदेशः स्वकारणीभूतमूलप्रदेशः यथा भवति तथा आच्छादितोरःस्थलमूलदेशम् । स्वजननकर्मणा आच्छादितसकलवक्षस्थलप्रदेशो यथा भवति तथेत्यर्थः । **जातस्य यस्य** स्तनस्य । उरोजेन **स्तनेन** समस्तोरसः आच्छादनात् मातृद्रोहिण इति ध्वनिः । 'अखिलधर्मगोप्ता **शौरिः** श्रीकृष्णः **करं** हस्तं बलिमिति ध्वनिः । **यच्छति** प्रयच्छति । द्रोहिणोऽपि **धर्मगोप्तुः शौरेः** करदानात् कारणात् रमायाः रुग्मिण्याः तं चारुस्तनं **वर्णयितुं कः** पुमान् **ईशः** समर्थः न कोऽपीत्यर्थः ॥

**उद्यन्मनोज्ञमुखनिर्मलपूर्णचन्द्र-**
**मुद्वीक्ष्य मन्दहसितामृतशोभिबिम्बम् ।**
**बिभ्रत् सदा मुकुलिताम्बुजकोशकान्तिं**
**पुष्णातु विश्वजननीकुचमण्डलं नः ॥ ३४ ॥**

**व्या :** उद्यदिति । **मन्दहसित**मेवामृतं तेन **शोभि बिम्बं** मण्डलं यस्य स तथोक्तः । **तम्** । **उद्यन्मनोज्ञमुख**मेव **निर्मलपूर्णचन्द्रः** तम् **उद्वीक्ष्य सदा मुकुलिताम्बुजकोशकान्तिं बिभ्रत्** । रुग्मिण्याः नित्यतारुण्यात् कदाचिदपि कुचशैथिल्यं नास्तीति भावः । **विश्वजननीकुचमण्डलं** लोकमातृस्तनमण्डलम् । **नः पुष्णातु** ॥ ३४ ॥

**सद्वंशजातः सुगुणः सुवृत्तरत्नोऽपि हारः कमलाकुचान्ते ।**
**नैवावकाशं लभते कुलेन किंवा गुणौघैः कठिनोपकण्ठे ॥३५॥**

**व्या :** सद्वंशजात इति । **सद्वंशजातो**ऽपि समीचीनवेणुजनितोऽपि । वेणोर्मुक्ताफलजन्मभूमित्वादिति भावः । सत्कुलप्रसूतोऽपीति ध्वनिः । शोभनः

**गुणः** सूत्रं यस्य स तथोक्तोऽपि मुक्ताहारस्य सूत्रसम्बन्धत्वादिति भावः। सौशिल्यादिगुणवानिति ध्वनिः। **सुवृत्तं** वर्तुलं **रत्नं** मध्यनायकीभूतरत्नं यस्य **सोऽपि**। सदाचारसम्पन्नोऽपीति ध्वनिः। हारः मुक्ताहारः **कमलाकुचान्ते** रुग्मिण्याः स्तनमध्ये **अवकाशं** स्थलं **नैव लभते** न प्राप्नोति। कुचयोर्निबिडत्वादिति भावः। तथाहि। **कठिनोपकण्ठे** कठिणचित्तस्य पुरुषस्योपकण्ठे **कुलेन किं** प्रयोजनम्। **गुणौघैः** किम्। निष्ठुरपुरुषसमीपे आभिजात्यं सौशील्यादयो गुणाश्च न शोभन्त इत्यर्थः। कुचमण्डलस्यापि कठिणत्वादर्थान्तरन्यासस्यावकाशः॥३५॥

**शार्ङ्गस्य ग्रहणे मनोरमगुणस्याकर्षणे सायक-**
**स्यादाने युधि माधवस्य फलिताः सन्धानकर्मण्यपि।**
**चत्वारः कबरीं प्रगृह्य कमलामालिङ्ग्य गण्डस्थलीं**
**संगृह्याधरजामृतं च पिबतो हस्ता रहःकेलिषु॥ ३६॥**

**व्या :** शार्ङ्गस्येति। युधि युद्धे **शार्ङ्गस्य** धनुषः **ग्रहणे** एको हस्तः **मनोरमगुणस्य** मनोहरमौर्व्याः **आकर्षणे** एकः **सायकस्यादाने** एकः **साधनकर्मण्यपि** शरसन्धानक्रियायामपि एकः कर इति चत्वारो **माधवस्य** हस्ताः **फलिता** उपयुक्ताः। त्वरायुक्तस्य एकदैव क्रियाचतुष्टयकरणे हस्तचतुष्टयस्यापेक्षितत्वादिति भावः। **रहःकेलिषु** सुरतक्रीडासु। **कबरीं** रुग्मिण्याः केशपाशम् एकेन हस्तेन **प्रगृह्य कमलां** रुग्मिणीम् **आलिङ्ग्य** दोर्भ्यामाश्लिष्य **गण्डस्थलीं संगृह्य** एकेन हस्तेन मध्याङ्गुष्टाङ्गुलिभ्याम् अधरविकासनाय संगृह्य **अधरजामृतञ्च पिबतः** श्रीकृष्णस्य चत्वारो **हस्ताः** फलिताः। कबरीग्रहणे एकः। आलिङ्गने द्वौ। गण्डस्थलग्रहणे एक इति चत्वारो हस्ताः उपयुक्ता इत्यर्थः॥३६॥

**हस्ताः स्फुरन्मरकतद्युतयोऽतिदीर्घाः**
**कृष्णस्य रम्यनखमौक्तिकशोभमानाः।**

**यच्छन्तु नः फलितपुष्पितपारिजात-**
**शाखासमानविभवा विभवोऽखिलार्थान् ॥ ३७ ॥**

**व्या :** हस्ता इति । **स्फुरन्मरकतरत्नानां द्युतिरिव द्युतिर्येषाम्** ते तथोक्ताः । रम्यनखमौक्तिकैः **शोभमानाः** अत एव **फलिताः पुष्पिताः** याः **पारिजातशाखाः** तासां **समानविभवाः** । ''स्फुरन्मरकतस्थूलशाखाशतविराजित''[१] इति वचनात् । मरकतरत्नवत् श्यामलाः हस्ताः स्थूलशाखास्थानीयाः । ''माणिक्यपुष्पो विविध मुक्ताफलफलान्वितः''[२] इति वचनात् । ईषद्रक्तनखोपान्तप्रदेशो माणिक्यसदृशत्वात् पुष्पस्थानीयः **नखाधः**प्रदेशो **मौक्तिक**सदृशत्वात् पुष्पतराङ्कुरितफलस्थानीय इति विवेकः । **विभवः** समर्थाः अतिदीर्घाः श्रीकृष्णस्य हस्ताः **नः अखिलार्थान्** सकलपुरुषार्थान् **यच्छन्तु** प्रयच्छन्तु ॥ ३७ ॥

**चक्रं हरेर्मर्दितदैत्यचक्रं शङ्खः स्वनैर्धिक्कृतदैत्यशङ्खः ।**
**पद्मं च विध्वस्तपरास्यपद्मं गदा च सा पापगदापहन्त्री[३] ॥३८॥**

**व्या :** चक्रमिति । हरेः **चक्रं** सुदर्शनं **मर्दितं दैत्यचक्रं** दैत्यसेना येन तत् तथोक्तम् । अहमेव चक्रं । मन्निकटे त्वमपि चक्रं वेति दैत्यचक्रं ममर्देत्यर्थः । एवमुत्तरत्राप्यर्थो द्रष्टव्यः । **शङ्खः** पाञ्चजन्यः । **स्वनैः** स्वनिर्घोषैः **धिक्कृतः** निराकृतः शत्रूणां **शङ्खः** खर्वमहाखर्वादुपरितनसङ्ख्या येन स तथोक्तः । धिक्कृतबहुसङ्ख्याकशत्रूसमूह इत्यर्थः । 'शङ्खो निधौ ललाटास्थिसङ्ख्यावलयकम्बुषु' इति रत्नमाला । शङ्खस्त्वहम् । मन्निकटे त्वं शङ्खो वेति बुद्ध्या शत्रून्यच्चकार । पद्मञ्च ।

---

१ पद्मपुराणान्तर्गतवासुदेवसहस्रनामस्तोत्रे ।

२ पद्मपुराणान्तर्गतवासुदेवसहस्रनामस्तोत्रे ।

३ पूर्वं हरेश्चक्रमभूद्धि दुर्गा तमःस्थिता श्रीरिति यां वदन्ति ।
सत्त्वात्मिका शङ्खमथो रजःस्था भूर्नामिका पद्ममभूद्धरेर्हि ॥
- इति म.भा.ता.नि.(३/७३)

विध्वस्तानि निराकृतानि परास्यपद्मानि परेषां शत्रूणां आस्यपद्मानि येन तत्तथोक्तम् । पद्ममहमेव । मन्निकटे यूयमपि पद्मानि वेति बुद्ध्या आस्यपद्मानि विध्वस्तानीत्यर्थः । **सा हरेर्गदा च । पापमेव गदो** व्याधिः । 'रोगव्याधिगदामया' इत्यमरः । **तस्यापहन्त्री** पापसंहर्त्रीत्यर्थः ॥ ३८ ॥

**द्विषामसह्योऽपि निजप्रहर्षकरोऽस्य खड्गः किल नन्दकाख्यः ।**
**वियुक्तनारीपरितापकारी किमिन्दुरानन्दकरो न लोके ॥ ३९ ॥**

**व्या : द्विषामिति । निजानां** भक्तानां **प्रहर्षकरः** सन्तोषकारीत्यर्थः । **अस्य** श्रीकृष्णस्य **खड्गः द्विषां** शत्रूणामसह्योऽपि नन्दयतीति **नन्दकाख्यः । नन्दक** इति नाम कथं घटत इत्यतो अर्थान्तरं न्यस्यति । **वियुक्तनारीपरितापकारी** विरहिणीसन्तापकारी । **इन्दुश्चन्द्रः लोके आनन्दकरो न** भवति **किं** भवत्येवेत्यर्थः ॥ ३९ ॥

**शरैरपारै रिपुवर्गदैन्यकरोऽस्य चापस्त्रिनतो मुरारेः ।**
**तथाहि सद्वंशभवा गुणाढ्या नताः समर्था अपि सर्वसन्धौ ॥४०॥**

**व्या : शरैरिति । अपारैः** अपरिमितैः **शरैः रिपुवर्गदैन्यकरः अस्य** मुरारेश्चापः त्रिनतः कोटिद्वये मध्यप्रदेशे त्रिषु स्थलेषु **नतो** नम्रः । समर्थस्य नम्रीभावः कथमित्यतोऽर्थान्तरं न्यस्यति । **तथाहि । सद्वंशभवाः** सत्कुलप्रसूताः समीचीनवेणुजातत्वेन सद्वंशत्वं **चापस्यापि** । श्रृङ्गाच्छरो जायत इति वचनेन उपादानोपादेययोरैक्यात् । शृङ्गस्यापि वंशत्वं युक्तम् । सद्वंशा भवन्त्यस्मादिति वा सद्वंशभवाः समीचीनवंशप्रवर्तकाः स्वयमपि समीचीना एवेति भावः । **गुणाढ्याः** सौशील्यादिगुणसंपन्नाः पुरुषाः । गुणेन मौर्व्या आढ्यत्वं चापस्यापि । **समर्था अपि सर्वसन्धौ** सर्वसमये नम्राः **नताः** ॥ ४० ॥

**हस्ता हरेः कटककङ्कणमुद्रिकाद्यै-**
**र्दीप्ताः सुदर्शनगदाम्बुजशङ्खशोभाः[1] ।**
**वृत्तास्त्रिरेखमणिबन्धरुचोऽतिदीर्घा**
**रक्ताब्जकोमलतला मम मानसे स्युः ॥ ४१ ॥**

**व्या :** हस्ता इति । **कटकैः** वलयैः **कङ्कणैः** करभूषणैः **मुद्रिकाद्यैः** अङ्गुलीयकाद्यैराभरणैः **दीप्ताः** शोभमानाः । **सुदर्शनगदाम्बुजशङ्खानां शोभा** येषां ते तथोक्ताः । **वृत्ता** वर्तुलास्तिस्रो **रेखा** यस्य स त्रिरेखः स चासौ **मणिबन्धश्च** करमूलप्रदेशस्तस्य **रुचः** कान्तयो येषां ते तथोक्ताः । **रक्ताब्जवत् कोमलं तलं** येषां ते **अतिदीर्घाः हरेः** श्रीकृष्णस्य हस्ताः **मम मानसे स्युः** ॥ ४१ ॥

**भैष्म्याः क्वणत्कनककङ्कणरञ्जितो मे**
**हस्तः समस्तफलदस्तनुतादभीष्टम् ।**
**येनानिशं रहसि बन्धमपेक्षमाणः**
**श्रीशोऽखिलं हरति पूर्णमनोरथोऽपि ॥ ४२ ॥**

**व्या :** भैष्म्या इति । **क्वणत्कनककङ्कणरञ्जितः समस्तफलदः** भैष्म्या **हस्तः मे** मह्यम् **अभीष्टं तनुतात् । पूर्णमनोरथोऽपि** अवाप्तसकलकामोऽपि **श्रियो ईशः** श्रीशः श्रीकृष्णः **अनिशं रहसि येन** हस्तेन **बन्धम्** आलिङ्गनम् **अपेक्षमाणः** सन् **अखिलं** जगत् **हरति** संहरति । अखिले जगति सति रहस्यालिङ्गनासंभवादिति भावः ॥ ४२ ॥

---

१ शङ्खचक्रगदापद्मधराश्चिंत्या हरेर्भुजाः ।
पीनवृत्ता जगद्रक्षाकेवलोद्योगिनोऽनिशम् ॥ - इति द्वादशस्तोत्रे ॥
दितिजान्तप्रदचक्रदरगदायुग्वरबाहो ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥ - इति द्वादशस्तोत्रे ॥

**वृत्ते त्रिरेखे रत्नौघदीप्ते श्रीश्रीशकन्धरे ।**
**विष्वक्स्रवद्रत्नचित्रौ जिग्यतुः शङ्खशेवधी ॥ ४३ ॥**

**व्या :** वृत्तेति । वृत्ते वर्तुले तिस्रो रेखाः ययोस्ते त्रिरेखे रत्नौघदीप्ते श्रीश्रीशकन्धरे श्रियो रुग्मिण्याः श्रीशस्य श्रीकृष्णस्य कन्धरे कण्ठे विष्वक् स्रवद्रत्नैः चित्रौ विचित्रौ शङ्खशेवधी शङ्खनिधी । 'निधिर्ना शेवधिर्भेदाः पद्मशङ्खादयो निधेः' इत्यमरः । जिग्यतुः जितवत्यौ । शङ्खनिधिवत् शुशुभाते इत्यर्थः ॥ ४३ ॥

**रत्नौघरम्येण परिश्रितेन चिरेण दीप्तं निजभूषणेन ।**
**वृत्तं त्रिरेखं वरहारजुष्टं नित्यं स्मर श्रीरमणस्य कण्ठम्[१] ॥४४॥**

**व्या :** रत्नौघेति । रत्नौघरम्येन परिश्रितेन आश्रितेन कण्ठनद्धेनेत्यर्थः । निजभूषणेन कण्ठाभरणेन चिरेण दीप्तं वृत्तं त्रिरेखं वरहारजुष्टं श्रीरमणस्य कण्ठं स्मर ॥ ४४ ॥

**सन्नीलोत्पलचारुचम्पकलसज्जातिस्फुरन्मल्लिका-**
**रक्ताशोकमृदुप्रसूनरचिता रम्याब्जराजन्मुखी ।**
**मुक्ता नीलमणिप्रवालविलसन्माणिक्यहेमोज्ज्वला**
**भर्त्रंसार्पितरुग्मिणीकरतलेवाभाति माला विभोः ॥४५॥**

**व्या :** सन्नीलेति । सन्ति यानि नीलोत्पलामि तानि च चारूणि यानि चम्पकानि तानि च सत्यो याः जातयः जातिकुसुमानि ताश्च स्फुरन्त्यो याः मल्लिकाः ताश्च । रक्तानि यानि अशोकानि अशोककुसुमानि तानि च मृदूनि यानि प्रसूनानि एभ्यो अतिरिक्तानि मन्दारादीनि तानि च तैः रचिता ग्रथिता रम्याब्जेन मनोहरकमलेन राजन्मुखम् अग्रभागो यस्याः सा अग्रभागनिबद्धक-

---

१ सन्ततं चिन्तयेत् कण्ठं भास्वत्कौस्तुभभासकम् ।
वैकुण्ठस्याखिला वेदा उद्गीर्यन्तेऽनिशं यतः ॥ - द्वादशस्तोत्रे (१/७)

मलद्धयेत्यर्थः । सा **विभोः** श्रीकृष्णस्य **माला** वनमाला **मुक्तानीलमणिप्रवालविलसन्माणिक्यहेमोज्ज्वला** । अत्र क्रमो नापेक्षितः । नीलोत्पलादीनां यथायोग्यं नीलमाणिक्यादौ सादृश्यं द्रष्टव्यम् । **भर्तुः** श्रीकृष्णस्य **यौ अंसौ तयोरर्पिता रुग्मिणीकरतलेवाभाति** ॥ ४५ ॥

**बन्धाज्झिताया अपि सिन्धुपुत्र्या माङ्गल्यसूत्रं किल नित्यबद्धम् ।**
**मुग्धाबलामोहनकण्ठयोगे मोक्षोऽप्यनाकाङ्क्षित एव नूनम् ॥४६॥**

**व्या :** बन्धोज्झिताया इति । **बन्धः** संसारबन्धः उज्झितः यया तस्याः नित्यमुक्ताया अपीत्यर्थः । **सिन्धुपुत्र्याः** रुग्मिण्याः **माङ्गल्यसूत्रं** कण्ठसूत्रं निबद्धं **किल** । नित्यसुवासिनीत्वाद्रुग्मिण्याः कण्ठे सदा **बद्धमेव** तिष्ठतीत्यर्थः। पत्युः श्रीकृष्णस्याविनाशित्वेन कण्ठसूत्रवियोगः कदाचिदपि नास्तीति भावः। बन्धरहितायाः समागमे बन्धः कथमित्यतोऽर्थान्तरं न्यस्यति । **मुग्धायाः** मनोहरायाः **अबलायाः** नार्याः **मोहनकण्ठयोगे** सुन्दरकण्ठालिङ्गने सति **मोक्षोऽपि** बन्धाभावोऽपि **अनाकाङ्क्षित एव नूनम्** ॥ ४६ ॥

**सन्नीलरत्नरुचिरं सततं श्रियै स्या-**
**न्माङ्गल्यसूत्रमिह मङ्गलदेवतायाः ।**
**यत्कण्ठदेशधृतमब्जदलायताक्ष्या**
**न प्राग्व्ययुङ्क्त न वियोक्ष्यति नो वियुङ्क्ते ॥ ४७ ॥**

**व्या :** सन्नीलेति । **सन्नीलरत्नेन रुचिरं** मङ्गलदेवतायाः **माङ्गल्यसूत्रम् इह** मे **सततं श्रियै स्यात्** । **अब्जदलायताक्ष्याः कण्ठदेशे** धृतं **यत् प्राक्** पूर्वं **न व्ययुङ्क्त** वियोगं न प्राप । अग्रे **न वियोक्ष्यति** वियोगं न गमिष्यति । इदानीं **नो वियुङ्क्ते** वियोगं न प्राप्नोति । माङ्गल्यसूत्रस्य रुग्मिणीकण्ठवियोगः कालत्रयेऽपि नास्तीति भावः । एकस्मिन् धातावेव प्रयोगत्रयस्योक्तत्वात् शब्दचमत्कारोऽयम् ॥४७॥

**दूरे विधूय हरिणं सुभगं तदीय-**
**नेत्रं स्वबिम्बखचितं वितनोतु चन्द्रः ।**
**साम्यं तथापि न समेति शुचिस्मितस्य**
**लोलालकस्य कमलाच्युतसन्मुखस्य ॥ ४८ ॥**

**व्या :** दूर इति । **चन्द्रः हरिणं** स्वलाञ्छनीभूतं मृगं **दूरे विधूय** दूरतस्त्यक्त्वा **सुभगं** मनोहरं **तदीयनेत्रं** हरिणसम्बन्धिनयनं **स्वबिम्बखचितं** स्वमण्डसम्बद्धं यदि **वितनोतु तथापि शुचिस्मितं** यस्य तस्य **लोलाः अलकाः यस्य** तस्य **कमलाच्युतसन्मुखस्य** रुग्मिणीश्रीकृष्णयोः शोभमानमुखस्य **साम्यं न समेति** न प्राप्नोति । हरिणविधूननेन तन्नेत्रोपादानेन च नैर्मल्यमनोहरनेत्रयोः संपादनेऽपि शुचिस्मितालकानां सत्पदोक्तापरिमितकान्तेश्चासम्पादनादिति भावः ॥४८॥

**माणिक्यसंशोभिमुखं सदाऽन्तःशाणागमोद्भासितमौक्तिकाढ्यम् ।**
**मानार्हनीलोत्पलसत्करण्डं श्रीनाथगण्डद्वयमाजिगाय ॥ ४९ ॥**

**व्या :** माणिक्येति । **श्रीनाथगण्डद्वयं** श्रीकृष्णगण्डस्थलद्वयम् । **माणिक्येन** पद्मरागेण **संशोभि मुखं** वदनप्रदेशो यस्य तत् । **सदा अन्तः** अभ्यन्तरे **शाणागमेन उद्भासितैः मौक्तिकैः आढ्यं** सम्पन्नम् । **मानार्हनीलोत्पलसत्करण्डम्** अनर्घ्य नीलरत्नखचितसमीचीनकरण्डम् । **आजिगाय** । माणिक्यखचितमुखप्रदेशान्तः-पूरितमौक्तिकनीलरत्ननिर्मितकरण्डवद्भातीत्यर्थः ॥ ४९ ॥

**चन्द्रोपमं श्रीरमणस्य सौख्यसन्दोहदं रञ्जितमोष्ठभासा ।**
**सौन्दर्यदुग्धाम्बुधिफेनकल्पं मन्दस्मितं मन्दयतादघं नः ॥५०॥**

**व्या :** चन्द्रोपममिति । **चन्द्रोपमं** [1]चन्द्रसदृशम् । **सौख्यसन्दोहदं** सुखसमूहदम् । **ओष्ठभासा रञ्जितम् सौन्दर्यमेव दुग्धाम्बुधिः** । श्यामावदातमुखस्थसौन्दर्याणा

१ हासं हरेरवनताखिललोकतीव्रशोकाश्रुसागरविशोषणमत्युदारम् ।
सम्मोहनाय रचितं निजमाययाऽस्य भ्रूमण्डलं मनुसुते मकरध्वजस्य -भाग. (३/२८/३२)

मपारत्वात् दृष्टिप्रियत्वाच्च दुग्धाम्बुधित्वं तस्य **फेनकल्पं श्रीरमणस्य मन्दस्मितं नः अघं** पापं **मन्दयतात्** विनष्टं कुर्यादित्यर्थः । पद्मरागादिदिव्यरत्नानामपि क्षीरसमुद्रोत्पन्नत्वादोष्ठभासा रञ्जितमित्युक्तम् ॥ ५० ॥

**स्वच्छा मृदुस्मितदशाकलितैकदेशा**
**लक्ष्मीकपोलललितक्षतहेतुभूता ।**
**सत्कुन्दकुड्मलसमा निबिडा ममान्तः**
**कृष्णस्य रम्यरदनावलिराविरस्तु ॥ ५१ ॥**

**व्या :** स्वच्छेति । **स्वच्छा** शुभ्रा **मृदुस्मित**स्य **दशा**याम् अवस्थायाम् **आकलितः** प्रकाशित **एकदेशः** अग्रभागो यस्याः सा तथोक्ता । **लक्ष्म्याः कपोले ललित**स्य मनोहरस्य **क्षत**स्य **हेतुभूता** । **सत्कुन्दकुड्मलसमा निबिडा** श्री**कृष्णस्य रम्यरदनावलिः मम अन्तः** हृदये **आविरस्तु** आविर्भूताऽस्तु ॥ ५१ ॥

**सन्मान्यलावण्यमरन्दसान्द्रमम्लानसच्चम्पकसम्पदं नः ।**
**मन्मानसे स्याल्लसदुन्नताग्रं सौम्यस्य नासापुटमच्युतस्य ॥५२॥**

**व्या :** सन्मान्येति । **सन्मान्यलावण्य**मेव **मरन्दः** पुष्परसः तेन **सान्द्रम्** । **अम्लान**स्य **सच्चम्पक**स्य **सम्पदि**व सम्पद्यस्य तत् तथोक्तम् । **लसत्** उन्नतम् **अग्रं** यस्य तत् । **सौम्यस्य अच्युतस्य नासापुटम्** अन्तः हृदयमध्ये । मम मानसं **मन्मानसं** तस्मिन् । **स्यात्** ॥ ५२ ॥

**व्यक्तातिकोमलमनोरमवर्णपूर्ण**
**श्रुत्यर्थवृत्ति मधुरस्वरमत्यगाधम् ।**
**सत्क्लेशदुर्विषशमेऽमृतवर्षकल्पं**
**तत्त्वं निजं हरिवचः परिबोधयेन्माम्[1] ॥ ५३ ॥**

---

१ तापत्रयेण सन्तप्तं यदेतदखिलं जगत् ।

**व्या :** व्यक्तेति । व्यक्तैः स्पष्टैः अतिकोमलैः अकठिणैः **मनोरमवर्णैः** मनोहराक्षरैः **पूर्णं श्रुत्यर्थे** वेदार्थे **वृत्तिर्**वर्तनं यस्य तत् । **मधुरः स्वरो** यस्य तत् । **अत्यगाधं** गम्भीरं **सतां क्लेश एव दुर्विषं** तस्य **शमे** नाशकरणे **अमृतवर्षकल्पम्** । **हरिवचः** श्रीकृष्णवचनम् । **निजं** स्वकीयम् । **तत्त्वं मां परिवोधयेत्** परितो बोधयेत् । यत्र यत्र तत्र सर्वत्र बोधयेदित्यर्थः ॥ ५३ ॥

**नानाविधानुपमरत्नविचित्रिताभ्यां**
**मीनोपमोज्ज्वलहिरण्मयकुण्डलाभ्याम् ।**
**श्रीनाथकर्णयुगलं सुभगं भवार्त्या**
**दीनस्य मे गिरमिमां शृणुताच्छ्रितस्य ॥ ५४ ॥**

**व्या :** नानेति । **नानाविधानुपमरत्नैः विचित्रिते** खचिते **ताभ्यां मीना**वेवोपमा ययोस्ते । **उज्ज्वलहिरण्मये कुण्डले ताभ्याम्** । **सुभगं** मनोहरम् । **श्रीनाथस्य कर्णयुगलम्** । **भवार्त्या** संसारदुःखेन **दीनस्य** दुःखितस्य । **श्रितस्य** आश्रितस्य **मे इमां** काव्यरूपां **गिरं श्रृणुतात्** ॥ ५४ ॥

**अम्भोजकोमलविशालसुदीर्घपत्र-**
**सम्भासमानमलिराजदधीरतारम् ।**
**शम्भुप्रभृत्यमरवान्छितवल्गुवीक्षं**
**जृम्भन्मुकुन्दनयनं मुहुरीक्षतां माम् ॥५५॥**

**व्या : अम्भोजेति** । **अम्भोज**स्य अरविन्दस्य **कोमलं विशालं सुदीर्घं पत्रं** तद्वत् **सम्भासमानं** विशालायतकमलदलसदृशमित्यर्थः । **अलिराज**वत् शोभमानम् ०

---

वक्ष्यामि शान्तये तस्य कृष्णामृतमहार्णवम् ॥
संसारविषपानेन ये मृताः प्राणिनो भुवि ।
अमृताय स्मृतस्तेषां कृष्णामृतमहार्णवः ॥(कृष्णामृतमहार्णवे - २,२००)इतिवत् ।

अधीरं चञ्चलतरं स्वकनीनिका यस्य तत् तथोक्तम्। **शम्भुप्रभृत्यमरैः** ब्रह्मादिदेवैः **वाञ्छिता** प्रार्थिता **वल्गुवीक्षा** यस्य तत्तथोक्तम्। **जृम्भत्** विकसत् **मुकुन्दस्य** श्रीकृष्णस्य **नयनं मां मुहुः ईक्षताम्** ॥५५॥

**वक्रालकं मणिमयोज्ज्वलपट्टबन्धं**
**स्तूरिकातिलकभूषितमच्युतस्य ।**
**विस्तीर्णमीषदुदितालिकयुग्ममिष्ट-**
**मस्माकफाललिखितं कुरुताल्ललाटम् ॥५६॥**

**व्या :** वक्रेति । **वक्रा** अलका यस्य तत् तथोक्तम् । **मणिमयः उज्ज्वल पट्टबन्धो** यस्य तत् तथोक्तम् । **कस्तूरिकातिलकभूषितं विस्तीर्णम् ईषदुदितं** ऊर्ध्वगतम् **अलिकयुग्मं** ललाटोपान्तोर्ध्वभागद्वयं यस्य तत्। **अच्युतस्य ललाटं अस्माकं फाललिखितम्** अस्मत्सम्बन्धिललाटलिखितम् **इष्टं** शुभफलप्रदं **कुरुतात्** । तस्य सदा दुर्लेखारहितत्वात् ध्यातुर्मम ललाटमपि दुर्लेखारहितं करोत्वित्यर्थः ॥५६॥

**श्यामं त्रिवक्रं विधिमुख्यदेव-**
**साम्राज्यविश्राणनहेतुलीलम् ।**
**कामाग्र्यचापाकृतिकामतात-**
**भ्रूमण्डलं[१] खण्डयतादघं नः ॥५७॥**

**व्या :** श्याममिति । **श्यामं त्रिवक्रं** विविध**मुख्यदेवा**नां **साम्राज्यविश्राणनहेतुः** लीलाविलासो यस्य तत् भ्रूविक्षेपमात्रेण ब्रह्मादीनां सत्यादिपदप्राप्तिर्भवतीति

१ ध्यायेदजस्रमीशस्य पद्मजादिप्रतीक्षितम् ।
भ्रूभङ्गं पारमेष्ठ्यादिपदमदा विमुक्तिदम् ॥ -द्वादशस्तोत्रम् (१/११)

भावः। **कामस्य** मदनस्य यत् **अग्र्यचापं** श्रेष्ठचापं तस्य आकृतिरिवाकृतिः यस्य तत् तथोक्तम्। **कामतातस्य** श्रीकृष्णस्य **भ्रूमण्डलं नः** अस्माकम् **अघं खण्डयतु** ॥५७॥

**स भवतु यशसे प्रवालकान्तिर्मृदुलतरः सरसोऽधरो मुरारेः।**
**यदुदितरसलुब्धधीरवात्सीदुरसि रमाऽऽननपद्मचुम्बिवेणौ ॥५८॥**

**व्या :** स इति। **प्रवाल**स्य **कान्ति**रिव कान्तिर्यस्य स तथोक्तः। **मृदुलतरः सरसः मुरारेः** श्रीकृष्णस्य **अधरः** अधरोष्ठः **यशसे भवतु**। **रमा** लक्ष्मीः यस्मादधरोष्ठात् **उदितो** यो **रसः** तत्र **लुब्ध**चित्ता सती **उरसि** वक्षःस्थले दैवात् अधरात् सृतामृतरसस्याधोभागे स्थिताया अपि पानं भविष्यतीत्याशयेनेत्यर्थः। **आननपद्मचुम्बिवेणौ** च श्रीकृष्णमुखपद्मचुम्बिवेणुवाद्ये[1] च **अवात्सीत्** वासमकरोत्॥ ५८॥

**सम्पक्वबिम्बसमरम्यतमाधरोष्ठः**
**सत्सम्पदे भवतु सात्वतराजराज्याः।**
**यत्सम्भवामृतकणेन फणीन्द्रतल्पः**
**कृष्णः स नित्यमजरामरणो[2] बभूव॥ ५९॥**

**व्या :** सम्पक्वेति। **सात्वतराज**स्य कृष्णस्य **राज्याः** रुग्मिण्याः **सम्पक्वबिम्बसमः** समीचीनपक्वबिम्बसदृशः **रम्यतमाधरोष्ठः सतां सम्पदे** विभूत्यै **भवतु**।

---

१ श्रीदेवी वेणुमाश्रित्य रेमे कृष्णमुखाम्बुजे।
पपौ च तद्गतं गीतं सुरा इतरभाण्डगाः॥
-इति भागवततात्पर्योद्धृत तन्त्रभागवतवचनम्। (१०/१९/१०)

२ रमाधरोष्ठामृतपानजातमहानुभावेन न पूतनायाः।
उरोजसंग्यार्तिकरो गरोऽसौ बभूव बालस्य बलानुजस्य॥
- इति प्रागुक्तस्य (२/३६) विवरणमिदम्॥

**फणीन्द्रतल्पः सः श्रीकृष्णः यत्सम्भवामृतकणेन** अधरामृतबिन्दुना । **नित्यम् अजरामरणः** जरामरणरहितो बभूव ॥ ५९ ॥

**सौवर्णरम्यफलकोपमितः कपोलः**
**सौभाग्यदो भवतु रञ्जितकुण्डलश्रीः ।**
**यच्चुम्बनं विरचयन् विगतान्यतृष्णः**
**कृष्णो बभूव सरसः किल नित्यतृप्तः ॥ ६० ॥**

**व्या :** सौवर्णेति । **सौवर्णरम्यफलकोपमितः कुण्डलरञ्जितश्रीः** रुग्मिण्याः **कपोलः सौभाग्यदो भवतु । सरसः श्रीकृष्णः यच्चुम्बनं** यस्य कपोलस्य चुम्बनं **विरचयन्** कुर्वन् । **विगतान्यतृष्णः** अन्यविषयेच्छारहितः **नित्यतृप्तश्च बभूव** । रुग्मिणीकपोलचुम्बनलोलस्य ततोऽन्यत्र उत्कण्ठारहितत्वादेव नित्यतृप्तत्वमित्युत्प्रेक्षा ॥ ६० ॥

**रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि**
**प्रेम्णा चिन्तयतां विचित्रविमलश्लाघ्यार्थसन्दायिनि ।**
**सञ्जाते भुवि रुग्मिणीशविजये सद्वादिराजोदिते**
**सञ्जातः सुरमण्डलीषु महितः सर्गोऽयमष्टादशः ॥ ६१ ॥**

**॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थश्रीचरणविरचिते श्रीरुग्मिणीशविजये महाकाव्ये अष्टादशः सर्गः ॥**

**व्या :** रोम्णामिति । उक्तोऽर्थः ॥ ६१ ॥

**॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थश्रीचरण-विरचितस्य श्रीरुग्मिणीशविजयमहाकाव्यस्य व्याख्यायां श्रीनारायण-भट्टविरचितायां श्रीगुरुभावप्रकाशिकायां अष्टादशः सर्गः ॥**

*****

# एकोनविंशः सर्गः

**दन्तक्षतैः कृतपदं प्रविभाति देव्या**
**गण्डस्थलं प्रियवशीकरणोचितस्य ।**
**मुष्णत्प्रभां कनकयन्त्रवरस्य वश्य-**
**कर्मार्हरक्तरसतो रचिताक्षरस्य ॥१॥**

**व्या :** कामिनी[1] कमला देवी सूनुर्मीनध्वजः पुरी ।
द्वारका यस्य मां पायात् सोऽयं सौन्दर्यसागरः ॥ १ ॥

**दन्तक्षतैरिति । दन्तक्षतैः** श्रीकृष्णदन्तक्षतैः । **कृतं पदं** स्थानं यस्य तत् कृतस्थानम् । नूत्नरक्तार्द्रदन्तक्षतोपेतमित्यर्थः । अत एव **वश्यकर्मार्हरक्तरसतः** वश्यकर्मणि अर्हः योग्यः रक्तरसः तेन । कुङ्कुमोदकेनेत्यर्थः । सार्वविभक्तिकस्तसिः । **रचिताक्षरस्य** लिखितवश्यमन्त्राक्षरस्य । अत एव **प्रियवशीकरणोचितस्य कनकयन्त्रवरस्य** सौवर्णपत्रात्मकयन्त्रश्रेष्ठस्य । **प्रभां** कान्तिम् । **मुष्णत्** अपहरत् । **देव्याः** रुग्मिण्याः । **गण्डस्थलं प्रविभाति** । सुवर्णयन्त्रवद्विभातीत्यर्थः ॥१॥

**अन्तर्निगूढकनकाङ्कुरिताननोऽपि**
**नासाविभूषणमणिर्मुरवैरिपत्न्याः ।**
**मुक्तामयः किल मनोज्ञवधूसुधार्द्र-**
**बिम्बोष्ठचुम्बिवदनस्य सदाऽऽमयः क ॥ २ ॥**

**व्या : अन्तरिति । मुरवैरिपत्न्याः** रुग्मिण्याः । **नासाविभूषणमणिः** । **अन्तर्गर्भे** । रन्ध्रप्रदेश इत्यर्थः । **निरूढकनकेन** प्रविश्य स्थितसुवर्णशकलया

---

१ कलत्रं कमला यस्य पुत्रः कमलसम्भवः ।
शिवाद्याः सेवकास्तस्मै नमो विश्वकुटुम्बिने ॥ - इति विष्णुतत्त्वनिर्णयटीकायाम्

अङ्कुरितमाननं यस्य। रन्ध्रप्रदेशात् विनिर्गतसुवर्णशलाकाग्रभागोपेतमुखप्रदेशोऽपीत्यर्थः। **मुक्तामयः किल** मुक्ताफलात्मकः किल। मुक्त आमयः व्याधिर्येन स तथोक्तः। किलेत्याश्चर्ये। हृदि निरूढशरस्य व्याध्यभाव आश्चर्यमिति श्लोकस्य ध्वन्योऽर्थः। अर्थान्तरं न्यस्यति। **मनोज्ञवधूनां** मनोरमस्त्रीणाम्। **सुधया** अधरामृतेनार्द्रः द्रवीभूतः **बिम्बोष्ठः** तं चुम्बतीति सुधार्द्रबिम्बोष्ठचुम्बि **वदनं यस्य** स तथोक्तस्तस्य। कान्तानाम् ओष्ठामृतपानासक्तमुखस्येत्यर्थः। नासामणेरधरोष्ठपरिलम्बमानत्वादिति भावः। **आमयो** व्याधिः **क्व** कुतः वद। अमृतं पिबतो व्याधिः क्वेत्यर्थः॥ २॥

**मुक्तात्मकोऽपि मृदुलोष्ठपुटानुषक्तो**
**नित्यं यदुल्लसदपाङ्गशरेण भिन्नः।**
**नासाविभूषणमणिः परिलम्बतेऽस्या**
**देव्याः किमच्युतवशीकरणे प्रयासः॥ ३॥**

**व्या : मुक्तात्मकोऽपीति। मुक्तात्मकोऽपि** मुक्ताफलरूपोऽपि। विमुक्तोऽपीति ध्वनिः। **मृदुलोष्ठपुटानुषक्तः**। मुक्तस्य कान्ताधरासक्तिर्गर्हितेति अपिना सूचयति। तेनाधरस्य लावण्यातिशयो द्योत्यते। **नासाविभूषणमणिः नित्यं** सर्वदा **यस्याः** रुग्मिण्याः **उल्लसदपाङ्गशरेण** मनोहरकटाक्षबाणेन **भिन्नः**। कटाक्षकान्त्या मिश्रितः सन्निति ध्वनिः। **परिलम्बते**। अनेन कामिनीं हित्वाऽन्यत्र गन्तुम् असमर्थस्य तत्रैवासक्तिर्द्योत्यते। **अस्याः देव्याः** रुग्मिण्याः **अच्युतवशीकरणे प्रयासः किम्**। श्रीकृष्णस्यापि मुक्तत्वाविशेषात् सोऽप्येवं वशीकर्तुं शक्त इति भावः॥ ३॥

**नासाख्यचम्पकभिया चलितस्य नेत्र-**
**चार्वम्बुजार्पितहृदा च समुत्सुकस्य।**

**भृङ्गस्य सम्पदमधीरजवस्य मुष्णन्**
**लक्ष्मीं तनोतु यदुपुङ्गवराज्ञ्यपाङ्गः ॥४॥**

**व्या :** देव्याश्चञ्चलापाङ्गचाञ्चल्ये निमित्तमुत्प्रेक्षयन् भृङ्गसाम्येन वर्णयति – नासेति । **नासाख्यचम्पकभिया चलितस्य** नासिकासमीपमागत्य चम्पकमुकुलभ्रान्त्योत्पन्नभयेन कटाक्षपर्यन्तं विषयान्तरपर्यन्तं वा पलायितस्येत्यर्थः । **नेत्रमेव चार्वम्बुजं** मनोहरकमलदलं तत्रार्पितं हृत् तेन **समुत्सुकस्य** । अम्बुजाशया नेत्रान्तस्थानं त्यक्तुमशक्तस्येत्यर्थः । पुनः परावृत्य नेत्रान्तस्थानमागतस्येति वा । **अधीरजवस्य** चम्पकभिया गमनं अम्बुजलोभात् पुनरागमनं च वारं वारं कुर्वदित्यर्थः । **भृङ्गस्य** भ्रमरस्य शोभां **मुष्णन् यदुपुङ्गवस्य** श्रीकृष्णस्य **राज्याः** रुग्मिण्याः **अपाङ्गः** कटाक्षः **लक्ष्मीं तनोतु** विस्तारयतु ॥ ४ ॥

**स्वर्णाङ्गी वरनीलरत्नसदृशापाङ्गी प्रवालोल्लस-**
**त्पादा या स्मितमौक्तिका मरकतस्कन्धाभनीला जटा ।**
**वैडूर्याग्र्यनखा नखक्षतलसन्माणिक्यपुष्पोष्ठस-**
**द्गोमेदा रदवज्ररुक् सुरतरुं नास्यै ददौ श्रीपतिः ॥ ५ ॥**

**व्या : स्वर्णाङ्गी**ति । या रुग्मिणी **स्वर्ण**वत् **अङ्गं** शरीरं यस्याः सा । पारिजातोऽपि सुवर्णात्मकः । **वरनीलरत्नसदृशापाङ्गी** असितापाङ्गीत्यर्थः । पारिजातोऽपि नीलरत्नात्मकपत्रवान् । **प्रवाल**वत् विद्रुमवत् **उल्लसन्तौ पादौ** यस्या सा । पारिजातोऽपि प्रवालरूपमूलप्रदेशः । **स्मितमेव मौक्तिकं** यस्याः सा । पारिजातोऽपि मुक्ताफलोपेतः । **मरकतस्कन्धस्य आभे**वाभा यासां ताः **नीला जटाः** विलासार्थं चतस्रो वेण्यो यस्याः सा तथोक्ता । [१]''चतुष्कपर्दा

---

१ चतुष्कपर्दा या देवी चतुरास्यादिभिः स्तुता ।
चतुर्वेदोदितगुणा चतुर्मूर्तेर्हरेः प्रिया ॥
- इति श्रीवादिराजश्रीचरणकृतश्रीश्रीशगुणदर्पणे

युवतिः सुपेशा'[१] इति श्रुतेः । पारिजातोऽपि मरकतस्कन्धोपेतः । **वैडूर्यवत् अग्र्याः** श्रेष्ठाः **नखाः** यस्याः सा । पारिजातोऽपि नवरत्नभरितत्वाद्वैडूर्यरत्नोपेतः । **नखक्षतमेव लसन्माणिक्यपुष्पं** यस्याः सा । **ओष्ठसद्गोमेदा** ओष्ठ एव सद्गोमेदरत्नं यस्याः सा । **रदा** एव दन्ता एव **वज्राणि** तेषां **रुक्** कान्तिर्यस्याः सा । इति कृत्वा **श्रीपतिः** श्रीकृष्णः । अस्यै नवरत्नसदृशावयवोपेतरुग्मिण्यै । **सुरतरुं** पारिजातं **न ददौ** न दत्तवान् । तादृशीं रुग्मिणीमेव पारिजाततरुं मत्वा अस्यै पारिजाततरुं न दत्तवानित्यर्थः ॥ ५ ॥

**कार्श्यं काये मनोज्ञे कचभरकरयोर्लम्बमानत्वदैर्घ्ये**
**चक्षुर्मध्योरुदेशेष्वधिकचपलताद्दश्यतामार्दवानि ।**
**तत् ते तानि क्रमेण द्विरदपरिलसत्कुम्भशोभापहारि-**
**ण्यस्ति स्तः सन्ति लक्ष्म्याः कुचकलशतटे नास्ति न स्तो न सन्ति ॥**

**व्या : कार्श्यमिति** । रुग्मिण्याः मनोहरे **काये** शरीरे **कार्श्यं** कृशता अस्ति। कृशाङ्गित्वादिति भावः । **कचभरकरयोः** केशपाशबाह्वोः **लम्बमानत्वदैर्घ्ये स्तः** तिष्ठतः । केशपाशस्य करस्य लम्बमानत्वाद्दीर्घत्वाच्चेति भावः । **चक्षुश्च मध्यं च ऊरुदेशश्च** तेषु । **अधिकचपलताद्दश्यतामार्दवानि क्रमेण सन्ति** । चपलाक्षित्वाच्चक्षुषि चापल्यम् । कृशोदरत्वान्मध्येऽदृश्यता । मृद्वङ्गित्वादुदरदेशे मार्दवमिति । एतानि क्रमेण सन्तीत्यर्थः । **द्विरदपरिलसत्कुम्भस्य** करिमनोज्ञमस्तकस्य । **शोभां** कान्तिम् । **अपहरतीति** तथोक्तः तस्मिन् । रुग्मिण्याः कुचकलशतटे तत् कार्श्यं **नास्ति** । ते लम्बमानत्वदैर्घ्ये **न स्तः** । तानि अधिकचपलताद्दश्यतामार्दवानि **न सन्ति** । कायादिषु कार्श्यादीनां गुणत्वात् कुचस्य दोषत्वादिति भावः । **विषमसमस्यापूरणमिदम्** ॥ ६ ॥

१ ऋग्वेदे (१०/११४/३)

**भ्रूमध्यलग्नमृगनाभिललामरेखा**
**श्रीश्रीशयोरनुकरोति हि नीलनीला।**
**शाणोपलोपरिगतं रणधीरमार-**
**चापानुषक्तमसितोत्पलचारुबाणम् ॥७॥**

**व्या :** भ्रूमध्येति । नीलनीला नीलान्नीला अतिनीलेत्यर्थः । **श्रीश्रीशयोः** रुग्मिणीश्रीकृष्णयोः **भ्रूमध्ये** लग्नस्य **मृगनाभिललामस्य** कस्तूरीतिलकस्य **रेखा शाणोपलोपरिगतं** शाणायाः घर्षणस्य यः उपलः पाषाणः तस्योपरि गतम् । **रणधीरमारचापानुषक्तम् असितोत्पलचारुबाणम् अनुकरोति हि** । भ्रूमध्यस्य चापमध्योपमत्वात् फालस्य शाणप्रान्तोपमत्वात् कस्तूरीतिलकस्य नीलोत्पल-कुड्मलसमानत्वात् रणधीरत्वेन चापमध्यशर एव निशितत्वस्य सम्पादनीयत्वात् द्रष्टुजनमनोमोहनत्वाच्च रणधीरमारचापानुषक्तासितोत्पलशरसाम्यमिति **समग्रोपमेयम्** ॥ ७ ॥

**नित्यं परस्परमनोरमगात्रसङ्गा-**
**न्मत्तालिरक्तसरसीरुहकान्तिमन्तौ ।**
**लक्ष्मीरमारमणयोर्जगदादिपित्रो-**
**रस्माकमीप्सितफलं कुरुतां कटाक्षौ ॥८॥**

**व्या :** नित्यमिति । नित्यम् अनवरतं **परस्परमनोरमगात्रसङ्गात्** परस्परनिरीक्षणे सति अन्योन्यगात्रसङ्गात् । **मत्तालिरक्तसरसीरुहकान्तिमन्तौ** । श्रीकृष्णशरीरस्य नीलत्वात् तच्छरीरसम्बन्धेन देव्याः कटाक्षस्य भ्रमरकान्तिः । देव्याः शरीरस्य पीतवर्णत्वात् तच्छरीरसम्बन्धेन श्रीकृष्णकटाक्षस्येषद्रक्ताम्बुजकान्तिः सम्पन्नेति बोध्यम् । **जगदादिपित्रोः लक्ष्मीरमारमणयोः** रुग्मिणीश्रीकृष्णयोः । **कटाक्षौ अस्माकमीप्सितं फलं कुरुताम्** ॥ ८ ॥

**रक्ता रमारामकटाक्षलक्ष्मीर्लक्षीकरोत्वस्मदमित्रवर्गम् ।**
**सैवानुरक्ता विधिशर्वपूर्वसौभाग्यदात्री शरणागतं माम् ॥९॥**

**व्या :** रक्तेति । रमा च **रामश्च** रमारामौ रुग्मिणीश्रीकृष्णौ तयोः **कटाक्षलक्ष्मीः** अपाङ्गकान्तिः । **रक्ता** सती क्रोधेन **रक्ता** सती । **अस्मदमित्रवर्गम्** अस्मच्छत्रु समूहम् । लक्षीकरोतु । तयोः क्रूरदृष्टिरस्मच्छत्रून् दहत्वित्यर्थः । **विधिशर्वौ** विरिञ्चिशिवौ **पूर्वौ** प्रथमौ येषां देवानां ते **विधिशर्वपूर्वाः** तेषाम् । **सौभाग्यदात्री सैव कटाक्षलक्ष्मीः** । **अनुरक्ता** कृपायुक्ता सती ईषत्प्रान्तरागस्य नयनलक्षणत्वात् ईषद्रक्ता च । **शरणागतं मां** लक्षीकरोतु विषयीकरोतु ॥ ९ ॥

**मुकुटरविभियाऽधोलम्बमानं मुखेन्दु-**
**प्रविलसदुरुभासा चोन्मुखं तन्मुखस्थम् ।**
**कुटिलमलकराशिं कर्णनीलोत्पलश्री-**
**परिहृतनिजदैन्यं तर्कयाम्यन्धकारम् ॥ १० ॥**

**व्या :** मुकुटेति । **अलकराशिं** रुग्मिणीश्रीकृष्णयोः **कुटिलालकसमूहम् अन्धकारं तर्कयामि** । कथम्भूतमन्धकारम् । **मुकुटरविभिया** किरीटाख्यसूर्यभीत्या । सूर्यान्धकारयोर्विरोधादिति भावः । **अधः** शिरसः अधःप्रदेशो ललाट इत्यर्थः । **लम्बमानं** मुकुटरवेरुपरिविद्यमानत्वात् अधःपलायनं कर्तुं ललाटदेशमागतमित्यर्थः । पुनः कथम्भूतम् । **मुखेन्दोः प्रविलसती** या **उरुभा** तया **चोन्मुखम्** ऊर्ध्वमुखम् । तेजस्तिमिरयोर्विरोधादत्रापि मुखचन्द्रतेजसाधःप्रदेशे गन्तुमशक्यत्वात् पुनरपि गन्तुमुन्मुखमित्यर्थः । किञ्चिदधोगत्य पुनरूर्ध्वगमने केशानां सहजकौटिल्यं भवति । ततः उभयत्र हेतूत्प्रेक्षा । पुनः कथं भूतम् । **तन्मुखस्थम्** उभयत्रापि गन्तुमशक्यत्वात् तयोः रुग्मिणीश्रीकृष्णयोः मुख एव स्थितमित्यर्थः । ननु शत्रुद्वयमध्ये कथं वान्धकारेण स्थितमित्याशङ्क्य सहायसम्पत्त्या स्थितमित्याह – **कर्णेति** । **कर्णयोः** ये **नीलोत्पले** अवतंसीकृतेन्दीवरे तयोः **श्रिया** अधिककान्त्या

परिहृतं निजदैन्यं कार्पण्यं यस्य स तथेत्यर्थः । नीलोत्पलकान्तेः चन्द्रसुहृत्वे तत्तेजःसहत्वात् अत एव सूर्यतेजसोऽप्यभीतत्वाच्चोभयतः तावद्देशप्रसृतनीलोत्पलकान्तिसहायेन विजितमन्धकारेणेति भावः । एतादृशमन्धकारं तर्कयामि इति सम्बन्धः ॥ १० ॥

**उत्तुङ्गनीलचमरीमृगवालभार-**
**कल्पं स्फुरद्विविधरत्नलसत्किरीटम् ।**
**उत्फुल्लपुष्पनिकराकरमुज्ज्वलन्तं**
**नित्यं स्मरामि कमलाच्युतमौलिदेशम् ॥ ११ ॥**

**व्या :** उत्तुङ्गेति । उत्तुङ्गः नीलचमरीमृगस्य यो वालभारः लाङ्गूले परितो लम्बमानरोमसमूहः तस्य **कल्पं** सदृशम् । **स्फुरद्विविधरत्नलसत्किरीटं** स्फुरन्ति विविधानि यानि रत्नानि तैः लसत्किरीटं यस्मिन् सः तम् । **उत्फुल्लपुष्पनिकराणाम् आकरम्** आधारं तैरलङ्कृतमित्यर्थः । **उज्ज्वलन्तं** शोभमानं **कमलाच्युतमौलिदेशं** रुग्मिणीश्रीकृष्णयोर्धम्मिल्लप्रदेशम् । 'धम्मिल्ले मुकुटे मौलिः' इति भास्करः । **नित्यं स्मरामि** ॥ ११ ॥

**इत्थं जाम्बवतीमुवाह स विभुः सल्लक्षणां लक्षणां**
**सत्यां[१] सर्वगुणाकरां शशिमुखीं नीलां च नीलालकाम् ।**

---

१ सत्यभामा साक्षात् महालक्ष्मीरेव । तथाहि ॥ -
रमैव सा हि भूरिति द्वितीयमूर्तिरुत्तमा ।
बभूव सत्रजित्सुता समस्तलोकसुन्दरी ।
तथा हि सा च रुग्मिणीप्रियं प्रियासु तेऽधिकम् ।
जनार्दनस्य ते हरेः सदाऽवियोगिनी यतः ॥ - म.भा.ता.नि.(१७/२१८,२१९)
साक्षात् सत्या रुग्मिणीत्येकसंवित्
द्विधा भूता नात्र भेदोऽस्ति कश्चित् ॥ -इति च म.भा.ता.नि. (२०/८३)

**कालिन्दीं कलकण्ठकण्ठनिनदां स्वां मित्रविन्दां तथा**
**बाला भूमिसुताहृताश्च बहुशो द्वारावतीवल्लभः ॥ १२ ॥**

**व्या :** इत्थमिति । **स** विभुर्द्वारावतीवल्लभः श्रीकृष्णः । इत्थम् उक्तप्रकारेण। **जाम्बवतीं** जाम्बवतीनाम्नीम् । भार्याम् **उवाह** विवाहयाम्बभूव । **सल्लक्षणां** शुभलक्षणां लक्षणानाम्नीम् उवाहेति प्रत्येकं सम्बन्धः । **सर्वगुणाकरां** सर्वगुणाश्रयाम् । **सत्यां** सत्यभामाम् । **शशिमुखीं नीलां** नीलानाम्नीम् । नीलाः अलकाः यस्यास्तां **कालिन्दीं** कालिन्दीनाम्नीम् । **कलकण्ठवत्** कोकिलवत् **कण्ठनिनदः** कण्ठध्वनिः यस्याः सा ताम् । मातुलपुत्रीत्वेन **स्वां** स्वकीयां **मित्रविन्दां** च मित्रविन्दाख्याम् । **तथा** भद्रामिति शेषः । **भूमिसुतेन** नरकासुरेण **आहृताः बहुशो** बह्व्यः **बालाः** नारीश्च उवाहेति सम्बन्धः ॥१२॥

**कस्मान्मुह्यथ मानवा मुरभिदः सर्वोत्तमत्वे पुरा**
**यः पद्मासनधूर्जटिप्रभृतिभिः कार्याक्षमैः प्रार्थितः ।**
**गर्भे गीर्भिरभिष्टुतः फणिफणे नृत्यंश्च यः सेवितः**
**सद्वेणुं रणयंश्च नम्रतनुभिर्यो विस्मितैरीक्षितः ॥ १३ ॥**

**व्या :** विवाहवर्णनं समाप्य कुमारोदयं वर्णयिष्यन् प्रसङ्गात् श्रीकृष्णस्य सर्वोत्तमत्वे भागवतदशमस्कन्धोक्तकथामेव प्रमाणीकरोति – **कस्मादिति** । हे **मानवाः** । **मुरभिदः** श्रीकृष्णस्य । **सर्वोत्तमत्वे** ब्रह्मरुद्रादिसकलदेवोत्तमत्व-विषये । **कस्मात्** कारणात् । **मुह्यथ** मुग्धा भवथ । निर्णायकबहुतरप्रमाणस्य विद्यमानत्वात् किमर्थं सन्देहं कुरुथेत्यर्थः । प्रमाणमालां दर्शयति – **पुरेति** । **पुरा** श्रीकृष्णावतारात् पूर्वम् । **यः** श्रीकृष्णः **कार्याक्षमैः** भूभारहरणरूपकार्यं कर्तुमसमर्थैः । **पद्मासनो** चतुर्मुखब्रह्मा **धूर्जटिः** शिवः एतत्**प्रभृतिभिः** देवैः यस्मात् **प्रार्थितः** भूभारहरणायावतारं कर्तुं स्तुतः । तस्मात् तस्य **सर्वोत्तमत्वे कस्मान्मुह्यथे**त्यादिना सर्वत्रान्वयः । 'यो येन प्रार्थ्यते स तस्मादुत्तमः यथा राजा' इत्यादिना सर्वत्र व्याप्तेः सद्भावादिति भावः ॥१३॥

ब्रह्मा तदुपधार्याथ सह देवैस्तया सह।
जगाम सत्रिनयनः तीरं क्षीरपयोनिधेः
तत्र गत्वा जगन्नाथं देवदेवं वृषाकपिम्।
पुरुषं पुरुषसूक्तेन उपतस्थे समाहितः[१]

इति वचनात्। यः कृष्णः **गर्भे** देवक्युदरे **पद्मासनधूर्जटिप्रभृतिभिर्गीर्भिः** स्तुतिरूपाभिः **अभिष्टुतः**।

ब्रह्मा भवश्च तत्रैत्यमुनिभिर्नारदादिभिः।
देवैः सानुचरैः सार्धं गीर्भिर्विष्णुमथास्तुवत्[२]

इति वचनात्। अयमर्थः सिद्धः। **यः** कृष्णः **फणिफणे** कालियशिरसि **नृत्यंश्च पद्मासनधूर्जटिप्रभृतिभिः** तालमर्दलसङ्गीतादिपरिचर्यया **सेवितश्च**।

तं नर्तुमुद्यतमवेक्ष्य तदा तदीयगन्धर्वसिद्धसुरचारणदेववध्वः।
प्रीत्या मृदङ्गपणवानकवाद्यगीतपुष्पोपहारनुतिभिः सहसोपसेदुः॥[३]

इति वचनादयममर्थः सिद्धः। तदीयाः पुत्रपौत्रादिना तत्सम्बन्धिनो ब्रह्माद्याः। **यश्च सद्वेणुं** समीचीनवेणुवाद्यं **रणयन् नम्रतनुभिर्विस्मितैर्ब्रह्मादिभिरीक्षितः**।

'सुमनसस्तदुपधार्य सुरेशाः शक्रशर्वपरमेष्ठिपुरोगाः।
कवय आनतकन्धरगात्रा विस्मयं ययुरनिश्चिततत्त्वाः॥'[४]

इति वचनादयमर्थः सिद्धः॥ १३॥

**कृष्णायामपि तैर्नतैः परिवृतं दृष्ट्वा श्वफल्कात्मजो**
**यं तुष्टाव गुणैरबद्धमितरान् बद्धानुदीर्य स्फुटम्।**

---

१ भागवते (१०/१/१९)

२ भागवते (१०/२/२५)

३ भागवते (१०/१४/२७)

४ भागवते (१०/३३/१५)

**सेवातुष्टहृदोऽपि देवनिकरादप्राप्तमुक्तिं प्रभु-**
**र्यः प्रादान्मुचुकुन्दभूमिपतये तैर्निद्रितायाप्यलम् ॥ १४ ॥**

**व्या :** कृष्णायामिति । किञ्च **कृष्णायां** यमुनायामपि **श्वफल्कात्मजः** अक्रूरः **नतैः** नमस्कृतैः परिवारभूतैः ब्रह्मादिभिः **परिवृतं यं** कृष्णं **गुणैः** सत्त्वादिभिः **अबद्धम् इतरान् बद्धान्** गुणबद्धान् **उदीर्य** उक्त्वा कृष्णं **तुष्टाव** ।

सुनन्दनन्दप्रमुखैः पार्षदैः सनकादिभिः ।
सुरेशैर्ब्रह्मरुद्राद्यैर्नवभिश्च द्विजोत्तमैः ॥[1] इति,

नैते स्वरूपं विदुरात्मनस्ते ह्यजादयोऽन्यात्मतया गृहीताः ।
अजोऽनुबद्धः सगुणैरजाया गुणात् परं वेद न ते स्वरूपम् ॥[2]

इति वचनात् अयमर्थः सिद्धः । किञ्च **यः प्रभुः** श्रीकृष्णः **सेवातुष्टहृदोऽपि** युद्धे सहायकरणलक्षणसेवया सन्तुष्टचेतसोऽपि । देवनिकरात् **अप्राप्तमुक्तिम्** ।

वरं वरय भद्रं ते ऋते कैवल्यमात्मनः ।
एक एवेश्वरस्तस्य भगवान् विष्णुरव्ययः ॥[3]

इति वचनात् । अलब्धकैवल्यम् । **तैः** देवैः । **अलम्** अत्यर्थम् । **निद्रिताय** सञ्जाता निद्रा अस्येति स तथोक्तस्तस्मै । निद्रां प्रापिताय मुचुकुन्दभूमिपतये । **प्रादात्** दत्तवान् ।

जन्मन्यनन्तरे राजन् सर्वभूतसुहृत्तमः ।
भूत्वा द्विजवरस्त्वं वै मामुपेष्यसि केवलम् ॥[4]

---

१ भागवते (१०/३९/५३)
२ भागवते (१०/४०/३)
३ भागवते (१०/५/२०)
४ भागवते (१०/५१/६४)

इति वचनात् । देवैर्दातुमशक्यां मुक्तिं मुचुकुन्दाय प्रादादिति यत् तस्मात् श्रीकृष्णस्य सर्वोत्तमत्वे किमर्थं मुह्यथेति[१] सम्बन्धः ॥ १४ ॥

**यः कल्पाङ्घ्रिपमाहरन् सुरवरान् व्यद्रावयत् सेश्वरान्**
**यो भस्मीकृतभस्मदानवपतिः शम्भुं पुराऽपालयत् ।**
**योगीन्द्रादृतवैभवो भृगुमुनिर्यच्छ्रैष्ठ्यमस्पष्टयत्**
**तं भक्त्या भजताजितं मधुजितं कैवल्यकामा जनाः ॥१५॥**

**व्या :** य इति । **यः** कृष्णः । **कल्पाङ्घ्रिपं** पारिजातम् । **आहरन्** सन् । **राजेश्वरान्** रुद्रसहितान् **सुरवरान्** इन्द्रादिदेवान् । **व्यद्रावयत्** युद्धे विद्रावयामास ।

तूर्णं गृहीत्वा पाणिभ्यां विषाणे तस्य नन्दिनः ।
सशूलपाणिं चिक्षेप वैनतेयो धनुःशतम् ॥[२]

इति वचनादयमर्थः सिद्धः । यः कृष्णः **पुरा भस्मीकृतभस्मदानवपतिः** निर्दग्धभस्मासुरः सन् । **शम्भुं** शिवम् । **अपालयत्** ।

मुमुचुः पुष्पवर्षाणि हते पापे वृकासुरे ।
देवर्षिपितृगन्धर्वा मोचितः सङ्कटाच्छिवः ॥[३]

इति वचनादयमर्थः सिद्धः । **योगीन्द्रादृतवैभवः** योगीन्द्रैः आदृतं मानितं वैभवम् ऐश्वर्यं यस्य स तथोक्तः । **भृगुमुनिर्यस्य** श्रीकृष्णस्य **श्रैष्ठ्यं** ब्रह्मरुद्राद्युत्तमत्वम् **अस्पष्टयत्** स्पष्टीचकार ।

पुनः स्वसत्रमासाद्य मुनीनां ब्रह्मवादिनाम् ।
स्वानुभूतमशेषेण राजन् भृगुरवर्णयत् ॥

---

१ इति त्रयोदशश्लोकस्थ'कस्मान्मुह्यथ' इत्यनेन सम्बन्धः ।

२ भागवते (१०/६६/४८)

३ भागवते (१०/९२/३७)

तं निशम्याथ मुनयो विस्मिता मुक्तसंशयाः ।
भूयांसं श्रद्धुर्विष्णुं यतः शान्तिर्यतोऽभयम् ।।[१]

इति वचनादयमर्थः सिद्धः । हे **कैवल्यकामा जनाः तं** सर्वोत्तमम**जितं** केनाप्यपराजितम् । मधुं मधुनामकासुरं जयतीति **मधुजित् तम्** । श्रीकृष्णं **भक्त्या भजत** ।। १५ ।।

**कैलासयात्रादिभिरूनभावो यद्यस्य तर्ह्यैक्यवचो वृथा स्यात् ।**
**लीलेति वाच्यं भवता वयं तु पौत्रालयप्राप्तिमुपेक्षयामः ।।१६।।**

**व्या :** ननु शिवश्रैष्ठ्ये श्रीकृष्णनैच्ये च –

आराध्य देवदेवेशं शङ्करं लोकशङ्करम् । ...
रुग्मिण्यां तनयं लेभे नष्टं कामं पुनर्हरिः ।।[२]

इत्यादि कैलासयात्राकथारूपप्रमाणमस्तीत्याशङ्क्याह – **कैलासेति** । **कैलासयात्रादिभिः** कैलासगमनशिवलिङ्गप्रतिष्ठापनादिभिः । **अस्य** श्रीकृष्णस्य **ऊनभावः** शिवान्नीचता **यदि तर्हि** 'शिवाय विष्णुरूपाय' इति भवदीयं विष्णुशिवयोरैक्यवचः **वृथा** बाधितार्थकं **स्यात्** । नहि पूज्यपूजकयोरैक्यं **भवति** । अतो हरिशङ्करयोरैक्यं वदता **भवता** श्रीकृष्णकृतकैलासयात्रादिकं केवलं **लीला** विनोद एव । न तारतम्यप्रयोजकम् इति **वाच्यम्** । **वयं तु पौत्रालयप्राप्तिं** स्नेहवशादेव पौत्रगृहगमनं मत्वा शङ्कैवेयं न घटत इति **उपेक्षयामः** । तथा च निरङ्कुशं पूर्वोक्तविष्णुसर्वोत्तमत्वमिति भावः ।।१६।।

**युधिष्ठिरस्यालयमेव गच्छंस्तथा द्विजादीन् यमिनः समर्चन् ।**
**ततोऽपि नीचः किमयं नृलोके नरानुकारार्थमिदं हि सर्वम् ।।१७।।**

१ भागवते १०/९३/१५,१६
२ भागवते १०/६८/१,२

**व्या :** ननु माऽस्तु हरिशङ्करयोरैक्यं कैलासादियात्रामात्रेण श्रीकृष्णस्य नीचताऽस्त्वित्यत आह – **युधिष्ठिरस्येति** । एषः श्रीकृष्णः **युधिष्ठिरस्य** पाण्डुपुत्रस्य । **आलयम्** इन्द्रप्रस्थं प्रति **गच्छन् ततो** युधिष्ठिरान्नीचः **किम्**। युधिष्ठिरादपि श्रीकृष्णस्य नीचत्वं परस्याप्यनभिमतमिति किंशब्देनाक्षिपति। यदि कैलासयात्रामात्रेण शिवादपि नीचः स्यात् तर्हि इन्द्रप्रस्थयात्रामात्रेण युधिष्ठिरादपि नीचः स्यादिति भावः । ननु न कैलासयात्रामात्रेण नीचतां ब्रूमः किन्तु शिवार्चनेनैव नैच्यं ब्रूम इत्यत आह – **तथेति** । यथा शिवार्चनं तथा **द्विजादीन् यमिनः** नारदादीन् । **समर्चयन्** अयं श्रीकृष्णः **ततोऽपि द्विजादिभ्यः नीचः किम्** । अत्रापि **किं**शब्दः पूर्ववदाक्षेपे । यदि शिवपूजाकरणेन शिवान्नीचः स्यात् तर्हि द्विजादिपूजाकरणेन **तेभ्योऽपि नीचः** स्यादिति भावः । तर्हि **किमर्थं** कैलासेन्द्रप्रस्थयात्रादिकं कृतमित्यत आह – **नृलोक** इति । इदं कृष्णेन कृतं **सर्वं** कैलासेन्द्रप्रस्थयात्रादिकं **नृलोके** मनुष्यलोके अवतीर्णस्य श्रीकृष्णस्य [१]**नरानुकारार्थं हि** मनुष्यविडम्बनार्थमेवेदं कृतमिति भावः ।। १७ ।।

**यदीह शङ्का विपरीतभावे तदा नराः सन्ति किमात्मलोकात् ।**
**पयोब्धितीरं व्रजतो विधातुः शिवस्य च स्वालयतो गतस्य ।।१८।।**

**व्या :** नन्वेवं ब्रह्मादीनां क्षीरसमुद्रयात्रा हर्यर्चनादिकमपि नरानुकारार्थं किं न स्यादित्याशङ्क्य तदा विडम्बनीयमनुष्याभावान्नेत्याह – **यदीहेति** । इह प्रमेये । **विपरीतभावे** ब्रह्मादियात्रादेरेव नरानुकारार्थत्वे **शङ्का यदि** क्षीरसमुद्रयात्रादिकं नरानुकारार्थं भवत्विति **यदि शङ्का** तदा **आत्मलोकात्** स्वसत्यलोकात् **पयोब्धितीरं व्रजतः विधातुर्ब्रह्मणः स्वालयतः** कैलासात् **पयोब्धितीरं गतस्य शिवस्य च** विडम्बनार्हाः **नराः सन्ति किम्** । येनेदं नरविडम्बनार्थं स्यात् ।

---

१ यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ।। - इत्यादि गीता (३/२१-२४)

नरविडम्बनं तु नरमध्य एव कर्तव्यम् । नराभावान्नरविडम्बनार्थं न भवति किन्तु कार्याक्षमैर्भक्त्या कृतमिदं न नीचतापहारकमिति भावः ॥ १८ ॥

**उक्ताः किमर्था नरदृष्टिगम्याः स्वस्थानसंस्थै रचिताः समस्ताः ।**
**अत्राप्यदृश्याकृतिभिर्मुनीन्द्रविज्ञानदृष्टेरपि दूरदूरैः ॥ १९ ॥**

**व्या :** ननु सत्यलोके नराभावेऽपि नरलोकस्थनरविडम्बनार्थमिदं भवत्वित्याशङ्क्य स्वस्वलोकस्थदेवैः कृतस्यार्थस्य नरदर्शनायोग्यत्वान्नेत्याह – **उक्ता** इति। **स्वस्वस्थानसंस्थैः** ब्रह्मादिभिः **रचिताः** कृताः **समस्ताः उक्ताः** पूर्वोक्ता **अर्थाः** क्षीरसमुद्रयात्राहर्युपासनादिप्रमेयानि **नरदृष्टिगम्याः किम्** । अत्रत्यनरैः लोकान्तरे कृतस्य द्रष्टुमशक्यत्वादिति भावः । ननु माऽस्तु स्वलोकस्थैः कृतस्य अत्रत्यनरदृष्ट्ययोग्यत्वात् नरविडम्बनार्थता । नरलोकमागत्य तैः कृतस्य नरविडम्बनार्थता उपपद्यत इत्यत आह – **अत्रापीति** । **अत्रापि** मनुष्यलोकेऽपि **अदृश्याः** नरैः द्रष्टुमशक्याः **आकृतयः** शरीराणि येषां तैः **मुनीन्द्राणां विज्ञानदृष्टेरपि दूरदूरैः** ब्रह्मादिभिः रचिताः कृता अपि अर्थाः गर्भस्तुतिरूपाः **नरदृष्टिगम्याः** किम् । अत्रापि कृतस्य नरविडम्बनार्थता न सम्भवतीति भावः ॥ १९ ॥

**पुरोग्रभस्मासुरघातकाले नरानुकारस्य हि काऽस्ति युक्तिः ।**
**मुनेश्च सत्तत्त्वविचारहेतोर्गतस्य मर्त्यानुकृतिः किमर्था ॥२०॥**

**व्या :** इतोऽपि नरानुकारार्थता न सम्भवतीत्याह – **पुरेति** । **पुरा** पूर्वम् **उग्रभस्मासुरस्य** मरणभीत्या पलायमानं शिवम् अनुधावतो भस्मासुरस्य । **घातकाले नरानुकारस्य** पलायने नरानुकारस्य । **युक्तिः** उपपत्तिः **काऽस्ति**। नास्तीत्यर्थः । स्वप्राणसङ्कटे स्व सामर्थ्यस्य सर्वैः प्रदर्शनीयत्वादिति भावः। किञ्च **सत्तत्त्वविचारहेतोः** तत्त्वविचारार्थं **गतस्य** कैलाससत्यलोकवैकुण्ठलोकान् प्रति गतस्य । **मुनेश्च** भृगोः । **मर्त्यानुकृतिः** मनुष्यानुकरणं

किमर्थं तत्त्वविचारकाले तत्त्वस्यैव निरूपणीयत्वेन मनुष्यवदनृतकथनस्यानुचितत्वादिति भावः ॥ २० ॥

**मर्त्यानुकारोऽपि हि मर्त्यलोकं प्राप्तस्य युक्तो नरदृष्टिमार्गे ।**
**कैलासशैलं स्वजनस्य मध्ये विज्ञाप्य कृष्णोऽगमदागमच्च ॥२१॥**

**व्या :** श्रीकृष्णस्य तु मर्त्यानुकरणं घटते इत्याह – **मर्त्यानुकारोऽपीति** । **हि** यस्मात् **मर्त्यानुकारोऽपि मर्त्यलोकं प्राप्तस्य युक्तः** । तस्मात् श्रीकृष्णः **स्वजनस्य मध्ये नरदृष्टिमार्गे विज्ञाप्य** 'मया कैलासं प्रति गम्यते । तावत् पुरीयं रक्षणीया' इत्याद्याघोष्य **कैलासशैलमगमत् आगमच्च** । विडम्बनीयनराणां विद्यमानत्वात् कैलासयात्रा नरविडम्बनाय कृतेति वक्तुं युक्तमिति भावः ॥२१॥

**यदा स पुत्रं निजनाभिजातकुशेशयात् प्राग्जनयाम्बभूव ।**
**तदा शिवः कुत्र वरस्य दाता तदीयफालान्तरजन्मभूमिः ॥२२॥**

**व्या :** श्रीकृष्णाय पुत्रप्राप्तिरूपवरदानात् शिवस्य कृष्णाधिक्यं भवत्वित्याशङ्कायामाह – **यदेति** । **स** श्रीकृष्णः । **प्राक्** पूर्वम् । **निजनाभिजातकुशेशयात्** स्वनाभिजातात् कमलात् । **यदा पुत्रं** ब्रह्माणं **जनयाम्बभूव** जनयामास । 'यो ब्रह्माणं विदधाति पूर्वम्'[१] इति श्रुतेः । **तदा तदीयं** तस्य चतुर्मुखस्य सम्बन्धि । यत् **फालान्तरं** ललाटमध्यमेव **जन्मभूमिः** उत्पत्तिस्थानं यस्य स तथोक्तः । **वरस्य दाता** शिवः । **कुत्र** कुत्रत्यः । पद्मजोत्पत्तिकाले तत्पुत्रस्य शिवस्याभावादिति भावः । तस्मात् स्वत एव पुत्रजननसमर्थस्य श्रीकृष्णस्य असमर्थाच्छिवात् वरादानमपि विडम्बनार्थमेवेति भावः ॥ २२ ॥

---

१ ऋग्वेदे

**यद्वाहनीभूतगरुत्मदोजो विद्रावयामास पिनाकपाणिम्[१] ।**
**तस्य प्रसादात् स सुतं जगामेत्युक्तिर्न विद्वज्जनमाननीया ॥२३॥**

**व्या :** शिवस्य वरदानेऽसामर्थ्यं दर्शयति – **यद्वाहिनीभूतेति** । यस्य श्रीकृष्णस्य वाहिनीभूतः वाहनभूतः गरुत्मान् गरुडः तस्य ओजः **गरुत्मदोजः** । **पिनाकपाणिं** शिवम् । **विद्रावयामास** ।

'तूर्णं गृहीत्वा पाणिभ्यां विषाणे तस्य नन्दिनः ।
सशूलपाणिं चिक्षेप वैनतेयो धनुःशतम् ॥'[२]

इति वचनात् **तस्य** तादृशशिवस्य **प्रसादात् सः** कृष्णः **सुतं जगाम** प्राप **इत्युक्तिः** वचनम् । **न विद्वज्जनमाननीया** बुधैरादरणीया न भवति । नहि विद्वांसः 'असमर्थः समर्थाय वरं दत्तवान्' इत्युक्तिं सहन्त इत्यर्थः ॥ २३ ॥

**मदन्यसेवैहिककामदात्रीत्युदीरयन् सर्वसुराग्रगण्यः ।**
**स्वपौत्रयात्रां विरचय्य सूनुमवाप पापौघतमिस्रभानुः ॥२४॥**

**व्या :** तर्हि शिवात् किमर्थं वरं गृहीतवानित्यत आह – **मदन्येति** । **मदन्यसेवा** मदन्यदेवतासेवा । **ऐहिककामदात्री** पुत्रसम्पदाद्यैहिकफलमात्रदायिनी, नतु मत्पूजावत् मोक्षदात्री **इत्युदीरयन्** दृष्टान्तमुखेन स्पष्टयन् । **सर्वसुराग्रगण्यः** सकलदेवतोत्तमः **पापौघतमिस्रभानुः** श्रीकृष्णः । **स्वपौत्रयात्रां विरचय्य सूनुं** पुत्रम् । **अवाप** । श्रीकृष्णेन पुत्रार्थं न शिवपूजा कृता । तस्य स्वपौत्रत्वात् । न वा पापपरिहाराय । अवद्यगन्धविधुरत्वात् । अत एव **पापौघतमिस्रभानुरित्युक्त**मिति भावः ॥ २४ ॥

---

१ शिवं च शक्रार्थमुपागतं हरिर्न्यवारयच्छार्ङ्गविनिःसृतैः शरैः ।
सवाहनो दूरतरे निपातितो गरुत्मता शम्भुरगाच्छराहतः ॥
- इति म.भा.ता.नि. (२०/३३०)

२ भागवते (१०/६६/४८)

**आनन्दाम्बुधिमग्नमूर्तिरुदयन्मोदाश्रुधाराजलं**
**भर्त्रङ्घ्रौ प्रणिधाय कायकनकं कृष्णार्पितं याऽतनोत् ।**
**या तद्गात्रहरिन्मणिं करवशं चक्रेऽनवाप्तोऽनया**
**कोऽर्थो या कमला विमुक्तकबरी गर्भे दधार स्मरम् ॥२५॥**

**व्या :** प्रासङ्गिकं समाप्य रुग्मिण्याः धर्मार्थकाममोक्षाख्यचतुर्विधपुरुषार्थसम्पत्तिं शृङ्गारमुखेनैव वर्णयन् कुमारोदयप्रकरणं वर्णयति – **आनन्देति**। **आनन्दाम्बुधिमग्नमूर्तिः** नित्यमुक्तत्वादिति भावः । श्रीकृष्णेन स्वगृहं प्रत्यागते सति आनन्दाम्बुधौ सुखसमुद्रे मग्ना मूर्तिर्यस्याः सा । श्रीकृष्णदर्शने सति सर्वाङ्गे जातपुलकेत्यर्थः । समुद्रे कृतस्नानेत्यपि ध्वनिः । **या** रुग्मिणी । **उदयन्मोदाश्रुधाराख्यजलम्** । **भर्तुः** श्रीकृष्णस्याङ्घ्रौ । जात्येकवचनमिदम् । अङ्घ्र्योरित्यर्थः । **प्रणिधाय** स्थापयित्वा । श्रीकृष्णचरणयोः स्वमुखं निक्षिप्य नमस्कारे कृते सति स्वनयनादुद्भूतानन्दजलं पादद्वये निक्षिप्येत्यर्थः । दानधाराजलं भर्तृत्वादतिमहत्वाच्च करे दानमनुचितमिति पदयोरेव दत्वेत्यर्थः । अनेन दानोचितधाराजलं रतेरादिं च ध्वनयति । स्व**कायाख्यकनकं** रुग्मिण्याः सुवर्णवर्णत्वादिति भावः । **श्रीकृष्णार्पितं** श्रीकृष्णकरयोर्दत्तं श्रीकृष्णेन गाढमालिङ्गितमिति ध्वनिः । **अतनोत्** । नमस्कृत्य लज्जया तूर्ष्णीं स्थितां श्रीकृष्ण एव प्रथममालिङ्गितवानिति भावः । अनेन स्नात्वा जलधारापूर्वकं श्रीकृष्णार्पणबुद्ध्या सुवर्णदानरूपं धर्माख्यं पुरुषार्थं रतिमध्यस्यारम्भं च सूचयति । **या तस्य** श्रीकृष्णस्य **गात्राख्यहरिन्मणिम्** अनर्घ्येन्द्रनीलरत्नं **करवशं** स्वपाणिद्वयवशं **चक्रे** । स्वपाणिभ्यां श्रीकृष्णाङ्गं दृढमालिङ्गितवतीत्यर्थः । अनेन अर्थाख्यपुरुषार्थम् अन्योन्यालिङ्गनाख्यं रतिमध्यं च वर्णितम् । **या कमला विमुक्तकबरी** सती **स्मरं** कामं **गर्भे दधार** । अनेन कामाख्यपुरुषार्थप्राप्तिः विमुक्तकबरीपदेन मोक्षाख्यपुरुषार्थो रत्यवसानं च वर्णितं भवति । अत एव

**अनया** रुग्मिण्या **कः अर्थः** पुरुषार्थः **अनवाप्तः** । न कोऽपि । चतुर्विधपुरुषार्थाः प्राप्ता एव । उक्तया वाचोभङ्ग्या चतुर्विधपुरुषार्थलाभस्य ध्वनितत्वादिति भावः। स्वप्रियपुरुषसमागमः स्त्रीणां पुरुषार्थचतुष्टयलाभस्यापि समान इति हृदयम् ॥२५॥

**गर्भं बभार गजरम्यगतिः स्वकान्ता-**
**न्मध्ये मनोज्ञमदनात्मकमब्धिपुत्री ।**
**हृद्यप्ययोगचकिते हृदयङ्गमस्य**
**[1]मर्त्यानुकारचरितस्य तमेव[2] तन्वी ॥ २६ ॥**

**व्या :** गर्भमिति । **गजरम्यगतिः अब्धिपुत्री तन्वी** कृशाङ्गी रुग्मिणी । **मध्ये** स्वोदरे **मनोज्ञमदनात्मकं गर्भं स्वकान्तात्** बभार दधौ । **हृदयङ्गमस्य** मनोहरस्य । **मर्त्यानुकारिचरितस्य** । 'अऋतौ गर्भिणीं चैव गत्वा चान्द्रायणं चरेत्' इति स्मृतेः । मर्त्यवत् निषिद्धाचारमकुर्वतः श्रीकृष्णस्य **अयोगचकिते** विरहभीते **हृदि** मनस्यपि **तमेव** कामरूपमेव **गर्भं बभार** । गर्भधारणानन्तरं सम्भोगस्य निषिद्धत्वात्। स्वयमपि मर्त्यानुचरिता रुग्मिणी सदा श्रीकृष्णसङ्गमेव कामयमाना तिष्ठतीत्यर्थः ॥ २६ ॥

**मारं कुमारं सुषुवेऽथ भैष्मी शौरेर्जितारेरनुरूपरूपम् ।**
**प्राचीव शोचिश्शतपूरिताशं प्राचां सुवाचां विषयं निशेशम् ॥२७॥**

**व्या :** मारमिति । **अथ** अनन्तरम् । **भैष्मी** रुग्मिणी । **जितारेः शौरेः** श्रीकृष्णस्य। **अनुरूपम्** अनुगुणं **रूपं** यस्य तम् । **मारं** कामं **कुमारं** बालम् ।

---

१ मर्त्यावतारस्त्विह मर्त्यशिक्षणम् ... - इति भागवते (५/१९/५)

२ यां यां परेश उरुधैव करोति लीलां
तां तां करोत्यनु तथैव रमापि देवी ॥ - इति म.भा.ता.नि. (५/३५)

सुषुवे । कथमिव । **प्राची** दिक् **शोचिःशतेन** किरणशतेन **परिपूरिताः आशाः** येन तम् । **प्राचां** प्राचीनकवीनां **सुवाचां** वर्णनं कुर्वद्वचनानां **विषयं निशेशं** चन्द्रमिव ॥ २७ ॥

**यः कर्णे निजचिह्नमुन्नतशरान् दन्तोष्ठदृग्दोःपदे**
**स्वाङ्गं मध्यतनौ भ्रुवोर्वरधनुर्मौर्वीं लसत्कुन्तले ।**
**माल्ये मन्त्रिणमानने च सुहृदं वाक्येऽर्पयित्वा शुकं**
**तद्गात्रं रचयाम्बभूव स सुतस्तस्य स्मरोऽभूत् किल ॥२८॥**

**व्या : य** इति । **यः** स्मरः श्रीकृष्णस्य **कर्णे निजचिह्नं** स्वध्वजलाञ्छनं मकरम् । **अर्पयित्वा** निधाय । मकराकारकुण्डलधारित्वात् श्रीकृष्णकर्णस्येति भावः । **उन्नतशरान्** मल्लिकाचूतेन्दीवरारविन्दाशोकाख्यान् बाणान् । क्रमात् **दन्ताश्च ओष्ठश्च दृशौ च दोश्च पदं** च तस्मिन् **दन्तोष्ठदृग्दोःपदे** । 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्'[१] इति एकवद्भावः । **अर्पयित्वा** दन्तादीनां मल्लिकाकुड्मलादिसदृशत्वादिति भावः । **मध्यतनौ** तनुमध्ये **स्वाङ्गं** स्वशरीरम् **अर्पयित्वा** । कामस्य शून्याङ्गत्वात् । श्रीकृष्णमध्यस्यापि अतिसूक्ष्मत्वेन शून्यप्रायत्वादिति भावः । **भ्रुवोर्वरधनुरर्पयित्वे**ति प्रत्येकं सम्बन्धः । भ्रूमण्डलस्य धनुराकारत्वादिति भावः । **लसत्कुन्तले मौर्वीं** भृङ्गमयीम् **अर्पयित्वा** । कुन्तलानामन्योन्यबद्धभृङ्गाकात्वादिति भावः । **माल्ये** वनमालायां **मन्त्रिणं** कुसुमाकरं वसन्तम् **अर्पयित्वा** । वनमालायाः नानाकुसुमाकरत्वादिति भावः । **आनने सुहृदं** काममित्रं चन्द्रं **अर्पयित्वा** । मुखस्य चन्द्राकारत्वादिति भावः । **वाक्ये** शुकम् **अर्पयित्वा** । कृष्णवचसां शुकवाक्यवन्मनोहरत्वादिति भावः । **तद्गात्रं** श्रीकृष्णशरीरं **रचयाम्बभूव** । **स स्मरः** तस्य श्रीकृष्णस्य **सुतोऽभूत्** किल । ध्वजशरादिस्वसन्नाहमुपादानीकृत्य श्रीकृष्णशरीरं कृतवतो मदनस्य श्रीकृष्णपुत्रत्वमनुचितम् ।

---

१ पा.सू.(२/४/२)

प्रत्युत वैपरीत्यस्यैवोचितत्वादिति **किलशब्दार्थः** । कामसर्वसन्नाहवर्णनस्य श्रीकृष्णसर्वाङ्गवर्णनस्य च युगपदेव कृतत्वादिति **चमत्कारोऽयम्** ॥ २८ ॥

**तारुण्यलावण्यसुवीर्यधैर्यकारुण्यमुख्यैर्द्रविणैः प्रकृष्टः ।**
**प्रद्युम्ननामार्थमसौ कुमारः प्रद्युम्नमुख्यांशयुतः[1] पिपर्ति ॥२९॥**

**व्या :** तारुण्येति । **तारुण्यलावण्यसुवीर्यधैर्यकारुण्यमुख्यैः द्रविणैः** हिरण्यैः **प्रकृष्टः प्रद्युम्न**नामकस्य विष्णोः **मुख्यांशयुक्तः असौ कुमारः प्रद्युम्नः प्रद्युम्ननामार्थं** प्रकृष्टं द्युम्नं द्रविणं यस्येति व्युत्पत्त्या प्रद्युम्नशब्दार्थः। 'हिरण्यं द्रविणं द्युम्नम्' इत्यमरः । **पिपर्ति** पालयति । 'पॄ पालनपूरणयोः' इति धातुः । तारुण्यादिप्रकृष्टद्रव्योपेतत्वात् प्रद्युम्नांशयुक्तत्वाच्च अस्य प्रद्युम्नाम अन्वर्थमित्यर्थः ॥२९॥

**स रुग्मवत्यां किल रुग्मिपुत्र्यां हरेः सुतोऽजीजनदात्मजातम् ।**
**असूत तं याऽमलहेमकल्पमसौ स्वनामोचितमेव बभ्रे ॥३०॥**

**व्या :** स इति । सः हरेः सुतः प्रद्युम्नः । **रुग्मिपुत्र्यां** रुग्मिणः भीष्मकसुतस्य पुत्र्यां **रुग्मवत्या**ख्यायां **आत्मजातं** सुतम् **अजीजनत्** । जनयामास । **या अमलहेमकल्पं** निर्मलहेमसदृशं सुतम् । **असूत** । **असौ** रुग्मवती **स्वनाम** रुग्मवतीति स्वनामधेयम् **उचितम्** रुग्ममस्या अस्तीत्यन्वर्थं **बभ्रे** ॥ ३० ॥

---

१ अधत्त पुत्रमुत्तमं मनोभवं पुरातनम् ।
चतुस्तनोर्हरेः प्रभोस्तृतीयरूपसंयुतः ॥
३. ततस्तदाह्वयोऽभवत् स रुग्मिणीसुतो बली ॥
-इति म.भा.ता.नि. (१७/१८१, १८२)
प्रद्युम्ने चानिरुद्धे च बलदेवे च केशवः ।
सन्निधानं विशेषेण करोति जगतां पतिः ॥ -इति भा. तात्पर्ये (१०/२८/२२)

**सपत्नसैन्यैरनिरुद्धमाजौ यमामनन्ति ह्यनिरुद्धसञ्ज्ञम् ।**
**सदाऽऽश्रिताभीप्सितवित्तराशिप्रदानकालेऽप्यनिरुद्धमन्यैः ॥३१॥**

**व्या :** सपत्नेति । आजौ युद्धे । सपत्नसैन्यैः शत्रुसैन्यैः । अनिरुद्धं अनिवारितम् । सदा आश्रिताभीप्सितवित्तराशिप्रदानकालेऽपि अन्यैः अनिरुद्धं यं कुमारम् अत एवानिरुद्धसञ्ज्ञम् आमनन्ति वदन्ति ॥ ३१ ॥

**उषाभिधायां स च वज्रसंज्ञमजीजनद्वैरिनगौघवज्रम् ।**
**तमःसमुन्मूलनमुज्ज्वलन्तमुषस्यशीतांशुमिवोदयाद्रिः ॥३२॥**

**व्या :** उपेति । सः अनिरुद्धः । उषाभिधायां उषानाम्न्यां भार्यायाम् । वैरिण एव **नगाः** पर्वताः तेषां **ओघस्य** समूहस्य **वज्रम्** । अत एव **वज्रसञ्ज्ञं** सुतम् **अजीजनत्** जनयामास । कथमिव । **उदयाद्रिः** उदयपर्वतः **उषसि** उषःकाले **तमसः** अन्धकारस्य **समुन्मूलनं** यस्मात् तम् । **उज्ज्वलन्तं** प्रकाशमानं **अशीतांशुमिव** सूर्यमिव ॥ ३२ ॥

**यः पृथ्वीपतिमौलिरत्नघटितश्रीपादपीठः क्षितौ**
**यः स्वर्गीश्वरफालमण्डनकरश्रीपादरेणुर्दिवि ।**
**यः श्रेयःपथपान्थसज्जनमनःपाथेयगेयोदय-**
**स्तस्य द्वारवती पुरी प्रियतमा सेयं बभूवासमा ॥ ३३ ॥**

**व्या :** य इति । **यः क्षितौ पृथ्वीपतीनां** राज्ञां **मौलिरत्नैः** मुकुटरत्नैः **घटितं** सङ्घृष्यमाणं **श्रीपादपीठं** श्रीपादपादुका यस्य सः । समस्तपृथिवीपतिभिः नमस्कृत इत्यर्थः । **यः** श्रीकृष्णः । **दिवि** स्वर्गे **स्वर्गीश्वराणां** देवानां **फालस्य** ललाटस्य **मण्डनं करोती**ति स तथोक्तः । स चासौ **श्रीपादरेणुर्यस्य** सः । देवैरपि नमस्कृत इत्यर्थः । **यः श्रेयःपथपान्थाः** मोक्षमार्गपथिकाः ते च ते **सज्जनाः** तेषां **मनसः पाथेयभूतः** पथि गमनसमये स्वभोजनार्थं विक्रेयद्रव्यभूत इत्यर्थः । **गेयः** उदयो

यस्य सः । मोक्षमार्गे निरतैः सद्भिर्गेय इत्यर्थः । **तस्य** श्रीकृष्णस्य **सेयम् असमा द्वारवती पुरी प्रियतमा बभूव** ॥ ३३ ॥

**मध्येसमुद्रं मणिमञ्जुमौलिविद्योतिताशादशकः स देवः ।**
**अद्यापि भैष्म्या सह भासयंस्तामाद्यः पुमानार्यवृतः किलास्ते ॥३४॥**

**व्या :** मध्येसमुद्रमिति । **मणिभिः मञ्जुः** मनोहरः **मौलिः** तेन **विद्योतितम् आशादशकं** यस्य स तथोक्तः । **आद्यः** पुराणः **पुमान्** पुरुषः । **आर्यैः** ऋष्यादिभिः **वृतः स देवः** श्रीकृष्णः । **अद्यापि** अधुनाऽपि समुद्रस्य मध्ये **मध्येसमुद्रम्** । 'पारे मध्ये षष्ट्या वा'[1] इति समासः । **तां भासयन् भैष्म्या सह आस्ते** तिष्ठति । द्वारवत्याम् अद्यापि श्रीकृष्णो रुग्मिण्या सह तिष्ठतीति पौराणिकी कथा[2] ॥ ३४ ॥

**कुशस्थली[3] सा कुशलैकगम्या प्रशस्तकीर्तेः प्रथिता पुरीयम् ।**
**शरीरिणां सर्वपुमर्थसार्थकरी नरीनर्तु मदन्तरङ्गे ॥ ३५ ॥**

**व्या :** कुशस्थलीति । **शरीरिणां सर्वपुमर्थसार्थकरी** सकलपुरुषार्थसमूहप्रदा। **कुशलैकगम्या** सज्जनैकगम्या । **प्रथिता** पुराणादिषु प्रसिद्धा । **प्रशस्तकीर्तेः** श्रीकृष्णस्य । सेयं कुशस्थली द्वारवती **पुरी मदन्तरङ्गे** मम मानसे **नरीनर्तु** नृत्यतु। सदा मद्ध्यानगोचराऽस्त्वित्यर्थः ॥ ३५ ॥

**वन्दारुद्विजवर्यवाञ्छितनिजध्यानःक्षमाशङ्करः**
**स्वर्वाग्मिव्रजवर्ण्यदिग्विततिकृत्कर्मौघराजत्करी ।**

---

१ पा.सू.(२/१/१८)

२ नित्यं सन्निहितस्तत्र भगवान् मधुसूदनः । - भा.११/३१/२४

३ त्रिविक्रमो विजयते त्रयीविख्यातविक्रमः ।
यः कुशं दमयित्वेमां चक्रे विप्रकुशस्थलीम् ॥ - इति तीर्थप्रबन्धे (१/९१)

**रुद्राणीपतिमान्यराजितगतिः सत्यासहायः सतां**
**तां रेमे वरदः स्वबन्धुरुचिरां रक्षन् पुरीमद्भुताम् ॥३६॥**

**व्या : वन्दारुद्विजवर्येति** । **वन्दारुद्विजवर्यैः** वन्दनशीलब्राह्मणश्रेष्ठैः **वाञ्छितः निजध्यानो** यस्य स तथोक्तः । क्षमाया: भूमेः शं सुखं करोतीति **क्षमाशङ्करः** । **स्वः** स्वर्गे ये **वाग्मिनो** बृहस्पत्यादयः तेषां **व्रजेन** समूहेन **वर्ण्यानि दिक्षु विततिं** विस्तारं **कुर्वतीति** दिग्विततिकृन्ति । दिक्षु विस्तृतानीत्यर्थः । तानि च तानि **कर्माणि** च तेषाम् **ओघैः** समूहैः **राजत्करी** अस्यास्तीति **स्वर्वाग्मिव्रजवर्ण्य-दिग्विततिकृत्कर्मौघराजत्करी** । **रुद्राणीपति**ना पार्वतीपतिना शिवेन । **मान्या** मानिता **राजितगतिः** शोभितगतिः । कैलासयात्राख्या यस्य स तथोक्तः । **सत्यासहायः** सत्यभामा सहायो यस्य स तथोक्तः । **सतां वरदः** श्रीकृष्णः **स्वबन्धुभिः** यादवैः सह **रुचिराम् अद्भुताम्** आश्चर्यभूतां **तां पुरीं रक्षन् रेमे**। **चक्रबन्धोऽयं श्लोकः** । अस्मिन् श्लोके **वादिराजकृतरुग्मिणीशविजय** इति कविनाम काव्यनाम चास्तीति द्रष्टव्यम् । **चक्रबन्धोद्धारप्रकारस्तु** – मण्डलाकारेण एकां रेखां लिखित्वा मध्ये पश्चिमभागस्थितरेखामारभ्य पूर्वभागस्थरेखापर्यन्तं पूर्वायामं रेखाद्वयं मध्ये यथा वीथी भवति तथा लिखेत् । तथोत्तरभागस्थितरेखामारभ्य दक्षिणायामं रेखाद्वयं दक्षिणभागास्थितरेखापर्यन्तं मध्ये यथा वीथी भवति तथा लिखेत् । तथा वायव्यदिग्भागस्थितरेखामारभ्य आग्नेयदिग्भागस्थितरेखापर्यन्तं दीर्घाकारेण रेखाद्वयं पूर्ववल्लिखेत् । एवं वीथीत्रयलेखने षट्कोणचक्राकारता भवति । तत्र एकैकपादस्थिता-ष्टादशाक्षराणां वीथीत्रयस्यादावन्ते च अष्टादशाक्षरस्थानानि यथा भवन्ति तथा परितः पुनरपि रेखाष्टकं लिखेत् । पादत्रयमध्यस्थितैकवर्णस्य मध्ये एकमेव स्थानं कल्पयेत् । एवम् एकोनविंशतिवर्णात्मकपादत्रयं प्रागायतवीथीम् आरभ्य वीथीत्रये लिखेत् । अन्त्यपादस्थितैकोनविंशत्यक्षरेषु आद्याक्षरं पुनर्वर्णद्वयमध्य-स्थितपञ्चाक्षराणि च विहाय द्वे द्वे अक्षरे वीथीत्रयमध्यस्थितषट्कोणेषु लिखेत् ।

उर्वरितानि षडक्षराणि तु पादत्रयाद्यन्तस्थषडक्षरात्मकत्वात् न पृथक् लिखेत्। एवं चक्रबन्धे श्लोकपादचतुष्टयाक्षराणां लेखने कृते सति वीथीत्रयस्थितपादत्रयादि-भागस्थवर्णत्रयात् तृतीयेषु स्थानत्रयेषु वीथीत्रयस्थपादत्रयान्तिमवर्णत्रयात् पूर्व-भागस्थितस्थानत्रितयेन **रुग्मिणीशविजय** इति काव्यनाम भवति। पूर्ववत् पादत्र-यादिभागस्थाष्टमस्थानत्रिके चरमभागस्थिताष्टमस्थानत्रिके च **वादिराजकृति-**रिति कविनाम च भवति । स्थानपञ्चके वर्णद्वयं द्वेधा यथा आयाति मध्यस्थाने अन्तिमस्थाने च वर्णद्वयं द्वेधा यथा आयाति द्वादशस्थानेषु काव्यनाम कविनाम च यथा आयाति तथा प्रागेवालोच्य पद्यरचना कर्तव्या । अतः कवेरिदं महत्कौशलम् ॥ ३६ ॥

**कृष्णस्योदयवर्णनैः सुचरितस्तोमस्तवैः सूक्तिभिः**
**सुश्लोकैः सुभगा रसैश्च विविधैः स्वानन्दसर्गैर्वृता ।**
**दुष्टागम्यनिजार्थतोषितखगा साऽस्याः कृतेर्वैखरी**
**विभ्राणेव विभाति [१]विट्ठलपुरी विष्वक्सुवर्णोज्वला ॥३७॥**

**व्या**:॥ कृष्णस्येति – **कृष्णस्य उदयः** धनागमाद्युदयः तस्य **वर्णनैः** इन्द्रेण सुधर्मा दत्ता। कुबेरेण निधयो दत्ताः। समुद्रेण नानाविधरत्नानि दत्तानि। भूस्थराजादिभिः नानाविधद्रविणानि दत्तानि। इत्यादिवर्णनैः श्रीकृष्णस्य **सुचरितानां** दानव्रतयज्ञ ादिसत्कर्माचरणानां **स्तोमः** समूहः तस्य **स्तवैः** स्तुतिभिः । कृष्णस्य **सूक्तिभिः** मनोहरवचनैः श्रीकृष्णस्येति सर्वत्र सम्बन्धः । श्रीकृष्ण**सुश्लोकैः** दुष्टसंहरणस

१ वेदनं वित् ज्ञानम् । विद् ज्ञानेऽस्मात् 'सम्पादादिभ्यः क्विप्' (३/३/६४) इति भावे क्विप्, तेन ठाः शून्याः, ठः शून्ये च बृहद्ध्वनावित्यभिधानात् । तान् लाति स्वीकरोतीति विट्ठलः । लाऽऽदानेऽस्मात् 'आतोऽनुपसर्गे कः' (३/२/३) इति कः । आतो लोपश्चेत्यालोपः । अज्ञानुग्राहक इत्यर्थः ।'' इति .... अन्ये तु ''वेथनं वित्, याञ्चा विथ् याचते क्विबन्तः । तया ठाः शून्या निस्पृहस्तान् लातीति विट्ठल' इति व्याचक्षते'' – इति च तत्रैव ।		- इति प्रक्रियाकौमुदीव्याख्यायाम् (प्रकाशे)

|मुद्रामृतीकरणादिशोभनयशोभिः **सुभगा** मनोहरा। काव्यपक्षे तु केषुचित्सर्गेषु श्रीकृष्णस्योदयवर्णनैः अलौकिकाकारेणायमुदितो न तु लौकिको बाल इवेति वर्णनैः सूर्योदयसाम्यादिवर्णनैश्च **सुभगा** । केषुचित्सर्गेषु चरितस्तोमैः पूतनावधमारभ्य रुग्मिणीविवाहकुमारोदयपर्यन्तं सुचरितानां स्तोमस्तवैः **सुभगेति** सर्वत्र सम्बन्धः । **सूक्तिभिः** उत्प्रेक्षाद्यलङ्काररचितवचनैः **सुश्लोकैः** अनुप्रासाद्यलङ्कृतपद्यैः **सुभगा** । समीचीनः आनन्दः **स्वानन्दः** सुखं तस्य **सर्गः** उत्पत्तिः येभ्यस्ते तथोक्ताः तैः । **विविधैः रसैः** मधुरादिषड्रसैः **वृता**। काव्यपक्षे विविधैः रसैः शृङ्गारादिभिः शोभनः आनन्दः येभ्यस्ते स्वानन्दाः ते च ते सर्गाः तैः । शुभकरपरिच्छेदैः वृता । **दुष्टैः** दुर्जनैः **अगम्याः** अप्राप्याः **निजार्थाः** स्वोपवनादिषु विद्यमानफलादिपदार्थाः **तैस्तोषिताः खगाः** पक्षिणो यया सा। काव्यपक्षे **दुष्टैः** अव्युत्पन्नैः **अगम्याः** ज्ञातुमशक्याः **निजार्थाः** शब्दार्थाः तैः **तोषिताः** । खे आकाशे गच्छन्ति ते **खगाः** देवाः यया सा । **विष्वक्** समन्तात् **सुवर्णेन** हेम्ना **उज्ज्वला** । काव्यपक्षे समीचीनवर्णैः अक्षरैः **उज्ज्वला**। **सा विट्ठलपुरी** श्रीकृष्णपुरी द्वारावती **अस्याः कृतेः** काव्यस्य **वैखरीं** प्रौढिं **बिभ्राणेव विभाति** ।। ३७ ।।

**यस्मिन् मङ्गलदेवताऽखिलजगन्माता रमा नायिका**
**पद्मापद्मभवादिसेव्यचरणस्तद्वल्लभो नायकः ।**
**अश्वग्रीवदयापयोब्धिफलितं प्राग्र्योक्तिरत्नोज्ज्वलं**
**तद्दासानुगवादिराजरचितं काव्यं विभाव्यं बुधैः ।।३८।।**

**व्या :** एवं समापितकाव्यः कविः **कविकुलाग्रेसरः श्रीवादिराजमुनिः** स्वकृतस्य काव्यस्य नायिकानायकौ प्रदर्शयन् सर्वोपादेयतामाह – **यस्मिन्निति** । **यस्मिन्** काव्ये । **मङ्गलदेवता अखिलजगन्माता रमा** रुग्मिणी **नायिका**। **पद्मा** लक्ष्मीः **पद्मभवो** ब्रह्मा तदादिभिः **देवैः सेव्यचरणः** । तस्याः रुग्मिण्याः **वल्लभः**

प्रियः श्रीकृष्णः **नायकः** । **अश्वग्रीवस्य दया** कृपैव **पयोब्धिः** क्षीरसमुद्रः तेन **फलितानि** उत्पन्नानि **प्राग्र्योक्तिरत्नानि** । तैः **उज्ज्वलम्** । **तस्य** हयग्रीवस्य **दासाः** श्रीमदाचार्यादयः तेषामनुगेन भृत्येन **वादिराजेन** वादिराजाख्ययतिना **रचितं काव्यम्** । **बुधैर्विद्वद्भिः** । **विभाव्यम्** उपादेयं प्रतिपाद्यम् । नायिकानायकयोरत्युत्तमत्वात् इदं **काव्यं** विद्वद्भिरुपादेयं भवेदित्यर्थः ॥ ३८ ॥

**कृष्णः काव्यकृते स्वहस्तकमलच्छत्रं प्रदद्यात् प्रभुः**
**सच्छास्त्राभिधरम्यराज्यपदवीं[१] सुज्ञानयानं मुदा ।**
**स्वाङ्घ्र्याराधनकङ्कणं करयुगे कैङ्कर्यहारं गले**
**स्वात्मानं हृदि नित्यचिन्तनधनं सद्युक्तिरत्नान्यपि ॥३९॥**

**व्या :** इदानीं विरक्तयतित्वेन लौकिकफलानपेक्षः काव्यकर्ता कविः लौकिकानां कटकछत्रशिबिकादीनामेव लोके श्लाघ्यत्वात्, लौकिकफलोपमतया स्वालौकिकफलं काव्यनायकादभ्यर्थयते – **कृष्ण** इति । **प्रभुः** काव्यनायकः **श्रीकृष्णः काव्यकृते** मह्यं **मुदा** प्रीत्या **स्वहस्तकमलच्छत्रं प्रदद्यात्** । स्वहस्तकमलं मच्छिरसि निदध्यादित्यर्थः । छत्रस्यापि कमलाकारत्वात् मस्तकोपरि धार्यमाणत्वाच्च । स्वस्तोतुर्भक्तस्य मम मस्तके कृपया निक्षिप्तं हरेर्विस्तृतहस्तकमलमेव छत्रमिति भावः । **सच्छास्त्राभिधरम्यराज्यपदवीं** सत् निर्दोषं यच्छास्त्रं वेदान्तशास्त्रमित्यर्थः । तदिति अभिधा नाम यस्य तत्तथोक्तम् । यद्रम्यराज्यं तदेव पदवीं पदं ताम् । स्वप्रभुत्वपोषकस्य स्वेन सदा विचार्यमाणस्य राजयोग्यवस्तुनो राज्यत्वात् विद्वदग्रेसरत्वाख्यप्रभुत्वपोषणहेतुभूतं सदा

---

१ 'राज्यं मे तव शास्त्रमेव' (१२/२१)
'छत्रं मूर्ध्नि कृतं भवातपहरं हस्तारविन्दं तव ।
नित्यं भक्तिविरक्तिदैन्यशमनज्ञानादिलाभो धनम् ॥ (१२/२)
-इत्यादि उग्रसेनवचनत्वेन प्रागुक्तमत्राप्यनुसन्धेयम् ॥

विचारास्पदं यतिराजयोग्यं वेदान्तशास्त्रमेव मम राज्यमिति भावः । **सुज्ञानयानं** सम्यग्ज्ञानलक्षणान्दोलिकाम् अतिदूरस्थमोक्षनारीप्राप्तिहेतुभूतत्वात् ज्ञानस्य यानत्वमिति भावः । **करयुगे स्वाङ्घ्र्याराधनमेव कङ्कणं** रत्नखचितं कङ्कणम्। 'शावौ करौ नो कुरुतः सपर्यां हरेर्लसत्काञ्चनकङ्कणौ वा' इति[१] वचनात् हर्याराधनमेव करभूषणमिति भावः । **गले** कण्ठे **कैङ्कर्यहारं** दास्यरूपकण्ठमालाम् अवनतकन्धरस्यैव दासत्वात् । ''कामं तु दास्ये'' इत्युक्त्वा श्लाघ्यत्वाच्च दास्यमेव कण्ठभूषणमिति भावः । **हृदि स्वात्मानम्** । अतितुष्टो राजा सदा स्वभृत्यगृह एव तिष्ठतीत्यत इदं प्रार्थितमिति भावः । **नित्यचिन्तनधनं सदा** ध्यानलक्षणं धनम् । **सत्यो** निर्दुष्टाः या **युक्तयः** ता एव **रत्नानि** तान्यपि हरिसर्वोत्तमत्वसाधकयुक्तिरत्नान्यपि मुदा प्रदद्यात् । ध्यानस्य धनत्वं युक्तीनां रत्नत्वं च सुप्रसिद्धमेवेति भावः ।। ३९ ।।

**हंसानां हृदयङ्गमं कविलसद्भृङ्गादृतं मौक्तिक**
**प्रख्याप्रयोक्तिनवं प्रबन्धजलजं पादेऽर्पितं स्याद्धरेः ।**
**लक्ष्मीरम्यकरे वरामरतते: सन्मानसे शारदा-**
**नन्दं तत्पवनः स्वहृत्कृतगुणं विस्तारयत्वञ्जसा ।। ४० ।।**

**व्या :** इदानीं स्वकृतकाव्यं श्रीपरिवारसहितकृष्णार्पितं कुर्वन् काव्यस्य प्रचयं प्रार्थयमानः श्रीकृष्णमाहात्म्यवर्णनपरत्वात् श्रीकृष्णप्रियस्य स्वकाव्यस्य श्रीकृष्णचरणसमर्पणयोग्यतां रुग्मिणीरूपलक्ष्मीविवाहोत्सववर्णनेन श्रीकरपरिग्रहयोग्यतां सकलसुराणां स्वरूपेण परमप्रियत्वयोग्यतां वाग्विलासदात्र्याः भारत्याः सुखप्रदत्वयोग्यतां स्वमतरहस्यवर्णनपरत्वात् वैष्णवमतधुर्यमध्वाचार्यस्वरूपिपवनविस्तार्यत्वयोग्यतां रमादीनां हरिप्रसादालम्बित्वरूपतत्त्वं च स्पष्टं दर्शयितुं मृदुत्वमनोहरत्वादिगुणैः श्राव्यं काव्यं कमलतया वर्णयति –

१ भागवते २/३/२१

**हंसानामिति** । **प्रबन्धजलजम्** । काव्याख्यकमलं जलाज्जातमिति व्युत्पत्तेः । जलजमिति वदता स्वगर्वपरिहारोऽपि सूच्यते । कीदृशं प्रबन्धजलजम् । **नवम्** अपर्युषितम् । छायापहारमिति ध्वनिः । पुनः कीदृशम् । **हंसानां हृदयङ्गमम्**। हरिविषयकत्वात् परमहंसप्रियम् । कमलमपि हंसपक्षिप्रियम् । पुनः कीदृशम्। **कवय एव लसन्तो भृङ्गाः तैरादृतम्** । पुनः कीदृशम् । **मौक्तिकप्रख्याः** मुक्ताहारसदृशाः **अग्र्या** उत्तमाः **उक्तयो** यस्य स तथोक्तः तम् । कमलमपि निधितया मुक्ताफलजन्मभूमित्वात् मौक्तिकोपेतम् । एतादृशं प्रबन्ध एव काव्यमेव जलजं हरेः **पादे अर्पितं स्यादि**त्यन्वयः । कमलेन हरिचरणार्चनस्योचितत्वात् हरिचरणस्यापि कमलस्थानत्वादिति भावः । पश्चा**ल्लक्ष्मीरम्यकरे** अर्पितं स्यादिति सम्बन्धः । इदं **प्रबन्धजलजं लक्ष्मीः करेण** गृहीत्वा लालयत्वित्यर्थः । 'पद्मद्वयाभयकरोद्यतपद्महस्ताम्'[१]इत्युक्त्या लक्ष्मीकरस्य पद्मयोगस्थानत्वादिति भावः । अनन्तरं **वरामरततेः** उत्तमब्रह्मादिसमूहस्य **सन्मानसे** समीचीनमनसि अर्पितं स्यादित्यन्वयः । मानससरोवरे कमलावस्थितेरौचित्यादिति भावः। ब्रह्मादयो देवाः इदं काव्यं स्वमनसि आनीय सन्तोषं कुर्वन्त्वित्यर्थः । वागभिमानित्वात् विशिष्य सरस्वतीपरिग्राह्यत्वं मुख्यप्राणमतानुवृत्तित्वात् तेन प्रचयं च प्रार्थयमान आह – **शारदेति** । **पवनः** मुख्यप्राणः **शारदायाः** सरस्वत्याः **आनन्दः** सन्तोषो यस्मात् तत् तथोक्तम् । **स्वहृत्कृतगुणं** स्वहृदि अङ्गीकृतगुणः स्वमतोक्तरीत्या विष्णुसर्वोत्तमत्वादिभगवद्गुणवर्णनरूपगुणो यस्य तत्तथोक्तम् । स्वमतप्रतिपादितभगवन्महिम्नामेव वर्णनात् स्वमनःप्रियमिति भावः । कमलपक्षे **स्वहृदि** स्वान्तर्भागे **कृतः** स्थापितः **गुणः** सौरभ्यादिः येन तत् तत्काव्यजलजं **अञ्जसा** सम्यक् **विस्तारयतु** । यथा वायुः कमलोदरस्थसौरभ्यगुणं सङ्गृह्य दिक्षु विस्तारयति । तथा पवनरूपत्वान्मुख्यप्राणः स्वमतानुकूलमेतत् काव्यजलजं **विस्तारयतु** । सकलजनमनस्तोषकरतया दिक्षु दिक्षु बुधश्लाघ्यतरं करोत्वित्यर्थः ।

---

१ तन्त्रसारसङ्ग्रहे । (४/५६)

श्रीहरिचरणसमर्पणानन्तरं लक्ष्म्यादीनां प्रियत्वोक्तेः तेषां तद्दासता सूचितेति सर्वमवदातम् ॥ ४० ॥

**रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि**
**प्रेम्णा चिन्तयतां विचित्रविमलश्लाघ्यार्थसन्दायिनि ।**
**सञ्जाते भुवि रुग्मिणीशविजये सद्वादिराजोदिते**
**सर्गोऽभूत् सुरमण्डलीषु सुतरामेकोनविंशो मुदाम् ॥ ४१ ॥**

**॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थश्रीचरणविरचिते श्रीरुग्मिणीशविजये महाकाव्ये एकोनविंशः सर्गः ॥**

**व्या :** रोम्णामिति । सुरमण्डलीषु मुदां एकोनविंशः सर्गः अभूदित्यर्थः ॥

न शब्दशास्त्रे प्राविण्यं नालङ्कारनये तथा ।
केवलं गुरुकारुण्याट्टीकेयं लिखिता मया ॥ १ ॥

**॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजतीर्थ[१]श्रीचरणविरचितस्य श्रीरुग्मिणीशविजयमहाकाव्यस्य व्याख्यायां श्रीनारायणभट्टविरचितायां श्रीगुरुभावप्रकाशिकायां एकोनविंशः सर्गः ॥**

॥ श्रीकृष्णार्पणमस्तु ॥

***

समर्पितं मया भवेत् सुमध्वनुत्तवाणिना ।
रमारमेशपादयोः प्रभञ्जनाभिधायुजा ॥

*****

१ 'श्रीनारायणाचार्यविरचितायाम्' इति क्वचित्

परिशिष्टम् - १

## रुग्मिणीशविजयस्थपद्मबन्धश्लोकः (१७/७०)

****

वाचा यः कीर्तितोऽलं दिविजवरसभाराधितानां मुनीनां
जन्मान्ताद्येनसां यो रचयति विहतिं चित्फलं सुप्रगीतः ।
रुग्भेदी प्रौढसद्वाग्मिषु विविधसुवाणीविलासैः प्रतर्क्यः
शस्तोऽस्त्यादौ तथाऽन्ते विमलयतिततेर्जल्पशुद्धौ सहायः ॥



- Courtesy: Sri Rama Tattva Prakasha Press, Belgaum.

परिशिष्टम् - २

# रुग्मिणीशविजयस्थचक्रबन्धश्लोकः (१९/३६)

***

वन्दारुद्विजवर्यवाञ्छितनिजध्यानः क्षमाशङ्करः
स्वर्वाग्मित्रजवर्ण्यदिग्विततिकृत्कर्मौघराजत्करी ।
रुद्राणीपतिमान्यराजितगतिः सत्यासहायः सतां
तां रेमे वरदः स्वबन्धुरुचिरां रक्षन् पुरीमद्भुताम् ॥




- Courtesy: Sri Rama Tattva Prakasha Press, Belgaum.

परिशिष्टम् - ३

# रुग्मिणीशविजयस्थसूक्तय:

## सर्गः - १

१. अकौशलेन ग्रथितेति जातिप्रसूनमालां किमु सन्त्यजन्ति ॥ ९ ॥

२. विदग्धैः किमुपेक्षणीया पयोब्धिजा चञ्चलताख्यादोषात् ॥ १० ॥

३. लोके पतिनिन्दकेभ्यः पतिव्रतानामपरः क्व भारः ॥ १२ ॥

४. सम्प्रेषयन्ति स्म नरैर्नरेन्द्राः शय्यां स्वकीयां पुरतः प्रयाणे ॥ २६ ॥

५. शिशुं वशीकर्तुमथो न भारः ॥ ४१ ॥

६. तुष्टिर्भुवि कस्य न स्याददृष्टपूर्वस्य निरीक्षणेन ॥ ४४ ॥

७. यदीयरूपं प्रकटीकरोति पिता स तस्येति हि वेदवादः ॥ ४८ ॥

८. करस्थदेवस्य कुतोऽन्तरायः ॥ ५९ ॥

## सर्गः - २

१. बिभेति सर्वः परुषान्न शान्तात् ॥ २२ ॥

२. विष्णुपदानुषक्तकरः कथं नोर्ध्वमुपैति लोकः ॥ २३ ॥

३. श्रेयोऽनुजस्यापि न वै सहन्ते ॥ २४ ॥

४. क्रूरोऽपि मर्त्यः स्वकलत्रसान्द्रसम्बन्धभाजां न हि तापदायी ॥ २५ ॥

५. प्रियेषु नूत्नेषु हि कस्य तृप्तिः ॥ २९ ॥

६. कृत्या महति प्रयुक्ता स्वकीयमृत्युत्वमुपैति पृथ्व्याम् ॥ ३८ ॥

७. किं चेष्टया तुष्यति कामधेनुः ॥ ४५ ॥

८. ज्ञानं विना यन्न हि बन्धमोज्ञः ॥ ४८ ॥

९. अवैष्णवानां यतनैर्न मोक्षः पतन्त्यधस्तामसवृत्तयस्ते ॥ ५० ॥

१०. निन्दां मुकुन्दस्य सकृन्निशम्य मन्दः पतेत् किं पुनरच्युतं तम् ॥ ५१ ॥

११. विनाशकाले हि विरुद्धबुद्धिः ॥ ६७ ॥

## सर्गः - ३

१. अयोग्यकामस्य कथं न पातः ॥ ५ ॥

२. वातस्य जवोऽधिकोऽपि कथं नु विश्वम्भरमुद्विभर्ति ॥ ६ ॥

३. शब्देषु बहूदितेषु प्रियेरितः प्रीतिकरो हि लोके ॥ २० ॥

४. लक्ष्मीनयनान्तभाजामसह्यदोषोऽपि भवेद्गुणाय ॥३७॥

५. कस्त्यक्ष्यति सिद्धविद्याम् ॥३९॥

## सर्गः - ४

१. भक्तैकवश्यः प्रभुः ॥ १ ॥

२. क्षिणोति नूनं धनलोभभाजां धनान्यनर्हत्स्वतिदिश्य देवः ॥ ४ ॥

३. न हि रोषरुद्धं मनो मिनोत्यप्यमरानुभावम् ॥७॥

४. हरौ प्रसन्ने किमिहास्त्यसाध्यम् ॥ २४ ॥

५. गृहीतमायस्य च तस्य पातः ॥२९॥

६. कृष्णप्रतिपक्षिपक्षः कथं न पातैकफलस्त्रिलोक्याम् ॥३०॥

७. न हि स वेत्ति बलं श्रवणोज्झितः परमया रमया श्रुतिभिः स्तुतम् ॥५९॥

८. नर्नर्ति सुहृदागमने न कः ॥ ६२ ॥

९. निरागसं कं वरयेन्न शौरिः ॥ ६५ ॥

१०. निजेषु शिक्षाऽपि हि तस्य विष्णोः परं परानुग्रहहेतुरेव ॥ ६६ ॥

११. तथाहि नारीमृदुभाषणेन न कस्य चित्तं मृदुतामुपैति ॥ ६९ ॥

१२. न कस्य योषित्सु हि पक्षपातः ॥ ७० ॥

१३. क्रोधोऽपि देवस्य वरेण तुल्यः ॥ ७१ ॥

## सर्गः - ५

१. स्वनासिकाच्छेदमपीह सोढ्वा खलो निरुन्धे खलु सत्प्रयाणम् ॥ ८ ॥

२. कृष्णविपक्षमैत्री किमु सौख्यदात्री ॥ १० ॥

३. खलः प्रकृत्या खलु गूढवृत्तिः ॥ १२ ॥

४. प्रभोः क्रियैकाऽप्युरुकार्यसाधिका ॥ १४ ॥

५. फलार्थिनां किं न विषह्यमस्ति ॥ १६ ॥

६. दुष्टस्य विनाशतोऽन्यत् सतां मनस्तृप्तिकरं किमस्ति ॥ २२ ॥

७. विनाशशून्यस्य हि किं न कार्यम् ॥ २९ ॥

८. मर्त्योपकारनिरतस्य न कः सहायः ॥ ३१ ॥

९. कामं परोपकृतिलग्नमनोरथानां क्षेमङ्करत्वमुपयान्ति हि शत्रवोऽपि ॥ ३२ ॥

१०.सर्वसहाजीवनहर्तुरस्य दुर्वारतेजोऽपि किमेति वृद्धिम् ॥ ३५ ॥

११.युक्तं हि तन्मुररिपोरनुगा विरागा यत्नं कदाचिदपि न स्वकृते प्रकुर्युः ॥ ५१ ॥

१२.पुंस्त्वेन किं पूरुषमौलिभाजाम् ॥ ५३ ॥

१३.निगमैकवेद्ये किमक्षिबाहुल्यमुपैति कृत्यम् ॥ ५६ ॥

१४.जिहीर्षुभिः स्वासमशत्रुशौर्यं तदाद्यवैर्युद्धरणं हि कार्यम् ॥ ५७ ॥

## सर्गः - ६

१. विपत्सु कः स्वीयमुपेक्षतेऽग्र्यः ॥६८॥

२. गोब्राह्मणरक्षकस्य क्व कृष्णदोर्दण्डधृतस्य कम्पः ॥१०॥

३. शिशोः करे हस्तिसहस्रमस्ति ॥१३॥

४. किं न सुकरं नित्यं क्षमाधारिणः ॥ १६ ॥

५. विधेर्निदेशो महताऽप्यलङ्घ्यः ॥२८॥

६. नष्टाः प्रियाः खलु समृद्धियुजोऽपि वक्त्रम् ॥ ३१ ॥

७. आशा हि नूत्नविषया गणयन्ति नैनः ॥ ३५ ॥

८. सद्वंशजातललनासु न कस्य पक्षः ॥ ४८ ॥

९. मधुरनिनदभाजां किं न साध्यं हि लोके ॥ ४९ ॥

## सर्गः - ७

१. हरिचरणविदूराः को नु सम्भाषयेन्नः
   सुकृतमपि तदाज्ञारूपमापादयेत् किम् ॥ ४ ॥

१. स्निग्धे भर्तरि कामिनीजनरुचिस्तत्पक्ष एव ह्यलम् ॥ ३५ ॥

२. परपुष्टः स विस्पष्टं पोष्टुर्वै विप्रलम्भकः ॥ ४० ॥

## सर्गः - ८

१. न हि रज्वहेः क्षतिरभूतिरभूत् ॥ ३१ ॥

१. किं नाम नास्ति मुनिमार्गजुषां हि लोके ॥ ४४ ॥

२. न हि कथा व्यर्था परब्रह्मणः ॥ ४६ ॥

३. को नाम नो नृत्यति सिद्धकृत्यः ॥ ५२ ॥

४. गुरुकार्यलाभे लघ्वर्थसाधनकृतिर्नहि दृष्टपूर्वा॥ ५३ ॥

## सर्गः - १०

१. अपि शिरसि धृतो यत्स्वीय एवान्तकाले
करवशमुपयातः शत्रुतामेति शत्रोः ॥ ८ ॥

२. अरिष्टपुंष्टिर्नहि दृष्टपूर्वा ॥ ९ ॥

३. करोदयान् वीक्ष्य परस्य जातानसूनसूयाभिरतास्त्यजन्ति ॥ १५ ॥

४. दास्यैकवश्यः प्रभुः ॥ ४९ ॥

५. मुक्तोऽपि नैवोज्झति कृष्णसेवाम् ॥ ७१ ॥

६. श्रेयो विना पुण्यमुपार्जयेत् कः ॥ ७६ ॥

७. यच्छत्रुर्नहि शत्रुरुच्चनिलयस्यान्यस्य शत्रुर्भवेत् ॥ ७८ ॥

## सर्गः - ११

१. चतुरपुरुषकाङ्क्षा वक्रयोषित्सु नूनम् ॥ ५ ॥

२. चुबुकगतकराणामश्नतां कास्ति वक्रा ॥ ८ ॥

३. अनुकूलयितुं बालां कर एव हि कारणम् ॥ ९ ॥

४. कृष्णः कथं जडतमस्य बलिं सहेत ॥ ११ ॥

५. वक्रहृदो हि पुंसः को वा गुणः कोविदमानयोग्यः ॥ १२ ॥

६. किमिह करुणा शुष्कहृदये ॥ १३ ॥

७. द्वैधीभावं विपक्षे विरचयति बत स्वीय एव स्वशत्रुः ॥ १४ ॥

८. वने निवासः, किं दूषणं विमतकेसरिसम्मितानां किं भूषणं प्रतिदिनं नगरे निवासः ३२

९. गतफलमतियत्नाभ्यस्तविद्याऽनवस्था फलति सहजतेजोबुद्धिभाजां किमग्रे ४२

१०.दुष्टैराचरितां किमत्र मतिमान् मृत्युप्रदां विश्वसेत् ॥ ४३ ॥

११.मृदुसरसकवेः पुरः किमीड्या कठिनपदप्रियकाव्यकारशीला ॥ ४४ ॥

## सर्गः - १२

१. लभ्या विमुक्तिः पुरी ॥ ३ ॥

२. स्वकुक्षिपूर्तौ न रतिर्हि कस्य निजानुभावस्मरणोत्सवे च ॥२७॥

३. प्रायेण धनवानेव जायते क्लेशवानपि ॥५३॥

४. काले काले धनं नूनमर्थिभ्यो वितरेद्धि यः ।
मुच्यते सर्वदुःखेभ्यः कण्टकेभ्य इव द्रुमः ॥ ५४ ॥

५. वित्तैः कीर्तिं शरैः शौर्यं प्रत्यहं यः समार्जयेत् ।
स एव धनवान् सम्राडन्यं मन्ये ह्यकिञ्चनम् ॥ ५५ ॥

६. अर्थिभ्योऽर्थमनादिश्य यस्तन्निक्षिपति क्षितौ ।
मृत्स्नां स्वयोग्यामादाय वित्तं भूम्यै प्रदत्तवान् ॥ ५६ ॥

७. विष्णुभक्तिरतं भूपं नैव त्यक्ष्यति तत्प्रिया ।
तद्द्वेषिणि न सा स्थातुमुत्सहेत पतिव्रता ॥ ५८ ॥

८. धर्मद्वितीयं नृपतिं धर्मोऽन्यो नैव पीडयेत् ॥५९॥

९. विष्णोरर्भकसङ्काशान् वैष्णवान् यस्तु निन्दति ।
तत्रापि न स्थिरा श्रीः स्यात् पुत्रद्वेषिणि मातृवत् ॥ ६० ॥

१०.दोषिणं गुणलुब्धा श्रीर्नाश्रयेदिति मे मतिः ॥ ६१ ॥

११.कठोरगिरमुत्सृज्य वृणोत्यपरमिन्दिरा ॥ ६२ ॥

१२.सन्मन्त्रशीर्णो दुर्मन्त्रः प्रयोक्तारं क्षिणोति हि ॥ ६३ ॥

१३.प्रजानां पीडनं कृत्वा यो लुब्धो धनमार्जयेत् ।
विक्रीय स्वसुतानेव स वै सञ्चिनुते वसु ॥ ६५ ॥

१४.प्रजापरम्परामेति प्रजारञ्जनकृन्नृपः ।
पीडिता सा सनाम्नीं तां नोत्पादयति तत्कुले ॥ ६६ ॥

१५.अपूजितोऽतिथिः स्वीयमतिथित्वमपार्थकम् ।
समर्पयति तत्तिथ्यामपूज्यत्वमिवार्पयन् ॥ ६७ ॥

१६.विषयेषूपभुक्तेषु तृतीयांशोऽस्य जीर्यते ।
शिष्टं तु विषसारूप्यात् कष्टाय परिकल्प्यते ॥ ६८ ॥

## सर्गः - १३

१. लक्ष्मीशपदैकभक्तास्तदन्यदर्चन्ति तदीयबुद्ध्या ॥ १४ ॥

## सर्गः - १४

१. असतां पुण्यसरिदप्यनिष्टस्य हि कारणम् ॥ २५ ॥
२. दुरात्मनां वक्त्रनिरीक्षणं स्वैर्जनैर्न कार्यं त्विति शंसति स्म ॥ ३३ ॥
३. असल्लापमसद्वर्गैः सतां संशिक्षयन्निव ॥ ३४ ॥

## सर्गः - १६

१. धनस्य लाभादधिको हि लोभः ॥ ५२ ॥
२. नार्या सह सङ्गतानां कुतो विवेकः कुत एव वेला ॥ ५३ ॥
३. एकस्यामभिरतिमिच्छतोः क्व मैत्री ॥ ५५ ॥
४. इन्दुदृष्ट्या न कस्य कामः सरसस्य हि स्यात् ॥ ५९ ॥
५. कलत्रवस्त्रकृतालयं कः खलु जेतुकामः ॥ ५८ ॥

## सर्गः - १७

१. यमभयमभयास्या स्वस्थवृत्तिर्न वेत्ति ॥ ६३ ॥
२. सद्वंशभवा गुणाढ्या नताः समर्था अपि सर्वसन्धौ ॥ ४० ॥

## सर्गः - १८

१. पुलकितकरचारुप्रेमदाम्ना निबद्धं प्रभुरपि वशमेति प्रेमभारैरुदारैः ॥ १९ ॥

*****

परिशिष्टम् - ४

# श्रीवादिराजतीर्थश्रीचरणकृतश्रीकृष्णस्तोत्राणि

## १. श्रीकृष्णाष्टकम् - १

पालयाच्युत पालयाजित पालय कमलालय ।
लीलया धृतभूधराम्बुरुहोदर स्वजनोदर ॥

मध्वमानसपद्मभानुसमं स्मरप्रतिमं स्मर
स्निग्धनिर्मलशीतकान्तिलसन्मुखं करुणोन्मुखम् ।
हृद्यकम्बुसमानकन्धरमक्षयं दुरितक्षयं
सिद्धसंस्तुतरूप्यपीठकृतालयं हरिमालयम्॥ १ ॥

अङ्गदादिसुशोभिपाणियुगेन सङ्क्षुभितैनसं
तुङ्गमाल्यमणीन्द्रहारसरोरसं खलनीरसम् ।
मङ्गलप्रदमन्थदामविराजितं भजताजितं
तं गृणे वररूप्यपीठकृतालयं हरिमालयम्॥ २ ॥

पीनरम्यतनूदरं भज हे मनः शुभ हे मनः
स्वानुभावनिदर्शनाय दिशन्तमर्थिसुशन्तमम् ।
आनतोऽस्मि निजार्जुनप्रियसाधकं खलबाधकं
हीनतोज्झितरूप्यपीठकृतालयं हरिमालयम् ॥ ३ ॥

हैमकिङ्किणिमालिकारशनाञ्चितं तमवञ्चितं
कम्रकाञ्चनवस्त्रचित्रकटिं घनप्रभया घनम् ।
नम्रनागकरोपमोरुमनामयं शुभधीमयं
नौम्यहं वररूप्यपीठकृतालयं हरिमालयम् ॥ ४ ॥

वृत्तजानुमनोज्ञजङ्घममोहदं परमोहदं
रत्नकल्पनखत्विषा हृतहृत्तमस्ततिमुत्तमम् ।
प्रत्यहं रचितार्चनं रमया स्वयाऽऽगतया स्वयं
चित्त चिन्तय रूप्यपीठकृतालयं हरिमालयम् ॥ ५ ॥

चारुपादसरोजयुग्मरुचाऽमरोच्चयचामरो-
दारमूर्धजभानुमण्डलरञ्जकं कलिभञ्जकम् ।
वीरतोचितभूषणं वरनूपुरं स्वतनूपुरं
धारयात्मनि रूप्यपीठकृतालयं हरिमालयम्।। ६ ।।
शुष्कवादिमनोऽतिदूरतरागमोत्सवदागमं
सत्कवीन्द्रवचोविलासमहोदयं महितोदयम् ।
लक्षयामि यतीश्वरैः कृतपूजनं गुणभाजनं
धिक्कृतोपमरूप्यपीठकृतालयं हरिमालयम्।। ७ ।।
नारदप्रियमाविशाम्बुरुहेक्षणं निजरक्षणं
तारकोपमचारुदीपचयान्तरे गतचिन्त रे ।
धीर मानस पूर्णचन्द्रसमानमच्युतमानम
द्वारकोपमरूप्यपीठकृतालयं हरिमालयम्।। ८ ।।
रूप्यपीठकृतालयस्य हरेः प्रियं दुरिताप्रियं
तत्पदार्चकवादिराजयतीरितं गुणपूरितम् ।
गोप्यमष्टकमेतदुच्चमुदे ममास्त्विह निर्मम-
प्राप्यशुद्धफलाय तत्र सुकोमलं हृतधीमलम्।। ९ ।।

।। इति श्रीवादिराजतीर्थश्रीचरणकृतं श्रीकृष्णाष्टकम् ।।

***

## २. श्रीकृष्णस्तुतिः

यदि दिशसि नयनपटुतां तर्हि भवच्चरणकमलसेवायै ।
आयास्यामि दयालो कृष्ण न चेत् पूजयामि कथमन्धः ।। १ ।।

सम्भावितस्य पुंसो मरणादतिरिच्यते किलाकीर्तिः ।
इति गीतासु हि गीतं भवता भवतापतिमिररवे ।। २ ।।

नानापराधशतकं हीने यद्यस्ति कृष्ण मयि मत्ते ।
दीनानामुद्धर्त्रा क्षन्तव्यं तत् क्षमावता भवता ।। ३ ।।

कुन्तलसन्ततिलसितं चूडात्रयशोभिमौलिभागमहम् ।
शतपत्रपत्रनेत्रं शशिवदनं प्रतिदिनं दिदृक्षामि ॥ ४ ॥

कुण्डलमण्डितगण्डं कम्बुग्रीवं मनोरमोरस्कम् ।
दण्डं दाम च दधतं पाण्डवसखमर्च्यमर्चयामि कदा ॥ ५ ॥

रम्यतमोदरजघनं कम्रोरुं वृत्तजानुयुगजङ्घम् ।
रक्ताब्जसदृशपादं हस्ताभ्यां त्वामर्चयामि सदय कदा ॥ ६ ॥

दोषातिदूरशुभगुणराशिं दासीकृताखिलानिमिषम् ।
भूषणभूषितगात्रं नेत्राभ्यां चित्रचरितमीक्ष्ये त्वाम् ॥ ७ ॥

मध्वप्रतिष्ठितं त्वां विध्वस्ताशेषकुजनकुलम् ।
मूर्ध्ना प्रणम्य याचे तद्विरचय यद्धितं ममाद्य हरे ॥ ८ ॥

स्तुतिमिति पुण्यकथन ते प्रथितकृते वादिराजयतिरकृत ।
सततं पठतां हि सतामतिविशदां कृष्ण देहि विततमतिम् ॥ ९ ॥

॥ इति श्रीवादिराजतीर्थश्रीचरणकृता श्रीकृष्णस्तुतिः ॥

***

## ३. श्रीकृष्णस्तवः

हितं न जानाम्यहितं न जाने नाकर्तुमिशो न च कर्तुमीशः ।
यथा नटान्नाटकदारुयन्त्रं तथा हरेः प्रेरणयैव वर्ते॥ १॥

यदभूत् तद्धरेर्यच्च नाभूत् तच्च हरेः परात् ।
जीवो विष्टिगृहीतोऽस्मात् किं भवेत् किं च नो भवेत् ॥ २ ॥

कर्मणो यदि तत् कर्म स्वानिष्टं कुरुते कुतः ।
अनाद्यनिष्टकर्माणि करोत्यन्यवशो ध्रुवम् ॥ ३ ॥

नित्यो जीवो स्वतन्त्रश्चेदनित्यं कर्म जन्मनि ।
स्थितौ लये परापेक्षमन्याधीनं कथं न तत् ॥ ४ ॥

यत इत्येकवचनादेको दाधार चेत्यलम् ।
स्पष्टश्रुतेर्न कर्माणि कर्मद्वारा न चेतनाः॥ ५ ॥

अनन्ताः सर्वजगतां कर्तारो लाघवादपि ।
लोकेऽदृष्टद्वारकर्तृमात्रात् क्वापि क्रियाजनेः ॥ ६ ॥

कृतिपूर्वककर्तैव कर्ताऽन्यस्तूपचारतः ।
अन्यथा कन्यकायाः स्याद्भर्ताऽपि पितृवत् पिता ॥ ७ ॥

अतो नामुख्यकर्त्रैव महाकार्यमिदं भवेत्।
किं स्त्रीपुंसोर्विनाऽपि स्यात् पुत्रः पुत्रेष्टिमात्रतः ॥ ८ ॥

न चेदुपादानमपि तद्वत् स्यादौपचारिकम् ।
दृष्टानुसारतस्तच्चेत् कर्ताऽपि स्यात् तथैव हि ॥ ९ ॥

अदृष्टमपि बीजाद्यं कल्प्यं फलबलाद्यथा ।
तथाऽदृष्टोऽपि कर्ताऽस्य कल्प्यः कोऽप्युरुशक्तिमान् ॥ १० ॥

न च कालादिकं तस्य प्रेरकं जडवस्तुनः ।
स्वतः प्रवृत्त्ययोगेन प्रेर्यत्वात् कर्तृतोऽन्यतः ॥ ११ ॥

नापि तत्प्रेरको ब्रह्मा नेशो नेन्द्रोऽपरे कुतः ।
अङ्घ्र्यर्चनेन तत्तीर्थजुष्ट्या तद्दत्तभूत्वतः ॥ १२ ॥

किं च सृज्यं वशे स्रष्टुर्हार्यं हर्तुर्वशे परम् ।
पातुर्वशे स्थितं सर्वमतो विष्णोर्वशेऽखिलम् ॥ १३ ॥

न पिताऽधिपतिर्नृणां न हर्ता यामिकोऽपि वा ।
किन्तु रक्षक एवातो विष्णुरेव जगत्पतिः ॥ १४ ॥

दशादिक्पतिभावेन देवा ब्रह्मेशपूर्वकाः ।
खण्डाधिपतयो विष्णुस्तदभावाज्जगत्पतिः ॥ १५ ॥

अस्य देवस्येति वेदे यथा विष्णोर्वशे हरः ।
स्पष्टं श्रुतस्तथा देवे न क्वापीशवशे हरिः ॥ १६ ॥

श्रौतोऽखण्डपदः सोमो नेशो वेदविदां मते ।
विश्वाधिकत्वगीः सावकाशेन्द्रादिश्रुताविव ॥ १७ ॥

सोरोऽदीदिति वेदे हि रोदनाद्रुद्रतोदिता ।
न ते महित्वमिति तु विष्णोरसमतोदिता ॥ १८ ॥

या ह्युच्छेषणभागो वै रुद्र इत्याह वेदवाक् ।
जुषेथां यज्ञमित्याद्या सा विष्णुं वक्त्यतः स राट् ॥ १९ ॥

प्रलये वटपत्रेऽप्सु शेते नारायणः किल ।
तदा क्वान्ये सुरास्तस्मात् सर्वेशो विष्णुरेव हि ॥ २० ॥

किञ्च गीतोपनिषदि सर्वं द्विपुरुषाख्यया ।
सङ्गृहीतं हरिस्त्वेकः पुरुषोत्तम ईरितः ॥ २१ ॥

रामः प्रभू रामभृत्या देवाः सर्वेऽपि वानराः ।
कृष्णः प्रभुः कृष्णभृत्या देवा धर्मात्मजादयः ॥ २२ ॥

अर्हत्तमो ह्यग्रपूजामर्हत्यन्यो न संसदि ।
यथैवेह तथाऽमुत्र तद्विष्णुरखिलप्रभुः ॥ २३ ॥

तस्मात् सर्वेश्वरो विष्णुः सर्वं सर्वत्र सर्वदा ।
प्रवर्तयति सर्वत्र सर्वशक्तिः सनातनः ॥ २४ ॥

यद्भूतं भूतमेतस्माद्भवच्च भवति प्रभोः ।
भाव्यं भविष्यति ह्यस्य कृपया नान्यतः क्वचित् ॥ २५ ॥

अतः सर्वेष्टलाभाय सर्वानिष्टनिवृत्तये ।
तमर्च्यमर्चय स्तुत्यं स्तुहि नम्यं नमाच्युतम् ॥ २६ ॥

वादिराजयतिप्रोक्तमेवं कृष्णस्तवं नवम् ।
पठन् सर्वेष्टमाप्नोति सर्वानिष्टनिवृत्तिमान् ॥ २७ ॥

॥ इति श्रीवादिराजतीर्थश्रीचरणकृतः श्रीकृष्णस्तवः ॥

## ४. अष्टमहिषीयुक्त श्रीकृष्णस्तोत्रम्

हृद्गुहाश्रित पक्षीन्द्रवल्गुवाक्यैः कृतस्तव ।
तद्गरुत्कन्धरारूढ रुग्मिणीश नमोऽस्तु ते ॥ १ ॥
अत्युन्नत्याऽखिलैः स्तुत्य श्रुत्यन्तात्यन्तकीर्तित ।
सत्ययोहित सत्यात्मन् सत्यभामापते नमः ॥ २ ॥
जाम्बवत्याः कम्बुकण्ठालम्बिजृम्भिकराम्बुज ।
शम्भुत्र्यम्बकसम्भाव्य साम्बतात नमोऽस्तु ते ॥ ३ ॥
नीलाय विलसद्भूषाजालायोज्वलमालिने ।
नीलालकोद्यत्फालाय कालिन्दीपतये नमः ॥ ४ ॥
जैत्रचित्रचरित्राय शात्रवानीकमृत्यवे ।
मित्रप्रकाशाय नमो मित्रविन्दाप्रियाय ते ॥ ५ ॥
बालनेत्रोत्सवानन्तलीलालावण्यमूर्तये ।
नीलाकान्ताय ते भक्तपालायास्तु नमो नमः ॥ ६ ॥
भद्राय स्वजनाविद्यानिद्राविद्रावणाय वै ।
रुद्राणीभद्रमूलाय भद्राकान्ताय ते नमः ॥ ७ ॥
रक्षिताखिलविश्वाय शिक्षिताखिलरक्षसे ।
लक्षणापतये नित्यं भिक्षुश्लाघ्याय ते नमः ॥ ८ ॥
षोडशस्त्रीसहस्रेशं षोडशातीतमच्युतम् ।
ईडेत वादिराजोक्तप्रौढस्तोत्रेण सन्ततम् ॥ ९ ॥
॥ इति श्रीवादिराजतीर्थश्रीचरणकृत-अष्टमहिषीयुक्तश्रीकृष्णस्तोत्रम् ॥

***

## ५. श्रीकृष्णदशकम्

मध्वादृतं रजतपीठपुराधिवासं हृद्यं मुदेऽस्तु मुरमर्दनपादपद्मम् ।
सद्योभिजातसुसरोजनवावभासस्पर्धिप्रभाविभवदीपितदिक्प्रदेशम् ॥ १ ॥

उद्यन्नखेन्दुरुदयं हृदि नस्तनोतु मध्वागमोत्सवमहाङ्कुरपोषहेतुः ।
पद्मोपरिस्फुरितमौक्तिकचारुभावप्रद्वेष्यघौघतिमिरप्रशमाय विष्णोः ॥ २ ॥

जङ्घायुगं जनयतु श्रियमन्वहं मे तुङ्गेन्दिराकरसरोरुहरागसङ्गि ।
सञ्जातपल्लवितचारुलतापरीतस्तम्भोपमानपरमन्दिरमच्युतस्य ॥ ३ ॥

ऊरुद्वयं सततमुच्चपदं ददातु श्रीरूप्यपीठनिलयस्य हरेर्हरेड्यम् ।
वृत्तावलम्बि करिपोतमृदुप्रपुष्टहस्तद्वयप्रतिममप्रतिमस्य तस्य ॥ ४ ॥

पीनं हरेरुदरमादरतः स्मरामि ज्ञानात्मकस्य नवनीतजगन्निकेतम् ।
आनन्दतीर्थनयनाभिधमीनमान्यश्रीनिम्ननाभिसरसीरुचिरं चिरं तत् ॥ ५ ॥

वक्षःस्थलं विशदहारविराजि विष्णोर्लक्ष्मीविशालगृहमस्तु ममान्तरङ्गे ।
नक्षत्रराजिसुविराजिनिशेशबिम्बलक्ष्म्याऽम्बरोपममपारगुणाम्बुराशेः ॥ ६ ॥

रत्नौघचञ्चुफणपञ्चकभोगिभोगं स्वस्पर्धिजेतुमिव दण्डसुपाशधारि ।
सत्कङ्कणाङ्गदसुशोभशुभाङ्गुलीयं हस्तद्वयं मम तनोत्वभयं मुरारेः ॥ ७ ॥

वक्रालकं वरनसोज्ज्वलकुण्डलाभ्यां युक्तं त्रिरेखिगलमुन्नतमौलिबन्धम् ।
वक्त्रं विभोर्मधुपमौक्तिकमत्स्यशङ्खशैवालशालि कमलद्युति मेऽक्ष्णि भूयात् ॥८॥

अम्लानपद्मदलमात्मरुचाऽनुकुर्वदाम्नायकोविदबुधेष्टकृतप्रयाणम् ।
रम्यं विलोचनयुगं श्रितमीक्षतान्मां सन्मध्वपूजितपदाब्जयुगस्य तस्य ॥ ९ ॥

मुग्धाननेन नयनेन करेण नाभिच्छिद्रेण पादयुगलेन धृताब्जसाम्यम् ।
पद्मालयोज्झति कदाऽपि न देवमेनं मध्वप्रियं त्विति किमत्र गिरां विचारैः ॥१०॥

आपादमा च मकुटान्मुरवैरिगात्रस्तोत्रं तदेतदनवद्यमवद्यजैत्रम् ।
गोपालवाजिमुखकिङ्करवादिराजप्रोक्तं पठन् भवति तत्सदयाभिलक्ष्यम् ॥ ११ ॥

॥ इति श्रीवादिराजतीर्थश्रीचरणकृतं श्रीकृष्णदशकम्(आपादस्तोत्रम्) ॥

***

## ६. श्रीकृष्णरामावतारचरितरत्नसङ्ग्रहः (कविकदम्बककण्ठभूषा)

क्षीराम्बुधौ फणिपतेर्मृदुभोगशय्याशायी रमाकरसरोरुहलालिताङ्घ्रिः ।
आनन्दमूर्तिरखिलामरमौलिरस्मान् नानावतारजितदैत्यजनः स पायात्॥ १ ॥

ब्रह्मेशशक्रमुखदेववरार्थितो यः श्रीदेवकीतनयतामधिगम्य गोष्ठे ।
प्राक् पूतनाशकटवातविनाशकारी भूत्वा बभञ्ज शिशुरर्जुनपादपौ द्वौ॥ २ ॥

तत्रोत्थितौ स्वशरणावनुगृह्य गोपीगेहेषु दुग्धनवनीतदधीनि भुक्त्वा ।
वृन्दावनं प्रतिगतोऽथ निहत्य वत्सदैत्यं बकं च निजकालियशिक्षकोऽभूत्॥ ३ ॥

दत्वाऽभयं च पुनरत्र निशि प्रवृद्धं पीत्वा दवाग्निमथ गोकुलमुग्रवृष्टेः ।
गोवर्धनोच्चगिरिमेककरेण बिभ्रद्बालोऽभिरक्ष्य विमदेन्द्रकृतार्हणोऽभूत्॥ ४ ॥

रासोत्सवे व्रजवधूभिरथो विहृत्य स्वानन्दमूर्तिरवधीन्निशि शङ्खचूडम् ।
पश्चादरिष्टमथ केशिवधं विधाय साकं बलेन मधुरां नगरीं जगाम॥ ५ ॥

कुब्जासुदामवरदो रजकं निहत्य छित्वा धनुः स निहतेभवरोऽथ मल्लान् ।
कंसं च संसदि विमृद्य मुदं स्वपित्रोर्दत्वा जरासुतबलं बहुशो जघान॥ ६ ॥

द्वारावतीं पुरमथो विरचय्य तस्यां बन्धून् निधाय यवनं मुचुकुन्ददृष्ट्या ।
दग्ध्वाऽथ भीष्मकसुतादिनिजाष्टपत्नीहस्तं प्रगृह्य मुरजिन्नरकं ममर्द॥ ७ ॥

कन्यासहस्रवरतां प्रतिपद्य देवान् निर्जित्य कल्पतरुमात्मपुरे निधाय ।
प्रद्युम्नमुख्यतनयान् सुबहून् स सृष्ट्वा कृष्णोऽथ पौण्ड्रकमुखासुरमर्दनोऽभूत् ॥८॥

संसाध्य धर्मतनयस्य स राजसूयं हत्वाऽथ तत्र शिशुपालमथाग्रपूजाम् ।
जग्राह तीर्णवनवासमहाम्बुराशेः पार्थस्य सारथिरभूत् कुरुभूमियुद्धे॥ ९ ॥

दुर्योधनं सह बलेन विनाश्य पार्थान् कृत्वा क्रमेण चतुरन्तधराधिनाथान् ।
निष्कण्टकैर्निजजनैः सहितः सपुत्रपौत्रः शशास जगतीं जगदेकनाथः॥ १० ॥

हत्वा पूतनिकां विभज्य शकटं वातं निहत्यार्जुनौ
छित्वा वत्सबकौ विनाश्य फणिजित् पीतानलः पर्वतम् ।

धृत्वा गोपवधूः प्रतोष्य जनकार्तिघ्नो वृषं केशिनं
जित्वर्ज्वीं प्रणतां विधाय धनुरुच्छिद्येभमल्लानहन्॥ ११ ॥

कंसारिर्जितमागधो यवनजित् स्वीयाष्टपत्नीपति-
र्हत्वोग्रं नरकं वधूततिवृतो जित्वाऽमरान् स्वस्तरून् ।
लब्ध्वा पौण्ड्रककाशिराजशिशुपालघ्नः कुरूणां बलं
दग्ध्वा सारथिरर्जुनस्य जगतीं कृष्णः शशास प्रभुः॥ १२ ॥

कृष्णः पूतनिकारिरस्तशकटो वातान्तकः पादप-
च्छेत्ता वत्सबकाहिजिद्धृतगिरिर्गोपीष्टदोऽरिष्टहृत् ।
केशिघ्नो हतमल्लकंसयवनः क्ष्माजं निहत्याबला-
साहस्रोऽर्जुनसारथिः कुरुबलं हत्वा ररक्ष क्षितिम्॥ १३ ॥

कौसल्यासुत ताटकामथ मखत्रातर्मुनिस्त्रीहित
च्छिन्नेष्वासन जानकीवृत वनावासिन् खराद्यन्तक ।
मारीचघ्न हनूमदीश रविजार्तिच्छेद बद्धाम्बुधे
सेनाभ्रातृसमेत रावणरिपो सीतेष्ट रामाव माम्॥ १४ ॥

सङ्गृह्य पद्यमयसूत्रवरेण कृष्णरामावतारचरिताभिधरत्नराशिम् ।
तद्भक्तभूसुरकृतेऽकृत वादिराजभिक्षुः पठत्कविकदम्बककण्ठभूषाम्॥ १५ ॥

**॥ इति श्रीवादिराजतीर्थश्रीचरणकृतः श्रीकृष्णरामावतारचरितरत्नसङ्ग्रहः ॥**

***

## ७. अवतारत्रयस्तोत्रम्

पालयस्व निपालयस्व निपालयस्व रमापते ।
वादिराजमुनीन्द्रवन्दित वाजिवक्त्र नमोऽस्तुते ॥

मध्वहृत्कमलस्थितं वरदायकं करुणाकरं
लक्ष्मणाग्रजमक्षयं दुरितक्षयं कमलेक्षणम् ।

रावणान्तकमव्ययं वरजानकीरमणं विभुं
अञ्जनासुतपाणिकञ्जनिषेवितं प्रणमाम्यहम् ॥ १ ॥

देवकीतनयं निजार्जुनसारथिं गरुडध्वजं
पूतनाशकटासुरादिखलान्तकं पुरुषोत्तमम् ।
दुष्टकंसनिमर्दनं वररुग्मिणीपतिमच्युतं
भीमसेनकराम्बुजेन सुसेवितं प्रणमाम्यहम् ॥ २ ॥

ज्ञानमुक्तिसुभक्तिदं वरबादरायणमव्ययं
कोटिभास्करभासमानकिरीटकुण्डलमण्डितम् ।
वाक्सुदर्शनतः कलेः शिरघातकं रमया युतं
मध्वसत्करकञ्जपूजितमक्षयं प्रणमाम्यहम् ॥ ३ ॥

॥ इति श्रीवादिराजपूज्यचरणविरचितम् अवतारत्रयस्तोत्रम् ॥

***

## ८. श्रीकृष्णाष्टकम् - २

श्रीब्रह्मरुद्रगरुडेन्द्रनुतं शरण्यं सर्वाशुभप्रशमनं भुवनैकनाथम् ।
सद्रूप्यपीठपुरमध्यगमिन्दिरेशं गोवर्धनोद्धरणदक्षमहं नतोऽस्मि ॥ १ ॥

वज्राङ्कुशध्वजसरोजयुताङ्घ्रिमूलं सन्दीप्यमानखचन्दिरकान्तिकान्तम् ।
सिञ्जन्सुनूपुरपदं वरवृत्तजङ्घं पूर्णेन्दुभानुसमवर्तुलजानुयुग्मम् ॥ २ ॥

स्तम्बेरमेन्द्रसुकरोरुमुदारकाञ्चीपीताम्बरोद्यतकटिं शुभनिम्ननाभिम् ।
शातोदरार्पितवलित्रयमब्जनाभं श्रीवत्सकौस्तुभरमालयवक्षसं तम् ॥ ३ ॥

श्रीकम्बुकन्धरसमर्पितवैजयन्तीसद्धारकञ्जशुभमालिकयोल्लसन्तम् ।
सद्दण्डपाशकरकुण्डलशोभिगण्डं बिम्बाधरोष्ठमरविन्ददलायताक्षम् ॥ ४ ॥

कर्णोज्ज्वलन्मकरकुण्डलशोभिगण्डं सद्रत्नमौक्तिकलसच्छुभनासिकाढ्यम् ।
शार्ङ्गायितभ्रुवमगण्यगुणाभिराममुद्यद्दिवाकरनिभाभविशालफालम् ॥ ५ ॥

श्रीमत्किरीटवरमण्डितरम्यशीर्षमाद्यन्तशून्यमसितं सुखतीर्थनाथम् ।
श्रीनन्दनन्दनममेयमगाधबोधमीषत्स्मितेन्दुवदनं शरणं व्रजामि।। ६ ।।

किंसंस्तवीमि तव मत्स्यसुकूर्मकोलश्रीमन्नृसिंहवरवामनभार्गवेश ।
श्रीजानकीरमणयादवकृष्णबुद्धकल्क्यादिरूप कृतिसेवितसत्प्रभावम् ।। ७ ।।

श्रीकृष्णदेव करुणाकर सौम्यरूप श्रीवादिराजमुनिहृत्कमलाधिवास ।
भक्तोत्सवेप्सितसुतत्त्वरहस्यदीप मां पाहि ते चरणसेवकभृत्यभृत्यम् ।। ८ ।।

वादिराजाख्ययतिना कृष्णाष्टकमिदं कृतम् ।
हरेः कृपाप्तयेऽजस्रं पठतः प्रीयते हरिः ।। ९ ।।

।। श्रीवादिराजतीर्थकृतं श्रीकृष्णाष्टकम् ।।

***

## परिशिष्टम् - ५

# श्रीवादिराजतीर्थश्रीचरणकृतदुर्गास्तवः

सन्नद्धसिंहस्कन्धस्थां स्वर्णवर्णां मनोरमाम् ।
पूर्णेन्दुवदनां दुर्गां वर्णयामि गुणार्णवाम् ।। १ ।।

किरीटहारग्रैवेयनूपुराङ्गदकङ्कणैः ।
रत्नकाञ्च्या रत्नचित्रकुचकञ्चुकतेजसा ।। २ ।।

विराजमाना सुचिराम्बरा किङ्किणिमण्डिता ।
रत्नमेखलया रत्नवासोपरिविभूषिता ।। ३ ।।

वीरशृङ्खलया शोभिचारुपादसरोरुहा ।
रत्नचित्राङ्गुलीमुद्रा रत्नकुण्डलमण्डिता ।। ४ ।।

विचित्रचूडामणिना रत्नोद्यत्तिलकेन च ।
अनर्घ्यनासामणिना शोभितास्यसरोरुहा ।। ५ ।।

भुजकीर्त्या चित्ररत्नकण्ठसूत्रेण चाङ्किता ।
पद्माक्षिणी सुबिम्बोष्ठी पद्मगर्भादिभिः स्तुता ॥ ६ ॥

कबरीभरविन्यस्तपुष्पस्तबकविस्तरा ।
कर्णनीलोत्पलरुचा लसद्भ्रूमण्डलत्विषा ॥ ७ ॥

कुन्तलानां च सत्कान्त्या शोभमाना शुचिस्मिता ।
तनुमध्या विशालोरः स्थला पृथुनितम्बिनी ॥ ८ ॥

चारुदीर्घभुजा कम्बुग्रीवा ब्रध्नायुतप्रभा ।
असिचर्मगदाबाणधनुःशूलाङ्कुशादिना ॥ ९ ॥

वराभयाभ्यां चक्रेण शङ्खेन च लसद्भुजा ।
दंष्ट्राग्रभीषणास्योत्थहुङ्कारार्दितदानवा ॥ १० ॥

भयङ्करी सुरारीणां सुराणामभयङ्करी ।
मुकुन्दकिङ्करी विष्णुभक्तानां मौक्तशङ्करी ॥ ११ ॥

सुरस्त्रीकिङ्करीभिश्च वृता क्षेमङ्करी च नः ।
आदौ मुखोद्गीर्णनानाम्नाया सर्गकरी पुनः ॥ १२ ॥

निसर्गमुक्ता भक्तानां त्रिवर्गफलदायिनी ।
निशुम्भशुम्भसंहर्त्री महिषासुरमर्दिनी ॥ १३ ॥

तामसानां तमःप्राप्तै मिथ्याज्ञानप्रवर्तिका ।
तमोभिमानिनी पायाद्दुर्गा स्वर्गापवर्गदा ॥ १४ ॥

इमं दुर्गास्तवं पुण्यं वादिराजयतीरितम् ।
पठन् विजयते शत्रून् मृत्युं दुर्गाणि चोत्तरेत् ॥ १५ ॥

॥ इति श्रीवादिराजयतिकृत-दुर्गास्तवः ॥

*****

परिशिष्टम् - ६

# रुग्मिणीशविजय-श्लोकार्धानुक्रमणिका

## द

## प

ल

## श

**॥ इति रुग्मिणीशविजय-श्लोकार्धानुक्रमणिका ॥**

******

॥ श्रीकृष्णार्पणमस्तु ॥

***

समर्पितं मया भवेत् सुमध्वनुत्तवाणिना ।
रमारमेशपादयोः प्रभञ्जनाभिधायुजा ॥

*****



श्रीवादिराजतीर्थ श्रीचरणविरचितः

# रुग्मिणीशविजयः





डा. व्यासनकेरे प्रभञ्जनाचार्यः

श्रीव्यासमध्वसंशोधनप्रतिष्ठानम्